श्रीहरिः ।

# मीमांसादर्शनम् ।



श्रीशबरस्वामिविराचितभाष्यसहितम् ।

प्रथमप्रभृति-तृतीयाध्यायपर्यन्तम् । १-३ ।

पं० रत्नगोपालभट्टेन संशोधितम् ।

चौखम्भासंस्कृतपुस्तकालयाऽध्यक्ष-
हरिदासात्मजहरिकृष्णदासगुप्तेन
स्वकीये विद्याविलास यन्त्रे
संमुद्रितम् ।

—:o——

# MÎMÂNSÂDARŜANA,

With the commentary of Sabara swami.

ONE TO THREE CHAPTERS.

Edited by

Pandita Ratna Gopâla Bhatta.

PRINTED AT SHE VIDYÂ VILÂSA PRESS.

BY HARIKRISHNA DÂSA GUPTA.

BENARES CITY.

1910.

# भूमिका ।

—:०:—

परमकारुणिको भगवान् महामायी सच्चिदानन्दघनः सर्वज्ञः कालकालः सर्वशास्त्रयोनिः सत्यसङ्कल्पः सकलजगदाधारः सर्वमुमुक्षुजनोद्धाराय धर्मादिस्थापनाय च कृतविविधावतारः सकलदुःखोपशमनाय कर्मोपासनब्रह्मात्मैक्यज्ञानयथार्थप्रतिपादकमादर्शस्थानीयं सकलविद्यास्थानोपबृंहितं त्रिकाण्डात्मकं वेदं विरचितवान् । तदङ्गभूतानि शिक्षादीनि च प्रकाशितानि ॥

तत्र धर्मब्रह्मात्मैक्यप्रतिपादकमपौरुषेयं स्वतः प्रमाणवाक्यं वेदः । स च मन्त्रब्राह्मणात्मकः । तत्र मन्त्रा अनुष्ठानकारणभूतद्रव्यदेवताप्रकाशकाः सर्वशास्त्रादिपरमरहस्यभूतब्रह्मात्मैक्ययथार्थप्रकाशकाश्च । तेऽपि त्रिविधाः । ऋग्यजुःसामभेदात् । तत्र पादबद्धगायत्र्यादिच्छन्दोविशिष्टा ऋचः— अग्निमीळे पुरोहितमित्याद्याः । ता एव गीतिविशिष्टाः सामानि । तदुभयविलक्षणानि यजूंषि । अग्नीदग्नीन् विहर इत्यादिसम्बोधनरूपा निगदमन्त्रा अपि यजुरन्तर्भूता एव ॥

ब्राह्मणमपि त्रिविधम् । विधिरूपमर्थवादरूपञ्च । तदुभयविलक्षणम् । तत्र शब्दभावना विधिरिति वार्त्तिककारकुमारिलभट्टपादानुयायिनः । जैमिनीयाश्च । नियोगो विधिरितिपूर्वमीमांसैकदेशिनः प्राभाकराः । इष्टसाधनताविधिरिति तार्किकादयः । सर्वोऽपि विधिश्चतुर्विधः । उत्पत्त्यधिकारविनियोगप्रयोगभेदात् । नियमाऽपूर्वपरिसंख्यादीनामप्येष्वेवान्तर्भावात् । तत्र देवताकर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । आग्नेयोऽष्टाकपालो भ-

वतीत्यादिः । सेतिकर्तव्यताकस्य करणस्य यागादेः स्वर्गादि फलसम्बन्धबोधको विधिरधिकारविधिः । यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिः । अङ्गसम्बन्धबोधको विधिर्विनियोगविधिः । यथा, व्रीहिभिर्यजेत, समिधो यजतीत्यादिः । साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः प्रयोगविधिः । स च श्रौत इत्येके । कल्प्य इत्यन्ये । कर्मस्वरूपञ्च द्विविधम् । गुणकर्म, अर्थकर्म च । तत्र क्रतुकारकाण्याश्रित्य विहितं कर्म गुणकर्म । तदपि चतुर्विधम् । उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात् । तत्र वसन्ते ब्राह्मणोऽग्नीनादधीत, यूपं तक्षति इत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः । स्वाध्यायोऽध्येतव्यो गां पयो दोग्धि इत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः । सोममभिषुणोति, व्रीहीनवहन्ति, आज्यं विलापयति इत्यादावभिषवावघातविलापनैः सोमादीनां विकारः । व्रीहीन् प्रोक्षति, पत्न्यवेक्षते इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कारः । एतच्चतुष्टयं प्रधानस्य कर्मणोऽङ्गमेव तथा क्रतुकारकाण्यनाश्रित्य विहितमर्थकर्म । तच्च द्विविधम् । अङ्गं, प्रधानञ्च । अन्यार्थमङ्गम् । अनन्यार्थं प्रधानम् । अङ्गमपि द्विविधम् । सन्निपत्त्योपकारकमाराडुपकारकञ्च । तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम् । यथाऽवहननप्रोक्षणादिफलोपकारि । द्वितीयं यथा प्रयाजादि । एवं सम्पूर्णाङ्गसंयुक्तो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो विधिर्विकृतिः । तदुभयविलक्षणो विधिर्दर्वीहोमः । एवमन्यदप्यूह्यम् । प्राशस्त्यनिन्दाऽन्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः । स च त्रिविधः । गुणवादोऽनुवादो भूतार्थवादश्च । तत्र प्रमाणान्तरविरुद्धार्थबोधको गुणवादः । आदित्यो यूप इत्यादिः । प्रमाणान्तरप्राप्तार्थबोधकोऽनुवादः । अग्निर्हिमस्य

रुषजमित्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूता-ऽर्थवादः । इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः । तदुक्तं—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।

भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥

तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वतः प्रामाण्यं स्वार्थेऽपि । तच्च बाधितविषयत्वा-ज्ज्ञापकत्वाच्च न गुणवादानुवादयोः । भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्यापि नौत्सर्गिकं प्रामाण्यं विहन्यते ॥

विध्यर्थवादोभयविलक्षणं वेदान्तवाक्यमुपनिषच्छब्दवाच्यम्, अस्यैव सम्यग्बोधार्थं द्वादशलक्षणी पूर्वमीमांसा धर्मादिनिर्णय-पूर्वकं महर्षिमहामुनिवेदव्यासशिष्यमहर्षिजैमिनिना पूर्वमीमांसा-ऽऽचार्येण प्रकाशिता । अष्टचत्वारिंशत्संस्कारेण शुद्धो ब्राह्मणो वेदान्तज्ञाने संन्यासपूर्वकं मुख्योऽधिकारी निष्कामोपासनया विक्षेपरहितः । तद्वेदान्तवाक्यं क्वचिदज्ञातज्ञापकत्वेन विधिरिति व्यपदिश्यते । विधिपदरहितमपि प्रमाणवाक्यत्वेन च क्वचिद् भूतार्थवाद इति व्यवह्रियते इति न दोषः। एवञ्च कर्मकाण्डात्मको ब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः। उपासनरूपमानसिक-क्रियात्मको वेदः कर्मत्वाविशेषात् कर्मस्वेवान्तर्भूत इति कृत्वा द्विविधैव निष्ठा उक्ता । तथाचोक्तं भगवता—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।

ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति ॥

तत्राऽपि ब्रह्मकाण्डमेव प्रधानम् । तथाचोक्तं भगवता— सर्वं कर्माखिलम्पार्थ ज्ञाने परिसमाप्यते इति ॥

कर्मणि समाप्यते, भक्तौ समाप्यत इति नोक्तम् । अत एव द्विविधैव मीमांसा कर्ममीमांसा ब्रह्ममीमांसा च ।उपासनाकाण्डस्य

कर्ममीमांसायामन्तर्भावात् । स्थूलदृशां पृथक्त्वेन च ग्रहः । अत एव कर्मफलमनित्यं स्वर्गादि, तथैवोपासनाफलमपि वैकुण्ठादिदेवलोकफलमनित्यसुखादि । कैवल्यं तु ज्ञानप्राप्यं नित्यं स्वरूपस्थितिर्निर्वाणसंज्ञम् । तथाचोक्तं भागवते—

मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिरिति ॥

अन्यथारूपं ब्रह्मातिरिक्तं मिथ्याभूतं द्वैतं हित्वा नाम प्रबाध्य स्वरूपज्ञानेनेति । तथाच बाधस्वरूपं वार्त्तिककारेण प्रदर्शितं—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यतीति ॥

किञ्च, स च वेदः प्रयोगत्रयेण यज्ञनिर्वाहार्थम् ऋग्यजुःसामभेदेन भिन्नः । वस्तुतस्तु मुख्यप्रमेयब्रह्मैक्यादेक एव । तथोक्तं महाभारते—

एकवेदस्य चाज्ञानाद् वेदास्ते बहवोऽभवन् ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थित इति ॥

तत्र हौत्रप्रयोग ऋग्वेदेन आध्वर्यप्रयोगो यजुर्वेदेन, औद्गात्रप्रयोगः सामवेदेन । ब्राह्मयजमानप्रयोगौ त्वत्रैवान्तर्भूतौ । अथर्ववेदस्तु यज्ञानुपयुक्तोऽपि शान्तिकपौष्टिकाभिचारिककलानानाविधपदार्थविद्यानीतिपाकादिकर्मप्रतिपादकत्वेनात्यन्तविलक्षण एव। एवञ्च प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाश्च । एवं कर्मकाण्डे व्यापारभेदेनाधिकारिभेदेन च शाखाकर्मभेदाः। वस्तुतः सर्वासां शाखानामेकरूपत्वमेव ब्रह्मकाण्डमिति । शाखाभेदेनोपनिषद्भेदाः सन्ति, परन्तु तासामेक एवार्थो मुख्यो ब्रह्मरूपप्रमेयैक्यात् । तथाच चतुर्णां वेदानां प्रयोजनाऽधिकारिभेदेन भेदः । एवं शास्त्राणामपि वस्तुत एकमेव तत्त्वं सर्वेषाम् । तथाचोक्तं, सर्वे वेदा यत्पदमामनन्ति । वैयाकरणभूषणेऽपि—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्णिता ।
समारम्भास्तु भावानामनादि ब्रह्म शाश्वतमिति ॥

तथा आहवनीयगार्हपत्यदक्षिणाग्निभिः सर्वकर्मनिष्पत्तिः । देवतोद्देशेन द्रव्यत्यागात्मको यज्ञः । विहितनिषिद्धादिभेदेन कर्मफलभेदः स्वर्गनरकादिः ।

ते च संस्कारा अष्टचत्वारिंशत् । तथाहि । गर्भाधानम् १, पुंसवनम् २, सीमन्तोन्नयनम् ३, जातकर्म ४, नामकरणम् ५, निष्क्रमणम् ६, अन्नप्राशनम् ७, कर्णवेधः ८, चौलकर्म ९, उपनयनम् १०, समावर्तनम् ११, विवाहः १२, अन्त्येष्टिः १३, देवयज्ञः १४, पितृयज्ञः १५, भूतयज्ञः १६, नरयज्ञः १७, अतिथियज्ञः १८, वेदव्रतचतुष्टयम् १९, अष्टकाश्राद्धम् २०, पार्वणश्राद्धम् २१, श्रावणी २२, आग्रायणी २३, प्रौष्ठपदी २४, चैत्री २५, आश्वयुजी २६, अग्न्याधानम् २७, अग्निहोत्रम् २८, दर्शपौर्णमासौ २९, आग्रयणेष्टिः ३०, चातुर्मास्यम् ३१, निरूढपशुबन्धः ३२, सौत्रामणिः ३३, अग्निष्टोमः ३४, अत्यग्निष्टोमः ३५, उक्थ्यः ३६, षोडशी ३७, वाजपेयः ३८, अतिरात्रः ३९, आप्तोर्यामः ४०, राजसूयादिः ४१, सर्वभूतदया ४२, लोकद्वयचातुर्यम् ४३, क्षान्तिः ४४, अनसूया ४५, शौचम् ४६, अनायासमङ्गलाचारः ४७, अकार्पण्यम् ४८, अस्पृहा इति ॥

पूर्वोक्तहोत्रादिभेदः । तथाहि—

होता अध्वर्युरुद्गाता ब्रह्मा इति चतुर्विधा ऋत्विजः । पञ्चमो यजमानः । मैत्रावरुणः अच्छावाक् ग्रावस्तुत् होता इति होतृगणः । प्रतिप्रस्थाता नेष्टा उन्नेता अध्वर्युरित्यध्वर्युगणः । प्रस्तोता प्रतिहर्ता सुब्रह्मण्य उद्गाता इत्युद्गातृगणः । ब्राह्मणाच्छंसी आग्नीध्रः

पोता ब्रह्मा इति ब्रह्मगणः । कौषीतकिशाखायामेकोऽपरोऽपि ऋत्विक् कथितः । केनापि यजमानं मेलयित्वा सप्तदश कथिताः। केनापि पत्नीयजमानौ स्वीकृत्य विंशतिगणः कथितो यज्ञसाधनमित्यादि सर्वं कात्यायनादिसूत्रेषु विस्तरान्निरूपितम्। एवमैहिकपारलौकिककर्मभेदो निरूपितः । परं तु, यथेह कर्माजितो लोकः क्षीयते इत्यादिवेदेन कर्मफलानामनित्यत्वं कथितम् । निष्कामतया अन्तःकरणशोधकत्वञ्च ॥

एवं क्रमेण पूर्वमीमांसाया द्वादशाध्यायविषयाः सन्त्येवम् । तथाहि । प्रथमेऽध्याये विध्यादेः प्रामाण्यं निरूपितं, धर्मलक्षणभेदश्च । द्वितीये तद्विधेयकर्मभेदो निरूपितः ।, तृतीये विहितानां यागादिकर्मणां शेषशेषिभावः।चतुर्थे क्रतुप्रयुक्तानुष्ठेयानां पुरुषाऽर्थप्रयुक्तानुष्ठेयानां च पदार्थानां परिमाणं चिन्तितम् । पञ्चमेऽनुष्ठेयपदार्थानामनुष्ठानक्रमो निरूपितः । षष्ठेऽध्याये विहितकर्मफलभोक्तृस्वरूपाधिकारनिरूपणम् । सप्तमे प्रकृतावुपदिष्टानामङ्गानां विकृतौ सामान्यातिदेशो निरूपितः।तद्वत्करणमतिदेशः । अष्टमे आग्नेयोऽष्टाकपाल इत्यादिप्रकृत्यङ्गानां, सौर्यं चरुं निर्वपेदित्यादिविकृतौ सप्तदशद्रव्यदेवतादिद्वारेण विशेषातिदेशः । नवमे प्रकृतावुपदिष्टानां मन्त्रसामसंस्कारकर्मणां विकृतावतिदेशप्राप्तानां प्रकृतिविकृत्योरग्निसूर्यादिदेवतादिभेदे प्रकृतिगतं देवतादिवाचकं पदं विहाय विकृतौ देवतादिवाचकस्य पदस्याध्याहार ऊहो निरूपितः । यथाऽग्नये जुष्टमिति मन्त्रे प्रकृत्युपदिष्टे विकृतावतिदेशप्राप्तेऽग्निपदपरित्यागेन सूर्यपदाध्याहारः । यथाच गिरा गिरा दक्षस इत्यत्र साम्नि गिरापदस्य परित्यागेनेरापदाध्याहारः साम्नामूहः । व्रीह्यादिद्रव्यान्तरसम्बन्धिनश्चाऽवघातादेर्नीवारादिद्रव्याऽन्तरसम्बन्धः संस्कारकर्मणामूहश्च । दशमे विकृतौ चोदक-

प्राप्तानां प्राकृताङ्गानांप्रकृतौसावकाशानां विकृतौ ह्युपदिष्टविशेषाऽङ्गादीनां बाधो निरूपितः।यथा प्रकृतेः सकाशाद्विकृतावतिदिष्टानां बर्हिषां शरमयं बर्हिरित्युपदिष्टेन शरमयबर्हिषा विकृतौ बाधः। एकादशे चानेकाङ्गिविधिप्रयुक्तानामङ्गानां सकृदनुष्ठानात् सर्वाऽङ्गिनामुपकारसाम्यं तन्त्रं निरूपितम् । यथाग्नेयोऽष्टाकपाल उपांशुयाजमन्तरा यजत्यग्निषोमीयमेकादशकपालमित्यादिपौर्णमासादिकर्मप्रयुक्तानां प्रयाजाद्यङ्गानां सकृदनुष्ठात् सर्वाङ्ग्युपकारः। द्वादशे त्वेकाङ्गिप्रयुक्ताङ्गानुष्ठानस्य तत्प्रयोजकसामर्थ्यरहितेऽङ्ग्यन्तरेऽप्युपकार इति ॥

पूर्वमीमांसकमते अपूर्वस्य फलदातृत्वम् । आपातत ईश्वराऽनङ्गीकारः। मन्त्रमयी देवता, न विग्रहवती । अतीन्द्रियसुखाभावः। क्रियापरः सर्वो वेदः। बटबीजवत् संसारोऽनादिः। स्वर्गसुखप्राप्तिरेव कर्मणा मोक्षः। क्रियान्विते शब्दशक्तिः । अख्यातिवादः। सर्वं ज्ञानं प्रमैव । स्थूलशरीराद्भिन्न आत्मा परमार्थनित्यः॥

धर्मस्य परमेश्वरबुद्ध्या निष्कामतया आचरणे अन्तःकरणशुद्ध्या क्रमेण ब्रह्मात्मैक्यज्ञानेन कैवल्यमुक्तिरिति जैमिनिगुरोर्व्यासमतं ब्रह्मकाण्डसिद्धान्तश्च। अस्या एव पूर्वमीमांसाया अर्थप्रतिपादिकाः सर्वाः स्मृतयो मन्वादिभिः कृताः । एवं धर्मादिनिरूपणं जनोद्धाराय जैमिनिमहर्षिणा सूत्रेषु कृतम् ।तदेव भाष्यकारेण शबरस्वामिना प्रकाशितम्। भट्टपादेन कुमारिलनाम्ना वार्त्तिककारेण च उक्तानुक्तदुरुक्तचिन्ता विस्तरेण सोदाहरणं कृता। तदेतत् सर्वं पूर्वमीमांसाऽवलोकनेन धर्मतत्त्वमवगतं भवति । तदनु तत्करणेन चित्तशुद्ध्या ज्ञानद्वारा सकलदुःखनिवृत्तिः परमानन्दावाप्तिश्च भवतीति सर्वमुमुक्षूपकाराय चौखम्भा संस्कृतसिरीजाध्यक्षश्रेष्ठिहरिदासात्मजहरिकृष्णदासेन निजविद्याविलासनाम्नियन्त्रे मुद्रयि-

त्वा प्रकाशितामिति शमाशासेऽहं,

सर्वधार्मिकमुमुक्षुपरमहितैषी वेदान्तनिष्ठ-

**प्रज्ञानानन्दसरस्वतीस्वामी**

कैवल्यधाममठनिवासी ।

ब्रह्माघाट काशी ।

तृतीयाध्यायचतुर्थपादीयनवमसूत्रादूर्ध्वमुपलब्धानां षण्णां सूत्राणां भाष्यस्यानुपलब्धेस्तेषां कुमारिलस्वामिविरचितं वार्तिक-मत्र संयोजितं प्रथमभागे इत्याधिकं बोध्यम् ॥

श्रीहरिः ।

# मीमांसादर्शनाधिकरणसूची ।

अधिकरणसंख्या । पृष्ठसंख्या

१ अध्यायः । ४ पादः ॥

३ अध्यायः । ५ पादः ॥

श्रीगणेशाय नमः ॥

मीमांसादर्शनम् ॥

# श्रीजैमिनीयसूत्रभाष्यम् ।

श्रीशबरस्वामिविरचितम् ॥

---

## अथातो धर्मजिज्ञासा ॥ १ ॥

लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यं, नाऽध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा । एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते । इतरथा वेदवाक्यानि व्याख्येयानि, स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्ज्येत ॥ तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्ट । न चेह किञ्चिद् वृत्तमुपलभ्यते । भवितव्यन्तु तेन, यस्मिन् सत्यऽनन्तरं धर्मजिज्ञासाऽवकल्प्यते । तथाहि +प्रसिद्धपदार्थकः स कल्पितो भवति । तच्च वेदाध्ययनम् । तस्मिन् हि सति साऽवकल्प्यते । नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता, प्रागपि च वेदाध्ययनात् । उच्यते, [१]यादृशां तु धर्मजिज्ञासामधिकृत्य अथशब्दं प्रयुक्तवानाचार्य्यः । सा वेदाध्ययनमन्तरेण न सम्भवति । कथम् । वेदवाक्यानामनेकविधो विचार इह वर्त्तिष्यते । अपिच नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः, परस्ताच्चानन्तर्य्यम् । न ह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्य्यं प्रकरिष्यति । भिद्येत हि तथा वाक्यम् । अन्या हि वचनव्यक्तिरस्य पुरस्ताद् वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधति, अन्या च परस्तादानन्तर्य्यमुपदिशति । वेदानधीत्य इति एकस्यां विधीयतेऽनूद्य आनन्तर्य्यं, विपरीतमन्यस्याम् । अर्थैकत्वादेकवाक्यतां वक्ष्यति । किञ्चाधीते वेदे द्वयमापतति, गुरुकुलाच्च समावर्त्तितव्यं, वेदवाक्यानि च विचारयितव्यानि । तत्र गुरुकुलान्मा समावर्त्तिष्ट, कथं नु वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः ।

यद्येवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते। एवं हि समामनन्ति, वेदमधीत्य स्नायादिति। इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमानः इममाम्नायमतिक्रामेत्। न चाम्नायो नाम अतिक्रमितव्यः। तदुच्यते—अतिक्रमिष्याम इममाम्नायम्। अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकमवकल्पयेम। दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तस्याऽध्ययनमात्रात् तत्र भवन्तो याज्ञिकाः फलं समामनन्ति। यदपि च समामनन्तीव, तत्रापि, द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादित्यर्थवादतां वक्ष्यति। न चाऽधीतवेदस्य स्नानानन्तर्य्यमेतद् विधीयते। न ह्यत्रानन्तर्य्यस्य वक्ता कश्चिच्छब्दोऽस्ति। पूर्वकालतायां क्त्वा स्मर्य्यते, न आनन्तर्य्ये। दृष्टार्थता वाऽध्ययनस्य आनन्तर्य्ये व्याहन्येत। लक्षणया त्वेषोऽर्थः स्यात्। न वा इदं स्नानमदृष्टार्थं विधीयते। किन्तु लक्षणया अस्नानादिनियमस्य पर्य्यवसानं वेदाध्ययनसमकालमाहुः। वेदमधीत्य स्नायाद्, गुरुकुलान्मा समावर्त्तिष्टेति— अदृष्टार्थतापरिहारायैव। तस्माद् वेदाध्ययनमेव पूर्वमभिनिवर्त्यानन्तरं धर्मो जिज्ञासितव्य इति अथशब्दस्य सामर्थ्यम्। न च ब्रूमोऽन्यस्य कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्त्तव्येति, किन्तु वेदमधीत्य त्वरितेन न स्नातव्यम्। अनन्तरं धर्मो जिज्ञासितव्य इति अथशब्दस्यार्थः॥

अत शब्दो वृत्तस्यापदेशको हेत्वर्थः। यथा, क्षेमसुभिक्षोऽयम् अतोऽहमस्मिन् देशे प्रतिवसामीति। एवम् अधीतो वेदो, धर्मजिज्ञासायां हेतुरिति, अनन्तरं धर्मो जिज्ञासितव्य इति अतःशब्दस्य सामर्थ्यम्। धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयाद्, अतः = एतस्मात् कारणादनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यत शब्दस्यार्थः॥

धर्माय जिज्ञासा धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छा। स कथं जिज्ञासितव्यः, को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति। तत्र को धर्मः, कथंलक्षण इति एकेनैव सूत्रेण व्याख्यातं— चोदनालक्षणोऽर्थो धर्म इति। कानि अस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति शेषलक्षणेन व्याख्यातम्। क्व पुरुषपरत्वं, क्व वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यैतत् सूत्रम्, अथातो धर्मजिज्ञासेति। धर्मः प्रसिद्धो

वा स्यात्, अप्रसिद्धो वा। स चेत् प्रसिद्धो, न जिज्ञासितव्य। अथाऽप्रसिद्धो, नतराम्। तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम्। अथवाऽर्थवत्। धर्मं प्रति हि विप्रतिपन्ना बहुविदः। केचिदन्यं धर्ममाहु, केचिदन्यम्। सोऽयमविचार्य्य प्रवर्त्तमान कञ्चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत्। तस्माद्धर्मो जिज्ञासितव्य इति। स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे। तदभिधीयते ॥ १ ॥ ॥
धर्मजिज्ञासाऽधिकरणम् ॥ १ ॥

## चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

चोदना इति क्रियाया. प्रवर्त्तकं वचनमाहुः। आचार्य्यचोदितः करोमीति हि दृश्यते। लक्ष्यते येन तल्लक्षणं, धूमो लक्षणमग्नेरिति हि वदन्ति। तया यो लक्ष्यते, सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुं, नान्यत् किञ्चनेन्द्रियम्। न च तथाभूतमप्यर्थं ब्रूयाच्चोदना, यथा यत्किञ्चन लौकिकं वचन, नद्यास्तीरे फलानि सन्ति इति। तत् तथ्यमपि भवति, वितथमपि भवतीति। उच्यते। विप्रतिषिद्धमिदमुच्यते, ब्रवीति वितथञ्चेति। ब्रवीति–इति उच्यतेऽवबोधयति, बुध्यमानस्य निमित्तं भवतीति। यस्मिंश्च निमित्तभूते सति अवबुध्यते सोऽवबोधयति। यदि च चोदनायां सत्यामग्निहोत्रात् स्वर्गो भवतीति गम्यते कथमुच्यते न तथा भवतीति। अथ न तथा भवतीति कथमवबुध्यते। असन्तमर्थमवबुध्यते इति विप्रतिषिद्धम्। न च, स्वर्गकामो यजेतेत्यतो वचनात् सन्दिग्धमवगम्यते, भवति वा स्वर्गो, न वा भवतीति। न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्। यो हि जनित्वा प्रध्वंसते, नैतदेवमिति, स मिथ्याप्रत्यय। न चैष कालान्तरे, पुरुषान्तरे, अवस्थान्तरे, देशान्तरे वा विपर्य्येति। तस्मादवितथः। यत्तु लौकिकं वचनं, तच्चेत् प्रत्ययितात् पुरुषात्, इन्द्रियविषयं वा, अवितथमेव तत्। अथाऽप्रत्ययिताद् अनिन्द्रियविषयं वा तावत् पुरुषबुद्धिप्रभवमप्रमाणम्। अशक्यं हि तत् पुरुषेण ज्ञातुम्, ऋते वचनात्। अपरस्मात् पौरुषेयाद्वचनात् तदवगतमिति चेत्। तदपि तेनैव तुल्यम्। नैवञ्जातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्य-

न्धानामिव वचनं रूपविशेषेषु । न च विदुषामुपदेशो नाऽवकल्प्य-
ते । उपदिष्टवन्तश्च मन्वादयस्तस्मात् पुरुषात् सन्तो विदितवन्त-
श्च । यथा चक्षुषा रूपमुपलभ्यत इति दर्शनादेवावगतम् । उच्यते ।
उपदेशा हि व्यामोहादपि भवन्ति । असति व्यामोहे वेदादपि भवन्ति
अपि च पौरुषेयाद्वचनात् । एवमयं पुरुषो वेदेति भवति प्रत्ययो, नैव-
मयमर्थ इति । विप्लवते हि खल्वपि कश्चित् पुरुषकृताद् वचनात्
प्रत्ययः । न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति । ननु सा-
मान्यतो दृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसामान्यादिदमपि
वितथमवगम्यते । न । अन्यत्वात् । न ह्यन्यस्य वितथभावेऽन्यस्य
वैतथ्यं भवितुमर्हति, अन्यत्वादेव । न हि देवदत्तस्य श्यामत्वे यज्ञ-
दत्तस्यापि श्यामत्वं भवितुमर्हति । अपिच पुरुषवचनसाधर्म्यात्
वेदवचनं वितथमिति अनुमानं व्यपदेशादवगम्यते । प्रत्यक्षन्तु तद्-
वचनेन प्रत्ययः । न चानुमानं प्रत्यक्षविरोधि प्रामाणं भवति । तस्मा-
च्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करो जिज्ञासितव्यः ।
किं धर्मजिज्ञासया । उच्यते । य एव श्रेयस्करः, स एव धर्मशब्देनो-
च्यते । कथमवगम्यताम् । यो हि यागमनुतिष्ठति, तं, धार्मिक इति
समाचक्षते । यश्च यस्य कर्त्ता स तेन व्यपदिश्यते । यथा, पाचकः,
लावक इति । तेन यः पुरुषं निःश्रेयसेन संयुनक्ति, स धर्मशब्देनो-
च्यते । न केवलं लोके, वेदेऽपि, यज्ञेन यज्ञमयजन्त देवाः तानि धर्मा-
णि प्रथमान्यासन् इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति ।
उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति । कोऽर्थः । यो निःश्रे-
यसाय, ज्योतिष्टोमादिः । कोऽनर्थः । यः प्रत्यवायाय, श्येनो, वज्र,
इषुरित्येवमादिः । तत्र, अनर्थो धर्म उक्तो मा भूदिति अर्थग्रहणम् ।
कथं पुनरसावनर्थः । हिंसा हि सा । हिंसा च प्रतिषिद्धेति । कथं पु-
नरनर्थः कर्त्तव्यतयोपदिश्यते । उच्यते । नैव श्येनादयः कर्त्तव्या
विज्ञायन्ते । यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषा-
मुपदेशः । श्येनेनाऽभिचरन् यजेतेति हि समामनन्ति, न अभिचरि-
तव्यमिति । नन्वशक्यमिदं सूत्रम् इमावर्थावभिवदितुम्- चोदना-
लक्षणो धर्मः, न इन्द्रियादिलक्षणः; अर्थश्च धर्मः, न अनर्थ इति ।
एकं हीदं वाक्यं, तदेवं सति भिद्येत । उच्यते । यत्र वाक्यादर्था-
ऽवगम्यते, तत्रैवम् । तत्तु वैदिकेषु, न सूत्रेषु । अन्यतोऽवगतेऽर्थे, सू-

त्रम् एवमर्थमिदमित्यवगम्यते । तेन च, एकदेशः सूत्र्यत इति सूत्रम् । तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशावित्यवगन्तव्यम् । अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यते इत्येकार्थमेवेति ॥ २ ॥ धर्मलक्षणाऽधिकरणम् ॥ २ ॥

## तस्य निमित्तपरीष्टिः ॥ ३ ॥

उक्तमस्माभिः, चोदनानिमित्तं धर्मस्य ज्ञानमिति । तत् प्रतिज्ञामात्रेणोक्तम्, इदानीं तस्य निमित्तं परीक्षिष्यामहे । किं चोदनैवेति, अन्यदपीति । तस्मात् तावन्निर्ध्रीयते चोदना लक्षणोऽर्थो धर्म इति । तदुच्यते ॥ ३ ॥ ॥ धर्मप्रामाण्यपरीक्षाऽधिकरणम् ॥ ३ ॥

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् अनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

इदं परीक्ष्यते । प्रत्यक्षं तावदनिमित्तम् । किं कारणम् । एवंलक्षणकं हि तत् । सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत् प्रत्यक्षम् । सति इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते, तत् प्रत्यक्षम् । भविष्यंश्च एषोऽर्थो न ज्ञानकालेऽस्तीति । सतश्चैतदुपलम्भनं, नासतः । अतः प्रत्यक्षमनिमित्तम् । बुद्धिर्वा, जन्म वा, सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत् सूत्रम् । सति इन्द्रियाऽर्थसम्प्रयोगे, नासति इत्येतावदवधार्य्यते । अनेकस्मिन्नवधार्य्यमाणे भिद्येत वाक्यम् । प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति ॥ ४ ॥ ॥ धर्मे प्रत्यक्षस्याऽप्रामाण्याऽधिकरणम् ॥ ४ ॥

अभावोऽपि नास्ति यतः ।

## औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो, नोत्पन्नयोः पश्चात् सम्बन्धः । औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः, तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य । कथम् । उपदेशो हि भवति । उपदेश इति विशिष्टस्य शब्दस्य उच्चारणम् । अव्यतिरेकश्च

ज्ञानस्य। न हि तदुत्पन्नं ज्ञानं विपर्य्येति। यच्च नाम ज्ञानं न विपर्य्येति, न तच्छक्यते वक्तुं, न एतदेवमिति। यथा भवति– यथा विज्ञायते, न तथा भवति यथैतन्न विज्ञायत, तथैतद्भवति। अन्यदस्य हृदये, अन्यद्वाचि स्यात्। एवं वदतो विरुद्धमिदं गम्यते, अस्ति, नास्ति चेति तस्मात् तत् प्रमाणमनपेक्षत्वात्। न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं, पुरुषान्तरं वापि। अयं प्रत्ययो ह्यसौ। बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुं, नात्मीयं मतं पर्युदसितुम्॥

वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार, तस्य निमित्तपरीष्टिरित्येवमादिम्। न परीक्षितव्यं निमित्तं, प्रत्यक्षादीनि हि प्रसिद्धानि, प्रमाणानि, तदन्तर्गतं च शास्त्रम्, अतस्तदपि न परीक्षितव्यम्। अत्रोच्यते। व्यभिचारात् परीक्षितव्यम्। शुक्तिका हि रजतवत् प्रकाशते यतः, तेन प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्चानुमानादीन्यपि तत्रापरीक्ष्य प्रवर्त्तमानोऽर्थाद् विहन्येत, अनर्थं चाप्नुयात् कदाचित्। नैतदेवं यत् प्रत्यक्षं, न तद् व्यभिचरति, यद् व्यभिचरति, न तत् प्रत्यक्षम्। किं तर्हि प्रत्यक्षम्। तत्संप्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम्। यद्विषयं ज्ञानं तेनैव संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षं, यदन्यविषयज्ञानमन्यसंप्रयोगे भवति, न तत् प्रत्यक्षम्। कथं पुनरिदमवगम्यते- इदं तत्संप्रयोगे, इदमन्यसंप्रयोगे इति। यद् न अन्यसंप्रयोगे, तत् तत्संप्रयोगे, एतद्विपरीतमन्यसंप्रयोगे इति। कथं ज्ञेयम्? यच्छुक्तिकायामपि रजतं मन्यमानो रजतसंनिकृष्टं मे चक्षुरिति मन्यते। बाधकं हि यत्र ज्ञानमुत्पद्यते, नैतदेवं, मिथ्याज्ञानमिति तत् अन्यसंप्रयोगे। विपरीतं तत्संप्रयोगे इति। प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्यते, यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः। यदा हि चक्षुरादिभिरुपहतं मनो भवति, इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः ततो मिथ्याज्ञानम्। अनुपहतेषु हि सम्यग्ज्ञानम्। इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः। असति तस्मिन्मिथ्याज्ञानम् तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति। कथमवगम्यते। दोषापगमे संप्रतिपत्तिदर्शनात्। कथं दुष्टादुष्टावगम इति चेत्, प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि, प्रमाणा-

भावाददुष्टमिति मन्यामहे । तस्माद् यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो, नान्य इति ॥

ननु सर्व एव निरालम्बनः स्वप्नवत् प्रत्ययः । प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने । जाग्रतोऽपि, स्तम्भ इति वा, कुड्य इति वा प्रत्यय एव भवति । तस्मात् सोऽपि निरालम्बनः । उच्यते । स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति । स्वप्नेऽप्येवमेव सुपरिनिश्चिताऽऽसीत् । प्राक् प्रबोधनाद्, न तत्र कश्चिद्विशेष इति । न । स्वप्ने विपर्ययदर्शनात् । अविपर्ययाच्चेतरस्मिन् । तत्सामान्यादितरत्रापि भविष्यतीति चेत् । यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति । अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वाद् अयमन्य इति वक्तुम् । अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः । कुत इति चेत् । स्वनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च । सुषुप्तस्याभाव एव । अचेतयन्नेव हि सुषुप्त इत्युच्यते । तस्माज्जाग्रतः प्रत्ययो न मिथ्येति ॥ ननु जाग्रतोऽपि करणदोषः स्यात् । यदि स्याद्, अवगम्येत । स्वप्नदर्शनकालेऽपि नावगम्यत इति चेत् । तत्र प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति ॥

शून्यस्तु । कथम् । अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः । स्यादेतदेवं, यद्यर्थाकारा बुद्धिः स्याद्, निराकारा तु नो बुद्धिः । आकारवान् बाह्योऽर्थः । स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते । अर्थविषया हि प्रत्यक्षबुद्धिः, न बुद्ध्यन्तरविषया । क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यत इति । उत्पद्यमानैवासौ ज्ञायते । ज्ञापयति चार्थान्तरं, प्रदीपवदिति यद् उच्यते । तन्न । न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते । ज्ञाते तु अनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् । ननूत्पन्नायामेव बुद्धौ, ज्ञातोऽर्थ इत्युच्यते, नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते, पश्चाज्ज्ञातोऽर्थः । सत्यम् । पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतद्, यज्ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते । न चार्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्मान्नाव्यपदेश्या बुद्धिः, अव्यपदेश्यश्च नाप्रत्यक्षम् । तस्मादप्रत्यक्षा

बुद्धिः । अपि च काममेकरूपत्वे बुद्धेरेवाभावः, नार्थस्य प्रत्यक्षस्य सतः । न च ऐकरूप्यम् । अनाकारामेव हि बुद्धिमनुमिमीमहे, साकारं चार्थं प्रत्यक्षमेवावगच्छाम । तस्मादर्थालम्बनः प्रत्ययः । अपिच, नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्त्वादानेऽपि कदाचिद् घटबुद्धिरविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ॥

अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः । तत्तु द्विविधं–प्रत्यक्षतोदृष्टसंबन्धं, सामान्यतोदृष्टसंबन्धं च । प्रत्यक्षतोदृष्टसंबन्धं यथा, धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसंबन्धं यथा, देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्यगतिस्मरणम् । शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् ॥

उपमानमपि, सादृश्यम् असन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा, गवयदर्शनं गोस्मरणस्य ।

अर्थापत्तिरपि–दृष्टः, श्रुतो वाऽर्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना । यथा, जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ॥

अभावोऽपि प्रमाणाभावो, नास्ति–इत्यस्यार्थस्यासन्निकृष्टस्य ॥ तस्मात् प्रसिद्धत्वान्न परीक्षितव्यं निमित्तम् ॥

ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि, शब्दस्तु न प्रमाणम् । कुतः ? । अनिमित्तं विद्यमानोपलम्भनत्वात् । अनिमित्तम् ' अप्रमाणं शब्द । यो ह्युपलम्भनविषयो नोपलभ्यते, स नास्ति । यथा शशस्य विषाणम् । उपलम्भकानि चेन्द्रियाणि पश्वादीनाम् । न च, पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । अतो नेष्टि. पशुफला । कर्मकाले च फलेन भवितव्यम् । यत्कालं हि मर्दनं, तत्कालं मर्दनसुखम् । कालान्तरे फलं दास्यति इति चेन्न । न कालान्तरे फलमिष्टेः—इत्यवगच्छाम । कुतः ? । यदा तावदसौ विद्यमाना आसीत्, तदा फलं न दत्तवती । यदा फलमुत्पद्यते, तदाऽसौ नास्ति । असती कथं दास्यति ? । अपिच तत्काल एव फलं श्रूयते, यागः करणमिति वाक्यादवगम्यते, कारणं चेदुत्पन्नं, कार्येण भवितव्यमिति ॥

प्रत्यक्षं च फलकारणमन्यदुपलभामहे । न च दृष्टे कारणे सति, अदृष्टं कल्पयितुं शक्यते । प्रमाणाभावात् । एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे । दृष्टविरुद्धमपि भवति किञ्चिद्वचनम् । पात्रचयनं विधायाह— स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्षं शरीरकं व्यपदिशति । न च तत् स्वर्गं लोकं यातीति । प्रत्यक्षं हि तद्दह्यते । न चैष याति इति विधिशब्दः । एवञ्जातीयकं प्रमाणविरुद्धं वचनमप्रमाणम् । अम्बुनि मज्जन्त्यलाबूनि, ग्रावाण प्लवन्ते इति यथा । तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः । तस्मान्न चोदनालक्षणोऽर्थो धर्म ॥

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् । तुशब्दः पक्षं व्यावर्त्तयति । अपौरुषेयः शब्दस्यार्थेन संबन्धः । तस्य अग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य । तथा च चोदनालक्षणः सम्यक् संप्रत्यय इति । पौरुषेये हि शब्दे यः प्रत्ययः, तस्य मिथ्याभाव आशङ्क्येत । परप्रत्ययो हि तदा स्यात् । अथ शब्दे ब्रुवति कथं मिथ्येति ? । न हि तदानीमन्यतः पुरुषाद् अवगतिमिच्छाम । ब्रवीतीत्युच्यते— बोधयति बुद्ध्यमानस्य निमित्तं भवतीति शब्दे च निमित्ते स्वयं बुद्ध्यते कथं विप्रलब्धं ब्रूयाद्, नैतदेवमिति । नचास्य चोदना, स्याद्वा न इति सांशयिकं प्रत्ययमुत्पादयति । न च मिथ्यैतदिति कालान्तरे, देशान्तरेऽवस्थान्तरे, पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो भवति । योऽप्यस्य प्रत्ययविपर्यासं दृष्ट्वाऽत्रापि विपर्यसिष्यतीत्यानुमानिकः प्रत्यय उत्पद्यते, सोऽप्यनेन प्रत्यक्षेण प्रत्ययेन विरुद्ध्यमानो बाध्यते । तस्माच्चोदनालक्षण एव धर्मः ॥

स्यादेतदेवं, नैव शब्दस्यार्थेन सम्बन्धः, कुतोऽस्य पौरुषेयता अपौरुषेयता वेति । कथम् ? । स्याच्चेदर्थेन सम्बन्धः, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम् । यदि संश्लेषलक्षणं सम्बन्धमभिप्रेत्योच्यते । कार्यकारणनिमित्तनैमित्तिकाऽऽश्रयाश्रयिभावसंयोगादयस्तु सम्बन्धा शब्दस्यानुपपन्ना एवेति ॥

उच्यते । यो ह्यत्र व्यपदेश्यः सम्बन्धः, तमेकं न व्यपदिशति भवान्, प्रत्याय्यस्य, प्रत्यायकस्य च यः सञ्ज्ञासञ्ज्ञिलक्षण इति । आह । यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति ? उच्यते । सर्वत्र नो दर्शनं प्रमाणम् । प्रत्यायक इति हि प्रत्ययं दृष्ट्वा-

ऽवगच्छामो, न प्रथमश्रुत इति प्रथमश्रवणे प्रत्ययमकुर्म । यावत्कृत्व श्रुतेन, इयं संज्ञा, अयं संज्ञीत्यवधारितं भवति, नावच्छन्नः श्रुतादर्थावगम इति । यथा चक्षुर्द्रष्टृ, न बाह्येन प्रकाशेन विना प्रकाशयतीत्यद्रष्टृ न भवति । यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः । कुत. । स्वभावतो ह्यसम्बन्धावेतौ शब्दार्थौ, मुखे हि शब्दमुपलभामहे, भूमावर्थम । शब्दोऽयं न त्वर्थं, अर्थोऽयं न शब्द इति च व्यपदिशन्ति । रूपभेदोऽपि भवति । गौः इतीमं शब्दमुच्चारयन्ति, सास्नादिमन्तमर्थमवबुध्यन्ते इति । पृथग्भूतयोश्च यः सम्बन्ध , स कृतको दृष्टो, यथा रज्जुघटयोरिति ॥

अथ, गौः इत्यत्र क. शब्दः ? । गकारौकारविसर्जनीया इति भगवानुपवर्षः, श्रोत्रग्रहणे हि अर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः । यद्येवम्, अर्थप्रत्ययो नोपपद्यते । कथम् । एकैकाक्षरविज्ञानेऽर्थो नोपलभ्यते । न चाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्तिः स्यात् । यदा गकार., न तदा औकारविसर्जनीयौ । यदौकारविसर्जनीयौ, न तदा गकारः । अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति, यतोऽर्थप्रतिपत्तिः स्यात् । अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत्र । स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्ण' प्रत्यायक इत्यदोषः ॥

नन्वेवं, शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनमनुपपन्नं स्यात् ' उच्यते । यदि नोपपद्यते, अनुपपन्नं नाम । न हि लौकिकं वचनमनुपपन्नमित्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्योऽभ्युपगन्तुम् । लौकिकानि वचनान्युपपन्नार्थानि, अनुपपन्नार्थानि च दृश्यन्ते । यथा, देवदत्त ! गामभ्याज इत्येवमादीनि, दश दाडिमानि षडपूपा इत्येवमादीनि च ॥

ननु च शास्त्रकारा अप्येवमाहु -पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति, पचति इत्युपक्रमप्रभृत्यऽपवर्गपर्यन्तमिति यथा । न शास्त्रकारवचनमप्यऽलमिममर्थमप्रमाणकमुपपादयितुम् । अपिच, नैवैतत् अनुपपन्नार्थम् । अक्षरेभ्य संस्काराः, संस्कारादर्थप्रतिपत्तिरिति सम्भवति अर्थप्रतिपत्तौ अक्षराणि निमित्तम् । गौण एषार्थप्रतिपत्तौ शब्द इति चेत्, न गौणोऽक्षरेषु निमित्तभावः । तद्भावे भावात्, तदऽभावे चाऽभावात् ॥

अथापि गौणः स्यात् । न, गौण शब्दो मा भूदिति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम् । न हि, अग्निर्माणवक इत्युक्ते, अग्निशब्दो गौणो मा भूदिति ज्वलन एव माणवक इत्यध्यवसीयते । न च प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्द इति । भेददर्शनाभावात्, अभेददर्शनाच्च । गकारादीनि हि प्रत्यक्षाणि । तस्मात् 'गौः' इति गकारादिविसर्जनीयान्तं पदम् अक्षराण्येव । अतो न तेभ्यो व्यतिरिक्तमन्यत् पदं नामेति । ननु संस्कारकल्पनायामप्यदृष्टकल्पना । उच्यते । शब्दकल्पनायां सा च, शब्दकल्पना च । तस्मादक्षराण्येव पदम् ॥

अथ, गौः—इत्यस्य शब्दस्य कोऽर्थः । सास्नादिविशिष्टाऽऽकृतिरिति ब्रूम । नन्वाकृतिः साध्याऽस्ति वा, न वा ? इति । न प्रत्यक्षा सती साध्या भवितुमर्हति । रुचकः, स्वस्तिको, वर्द्धमानक इति हि प्रत्यक्षं दृश्यते । व्यामोह इति चेन्न । न, असति प्रत्ययाविपर्यासे व्यामोह इति शक्यते वक्तुम् । असत्यप्यर्थान्तरे एवञ्जातीयको भवति प्रत्ययः—पङ्क्तिः, यूथं, वनमिति यथेति चेत् । न । असम्बद्धमिदं वचनमुपन्यस्तम् । किम्, असति वने वनप्रत्ययो भवतीति ? । प्रत्यक्षमेवाक्षिप्यते, वृक्षा अपि न सन्तीति । यद्येवं, प्रत्युक्तः स माहाजानिकः पक्षः । अथ किमाकृतिसद्भाववादी उपालभ्यते, सिद्धान्तान्तरं ते दुष्यति इति, वनेऽपि सति वनप्रत्ययः प्राप्नोतीति । एवमपि, प्रकृतं दूषयितुमशक्नुवतस्तत् सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते । असाधकत्वात् । स हि वक्ष्यति—दुष्यतु, यदि दुष्यति, किं तेन दुष्टेन, अदुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवति ? इति । न च वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यते, अतो वनं नास्तीत्यवगम्यते । यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते, मिथ्यैव वनप्रत्यय इति । ततो, वनं नास्तीत्यवगच्छामः । न च गवादिषु प्रत्ययो विपर्येति । अतो वैषम्यम् । अथ वनादिषु नैव विपर्येति, न ते न सन्तीति । तस्मात् असम्बद्धः पङ्क्तिवनोपन्यासः । अत उपपन्नं जैमिनिवचनम्—आकृतिः शब्दार्थ इति । यथा च आकृतिः शब्दार्थस्तथोपरिष्टान्निपुणतरमुपपादयिष्याम इति ॥

अथ, सम्बन्धः क इति । यत्, शब्दे विज्ञातेऽर्थो विज्ञायते । स

तु कृतक इति पूर्वमुपपादितम् । तस्मान्मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदा प्रणीता इति । तदिदानीमुच्यते, अपौरुषेयत्वात् सम्बन्धस्य सिद्धमिति । कथ पुनरिदमवगम्यते, अपौरुषेय एष सम्बन्ध इति । पुरुषस्य सम्बन्धुरभावात् । कथं सम्बन्धा नास्ति ? । प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम् । ननु चिरवृत्तत्वात् प्रत्यक्षस्याविषयो भवेद्विदानीन्तनानाम् । न हि चिरवृत्त' सन् न स्मर्य्येत । न च हिमवदादिषु कूपारामादिवदस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा । न च शब्दाऽर्थव्यवहारावियोगः पुरुषाणामस्ति ।

स्यादेतत्–सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणा विस्मरेयुरिति । तन्न । यदि हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेत् व्यवहारकाले अवश्यं स्मर्त्तव्यो भवति । संप्रतिपत्तौ हि कर्त्तृव्यवहर्त्रोरर्थं सिद्ध्यति, न विप्रतिपत्तौ । न हि वृद्धिशब्देन अपाणिनेर्व्यवहारत आदैच प्रतीयेरन्, पाणिनिकृतमननुमन्यमानस्य वा । तथा मकारेण अपिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयेत, पिङ्गलकृतिमननुमन्यमानस्य वा । तेन कर्तृव्यवहर्त्तारौ सप्रतिपद्येते । तेन वेदे व्यवहरद्भिरवश्यं स्मरणीय सम्बन्धस्य कर्त्ता स्यात्, व्यवहारस्य च । न हि विस्मृते, वृद्धिरादैच् इत्यस्य सूत्रस्य कर्त्तरि, वृद्धिर्यस्याचामादिरिति किञ्चित् प्रतीयेत ॥

तस्मात् कारणादवगच्छामो–न, कृत्वा संबन्धं व्यवहारार्थं केनचिद् वेदाः प्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण संबन्धारं प्रतिपद्येमहि । यथा, विद्यमानस्याप्यनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे । तस्मादपौरुषेयः शब्दस्यार्थेन संबन्ध इति ॥

नन्वऽर्थापत्त्या संबन्धारं प्रतिपद्येमहि । न ह्यकृतसंबन्धाच्छब्दादर्थं प्रतिपद्यमानान् उपलभामहे । प्रतिपद्येरंश्चेत्, प्रथमश्रवणेऽपि प्रतिपद्येरन् । तदनुपलम्भनादवश्यं भवितव्यं संबन्ध्रेतिचेन्न । सिद्धवदुपदेशात् । यदि संबन्धुरभावाद् नियोगतो नाऽर्था उपलभ्येरन्, ततोऽर्थापत्त्या सम्बन्धारमवगच्छामः । अस्ति तु अन्य' प्रकार । वृद्धानां स्वार्थेन संव्यवहरमाणानामुपश्रृण्वन्तो बालाः प्रत्यक्षमर्थं

प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा यदा बाला आसँस्तदाऽन्येभ्यो वृद्धेभ्य, तेऽप्यन्येभ्य इति, नास्त्यादिरित्येवं वा भवेत् । अथवा न कश्चिदेकोऽपि शब्दस्यार्थेन सम्बन्ध आसीत्, अथ केनचित् सम्बन्धा प्रवर्त्तिता इति । अत्र वृद्धव्यवहारे सति नार्थादापद्येत सम्बन्धस्य कर्त्ता । अपिच व्यवहारवादिन. प्रत्यक्षमुपदिशन्ति कल्पयन्ति इतरे सम्बन्धारम् । न च प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी । तस्मात् सम्बन्धुरभाव ॥

अव्यतिरेकश्च । यथा अस्मिन् देशे सास्नादिमति गोशब्दः, एवं सर्वेषु दुर्गमेष्वपि बहवःसम्बन्धार. कथं सङ्गस्यन्ते । एको न शक्नुयात् । अतो नास्ति सम्बन्धस्य कर्त्ता । अपर आह, अव्यतिरेकश्च । न हि सम्बन्धव्यतिरिक्त कश्चित् कालोऽस्ति, यस्मिन् न कश्चिदपि शब्द केनचिदर्थेन सम्बद्ध आसीत् । कथम् । सम्बन्धक्रियैव हि नोपपद्यते । अवश्यमनेन सम्बन्धं कुर्वता केनचिच्छब्देन कर्त्तव्यः । येन क्रियेत, तस्य केन कृत । अथान्येन केनचित् कृत ,तस्य केनेति, तस्य केनेति ? नैवावतिष्ठते । तस्मादवश्यमनेन सम्बन्धं कुर्वता अकृतसम्बन्धा. केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्या । अस्ति चेत् व्यवहारसिद्धिः, न नियोगतः सम्बन्धा भवितव्यमिति अर्थापत्तिरपि नास्ति ॥

स्यादेतत्, अप्रसिद्धसम्बन्धा बालाः कथं वृद्धेभ्य प्रतिपद्यन्ते इति । नास्ति दृष्टेऽनुपपन्नं नाम । दृष्टा हि बाला वृद्धेभ्य प्रतिपद्यमानाः । न च प्रतिपन्नसम्बन्धाः सम्बन्धस्य कर्तुः । तस्माद्वैषम्यम् ॥

अर्थेऽनुपलब्धे । अनुपलब्धे च देवदत्तादावर्थेऽनर्थकं सञ्ज्ञाकरणम् । अशक्यं च । विशेषान् प्रतिपत्तुं हि संज्ञाः क्रियन्ते । विशेषाँश्चोद्दिश्य, तद्विशेषेष्वज्ञायमानेषु उभयमप्यनवक्लृतम् । तस्माद् अपौरुषेय शब्दस्यार्थेन सम्बन्धः । अतश्च तत् प्रमाणमनपेक्षत्वात् । न चैवं सति पुरुषान्तरं प्रत्ययान्तरञ्चापेक्ष्यते । तस्माच्चोदनालक्षण एव धर्मो, नान्यलक्षणः । बादरायणग्रहणमुक्तम् ॥

अथ यदुक्तम्- अनिमित्तं शब्दः, कर्मकाले फलादर्शनात्, कालान्तरे च कर्माभावात् प्रमाणं नास्तीति । तदुच्यते । न स्यात् प्रमाणं, यदि पञ्चैव प्रमाणान्यभविष्यन् । येन येन हि प्रमीयते तत्तत् प्रमाणम् । शब्देनापि प्रमीयते, ततः शब्दोऽपि प्रमाणम् । यथैव प्रत्यक्षम् । न च

प्रमाणेनानवगतं प्रमाणान्तरेणानवगतमित्येतावता अनवगतं भवति । न चैवं श्रूयते कृते कर्म्मणि तावत्येव फलं भवति, किन्तु, कर्मणः फलं प्राप्यते इति। यच्च– कालान्तरे फलस्यान्यत् प्रत्यक्षं कारणमस्तीति । नैष दोषः । तच्चैव हि तत्र कारणं, शब्दश्चेति ॥

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं– स एष यज्ञायुधी यजमानो-ऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्षं शरीरकं व्यपदिशतीति । त-दुच्यते, शरीरसम्बन्धात् । यस्य तच्छरीरं, सोऽपि तैर्यज्ञायुधैर्यज्ञायु-धीत्युच्यते ॥

आह— कोऽसावन्यो ? नैनमुपलभामहे । प्राणाऽऽदिभिरेन-मुपलभामहे, योऽसौ प्राणिति, अपानिति, उच्छ्वसिति, निमिषति, इत्यादि चेष्टितवान्, सोऽत्र शरीरे यज्ञायुधी इति । ननु शरीरमेव प्राणिति अपानिति च । न । प्राणादयः शरीरगुणविधर्माणः । अया-वच्छरीरभावित्वात् । यावच्छरीरं, तावदस्य गुणा रूपादयः । प्राणादयस्तु सत्यपि शरीरे न भवन्ति । सुखादयश्च स्वयमुप-लभ्यन्ते, न रूपादय इव शरीरगुणाः परेणापीति । तस्माच्छरीर-गुणवैधर्म्यादन्यः शरीराद् यज्ञायुधीति ॥

आह– कुत एष संप्रत्ययः, सुखादिभ्योऽन्यस्तद्वानस्तीति ? न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे । तस्माच्छशविषाण-वदसौ नास्ति । अथोच्यते, तेन विना कस्य सुखादय इति ?। न कस्यचिदपीति वक्ष्यामः । न हि यो य उपलभ्यते, तस्य तस्य संब-न्धिना भवितव्यम् । यस्य संबन्धोऽप्युपलभ्यते, सम्बन्धी च तस्यायं सम्बन्धीति गम्यते। न हि चन्द्रमसम्, आदित्यं वोपलभ्य सम्बन्ध्या-न्वेषणा भवति, कस्यायमिति। न कस्य चिदपीत्यवधार्यते । तस्मान्न सुखादिभ्योऽन्यस्तद्वानस्तीति। अथ, उपलब्धस्यावश्यं कल्पयितव्यः सम्बन्धी भवति। तत आत्मानमप्यनेन प्रकारेणोपलभ्य, कस्यायमिति सम्बन्ध्यन्तरमन्विष्येम । तमपि कल्पयित्वाऽन्यमपि कल्पयित्वा, अन्यमित्यनवस्थैव स्यात् । अथ कञ्चित् कल्पयित्वा न सम्बन्ध्य-न्तरमपि कल्पयिष्यसि, तावत्येव विरंस्यसि, तावता च परितोष्य-सि, ततो विज्ञाने एव परितुष्य तावत्येव विरन्तुमर्हसि ॥

अत्रोच्यते। यदि विज्ञानादन्यो नास्ति कस्तर्हि, जानाति–इत्यु-च्यते ?। ज्ञानस्य कर्त्तुरभिधानमनेन शब्देनोपपद्यते। तदेष शब्दो-

ऽर्थवान् कर्त्तव्य इति ज्ञानाद् व्यतिरिक्तमात्मानं कल्पयिष्याम इति।

आह- वेदा एनं शब्दमर्थवन्तं कल्पयिष्यन्ति, यदि कल्पयितव्यं प्रमंस्यन्ते। बहवः खल्विह जनाः, अस्ति आत्मा, अस्ति आत्मा इत्यात्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति, तथापि नाऽऽत्मसत्तां कल्पयितुं घटन्ते किमङ्ग पुनः, जानाति-इति परोक्षशब्द-दर्शनात्। तस्माद् असदेतत्॥

उच्यते। इच्छया आत्मानमुपलभामहे। कथमिति?। उपलब्ध-पूर्वे हि अभिप्रेते भवतीच्छा। यथा, मेरुमुत्तरेण यान्यस्मज्जातीयैर-नुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि, न तानि प्रति अस्माकमिच्छा भवति। नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्योपलब्धुरिच्छा भवति। भवति च अन्येद्युरुपलब्धे अन्येद्युरिच्छा। तेन उपलम्भ-नेन समानकर्तृका सा इत्यवगच्छामः। यदि विज्ञानमात्रमेवेदमुप-लम्भकमभविष्यत्, प्रत्यस्ते तस्मिन् कस्यापरेद्युरिच्छाऽभविष्यत्?। अथ नु विज्ञानादन्यो विज्ञाता नित्यः। ततः एकस्मिन्नहनि य एवो-पलब्धाऽपरेद्युरपि स एवैषिष्यतीति। इतरथा हीच्छा नोपपन्ना स्यात्।

अत्रोच्यते- अनुपपन्नमिति न कः संप्रत्ययः?। यन्न प्रमाणेना-ऽवगतम्। विज्ञानात्तावदन्यं नोपलभामहे, यन्नोपलभामहे तच्छश-विषाणवदेव नास्तीत्यवगच्छाम। न च तस्मिन्नसति विज्ञानसद्भा-वोऽनुपपन्नः। प्रत्यक्षावगतत्वादेव। क्षणिकत्वं चाऽस्य प्रत्यक्षपूर्व-कमेव। न च ज्ञातरि विज्ञानादन्यस्मिन्नसति, ज्ञाने चाऽनित्ये अप-रेद्युरिच्छा अनुपपन्ना प्रत्यक्षावगतत्वादेव। न खल्वप्येतद् दृष्टं, य एवान्येद्युरुपलब्धा स एवान्येद्युरेषिता इति। इदं तु दृष्टं, यत् कश्चि-द् अन्येन दृष्टमन्य इच्छति, कश्चिन्न। समानायां सन्ततावन्य इच्छति सन्तत्यन्तरेणेच्छतीति। तस्मान्न सुखादिव्यतिरिक्तोऽन्योऽस्तीति॥

अत्रोच्यते। न ह्यसन्तोर इच्छन्तीत्युपपद्यते, न वा अदृष्टपूर्वे स्मृतिर्भवति। तस्मात् क्षणिकविज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति॥

अत्राह-स्मृतिरपि इच्छावत् पूर्वज्ञानसदृशं विज्ञानं, पूर्वविज्ञान-विषयं वा, स्मृतिरित्युच्यते। तच्च द्रष्टरि विनष्टेऽपि अपरेद्युरुत्पद्यमानं नानुपपन्नम्। प्रत्यक्षावगतत्वादेव। अन्यस्मिन् स्कन्धघनेऽन्येन स्क-न्धघनेन यज्ज्ञानं, तत्सन्ततिजेनान्येनोपलभ्यते, नातत्सन्ततिजेना-न्येन। तस्माच्छून्याः स्कन्धघना इति। अथास्मिन्नर्थे ब्राह्मणं भव-

ति- विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवाऽनुविनश्यति, न प्रेत्य संज्ञास्तीति । उच्यते । नैतदेवम् । अन्येद्युर्दृष्टेऽपरेद्युरहमिदम-ऽदर्शमिति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति, न परत्र । अपरो ह्यसावऽन्येद्युर्दृष्टवान् । तस्मात् तद्व्यतिरिक्तोऽन्योऽस्ति, यत्राऽयम् अहशब्द. ॥

आह-परत्राप्यहंशब्दो भक्त्या दृश्यते । यथा, अहमेव पुत्रः, अहमेव देवदत्त, अहमेव गच्छामीति । अत्रोच्यते । न वयम् अहमितीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । किं तर्हि-शब्दाद् व्यतिरिक्तं प्रत्ययं प्रतीमो वयम । इममर्थं वयमेवान्येद्युरुपलभामहे, वयमेवाद्य स्मराम इति । तस्माद् वयमिममर्थमवगच्छामो वयमेव ह्य, वयमेवाद्य इति । ये ह्यः, अद्य च, न ते विनष्टाः । अथाऽप्यस्मिन्नर्थे ब्राह्मणं भवति, स वा अयमात्मेति प्रकृत्य आमनन्ति । अशीर्यो न हि शीर्य्यते इति । तथा, अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा इति । विनश्वरं च विज्ञानम् । तस्माद्विनश्वरादन्य. स इत्यवगच्छामः । न च शक्यमेवमवगन्तुं- यथोपलभ्यन्ते अर्था, न तथा भवन्तीति, यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति । तथा हि सति शशो नास्ति, शशस्य विषाणमस्तीत्यवगम्येत । न चाहप्रत्ययो व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्ययाभावात् । तस्मात् सुखादिभ्यो व्यतिरिक्तोऽस्ति । एवञ्चेत् स एव, यज्ञायुधी इति व्यपदिश्यते ॥

आह- यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यताम्- इदं तद् ईदृशं चेति न च तन्निदर्श्यते । तस्मान्न ततोऽन्यदस्तीति । अत्रोच्यते । स्वसंवेद्य स भवति, नासावन्येन शक्यते द्रष्टुं, कथमसौ निदर्श्येतेति । यथा च कश्चिच्चक्षुष्मान् स्वयं रूपं पश्यति, न च शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम् । न च, तद् न शक्यंत निदर्शयितुमित्येतावता, नास्तीत्यवगम्यते । एवमसौ पुरुषः स्वयमात्मानमुपलभते, न चान्यस्मै शक्नोति दर्शयितुम् । अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽप्यन्यः पुरुष स्वयमात्मानमुपलभते, न च परात्मानम् । तेन सर्वे स्वेन स्वेनात्मना आत्मानमुपलभमाना सन्त्येव, यद्यपि परपुरुषं नोपलभन्ते इति । अथाऽस्मिन्नर्थे ब्राह्मणं भवति, शान्तायां वाचि किं ? ज्योतिरेवायं पुरु-

ष', आत्मज्योतिः सम्राडिति होवाचेति । परेण नोपलभ्यते इत्यत्राऽपि ब्राह्मणं भवति, अगृह्यो न हि गृह्यते इति । परेण न गृह्यते इत्येतदभिप्रायमेतत् । कुतः ? । स्वयञ्ज्योतिष्ट्ववचनात् । अथापि ब्राह्मणं भवति, अत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति । केन पुनरुपायेन अयमन्यस्मै कथ्यते इति । तत्राप्युपाये ब्राह्मणं भवति, स एष नेति नेत्यात्मेति होवाचेति । असौ एवंरूप इति न शक्यते निदर्शयितुम् । यच्च परः पश्यति, तत्प्रतिषेधस्तस्योपदेशोपायः । शरीरं परः पश्यति, तेनात्मा उपदिश्यते । शरीरं नात्मा, अस्ति शरीरादन्य इति । स चात्मेति शरीरप्रतिषेधेनोपदिश्यते । तथा प्राणादयो नात्मान, तत्प्रतिषेधेन तेभ्योऽन्य उपदिश्यते । तथा परस्थाः सुखादय. परेण लिङ्गैरुपलभ्यन्ते । तेऽपि नात्मान इति तत्प्रतिषेधेनान्य उपदिश्यते । य स्वयं पश्यति, न ततोऽन्यः पुरुष इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते । यदाऽसौ पुरुष पूर्वेद्यु. सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते । अत प्रवृत्त्याऽवगम्यते- नूनमसावनित्यान् नित्यमवगच्छतीति ॥

उपमानाच्चोपदिश्यते, यादृशं भवान् स्वयमात्मानं पश्यति, अनेनोपमानेनावगच्छ—अहमपि तादृशमेव पश्यामीति । यथा कश्चिदात्मीयां वेदनां परस्मा आचक्षीत, दह्यमानस्येव मे भवति, यात्यमानस्येव मे भवति, रुद्ध्यमानस्येव मे भवतीति । अतः स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुष इति ॥

यदुच्यते- विज्ञानमपास्य तद् निदर्श्यतामिति । यद्युपायमेव निषेधसि, न शक्यमुपायमन्तरेणोपेयमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानां, यो यथा ज्ञायते स तथेति । तद् यथा, कः शुक्लो नाम यत्र शुक्लत्वमस्ति । किं शुक्लत्वं नाम । यत्र शुक्लशब्दप्रवृत्तिः । क तस्य प्रवृत्तिः । यच्छुक्लशब्दे उच्चारिते प्रतीयते । तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यम् । न च नियोगत प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति । अप्रतीतेऽपि हि प्रत्यये सति अर्थ प्रतीयते एव । न हि विज्ञानं प्रत्यक्षम् । विज्ञेयोऽर्थः प्रत्यक्ष इति । एतत् पूर्वमेवोक्तम् । तदवश्यकर्त्तव्येऽपह्नवे कामं विज्ञानमपह्नुयेत, नार्था इत्येतदुक्तमेव । तस्मादस्ति सुखादिभ्योऽन्यो नित्य पुरुष इति ॥

अथ यदुक्तं, विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति इति । अत्रोच्यते । अत्रैव मा भगवान् मोहान्तमपीपददिति परिचोदनोत्तरकाले अपह्नुत्य मोहाऽभिप्रायमस्य वर्णितवान्– न वा अरे मोहं ब्रवीमि अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा, मात्रासंसर्गस्त्वस्य भवतीति । तस्मान्न विज्ञानमात्रं, तस्माद्वैषम्यम् ॥

यदुक्तं, न चैषयातीति विधिशब्द इति । मा भूद्विधिशब्दः, स्वर्गकामो यजेतेति वचनान्तरेणावगतमनुवदिष्यते । तस्मादविरोधः ॥ ५ ॥ ॥ धर्मे वेदप्रामाण्याऽधिकरणम् ॥ ५ ॥

## कर्मैके तत्र दर्शनात् ॥ ६ ॥

उक्तं, नित्य शब्दार्थयोः सम्बन्ध इति । तदनुपपन्नम् । शब्दस्यानित्यत्वात् । विनष्टः शब्द' पुनरस्य क्रियमाणस्यार्थेन अकृतकः सम्बन्धो नोपपद्यते । न हि प्रथमश्रुताच्छब्दात् कश्चिदर्थं प्रत्येति । कथं पुनरनित्यः शब्दः । प्रयत्नादुत्तरकालं दृश्यते यतः । अतः प्रयत्नानन्तर्यात्, तेन क्रियते इति गम्यते । नन्वभिव्यञ्ज्यात् स एनम् । नेति ब्रूमः । न हि अस्य प्रागभिव्यञ्जनात् सद्भावे किञ्चन प्रमाणमस्ति । सँश्चाभिव्यज्यते, नासन् ॥ ६ ॥

## अस्थानात् ॥ ७ ॥

नो खल्वप्युच्चरितं मुहूर्त्तमप्युपलभामहे । अतो विनष्ट इत्यवगच्छामः । न च सन्, नोपलभ्यते । अनुपलम्भकारणानां व्यवधानादीनामभावेऽप्यनुपलम्भनात् । न चासौ विषयमप्राप्तः। आकाशविषयत्वात् । कर्णच्छिद्रेऽप्यनुपलम्भनात् ॥ ७ ॥

## करोतिशब्दात् ॥ ८ ॥

अपिच, शब्दं कुरु, मा शब्दं कार्षीरिति व्यवहर्त्तारः प्रयुञ्जते । न त नूनमवगच्छन्ति, स एवायं शब्द इति ॥ ८ ॥

## सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥

नानादेशेषु च युगपच्छब्दमुपलभामहे । तदेकस्य नित्यस्यानुपपन्नमिति । असति विशेषे नित्यस्य नानेकत्वं, कार्याणान्तु बहूनां नानादेशेषु क्रियमाणानामुपपद्यतेऽनेकदेशसम्बन्धः, तस्मादप्यनित्य. ॥९॥

## प्रकृतिविकृत्योश्च ॥ १० ॥

अपिच, दध्यत्र इत्यत्र, इकारः प्रकृतिः, यकारो विकृतिरित्युपदिशन्ति । यद्विक्रियते, तदनित्यम् । इकारसादृश्यं च यकारस्योपलभ्यते । तेनापि तयो प्रकृतिविकारभावो लक्ष्यते ॥ १० ॥

वृद्धिश्च कर्त्तृभूम्नाऽस्य ॥ ११ ॥

अपिच बहुभिरुच्चारयद्भिर्महान् शब्दः श्रूयते । स यदि अभिव्यज्यते, बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत । अतो मन्यामहे-नूनमस्य एकैकेन कश्चिदवयव क्रियते, यत्प्रचयादयं महानुपलभ्यते ॥ ११ ॥ ॥ पूर्वपक्षः ॥

समं तु तत्र दर्शनम् ॥ १२ ॥

तुशब्दात् पक्षो विपरिवर्त्तते । यदुक्त, प्रयत्नादुत्तरकाले दर्शनात् कृतकोऽयमिति । यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः । ततो नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यते इति भविष्यति । यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्यते । तस्मादुभयोः पक्षयोः सममेतत् ॥ १२ ॥

सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

यदपरं कारणमुक्तम् । उच्चरितप्रध्वस्त इति । अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं, ततो नित्यप्रत्ययसामर्थ्यात् कदाचिदुपलम्भं, कदाचिदनुपलम्भं दृष्ट्वा किञ्चिदुपलम्भस्य निमित्तं कल्पयिष्यामः । तच्च संयोगविभागसद्भावे सति भवतीति, संयोगविभागावेवाभिव्यञ्जकाविति वक्ष्यामः । उपरतयो संयोगविभागयोः श्रूयते इति चेत् । नैतदेवम् । न नूनमुपरमन्ति संयोगविभागा , यत उपलभ्यते शब्द इति । न हि ते प्रत्यक्षा इति ॥

यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति, न कुर्वन्ति, आकाशविषयत्वाच्छब्दस्य । आकाशस्यैकत्वाद् य एवायमत्र श्रोत्राकाशः, स एव देशान्तरेष्वपीति स्रुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत । यस्य पुनः कुर्वन्ति, तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद् वायुष्वेव करिष्यन्ति । यथा तन्तवस्तन्तुष्वेव पटम् । तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः, स्रुघ्नस्थत्वात्तेषाम् । यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः । दूरे सत्याः कर्णशष्कुल्याः अनुपकारका· संयोगविभागाः । तेन दूरे यच्छ्रोत्रं, तेन नोपलभ्यते

इति । नैतदेवम् । अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः, सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् । न च युगपदुपलभेते । तस्मान्नाप्राप्ता उपकुर्वन्ति । न चेदुपकुर्वन्ति, तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागाविति ॥

नैतदेवम् । अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्ति, यावद्वेगमभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते, नोपरतेषु । अतो न दोषः । अत एव चानुवातं दूरादुपलभ्यते शब्दः ॥ १३ ॥

## प्रयोगस्य परम् ॥ १४ ॥

यदपरं कारणमुक्तं– शब्दं कुरु, मा कार्षीरिति व्यवहर्त्तारः प्रयुञ्जते । यद्यसंशयं नित्यः शब्दः, शब्दप्रयोगं कुर्विति भविष्यति । यथा गोमयान् कुर्विति संवाहे ॥ १४ ॥

## आदित्यवद्यौगपद्यम् ॥ १५ ॥

यत्तु, एकदेशस्य सतो नानादेशेषु युगपद्दर्शनमनुपपन्नमिति । आदित्यं पश्य देवानाम्प्रिय! एक सन्ननेकदेशावस्थित इव लक्ष्यते । कथं पुनरवगम्यते, एक आदित्य इति । उच्यते । प्राङ्मुखो देवदत्तः पूर्वाह्णे सम्प्रति पुरस्तादादित्यं पश्यति, तस्य दक्षिणतोऽवस्थितो न द्रौ पश्यति। आत्मनश्च सम्प्रति न तिरश्चीनं देवदत्तस्यार्जवे । तस्मादेक आदित्य इति । दूरत्वादस्य देशो नावधार्यते, अतो व्यामोहः । एवं शब्देऽपि व्यामोहादनवधारणं देशस्य । यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्, तथापि तावदनेकदेशता कदाचिदवगम्येत। न च तत् संयोगदेशमागच्छति। प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यते । वायवीया. पुन. संयोगविभागा अप्रत्यक्षस्य वायोः कर्णशष्कुलीप्रदेशे प्रादुर्भवन्तो नोपलभ्यन्ते इति नानुपपन्नम् । अत एव व्यामोहो, यन्नानादेशेषु शब्द इति । आकाशदेशश्च शब्द इति । एकं च पुनराकाशम् । अतोऽपि न नानादेशेषु । अपि च, ऐकरूप्ये सति देशभेदेन कामं देशा एव भिन्ना, न तु शब्द । तस्माद् अयमप्यदोषः ॥ १५ ॥

## वर्णान्तरमविकारः ॥ १६ ॥

न च दध्यत्र इत्यत्र प्रकृतिविकारभावः । शब्दान्तरम् इकाराद् यकारः । न हि यकारं प्रयुञ्जाना इकारमुपाददते । यथा कटं चिकीर्षन्तो वीरणानि । न च सादृश्यमात्रं दृष्ट्वा प्रकृतिर्विकृतिर्वा उच्यते । न हि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते । तस्मादयमप्यदोषः ॥ १६ ॥

नादवृद्धिपरा ॥ १७ ॥

यच्चैतद् बहुभिर्भेरीमाध्मनद्भिः शब्दमुच्चारयद्भिर्महान् शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते। नैवम् । निरवयवो हि शब्दः । अवयवभेदानवगमाद्, निरवयवत्वाच्च महत्त्वानुपपत्तिः । अतो न वर्द्धते शब्दः । मृदुरेकेन । बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येणानेकशो ग्रहणान्महानिव,अवयववानिवोपलभ्यन्ते। संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्या । तेन नादस्यैषा वृद्धिः, न शब्दस्येति ॥ १७ ॥ ॥ उत्तरम् ॥

नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

नित्यः शब्दो भवितुमर्हति ।कुतः। दर्शनस्य परार्थत्वात् । दर्शनमुच्चारणं, तत् परार्थं, परमर्थं प्रत्याययितुम् । उच्चारितमात्रे हि विनष्टे शब्दे न चाऽन्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात् । अतो न परार्थमुच्चार्येत । अथ न विनष्टः, ततो बहुश उपलब्धत्वादर्थावगम इति युक्तम् । अर्थवत्सादृश्यादर्थावगम इति चेत् । न कश्चिदर्थवान्, सर्वेषां नवत्वात् । कस्यचित् पूर्वस्य कृत्रिमः संबन्धो भविष्यतीति चेत् । तदुक्तम् । सदृश इति चावगते व्यामोहात् प्रत्ययो व्यावर्तेत; मालाशब्दान्मालाप्रत्यय इव । यथा गावीशब्दात् सास्नादिमति प्रत्ययस्यानिवृत्तिः, तद्वद्भविष्यतीति चेत् । न हि, गोशब्दं तत्रोच्चारयितुमिच्छा । नेहान्यशब्दोच्चिचारयिषा । न चैकेनोच्चारणयत्नेन संव्यवहारश्चार्थसंबन्धश्च शक्यते कर्तुम् । तस्माद्दर्शनस्य परार्थत्वान्नित्यः शब्दः ॥ १८ ॥ ॥ सिद्धान्तः ॥

सर्वत्र यौगपद्यात् ॥ १९ ॥

गोशब्दे उच्चारिते सर्वगवीषु युगपत् प्रत्ययो भवति । अतः आकृतिवचनोऽयम् । न चाऽऽकृत्या शब्दस्य संबन्धः शक्यते कर्तुम् ।

निर्दिश्य ह्याकृतिं कर्त्ता संबध्नीयात् । गोपिण्डे च बहूनामाकृतीनां सद्भावाच्छब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति ? । नित्ये तु सति गोशब्दे बहुकृत्व उच्चरिते श्रुतपूर्वस्याऽन्यासु गोव्यक्तिष्वन्वयव्यतिरेकाभ्यामाकृतिवचनमवगमयिष्यति । तस्मादपि नित्य ॥ १९ ॥

संख्याऽभावात् ॥ २० ॥

अष्टकृत्वो गो शब्द उच्चारित इति वदन्ति, नाऽष्टौ गोशब्दा इति । किमतो ? यद्येवम् । अनेन वचनेनावगम्यते, प्रत्यभिजानन्तीति । वयं तावत् प्रत्यभिजानीमो, न नः करणदौर्बल्यम् । एवमन्येऽपि प्रत्यभिजानन्ति, स एवायमिति । प्रत्यभिजानाना प्रत्यभिजानन्ति चेद् वयमिवान्येऽपि, नान्य इति वक्तुमर्हन्ति । अथ मतम्, अन्यत्वे सति सादृश्येन व्यामूढाः, स–इति वक्ष्यन्ति । तन्न । न हि ते सदृश इति प्रतियन्ति, किं तर्हि, स एवायमिति । विदिते च स्फुटेऽन्यत्वे, व्यामोह इति गम्यते । न च, अयमन्य इति प्रत्यक्षमन्यद्वा प्रमाणमस्ति ॥

स्यादेतत् । बुद्धिकर्म्मणी अपि ते प्रत्यभिज्ञायेते, ते अपि नित्ये प्राप्नुत. । नैष दोष । न हि ते प्रत्यक्षे । अथ प्रत्यक्षे नित्ये एव । ह्यस्तनस्य शब्दस्य विनाशादन्योऽद्यतन इति चेत् । नैष विनष्टः । यत एनं पुनरुपलभामहे । न हि प्रत्यक्षदृष्टं मुहूर्त्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति । परिकल्पयन्तो, द्वितीयसंदर्शने मातरि, जायायां, पितरि वा नाऽऽश्वस्युः । न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य, नष्ट इत्येव कल्पयन्ति । अप्रमाणतायां विदितायां, नास्तीत्यवगच्छाम. । न हि प्रमाणे प्रत्यक्षे सति, अप्रमाणता स्यात् । अस्तीति पुनरव्यामोहेनावगम्यमाने, न कश्चिदप्यभाव । न चाऽसिद्धे अभावे व्यामोह । न च सिद्धोऽभाव । तस्मादसति व्यामोहे, नाभाव । तदेतदानुपूर्व्या सिद्धम् । तस्मात् पुरस्तादनुच्चरितमनुपलभाना अपि न विनष्ट इत्यवगन्तुमर्हन्ति । यथा गृहान्निर्गता. सर्वगृहजनमपश्यन्तः पुनः प्रविश्योपलभमाना अपि, न प्राक् प्रवेशाद् विनष्टा इत्यवगच्छन्ति । तद्वदेनमपि, न अन्य इति वक्तुमर्हन्ति । येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति, तेऽपि न शक्नुवन्ति शब्दस्य वदितुम् । अन्ते हि क्षयदर्शनात् ते मन्यन्ते । न च शब्दस्यान्तः । न च क्षयो लक्ष्यते । स इति प्रत्यक्ष प्रत्ययः, सदृश इत्यानुमानि-

कः । न च प्रत्यक्षविरुद्धमनुमानमुदेति, स्वकार्य्यं वा साधयति । तस्मान्नित्यः ॥ २० ॥

अनपेक्षत्वात् ॥ २१ ॥

येषामनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्ष्यते, तेषामपि केषाञ्चिदनित्यता गम्यते येषां विनाशकारणमुपलभ्यते यथाऽभिनवं पटं दृष्ट्वा न चैनं क्रियमाणमुपलब्धवान् । अथवा अनित्यत्वमवगच्छति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजानतोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति नैवं शब्दस्य किञ्चित् कारणमवगम्यते, यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ॥ २१ ॥

प्रख्याभावाच्च योगस्य ॥ २२ ॥

इदं पदेभ्यः केभ्यश्चिदुत्तर सूत्रम् । ननु वायुकारणक स्यादिति वायुरुद्गत संयोगविभागे शब्दो भवतीति । तथाच शिक्षाकारा आहुः– वायुरापद्यते शब्दतामिति । नैतदेवम् । वायवीयश्चेच्छब्दो भवेद् वायोः सन्निवेशविशेष स्यात् । न च वायवीयान् अवयवान् शब्दे सत प्रत्यभिजानीमो, यथा पटस्य तन्तुमयान् । न चैवं भवति । स्याच्चेदेवं, स्पर्शनेनोपलभेमहि । न च वायवीयानवयवान् शब्दगतान् स्पृशामः । तस्मान्न वायुकारणक । अतो नित्य ॥ २२ ॥

लिङ्गदर्शनाच्च ॥ २३ ॥

लिङ्गं चैवं भवति, वाचा विरूपनित्ययेति । अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति । तस्मान्नित्य शब्द ॥ २३ ॥ ॥ हेतु ॥ ॥ शब्दनित्यताऽधिकरणम् ॥ ६ ॥

उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥

यद्यप्यौत्पत्तिको नित्यः शब्दोऽर्थसम्बन्धश्च तथापि, न चोदनालक्षणो धर्म्म । चोदना हि वाक्यम् । न हि, अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यतो वाक्यादन्यतमस्मात् पदाद्, अग्निहोत्रात स्वर्गो भवतीति गम्यते । गम्यते तु पदत्रये उच्चारिते । न चाऽत्र चतुर्थः शब्दोऽस्त्यन्यस्तः पदत्रयसमुदायात् । न चाऽयं समुदायोऽस्ति लोके, यतोऽस्य व्यवहारादर्थोऽवगम्यते । पदानि अमूनि प्रयुक्तानि, तेषां नित्योऽर्थः । अप्रयुक्तश्च समुदाय तस्मात् समुदायस्यार्थं कृत्रिमो व्यामोहो वा । न च पदार्था एव वाक्यार्थ । सामान्ये हि पदं प्र-

वर्त्तते विशेषे वाक्यम् । अन्यच्च सामान्यम्, अन्यो विशेषः । न च पदार्थाद्वाक्यार्थावगतिः, असम्बन्धात् । असति चेत् सम्बन्धे, कस्मिँश्चित् पदार्थेऽवगतेऽर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात् । न चैतदेवं भवति । तस्मादन्यो वाक्यार्थ ॥

स्यादेतद्, अप्रयुक्तादपि वाक्यादसति सम्बन्धे स्वभावादर्थोऽवगम इति । यदि कल्प्येत — शब्दो धर्ममात्मीयं व्युत्क्रामेत् । न चैष शब्दधर्मो, यदऽप्रयुक्तादपि शब्दादर्थः प्रतीयते । न हि प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति । तदभिधीयते—पदधर्मोऽयं, न वाक्यधर्मः । वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते । नैतदेवम् । यदि प्रथमश्रुतादवगच्छेयुः, अपि तर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च । न त्वपदार्थविदोऽवगच्छन्ति । तस्मान्नैतदेवम् ॥ ननु पदार्थविद्भिरप्यवगच्छद्भिरकृत एव वाक्यार्थसबन्धो भविष्यति, पदार्थवेदनेन हि संस्कृताः अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितीयादिश्रवणेनेति । नेति ब्रूमः । यदि वाक्येऽन्त्यो वर्णः पूर्ववर्णजनितसँस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदानीं पदार्थज्ञानादवकल्प्यते । तस्मात् कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा, न पदार्थद्वारेण संभवति वाक्यार्थज्ञानमिति ॥

नन्वेवं भविष्यति सामान्यवाचिनः पदस्य, गौरिति वा, अश्व इति वा, विशेषकं शुक्ल इति वा, कृष्ण इति वा पदम् अन्तिकामुपनिपतति यदा तदा वाक्यार्थोऽवगम्यते । तन्न । न हि कथमिव गौरिति वा, अश्व इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता, वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्त्तेत । न च शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न चानर्थको मा भूदित्यर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः । तस्मात् कृत्रिमः । पदसङ्घाताः खल्वेते सङ्घाताश्च पुरुषकृता दृश्यन्ते । यथा, नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः * नीलकौशेयसवीताः प्रणश्यन्तीव कादम्बाः । अतो वैदिका अपि पुरुषकृता इति ॥ २४ ॥ ॥ पूर्वपक्षः ॥

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥**

तेष्वेव पदार्थेषु भूतानां वर्त्तमानानां पदानां क्रियाऽर्थेन समु-

च्चारणम् । न अनपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्यमर्थान्तरप्रसिद्धम् । कुत । प्रमाणाभावात् । न किञ्चन प्रमाणमस्ति, येन प्रमिमीमहे । न ह्यनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्त्तितुमिति ॥

नन्वऽर्थापत्तिरस्ति, यत् पदार्थव्यतिरिक्तमर्थमवगच्छाम । न च शक्तिमन्तरेण तदवकल्प्यते इति । तन्न । अर्थस्य तन्निमित्तत्वात्, भवेदर्थापत्तिर्यद्यसत्यामपि शक्तौ नाऽन्यन्निमित्तमवकल्प्येत । अवगम्यते तु निमित्तम् । किम् ?। पदार्थाः । पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अवगताः सन्तो वाक्याऽर्थं गमयन्ति । कथम् । यत्र हि, शुक्ल इति वा, कृष्ण इति वा गुणः प्रतीतो भवति, भवति खल्वसावलं गुणवति प्रत्ययमाधातुम् । तेन गुणवति प्रत्ययमिच्छन्त केवलं गुणवचनमुच्चारयन्ति, संपत्स्यते एषां यथासंकल्पितोऽभिप्राय । भविष्यति विशिष्टार्थसंप्रत्ययः । विशिष्टार्थसंप्रत्ययश्च वाक्यार्थः।एवं चेद्, अवगम्यते अन्यत एव वाक्याऽर्थ । को जातुचिद्, अदृष्टा पदसमुदायस्य शक्तिरर्थाद् अवगम्यत इति वदिष्यति। अपिचाऽन्वयव्यतिरेकाभ्यामेतदवगम्यते । भवति हि कदाचिदियमवस्था मानसादप्याघाताद् यदुच्चरितेभ्यः पदेभ्यो न पदार्था अवधार्य्यन्ते, तदानीं नियोगतो वाक्यार्थं नावगच्छेयु', यद्यस्य अपार्थगर्थ्यमभविष्यत्, नियोगतस्तु नावगच्छन्ति । अपिचाऽन्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति, अवगच्छत्येवाऽसौ शुक्लगुणकम् । तस्मात् पदार्थप्रत्यये एव वाक्यार्थो, नास्य पदसमुदायेन सम्बन्ध । यत्तु- श्रौतः पदार्थो न वाक्यानुरोधेन कुतश्चिद्विशेषाद्पवर्त्तितुमर्हतीति । सत्यम् । एवमेतत् । यत्र केवलः पदार्थः प्रयुज्यमान प्रयोजनाभावादनर्थकः सञ्जायते इत्यवगत भवति, तत्र वाक्यार्थोऽपि तावद्भवत्विति विशिष्टार्थताऽवगम्यते, न सर्वत्र । एवञ्च सति, गुणान्तरप्रतिषेधो न शब्दार्थ इत्येतदपि परिहृतं भवति । अपिच प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्ति ,प्रातिपदिकार्थो विशेषक इत्याह । सा च विशेषश्रुति· सामान्यश्रुतिं बाधेत । यच्च, एते पदसङ्घाता पुरुषकृता दृश्यन्ते इति, परिहृतं तदस्मरणादिभि । अपिचैवञ्जातीयकेऽर्थे वाक्यानि संहर्त्तुं न किञ्चन पुरुषाणां बीजमस्ति ॥

**लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥**

लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य, सन्नियमः सन्निबन्धनं शक्यं तत्र संहर्त्तुम् । एवञ्जातीयकानि वाक्यानि, नीलोत्पलवनेष्वचेति । तस्माद्, अग्निहोत्रं जुहुयात् स्वर्गकाम इत्येतेभ्य एव पदेभ्यो ये अर्था अवगतास्तेभ्य एवैतदवगम्यते, अग्निहोत्र तु स्वर्गो भवतीति । पदेभ्य एव पदार्थप्रत्यय., पदार्थेभ्यो वाक्यार्थ इति ॥ २६ ॥ ॥ ॥ उत्तरम् ॥ ॥ सिद्धान्तः ॥ ॥ वेदस्याऽर्थप्रत्यायकत्वाऽधिकरणम् ॥७॥

## वेदाँश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥

उक्तं, चोदनालक्षणोऽर्थो धर्म इति । यतो न पुरुषकृतः शब्दस्याऽर्थेन सम्बन्ध । तत्र पदवाक्याश्रय आक्षेप. परिहृत । इदानीमन्यथाऽऽक्षेप्स्याम । पौरुषेयाश्चोदना इति वदाम । सन्निकृष्टकाला कृतका वेदा इदानीन्तनाः । ते च चोदनानां समूहाः । तत्र पौरुषेयाश्चेद्वेदाः, असंशयं पौरुषेयाश्चोदना । कथं पुन , कृतका वेदा इति केचिन्मन्यन्ते । यत , पुरुषाख्या । पुरुषेण हि समाख्यायन्ते वेदा – काठकं, कालापकं, पैप्पलादकं, मौहुलमिति । न हि सम्बन्धादृते समाख्यानम । न च पुरुषस्य शब्देन अस्ति सम्बन्धोऽन्यतः कर्त्ता पुरुष , कार्य्यः शब्द इति । ननु प्रवचनलक्षणा समाख्या स्यात् । नेति ब्रूम. । असाधारणं हि विशेषणं भवति । एक एव हि कर्त्ता, बहवोऽपि प्रब्रूयु । अतोऽस्मर्यमाणोऽपि चोदनाया कर्त्ता स्यात् । तस्मान्न प्रमाणं, चोदनालक्षणोऽर्थो धर्म इति ॥ २७ ॥

## अनित्यदर्शनाच्च ॥ २८ ॥

जननमरणवन्तश्च वेदार्था. श्रूयन्ते । बवर. प्रावाहणिरकामयत, कुसुरुविन्दः औद्दालकिरकामयतेत्येवमादय. । उद्दालकस्यापत्यं, गम्यते औद्दालकि । यद्येवं, प्राग् औद्दालकिजन्मनो नाऽयं ग्रन्थो भूतपूर्वः । एवमप्यनित्यता ॥ २८ ॥ ॥ पूर्वपक्षः ॥

## उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥

उक्तमस्माभिः, शब्दपूर्वत्वमध्येतॄणाम् । केवलम् आक्षेपपरिहारो वक्तव्य., सोऽभिधीयते ॥ २९ ॥ ॥ सिद्धान्तः ॥

## आख्या प्रवचनात् ॥ ३० ॥

यदुक्तं, कर्तृलक्षणा समाख्या काठकाद्येति । तदुच्यते । नेयमऽर्थापत्ति. । अकर्तृभिरपि ह्येनामाचक्षीरन् । प्रकर्षेण वचनमनन्यसा-

धारणं कठादिभिरनुष्ठितं स्यात्। तथापि हि समाख्यातारो भवन्ति। स्मर्यते च, वैशम्पायनः सर्वशाखाध्यायी, कठ पुनरिमां केवलां शाखामध्यापयाम्बभूवेति। स बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्यां शाखामनधीयान । तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम् ॥ ३० ॥

## परन्तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥

यच्च, प्रावाहणिरिति। तन्न। प्रवाहणस्य पुरुषस्याऽसिद्धत्वाद्, न प्रवाहणस्यापत्यं प्रावाहणिः। प्रशब्दः प्रकर्षे सिद्धः वहतिश्च प्रापणे न त्वस्य समुदाय क्वचित् सिद्धः। इकारस्तु यथैवापत्ये सिद्धस्तथा क्रियायामपि कर्त्तरि। तस्माद् य प्रवाहयति, स प्रावाहणि। बबर-इति शब्दानुकृतिः। तेन यो नित्योऽर्थस्तमेवैतौ शब्दौ वदिष्यतः। अत उक्तं, परन्तु श्रुतिसामान्यमात्रमिति ॥ ३१ ॥ ॥ उत्तरम् ॥

## कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् ॥ ३२ ॥

अथ कथमवगम्यते—नायमुन्मत्तबालवाक्यसदृश इति!! तथाहि पश्यामः— वनस्पतयः सत्रमासत, सर्पाः सत्रमासतेति। यथा, जरद्गवो गायति मत्तकानि। कथं नाम जरद्गवो गायेत्। कथं वा वनस्पतय सर्पा वा सत्रमासीरन्निति। उच्यते विनियुक्तं हि दृश्यते परस्परेण संबन्धार्थम्। कथम्। ज्योतिष्टोम इत्यभिधाय, कर्त्तव्य इत्युच्यते। केनेत्याकाङ्क्षिते, सोमेनेति। किमर्थमिति स्वर्गायेति। कथमिति। इत्थमनया इति कर्त्तव्यतयेति। एवमवगच्छन्तः, पदार्थैरभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः ? ॥

नन्वनुपपन्नमिदं दृश्यते, वनस्पतयः सत्रमासतेत्येवमादि ' नानुपपन्नम्। नानेन, अग्निहोत्रं जुहुयात् स्वर्गकाम इत्येवमादयोऽनुपपन्ना स्युः। अपि च, वनस्पतयः सत्रमासतेत्येवमादयोऽपि नानुपपन्नाः। स्तुतयो ह्येताः सत्रस्य। वनस्पतयो नामाऽचेतना इदं सत्रमुपासितवन्त, किं पुनर्विद्वांसो ब्राह्मणा । तद्यथा लोके, सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति । अपिच अविगीत सुहृदुपदेश सुप्रतिष्ठित कथमिवाशङ्क्येत उन्मत्तबालवाक्यसदृश इति !!। तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम् ॥ ३२ ॥ ॥ वेदस्याऽपौरुषेयत्वाधिकरणम् ॥ ८ ॥ ॥ इति श्रीशबरस्वामिकृते मीमांसाभाष्ये प्रथमाऽध्यायस्य प्रथम पादः ॥१॥१॥ तर्कपादोऽयम् ॥

अथ प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ १ ॥

## आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥

सोऽरोदीत्, यदरोदीत्, तद् रुद्रस्य रुद्रत्वम्, प्रजापतिरात्मनो वपामुदक्खिदत्, देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्नि-त्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि । तानि किं कश्चित् धर्मं प्रमिमते, उत न ? इति भवति विचारणा । तदभिधीयते । क्रिया कथमनुष्ठेयेति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति । तद्, यानि वाक्यानि क्रियां नावगमयन्ति, क्रियासम्बद्धं वा किञ्चित् । एवमेव भूतमर्थमन्वाचक्षते– रुदितवान् रुद्रः, वपामुच्चिखेद प्रजापतिः, देवा वै दिशो न प्रजज्ञिर इत्येवञ्जातीयकानि, तानि कं धर्मं प्रमिमीरन् ? । अथोच्येत, अध्याहारेण वा विपरिणामेन वा, व्यवहितकल्पनया वा, व्यवधारणकल्पनया वा, गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते इति । स कल्प्यमानः क कल्प्येत ? । रुद्रः किल रुरोद, अतोऽन्येनाऽपि रोदितव्यम् । उच्चिखेद आत्मवपां प्रजापतिरतोऽन्योऽप्युत्खिदेदात्मनो वपाम् । देवा वै देवयजनकाले दिशो न प्रज्ञातवन्तोऽतोऽन्योऽपि दिशो न प्रजानीयादिति ।

तच्चाशक्यम् । इष्टवियोगेनाभिघातेन वा यद् वाष्पनिर्मोचनं, तद् रोदनमित्युच्यते । न च तदिच्छातो भवति । न च कश्चिदात्मनो वपामुत्खिद्य तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात् न च देवयजनाध्यवसानकाले केचिद् दिशो मुह्येयुः । अत एषामानर्थक्यम् । तस्मादेवञ्जातीयकानि वाक्यानि अनित्यानीत्युच्यन्ते । यद्यपि च नित्यानि, तथापि न नित्यमर्थं कुर्वन्तीति । स एष वाक्यैकदेशस्याक्षेपो, न कृत्स्नस्य वाक्यस्य । नन्वेकदेशाद्विना साकाङ्क्षः पदसमूहो न पर्य्याप्तः स्वस्मै प्रयोजनाय, अत आक्षिप्त एवेति । नैवं भवति हि कश्चित् पदसमूहो, योऽर्थवादेभ्यो विनाऽपि विदधाति कञ्चिदर्थम् । यानि पुनस्तैः सह संयुज्यार्थान्तरे वर्त्तन्ते, तान्येकदेशाक्षेपेणाक्षिप्यन्ते ॥ १ ॥

## शास्त्रदृष्टविरोधाच्च ॥ २ ॥

स्तेनं मनः, अनृतवादिनी वागित्येवञ्जातीयकानां धर्मं प्रति

अप्रामाण्यम् । भूतानुवादात् । विपरिणामादिभिरपि कल्प्यमाने स्तेयं मृषोद्यञ्च कर्त्तव्यमित्यापतति । तच्चाशक्यं स्तेयानृतवादप्रतिषेधमबाधमानेनानुष्ठातुम् । न च विकल्पः, वैषम्यात् । एकः कल्प्यो विधिः, एकः प्रत्यक्षः ॥

अथ दृष्टविरोधः । तस्माद् धूम एवाऽग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इति । अस्माल्लोकादुत्क्रम्याऽग्निरादित्यं गतः, रात्रौ आदित्यस्तमित्येतदुपपादयितुमिदम् । उभयमपि दृष्टविरुद्धमुच्यते । तस्मान्नैषाऽवधारणा सिद्ध्यतीति । अपरो दृष्टविरोधः । न चैतद् विद्मो वयं ब्राह्मणा वा स्मः, अब्राह्मणा वेति अक्रियार्थत्वादनर्थकम् । अथायमर्थः । नैवैतज्ज्ञायते, किं वा ब्राह्मणा वयम् उताब्राह्मणा एवेति प्रत्यक्षविरुद्धमप्रमाणम् । अपरः शास्त्रदृष्टेन विरोधः । को हि तद्वेद, यदमुष्मिँल्लोकेऽस्ति वा, न वेति । यदि प्रश्नोऽयम्, अक्रियार्थत्वादनर्थकः । अथानवक्लृप्तिः, शास्त्रदृष्टेन विरोधः । अतः प्रत्यक्षविरुद्धमप्रमाणम् ॥ २ ॥

## तथाफलाभावात् ॥ ३ ॥

गर्गत्रिरात्रब्राह्मणं प्रकृत्य उच्यते, शोभतेऽस्य मुखं य एवं वेदेति । यदि भूतानुवादः, अनर्थकः । अथाध्ययनफलानुवादः, ततोऽसदनुवादः । कालान्तरे फलं भविष्यतीति चेन्न ह्यत्र प्रमाणमस्ति । विधिः स्यादिति चेन्नैष विधिपरः । द्रव्यसंस्कारकर्मस्विति चिन्तयिष्यति एतदुपरिष्टात्, किं फलविधिरुतार्थवाद इति । इह तु किं भूतानुवादः, क्रियार्थो वेति । तेन न, फलविधित्वान्निराकृतस्य इहानर्थकोऽर्थवादविचार इति । आऽस्य प्रजायां वाजी जायते य एवं वेदेति च उदाहरणम् ॥ ३ ॥

## अन्यानर्थक्यात् ॥ ४ ॥

पूर्णाहुत्या सर्वान् कामानवाप्नोति, पशुबन्धयाजी सर्वाँल्लोकानभिजयति, तरति मृत्युं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेदेति । यदि भूतानुवादमात्रमनर्थकम् । अथ फलविधिः, इतरेषामानर्थक्यम् । न ह्यकृत्वा पूर्णाहुतिमग्निहोत्रादयः क्रियन्ते । न चानिष्ट्वा अग्नीषोमीयेन सोमेन यजन्ते । न चानधीत्य अश्वमेधेन यजन्ते । तद्यथा, पथि जाते अर्के मधु उत्सृज्य, तेनैव पथा मध्वार्थिनः पर्वतं न गच्छेयुस्तादृशं हि तत् । अपि चाहुः । अर्के चेन्मधु विन्देत

किमर्थं पर्वतं व्रजेत् * इष्टस्यार्थस्य संसिद्धौ को विद्वान् पर्वतमाव्रजेदिति ॥ ४ ॥

अभागिप्रतिषेधाच्च ॥ ५ ॥

न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति । विज्ञायते एवैतद् । अन्तरिक्षे, दिवि चाग्निर्न चीयते इति पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं, भवेच्चयनप्रतिषेधार्थमेव तत् । अथाप्रमाणम् । नैष विरोधो भवति । कथं तत् प्रमाण ?, यद् विध्यन्तरमाकुलयेत्, स्वयं चाफलं स्यात् । न चेतव्यं, हिरण्यं निधाय चेतव्यमिति ॥ ५ ॥

अनित्यसंयोगात् ॥ ६ ॥

अनित्यसंयोगश्च वेदप्रामाण्ये सति । परन्तु श्रुतिसामान्यमात्रमिति परिहृत । इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्बलक उक्तिर्गति, बवर प्रावाहणिरकामयतेति ॥ ६ ॥ ॥ पूर्वपक्ष ॥

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥७॥

इदं समाम्नायते- वायव्यं श्वेतमालभेत भूतिकामः । वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीति । वायुर्वै क्षेपिष्ठा देवतेत्यतो यद्यपि क्रिया नाऽवगम्यते, क्रियासबद्धं वा किञ्चित् । तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणम् । भूतिकाम इत्येवमन्तो विध्युद्देशः । तेनैकवाक्यभूतो, वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः । कथमेकवाक्यभाव ? । पदानां साकाङ्क्षत्वाद्विधे स्तुतेश्चैकवाक्यत्वं भवति । भूतिकाम आलभेत । कस्माद् ? यतो वायुः क्षेपिष्ठेति । नायमभिसम्बन्धो विवक्षित , भूतिकामेनालब्धव्यमिति । कथ तर्हि आलभेत ? । यतः, ततो भूतिरिति भिन्नाविमावर्थौ । उभयाभिधाने वाक्यं भिद्येत ॥

किमर्था स्तुतिरितिचेत् । कथं रोचेत ? नोऽनुष्ठीयेतेति । ननु प्राक् स्तुतिवचनाद् अनुष्ठानं भूतिकामान्तात् सिद्ध, स्तुतिवचनमनर्थकम् । न हि यदा स्तुतिपदाऽसन्निधान, तदा पूर्वेणैव विधि , यदा स्तुतिपदसम्बन्धो, न तदा भूतकामस्यालम्भो विधीयते । यथा, पटो भवतीति, पट उत्पद्यते इत्यर्थः । निराकाङ्क्षं च पदद्वयम् । यदा च तस्मिन्नेव, रक्त-इत्यपरं श्रूयते, तदा रागसम्बन्धो भवतीत्यर्थः । भवति च रक्तं प्रत्याकाङ्क्षा । एवं यदा न स्तुतिपदानि, विधिशब्दैर्नै-

च तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन। नन्वेवं सति किं स्तुतिवचनेन यस्मिन् सति अविधायकं, मा भूत् तत् । तदभावे- ऽपि पूर्वविधिनैव प्ररोचयिष्यते इति । सत्यं, विनाऽपि तेन सिद्ध्येत् प्ररोचनम् अस्ति तु तत् तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽव- गम्यते स्तुतिप्रयोजनम् । तयोस्तस्मिन्नविद्यमाने विधिना प्ररोचनाम- ति ॥ ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वाद्विधिरभिप्रेतः स्याद्, न विवक्ष्येत स्तुतिपदसम्बन्ध । आह-- स्तुतिपदानि ह्यन- र्थकान्यभविष्यन् साकाङ्क्षाणि । भवन्त्वनर्थकानीति चेत् न, ग- म्यमानेऽर्थे अविवक्षितार्थानि भवितुमर्हन्ति । योऽसौ विध्युद्देश , स शक्नोति निरपेक्षोऽर्थं विधातुं, शक्नोति च स्तुतिपदानां वाक्यशे- षीभवितुम् । प्रत्यक्षश्च वाक्यशेषभाव. । अतोऽस्माद्विधे स्तुतिम- वगच्छामः ॥

ननु निरपेक्षादपि विधिमवगमिष्यामः । भवत्वेवम् । नैवं सति कश्चि- द्विरोधः, किन्त्वशक्यः स्तुतिपदसम्बन्धे सति विध्यर्थो विवक्षितुम् । वाक्यं हि सम्बन्धस्य विधायकम् द्वौ चेत् सम्बन्धौ विदध्याद्— भूतिकाम आलभेत, आलम्भेन च एष गुणो भविष्यतीति; भिद्येत तर्ह्येवं सति वाक्यम् । अथ यदुक्तं– न क्रिया गम्यते, न तत्सम्बद्धं वा किञ्चिदिति । स्तुत्यर्थेन विधीनां स्युः । स्तुतिशब्दा स्तुवन्तः क्रियां प्ररोचयमाना अनुष्ठातॄणामुपकारिष्यन्ति क्रियायाः । एवमि- मानि सर्वाण्येव पदानि कञ्चिदर्थं स्तुवन्ति विदधाति । अतः प्रमा- णम् । एवञ्जातीयकानि, वायुर्वै क्षेपिष्ठा देवतेति ॥७॥ ॥ सिद्धान्त ॥

## तुल्यं च साम्प्रदायिकम् ॥ ८ ॥

अथोच्येत– प्राक् स्तुतिपदेभ्यो, निराकाङ्क्षाणि विधायकानि, विधिस्वरूपत्वात् । स्तुतिपदानि तु प्रमादपाठ इति । तन्न । एवमर्था- वगमात् । तुल्यश्च साम्प्रदायिकम् ' सम्प्रदाय प्रयोजनं येषां धर्माणां, सर्वे ते विधिपदानाम् अर्थवादपदानां च तुल्याः। अध्यायाऽनध्यायते, गुरुमुखात्प्रतिपत्ति , शिष्योपाध्यायता च सर्वस्मिन्नेवञ्जातीयकं आव- र्त्तनाऽर्थे तुल्यमाद्रियन्ते। स्मरणं च दृढम् । अतो न प्रमादपाठ इति ॥८॥

## अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थ- स्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥

अपि च, या एषाऽनुपपत्तिरुक्ता- शास्त्रदृष्टविरोधादित्येवमाद्या सा, सोऽरोदीदित्येवमादिषु न प्राप्नोति । कुतः । प्रयोगे हि स्तेयादीनामुच्यमाने विरोध. स्यात् । शब्दार्थस्त्वप्रयोगभूतः । तस्मादुपपद्यते- स्तेनं मन, अनृतवादिनी वागिति ॥ ९ ॥

गुणवादस्तु ॥ १० ॥

यदुक्तं विधेयस्य प्ररोचनार्था स्तुतिरिति । तदिह कथमवकल्प्येत ?, यत्रान्यद्विधेयम्, अन्यच्च स्तूयते । यथा, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीति । वेतसाऽवके विधीयेते, आपश्च स्तूयन्ते-आपो वै शान्ता इति । तदुच्यते ॥ गुणवादस्तु ॥ गौण एष वादो भवति, यत् सम्बन्धिनि स्तोतव्ये सम्बन्ध्यन्तरं स्तूयते । अभिजनो ह्येष वेतसावकयो । ततस्ते जाते । अभिजनसंस्तवेन चाभिजात स्तुतो भवति । यथा-अस्माकाभिजनो देवदत्तोऽस्माकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते, एवमत्रापि द्रष्टव्यम् ॥

अथ, सोऽरोदीदिति कस्य विधे शेषः ? । तस्माद् बर्हिषि रजतं न देयमित्यस्य । कुत ? । साकाङ्क्षत्वात् पदानाम् । सोऽरोदीत्, यदरोदीत् तद् रुद्रस्य रुद्रत्वमित्यत्र, स इति प्रकृतापेक्ष । तत्प्रत्ययात् । तस्य यदश्रु अशीर्यत इति तस्येति पूर्वप्रकृतापेक्ष एव । उपपत्तिश्चोपरितनस्य, यो बर्हिषि रजतं दद्यात् पुराऽस्य संवत्सराद् गृहे रोदनं भवतीत्यस्य हेतुत्वेनायं प्रतिनिर्दिश्यते—तस्माद्बर्हिषि रजतं न देयमिति । एवं सर्वाणि साकाङ्क्षाणि कथं विधेरुपकुर्वन्तीति ? । गुणवादेन रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते । तत् प्रतिषेधस्य गुणो यद् अरोदनमिति । कथं पुनररुदति, अरोदीदिति भवति ? कथं वाऽनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम् ? पुराऽस्य संवत्सरादसति रोदने, कथं रोदनं भवतीति । तदुच्यते ॥ गुणवादस्तु ॥ गौणा एते शब्दाः । रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनाद् । यदरोदीदित्युच्यते । वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह । निन्दन्नेव च धनत्यागे दु खदर्शनात् पुराऽस्य संवत्सराद् गृहे रोदनं भवतीत्याह ॥

तथा, यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत इति आकाङ्क्षितत्वादस्य विधेः शेषोऽयं-स आत्मनो वपामुदक्खिददिति । कथ गुणवाद. ? इत्थं नाम नासन् पशवो यद्

आत्मनो वपामुदक्खिदिति। एतच्च कर्मण सामर्थ्यं, यदू अग्नौ प्रहृतमात्रायां वपायामजस्तूपर उद्गाद्, इत्थं बहवः पशवो भवन्तीति। कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिदिदित्याह?। उच्यते। असद्वृत्तान्तान्वाख्यानं, स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। इहान्वाख्यान वर्त्तमाने, द्वयं निष्पद्यते— यच्च वृत्तान्तज्ञानं, यच्च कस्मिँश्चित् प्ररोचना द्वेषो वा तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं, न निवर्त्तकं चेति प्रयोजनाभावादनर्थकमित्यऽविवक्षितम। प्ररोचनया तु प्रवर्त्तते, द्वेषाद् निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्ज्येत। कथ पुनरिदं निरालम्बनमन्वाख्यायते? इति। उच्यते। नित्यः कश्चिदर्थः प्रजापतिः स्याद् वायुराकाश आदित्यो वा स आत्मनो वपामुदक्खिदादति—वृष्टिं, वायुं, रश्मिं वा तामग्नौ प्रागृह्णात्, वैद्युते आर्चिसे लौकिके वा। ततोऽज इत्यन्नं बीजं, विरुद् वा। तमालभ्य तमुपयुज्य प्रजाः पशून् प्राप्नोतीति गौणाः शब्दा॥

आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुरित्यस्य विधेशेषो, देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्नित्याकाङ्क्षितत्वात्। सर्वेऽव्यामोहानामादित्यश्चरुर्नाशयिता, अपि दिङ्मोहस्येति स्तुतिः। कथमसति दिङ्मोहे दिङ्मोहशब्द इति। उच्यते। अप्राकृतस्य बहो कर्मसमूहस्योपस्थितत्वाद् गौणो मोहशब्दोऽवधारणावकाशदानादिभिर्ज्ञापयतीति गौणता॥ १०॥

रूपात् प्रायात्॥ ११॥

हिरण्यं हस्ते भवति अथ गृह्णातीति, साकाङ्क्षत्वादस्य विधेः शेषः— स्तेनं मनोऽनृतवादिनी वागिति। निन्दावचनं हिरण्यस्तुत्यर्थेन यथा—किम् ऋषिणा, देवदत्त एव भोजयितव्य। कथं पुनरस्तेनं मनो निन्दितुमपि स्तेनशब्देनोच्यते, वाचं चाऽनृतवादिनीमपि, अनृतवादिनीति ब्रूयात्? गुणवादस्तु रूपात्। यथा स्तेनाः प्रच्छन्नरूपा, एवं च मन इति गौणः शब्दः। प्रायाच्च अनृतवादिनी वागिति॥ ११॥

दूरभूयस्त्वात्॥ १२॥

दृष्टविरोधे उदाहरणं, तस्माद्धूम एवाग्नेर्दिवा ददृशे, नार्चिः। तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूम इति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति

सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति मिश्र-लिङ्गमन्त्रयोर्विधानस्याकाङ्क्षितत्वाच्छेष । उभयोर्देवतयो सन्निधाने होम इति स्तुतेरुपपत्तिः दूरभूयस्त्वाद् धूमस्याग्नेश्चाऽदर्शने गौणः शब्द ॥ १२ ॥

## अपराधात् कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

दृष्टविरोधे एव उदाहरणं, न चैतद्विद्म इति । तत्, प्रवरे प्रव्रियमाणे देवा पितर इति ब्रूयादित्याकाङ्क्षितत्वादस्य विधे शेषः । अब्राह्मणोऽपि ब्राह्मण प्रवरानुमन्त्रणेन स्यादिति स्तुति । दुर्ज्ञानत्वादज्ञानवचनं गौणम् । स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन, अप्रमत्ता रक्षत तन्तुमेनमित्यादिना दुर्ज्ञानम् ॥ १३ ॥

## आकालिकेप्सा ॥ १४ ॥

शास्त्रदृष्टविरोधे उदाहरणं, को हि तद्वेदेति, दिक्ष्वतीकाशान् करोतीति साकाङ्क्षत्वादस्य विधे शेषः । प्रत्यक्षफलत्वेन स्तुतिः । अनवक्लृप्तिवचनं विकृष्टकालफलत्वाद्गौणम् ॥ १४ ॥

## विद्याप्रशंसा ॥ १५ ॥

तथाफलाभावादित्यन्नो दाहृत शोभतेऽस्य मुखमिति गर्गत्रिरात्रविधेराकाङ्क्षितत्वाच्छेष । वेदानुमन्त्रणस्य च, आऽस्य प्रजायां वाजी जायते इति शेष । मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद्गौण शब्द । शोभते इव शिष्यैरुद्वीक्ष्यमाणम् । कुले सन्तताध्ययनश्रवणान्मेधावी जायत इति स प्रतिग्रहादन्नं प्राप्नोतीति ॥ १५ ॥

## सर्वत्वमाधिकारिकम् ॥ १६ ॥

अन्यानर्थक्यवाक्ये उदाहरणं, पूर्णाहुत्या सर्वान् कामानवाप्नोतीति पूर्णाहुतिं जुहोतीत्याकाङ्क्षितत्वादस्य विधेः शेषः । य उ चैनमेवं वेदेति, तरति मृत्युमित्यस्याकाङ्क्षितत्वाच्छेष । फलवचनं स्तुति, सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम् । असर्वेषु सर्ववचनमधिकृतापेक्षम् ॥ १६ ॥

## फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥

अन्वारुह्य वचनमिदं यद्यपि विधिस्तथाप्यऽर्थवत्ता परिमाणतःसारतो वा फलविशेषात् ॥ १७ ॥

## अन्त्ययोर्यथोक्तम् ॥ १८ ॥

अभागिप्रतिषेधादित्यादावुदाहृतं— न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति, हिरण्यं निधाय चेतव्यमित्याकाङ्क्षितत्वादस्य विधेः शेषः । पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था । असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । यच्चानित्यदर्शनं, बबर प्रावाहणिरकामयत इति । तत् परिहृतम् । अर्थवादाक्षेपेण पुनरुत्थितमिदानीमर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यते इति ॥ १८ ॥ ॥ उत्तरम् ॥ ॥ अर्थवादाधिकरणम् ॥ १ ॥

## विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

इह ये विधिवन्निगदा अर्थवादास्ते उदाहरणम् । औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै इति । किमस्य विधि कार्यम्, उतास्यापि स्तुतिरिति ? । किं तावत्प्राप्तम् । विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् । विधिवन्निगदेष्वेवञ्जातीयकेषु फलविधि स्यात् । फलं ह्यवगम्यते । तथा ह्यपूर्वम् अर्थं विधास्यति, इतरथा स्तुतिवादमात्रमनर्थकं स्यात् । स्तुतश्च अस्तुतश्च तावानेव सोऽर्थः । अपि च, ऊर्जोऽवरुध्यै इति प्रयोजनं श्रूयते । न च, प्रशस्तोऽयमर्थ इति कश्चिच्छब्दोऽस्ति । लक्षणया तु स्तुतिर्गम्यते । श्रुतिश्च लक्षणायाः ज्यायसीति ॥ १९ ॥ ॥ पूर्वपक्षः ॥

## लोकवदिति चेत् ॥ २० ॥

इति चेत् पश्यसि— स्तुतिरनर्थिका, न च शब्देनावगम्यते इति । लौकिकानि वाक्यानि भवन्तो विदाङ्कुर्वन्तु । तद्यथा— इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरास्त्र्यपत्या अनष्टप्रजा चेति । क्रेतव्येत्यप्युक्ते गुणाभिधानात् प्रवर्त्तन्तेतरां क्रेतारः । बहुक्षीरेति च गुणाभिधानमवगम्यते । तद्वद् वेदेऽपि भविष्यति ॥ २० ॥ पूर्वपक्षे आशङ्का ॥

## न पूर्वत्वात् ॥ २१ ॥

नैतदेवम् । लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः । तेषां विज्ञानमेव न प्रयोजनम् । अत प्रशंसा गम्यते । अविदितवादे न श्रद्दधीरन्, पूर्ववचनादिव । विदितत्वादेव च प्ररोचयन्ते । वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते, नतरामर्थवादेन । जाताशङ्को हि विधिशब्देन स तदानीम् । अथ विधिशब्देन प्ररोचितः,

किम् अर्थवादशब्देन ? । अपि च वेदे व्यक्तमसंवादः, ऊर्जोऽवरुद्ध्यै इत्यप्रसिद्धं वचनम्, ऊर्ग्वा उदुम्बर इति हेतुत्वं चाप्रसिद्धम् । यस्माद् ऊर्गुदुम्बर, तस्मात् तन्मयो यूपः कर्त्तव्य इति । ऊर्गुदुम्बर इत्यनृतवचनादन्यदस्यानृतमिति परिकल्प्येत ॥ २१ ॥ ॥ आशङ्कानिरास ॥

## उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥

उक्तमस्माभिर्वाक्यशेषत्वं, विधिना त्वेकवाक्यत्वादिति । ननु उक्तं, फलवचनमिह गम्यते न स्तुतिरिति । यदिह फलवचनं, तदौदुम्बरस्य यूपस्य । न च अविहित औदुम्बरो यूपोऽस्ति । तत्र फलवचनमेवानर्थकम् । स्तुतिवचनः शब्दो नास्तीतिचेत् । इह फलवचनेन फलवत्ता प्रतीयते, फलवांश्च प्रशस्त इति ॥

तत्र फलवत्तायामानर्थक्यमिति यो द्वितीयोऽर्थः प्रशंसा नाम स गम्यते । लक्षणेति चेन्न । लक्षणायामपि अर्थवत्ता भवत्येव । लक्षणाऽपि हि लौकिकी । ननूक्तम् असंवादो वेदे, न ह्यूर्गुदुम्बर इति । गुणवादेन प्ररोचनार्थतां ब्रूमहे । गौणत्वात्संवादः । किं सादृश्यम् । यथाऽन्नं प्रीतेः साधनम्, एवमिदमपि प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना प्रीतिसाधनशब्देन उच्यते । शक्यते हि तत् पक्वफलसम्बन्धादूर्गिति वक्तुम् ॥ २२ ॥ ॥ सिद्धान्त ॥

## विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥

अप्सुयोनिर्वा अश्वो अप्सुजो वेतस इति अप्सुयोनिरश्वः कर्त्तव्य इति विधेरशक्यत्वादानर्थक्यम् । तत्रावश्यं स्तुतिः कल्पयितव्या, शमयित्रीभिरद्भिरश्वस्य अवकानां च सम्बन्धो यजमानस्य कष्टं शमयतीति । तत्सामान्यादितरेषु तथात्वं तथेतियावत्, तावत्तथात्वमिति । किं तत्सामान्यम् । विध्यसम्भवः स्तुतिसम्भवश्च ॥ २३ ॥

## प्रकरणे सम्भवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥

इतश्च पश्यामः स्तुतिरिति । कुतः । इदं समामनन्ति, यो विदग्धः स नैर्ऋतः, योऽश्रृत स रौद्रः, यः श्रृतः स दैवतः । तस्मादविदहता श्रपयितव्यः स दैवतत्वायेति । यदि स्तुतिः, दर्शपूर्णमासयोरेव श्रृतः स्ताविष्यते । तथा सम्भवन्नपकर्षो न कल्प्येत । अ-

पकृष्यते इत्यपकर्षः । विधिपक्षे तु यत्र नैर्ऋतस्तत्र विदग्धता नीयेत । तथा सति प्रकरणं बाधितं भवेत् । दर्शपूर्णमासकर्म प्रति नैर्ऋताभावाद् विदग्धविधानमनर्थकं स्यात् । तस्मात् स्तुतिरेव ॥२४॥

विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

औदुम्बरो यूपो भवतीति विधावतस्मिन्नाश्रीयमाणे, ऊर्जोऽवरुद्ध्यै इत्येतस्मिंश्च वाक्यं भिद्येत । इत्थम् औदुम्बरो यूपः प्रशस्तः, स चोर्जोऽवरुद्ध्यै इति । तस्माद् विधिवन्निगदानामपि स्तुतिरेव कार्यमर्थवादानामिति ॥२५॥ सिद्धान्ते युक्तिः ॥ विधिवन्निगदाधिकरणम् २॥

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

अथ ये हेतुवन्निगदाः, शूर्पेण जुहोति तेन ह्यन्नं क्रियते इत्येवमादयस्तेषु सन्देहः । किं स्तुतिस्तेषां कार्यम्, उत हेतुरिति । किं प्राप्तम् । हेतु स्यादन्नकरणं होमस्य । नन्वप्रसिद्धे कार्यकारणभावे न हेतूपदेश । सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे । शूर्पेण होमे कर्त्तव्ये अन्नकरणं हेतुरित्युपदिश्यते । किं प्रयोजनम् । अन्यदपि दर्वीपिठरादि अन्नकरणं यत्, तेनापि नाम कथं होमः क्रियेतेति । कुतः ? तस्याप्यन्नक्रियायामर्थवत्ता, शक्यते च तेनाप्यन्नं कर्तुम् । एतद्धि, क्रियते इत्युच्यते । न हि, वर्त्तमानकालः कश्चिदस्ति । यस्यायं प्रतिनिर्देशः । हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा । यदि च दर्वीपिठरादि न साक्षादन्नं करोतीति नान्नकरणमित्युच्यते । व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात् । शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ॥ २६ ॥ पूर्वपक्षः ॥

स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥

न त्वेतदस्ति शब्दपूर्वकोऽयमर्थः, अन्नकरणं हेतुरिति । शब्दश्चाऽन्नकरणं शूर्पहोमे हेतुरित्याह । न च दर्वीपिठरहोमे तेन शब्दपूर्वं शूर्पं, न च दर्वीपिठरादेश्चोदना ॥ २७ ॥ ॥ सिद्धान्तः ॥

व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥

इति पुनर्यदुक्तं, तत् परिहर्त्तव्यम् ॥ २८ ॥ सिद्धान्ते आशङ्का ॥

अर्थस्तु विधिशेषत्वाद् यथा लोके ॥ २९ ॥

अस्मत्पक्षेऽर्थोऽस्ति । वाक्यशेषो हि स विधेस्तदा भवति । संबन्धश्च स्तुतिवचनत्वेन यथा वयं शूर्पेणान्नं क्रियमाणं जानीमस्तथा

शूर्पेणान्नं क्रियते इत्येव गम्यते । तदा चावर्त्तमानं स्तोतुं वर्त्तमानमित्युपदिशति । त्वत्पक्षे एष दोषो, यस्य ते हेतुविधिः । विधौ हि न परः शब्दार्थः प्रतीयते । न च वर्त्तमानमुपदिशन् वेद शक्यमर्थं विदध्यात् । अस्मत्पक्षे तु एष परशब्द परत्र वर्त्तते यथा लोके, बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति । प्रकृष्टबलेऽपि बलवच्छब्दो वर्त्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तान् अपेक्ष्य भवति । एवं, तेन ह्यन्नं क्रियते इति प्रकृष्टान्नकरणेन संस्तव. शूर्पस्य, निकृष्टान्यऽन्यानि अन्नकरणान्यपेक्ष्य भविष्यति ॥ ॥ २९ ॥ ॥ आशङ्कानिरास ॥

## यदि च हेतुरवतिष्ठेत निर्देशात् सामान्यादिति चेदऽव्यवस्था विधीनां स्यात् ॥ ३० ॥

यद्यपि च भवेदन्नकरणं हेतुर्दर्वीपिठरप्रकाराणां, तथापि शूर्प एवावतिष्ठेत । शब्दादन्नकरणं हेतुरिति विज्ञायते । शब्दश्च शूर्पस्याह, न दर्वीपिठरादीनाम् । तद्धि निर्दिश्यते यस्मात् शूर्पेणान्नं क्रियते, तस्मात् शूर्पेण जुहोतीति । यथा, यस्माद् बलवदुपध्मातोऽग्निस्तेन मे गृहं दग्धमिति, न अनग्निरपि बलवदुपध्मातो दहतीति गम्यते । अथ मतं, येन येनान्नं क्रियते प्रणाड्या, शूर्पादन्येनापि तेन तेनापि होमः क्रियते इति । अव्यवस्था विधीनां स्यान्न केनचित् । प्रणाड्याऽन्नं क्रियते । तत्र यावदुक्तं स्यात्, जुहोति- इति, तावदेवाऽन्नकरणेन जुहोतीति । अस्मत्पक्षे पुन शूर्पं स्तूयते । तेन ह्यन्नं क्रियते इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनयैव । तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्य्यमिति ॥ ३० ॥ सिद्धान्ते युक्तिः ॥ हेतुवन्निगदाधिकरणम् ॥ ३ ॥

## तदर्थशास्त्रात् ॥ ३१ ॥

अथेदानीं. किं विवक्षितवचना मन्त्राः, उताविवक्षितवचनाः ? । किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेणेति । यद्युच्चारणमात्रेण तदा न नियोगतो, बर्हिर्देवसदनं दामीत्येष बर्हिर्लवने विनियुज्येत । अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्त्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवन एव विनियुज्यतेति । तदेवमवगच्छाम । उच्चारणमात्रेणैवोपकुर्वन्तीति । कुत. । तदर्थशास्त्रात्

थदभिधानसमर्थो मन्त्रस्तत्रैवैनं शास्त्रं निबध्नाति 'उरुप्रथा उरु प्रथस्वेति पुरोडाशं प्रथयतीति वचनमिदमनर्थकं, यद्यर्थाभिधानेनोपकुर्वन्ति । अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोग उक्तश्च । अतो नाऽर्थाभिधानेन । यथा साक्ष पुरुष. परेण चेन्नीयते, नूनमक्षिभ्यां न पश्यतीति गम्यते ॥

नन्वर्थवादार्थं भविष्यतीति चेत् : न हि येन विधीयते, तस्य वाक्यशेषोऽर्थवाद इत्युक्तम् । न च निरपेक्षेण विहिते अर्थवादेन किञ्चिदपि प्रयोजनं क्रियते । अतो नार्थवादार्थं वचनम् ॥

तथाऽभ्यादानसमर्था मन्त्रा उदाहरणम् । लिङ्गादेव आदाने प्राप्ता वचनेन विधीयन्ते । तां चतुर्भिरादत्ते इति । चतु संख्यार्थमिति चेन्न । समुच्चयशब्दाभावात् ॥

तथा, इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्युदाहरणम् । रशनादाने प्राप्तस्य रशनादाने एव शास्त्रं विनियोजकम् । तद् विवक्षितार्थत्वे न घटनति । ननु गर्दभरशनां परिसङ्ख्यास्यति । न शक्नोति परिसङ्ख्यातुम् । परिसञ्चक्षाणा हि स्वार्थं च जह्यात्, परार्थञ्च कल्पेत, प्राप्तं च बाधेत । तस्मान्न विवक्षितवचना मन्त्रा अतो न प्रमाणं, बर्हिर्देवसदनं दामीत्यस्य रूपं बर्हिर्लवने विनियोगस्य ॥ ३१ ॥

## वाक्यनियमात् ॥ ३२ ॥

नियतपदक्रमा हि मन्त्रा भवन्ति । अग्निमूर्द्धा दिव इति, न विपर्ययेण । यद्यर्थप्रत्यायनार्थाः, विपर्ययेणाप्यर्थं प्रतीयते इति नियमोऽनर्थक स्यात् । अथोच्चारणविशेषार्थाः, विपर्यये अन्यदुच्चारणमिति नियम आश्रीयते । तेन यतरस्मिन् पक्षे नियमोऽर्थवान्, स नूनं पक्ष इति । नन्वर्थवत्स्वपि नियमो दृश्यते । यथा, इन्द्राग्नी इति । युक्तं तत्र तत् । विपर्ययेऽर्थप्रत्ययाभावात् ॥ ३२ ॥

## बुद्धशास्त्रात् ॥ ३३ ॥

बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति । अग्नीदऽग्नीन् विहरेति । स बुद्धे किं बोधयेत् ? । अथ नु उच्चारणविशेषार्था', बुद्धेऽप्युच्चारणविशेषोऽवकल्प्यतेति । ननु पुनर्वचनात् संस्कारविशेषो भविष्यति । एवमस्मत्पक्षमेवाश्रितोऽसि वचनमुच्चारणम् । तद्धि शक्यते कर्त्तुं, नार्थप्रत्यायनम् । तत् प्रतीतेऽशक्यम् ।

यथा, सोपानत्के पादे द्वितीयामुपानहमशक्यत्वान्नोपादत्ते ॥ ३३ ॥

अविद्यमानवचनात् ॥ ३४ ॥

यज्ञे साधनभूत प्रकाशयितव्यः । न च तादृशोऽर्थोऽस्ति, यादृशमभिदधाति । यथा, चत्वारि शृङ्गा इति । न हि चतु शृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चिद् यज्ञसाधनमस्ति । तदत्राभिधानार्थः किमभिदध्यात् । उच्चारणार्थे त्ववकल्प्यते । तथा, मा मा हिंसीः इत्यसत्यामपि हिंसायां किमभिदध्यात् ॥ ३४ ॥

अचेतनेऽर्थबन्धनात् ॥ ३५ ॥

अचेतनेऽर्थे खल्वर्थं निबध्नन्ति, ओषधे त्रायस्वैनमिति । अभिधानेनोपकुर्वन्त एवञ्जातीयका ओषधिं पशुत्राणाय प्रतिपादयेयु । न चासावचेतना शक्या प्रतिपादयितुम् । उच्चारणार्थे तु नैष दोषो भवति । तस्मादुच्चारणार्थाः । शृणोत ग्रावाण इति चोदाहरणम् ॥ ३५ ॥

अर्थविप्रतिषेधात् ॥ ३६ ॥

अर्थविप्रतिषेधोऽपि भवति । अदितिर्द्यौरदितिरन्तरिक्षमिति । सैव द्यौः, तदेवान्तरिक्षमिति को जातुचिदवधारयेत् । अनवधारयंश्च किमभिधानेनोपकुर्यात् ? । उच्चारणमात्रे तु नैष विरोधो भवति । तस्मादुच्चारणार्था मन्त्राः । एको रुद्रो न द्वितीयोऽवतस्थे, असंख्याताः सहस्राणि ये रुद्रा अधिभूम्यामिति चोदाहरणम् ॥ ३६ ॥

स्वाध्यायवदवचनात् ॥ ३७ ॥

स्वाध्यायकाले पूर्णिकाऽवहन्ति करोति । माणवकोऽवहन्तिमन्त्रमधीते । नाऽसौ तेन मन्त्रेण तदभिधानमभ्यस्यति, अक्षरानुपूर्व्याः अवधारणे एव यतते । येन च नाम प्रयोजनं, तदभ्यसितव्यम् । अत उच्चारणाभ्यासादुच्चारणेन प्रयोजनमित्यवगच्छाम. ॥ ३७ ॥

अविज्ञेयात् ॥ ३८ ॥

अपि च केषाञ्चिन्मन्त्राणामशक्य एवार्थो वेदितुम् । यथा, अम्यक् सात इन्द्र ऋष्टिरस्मे इति, सृण्येव जर्भरी तुर्फरीतू इति, इन्द्रः सोमस्य काणुका इति च । एते किं प्रत्याययेयु ? । उच्चारणार्थे तु न दोषः । तस्मादुच्चारणार्था मन्त्रा इति ॥ ३८ ॥

अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥

अनित्यसयोगः खल्वपि भवन्मन्त्रेष्वभिधानार्थेषु । यथा, किं ते

कृण्वन्ति कीकटेषु गाव इति। कीकटा नाम जनपदाः, नैचाशाखं नाम नगरं, प्रमङ्गदो राजेति। यद्यभिधानार्थाः, प्राक् प्रमङ्गदान्नाऽयं मन्त्रोऽनुभूतपूर्व इति गम्यते। तदेतैस्तदर्थशास्त्रादिभिः कारणैर्मन्त्राणामविवक्षितवचनता॥ ३९॥ ॥ पूर्वपक्षः॥

## अविशिष्टस्तु वाक्यार्थः॥ ४०॥

अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः। स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति। नैवम्। लोके तैरर्थैरवबुद्धैः संव्यवहारः। इह देवताभिरप्रत्यक्षाभिर्यज्ञाङ्गैश्चाऽचेतनैः संलापे न कश्चिद् यज्ञस्योपकारः। यद्यदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति। यद्धि कर्त्तव्यं, तत् प्रयोजनवत्। उच्चारणं च न कथञ्चित्। न कर्त्तव्यं, यद्यपूर्वाय। यद्यर्थाय, यद्यर्थो न प्रत्याय्यते। न किञ्चित् अनर्थकम्। यदि न प्रयुज्यते, समाम्नानानर्थक्यम्। तस्मादुच्चारणादपूर्वम्। तथाच तदर्थशास्त्रादि उक्तम्। तदुच्यते। अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम्। यदुक्तं, न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्तीति। यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम्। कथम्। न ह्यप्रकाशिते यज्ञे यज्ञाङ्गे च याग शक्योऽभिनिर्वर्त्तयितुम्। तस्मात्तन्निर्वृत्त्यर्थमर्थप्रकाशनं महानुपकारः 'कर्मण', तच्च करोतीत्यवगम्यते। तस्मादस्त्यस्य प्रयोजनम्। तच्च दृष्टं न शक्यमपवदितुम्। न अर्थाभिधानं प्रयोजनमिति। नन्वर्थाभिधानेनोपकुर्वत्सु, तां चतुर्भिरादत्ते इत्येवमाद्यनर्थकं भवति। काममनर्थकं भवतु, न जातुचिदपजानीमहे दृष्टमर्थाभिधानस्योपकारकत्वम्॥४०॥ ॥सिद्धान्तः॥

अथ किं तच्छास्त्रमनर्थकमेव?। न हि॥

## गुणार्थेन पुनः श्रुतिः॥ ४१॥

यदुक्तं, तां चतुर्भिरादत्ते इति समुच्चयशब्दाभावाद् न समुच्चयार्थमिति चतु सङ्ख्याविशिष्टमादानं कर्त्तव्यमिति वाक्यादवगम्यते। तदेकेन मन्त्रेण गृह्णन् न यथाश्रुतं गृह्णीयादिति॥ ४१॥

## परिसंख्या॥ ४२॥

परिसञ्चक्षाणे च, इमामगृभ्णन्नित्यश्वाभिधानीमादत्ते इति त्रयो दोषाः प्रादुष्युरिति। नैवं सम्बन्ध -इत्यादत्ते इति। कथं तर्हि? इत्यश्वाभिधानीमिति। लिङ्गाद्दर्शनामात्रे, शब्दात्तु विशेषे अश्वाभि-

धान्यामिति । सति च वाक्ये लिङ्गं विनियोजकम् । तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कतरत्तत् ? । एतेन मन्त्रेणादानं कुर्य्यादिति, यस्मिन् सति रशनामात्रे लिङ्गात् प्राप्नोति । अश्वाभिधान्यां तु प्रत्यक्षमेव वचनम् । अस्मिन् सति तद् आनुमानिकं नास्ति । तेन गर्द्दभरशनायां न प्राप्तिरेवेति ॥ ४२ ॥

## अर्थवादो वा ॥ ४३ ॥

उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यर्थवादार्थेन पुनः श्रुतिः, यज्ञपतिमेव तत् प्रथयतीति । ननु नाऽयं मन्त्रस्य वाक्यशेषः न च प्राप्तस्य स्तुत्या प्रयोजनम् । सत्यम् । नायं मन्त्रस्य विधिः, न संस्तवः । प्रथनमेत्र तत्र स्तूयते । मन्त्र पुनः रूपादेव प्राप्त इहानूद्यते प्रथनं स्तोतुम् । इत्थं प्रथनं प्रशस्तं, यत् क्रियमाणमेवरूपेण मन्त्रेण क्रियते । कस्तदा भवति गुणः । यज्ञपतिमेव तत् प्रजया पशुभिः प्रथयति । किमेतदेवास्य फलं भवति । नेति ब्रूमः । स्तुतिः कथं भविष्यतीति । एवमुच्यते । कथमसति प्रथने प्रथयतीति शब्दः । मन्त्राभिधानात् । मन्त्रेण पुरोडाशमध्वर्युः प्रथस्वेति ब्रूते । यश्चैवं प्रथस्वेति ब्रूते, स प्रथयति । यथा, यः कुर्विति ब्रूते, स कारयति ॥ ४३ ॥

## अविरुद्धं परम् ॥ ४४ ॥

यदुक्तं, पदनियमस्यार्थवत्त्वादविवक्षितार्था मन्त्रा इति । काममनर्थको नियमो, न दृष्टमप्रामाणम् । नियतोच्चारणम् अदृष्टायेति चेत्, अविरुद्धा अदृष्टकल्पनाऽस्मत्पक्षेऽपि । एवं प्रत्याय्यमानमभ्युदयकारि भवतीति ॥ ४४ ॥

## संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ४५ ॥

अथ यदुक्तं, प्रोक्षणीरासादयेति बुद्धबोधनमशक्यम्, अत उच्चारणाददृष्टमिति । तन्न कर्त्तव्यमित्यपि विज्ञाते अनुष्ठानकाले स्मृत्या प्रयोजनम् । उपायान्तरेणापि सा प्राप्नोति । अतोऽनेनोपायेन कर्त्तव्येति नियमार्थमाम्नानम् । संस्कारत्वात् ॥ ४५ ॥

## अभिधानेऽर्थवादः ॥ ४६ ॥

चत्वारि शृङ्गा इत्यसदभिधाने गौणः शब्दः । गौणी कल्पनाप्रमाणवत्त्वादुच्चारणाददृष्टमाणम् । चतस्रो होत्राः शृङ्गाणीवाऽस्य । त्रयोऽस्य पादा इति सवनाभिप्रायम् । द्वे शीर्षे इति पत्नीयजमानौ ।

सप्त हस्तास इति छन्दांस्यऽभिप्रेत्य । त्रिधा बद्ध इति त्रिभिर्वेदैर्बद्ध । वृषभ कामान् वर्षतीति, रोरवीति शब्दकर्मा, महो देवो मर्त्यान् आविवेशेति मनुष्याधिकाराभिप्रायम् । तद् यथा, चक्रवाकस्तनी हसदन्तावली काशवस्त्रा शैवालकेशी नदीति नद्याः स्तुतिः । यज्ञसमृद्धये साधनानां चेतनसादृश्यमुपपादयितुकाम आमन्त्रणशब्देन लक्षयति । औषधे ! त्रायस्वैनमिति, शृणोत ग्रावाण इति । अत परं प्रातरनुवाकानुवचनं भविष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयु, किं पुनर्विद्वांसोऽपि ब्राह्मणा इति । इत्थञ्चाचेतना अपि ग्रावाण आमन्त्र्यन्ते ॥ ४६ ॥

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

अदितिर्द्यौरिति गौण एष शब्दः । अतो न विप्रतिषेधः । यथा, त्वमेव माता पितेति, तथैकरुद्रदैवत्ये, एको रुद्र, शतरुद्रदैवत्ये, शतं रुद्रा इत्यविरोध ॥ ४७ ॥

## विद्यावचनमसंयोगात् ॥ ४८ ॥

य त्तु—अकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकाऽवहन्ति प्रकाशयितुमिच्छतीति । अयज्ञसंयोगाद्, न यज्ञोपकारायैतत् प्रकाशयितुमिच्छति । ननु प्रकाशनानभ्यासोऽक्षराभ्यासश्च परिचोदितः । उच्यते । सौकर्यात् प्रकाशनानभ्यास, दुर्ग्रहत्वाच्चाक्षराभ्यासः ॥ ४८ ॥

## सतः परमविज्ञानम् ॥ ४९ ॥

विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते । निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः । यथा, शृण्येव जर्भरी तुर्फरीतू इत्येवमादीनि अश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते । अनेन, अश्विनोः काममप्रा इत्याश्विनं सूक्तमवगम्यते । देवताभिधानानि च घटन्ते, जर्भरीत्येवमादीनि । अवयवप्रसिद्ध्या च लौकिकेन अर्थेन विशेष्यन्ते । जर्भरी भर्त्तारौ । तुर्फरीतू हन्ताराविति । एवं सर्वत्र ॥

## उक्तश्चानित्यसंयोगः ॥ ५० ॥

परन्तु श्रुतिसामान्यम् इत्यत्रेति ॥ ५० ॥ ॥ उत्तरम् ॥

## लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥

आग्नेय्याऽग्नीध्रमुपतिष्ठते इति विधानाद् विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः । यदि तेऽग्निप्रयोजनास्ततस्ते आग्ने-

ब्या:, नाग्निशब्दसन्निधानात् ॥ ५१ ॥

ऊहः ॥ ५२ ॥

ऊहदर्शनं च विवक्षितार्थानामेव भवति । किमूहदर्शनम् । न पिता वर्द्धते, न मातेति । अन्ये वर्द्धन्ते इति गम्यते । प्रत्यक्षं कौमारयौवनस्थाविरैर्वर्द्धन्ते मात्रादय । शब्दो न वर्द्धत इति ब्रूते । का पुनः शब्दस्य वृद्धिः । यद् द्विवचनबहुवचनसंयोगः ॥ ५२ ॥

विधिशब्दाश्च ॥ ५३ ॥

विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति । शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाहेति ॥५३॥ ॥ सिद्धान्ते युक्तिः ॥ ॥ मन्त्रलिङ्गाधिकरणम् ॥ ४ ॥ ॥ इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ १ ॥ २ ॥ ॥ अर्थवादपादोऽयम् ॥

---

अथ प्रथमाध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥

एवं तावत् कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । अथेदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्ति–एवमयमर्थोऽनुष्ठातव्यः, एतस्मै च प्रयोजनाय इति । किमसौ तथैव स्यान्न वेति । यथा, अष्टकाः कर्त्तव्याः, गुरुरनुगन्तव्य, तड़ागं खनितव्यम्, प्रपा प्रवर्त्तयितव्या, शिखाकर्म कर्त्तव्यमित्येवमादयः । तदुच्यते । धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति । शब्दलक्षणो धर्म इत्युक्तम् । चोदनालक्षणोऽर्थो धर्म इति । अतो निर्मूलत्वान्नापेक्षितव्यमिति । ननु ये विदुरित्थमसौ पदार्थः कर्त्तव्य इति, कथमिव ते वदिष्यन्त्यकर्त्तव्य एवायमिति ? । स्मरणानुपपत्त्या । न ह्यननुभूतोऽश्रुतो वाऽर्थः स्मर्य्यते, न चास्यावैदिकस्याऽलौकिकस्य च स्मरणमुपपद्यते । पूर्वविज्ञानकारणाभावादिति । या हि बन्ध्या स्मरेत्– इदं मे दौहित्रकृतमिति, न मे दुहिताऽस्तीति मत्वा, न जातुचिदसौ प्रतीयात्– सम्यगेतज्ज्ञानमिति । एवमपि यथैव पारम्पर्येणाऽविच्छेदाद्, अयं वेद इति प्रमाणमेषां स्मृतिरेवमियमपि प्रमाणं भविष्यतीति । नैतदेवम् । प्रत्यक्षेणोपलब्धत्वाद् ग्रन्थस्य, नानुपपन्नं पूर्वविज्ञानम् । अष्टकादिषु त्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावाद् व्यामोहस्मृतिरेव गम्यते । तद्

यथा, कश्चिज्जात्यन्धो वदेत्, स्मराम्यहमस्य रूपविशेषस्येति । कुतस्ते पूर्वविज्ञानमिति च पर्य्यनुयुक्तो जात्यन्धमेवाऽपर विनिर्द्दिशेत् । तस्य कुत ? । जात्यन्धान्तरात् । एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित् संप्रतीयुर्विद्वांसः सम्यग्दर्शनमेतदिति. अतो न आदर्त्तव्यमेवञ्जातीयकमनपेक्षं स्यादिति ॥ १ ॥ ॥ पूर्वपक्ष. ॥

## अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् ॥२॥

अपि वेति पक्षो व्यावर्त्त्यते । प्रमाणं स्मृतिः । विज्ञानं हि तत् किमित्यन्यथा भविष्यति । पूर्वविज्ञानमस्य नास्ति, कारणाभावादिति चेत् । अस्या एव स्मृतेर्द्रढिम्न कारणमनुमास्यामहे । तत्तु नानुभवनम्, अनुपपत्त्या । न हि मनुष्या इहैव जन्मन्येवञ्जातीयकमर्थमनुभवितुं शक्नुवन्ति । जन्मान्तरानुभूतं च न स्मर्यते । ग्रन्थस्तु अनुमीयेत, कर्तृसामान्यात् स्मृतिवैदिकपदार्थयो. । तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम् ॥

ननु नोपलभन्ते एवञ्जातीयकं ग्रन्थम् । अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते इति तदुपपन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां. विस्मरणस्य चोपपन्नत्वाद् ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः ॥

अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते, यां जनाः प्रतिनन्दन्तीत्येवमादयः । तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम् । गुरोरनुगमात् प्रीतो गुरुरध्यापयिष्यति, ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यतीति । तथाच दर्शयति, तस्माच्छ्रेयांसं पूर्वं यन्त पापीयान् पश्चादन्वेतीति । प्रपास्तडागानि च परोपकाराय, न धर्मायेत्येवावगम्यते । तथा च दर्शनम् । धन्वन्निव प्रपा असीति, तथा, स्थलयोदकं परिगृह्णन्तीति च । गोत्राचिह्नं शिखाकर्म, दर्शनञ्च, यत्र बाणा सम्पतन्ति कुमारा विशिखा इवेति । तेन ये दृष्टार्थास्ते तत एव प्रमाणम् । ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति ॥ २ ॥ ॥ सिद्धान्त. ॥ ॥ स्मृतिप्रामाण्याधिकरणम् ॥ १ ॥

## विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

अथ यत्र श्रुतिविरोधस्तत्र कथम् । यथा औदुम्बर्याः सर्ववेष्टनम्, औदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुत्या विरुद्धम् । अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणम्, जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्येनेन

विरुद्धम् । क्रीतराजको भोज्यान्न इति, तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यमित्यनेन विरुद्धम् । तत् प्रमाणम् । कर्तृसामान्यादित्येव प्राप्ते ब्रूमः । अशक्यत्वाद् व्यामोह इत्यवगम्यते । कथमशक्यता । स्पर्शविधानान्न सर्वा शक्या वेष्टयितुम्, उद्गायता स्प्रष्टुञ्च । तामुद्गायता स्प्रष्टव्यामवगच्छन्त. केनेमं सम्प्रत्ययं बाधेमहि, सर्ववेष्टनस्मरणेनेति ब्रूमः ॥

ननु निर्मूलत्वाद् व्यामोहस्तत् स्मरणमिति वैदिकं वचनं मूलं भविष्यतीति । भवेद् वैदिकं वचनं मूलं, यदि स्पर्शनं व्यामोहः । अव्यामोहे त्वशक्यत्वादनुपपन्नम् । यथाऽनुभवनमनुपपन्नमिति न कल्प्यते, तथा वैदिकमपि वचनम् । कथं तर्हि सर्ववेष्टनस्मरणम् । व्यामोह । कथं व्यामोहकल्पना । श्रौतविज्ञानविरोधात् । अथ, किमर्थं नेमौ विधी विकल्प्येते, व्रीहियववद् बृहद्रथन्तरवद्वा । नासति व्यामोहविज्ञाने विकल्पो भवति यदि सर्ववेष्टनविज्ञानं प्रमाणं, स्पर्शनं व्यामोहः । यदि स्पर्शनं प्रमाण, स्मृतिर्व्यामोहः । विकल्पन्तु वदन् स्पर्शनस्य पक्षे तावत् प्रमाण्यमनुमन्यते । तस्य च मूलं श्रुतिः । सा चेत् प्रमाणमनुमता, न पाक्षिकी । पाक्षिकं च सर्ववेष्टनस्मरणं पक्षे तावन्न शक्नोति श्रुतिं परिकल्पयितुम् । स्पर्शविज्ञानेन बाधितत्वात् । ततश्च अव्यामोहे च तस्मिन्न शक्या श्रुति कल्पयितुम् । न चाऽसावव्यामोह. पक्षे, पक्षे व्यामोहो भविष्यतीति । यदेव हि तस्यैकस्मिन् पक्षे मूलं, तदेवेतरस्मिन्नपि । एकस्मिंश्चेत् पक्षे न व्यामोहः, श्रुतिप्रामाण्यतुल्यत्वादितरत्राप्यव्यामोह । न चासावेकस्मिन् पक्षे श्रुतिनिबद्धाक्षरा हि सा, न प्रमादपाठ इति शक्या गदितुम् । तेन नैतत्पक्षे विज्ञानं व्यामोहात् पक्षान्तरं संक्रान्तमित्यवगम्यते । तत्र दुःश्रुतस्वप्नादिविज्ञानमूलत्वं तु सर्ववेष्टनस्येति विरोधात् कल्प्यते । न हि तस्य सति विरोधे प्रामाण्यमभ्युपगन्तव्यमिति किञ्चिदस्ति प्रमाणम् । तस्माद् यथैवैकस्मिन् पक्षे न शक्या श्रुति. कल्पयितुम्, एवमपरस्मिन् पक्षे, तुल्यकारणत्वात् ॥

अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात् । केयमितरेतराश्रयता । प्रमाणायां स्मृतौ स्पर्शनं व्यामोहः, स्पर्शने प्रमाणे स्मृतिर्व्यामोहः तदेतदितरेतराश्रयं भवति । तत्र स्पर्शनस्य क्लृप्तं मूलं, कल्प्यं स्मृतेः । सोऽसावन्यत. परिच्छेदः कल्प्यमूलत्वात् स्मृतिप्रामाण्यमनवक्लृ-

क्षम् । तदप्रामाण्यात् स्पर्शनं न व्यामोह । तदव्यामोहात् स्मार्त्तश्रुतिकल्पनाऽनुपपन्ना प्रमाणाभावात् । नन्वेवं सति व्रीहिसाधनत्वविज्ञानस्याप्यव्यामोहाद् यवश्रुतिर्नोपपद्येत । सत्यं नोपपद्यते, यद्यप्रत्यक्षा स्यात् । प्रत्यक्षात्वेषा । न हि प्रत्यक्षमनुपपन्न नामास्ति । द्वयोस्तु श्रुत्योर्भावात् । द्वे ह्येते वाक्ये । तत्रैकेन केवलयवसाधनता गम्यते, एकेन केवलव्रीहिसाधनता । न च वाक्येनावगतोऽर्थोऽपह्नूयते । तस्माद् व्रीहियवयोरुपपन्नो विकल्प, बृहद्रथन्तरयोश्च । तस्मादुक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणमिति । अतश्च सर्ववेष्टनादि नादरणीयम् ॥ ३ ॥ ॥ श्रुतिप्राबल्याधिकरणम् ॥ २ ॥

## हेतुदर्शनाच्च ॥ ४ ॥

लोभाद्वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्त' केचित् । तत् स्मृतेर्बीजम् । बुभुक्षमाणाः केचित् क्रीतराजकस्य भोजनमाचरितवन्तः । अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्त. । तत एषा स्मृतिरित्यवगम्यते ॥

अधिकरणान्तरं वा वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णातीति, यूपहस्तिनो दानमाचरन्तीति । तत् कर्तृसामान्यात् प्रमाणमिति प्राप्तेऽप्रमाणं स्मृतिः । अत्रान्यन्मूलम् । लोभादाचरितवन्तः केचित् तत एषा स्मृतिः । उपपन्नतरश्चैतत् । वैदिकवचनकल्पनात् ॥ ४ ॥ ॥ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम् ॥ ३ ॥

## शिष्टाकोपेऽविरुद्धमिति चेत् ॥ ५ ॥

आचान्तेन कर्त्तव्यं, यज्ञोपवीतिना कर्त्तव्य, दक्षिणाचारेण कर्त्तव्यमित्येवंलक्षणान्युदाहरणानि । किमेतानि श्रुतिविरुद्धानि न कर्त्तव्यानि, उताविरुद्धानि कार्याणीति चेत् पश्यसि, तैरप्यनुष्ठीयमानैर्वैदिकं किञ्चिन्न कुप्यति । तस्मादविरुद्धानीति ॥ ५ ॥ ॥ पूर्वपक्षे पूर्वपक्ष ॥

## न शास्त्रपरिमाणत्वात् ॥ ६ ॥

नैतदेवम् । शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन् । कथम् । वेदं कृत्वा वेदिं कुर्वीतेतीमां श्रुतिमुपरुन्ध्यादन्तरा वेदं वेदिं चानुष्ठीयमानमाचमनादि । दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित् प्रधानं स्वकालमतिक्रामेत् । उभाभ्यां हस्ताभ्यामनुतिष्ठन् प्रधानकालं संभावयिष्यति ॥ ६ ॥ ॥ पूर्वपक्षः ॥

**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥**

अपि वेति पक्षव्यावृत्तिः । अगृह्यमाणकारणा एवञ्जातीयकाः प्रमाणम् । ननु क्रमकालौ विरुन्धन्ति । विरुन्धन्तु, नैष दोषः । आचमनं पदार्थः, पदार्थानां च गुणः क्रमः । न च गुणानुरोधेन पदार्थो न कर्त्तव्यो भवति । अपिच प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति । यदा पदार्थः प्राप्नोति, तदा क्रम एव नास्ति, केन सह विरोधो भविष्यति ? इति । तथा यदि दक्षिणेन नाचर्यते, कालो मा विरोधीदिति तत्र कालानुरोधेन पदार्थो नाऽन्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । अतो न कालानुरोधेन व्यथयितव्यः पदार्थः । अपिच शौचं दक्षिणाचारता यज्ञोपवीतित्वं चैवञ्जातीयका अर्था व्यवधातारो न भवन्ति । सर्वपदार्थानां शेषभूतत्वात् । तस्मादाचमनादीनां प्रामाण्यम् ॥ ७ ॥ ॥ पदार्थप्राबल्याधिकरणम् ॥ ४ ॥

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥**

यवमयश्चरु, वाराही उपानहौ, वैतसे कटे प्राजापत्यान् सञ्चिनोतीति यववराहवेतसशब्दान् समामनन्ति । तत्र केचिद्दीर्घशूकेषु यवशब्दं प्रयुञ्जन्ते, केचित् प्रियङ्गुषु । वराहशब्दं केचिच्छूकरे, केचित् कृष्णशकुनौ । वेतसशब्दं केचिद् वञ्जुलके, केचिज्जम्ब्वाम् । तत्रोभयथा पदार्थावगमाद्विकल्पः ॥ ८ ॥ ॥ पूर्वपक्षः ॥

**शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियङ्गुषु भविष्यति । यदि प्रियङ्गुषु, सादृश्याद् यवेषु । किं सादृश्यम् ? पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्चैतत् तयोः सादृश्यम् । कः पुनरत्र निश्चयः । यः शास्त्रस्थानां, स शब्दार्थः । के शास्त्रस्थाः । शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते ह्येवं समामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं, यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनात् अविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मात् प्रियङ्गुषु गौणः । तस्माद् दीर्घशूकानां पुरोडाशः कर्त्तव्यः । तस्माद्वराहं गावोऽनुधावन्तीति शूकरे वराहशब्दं दर्शयति, अप्सुजो

वेतस इति वञ्जुले वेतसशब्दम् । शूकरं हि गावोऽनुधावन्ति । वञ्जुलोऽप्सु जायते । जम्बूवृक्षः स्थले, गिरिनदीषु वा ॥ ९ ॥ सिद्धान्तः ॥ ॥ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ॥ ५ ॥

## चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥

अथ यान् शब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जन्ते; यथा, पिक नेम सत तामरसादिशब्दास्तेषु सन्देह.। किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थ कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति स शब्दार्थ इति ॥ शिष्टाचारस्य प्रामाण्यमुक्तं, नाशिष्टस्मृतेः। तस्मान्निगमादिवशेनार्थकल्पना। निगमादीनां चैवमर्थवत्ता भविष्यति। अनभियोगश्च शब्दार्थेष्वशिष्टानाम्, अभियोगश्चेतरेषाम् । तस्माद्धातुतोऽर्थ कल्पयितव्य इत्येवं प्राप्ते, ब्रूमः। चोदितमशिष्टैरपि शिष्टानवगतं प्रतीयेत, यत् प्रमाणेनाविरुद्धं तदवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणमिति, तत् प्रत्यक्षानवगतेऽर्थे। यत्त्वभियुक्ताः शब्दार्थेषु शिष्टा इति । तत्रोच्यते अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः । यत्तु, निगमनिरुक्तव्याकरणानामर्थवत्तेति। तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरव्यवगतः शब्दार्थः। अपि च निगमाऽऽदिभिरर्थे कल्प्यमाने अव्यवस्थित शब्दार्थो भवेत् । तत्राऽनिश्चयः स्यात्। तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्द्धं, तामरसं पद्मं, सत इति दारुमयं पात्रं, परिमण्डलं शतच्छिद्रम्॥१०॥ म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम्॥६

## प्रयोगशास्त्रमिति चेत् ॥ ११ ॥

इह कल्पसूत्राण्युदाहरणम्। माशकं, हास्तिकं, कौण्डिन्यकमिति। एवं लक्षणकानि किं प्रमाणमप्रमाणं वेति सन्दिग्धानि । किं प्राप्तम्। प्रयोगस्य शास्त्रं प्रमाणमेवञ्जातीयकमिति ब्रूम । सत्यवाचामेतानि वचनानि । कथमवगम्यते। वैदिकैरेषां संवादो भवति। य एव हि वेदे ग्रहास्त एवेह, या एव वेदे इष्टकास्ता एवेह । तस्मात् सत्यवाच आचार्याः। आचार्यवचः प्रमाणमिति च श्रुति । प्रत्यक्षतः प्रामाण्यमनवगतमिति यद्युच्येत, प्रमाणान्तरेण वचनेनावगतमिति न दोषः। वेदवाक्यैश्चैषां तुल्य आदरः। तस्मात् प्रमाणम्॥११॥ ॥ पूर्व० ॥

## न असन्नियमात् ॥ १२ ॥

नैतदेवम् । असन्नियमात् । नैतत् सम्यङ्निबन्धनम् । स्वराभावात् ॥ १२ ॥ ॥ सिद्धान्तः ॥

अवाक्यशेषाच्च ॥ १३ ॥

ऋत्विजो वृणीते, वृता यजन्ति, देवयजनमध्यवस्यन्तीति । नात्र विधिर्गम्यते वर्त्तमानकालप्रत्ययनिर्देशात् । न चात्र वाक्यशेषः स्तावकोऽस्ति । तस्मादप्रमाणम् । यच्चोदर उक्त, स नान्तरीयकत्वाद् वेदवाक्यमिश्रसमाम्नानात् । यत्तु श्रुतिरिति नैतत् । अर्थवादत्वात् । कथमर्थवादः । विध्यन्तरं ह्यस्ति, आग्नेयोऽष्टाकपाल इति । अत्राचार्यो वेदोऽभिप्रेतः । आचिनोत्यस्य बुद्धिमिति । यद्वा आचार्यवचनं प्रमाणं तदपेक्षम् कतरत्तत् । यत् प्रमाणगम्यम् ॥१३॥ ॥ सिद्धान्तः ॥

यच्चोक्तं, सत्यवाचामेतानि वचनानीति । तत्र ॥

सर्व्वत्र च प्रयोगात् सन्निधानशास्त्राच्च ॥ १४ ॥

आचार्यवचनं हि भवति पूर्वपक्षे । सर्वासु तिथिष्वमावास्येति । सन्निहितञ्च शास्त्रं, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावस्यया यजेतेति । तेन श्रुतिविरुद्धवचनाश्च सत्यवाचः । तस्मादप्रमाणम् ॥१४॥ ॥ उ० ॥ कल्पसूत्राऽस्वत प्रामाण्याधिकरणम् ॥७॥

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥

अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणं, तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति । तस्माद् होलाकादयः प्राच्यैरेव कर्त्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेव । यथा शिखाकल्पो व्यवतिष्ठते- केचित् त्रिशिखा, केचित् पञ्चशिखा इति ॥ १५ ॥ ॥ पूर्वपक्ष· ॥

अपि वा सर्व्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥१६॥

अपि वेति पक्षव्यावृत्तिः । एवञ्जातीयक सर्वधर्म स्यात् । कुत· । तन्न्यायत्वाद् विधानस्य । विधीयतेऽनेनेति विधानं शब्दः । सोऽनुमीयते स्मृत्या । न च तस्याऽऽकृतिवचनता न्याय्या, न च व्यक्तिवचनता । न सर्वेषामनुष्ठातॄणां यदेकं सामान्यं, तस्य वाचकः कश्चिच्छब्दोऽस्ति, योऽनुमीयेत । तस्मात् सर्वधर्मता विधेर्न्याय्या । कुत । पदार्थाः कर्त्तव्या इति प्रमाणमस्ति, व्यवस्थायां तु न किञ्चित् प्रमाणमस्ति ॥ १६ ॥ ॥ सिद्धान्त· ॥

अथ यदुक्तं, यथा शिखाकल्पो व्यवतिष्ठते इति ॥

**दर्शनाद्विनियोगः स्यात् ॥ १७ ॥**

गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम् ॥१७॥ उ० ॥

**लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥**

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । कानि तानि पदानि । अथ किमर्थं न लिङ्गाद् व्यवस्था ? । यथा, शुक्लो होता इति । नास्ति तद् नित्यमेषां लिङ्गं, यद् यथादर्शनमनुवर्त्तते । येऽपि श्यामा बृहन्तो लोहिताक्षास्तेऽपि न सर्वे आह्नीनैबुकादीन् कुर्वते । अनेवंल्लिङ्गा अपि चानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति प्रत्यक्षा श्रुतिः॥१८॥

**आख्या हि देशसंयोगात् ॥ १९ ॥**

अथ कस्मान्न समाख्यया नियमः । ये दाक्षिणात्या इति समाख्यातास्ते आह्नीनैबुकादीन् करिष्यन्ति, ये उदीच्या इति समाख्यातास्ते उद्धृषभयज्ञादीन्, ये प्राच्या इति ते होलाकादीन् । यथा, राजा राजसूयेनेति । नैतदेवम् । देशसंयोगादाख्या भवति । दक्षिणदेशान्निर्गतः प्राक्षु वा उदक्षु वाऽवस्थित आह्नीनैबुकादीन् करोत्येव । उदीच्याश्च देशान्तरे उद्धृषभयज्ञादीन्, प्राच्याश्च होलाकादीन् । अन्यदेशश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति । तस्मान्न व्यवस्था । राजा राजसूयेनेति तु नियता जातिः ॥१९॥ सिद्धान्ते आशङ्कानिरासः॥

**न स्याद्देशान्तरेष्विति चेत् ॥ २० ॥**

इति चेत् पश्यसि— यदि देशसंयोगादाख्या भवेद्, देशान्तरस्थस्य न भवेत् । भवति च देशान्तरस्थस्य, माथुर इत्यसम्बद्धस्यापि मथुरया । तस्मान्न देशसंयोगादाख्या ॥२०॥ सिद्धान्ते आशङ्का ॥

**स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥**

देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा, न भूतवर्त्तमानभविष्यत्सम्बन्धापेक्षा । यतो दृश्यते— मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन्, मथुराया निर्गतश्च । यस्य तु अतोऽन्यतमः सम्बन्धो नास्ति, न स माथुरः । तस्मान्न समाख्यया व्यवस्था ॥ २१ ॥ आ० नि० ॥

**कर्मधर्मो वा प्रवणवत् ॥ २२ ॥**

अथ कस्मान्न कर्माङ्गं देशः । यः कृष्णमृत्तिकाप्रायः, स आहीनैबुकादीनाम् । यथा, प्राचीनप्रवणे वैश्वदेवेन यजेतेति ॥ २२ ॥ ॥ आशङ्का ॥

## तुल्यन्तु कर्तृधर्मेण ॥ २३ ॥

यथा कर्त्तर्य्यव्यवस्थितं लिङ्गं श्यामादि न पदार्थैः संबन्धमुपैति, तद्वद्देशलिङ्गमव्यवस्थितम् । कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति तथाऽन्यलिङ्गेऽपि कुर्वन्ति । तस्मान्न देशतो व्यवस्था । प्राचीनप्रवणन्तु श्रुत्या नियतं वैश्वदेवस्य ॥ २३ ॥ आशङ्कानिरासः ॥ होलाकाऽधिकरणम् ॥ सामान्यश्रुतिकल्पनाधिकरणम् ॥ ८ ॥

## प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥

गौ गावी गोणी गोपोतलिका इत्येवमादयः शब्दा उदाहरणम् । गोशब्दो यथा सास्नादिमति प्रमाणं, किं तथा गाव्यादयोऽप्युत नेति सन्देहः । किमत्रैकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरे अपभ्रंशाः, उत सर्वेऽनादयः । सर्वे इति ब्रूमः । कुतः । प्रत्ययात् प्रतीयते हि गाव्यादिभ्यः सास्नाऽऽदिमान् अर्थः । तस्मादितो वर्षशतेऽप्यस्यार्थस्य सम्बन्ध आसीदेव, ततः परेण, ततश्च परतरेणेति अनादिता । कर्त्ता चाऽस्य सम्बन्धस्य नास्तीति व्यवस्थितमेव । तस्मात् सर्वे साधवः, सर्वैर्भाषितव्यम् । सर्वे हि साधयन्त्यर्थम् । यथा, हस्तः करः पाणिरिति ॥ अर्थाय ह्येते उच्चार्यन्ते, नाऽदृष्टाय न ह्येषामुच्चारणे शास्त्रमस्ति । तस्मान्न व्यवतिष्ठेत, कश्चिदेक एव साधुरितरेऽसाधव इति ॥ ॥ २४ ॥ ॥ पूर्वपक्षः ॥

## शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥

महता प्रयत्नेन शब्दमुच्चरन्ति—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्त्तितः, मूर्द्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्रापराध्येताऽप्युच्चारयिता । यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृदुपस्प्रक्ष्यामीति द्विरुपस्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुः, न नियोगतोऽविच्छिन्नपारम्पर्या एवेति ॥ २५ ॥ ॥ सिद्धान्तः ॥

## अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥

न चैष न्यायो, यत् सदृशाः शब्दा एकमर्थमभिनिविशमानाः, सर्वेऽविच्छिन्नपारम्पर्या एवेति । प्रत्ययमात्रदर्शनादभ्युपगम्यते । सा-

दयात् साधुशब्देऽभ्यवगते प्रत्ययोऽवकल्प्यते । तस्मादमीषामेकोऽनादिरन्येऽपभ्रंशाः । हस्तः करः पाणिरित्येवमादिषु त्वभियुक्तोपदेशादनादिरमीषामर्थेन सम्बन्ध इति ॥ २६ ॥ ॥ सिद्धान्ते युक्तिः ॥

## तत्र तत्त्वमभियोगविशेषात् स्यात् ॥ २७ ॥

कथं पुनस्तत्र तत्त्वं शक्यं विज्ञातुम् । शक्यमित्याह । अर्थिनो हि अभियुक्ता भवन्ति । दृश्यते चाभियुक्तानां गुणयतामविस्मरणमुपपन्नम् । प्रत्यक्षश्चैतद् गुण्यमानं न भ्रश्यते इति । तस्माद् यमभियुक्ता उपदिशन्ति, एष एव साधुरिति, साधुरित्यवगन्तव्यः ॥ २७ ॥ ॥ आशङ्कानिरासः ॥

## तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥

अथ यदुक्तम्- अर्थोऽवगम्यते गाव्यादिभ्यः, अत एषामप्यनादिरर्थेन सम्बन्ध इति । तदशक्तिरेषां गम्यते । गोशब्दमुच्चारयितुकामेन केनचिदशक्त्या गावीत्युच्चारितम् । अपरेण ज्ञातं- सास्नादिमान् अस्य विवक्षितस्तदर्थं, गौ -इत्युच्चारयितुकामो, गावी-इत्युच्चारयति । ततः शिक्षित्वाऽपरेऽपि सास्नादिमति विवक्षिते, गावी-इत्युच्चारयन्ति । तेन गाव्यादिभ्यः सास्नादिमानवगम्यते । अनुरूपो हि गाव्यादिर्गोशब्दस्य ॥ २८ ॥ ॥ उत्तरम् ॥

## एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥

अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति । अश्मकैरागच्छामीति । अश्मकशब्दैकदेशे उपलब्धे, अश्मकेभ्य इत्येव शब्दः स्मर्यते । ततः, अश्मकेभ्य इत्येषोऽर्थ उपलभ्यते इति । एवं गाव्यादिदर्शनाद् गोशब्दस्मरणं, ततः सास्नादिमानवगम्यते ॥ २९ ॥ ॥ उत्तरे युक्तिः ॥ ॥ साधुपदप्रयुक्त्यधिकरणम् ॥ ९ ॥

अथाऽऽकृतिशक्त्यधिकरणम् ॥

## प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

अथ, गौः-इत्येवमादयः शब्दाः किमाकृतेः प्रमाणम्, उत व्यक्तेरिति सन्देहः । उच्यते । इदं तावत् परीक्ष्यताम् । किं य एव लौकिकाः शब्दास्त एव वैदिका , उतान्ये इति । यदा त एव, तदाऽपि किं त एवैषामर्था ये लोके, उतान्ये इति संशयः । तत्रान्ये लौकिकाः शब्दाः, अन्ये वैदिकाः, अन्ये चैषामर्था इति ब्रूमः । कुतः ।

व्यपदेशभेदाद् रूपभेदाच्च । इमे लौकिका, इमे वैदिका तीह व्यपदेशभेदः । अग्निर्वृत्राणि जङ्घनत्—इत्यन्यादृशं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वाच्च न ते एवार्थाः । अपि च समामनन्ति, उत्ताना वै देवगवा वहन्तीति । ये देवानां गावस्त उत्ताना वहन्तीत्युक्ते गम्यत एव, य उत्ताना वहन्ति, ते गोशब्देनोच्यन्ते इति । तस्मादन्यो वैदिकगोशब्दस्यार्थ । तथा, देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थमिति, हिरण्यपर्णो देवो वनस्पतिः वेदे । एतद् वै दैव्यं मधु यद् घृतमिति वेदे घृते मधुशब्दः । तस्मादमीषामन्येऽर्था इति प्राप्ते, ब्रूम । य एव लौकिकाः शब्दास्त एव वैदिकाः, त एवैषामर्था इति । कुतः । प्रयोगचोदनाभावात् । एवं प्रयोगचोदना सम्भवति । यदि त एव शब्दास्त एवार्थाः, इतरथा शब्दाऽन्यत्वेऽर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति । उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यताम् इति । ततो हेतुरुच्यते । अविभागादिति । न तेषामेषाञ्च विभागमुपलभामहे । अत एव एकशब्दत्वं, तांश्च तांश्चार्थानवगच्छाम । अतो नान्यत्वञ्च वदामः । यच्चोक्तं, ये उत्ताना वहन्ति ते देवगवा., यद् घृतं तन्मधु, यो हिरण्यपर्णः स वनस्पतिरिति । नास्ति वचनं, यदुत्तानानां वहतां गोत्वं ब्रूयात् । ये गावः, ते उत्ताना वहन्तीत्येवं तत् । यदि चानेन वचनेन गोत्वं विधीयते, उत्ताना वहन्तीत्यनुवाद. स्यात् । न च उत्ताना वहन्त प्रसिद्धाः केचित् । ते नियोगतो विधातव्याः । तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम् । भिद्यते हि तथा वाक्यम् । यदि चान्ये वैदिकाः, तत उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येताऽविज्ञातलक्षणं गोत्वं विज्ञातुम् । न चोत्तानवहनवचनमप्यनर्थकं, स्तुत्यर्थेनार्थवद् भविष्यतीति । एवं घृतस्य मधुत्वं, हिरण्यपर्णता च वनस्पतेः । तस्मात् त एव शब्दा अर्थाश्च ॥ * ॥ ॥ लोकवेदयोः शब्दैक्याऽधिकरणम्, आकृतिशक्त्यधिकरणान्तर्गतम् ॥ १० ॥

यदि, लौकिकास्त एवार्थास्तदा सन्देहः— किमाकृति शब्दार्थोऽथ व्यक्तिरिति । का पुनराकृति , का व्यक्तिरिति । द्रव्यगुणकर्मणां सामान्यमात्रमाकृति , असाधारणविशेषा व्यक्ति । कुतः संशयः । गौ –इत्युक्ते सामान्यप्रत्ययाद्, व्यक्तौ च क्रियासंबन्धात् । तदुच्यते व्यक्ति. शब्दार्थ इति । कुत । प्रयोगचोदनाभावात् । आलम्भनप्रो-

क्षणविशसनादीनां प्रयोगचोदना आकृत्यर्थे न सम्भवेयुः । यत्रो-च्चारणानर्थक्यं, तत्र व्यक्त्यर्थं । अतोऽन्यत्राकृतिवचन इति चेत् । उक्तम्—अन्यायश्चानेकार्थत्वमिति । कथं सामान्यावगतिरिति चेत् । व्यक्तिपदार्थकस्याकृतिश्चिह्नभूता भविष्यति । य एवमाकृतिः, स गौरिति । यथा यस्य दण्डोऽस्ति, स दण्डीति न च दण्डवचनो दण्डिशब्दः । एवमिहाऽपि ॥ ३० ॥

## अद्रव्यशब्दत्वात् ॥ ३१ ॥

द्रव्याश्रयस्य शब्दो द्रव्यशब्दः, न तत्र द्रव्याश्रयवचनः शब्दो भवेद् यद्याकृतिः शब्दार्थो भवेत् । षड् देया द्वादश देयाश्चतुर्विंशति-र्देया इति । न हि आकृतिः षडादिभिः संख्याभिर्युज्यते । तस्मान्ना-ऽऽकृतिवचनः ॥ ३१ ॥

## अन्यदर्शनाच्च ॥ ३२ ॥

यदि पशुरुपाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत इति । यद्याकृतिवचनः शब्दो भवेद्, अन्यस्यालम्भो नोपपद्येत । अन्यस्यापि पशुद्रव्यस्य सैवाकृतिः । तस्माद् व्यक्तिवचन इति ॥३२॥ ॥ पूर्वपक्षः ॥

## आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥

तुशब्दः पक्षं व्यावर्त्तयति । आकृतिः शब्दार्थः । कुतः । क्रिया-ऽर्थत्वात् । श्येनचितं चिन्वीतेति वचनमाकृतौ संभवति यद्याकृत्यर्थः श्येनशब्दः । व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं शक्यते इत्यशक्यार्थवचनादनर्थकः । तस्माद् आकृतिवचनः ॥

ननु श्येनव्यक्तिभिश्चयनमनुष्ठास्यते । न साधकतमः श्येनशब्दार्थः ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते । अतश्चयनेन श्येनो निर्व-र्त्तयितव्यः । स आकृतिवचनत्वेऽवकल्प्यते । ननु उभयत्र क्रियाया अ-सम्भव एव व्यपदिश्यते । नाकृतिः शब्दार्थः । कुतः । क्रिया न सम्भवे-दाकृतौ शब्दार्थे, व्रीहीन् प्रोक्षतीति । तथा न व्यक्तिः शब्दार्थः, क्रि-यैव न सम्भवेद् व्यक्तेः शब्दार्थत्वे, श्येनचितं चिन्वीतेति । यद-प्युच्येत, व्रीहीन् प्रोक्षतीति व्यक्तिलक्षणार्था आकृतिरिति शक्यम-न्यत्रापि, श्येनचितं चिन्वीतेति वदितुम् । आकृतिलक्षणार्था व्यक्ति-रिति । किं पुनरत्र न्यायः । आकृतिः शब्दार्थ इति । यदि व्यक्तिः श-ब्दार्थो भवेद्, व्यक्त्यन्तरं न प्रयुज्येत । अथ व्यक्त्यन्तरं प्रयुज्यते, न

तर्हि व्यक्तिः शब्दार्थः सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरिति । उच्यते । नैष दोषः । व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्ते एव प्रवर्त्तिष्यते । यदि व्यक्त्यन्तरं सर्वसामान्यविशेषवियुक्ते प्रवर्त्तिष्यते, सामान्यमेव तर्हि तत् । नेत्युच्यते । यो हि अर्थः सामान्यस्य विशेषाणाञ्चाश्रयः, सा व्यक्तिः । व्यक्तिवचनश्च शब्दो न सामान्ये, न विशेषे वर्त्तते, तेषां त्वाश्रयमेवाभिदधाति । तेन व्यक्त्यन्तरे वृत्तिरदोष । न हि तत् सामान्यम् । यदि व्यक्त्यन्तरेष्वपि भवति, सर्वसामान्यविशेषवियुक्तायामश्वव्यक्तौ गोशब्दः किमिति न वर्त्तते । आह येष्वेव प्रयोगो दृष्टस्तेषु वर्त्तिष्यते, न सर्वत्र । न चाश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः । तस्मात्तत्र न वर्त्तिष्यते । यदि यत्र प्रयोगो दृष्टस्तत्र वृत्तिः, अद्य जातायां गवि प्रथमप्रयोगो न प्राप्नोति तत्रादृष्टत्वात् । सामान्यप्रत्ययश्च न प्राप्नोति— इयमपि गौरिति, इयमपि गौरिति इयं वा गौरिति, इयं वा गौरिति स्यात् । भवति तु सामान्यप्रत्ययोऽदृष्टपूर्वायामपि गोव्यक्तौ । तस्मान्न प्रयोगापेक्षो गोशब्दो व्यक्तिवचन इति शक्यते आश्रयितुम् । एवं तर्हि शक्तेः स्वभाव एषः, यत् कस्याञ्चित् व्यक्तौ वर्त्तते, कस्याञ्चिन्न । यथा, अग्निरुष्ण , उदक शीतम्, एवमेतद् भविष्यतीति । नैवं सिद्ध्यति । न ह्येतद् गम्यते कस्याञ्चिद् व्यक्तौ वर्त्तते, कस्याञ्चिन्नेति ॥

सत्यमेतत् । गोत्वं लक्षणं भविष्यतीति । यत्र गोत्वं तस्यां व्यक्ताविति । एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत । यदि च विशिष्टा, पूर्वतरं विशेषणमवगम्येत । न हि, अप्रतीते विशेषणे विशिष्टं कञ्चन प्रत्येतुमर्हन्तीति । अस्तु विशेषणत्वेनाकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिम् । न ह्याकृतिपदार्थकस्य व्यक्तिर्न पदार्थो, व्यक्तिपदार्थकस्य वा नाकृतिः । उभयमुभयस्य पदार्थः । कस्यचित् किञ्चित् प्राधान्येन विवक्षितं भवति, तेन अत्राकृतिर्गुणभावेन, व्यक्तिः प्रधानभावेन विवक्ष्यते इति ॥

नैतदेवम् उभयोरुच्यमानयोर्गुणप्रधानभावः स्यात् । यदि चात्र आकृति प्रतीयते शब्देन, तदा व्यक्तिरपि पदार्थ इति न शक्यते वदितुम् । कुतः । आकृतिर्हि व्यक्त्या नित्यसम्बद्धा, सम्बन्धिन्याञ्च तस्यामवगतायां सम्बन्ध्यन्तरमवगम्यते । तदेतदात्मप्रत्यक्षं, यच्छब्दे उच्चारिते व्यक्ति प्रतीयते इति किं शब्दाद् उत आकृतेरिति विभागो न

प्रत्यक्षः सोऽन्वयव्यतिरेकाभ्यामवगम्यते। अन्तरेणापि शब्दं य आकृतिमवबुद्ध्येत, अवबुद्ध्येतैवासौ व्यक्तिम्। यस्तूच्चरितेऽपि शब्दे मानसादपचारात् कदाचिदाकृतिं नोपलभेत, न जातुचिदसाविमां व्यक्तिमवगच्छेत। ननु व्यक्तिविशिष्टायामाकृतौ वर्त्तते। व्यक्तिविशिष्टायाञ्चेद् वर्त्तते, व्यक्त्यन्तरविशिष्टा न प्रतीयेत। तस्माच्छब्द आकृतिप्रत्ययस्य निमित्तम्। आकृतिप्रत्ययो व्यक्तिप्रत्ययस्येति॥

ननु गुणभूता प्रतीयते इत्युक्तम्। न गुणभावोऽस्मत्पक्षस्य बाधकः। सर्वथा तावत् प्रतीयते। अर्थाद् गुणभावः प्रधानभावो वा। स्वार्थे चेदुच्चार्यते, प्रधानभूता। अथ न स्वार्थे, परार्थमेव; ततो गुणभूता। न तत्र शब्दव्यापारोऽस्ति। ननु च दण्डीति, न तावद् दण्डिशब्देन दण्डोऽभिधीयते; अथ च दण्डविशिष्टोऽवगम्यते। एवमिहापि न तावदाकृतिरभिधीयेत, अथ चाकृतिविशिष्टा व्यक्तिर्गम्येतेति। नैतत् साधु। उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते, न त्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति। अस्ति तु दण्डिशब्दैकदेशभूतो दण्डशब्दो, येन दण्डः प्रत्यायित.। तस्मात् साध्वेतद् यत् प्रतीते विशेषणे विशिष्टः प्रतीयते इति॥

ननु गोशब्दावयवः कश्चिदाकृते. प्रत्यायक', अन्यो व्यक्ते। यत उच्येत, तत आकृतिरवगता, न गोशब्द आकृतिवचन इति। न च यथा दण्डिशब्दो न दण्डे प्रयुक्त, एवं गोशब्दो नाकृतौ। तदर्थमेव निदर्शितं, केवलाऽऽकृत्यभिधान श्येनशब्द इति। तदेवमन्वयव्यतिरेकाभ्यामसति श्येनव्यक्तिसम्बन्धे श्येनशब्दोच्चारणादाकृतिवचन इति गम्यते। न तु व्रीह्याकृतिसम्बन्धमन्तरेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्ट.। तस्माद् आकृतिवचन शब्द इत्येतज्ज्याय' ॥३३॥ सिद्धान्तः॥

**न क्रिया स्यादितिचेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥**

अथ यदुक्तं, न क्रिया सम्भवेद्, व्रीहीन् प्रोक्षतीति। न द्रव्यशब्दः स्यात्, षड् देया इति। अन्यदर्शनवचनञ्च न स्याद् अन्यं तद्रूपमिति। तत् परिहर्त्तव्यम् ॥ ३४ ॥

**तदर्थत्वात् प्रयोगस्याविभागः ॥ ३५ ॥**

आकृत्यर्थत्वाच्छब्दस्य यस्या व्यक्तेराकृत्या सम्बन्धस्तत्र प्रयो-

न । प्रोक्षणं हि द्रव्यस्य कर्त्तव्यतया श्रूयते । कतमस्य ? । यद् यजतिसाधनम् । अपूर्वप्रयुक्तत्वात्तस्य, नाकृतेः । अशक्यत्वात् । तत्र व्रीहिशब्द आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय । स ह्याकृतिं प्रत्याययिष्यति, आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेक्ष्यतीति । तेनाकृतिवचनं न विरुध्यते इति । एवं, षड्देया गावो दक्षिणा इति दक्षिणाद्रव्ये संख्यायाः प्रयोक्तव्ये गाव इत्याकृतिवचनो विशेषकः । तथा अन्यामिति विनष्टस्य प्रतिनिधेरन्यत्वसम्बन्धः । तत्र पशुशब्द आकृतिवचनः, आकृत्या विशेक्ष्यतीति । तस्माद् गौरश्व इत्येवमादयः शब्दा आकृतेरभिधायका इति सिद्धम् ॥३५॥ ॥ उत्तरम् ॥ आकृतिशास्त्राधिकरणम् ॥ १० ॥ इति श्रीशबरस्वामिकृते मीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥ १ ॥ ३ ॥ स्मृतिपादोऽयम् ॥

---

अथ प्रथमाध्याये चतुर्थः पादः ॥ १ ॥ ४ ॥

**उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ॥१॥**

उद्भिदा यजेत, बलभिदा यजेत, अभिजिता यजेत, विश्वजिता यजेतेति समामनन्ति । तत्र सन्देहः । किमुद्भिदादयो गुणविधयः, आहोस्वित् कर्मनामधेयानीति । कुतः संशयः । उभयथाऽपि प्रतिभातो वाक्यात् । उद्भिदित्येष शब्दो यजेतेत्यनेन सम्बध्यते । स किं वैयधिकरण्येन सम्बन्धमुपैति उद्भिदा द्रव्येण यागमभिनिर्वर्त्तयेदिति, उत सामानाधिकरण्येन— उद्भिदा यागेन यजेतेति द्वेधाऽप्येतस्मिन् प्रतिभाति वाक्ये, सम्भवति संशयः ॥

किं तावत् प्राप्तम् । उक्तमस्माभिः समाम्नायस्यैदमर्थ्यम् । कश्चिदस्य भागो विधिर्योऽविदितमर्थं वेदयति । यथा, सोमेन यजेतेति कश्चिदर्थवादो यः प्ररोचयन् विधिं स्तौति । यथा, वायुर्वै क्षेपिष्ठा देवतेति । कश्चिन्मन्त्रो यो विहितमर्थं प्रयोगकाले प्रकाशयति । यथा, बर्हिर्देवसदनं दामीत्येवमादि । तस्मादुद्भिदादयोऽमीषां प्रयोजनानामन्यस्मै प्रयोजनाय भवेयुः । तत्र तावन्नार्थवादः । वाक्यशेषो हि स भवति विधातव्यस्य । न च मन्त्रः । एवञ्जातीयकस्य प्रकाशयितव्यस्याभावात् । पारिशेष्याद् गुणविधिः । उद्भिद्गुणता यागस्य विधीयते । कुतः । प्रसिद्धेरनुग्रहाद् गुणविधेरर्थवत्त्वात्, प्रवृत्तिवि-

शेषकरत्वाच्च। न चैषां यागार्थता लोकेऽवगम्यते। न च वेदेन परिभाष्यते। अतो गुणविधयः। यदि गुणविधिः, न तर्हि कर्म विधीयते। अविहिते च कर्मणि तत्र गुणविधानमनर्थकम्। नेति ब्रूमः। प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति। यदि नामधेयं स्यात्, यावदेव यजेतेति, तावदेव उद्भिदा यजेतेति न प्रवृत्तौ कश्चित् गुणविशेष स्यात्। गुणविधौ च गुणसंयोगादभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति। तस्मात् गुणविधय इत्येवं प्राप्तम्॥ १॥ ॥ पूर्वपक्षः॥

एवं प्राप्ते ब्रूमः—

अपि वा नामधेयं स्याद् यदुत्पत्तावपूर्व्वमविधायकत्वात्॥ २॥

अपि वेति पक्षो विपरिवर्त्तते। नामधेयं स्यादिति प्रतिजानीमहे यवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं, श्रुतिश्चैवं यागमभिधास्यति। इतरथा श्रुतिरुद्भिदादीन् वदन्ती उद्भिदादिमतो लक्षयेत्। उद्भिद्वता यागेन कुर्य्यादिति। यागेन कुर्य्यादिति, यजेतेत्यस्यार्थः। करणं हि यागः। उद्भिदाद्यपि तृतीयानिर्द्देशात् करणम्। तत्रोद्भिदा यागेनेति कर्मनामधेयत्वेन सामानाधिकरण्यमवकल्पते द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी। तस्मात् कर्मनामधेयम्। ननु प्रसिद्धं द्रव्यवचनत्वमपह्नूयेत, अप्रसिद्धं कर्मवचनत्वं प्रतिबाधेत। उच्यते। तृतीयानिर्द्देशात् कर्मवचनता। कुतः। करणवाचिनो हि प्रातिपदिकात् तृतीया भवति करणं च यागः। तेन यागवचनमिममनुमास्यामहे॥

नैतद्युक्तम्। यदि तृतीयानिर्देशो सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवम्। न हि नो बुद्धिरुत्पद्यते तस्मादयुक्तम्। तृतीयावचनमन्यथा नोपपद्यते इति चेत्, कामं मोपपादि। न जातुचिदनवगम्यमानेऽपि यागवचनो भविष्यति। तस्मात् गुणविधयः। लक्षणेति चेद्, वरं लक्षणा कल्पिता, न यागाभिधानम्। लौकिकी हि लक्षणा, हठोऽप्रसिद्धकल्पनेति। अपि च, यदि नामधेयं विधीयते, न यागः। अथ यागो, न नामधेयम्। उभयविधाने वाक्यभेद इति। उच्यते। न नामधेयं विधायिष्यते। अनुवादो बुद्धि-

द्रव्यः । कुतः प्राप्तिरिति चेत् । ततोऽभिधीयते, उच्छब्दसामर्थ्याद् भिच्छब्दसामर्थ्याच्चोद्भिच्छब्दः क्रियावचनः । उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भिद् यागः । एवमाभिमुख्येन जयाद् अभिजित्, विश्वजयाद् विश्वजित् । एवं सर्वत्र । अतः कर्मनामधेयम् । यत्त्वप्रवृत्तिविशेषकरोऽनर्थक इति, नामधेयमपि गुणफलोपबन्धेनार्थवत् । तस्मात् कर्मनामधेयान्येवञ्जातीयकानीति सिद्धम् ॥ २ ॥ ॥ सिद्धान्तः ॥ ॥ उद्भिदादिशब्दानां यागनामधेयताऽधिकरणम् ॥ १ ॥

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥**

चित्रया यजेत पशुकामः, त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि, सप्तदश पृष्ठानीत्युदाहरणम् । किं चित्राशब्दः, पवमानशब्द, आज्यशब्द, पृष्ठशब्दश्च गुणविधय. ? उत कर्मनामधेयानीति संशयः । प्रसिद्धेः, अर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च गुणविधयः । न चैते कर्मणि प्रसिद्धाः । न चामी यौगिका. । जातिशब्दा ह्येते चित्रा इति च गुणशब्दः । चित्रया यजेतेति च यागानुवादः । विज्ञातत्वाच्च यागविधिः । गुणे फलकल्पनायां यजतेर्न विवक्षा । तथा आज्यानि भवन्ति, पृष्ठानि भवन्तीति च । गुणविधिकल्पनायामपि न लक्षणा । तस्माद् गुणविधय इत्येवं प्राप्तम् ॥

एवं प्राप्ते, ब्रूमः । यस्मिन् गुणविधिर्नामधेयमिति सन्दिग्धे गुणोऽपर उपदिश्यते प्रधानेन कर्मणा तस्य सम्बन्ध, कर्मनामधेयमित्यर्थः । गुणविधौ हि सति वाक्यं भिद्येत । पुंपशौ प्राप्ते स्त्रीपशुः । पशवः फलं, चित्रो गुण इति न शक्यमेकेन वाक्येन विधातुम् । चित्रो गुणो विधीयमानः स्त्रियां विधीयेत । नासावग्नीषोमीये पशुकामे च विधीयेत । सोऽपि नाग्नीषोमीये । तथा पञ्चदशानि आज्यानि भवन्तीति आज्येषु पञ्चदशता । न चाविहितानि स्तोत्रेष्वाज्यानि भवन्ति न चान्यद्विधायकं वाक्यं, तच्चैतदाज्यानि विदध्याद् विहितेषु च पञ्चदशताम् । गम्यते च पञ्चदशताया आज्यानां च सम्बन्ध । स्तोत्रसम्बन्धश्चाज्यानामविज्ञातः पञ्चदशतासम्बन्धश्च । द्वावेतावर्थावेकवाक्यस्याशक्यौ विधातुम् । अथ नु कर्मनामधेयं, नैष विरोधो भवति । केवलं संख्यासम्बन्धस्तदानीं विधीयते । अपि चाज्यानि स्तोत्राणीत्यनेन शब्देन लक्षणयैव गुणो विधीयेत । अतः कर्मणां नामधेयानि । वाक्यान्तरैः, आज्यैः स्तुवते, पृष्ठैः स्तुवते इत्येवमादिभि-

विहितानाम्। यत्वप्रसिद्धं कर्मणां नामधेयमिति। अवयवप्रसिद्ध्या आजिगमनादाज्यानि। कथमाजिगमनमिति। अर्थवादवचनात्। यदाजिमीयुस्तदाज्यानामाज्यत्वमिति। स्पर्शवचनात् पृष्ठानि। पवमानार्थमन्त्रकत्वात् बहि सम्बन्धाच्च बहिष्पवमानम्। दधि मधु पयो घृतं धानास्तण्डुला उदकं तत्संसृष्टं प्राजापत्यमिति नानाविधद्रव्यत्वान्मिश्रा। तस्मादेवञ्जातीयकानि कर्मनामधेयानीति। अथ कस्मान्न पञ्चदशसङ्ख्याविशिष्टानि आज्यानि स्तोत्रकर्मसु विधीयन्ते?। विशिष्टानां वाचकस्य शब्दस्याभावात्॥

ननु पदद्वयमिदं वाचकं भविष्यति, पञ्चदशान्याज्यानीति। विशिष्टानां, तदेतेषु स्तोत्रेषु विधास्यति। नैतत्पदद्वयमपि विधायकम्। एकमत्र विधायकम्, एकमुद्देशकम्। उभयस्मिन् विधायके परस्परेण संबन्धो न स्यात्। अविधायके स्तोत्रसंबन्धो न विधीयते। न चात्रैकं पदं, विशेषणं प्रति उद्देशकं, स्तोत्रं प्रति विधायकं भवितुमर्हति। वचनव्यक्तिभेदादतोऽधमसमाधि॥३॥ चित्रादिशब्दानां यागनामधेयताधिकरणम्॥२॥

### तत्प्रख्यञ्चान्यशास्त्रम्॥४॥

अग्निहोत्रं जुहोति स्वर्गकाम इति, आघारमाघारयतीति च समामनन्ति। तत्र संशय, किमग्निहोत्रशब्द आघारशब्दश्च गुणविधी, उत कर्मनामधेये इति। गुणविधी इति ब्रूमः। कुतः?। गम्यते हि, अग्नये होत्रमस्मिन्निति। तथा क्षरणसमर्थं द्रव्यं घृतादि, आघारमाघारयतीति प्रसिद्धिरेवमनुग्रहीष्यते। गुणविधिश्च दर्विहोमे, आघारश्चोपांशुयाजे। तत्रैतयोरर्थवत्ता प्रवृत्तिविशेषकरत्वञ्च। न च गुणविधिपक्षे लक्षणा भवति, यथोद्भिदा यजेतेति। अग्निहोत्रे समासेनावगतं गुणविधानम्। आघारेऽपि, आघारं निर्वर्त्तयतीति श्रुत्यैव गुणो विधीयते। तस्माद् गुणविधी इत्येवं प्राप्ते, ब्रूमः। तत्प्रख्यञ्चान्यशास्त्रम्। यौ गुणावेताभ्यां विधीयेते इत्याशङ्क्यते, तावन्यत एवावगतौ। यदग्नये च प्रजापतये च सायं जुहोतीति देवताविधानं, चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्यो इत्याघारे च द्रव्यविधिः। अविदितवेदनञ्च विधिरित्युच्यते। विदितं चात्रान्यतो गुणविधानम्। तस्मान्न गुणविधी, कर्मनामधेये तु सम्भवतः। यस्मिन्नग्नये होत्रं होमो भवति, तदग्निहोत्रम्। दीर्घधारा

क्षरणक्रिया प्रसिद्ध एवाघारे । तस्मात् कर्मनामधेये । प्रसिद्ध्यादय-श्चोक्तोत्तराः । प्रजापतिनिवृत्त्यर्थमग्निविधानं भविष्यतीति चेन्नैतदे-वम् । अग्निं ह्येष विधातुं शक्नोति, न प्रजापतिं प्रतिषेद्धुम् । प्रतिषि-ध्यमानस्य च प्रजापतेर्विधानमनर्थकं स्यात् । प्रजापतिर्देवतेति ग-म्यते । गम्यमानं च न शक्यं मिथ्येति कल्पयितुम् । अतोऽयमसमा-धिः । उच्यते । आघारमाघारयतीति द्रव्यपरा चोदना । येन्तु द्रव्यं चिकीर्ष्यते इति । द्रव्यं ह्यनया क्रियया क्षार्यते । क्षारितं च यागं सा-धयति । तत्कस्य प्रधानस्य कर्मणो नामधेयमिति । उच्यते । एतदे-वाघारणं प्रधानकर्म । नन्वस्य द्रव्यदेवतं नास्ति । अस्तीति ब्रूमः । त-स्याघारमाघार्या इत्याज्यं द्रव्यं, मान्त्रवर्णिकी देवता । इन्द्र ऊर्ध्वो-ऽध्वर इत्याघारमाघारयतीति मन्त्रो ह्यभिवदत् कर्म, तत्साधनं वा कर्मणि समवैति । एष च मन्त्र इन्द्रमभिधातुं शक्नोति । स यदीन्द्र-स्तत्साधनं भवेद्, एवमनेन मन्त्रेणाघारः शक्यते कर्तुम् । तस्मा-दिन्द्रो देवता । द्रव्यदेवतासंयुक्तमाघारणम् । तस्माद् यजतिः, तस्य यजतेर्नामधेयमिति ॥ ४ ॥ ॥ अग्निहोत्रादिशब्दानां यागनामधेयता-ऽधिकरणम् ॥ ३ ॥ ॥ तत्प्रख्यन्यायः ॥

## तद्व्यपदेशं च ॥ ५ ॥

अथैष श्येनेन अभिचरन् यजेत, अथैष सन्दंशेन अभिचरन् यजेत, अथैष गवाऽभिचरन् यजेतेति समाम्नायन्ते । तत्र गुणविधिः, कर्म-नामधेयमिति सन्देहः । प्रसिद्ध्यादिभिः पूर्वपक्ष उद्भिदादीनामिव । ते तूद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम् । इमे पुनर्जातिनिमित्ता न शक्नुवन्ति । तेन गुणविधय इत्येवं प्राप्त-म् । एवं प्राप्ते, ब्रूमः ॥ तद्व्यपदेशाच्च ॥ तेन श्येनादिना प्रसिद्धेन यस्य व्यपदेशः, तच्च कर्मनामधेयम् श्रुतिर्हि नामधेयत्वे, लक्षणा गुण-विधौ । यत्तु जातिशब्दा इमे, न यागमभिवदन्तीति । सादृश्यव्यपदे-शादभिवदिष्यन्ति । एवं हि व्यपदेशो भवति । यथा वै श्येनो निपत्या-दत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते, यमभिचरन्ति श्येनेनेति । निपत्यादत्ते इत्यनेन सादृश्येन श्येनशब्दो यागे । यथा सिंहो देवदत्त इति । तस्मात् कर्मनामधेयम् ॥ सन्दंशे, सन्दंशेन यथा दुरादानमा-दत्ते इति, गवि यथा गावो गोपायन्तीति । तस्मात् सन्दंशशब्दोऽपि

कर्मनामधेयं, गोशब्दोऽपि ॥ ५ ॥ ॥ श्येनादिशब्दानां यागनामधेयताऽधिकरणम् ॥ ४ ॥ ॥ तद्व्यपदेशन्याय ॥

## नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥

वाजपेयेन स्वाराज्यकामो यजेतेति श्रूयते । तत्र किं गुणविधि, कर्मनामधेयमिति सन्देहः । एवं चेत् सन्देहो, दृश्यते गुणविधि. । न सन्देह , श्रूयते हि गुणः । सोऽवगम्यमानो न शक्यो नास्तीति वदितुम् । तस्माद् गुणविधि ॥ ६ ॥ ॥ पूर्वपक्षः ॥

## तुल्यत्वात् क्रिययोर्न ॥ ७ ॥

नैतदेवं, तुल्ये हि इमे क्रिये स्याताम् । या च वाजपेयक्रिया, या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको विध्यन्त स्यात् । तथा च दीक्षाणामुपसदाञ्च दर्शनं नावकल्प्येत, सप्तदशदीक्षो वाजपेय इति, सप्तदशोपसत्को वाजपेय इति ॥

अथ वा, तुल्यत्वात् क्रिययोर्नेति ॥ यदि न गुणविधि , ततस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया । तत्र दीक्षाणामुपसदाञ्च दर्शनमुपपन्नम् । तस्मात् कर्मनामधेयमिति । लिङ्गं त्वेतत्प्राप्ति. पुनरुत्तरसूत्रेण ॥ ७ ॥ ॥ सिद्धान्त ॥

## एकशब्द्ये परार्थवत् ॥ ८ ॥

यदि गुणविधिः स्यात्, स्वार्थवत् परार्थवच्चाभिधानं विप्रतिषिध्यते यजेतेत्यस्य शब्दस्य । यदि स्वाराज्यकामो यजेतेति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते, न तर्हि वाजपेयेन गुणेन सम्बद्धुं परार्थमनूद्येत यागेन वाजपेयगुणकेनेति । भिद्येत हि तथा वाक्यम् । ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे, स्वाराज्यकामो यजेतेत्येतदेकं प्रत्यक्षं पदद्वयम् । यजेत वाजपेयेनेत्येतदपि प्रत्यक्षमेव । नैतदेवम् । एवं सति चत्वारि पदान्युपलभेमहि, त्रीणि चैतान्युपलभ्यन्ते । उच्यते । यजेतेत्येतदुभाभ्यां सम्भन्त्स्यते । कथं सकृदुच्चारितं सम्बन्धमुभाभ्यामेष्यतीति । रूपाभेदात् । ईदृशमेवास्य रूपं स्वाराज्यकामेन सम्बध्यमानस्य, ईदृशमेव वाजपेयेन । अतस्तन्त्रेणोभाभ्यां सम्भन्त्स्यते इति । नैतदस्ति, ईदृशेनैव रूपेणेति । यद्यज्ञातस्ततो विधिः, यदि ज्ञातस्ततोऽनुवादः । न च ज्ञातोऽज्ञातश्च युगपत् सम्भवतीति । आह । यदिदमुक्तं- गुणविधिपक्षेऽनुवादो यजेतेति । यद्ययमनुवाद , केनेदानीं गुणो विधीयते । वाजपेयशब्देनेति मा

बोच । न ह्याख्यातमन्तरेण कृत्यं वा नाम शब्दार्थस्य व्यापारो विधीयते । यश्चात्राख्यातशब्दो यजेतेति सोऽनुवाद इत्युक्तम् । केनेदानीं तस्य व्यापारो विधीयते । अतः स्वाराज्यकामं गुणं च प्रति यजेतेति विधि । तस्मादुभाभ्यां सम्बध्यते इति । यद्युभयत्र विधि वाजपेयो न स्वाराज्यकामस्य यागेन सम्बध्येत । द्वे ह्येते तदा वाक्ये, न स्वाराज्यकामस्य यागेन सह गुणविधेरेकवाक्यता । प्रकरणात् सम्बन्धः स्वाराज्यकामस्य यागेनेति चेन्न । वाक्येन यागमात्रे विधानात् । अस्तु यागमात्रेण सम्बन्ध इति चेद्, न । स्वाराज्यकामस्य यागेन सह एकवाक्यताया गम्यमानत्वात् । तदेवं प्रकरणस्य वाक्यस्य च बाधो युज्यते यदि कर्मनामधेयम् । गुणविधिपक्षे हि सर्वे इमे वाक्यभेदादयो दोषाः प्रादुर्भवेयुः । तस्मात् कर्मनामधेयं वाजपेयशब्द इति सिद्धम् ॥ ८ ॥ ॥ सिद्धान्ते युक्तिः ॥ ॥ वाजपेयादिशब्दानां नामधेयताऽधिकरणम् ॥ ५ ॥

## तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥

यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीत्येवमादयः श्रूयन्ते । तत्र सन्देहः । किमाग्नेयोऽग्नीषोमीय इत्येवमादयो गुणविधय, कर्मनामधेयानीति । किं तावत् प्राप्तम् । गुणविधौ सत्यनेको गुणो विधीयते । अग्निपुरोडाशाष्टाकपाला इति । तस्मान्न गुणविधय इत्येवं प्राप्ते ब्रूमः । तच्च कर्म, गुणाश्चास्य विधीयेरन् । अविभक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे । तत्र हि अष्टाकपालस्याग्नेयता विधीयते । स एष एवमाग्नेयो भवति । यद्यग्नये सकल्प्य दीयते । तेनास्यनेन प्रकारेण यागो विहितो भवति । स एवं विधीयमानो न शक्योऽग्निमष्टाकपालं चाविधाय विधातुम् । संबन्धो हि विधीयमानो न शक्यते सम्बन्धिनाववविधाय विहित इति वक्तुम् । तस्माद् गुणविधय । अष्टसु कपालेषु संस्क्रियमाणो व्रीहिमयो यवमयो वा पुरोडाश एव भवति । सोऽनुवादः । सिद्धश्चात्राष्टाकपाल उच्यते । कपालेषु श्रपयतीति वचनाद् नान्येन श्रपितं गृह्णन्ति । तेनाऽस्मिन् पक्षे न वाक्यभेदो भवति, न चेदन्येन शिष्टः । यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयम् । यथा, अग्निहोत्रं

जुहोतीति ॥ ९ ॥ ॥ आग्नेयादीनामनामताधिकरणम् ॥ ६ ॥

**बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥**

बर्हिराज्ययोः पुरोडाशे च सन्देहः । किमेते संस्कारशब्दा, उत जातिशब्दा इति । संस्कारशब्दा इति ब्रूमः । संस्कृतेषु तृणेषु बर्हिःशब्दमुपचरन्ति सर्वत्र, नासंस्कृतेषु । संस्कृते च घृते आज्यशब्दम् । तथा संस्कृते पिष्टे पुरोडाशशब्दम् । नन्वसंस्कृतेऽपि कस्मिंश्चिद्देशे उपचर्यते । यथा बर्हिरादाय गावो गता इति भवन्ति वक्तारः, तथा आज्यं क्रय्यमिति, पुरोडाशेन मे माता प्रहेलकं ददातीति । सादृश्यात्तेषु प्रयोगः । यथापशये यूपशब्दः । कुत एतत् । यत एकदेशे हि शब्दप्रयोगः । तस्मात् संस्कारशब्दा इत्येवं प्राप्तम् ॥

एवं प्राप्ते ब्रूमः । बर्हिरादिष्वसंस्कृतेष्वपि शब्दलाभान्न संस्कारशब्दाः । ननूक्तं सादृश्यादेकदेशे भविष्यन्ति । तन्न । प्रसिद्धं हि संस्कारशब्दत्वे, सादृश्यादिति शक्यते वक्तुम् । तच्चाप्रसिद्धम् । कथम् । बर्हिरादिशब्दैरुद्दिश्य संस्कारा विधीयन्ते तेन सत्सु शब्देषु संस्कारैर्भवितव्यम् । सति च संस्कारे शब्दलाभ इतीतरेतराश्रयं भवति । न चाविहिताः संस्कारा भवन्ति, यानालोच्य लोकः प्रयुञ्जीत । तस्मान्न लोकाः संस्कृतेषु बर्हिरादीन् प्रयुञ्जते । तत एकदेशेऽपि जातिनिमित्ता दृष्टा सर्वत्र जातिनिमित्ता भवितुमर्हन्ति । न चाऽलौकिकानां सतां वेदादेव पूर्वोत्तरपदसम्बन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम् । पूर्वोत्तरपदे अनर्थके मा भूतामित्येवं स परिकल्प्येत । अशक्यस्त्वनवगम्यमानः परिकल्पयितुम् । अर्थवती च ते पदे पूर्वोत्तरे लौकिकेनासंस्कृतप्रयोगेण भविष्यतः । तस्माज्जातिशब्दा एवञ्जातीयकाः । प्रयोजनं, बर्हिषा यूपावटमवस्तृणातीति संस्कृतैरेव स्तरितव्यम् । यदि पूर्वः पक्षः, विपरीतं सिद्धान्ते ॥ १० ॥

॥ बर्हिरादिशब्दानां जातिवाचित्वाधिकरणम् ॥ ७ ॥

**प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥**

प्रोक्षणीरासादयेति श्रूयते । तत्र प्रोक्षणीशब्दं प्रति सन्देहः । किं संस्कारनिमित्तः, उत जातिनिमित्तः, उत यौगिकः ? इति । तत्र संस्कारेषु सत्सु दर्शनात् संस्कारशब्दतायामवगम्यमानायामसंस्कृते शब्दलाभाज्जातिशब्दः, असंस्कृतास्वप्याऽप्सु प्रोक्षणीभिरुद्धृत्रिनाः

इम इति कस्मिंश्चिद्देशे भवन्ति वक्तार तेन जातिशब्द इति प्राप्ते यौगिक इत्युच्यते । कुत । अर्थसंयोगात् । प्रोक्षण्य इत्युपसर्गधातु-प्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते । सेचनसंयोगा-दुपसर्गधातुकरणप्रत्ययसहितोऽप्सु प्रवर्त्तते इति प्रसिद्धिरनुगृहीता भविष्यति । यदाऽन्यदपि सेचनं प्रोक्षणशब्देनोच्यते, तदा तत्संयो-गादेवाप्सु भविष्यतीति न समुदायार्थं कल्पयितुं शक्यते । तस्माद् यौगिकः । प्रयोजनं, घृतं प्रोक्षणं भवतीति । यदि संस्कारशब्द, प्रोक्षणीरासादयेति प्रैष । यदि जातिशब्द, घृतमासादयेति । यदि यौगिक, प्रोक्षणमिति ॥ ११ ॥ ॥ प्रोक्षण्यादिपदानां यौगिकत्वा-ऽधिकरणम् ॥ ८ ॥

## तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्येनेष्टका पचन्तीति संस्कृते दर्शनात् संस्कारशब्दो निर्मन्थ्य इति । असंस्कारेऽपि दृश्यते । निर्मन्थ्यमानय, ओदनं पक्ष्याम इति । निर्मन्थनयोगात् पूर्ववद् यौगिक इति संस्थितम् । प्रयोजनं, संस्कारनिमित्ते संस्कृतेन इष्टका पक्तव्या । जातिशब्दे यथोपपन्नेन, यौगिके अचिरनिर्मथितेन । यथा नावनीतेन भुङ्क्ते इत्यचिरनिर्दग्धेनेति गम्यते ॥ १२ ॥ ॥ निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम् ॥ ९ ॥

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

चातुर्मास्येषु प्रथमे पर्वणि वैश्वदेवे सन्देह । वैश्वदेवेन यजेतेति किं वैश्वदेवशब्दो गुणविधिः, उत कर्मनामधेयमिति । इति यदि सन्देहो, न सन्देहः । वैश्वदेवे विकल्प । गुणविधिर्वैश्वदेवशब्द । गम्यते हि गुणविधानम् । विश्वेदेवा विधीयन्ते आग्नेयादिषु यागेषु तत्राग्न्यादीनां विश्वैर्देवैर्विकल्पः । एवं प्रसिद्धिरर्थवती भविष्य-ति ॥ १३ ॥ ॥ पूर्वपक्षः ॥

## न वा प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरण द्रव्यस्य ॥ १४ ॥

नैतदेवम् । प्रत्यक्षश्रुतिविहिता अग्न्यादय । तेषां यागानां विश्वे-देवा वाक्येन, प्रकरणात्तेनैव, नान्येनेति गम्यते । न च इयं विषम-शिष्टो विकल्पो भवितुमर्हति । न हि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम् । तस्मात् कर्मनामधेयम् ॥ १४ ॥ ॥ सिद्धान्त ॥

**मिथश्चानर्थसम्बन्धः ॥ १५ ॥**

अथोच्येत, वैश्वदेव इत्यनेन शब्देन प्रत्यक्षमग्न्यादिगुणविशिष्टो यागगणो लक्ष्यते । वैश्वदेवी हि तत्राऽऽमिक्षा समवैति । यदि वैश्वदेवशब्देन यागगणो लक्ष्यते, न तर्हि विश्वेदेवा विधीयन्ते । कथं सकृदुच्चारितो वैश्वदेवशब्दो यागगणं लक्षयिष्यति, विश्वांश्च देवान् विधास्यतीति नास्य वैश्वदेवशब्दस्य विश्वैर्देवैर्मिथः संबन्धो घटते। तस्मात् कर्म्मनामधेयमेव, न गुणविधिरिति॥१५॥ ॥आ० नि०॥

**परार्थत्वाद् गुणानाम् ॥ १६ ॥**

परार्थाश्च गुणाः। ते न शक्नुवन्ति प्रधानमावर्त्तयितुम्। तेन सकृद्याग कर्त्तव्य.न गुणानुरोधेनावर्त्तितुमर्हति। सम्प्रतिपन्नदेवतत्वाच्च न विरोध.। तत्रैकस्यामप्रधानाहुतौ त्रिस्रदाहुतयो हूयन्ते इति त्रित्वसंख्यासम्पत्तिराहवनीयाहुतीनां नावकल्पते। तस्मात् कर्म्मनामधेयमिति सिद्धम् ॥१६॥ वैश्वदेवादिशब्दानां नामधेयताधिकरणम् ॥१०॥

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥**

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति श्रूयते । तत्र यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीत्येवमादयः कपालविकल्पा श्रूयन्ते । तेषु सन्देहः । किमष्टत्वादयो गुणविधयः, उतार्ऽथवादा इति । तत्र गुणविधय इत्येव ब्रूम. । कथम् । ये हि पूर्ववन्तो विदितपूर्वमर्थमभिवदन्ति ते अविधानार्थाः । तदेतदस्य वाक्यस्य समाम्नाये सामर्थ्यं, यदविहितपूर्वकाभिधानम् । किं तत् ? विधानसामर्थ्यम् । एवमविहितमर्थं विधास्यति । इतरथा अर्थवादा सन्तोऽनर्थकाः स्यु. । न च द्वादशकपालस्य शेषभावमुपगन्तुमर्हति । प्रत्यक्षा ह्यष्टानां कपालानां स्तुतिः, परोक्षा द्वादशानाम् । प्रत्यक्षाभावे च परोक्षा स्यात् । तस्माद् गुणविधय. ॥१७॥ ॥ पूर्व० ॥

**गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥**

नैतदस्ति गुणविधय इति । गुणस्य विधानार्था एते सन्त पुरोडाशस्य कपालेषु संख्यां विदध्यु । न शक्नुवन्ति यागप्रयोगस्य विधातुम् । द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन । तेन ते यागे न भविष्यन्ति । अपिचाष्टत्वादय पुरोडाशेन

एकवाक्यभूता प्रकरणं बाधित्वा न यागस्य भविष्यन्ति । यागासम्बन्धे च अनर्थका', पुरोडाशसम्बन्धे फलाभावात् । अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते। तस्मादर्थवादा इति ॥ १८ ॥ सि०॥

**तच्छेषो नोपपद्यते ॥ १९ ॥**

इति यदुक्तं, तत्परिहर्त्तव्यमित्याभासान्तं सूत्रम् ॥ १९ ॥ ॥ उत्तराभास ॥

**अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥**

यदा त्वष्टाकपालादिप्ररोचनार्था अनर्थका इत्यवगतं, तदा लक्षणया द्वादशकपालस्य स्तुतिर्वैश्वानरयागप्ररोचनार्था भविष्यति । सन्ति हि द्वादशसंख्यायामष्टत्वादयः संख्याविशेषा अविभक्ताः । अतो द्वादशकपालस्य स्तुत्यर्थत्वेनावयवस्तुतिरुपपद्यते। यथा शोभनमस्य चक्रस्य नेमितुम्बारं, शोभनमस्या सेनाया हस्त्यश्वरथपादातमिति । तस्मादुपपन्ना स्तुतिरिति ॥ २० ॥ ॥ उत्तरम् ॥

**कारणं स्यादिति चेत् ॥ २१ ॥**

इति चेद् भवान् पश्यति, अर्थवादा इति, कारणमष्टत्वादीनां ब्रह्मवर्चसादि कस्मान्न भवति ?। ब्रह्मवर्चसकामस्याष्टाकपालः । एवमुत्तरेषु यथाकामम् । किमेवं भविष्यति । पुरोडाशस्य गुणविधानेऽप्यानर्थक्यं न भविष्यति । न च लक्षणया द्वादशकपालस्य स्तुतिः कल्पिता भविष्यति तस्मात् कामेभ्यो विधयो भविष्यन्ति ॥ २१ ॥ आ०॥

**आनर्थक्यादकारणं कर्त्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ २२ ॥**

यदि कामाय विधयः, भिन्नानि वाक्यानि भवेयुः । एकं चेदं वाक्यं, वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इत्येवमुपक्रान्तम् । यद् द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीत्येवमन्तम् । तस्य मध्येऽष्टत्वादयः श्रूयमाणा यदि न संबध्येरंस्ततो वाक्यान्तराणि भवेयु । कर्तुर्हि कारणानि पूतत्वादीनि भवेयुः । स एष गुणार्थोऽत्र विधीयते वैश्वानरयागे पूत एव इत्येवमादि । तेन चैतेऽष्टत्वादय साक्षाद्धेतुत्वेन संबन्ध्यन्ते । यस्माद् गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति तेन पूत एव स', यस्मात्त्रिवृतैवाऽस्मिंस्तेजो दधाति तेन तेजस्वी । यस्माद् विराजैवास्मिन्नन्नाद्यं दधाति

तेनान्नाद' । यस्मात्त्रिष्टुभैवाऽस्मिन्निन्द्रियं दधाति, तेन इन्द्रियावी । यस्माज्जगत्यैवाऽस्मिन् पशून् दधाति तेन पशुमानिति । तत कामाश्च विधयोऽसम्भवन्तो यद्यर्थवादा अपि न भवेयु, आनर्थक्यमेवैषां स्यात् । तस्मात्कारणं ब्रह्मवर्चसत्वादयोऽष्टत्वादीनाम् । तस्मादष्टत्वादयोऽर्थवादा इति ॥ २२ ॥ आ० नि० ॥ ॥ वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम् ॥ ११ ॥

## तत्सिद्धिः ॥ २३ ॥

यजमानः प्रस्तर, यजमान एककपाल इत्यादि समाम्नायते । तत्र सन्देहः । किं, यजमान' प्रस्तर इत्येष गुणविधि, किमर्थवाद इति । तथा यजमान एककपाल इति ' किं तावत् प्राप्तम् । गुणविधिरिति । किमेवं भविष्यति ? एवम् । अपूर्वमर्थं विधास्यति ' इतरथाऽर्थवादोऽनर्थक. स्यात् । अर्थवत्त्वञ्च न्याय्यम् ' तस्माद् विधि' । नैतदेवम् ' यदि विधि स्यात्, प्रस्तरकार्ये यजमानो नियम्येत । यजमानकार्ये वा प्रस्तर । प्रस्तरे जुहूमासादयति, स्रचो वा स्रुव इति यजमाने जुहूरासाद्येत । स्रचो वा स्रुव इति । तथा सति न याजमानं शक्यते कर्तुम्, दक्षिणतो ब्रह्मयजमानावासाते कर्म्मणः क्रियमाणस्येति । न च प्रस्तरो याजमान शक्नोति कर्तुम् । तथा यदि यजमान एककपालकार्य्ये विनियुज्येत, सर्वहुत' क्रियेत । तत्र सर्वतन्त्रपरिलोपः स्यात् । न चैककपालो याजमानं शक्नोति कर्तुम् । तस्मान्न विधि । विध्यन्तरं चास्ति, प्रस्तरमुत्तरं बर्हिष सादयति, एककपालं सर्वहुतं करोतीति । तस्मादपि न विधि. । किं तर्हि । अर्थवाद । यजमानो ज्ञायत एव प्रस्तरः, एककपाल इति च ॥

कथं पुनरनयोः सामानाधिकरण्यं ज्ञायते ? । न हि प्रस्तर एककपालो वा यजमानः । न च यजमान एकस्मिन् कपाले संस्कृतः पुरोडाश, प्रथमो वा कुशमुष्टिर्लून । कथं परशब्दः परत्र वर्त्तते, किमर्थं वा ज्ञायमानस्य सङ्कीर्त्तनम् ? इति । उच्यते । ज्ञायमानः सङ्कीर्त्यते स्तोतुम् । प्रस्तर उत्तरो बर्हिष सादयितव्यो यजमानत्वात् । तथा यजमान एककपालः सर्वहुत कर्त्तव्यः. स्वर्ग आहवनीयस्तत्र प्रतिष्ठापितो भवति इति ॥

कथं परत्र वर्त्तते परशब्द ? इति । गुणवादस्तु, गुणादेष वाद. । कथमगुणवचनो गुणं ब्रूयात् । स्वार्थाभिधानेनेति ब्रूम । सर्व एवैते

गौणा शब्दा, न स्वार्थं हित्वा गुणेषु वर्त्तन्ते । प्रसिद्धहानिर्हि तथा स्यात्, अप्रसिद्धकल्पना च । न च सर्वे गुणसमुदायवचनाः । गुणहीनेऽपि तथा दर्शनात् । अप्रसह्यकार्य्यपि हि कदाचिद्रोगेणोपहतः सिंह्याः पुत्रः सिंह एव । समुदायवाची च नावयवे प्रवर्त्तितुमर्हति । सर्वसिंहव्यक्तिषु यत् सामान्यं तद्वचनः शब्द इति स्थितो न्याय प्रत्युद्ध्रियेत । न चासति सिंहे परिकल्पनया प्रवर्त्तेत । कल्पनाया अशक्यत्वात् । कथं नु स्वार्थाभिधानेन प्रत्ययव्यवस्था इति चेत् । अर्थसम्बन्धात् । सिंह इति निर्ज्ञाते प्रसह्यकारिता तत्र प्रायेणेति प्रसह्यकारीति गम्यते । अर्थप्रत्ययसामर्थ्यात् । यो हि मन्यते, प्रसह्यकारिणं प्रत्याययेयमिति, स यदि सिंहशब्दमुच्चारयति सिद्धत्यस्याभिप्रेतम् । सिंहार्थः प्रतीतः प्रसह्यकारीति सम्बन्धादितरमर्थं प्रत्याययति । एवं स्वार्थाभिधानेन तद् गुणसम्बन्ध प्रतीयते ॥

इह तु यजमान प्रस्तर, यजमान एककपाल इति कीदृशो गुणसम्बन्धः प्रतीयते ? तत्सिद्धिकर इति । सर्वो ह्यात्मनः कार्य्यसिद्धिं करोति । अन्योऽपि यस्तस्य कार्य्यसिद्धिं करोति, स तस्मिन्नुच्चरिते हृदयमागच्छति । यथा, राजा पत्तिगणक इति । पत्तिगणको राज्ञ' कार्यं साधयति । स राजशब्दे उच्चरिते प्रतीयते । एवमिहापि यजमानकार्यं प्रस्तरैककपालौ साधयत', तौ यजमाने प्रतीते प्रतीयेते । तस्मात्तौ यजमानशब्देन प्रत्याय्येते । कथम् ? स्तुतौ स्यातां बर्हिष उपरिसादनं सर्वहोमे चेति । तस्मादेवञ्जातीयका अर्थवादा न विधय, इति ॥ २३ ॥ ॥ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ॥ १२ ॥

## जातिः ॥ २४ ॥

आग्नेयो वै ब्राह्मण', ऐन्द्रो राजन्य , वैश्यो वैश्वदेव इत्येवमादय श्रूयन्ते । तत्र किं गुणविधय', अर्थवादा ? इति सन्देह । गुणविधय इति ब्रूमः । एवमपूर्वमर्थं विधास्यन्ति, इतरथा अर्थवादाः सन्तोऽनर्थका स्युः । न विधि. विध्यन्तरस्य भावात् । तस्मात् संवादः । तस्य संकीर्त्तनं विधिस्तुत्यर्थम् । अनाग्नेयादिष्वाग्नेयादिशब्दाः केन प्रकारेण ? गुणवादेन । को गुणवाद ? अग्निसम्बन्ध' । कथम् । एकजातीयकत्वात् । किमेकजातीयकत्वम ? प्रजापतिरकामयत, प्रजा. सृजेयमिति । स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवता

अन्वसृज्यत, गायत्रीच्छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम् । तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त । उरसो बाहुभ्यां पञ्चदश निरमिमीत, तमिन्द्रो देवताऽन्वसृज्यत, त्रिष्टुप् छन्दः, बृहत् साम, राजन्यो मनुष्याणाम् अविः पशूनाम् । तस्मात्ते वीर्य्यवन्तः, वीर्याद्धि असृज्यन्त । ऊरुभ्यां मध्यतः सप्तदशं निरमिमीत, तं विश्वेदेवा देवता अन्वसृज्यन्त, जगतीच्छन्दः, वैरूपं साम, वैश्यो मनुष्याणाम्, गावः पशूनाम् । एवमुक्ते सत्येकस्मिन्नेवञ्जातीयके विज्ञाते अन्योऽपि तज्जातीयको हृदयमागच्छति । तस्मादर्थवादशब्दाः ॥ २४ ॥ आग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम् ॥ १३ ॥

## सारूप्यात् ॥ २५ ॥

यजमानो यूपः, आदित्यो यूप इत्यादि श्रूयते । तत्र गुणविधिः, अर्थवादः ? इति सन्देहः । अर्थवत्त्वाद् गुणविधिः । अशक्यत्वाद् यूपकार्य्यसाधनं यजमानस्य, यजमानकार्यसाधनं वा यूपस्य । विध्यन्तरभावाच्च न विधिः । विधिस्तुत्यर्थः संवादः । गुणवादात् सामानाधिकरण्यम् । को गुणः ? सारूप्यम् । किं सारूप्यम् ? ऊर्ध्वता, तेजस्विता च । तस्मादेवञ्जातीयका अर्थवादाः ॥ २५ ॥ ॥ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ॥ १४ ॥

## प्रशंसा ॥ २६ ॥

अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोअश्वाः, अयज्ञो वा एष योऽसामा, असत्रं वा एतद् यदच्छन्दोममिति श्रूयते । तत्र विध्यर्थवादसन्देहे अर्थवत्त्वाद्विधय इति प्राप्ते । अभिधीयते । यदि विधयो भवेयुः, गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम् । अन्येषां पशूनां, यज्ञानां, सत्राणां चोत्पत्तिरनर्थिका स्यात् । विध्यन्तरञ्च नावकल्पेत । अतः स्तुत्यर्थः संवादः । गोऽश्वान् प्रशंसितुमन्येषां पशूनां निन्दा । सामवतः प्रशंसितुम् असाम्नां निन्दा । छन्दोमवन्ति प्रशंसितुमच्छन्दोमकानि निन्द्यन्ते । यथा, यदघृतमभोजनं तत् । यन्मलिनमवासस्तदिति ॥ २६ ॥ ॥ अपश्वादिशब्दानां गवादिप्रशंसार्थताधिकरणम् ॥ १५ ॥

## भूमा ॥ २७ ॥

सृष्टीरुपदधाति इति श्रूयते । तत्र गुणविधिः, अर्थवादः ? इति सन्देहे, अपूर्वत्वाद् विधिरिति प्राप्ते । उच्यते । यदि विधिः, सृष्टि-

मन्त्रका उपदधातीष्टका इत्यर्थः । तत्र न इष्टकानां विशेषः कश्चिद्‌दा-श्रीयते, एवंरूपाः सृष्टिमन्त्रका, नैवंरूपा इति । तत्र सर्वासां सृष्टि-लिङ्गा मन्त्रा प्राप्नुयुः । अन्येषाम् असंयुक्तानां मन्त्राणामानर्थक्यं स्यात् । तस्मादनुवादो मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्रा-णाम् । सृष्टीनां सङ्कीर्तनं सर्जनार्थवादार्थम् । अपि च विधित्वे ल-क्षणा, एकया स्तुवते इत्यत्र या असृष्टयस्ता लक्षयेत् । नन्वनुवादे-ऽपि लक्षणा । नानुवादपक्षे लक्षणायां दोष । कथं त्वसृष्टिषु च सृष्टि-शब्द इति । भूम्ना । बहवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पशो विलिङ्गा, इति ॥ २७॥ बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥ भूमाधिकरणम्॥१६॥

## लिङ्गसमवायात् ॥ २८ ॥

प्राणभृत उपदधाति, आज्यानीरुपदधातीति । विधित्वे प्राणभृ-न्मन्त्रकासूपधीयमानासु विलिङ्गानां मन्त्राणामानर्थक्यम् । तस्मा-दनुवाद. । लिङ्गसमवायात् परशब्दः परत्र वर्त्तते । यथा, छत्रिणो गच्छन्तीत्येकेन छत्रिणा सर्वे लक्ष्यन्ते । न चायं प्राणभृच्छब्दः सृष्टि-शब्दश्च जहत्स्वार्थं मन्त्रगणं लक्षयेत् । यद्गणे च सृष्टिप्राणभृच्छब्दौ समवेतौ, तावपि परिगृह्येते । यथा, छत्रिशब्देन स्वार्थलक्षणार्थेन सोऽपि छत्री गृह्यते इति ॥ २८ ॥ प्राणभृदादिशब्दानां स्तुत्यर्थता-ऽधिकरणम् ॥ १७ ॥

## सन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥

अक्ता. शर्करा उपदधाति, तेजो वै घृतमिति श्रूयते । तत्र सन्देह किं घृततैलवसानामन्यतमेन द्रव्येणाञ्जनीया शर्करा., उत घृतेनै-वेति । कथं सन्देह । अञ्जनसामान्येन वाक्यस्योपक्रमः ' घृतेन वि-शेषेण निगमनं, यथोपक्रमं निगमयितव्यमेकस्मिन् वाक्ये । तत्र यद्वा सामान्यमादौ विशेषोपलक्षणार्थं ? विवक्ष्यते । यद्वा निगमने विशेष सामान्यलक्षणार्थः । तदारम्भनिगमनयोः किं समञ्जसमिति संशय । एवं सन्दिग्धेषु उपक्रमे सामान्यवचने विरोधाभावान्न विशेष. परि-कल्प्य. । निगमने तूपजात सामान्यप्रत्यय इति विरोधाल्लक्षणार्थं घृतवचनम् । यथा सृष्टिष्वसृष्टिषु च सृष्टिशब्द, एवं घृतमघृतं च घृतमित्युच्यते । सन्दिग्धेष्वेवं प्राप्ते, ब्रूम —

सामान्यवचनेन विशेषापेक्षिणोपक्रमो वाक्यस्य, विशेषे निगमनवशेन । कुत. । न हि सामान्यं विहितम् । येन विरोधो निगमनस्य । कथम-

ऽविहितम्। सन्दिग्धेषु विधानशब्दाभावात्। न हि विधानशब्दोऽस्ति। अक्ताः शर्करा उपदधातीति वर्त्तमानकालनिर्देशात्। नाऽपि सामान्यस्य साक्षात् स्तुतिः, प्रत्यक्षन्तु घृतस्य स्तवनम्। श्रुत्या घृतस्य स्तुतिः, लक्षणया सामान्यस्य। श्रुतिश्च लक्षणाया ज्यायसी। तस्माद् घृतविधानम्। एवं वासः परिधत्ते, एतद्वै सर्वदेवत्यं वासो यत् क्षौममिति। तथा इमां स्पृष्ट्वोद्गायेत्, इमां हि औदुम्बरीं विश्वा-भूतान्युपजीवन्तीति ॥ २९ ॥ वाक्यशेषेण संदिग्धार्थनिरूपणाधिकरणम् ॥ १८ ॥

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यतीति श्रूयते। तत्र सन्देहः। किं स्रुवेणावदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च। तथा स्वधितिना, हस्तेन च, उत सर्वेषामर्थतो व्यवस्था। द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति। अविशेषाऽभिधानादव्यवस्था इति। एवं प्राप्ते ब्रूमः। अर्थाद्वा कल्पना, सामर्थ्यात् कल्पना इति। स्रुवेणावद्येद् यथा शक्नुयात्। तथा यस्य शक्नुयात् तस्य चेति। आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी। एवञ्चेद् यथाशक्ति व्यवस्था भवितुमर्हति। तथा, अञ्जलिना सक्तून् प्रदाव्ये जुहोतीति। द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशोऽर्थात् कर्त्तव्यः। तथा हि शक्यते होमो निर्वर्त्तयितुम्। तद् यथा, कटे भुङ्क्ते इत्यर्थात् कल्प्यते— कटे समासीनः कांस्यपात्र्यामोदनं निधाय भुङ्क्ते इति ॥३०॥ सामर्थ्याऽनुसारेणाव्यवस्थितानां व्यवस्थाऽधिकरणम् ॥ १९ ॥ इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाऽध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥ समाप्तोऽयं प्रथमोऽध्यायः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः ॥ २ ॥

## भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्। तत्र विध्यर्थवादमन्त्रस्मृतयस्तत्त्वतो निर्णीताः। गुणविधिर्नामधेयञ्च परीक्षितम्। सन्दिग्धाना-

मर्थानां वाक्यशेषादर्थाध्यवसानमुक्तम् । तन्न प्रस्मर्त्तव्यम् । अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि च इति एष एवाऽर्थो वर्णनीयो नान्यः । एष एव चाध्यायसम्बन्धः । तदिह षड्विधिः कर्म्मभेदो वक्ष्यते– शब्दान्तरम्, अभ्यासः, संख्या, गुण, प्रक्रिया, नामधेयमिति वक्ष्यमाणमनुसङ्कीर्त्यते । प्रदर्शितमुच्यमानं सुख ग्राहयिष्यते इति श्रोतुश्च बुद्धि समाधीयते। तदेतन्नानाकर्म्मलक्षणमित्यध्यायमाचक्षते, एतत्तात्पर्येणातोऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं चेति ॥

तत्र प्रथमं तावदिदञ्चिन्त्यते । प्रथमऽध्याये इदमुक्तं– चोदनालक्षणोऽर्थो धर्म्म इति । चोदना च क्रियाया अभिधायकं वाक्यं च पदानामर्थाः । तत्र किं पदेन पदेन धर्म्म उत सर्वैरक एवेति । किं तावत् प्राप्तम् । प्रतिपदं धर्म्म इत्येवं प्राप्ते, उच्यते । यदा एकस्मादऽपूर्वं, तदाऽन्यत् तदर्थं भविष्यति । एवमल्पीयसी अदृष्टानुमानप्रसङ्गकल्पना भविष्यति । तस्मादेकमपूर्वम् ॥

यदा एकं, तदा सन्देहः । किं भावशब्देभ्य, उत द्रव्यगुणशब्देभ्य इति । क. पुनर्भाव, के ते पुनर्भावशब्दा ? इति । यजतिददातिजुहोतीत्येवमादय. । ननु यागदानहोमशब्दा एते, न भावशब्दा । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । यज्याद्यर्थश्चातोऽवगम्यते, भावयेदिति च । तथा यजेत यथा किञ्चिद् भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः अतस्ते न भावशब्दा इति । किं तावत् प्राप्तम् ? अविशेषेणेति । तत उच्यते । भावार्था कर्म्मशब्दास्तेभ्यः क्रिया प्रतीयेत, यजेतेत्येवमादिभ्य । कुतः । भावार्थत्वादेव । य आहु –किमपि भावयेदिति, ते स्वर्गकामपदसम्बन्धात् स्वर्गं भावयेदिति ब्रूयु । तस्मात् तेभ्यः क्रिया प्रतीयेत, फलस्य क्रिया करणं निष्पत्तिरिति । ते च यागदानहोमसम्बद्धा स्वर्गस्योत्पत्तिं वदन्ति । कुत. ? एष ह्यर्थो विधीयते । यथा, यागादिना, स्वर्गकाम केन भावयेत् स्वर्गम् ? यागादिनेइति । यस्य च शब्दस्यार्थेन फलं साध्यते, तेनाऽपूर्वं कृत्वा, नान्यथेति ततोऽपूर्वं गम्यते । अतो यस्तस्य वाचक शब्दस्ततोऽपूर्वं प्रतीयते इति । तेन भावशब्दा अपूर्वस्य चोदका इति ब्रूम । न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति । भावार्थैः किमपि भावयितव्यं, स्वर्गकामस्य च केनापि भाव्यतेति । तयोर्नष्टाश्वदग्धरथ-

वत् सम्प्रयोगः, यजेत इत्येवमादयः साकाङ्क्षाः । यजेत किं केन कथमिति, स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षा । नैव द्रव्यगुणशब्दाः । तस्माद् भावार्थाः कर्म्मशब्दा अपूर्वं चोदयन्तीति । अथ कस्मादुभयं सूत्रितं- भावार्थाः कर्म्मशब्दा इति । उच्यते । भवन्ति केचित् कर्म्मशब्दाः, न भावार्थाः । यथा श्येनैकात्रिकादय । केचिद् भावार्थाः, न कर्म्मशब्दाः । यथा भवनं भावो भूतिरिति । किं पुनरिहोदाहरणम । श्येनेनाभिचरन् यजेत, चित्रया यजेत पशुकाम इति । किं श्येनेनाभिचरन्नुत यजेताभिचरन्निति । तथा चित्रया पशुकामः, उत पशुकामो यजेतेति । स्थिते एतस्मिन्नधिकरणे गुणविधि , नामधेयमिति विचारो भविष्यति । तथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति दर्शः काल , पूर्णमास इति च किं ताभ्यां स्वर्गकाम', उत स्वर्गकामो यजेतेति । दर्शपूर्णमासाभ्यामिति च, श्येनेनेति च, चित्रयेति च । नैते भाववचनाः । न चैषामार्थिना कश्चित् सम्बन्धोऽस्ति, विभक्तिकत्वात् । तस्मान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति ॥ १ ॥

## सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥

एवं चेद् भवान् पश्यति, अभावशब्दत्वान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति, सर्वेषां भावोऽर्थ । स्वर्गकामो दर्शपूर्णमासाभ्यामित्येतयोः सम्बन्धं यजेतेति वक्ष्यति, श्येनेन अभिचरन्नित्येतयोश्च । तथा, चित्रया पशुकाम इति । तस्मादेतेऽपि साकाङ्क्षत्वाद् भाववचनाः । सर्वेषु भाववचनेषु नास्ति विनिगमनायां हेतुः, कर्म्मशब्दा एवापूर्वस्य विधायका, न द्रव्यगुणशब्दा इति ॥ २ ॥ आ० ॥

## येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥

येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेवोत्पन्नमात्रं विनश्यतीत्यर्थ । तानि नामानि । ते द्रव्यगुणशब्दाः । ईदृशो द्रव्यगुणशब्दानामर्थः । ते द्रव्यगुणशब्दा इति वक्तव्ये तानि नामानीति सूत्रितम् । अतो नामानीत्येषां पर्य्यायशब्द' । कथं गम्यते, यत एषां विभक्त्यां नामिक्य उच्यन्ते । कतमास्ताः । वृक्षः वृक्षौ वृक्षा , शुक्लः शुक्लौ

शुक्ला इत्येवमादयः । तस्मात् सम्यक् सूत्रितम् । यत एषां न क्षणिकोऽर्थस्ततस्तेभ्य पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यते इति । नैषामुत्पत्तिः कर्त्तव्या । भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वादित्यर्थः ॥ ३ ॥

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य ॥ ४ ॥**

येषां तु शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते । प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः, तान्याख्यातानीति भावशब्दान् पर्य्यायशब्देनोपदिशति । कथं पर्य्यायशब्दता भावशब्दानाम् । यत एषां विभक्तय आख्यातिक्य इत्युच्यन्ते । कतमास्ताः ? पचति पचतः पचन्ति इत्येवमादयः । तस्मात्तेभ्योऽपूर्वं प्रतीयेत । भव्यार्थास्ते भूतार्थैः समुच्चरिताः । भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवत उत्पत्तिरर्थवती । सा च भूतेन क्रियते इति दृष्टोऽर्थः । भव्यस्य पुनर्भूतार्थतायां न किञ्चिद् दृश्यते, कल्प्यते चादृष्टम् । तस्मान्न यागो द्रव्यार्थः ॥

किञ्च, आश्रितत्वात् प्रयोगस्य ॥ एतेषां प्रयोगः पुरुषेणाश्रितो भवति, पुरुषसम्बद्धा भावना उच्यते । पुरुषं हि वदति भावयेदिति । तेन स्वर्गकामो यजेतेति पुरुषोऽपि प्रतीयते, यागोऽपि, सम्बन्धोऽपि । स्वर्गकामो द्रव्येणेति द्रव्यं प्रतीयते पुरुषश्च, न तु सम्बन्धः । नन्वेतदुक्तं भवति । अर्थिनश्च द्रव्यस्य च सम्बन्धं यजेतेति वक्ष्यति, द्रव्येण भावयेदिति । अतो द्रव्येण अर्थस्य भावना गम्येत, आकाङ्क्षा चेति । सत्यं गम्यते । द्रव्येण भावयेदिति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या । यदा तु, यागेन भावयेदिति यागसम्बन्धो विधीयते, न तदा, द्रव्येण भावयेदिति द्रव्यसम्बन्धः । न च द्रव्यसम्बन्धे विधीयमाने यजेतेत्यनेन सम्बन्धः । अनूद्यमाने तु सम्भवति । न च यौगपद्येन विध्यनुवादौ सम्भवतः । तस्माच्छ्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिना न द्रव्यसम्बन्धः । तत्र द्रव्यमऽसति स्वर्गकामसम्बन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् । एष विनिगमनायां हेतुर्येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दा इति । यदा यागेन कुर्य्यादिति यागवचनमेव भवति । दर्शपूर्णमासा-

भ्यामिति लक्षणया, दर्शे च पूर्णमासे च यागो विहित इति ॥ ४ ॥ ॥ आशङ्कानिरास ॥ अपूर्वस्याऽऽख्यातपदप्रतिपाद्यताऽभिकरणम् ॥ १ ॥

कथं पुनरिदमवगम्यते, अस्ति तदपूर्वमिति । उच्यते ।

## चोदना पुनरारम्भः ॥ ५ ॥

चोदनेत्यपूर्वं ब्रूम । अपूर्वं पुनरस्ति, यत आरम्भः शिष्यते, स्वर्गकामो यजेतेति । इतरथा हि विधानमनर्थकं स्यात् । भङ्गित्वाद् यागस्य । यद्यन्यदनुत्पाद्यं यागो विनश्येत्, फलमसति निमित्ते न स्यात् । तस्मादुत्पादयतीति । यदि पुन. फलवचनसामर्थ्यात्तदेव न विनश्यतीति कल्प्यते । नैवं शक्यम् । न हि कर्म्मणोऽन्यद् रूपमुपलभामहे । यदाश्रयं देशान्तरं प्रापयति, तत् कर्मेत्युच्यते । न तदात्मनि समवेतम् । सर्वगतत्वादात्मन' । सर्वत्र कार्य्योपलम्भः सर्वत्र भावे लिङ्गम् । न तु तदेव देशान्तरादागमनस्य । न ह्यसति आगमने किञ्चिद्विरुद्धं दृश्यते । यत्र समवेतमासीत्, तद्विनष्टं द्रव्यम् । तस्य विनाशात्तदपि विनष्टमित्यवगम्यते । आश्रयोऽप्यविनष्ट इति चेन्न । भस्मोपलम्भनात् । सत्यपि भस्मन्यस्तीतिचेन्न । विद्यमानोपलम्भनेऽप्यदर्शनात् । फलक्रिया लिङ्गमिति चेत् । एवं सत्यदर्शने समाधिर्वक्तव्य. । सौक्ष्म्यादीनामन्यतमद्भविष्यतीति यदि चिन्त्यते, कल्पितमेवं सति किञ्चिद् भवतीति ।

तत्रापूर्वं वा कल्प्येत, तद्वा? इति । अविशेषकल्पनायामस्ति हेतुः, न विशिष्टकल्पनायाम् । अनाश्रितं कर्म्म भविष्यतीति चेत् । तदपि तादृशमेव । स्वभावान्तरकल्पनेन देशान्तरं न प्रापयिष्यतीति तादृशमेव । तस्माद् भङ्गी यजि, तस्य भङ्गित्वादपूर्वमस्तीति । किं चिन्तायाः प्रयोजनम् । यदि द्रव्यगुणशब्दा अप्यपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यः' यथा तर्हि पूर्वं पक्षो, यथा तर्हि सिद्धान्त' । द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य इति ॥ ५ ॥ अपूर्वस्यास्तिताधिकरणम् ॥ २ ॥

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

अवगतमेतद् भावशब्दा कर्म्मणो वाचका इति । बहुप्रकाराश्च भावशब्दा- । यजति, जुहोति, ददातीत्येवम्प्रकारा । दोग्धि, पिनष्टि, विलापयतीत्येवमादयश्च । तेषु सन्देहः । किं सर्वे प्रधानकर्म्मणो

विधायका, उत केचित् संस्कारकर्म्मण इति । भावार्थत्वाविशेषात् सर्वे प्रधानकर्म्मणो वाचका इति प्राप्तम् । ततो ब्रूमः । तानि द्वैधं भवितुमर्हन्तीति द्विप्रकाराणि, कानिचित् प्रधानकर्म्मणो वाचकानि, कानिचित् संस्कारकर्म्मण । एवमपि सर्वाण्यर्थवन्ति अर्थवत्त्वे सति सर्वेभ्यो न शक्यमपूर्वं कल्पयितुम् । अतो न सर्वाणि प्रधानकर्म्मणो वाचकानि ॥ ६ ॥

## यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

एवं सति अल्पीयसी अदृष्टकल्पना न्याय्या, न तु विनिगमनायां हेतुरवगच्छामः । कुतोऽपूर्वं, कुतो नेति । तदुच्यते । यैर्भावकर्मभिर्न द्रव्यं संस्कर्तुमिष्यते, उत्पादयितुं वा, तानि प्रधानभूतानि प्रधानकर्म्मणो वाचकानि । द्रव्यस्य गुणभूतत्वात् । द्रव्यं हि गुणभूतं, कर्म्मनिर्वृत्तेरीप्सिततमत्वात् ॥ ७ ॥ प्रधानकर्मलक्षणम् ॥

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत कर्म्म । कुतः । तस्य द्रव्यप्रधानत्वात् । प्रत्यक्षं यजेतत्येवमादिभिर्द्रव्यं न चिकीर्ष्यते । तस्मात्तानि प्रधानकर्म्मणो वाचकानि द्रव्यस्य गुणभूतत्वात् । पिनष्टीत्येवमादिभिर्द्रव्यं संस्क्रियते । तस्मात्तानि गुणकर्मवचनानि । एष एव विनिगमनायां हेतुः । प्रयोजनन्तु पूर्वस्मिन् पक्षे प्रैयङ्गवेऽपि चरौ व्रीहय उत्पाद्या अवघातार्थत्वेन. सिद्धान्ते नोत्पाद्या ॥ ८ ॥ गुणकर्मलक्षणम् ॥ ॥ कर्मणां गुणप्रधानभावविभागाऽधिकरणम् ॥ ३ ॥

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥

स्रुचः संमार्ष्टि, अग्निं समार्ष्टि, परिधिं समार्ष्टि, पुरोडाशं पर्य्यग्निकरोतीति श्रूयते । तत्र सन्देह. । किं पर्य्यग्निकरणं, सम्मार्जनञ्च प्रधानकर्म्म, उत गुणकर्म्मेति । किं तावत् प्राप्तम् । तदुच्यते । कर्म्ममात्रम् एवं जातीयकमपर्य्याप्तं यत् प्रयोजनस्य दृष्टस्य, तद्धर्म्ममात्रमिति ब्रूम । तत्र प्रधानकर्म्मत्वं स्यात् । कस्मात् । अनिर्वृत्तेरुपकारस्य । न ह्येवञ्जातीयकं द्रव्यस्योपकारकम् । द्रव्यं त्वेवञ्जातीयकमभिनिर्वर्त्तयद् गुणभूतम् । तस्य गुणभूतत्वादिदं प्रधानभूतम् ॥९॥ पूर्व० ॥

## तुल्यश्रुतित्वाद्वा इतरैः सधर्मः स्यात् ॥ १० ॥

वा-शब्दः पक्षं व्यावर्त्तयति । इतरैर्गुणकर्म्मभिः सधर्म्मः स्यादेवञ्जातीयकः । यथा व्रीहीनवहन्ति, तथा । कुत. । तुल्यश्रुतित्वात् तुल्या हि द्वितीयाश्रुतिरेषां द्रव्येषु । यथा व्रीहीनवहन्तीति । एवम्, अग्निं संमार्ष्टि, पुरोडाशं पर्य्यग्निकरोतीति । किं गुणकर्म्मणि द्रव्ये द्वितीया दृष्टेति । यतो द्वितीयादर्शनादिहापि सामान्यतो दृष्टेन गुणकर्म्मता । नेति ब्रूम । द्वितीया विभक्ति कर्त्तुरीप्सिततमे स्मर्यते । सा चेह द्वितीया विभक्तिः । तत एव तदीप्सिततममिति गम्यते । तच्चेदीप्सिततमं, कर्म्म गुणभूतम् यद्यपि प्रत्यक्षादिभिर्गुणभावो न गम्यते, प्रमाणान्तरेण शब्देन गम्यते । तस्माद् गुणभूतमेवञ्जातीयकमिति ॥ १० ॥ ॥ सिद्धान्त. ॥

## द्रव्योपदेश इति चेत् ॥ ११ ॥

इति चेत् पश्यसि, द्वितीयादर्शनात् प्रधानभूतमत्र द्रव्यमिति । नैतदेवम् गुणभूतेऽपि द्वितीया भवति । तथाहि दृश्यते । सक्तूञ्जुहोति, मारुतं जुहोति, एककपालं जुहोतीति ॥ ११ ॥ ॥ आशङ्का ॥

## न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

न गुणभूतेऽपि द्वितीया । एवं ह्यभियुक्ता उपदिशन्ति– कर्म्मणि द्वितीया, कर्त्तुरीप्सिततमं कर्म्मेति । न च लोके गुणभूते क्वचिद् द्वितीयां पश्यामः । यदपि च तण्डुलानोदनं पचेति, ओदनार्थं तण्डुलान् संस्कुर्विति । ईप्सिता एव तण्डुला । बल्वजान् शिखण्डकान् कुर्विति । बल्वजा एव तेनाकारेण सम्बद्धा ईप्सिता इति तत्राभिप्रायः। लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुर्न वैदिक । यत्तु लौकिके जुहोतीति प्रयोगे द्वितीया, शक्यते तत्र वक्तुमीप्सिततमे एव स प्रयोग इति । तण्डुलानद्य जुहुधि, तण्डुलानद्य होमेन संबन्धयेति लोके भवति हि बहुप्रकारा विवक्षा । अन्यायश्चाऽनेकार्थत्वम् । तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत । वेदे तु कथं द्वितीयानिर्दिष्टे गुणभाव इति । द्वितीयानिर्देशात् प्राधान्यमेवावगच्छाम । एवमवगते प्राधान्ये बलीयसा हेतुना नास्ति प्राधान्यमित्यवगम्यते । कुत. । न होमस्य केनचित् प्रकारेण सक्त्वर्थताऽवकल्प्यते । कुत. । सक्तूनां निष्प्रयोजनत्वात् । न सक्तूनामन्यत् प्रयो-

जनं दृश्यते श्रूयते वा। यदि वा होमस्तदर्थो होमोऽपि निष्प्रयोजनः। अथाऽऽरादुपकारको होमस्ततः प्रयोजनवान्। ज्योतिष्टोमप्रकरणे पाठाद् गम्यते प्रयोजनवत्ता, नाप्रयोजन इति शक्यते वक्तुम्। प्रयोगवचनेन हि स आकाङ्क्षते॥ ननु सक्तूनामपि प्रकरणपाठात् प्रयोजनवत्त्वं भविष्यति। को वा ब्रूते- नेति। प्रयोजनवत्त्वैव। प्रयोजनवत्त्वन्तु होममभिनिर्वर्त्तयतां नान्येन प्रकारेण। ननु तेऽपि प्रयोगवचनेनाकाङ्क्ष्यन्ते। तदुच्यते। न द्रव्यं तेनाकाङ्क्ष्यते। इतिकर्त्तव्यतां हि स आकाङ्क्षति। होमश्चेतिकर्त्तव्यता, न द्रव्यम्। ननु होमे कृते सक्तुभ्योऽदृष्टं निष्पत्स्यते। नास्त्यत्र प्रमाणम्। ननु द्वितीयाविभक्तिः प्रमाणम्। न हि द्वितीया विभक्तिर्होमस्य सक्त्वर्थतां ज्ञापयति। न सक्तव प्रयोजनवन्त इति भवेद्धोमः सक्त्वर्थः। होमसम्बद्धा सक्तवः स्युरिति। भवन्ति होमे कृते सक्तवो होमसम्बद्धा। न होमस्य सक्त्वर्थता निष्प्रयोजनेषु सक्तुषु घटते। सक्त्वर्थतावचनन्तु न पुरुषस्योपकारकं न क्रतोः। तदनर्थकमेव स्यात्। यतो न तद्वचनाच्छक्यमन्यतरत् कल्पयितुम्। स एष द्वितीयान्त सक्तूनां होमस्य च सम्बन्धं करोति। सम्बन्धे च सति द्रव्याणां कर्म्मसंयोगे गुणत्वेनाभिसम्बन्ध इति भूतत्वाद्, गुणभावे च तृतीया। तेनोच्यते तृतीयायाः स्थाने द्वितीयेति। तेन तदर्थत्वाद्धोमार्थत्वात् सक्तूनां न प्राधान्यं द्वितीयासंयोगेऽपि। एवं सत्यर्थवद्वचनम्। न चार्थवत्त्वे सति आनर्थक्यमित्युच्यते। तस्य च पुरोडाशादेर्यागादिषु शेषभावः, तेन प्रयोजनवन्त। तत्र संस्कारो नानर्थकः। न स दृष्टोपकारायेति चेत्। अदृष्टार्थो भविष्यति। अदृष्टोऽपि संस्कारोऽस्तीति अवगम्यते लोके, यथा ग्रामान्तरादागतानां पुरुषाणां पर्य्यग्निकरणेनादृष्ट उपकारः क्रियते इत्युच्यते। लोके च नानुपपत्तिः॥

प्रयोजनं च वरुणप्रघासेषु श्रूयते। शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वेति प्रकृतौ नानावृक्षस्रुक्सम्मार्गसाध्यमपूर्वमिति। नानावृक्षस्रुच उत्पादयितव्याः सम्मार्गार्थत्वेन यथा पूर्वपक्षः। यथा तर्हि सिद्धान्त, शमीमय्य एव हि हिरण्मय्यो वा सम्मार्ष्टव्या। तथा यत्र बाणवन्तः परिधयस्तत्रापि पालाशा उत्पादयितव्याः पूर्वपक्षे सिद्धान्ते बाणवन्त एव सम्मार्ष्टव्याः। अवभृथे च पूर्वपक्षे उत्पादयितव्योऽग्निः सम्मार्गाय, सिद्धान्ते चाप. सम्मार्जनीया।

तथा षट्त्रिंशत्संवत्सरेतरसमया पुरोडाशाः सवनीया इति श्रूयते। तत्रापि पिष्टमय पुरोडाश उत्पादयितव्य पर्य्यग्निकरणार्थत्वेन पूर्वपक्षे। सिद्धान्ते मांसमया एव पर्य्यग्निकर्त्तव्या इति ॥ १२ ॥ ॥ आशङ्कानिरासः ॥ सम्मार्जनादीनामप्रधानताधिकरणम् ॥ ४ ॥

**स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवता-ऽभिधानत्वात् ॥ १३ ॥**

प्रउगं शसन्ति, निष्केवल्यं शंसति, आज्यैः स्तुवते, पृष्ठै स्तुवते इति गुणवचनं स्तवनं शंसनञ्च। यथा इन्द्रस्य तु वीर्य्याणि प्रवोच-मिति। यदेतद् गुणवचनं श्रूयते, किमेतद् गुणभूतं देवतां प्रति, उत प्रधानमिति। तत्रोच्यते। स्तुतशस्त्रे संस्कारकर्म्मणी इति। कुतः। देवताभिधानत्वात्। गुणवचने निर्वर्त्यमाने गुणिनो देवता संकीर्त्यन्ते, नान्यथा तद्गुणवचनं भवति। तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशन च प्रत्यक्ष उपकारो यागसिद्धिः। तस्मात् सँस्कारकर्म्मणी याज्यावत्। यथा याज्यामन्वाह, पुरोऽनुवाक्यामन्वाहेति स्तुतिवचनं देवताप्रकाशनेनार्थवत् तद्वदेतदपीति ॥१३ ॥ पूर्व० ॥

**अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुण-भूतत्वात् ॥ १४ ॥**

यदि संस्कारकर्म्मणी एव स्तोत्रशस्त्रे, अर्थेनापकृष्येत देवता-नाम्नश्चोदनार्थस्य गुणभूतत्वाद् देवनार्थस्य गुणभूतो मन्त्र इति तत्प्रधानभावे यत्र प्रधानं तत्र नीयेत। तत्र क्रमसन्निधी उपरुध्येयाताम्। तस्मादेष दुष्ट पक्ष इति पर्य्युदसितव्यः। कतम. पुनरसौ मन्त्र, अभि त्वा शूरेत्यैन्द्र' प्रगाथो माहेन्द्रस्य ग्रहयजे सन्निधावाम्नातो, यत्रेन्द्रस्तत्रापकृष्येत ॥ १४ ॥ ॥ सिद्धान्तः ॥

**वशावद्वा गुणार्थे स्यात् ॥ १५ ॥**

न पर्युदसिष्याम इमं पक्षं, संस्कारकर्म्मणी एव स्तोत्रशस्त्रे, देवताभिधानत्वादेव। यत्तूक्तं, प्रगाथस्योत्कर्ष इति तन्न। इन्द्रशब्देन महेन्द्रोऽभिधायिष्यते, स एवैन्द्रो महत्त्वेन गुणेन महेन्द्र इत्युच्यते। प्रत्यक्षं हीन्द्रशब्द देवतावचनमुपलभामहे, महत्त्ववचनं च महच्छब्दम्। यथा, राजा महाराज, ब्राह्मणो महाब्राह्मण इति ॥ वशावत् ॥ यथा, सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेतेत्यजा-

वशाशब्देन चोदिते कर्म्मणि छागशब्देन निगमा भवन्ति तद्वत् स-गुणे चोदिते निर्गुणेनाभिधानं भविष्यति। तेन न भविष्यत्युत्कर्ष इति ॥ १५ ॥ ॥ आशङ्का ॥

## न श्रुतिसमवायित्वात् ॥ १६ ॥

नैतदेवम्। इन्द्रोऽस्य ग्रहस्य देवतेति तद्धितसंयोगेन विज्ञायेत। न चास्य महत्त्वमपेक्षमाणस्य तद्धितसंयोग उपपद्यते। तद्धितसंयोगा-ऽपेक्षस्य वा महत्त्वसम्बन्धात् समासकल्पना। न च तद्धितार्थे वृत्त-स्य महत्त्वसम्बन्धः। न च समासार्थे वृत्तस्य तद्धितसंबन्ध। न चाऽस्मिन्नेव प्रयोगे समासार्थे वृत्तिरिष्यते एतस्मिन्नेव तद्धिता-ऽर्थे। न चायमिन्द्रशब्दोऽविहितवत् स्वार्थे तद्धितार्थेन सम्बध्येत विहितवच्च परार्थे महत्त्वेन सम्बद्धमनूद्येत। विस्पष्टश्चायमन्योऽर्थो महेन्द्रो भवति। महानिन्द्रो भवतीति महेन्द्रः। अन्यश्चेन्द्रो हविषो देवता भवतीति सकृदुच्चारणे च नोभयं शक्येत। तस्मान्नेन्द्रो देवता महत्त्वविशिष्ट। महेन्द्रशब्दात्तु तद्धित उत्पन्नः। तस्मात्तत्प्रातिपदिक-मर्थवदिति गम्यते, न त्ववयवसम्बन्धेन। तस्माद्देवतान्तरमिन्द्रा-न्महेन्द्रः। तेनैन्द्रस्य प्रगाथस्योत्कर्षं प्राप्नोति। अत पर्य्युदसितव्य एष पक्ष। यदप्युच्यते, इन्द्रस्य वृत्रवधोत्तरकालं महेन्द्रत्वं दर्शयति, महान् वाऽयमभूद् यो वृत्रमवधीदिति। तथा वेदस्यादिमत्तादोषः प्रसज्ज्येत। अतोऽन्य इन्द्रो महेन्द्रात् ॥ १६ ॥ ॥ आशङ्कानिरास ॥

## व्यपदेशभेदाच्च ॥ १७ ॥

व्यपदेशभेदश्च भवति। बहु दुग्धीन्द्राय देवेभ्यो हविरिति, बहु दुग्धि महेन्द्राय देवेभ्यो हविरिति। अतोऽपि देवतान्तरम्, एकदेव-तात्वे मन्त्रविकल्प स्यात् ॥ १७ ॥

## गुणश्चानर्थकः स्यात् ॥ १८ ॥

यदा विधिशब्दादवगतमेतद्भवति, इन्द्रो देवतेति, तदाऽस्य गुणान्वाख्याने किं प्रयोजनम्। महत्त्वं नामेन्द्रस्य गुणो भवतीति देवताभिधानम्। कथं तस्यै देवतायै दीयते ? इति। गुणेऽपि हि वि-हिते सति तस्यै एव देवतायै दीयतेऽविहितेऽपि। तस्माद् गुणवि-धानमनर्थकम्। अथोच्येत, योऽस्मिन् ग्रहे इन्द्र स महानिति। नै-वम्। ग्रहसम्बन्धस्याप्रसिद्धत्वाद् विशेषणं नात्र कल्प्यते, गुणसम्ब-

न्धस्य चाप्रसिद्धत्वाद् गुणेन विशेषणमनवक्लृप्तम् । तस्मादपि देवतान्तरम् ॥ १८ ॥

### तथा याज्यापुरोरुचोः ॥ १९ ॥

एवं सति याज्यापुरोऽनुवाक्ययोर्भेदेन दर्शनमुपपद्यते । ऐन्द्र सानसिं रयिमित्यैन्द्रयाज्यापुरोऽनुवाक्याद्वयं, महान् इन्द्रो य ओजसेति भेदेन माहेन्द्रं दर्शयति । तदेकत्वे विकल्प्येत । तत्र, पक्षे बाध स्यात् ॥ १९ ॥ ॥ युक्तिः ॥

### वशायामर्थसमवायात् ॥ २० ॥

यदुक्तम्, अजावशाशब्देन चोदिते कर्म्मणि छागशब्देन निगमा भवन्तीति । तद् युक्तम् । वशायामर्थसमवायित्वं वयं प्रत्यक्षमवगच्छामः । छागस्य वपाया मेदसोऽनुब्रूहीति । यैव वशा यैव छागेति । तस्मात् प्रगाथस्योत्कर्षः सँस्कारपक्षे । अत प्रधानकर्म्मणी इति ॥ २० ॥ ॥ उपसंहारः ॥

### यच्चेति वाऽर्थवत्त्वात् स्यात् ॥ २१ ॥

वाशब्द पक्षं व्यावर्त्तयति सँस्कारकर्म्मणी एव स्तोत्रशस्त्रे । यच्चैतत्– प्रगाथस्योत्कर्ष इति, उत्कृष्यताम् । यत्रेन्द्रस्तत्र प्रगाथः । लिङ्गेन हि क्रमसन्निधी बाधितव्यावेव ॥ २१ ॥ ॥ आशङ्का ॥

### न त्वाम्नातेषु ॥ २२ ॥

अपरेषां मन्त्राणामुत्कृष्टानामन्यत्रार्थवत्ता नास्ति तेषामानर्थक्यं स्यात् । यथा, याम्याः शंसन्ति शिपिविष्टवतीं पितृदेवत्यामाग्निमारुते, कुषुम्भकसूक्तम्, अक्षसूक्तं, मूषिकासूक्तमित्येवमादीनाम् ॥ ॥ २२ ॥ ॥आशङ्कानिरासः ॥

### दृश्यते ॥ २३ ॥

तदुच्यते । सर्वेषामर्थवत्ताऽस्ति । मण्डूकसूक्तस्याग्नौ, अक्षसूक्तस्य राजसूये, मूषिकासूक्तस्यैकादशिन्यां, सर्वेषां वाचस्तोमे, सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे पारिप्लवमश्वमेधे शंसतीति । यथा, यस्याश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति । तस्मादस्त्यर्थवत्ता उत्कृष्टानाम् । अतः संस्कारकर्म्मणी स्तोत्रशस्त्रे इति ॥ २३ ॥ ॥ आशङ्का ॥

### अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती

क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

अपि वा प्रधानकर्म्मणी स्तोत्रशस्त्रे स्याताम् । कुतः ? । श्रुतिसंयोगात् । सप्तमीश्रुतिसंयोगो हि भवति । कवतीषु स्तुवते, शिपिविष्टवतीषु स्तुवते इति । यदि स्तुतिस्ततः कवत्यक्षरेष्वाहिता । यदि प्रकाशनं, ततो देवतायाम् । तत्र करणं कवत्यस्तृतीयया अश्रोष्यं, न सप्तम्या ॥ अपि च, श्रुतिसंयोगो भवति । प्रउगं शंसति, निष्केवल्यं शंसतीति । अतः स्तुतिरभिनिर्वर्त्तयितव्या तेन मन्त्रेण । गुणवचनः शब्दः स्तुतिनिर्वर्त्तनार्थोऽदृष्टमर्थं करिष्यति । तस्मात् प्रधानकर्म्मणी ॥ अपि च श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः । यथा इन्द्रस्य नु वीर्य्याणि प्रवोचमिति । तेन देवताशब्दः स्तुतिसम्बन्धार्थ इत्युच्यते । देवताभिधानार्थे प्रातिपदिकार्थत्वात् प्रथमा स्यात् । अथ यत् प्रथमान्तं, तद्देवतार्थं भवितुमर्हति । यथा, इन्द्रो यातो वसितस्य राजेति । नेत्युच्यते । तदपि वाक्यसंयोगात् स्तुत्यर्थमेव । ननु वाक्याल्लिङ्गं बलीयः । सत्यम् । एतदपि लिङ्गम्, यत् स्तुतिवाक्यस्य साकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यम् । तथाप्युभयथा लिङ्गेऽनुगृह्यमाणे कुतो निर्णयः ? वाक्यशेषादेव, न देवताभिधानार्थ इति । देवताभिधानार्थ इत्येतस्मिन् पक्षे स्तुत्यर्थं साकाङ्क्षवचनमनर्थकमेव स्यात् । तस्माददृष्टार्थत्वात् स्तुतिवचनस्य प्रधानकर्म्मणी स्तोत्रशस्त्रे । अपिच, स्तौतिशंसतीति साक्षाद्गुणवचनौ लक्षणया अभिधानार्थौ स्याताम् । तस्मात् क्रियोत्पत्तिमपूर्वोत्पत्तिं विदध्यातामिति ॥ ॥ २४ ॥ ॥ आशङ्कानिरासः ॥

शब्दपृथक्त्वाच्च ॥ २५ ॥

शब्देन पृथक्त्वमेव गम्यते । द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः । इतरथा हि द्वादशत्वं न स्यात् । स्तोत्राणां शस्त्राणाञ्च एकमेव शंसनं स्तवनञ्च । अथ भेद आश्रीयते, ततो न द्वादशत्वेऽवतिष्ठते ॥ २५ ॥

अनर्थकञ्च तद्वचनम् ॥ २६ ॥

अग्निष्टुति श्रूयते, आग्नेया ग्रहा भवन्ति इति । तत्र पुनरुच्यते, आग्नेयीषु स्तुवन्ति, आग्नेयीषु शंसन्तीति । तन्न विधातव्यमेव, यदि संस्कारकर्म्म । तस्मादपि प्रधानकर्मणी इति ॥ २६ ॥

अन्यश्चार्थः प्रतीयते ॥ २७ ॥

संबद्धे वै स्तोत्रशस्त्रे वा इति । यद्यन्यत् स्तोत्रमन्यच्छस्त्रं, ततस्तयोः सम्बन्ध । यदि वा अपूर्ववचनेन ततोऽन्यत् स्तोत्रमन्यच्छस्त्रम् । इतरथा यदेव स्तोत्रं तदेव शस्त्रं स्यात् ॥ २७ ॥

## अभिधानं च कर्मवत् ॥ २८ ॥

प्रधानकर्म्मण इव चाभिधानं भवति द्वितीयासंयोगेन । प्रउगं शंसतीति, निष्केवल्यं शंसतीति ॥ २८ ॥

## फलनिर्वृत्तिश्च ॥ २९ ॥

फलनिर्वृत्तिदर्शनं च भवति । स्तुतस्य स्तुतमसीत्येवमादि । इन्द्रवन्तो मनेमहि भक्षीमहि प्रजामिषं सा मे सत्याशीर्यज्ञस्य भूयादिति स्तोत्रफलमनूद्यते, न देवताया । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे । अन्यत्र सूत्रबद्ध प्रयोजनम् । दशमेऽध्याये ग्रहाणां देवताऽन्यत्वे स्तुतशस्त्रयो प्रधानकर्मत्वादधिकारः स्यात् ॥२९॥ ॥ युक्ति० ॥ स्तोत्रादिप्राधान्याऽधिकरणम् ॥ ५ ॥

## विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥

इदं समाम्नायते । न ता नशन्ति, न दभाति, तस्करो नासाम् । आ मित्रोऽयथिरा दधर्षति । देवांश्च याभिर्यजते, ददाति च ज्योग् इत्ताभि स च ते गोपतिः सह इति । यजते ददातीत्युदाहरणम् । किं यद्वद् ब्राह्मणे भावशब्दो विधायकस्तद्वन्मन्त्रेऽपि, उत मन्त्रेऽभिधायक ? इति । किं तावत् प्राप्तम् । विधौ मन्त्रे चाम्नायमानस्य भावशब्दस्य एक एवार्थं स्यात् । ऐकशब्द्यात् । स एवायमेकः शब्दो ब्राह्मणगतो विधास्यति, मन्त्रगतो न शक्नोति विधातुमित्यनुपपन्नम् । तस्माद् विधायकः ॥ ३० ॥ ॥ पूर्वपक्ष ॥

## अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥

अपि वेति पक्षो व्यावर्त्यते । एवञ्जातीयको मन्त्रोऽभिधानवचनः स्यात् । प्रयोगसामर्थ्यात् । प्रयोगे क्रियमाणे अस्य सामर्थ्यं विद्यते, गोदानं गोयागञ्च प्रत्याययितुं, न विधातुम् । कुत ? विहितत्वाद् गोदानस्य दक्षिणाविधाने, गोयागस्य त्वनुबन्ध्यायाम् । कर्मान्तरं भविष्यतीति चेन्न । असकृदप्युच्यमाने तत्प्रत्ययादेव । स्तुत्यर्थकल्पनायामप्यानर्थक्यं, परिसमाप्तेन सार्थवादकेन वाक्येन विहित-

त्वात् यागस्य । तस्मान्न मन्त्रगतो भावशब्द एवञ्जातीयको विधायकः इति ॥ ३१ ॥ ॥ सिद्धान्तः ॥ मन्त्राविधायकत्वाधिकरणम् ॥ ६ ॥

तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

मन्त्रगतो भावशब्दो विधायको नेति परीक्षितम् । कोऽयं मन्त्रो नामेति । उच्यते । अज्ञाते मन्त्रे तद्गतो भावशब्दः कथं विचारित इति, इदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम् । कथंलक्षणो मन्त्र इति ॥ तच्चोदकेषु मन्त्राख्या ॥ अभिधानस्य चोदकेष्वेवञ्जातीयकेष्वभियुक्ता उपदिशन्ति— मन्त्रानधीमहे, मन्त्रानध्यापयामः, मन्त्रा वर्त्तन्ते इति । प्रायिकमिदं लक्षणम् । अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते । यथा वसन्ताय कपिञ्जलानालभते इति, न शक्यं पृष्ठाकोटेन तत्र तत्रोपदेष्टुमिति लक्षणमुक्तम् ॥

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्कशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥

उदाहरणं, मेधोऽसीत्येवमादयोऽस्यन्ताः, इषे त्वेत्येवमादयस्त्वान्ताः, आयुर्दा असि इत्याशीः, अग्निर्मूर्द्धा इति स्तुतिः, सङ्ख्या एको मम इति, प्रलपितम् अक्षी ते इन्द्र पिङ्गले कुलेरिवेति, परिवेदनम् अम्बे अम्बिके इति, प्रैष अग्नीदग्नीन् इति, अन्वेषणं कोऽसि कतमोऽसीति, पृष्टं पृच्छामि त्वा इति, आख्यानम् इयं वेदिरिति, अनुषङ्गः अच्छिद्रेण पवित्रेणेति, प्रयोग त्रैस्वर्यं चातुस्वर्यञ्च, सामर्थ्यमभिधानम् । तच्चैतद्वृत्तिकारेणोदाहरणोपदेशेनाख्यातम् । एतदपि प्रायिककमेव । असिमध्या अपि च मन्त्रा भवन्ति, ईड्यश्चासि वन्द्यश्च वाजिन्निति, त्वामध्याश्च— तत्त्वा यामि इति । आशीर्ब्राह्मणमपि, सोऽकामयत प्रजाः सृजेय इति, स्तुतिरपि वायुर्वै क्षेपिष्ठा देवता इति, प्रलापो न चैतद्विद्मो यदि ब्राह्मणा वा स्मोऽब्राह्मणाः स्मो वा इति, परिवेदनं ये मामधुक्षन्त ते मां प्रत्यमुञ्चन्त इति, प्रैषः अमुतः सोममाहर इति, अन्वेषणम् इह वा स इह वेति, प्रश्नः वेद कर्णवतीं सूर्मिमिति । प्रतिवचनं विद्मो वा इति, अनुषङ्ग हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इति । प्रयोग त्रैस्वर्य्यञ्चातुस्वर्य्यञ्चेति, सामर्थ्यं स्रुवेण अवद्यति द्रवेष्विति । लक्षणकर्म्मणि प्रयोजनं प्रसिद्धत्वान्न वक्तव्यं, लघीयसी प्रतिपत्तिर्लक्षणेन ॥

आक्षेपेष्वपवादेषु प्राप्त्या लक्षणकर्म्मणि ।

प्रयोजनं न वक्तव्यं यश्च कृत्वा प्रवर्त्तते ॥

आक्षेपेषु पूर्वाधिकरणस्य प्रयोजनम्, अपवादेषूत्सर्गस्य, प्राप्त्यामुत्तराविवक्षा, कृत्वाचिन्तायां पूर्वाधिकरणस्य प्रयोजनम् । अस्ति वेदे मन्त्रशब्दो यस्यायमर्थ परीक्षितः । अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदु, ऋचः सामानि यजूंषि इति ॥ ३२ ॥ ॥ मन्त्रनिर्वचनाऽधिकरणम् ॥ ७ ॥

शेषे ब्राह्मणशब्दः ॥ ३३ ॥

अथ किंलक्षणं ब्राह्मणम् ? मन्त्राश्च ब्राह्मणञ्च वेदः । तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वाद् ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धम् । यस्यैतल्लक्षणं न भवति, तद् ब्राह्मणमिति परिशेषसिद्धं ब्राह्मणम् । वृत्तिकारस्तु शिष्यहितार्थं प्रपञ्चितवान्– इतिकरणबहुलम्, इत्याहोपनिबद्धमाख्यायिकास्वरूपम् । हेतुः, शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति निर्वचनं, तद् दध्नो दधित्वम् । निन्दा, उपवीता वा एतस्याग्नय । प्रशंसा, वायुर्वै क्षेपिष्ठा देवतेति । संशय, होतव्यं गार्हपत्ये न होतव्यमिति । विधिः, यजमानसम्मिता उदुम्बरी भवति। परकृतिः, माषानेव मह्यं पचतेति । पुराकल्पः, उल्मुकैर्ह स्म पूर्वे समाजग्मुरिति । व्यवधारणकल्पना, यावतोऽश्वान् प्रतिगृह्णीयादिति ॥

हेतुर्निवचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम् ॥

एतदपि प्रायिकम् । इतिकरणबहुलो मन्त्रोऽपि कश्चिद्, इति वा इति मे मन । इत्याहोपनिबद्धश्च, भगं भक्षीत्याह । आख्यायिकास्वरूपश्च, उग्रो ह भुज्यमिति । हेतुः, इद वो वामुशन्ति हि । निर्वचनं, तस्मादापोनुस्थना इति । निन्दा, मोघमन्नं विन्दते अप्रचेता इति । प्रशंसा, अग्निर्मूर्द्धा इति संशय, अध स्विदासीदुपरि स्विदासीदिति । विधिः, पृणीयादिन्नाधमानायेति । परकृति, सहस्रमयुतादददत् । पुराकल्पः, यज्ञेन यज्ञमयजन्त देवा इति ॥३३॥ ॥ ब्राह्मणनिर्वचनाधिकरणम् ॥८॥

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

ऊहप्रवरनामधेयेषु संशयः– मन्त्राः, उत नेति । अभिधायकत्वान्मन्त्रा इति प्राप्ते ब्रूमः । अनाम्नातेषु मन्त्रत्वं न स्यादभिधायकेष्वपि । नाभिधायकत्वं मन्त्रत्वे हेतुः । किं तर्हि, अभियुक्तप्रयोगः । ये अभियुक्तैर्मन्त्रा नोच्यन्ते, न ते मन्त्राः । नचैवमादयो मन्त्रसमाम्नाये सन्ति । तस्माद् अमन्त्राः । प्रयोजनं, मन्त्रे दुष्टे यत् प्रायश्चित्तममन्त्रेषु तन्न ॥ ३४ ॥ ॥ ऊहाद्यमन्त्रताधिकरणम् ॥ ९ ॥

## तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

ऋच इत्यस्ति वेदे, अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचो यजूंषि सामानीति । कथंलक्षणिका ऋचः ? ॥ तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ यत्र पादकृता व्यवस्था स मन्त्र ऋग्नामा । यथा अग्निमीळे इति । एवञ्जातीयकेषु मन्त्रेषु अभियुक्ता उपदिशन्ति, ऋचोऽधीमहे, ऋचोऽध्यापयामः, ऋचो वर्त्तन्ते इति । यद्यर्थवशेनेत्युच्यते, यत्र वृत्तवशेन तत्र न प्राप्नोति । अग्निः पूर्वेभिर्ऋषिभिरिति । यतो न अर्थवशेनेति वृत्तादिवशव्यावृत्त्यर्थं, किं तर्हि । अनुवाद एष प्रदर्शनार्थः । अवश्यञ्चैतदेवं विज्ञेयम् । वृत्तादिनिवृत्त्यर्थे सति वाक्यं भिद्येत । तस्माद् यत्र पादकृता व्यवस्था, सा ऋगिति ॥ ३५ ॥ ॥ ऋग्लक्षणाधिकरणम् ॥ १० ॥

## गीतिषु सामाख्या ॥ ३६ ॥

अथ साम्नः किं लक्षणम् । विशिष्टा काचिद्गीतिः सामेत्युच्यते । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति । सामान्यधीमहि, सामान्यध्यापयामः, सामानि वर्त्तन्ते इति । अभियुक्तोपदेशश्च न प्रमाणम् । यथा अम्लं दधि, मधुरो गुड इति । गीतिविशिष्टे तावन्मन्त्रे गीतिशब्दः । गीतिसम्बन्धान्मन्त्रे सम्प्रत्यय इत्यवगन्तव्यम् ॥ ॥ ३६ ॥ ॥ सामलक्षणाधिकरणम् ॥ ११ ॥

## शेषे यजुःशब्दः ॥ ३७ ॥

अथ यजुषः किं लक्षणमिति । यजुषो लक्षणं न वक्तव्यम् । ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन। या न गीतिर्न च पादबद्धा, तत् प्रश्लिष्टपठितं यजुरिति ॥ ३७ ॥ ॥ यजुर्लक्षणाऽधिकरणम् ॥ १२ ॥

अथ निगदो नाम किं यजूंषि, उत यजुषोऽन्य इति ।

## निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ ३८ ॥

निगदा न यजूँषि । कुत । धर्म्मविशेषात् । उच्चैः ऋचा क्रियते, उच्चै· साम्ना, उपांशु यजुषा, उच्चैर्निगदेनेत्येष धर्म्मविशेषः । उच्चैर्निगदेनेत्यनूद्यते यदि यजुषो निगदत्वं स्याद्, न च तस्योच्चैस्त्वं धर्मो दृश्यत । दृश्यते तु। तस्माच्चतुर्थं मन्त्रजात निगदो नाम ॥ ३८॥ पूर्व०

## व्यपदेशाच्च ॥ ३९ ॥

व्यपदेशोऽपि भवति, यजूँषि वर्त्तन्ते, न निगदाः । निगदा वर्त्तन्ते, न यजूँषीति । तस्मादपि मन्त्रान्तरम् ॥ ३९ ॥ ॥ युक्तिः ॥

## यजूँषि वा तद्रूपत्वात् ॥ ४० ॥

यजूँष्येव वा निगदा । कुतः । तद्रूपत्वात् । तदेवैषां रूपं, यद् यजुषां प्रश्लिष्टपाठ ,ऋक्सामलक्षणविलक्षणता च ॥४०॥ सिद्धान्त.॥

## वचनाद्धर्मविशेषः ॥ ४१ ॥

वचनात् प्रत्यायनसामर्थ्यात् । अस्ति हि पुरुषान्तरप्रत्यायनसामर्थ्यं केषाञ्चिद् यजुषाम् ॥ ४१ ॥ ॥ उपसंहार. ॥

## अर्थाच्च ॥ ४२ ॥

अस्ति च तै पुरुषान्तरैः प्रत्यायितैः प्रयोजनं, नोपांशूच्चार्य्यमाणाः पुरुषान्तरं प्रत्याययेयुः । तस्माद् धर्म्मविशेषोऽर्थवान् । यानि च यजूँषि उच्चैरुच्चार्य्यन्ते ते निगदा· । कुत· । निशब्द· प्रकर्षस्य वक्ता । यथा प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते । गदतिर्गदनार्थः पाठवचनः । एष एव हि प्रकर्षो यदुच्चैस्त्वावच्छिन्नत्वम् । ननु वाचनिको गुणो यजुषामुपांशुत्वम् । नेति ब्रूम· । गुणो नाम स भवति, यः स्वकार्य्यं कुर्वतामुपकारे वर्त्तते । न च परसम्बोधनार्थानां यजुषामुपांशुत्वं साहाय्ये वर्त्तते । तद्धि स्वकर्म्मक्रियाविघातं करोति । तेन पुरुषान्तरसम्बोधनार्थमुच्चैस्त्वं गुण । इतरार्थं तु वचनं भविष्यति । इतराणि यानि यजूँषि न परसम्बोधनार्थानि, तेषूपांशुत्वं निषेक्ष्यते ॥ ॥ ४२ ॥ ॥ युक्तिः ।

## गुणार्थो व्यपदेशः ॥ ४३ ॥

अथ यदुक्तं व्यपदेशः इति स चैकत्वेऽपि गुणतो भवति । यथा, इतो ब्राह्मणा भोज्यन्ताम्, इत परिव्राजका इति । एवमुच्चैस्त्वेन

गुणेन तान्येव यजूंषि व्यपदिश्यन्ते, निगदा इति ॥ ४३ ॥ आ० ॥

**सर्वेषामिति चेत् ॥ ४४ ॥**

यदि च उच्चैर्गद्यते स निगद, ऋगपि निगद प्राप्नोति ॥ ४४ ॥ आ० ॥

**न ऋग्व्यपदेशात् ॥ ४५ ॥**

न ऋचो निगदा व्यपदिश्यन्ते । अयाज्या वै निगदा ऋचैव यजन्तीति पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति । उच्यते । व्यपदेशा लिङ्गं, प्राप्तिरुच्यतामिति । अपादबद्धे गदतिर्वर्तते, अपादबद्धो हि गद्य इत्युच्यते ॥ ४५ ॥ आ० नि० ॥ निगदानां यजुष्ट्वाधिकरणम् ॥ १३ ॥

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥**

अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्येत, इयदेकं यजुरिति यावता पदसमूहेनेज्यते तावान् पदसमूह एकं यजुः । कियता चेज्यते । यावता क्रियाया उपकार. प्रकाश्यते तावद् वक्तव्यत्वाद् वाक्यमित्युच्यते तेनाभिधीयते– अर्थैकत्वादेकं वाक्यमिति ॥ एतस्माच्चेत् कारणादेकवाक्यता भवति तस्मादेकार्थः पदसमूहो वाक्यम् । यदि च विभज्यमान साकाङ्क्षं पदं भवति । किमुदाहरणम् ? देवस्य त्वा सवितु प्रसवे इति । ननु पदं पदमत्रैकार्थम् । सत्यं, न तु तद्विभागे साकाङ्क्षम् । न तर्ह्यर्थैकत्वमुपपद्यते । बहुत्वात् पदार्थानाम् । पदसमुदायस्य च पृथगर्थो नास्तीत्युक्तम् । भेदः संसर्गो वा वाक्यार्थ इति यद्युच्यते, तथाप्येकार्थता न स्यात् । बहुपदे भेदानां संसर्गाणां च बहुत्वात् । एकप्रयोजनत्वादुपपन्नम् । यथा तावद् देवस्य त्वेति निर्वापप्रकाशनम् । तस्य विशिष्टस्य वाचक एतावान् पदसमूहः तद् वाक्यम् ।

नन्वत्र देवस्य त्वा सवितु प्रसवे निर्वपामीत्येकं वाक्यम्, अश्विनोर्बाहुभ्यां निर्वपामीत्यपरम् । एवं बहूनि वाक्यानि । यदि निर्वपामीत्यनुषङ्गस्ततो बहूनि वाक्यानि । न त्वेवमनुषङ्गो भवति । यदि गुणभूतो निर्वपामीति, तदा प्रतिप्रधानं भिद्येत । न च निर्वापो देवस्य त्वेत्येवमादीनामर्थेनोच्यते । साधनप्राधान्ये हि अदृष्टार्थता वचनस्य स्यात् । निर्वापे पुनः प्रधाने दृष्टं कार्यं निर्वापप्रकाशनम् । तत् सर्वैर्विशेषणैर्विशिष्टमुच्यते । तस्मादविरोध । यथा च पदं पदेन विशेष्यते । यथोक्तं, तद्भूतानामिति । तस्मादेकं वाक्यम् ॥

अथ किमर्थमुभयं सूत्रितम्–अर्थैकत्वादिति च, विभागे साकाङ्क्ष-

त्वारिनि च । उच्यते । भवति किञ्चिदेकार्थं, न तु विभागे साकाङ्क्षम् । यथा भगो वां विभजतु, अर्यमा वां विभजत्विति । एकार्थाः सर्वे विभागमभिदधति । ननु भगविशिष्टाद् विभागादर्यमविशिष्टोऽन्यो विभाग. । नेत्युच्यते । विभागसामान्येनास्य प्रयोजनं, न विशेषेण । सामान्ये हि दृष्टोऽर्थो भवति, न विशेषे । विभागे तु न साकाङ्क्षम् । तस्माद्भिन्नमिदं वाक्यं विभागे विकल्प्यते । तथा, स्योनं ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि । तस्मिन् सीदाऽमृते प्रतितिष्ठ व्रीहीणां मेध. सुमनस्यमान इति विभागे साकाङ्क्षम् । द्वे तु प्रयोजने क्रियेते, सदनकरणं पुरोडाशप्रतिष्ठापनञ्च । तस्माद् भिन्ने वाक्ये, पूर्वं सदनकरणे विनियुज्यते, उत्तरं पुरोडाशप्रतिष्ठापने । तस्मात् सम्यक् सूत्रितं, न सूत्रोपालम्भो भवति ॥ ४६ ॥ ॥ एकवाक्यत्वलक्षणाधिकरणम् ॥ १४ ॥

## समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

इषे त्वा, ऊर्जे त्वेति । तथा आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतामिति । अत्र सन्देह । किमेवमादिषु भिन्नं वाक्यमुतैकमिति । एकमिति ब्रूम. । इषे त्वेत्येवमुक्ते, न किञ्चिद् दृष्टं प्रयोजनं, तथा ऊर्जे त्वेत्यपि च वचनसामर्थ्याददृष्टम् । तदुभाभ्यामेकं कल्पयितुं न्याय्यम् । एवमल्पीयसी अदृष्टानुमानकल्पना भविष्यति । तस्मादेकं वाक्यम् ॥ एवं प्राप्ते ब्रूम. ॥ समेषु वाक्यभेदः स्यात् ॥ समेषु परस्परानाकाङ्क्षेषु वाक्य भिद्यते । इषे त्वेत्यनेन एकोऽर्थः क्रियते, ऊर्जे त्वेत्यनेनापर. । नन्विदानीमेवोक्तं नात्र दृष्टोऽर्थ इति । यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते– इषे त्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टीति । तथा आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतामित्यायु.क्लृप्तेरन्या प्राणक्लृप्तिः । ननु सामान्यमात्रमिष्टं तद् न विशेषणभेदाद् भेदमर्हतीति । यथा, अग्नये जुष्टं निर्वपामीति निर्वाप एक तस्य विशेषा' सवितु' प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति, न तेषां भेदान्निर्वापस्य भेद इष्यते ' एवमिहापि क्लृप्तिर्नामैकोऽर्थ', नासावायुरादिभिर्विशेषैर्भिन्नो भविष्यतीति । उच्यते । इह क्लृप्तीर्वाचयतीति बह्व्यः क्लृप्तय. श्रूयन्ते । ताश्च वक्तव्या तत्रैकामायु'क्लृप्तिम्, आयुर्यज्ञेन कल्पतामित्येष मन्त्र शक्नोति वदितुम् । प्राणो यज्ञेन कल्पतामित्ययमपि प्राण-

क्लृप्तिमपराम् । एवन्तु सर्वे क्लृप्तिविशेषवचनाः । तच्च दृष्टं प्रयोजनम् । तस्मादनेकार्थत्वात्तत्रापि वाक्यभेद इति । ननु सामान्यवचनादेकत्वं यथा विभागे । नैतदेवम् । विभागे दृष्टार्थे सामान्यमिह न । अपि च क्लृप्तीर्वाचयतीति विहितम्, आयुर्यज्ञेन कल्पतामिति चायुःक्लृप्त्यभिधानम् । अभिनिवर्त्त्यते प्रत्यक्षं, प्राणो यज्ञेन कल्पतामिति च प्राणक्लृप्तेः । तस्माद्वाक्यभेदः ॥४७॥ वाक्यभेदाधिकरणम् ॥१५॥

## अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥४८॥

या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा, या ते अग्ने रजाशया, या ते अग्ने हराशया इति । अत्र सन्देहः । तनूर्वर्षिष्ठेति किं सर्वेष्वनुषक्तव्यम् । आहोस्विल्लौकिको वाक्यशेष कर्त्तव्य इति । किं प्राप्तम् । या ते अग्ने रजाशयेत्येतस्य तनूर्वर्षिष्ठेति न वाक्यशेषः । न ह्ययमस्मात् परः प्रयुज्यते । एवं प्राप्ते ब्रूमः । अनुषङ्गो वाक्यसमाप्तिः स्यात्तनूर्वर्षिष्ठेति । यथैव ह्ययं, या ते अग्नेऽयाशयेत्येतस्यानन्तरमेवं, या ते अग्ने रजाशया, या ते अग्ने हराशयेत्येतयोरपि । हराशयेत्येतस्य व्यवहित इति चेत् । तन्न । समुदायस्याव्यवधानात् । अव्यवहितो रजाशयेति समुदायः । समुदायेन च वाक्यशेषस्य सम्बन्धाभावात् समुदायिभ्यां सम्बन्धः । समुदायिसम्बन्धे च न गम्यते विशेषः । तस्मात् सर्वत्रानुषङ्गः ॥

अपि च साकाङ्क्षस्य सन्निधौ परस्तात् पुरस्ताद्वा परिपूरणसमर्थः श्रूयमाणो वाक्यशेषो भवति । कियाँस्तु काल सन्निधिरिति । उच्यते । यावति शक्नोत्युभावप्यपेक्षितुम् । कश्चाऽसौ । आनन्तर्यं सम्बन्धिपदव्यवायो वा । तावति हि शक्नोत्युभावप्यपेक्षितुम् । सम्बन्धिपदव्यवाये हि सम्बन्धादेव पूर्वसंस्कारो नापैति । यत्राप्यपरेण साकाङ्क्षेण व्यवायस्तत्राप्यस्ति सम्बन्ध । द्वयोरपि हि कार्यं वक्तव्यमिति । परः पूर्वमपेक्षते, अनपेक्षमाणेऽन्यतरः प्रमादपाठः स्यात् । शक्यते चासावपेक्षितुम् । तस्माद् यथैवायमेकस्य सन्निधावेवमपरस्य द्वयोरप्यसम्बद्धैः पदैरव्यवहितत्वाद्, द्वयोरप्याकाङ्क्षतोरेतावच्च वाक्यशेषसम्बन्धे कारणं, नानन्तर्यम् । अव्यवधाने विच्छेदेऽपि भवति सम्बन्धः । तस्मादनुषङ्गः ॥

अथेह कथं भवितव्यं, यत्र निराकाङ्क्षाणां सन्निधौ परिपूरणासमर्थः श्रूयते। यथा, चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्य त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरिति। अत्र हि पुनात्वन्तानि परिपूर्णानि न किञ्चिदाकाङ्क्षन्ति। नन्वच्छिद्रेणेत्येतदाकाङ्क्षिष्यन्ति। सत्यमाकाङ्क्षन्ति। आकाङ्क्षदप्येतदेकमाकाङ्क्षेत। एकेनैव तन्निराकाङ्क्षं सम्पद्यते इति। एकेन हि निराकाङ्क्षीकृतो नेतरावाकाङ्क्षिष्यतिं। अनर्थकत्वादाकाङ्क्षति। एकेन च सम्बद्धो नानर्थको भवति। तस्मान्नेतरावाकाङ्क्षतीति। इतरावपि परिपूर्णत्वान्न तमाकाङ्क्षतः। नन्वेतस्य वाक्यशेषस्य एकमप्याकाङ्क्षतो न गम्यते विशेष, केन निराकाङ्क्षीक्रियते, केन वा नेति, तेनानवगम्यमाने विशेषे सर्वै सह सम्भन्त्स्यते आह। नैतदेवम्। येनास्य प्रत्यक्षमानन्तर्य्यमुपलभामहे तेन सह सम्भन्त्स्यते इति गम्यते विशेषः। तस्मात्तेनानन्तरेण सह सम्भन्त्स्यते इति नास्ति सर्वत्रानुषङ्ग इति। आह। नैतदेवम् पुनातुशब्देनास्य प्रत्यक्षमानन्तर्य्यमुपलभामहे। पुनातुशब्दस्यापि चित्पतिस्त्वेत्यवमादिभिः। एकश्चासौ पुनातुशब्दः पुनः पुनरुच्चारितः। तेनावगच्छामः। यत्र पुनातुशब्दः प्रयुक्तस्तत्र तेनैकवाक्यत्वाद् अच्छिद्रेणेत्ययमपि प्रयोक्तव्य। तथा च सति, चित्पतिस्त्वेत्येवमादयो विना पुनातुशब्देन साकाङ्क्षाः। ते च पुनातुशब्दमाकाङ्क्षन्ति, स च पुनातुशब्दोऽच्छिद्रेणेत्यनेन विशिष्टः। तेन पुनातुशब्देन सानुषङ्गेण नियोगतः सर्वे निराकाङ्क्षीकर्त्तव्याः। तस्मात् सर्वेषु तुल्यप्रयोगा इति वाक्यपरिसमाप्तिरनुषज्ज्यते ॥ ४८ ॥ ॥ अनुषङ्गाधिकरणम् ॥ १६ ॥

## व्यवायान्नानुषज्ज्येत ॥ ४९ ॥

सं ते वायुर्वातेन गच्छतां, सं यजत्रैरङ्गानि, सं यज्ञपतिराशिषा इति। वायुर्वातेन गच्छतामित्येष सं यजत्रैरङ्गानीति बहुवचनान्तेन व्यवहितत्वात्, सं यज्ञपतिराशिषेत्यत्र नानुषज्ज्यते। एकेन साकाङ्क्षेण व्यवेतो गच्छतामिति शेष। ततो बहुवचनान्तेन सं यजत्रैरङ्गानीत्येतेन सम्बन्धमनुपेत्य व्यवेतत्वात् परेण न सम्बद्ध्यते, गम्यते हि तदा विशेष, एकेन व्यवेत इति। गम्यमाने विशेषे न तत्र भावो वाक्यशेषस्योपपद्यते। तस्माद् बहुवचनान्तस्य परस्य च तद्-

व्यपेतस्य लौकिको वाक्यशेषः कर्त्तव्य इति ॥ ४९ ॥ ॥ व्यवेताननुषङ्गाधिकरणम् ॥ १७ ॥ इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये द्वितीयस्याऽध्यायस्य प्रथम पाद ॥ २ ॥ १ ॥ उपोद्धातपादोऽयम् ॥

अथ द्वितीय पाद ।

## शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमस्तत्र श्रूयते 'सोमेन यजेत, दाक्षिणानि जुहोति, हिरण्यमात्रेयाय ददातीति । यजति ददाति जुहोतयस्ते किं संहत्य कार्य्यं कुर्वन्ति, उत वियुत्येति संशयः । साधकाः संहत्यापि साधयन्तो दृश्यन्ते, वियुत्यापि । संहत्य तावत्, त्रयो ग्रावाण एकामुखां धारयन्तो दृश्यन्ते, नागदन्तकास्तु वियुत्यापि । एकैकस्मिन् हि शक्यते शिक्यमवलम्बयितुम् । अतो, यजति-ददाति-जुहोतयः संहत्य साधयेयुर्वियुत्य वेति जायते संशय ॥

किं तावत् प्राप्तं, सहत्येति । कुतः । अदृष्टार्थानामुपकारकल्पनाऽल्पीयसी न्याय्येति । कथम् । अदृष्टो योऽश्रुतो वार्थः, स नास्तीत्यवगम्यते * तस्मिन्नसति दृष्टश्चेच्छ्रुतो वा न विरुद्ध्यते ॥ विरुद्ध्यमाने कल्प्य' स्याज्ज्ञायते तेन सोऽर्थवान् * विशेषश्चेन्न गम्येत, ततो नैकोऽपि कल्प्यते ॥ गम्यते च विशेष , बहुभ्य एकमपूर्वमिति । तस्मात् समुदायश्चिकीर्षितः । तत्रा ह्यदृष्ट कल्प्यमाने, अवयवानां समुदायं प्रति अर्थवत्त्वादेकमपूर्वं समुदायात् कल्पित भविष्यति । न च अशब्द समुदाय. । अवयवशब्दैरेव समुदायस्योक्तत्वात् । तस्मात् समुदायश्चिकीर्षितः । अथ वा यजेतेत्यस्य पूर्वो भागो यजत्यर्थं ब्रवीति । उत्तरो भावयेत्, तथा ददातीति पूर्वो भागो ददात्यर्थम्, उत्तरस्तमेव भावयेदिति अनुवदति । एवं जुहोतीति पूर्वो भागो जुहोत्यर्थम्, उत्तरस्तमेवानुवदति । तेनैकस्यां भावनायां त्रयो यजत्यादय उपाया विधीयन्ते श्रुत्या । तस्मादेतैर्यागदानहोमैर्विशिष्टाऽपूर्वस्य भावना प्रतीयते । अत उच्यते । संहत्यैकमपूर्वं साधयन्ति इति । यद्वा यजतिशब्देन विहितं दान दानहोमशब्देनानूद्यते गुणसम्बन्धार्थम् । तस्मादेकमपूर्वमिति प्राप्तम् ॥ एवं प्राप्ते ब्रूमः ॥ प्रतिशब्दमपूर्वभेद इति । शब्दान्तरे कर्म्मभेदः कृतानुबन्धत्वात् । यजेतेत्यनेन केवलस्य यागस्य कर्त्तव्यतोच्यते, न तु जुहोतिशब्दाभिहितस्य,

ददातिशब्दाऽभिहितस्य वा। शब्दान्तरत्वात्। प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्तासम्बन्धो गम्यते, श्रुत्या अवयवस्य। यजेतेति सन्निहितयोरपि वाक्येन दानहोमयो श्रुत्या यागस्यैव सत्तासम्बन्धो गम्यते, न दानहोमयो। श्रुतिश्च वाक्याद् बलीयसी। तस्मान्न समुदाय शाब्द। कल्प्यमानो हि प्रयागवचनेन एकवाक्यतां नीत्वा कल्प्येत। शब्दान्तरञ्च यजतेर्ददाति। तत्र यद्यपि परो भागो भावनावचन सर्वेषु समानस्तथाप्येकैकस्य पूर्वोऽवयवोऽन्य, अन्यश्च तेन समुदाय शब्दान्तरमन्यस्मात् समुदायात् तत्रार्थान्तरं व्यक्तं, दद्यादिति दानेन साधयेदिति। केवलमेव दान करणं भावनाया प्रतीयते, न यागहोमौ सहायावपेक्षते। तथा जुहोतीति होमसाधनां भावनामाह. न दानयागावपेक्षते तत्रैतावच्छब्देनावगतं, दानेन केवलेन सिद्ध्यतीति। जुहोतीत्यपि होमेन केवलेन सिद्ध्यतीति, न तु दानेन केवलेन सिद्ध्यतीति विज्ञानं निवर्त्तते। ददातिर्हि स्वेन कारकग्रामेण कृतानुबन्धो न यागं होमं वाऽनुबन्धमपेक्षते। तस्माद्भिन्नानि वाक्यानि, प्रतिशब्दमपूर्वभेद इति। न च दानस्य यजतिर्जुहोतिर्वाऽनुवादो, यागहोमयोरविवक्षाप्रसङ्गात्। न च दानमितरयोरनुवाद। परस्वत्वार्थत्वाद् ददाते, इतरयोश्च त्यागार्थत्वात्। प्रयोजनं– पूर्वपक्षे समुदायादपूर्वं, सिद्धान्ते तु यागस्य फलवत्त्वादितरयोर्गुणभावः ॥ १ ॥ ॥ अङ्गापूर्वभेदाधिकरणम् ॥ १ ॥

## एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

समिधो यजति, तनूनपातं यजतीत्येवमादिः पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वञ्चोदयति, किं प्रत्यभ्यासमपूर्वभेद इति। शब्दान्तरे कर्म्मभेद उक्तः। इह स एव शब्द. पुन पुनरुच्चार्य्यते। तस्मादेकमेवात्राऽपूर्वम्। नन्वऽपूर्वान्तरमविदधदनर्थको भवति। सत्यमेवाप्रयोजनो भवति। बहुकृत्वोऽपि चोच्चार्य्यमाणो नान्यार्थो भवति। यत् प्रथमे उच्चारणे गम्यते, शततमेऽपि तदेव गम्यते। तस्मात् पञ्चकृत्वोऽभ्यस्तो यजति शब्द एकमपूर्वं चोदयति। न चाभ्यासोऽनर्थको भविष्यति। तनूनपादादीन् देवता विधास्यति, तस्मादेकमपूर्वम् ॥ एव प्राप्ते, ब्रूम ॥ एकस्यैव पुन श्रुतिः स्यात्। कर्म्मभेदं कुर्य्यादित्यर्थ. । तावत्येव विधीयमाने असति कस्मिंश्चि-

द्विशेषे पुनः श्रुतिरनर्थिका भवेत् । ननूक्तं न शक्नोत्यर्थान्तरं विधातुमिति । उच्यते । समिधो यजति इत्यपि प्रथमोऽनुवाद एव, दर्शपूर्णमासाभ्यां यजेतेति याग प्राप्त एव । तत्र देवता न शक्या विधातुम । श्रुतिप्राप्ता हि तत्र देवता । इयं वाक्यात् प्रकरणाद्वा । तयोर्विकल्पो न न्याय्यः । स एष देवतायागसम्बन्धो विधीयमान, अक्रियमाणे यागे न शक्य कर्तुमित्यनर्थकः स्यात् । क्रियमाणे तु शक्यते । तस्मादभ्यसितव्यो याग । प्रत्यभ्यासञ्चादृष्टभेद इति । न च यत् समित्सम्बन्धेन क्रियते, तत् तनूनपात्सम्बन्धेन । भिन्नत्वात् तयो· । अतो न विकल्प । प्रयोजनं- पूर्वपक्षे सकृत् प्रयोग इति, सिद्धान्ते पुन·पुन प्रयोग इति ॥२॥ समिदाद्यपूर्वभेदाधिकरणम् ॥ २ ॥

## प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

एवं हि समामनन्ति, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति, तावब्रूतामग्नीषोमावास्यज्यैव तौ उपांशु पौर्णमास्यां यजन्निति, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायामिति । तथा आघारमाघारयति, आज्यभागौ यजति, स्विष्टकृते समवद्यति, पत्नीसंयाजान् यजति । समिष्टयजुर्जुहोति । तथा, य एव विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते इति । तत्र सन्देह· । सर्वाण्येतानि समप्रधानानि, उत आग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि आरादुपकारकाण्यङ्गानि ? । तथा, य एवं विद्वानित्येव संयुक्तौ प्रकृतानां कर्म्मणामनुवदितारौ । अथ वा य एव विद्वान् पौर्णमासीं यजते, य एव विद्वानमावास्यां यजते इत्यपूर्वया कर्म्मणार्विधातारौ । तत्र इतरे गुणविधयः ? इति । किं प्राप्तम् । शब्दान्तरत्वादभ्यासाच्च समप्रधानानीति प्राप्ते, ब्रूम ॥ प्रकरणं तु पौर्णमास्यां, प्रकृतानामाग्नेयादीनामनुवदितारौ पौर्णमास्यमावास्यासयुक्तौ । कुत ? रूपावचनात् । य एवं विद्वान् पौर्णमासीसञ्ज्ञकं याग यजत इति न सर्वे यागा उच्यन्ते । य पौर्णमासीसञ्ज्ञक स विधीयते । न चैतदेवमवगच्छाम , कीदृशमेवंसंज्ञकस्य यागस्य रूपमिति । तेन किञ्चित् प्रतिपद्येमहि । अतो ब्रूम । यद्यपूर्वस्य विधातारौ, अनर्थकाविति । अथ नु प्रकृतानामनुवदितारौ,

तत सन्निहिताः पौर्णमास्यमावास्यासंयुक्ता यागा इति गम्यते रूपम् । तत्रार्थवत्ता वचनस्य । कथं पुनरेकवचनान्तो बहूनां वाचको भविष्यतीति यद्युच्यते समुदायशब्दतयाऽवकल्पिष्यते। रूपवन्तो हि पूर्वप्रकृता यागा । तेषां च प्रचयशिष्ट समुदायोऽस्यास्ति । तदपेक्षोऽयमरूपशब्द.। तस्मादेकवचनान्तता न दोष.। भवति हि बहूनामेकवचनान्तः शब्द. समुदायापेक्षः । यथा, यूथं वनं कुलं परिषदिति । यदा आग्नेयादीनां समुदायवचनावेतौ, तदा दर्शपौर्णमासशब्देन एत एवाभिधीयन्ते । तत एषां फलसम्बन्धः, फलवत्सन्निधेस्तु आघारादीन्याराटुपकारकाणीति ॥ ३ ॥

**विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥४॥**

यदि च सर्वाणि समप्रधानान्यभविष्यन्,न विकृतौ प्रयाजा दृश्यन्ताम् । दृश्यन्ते तु, प्रयाजे प्रयाजे कृष्णलं जुहोतीति । असत्याग्नेयगुणत्वे प्रयाजस्य तन्नोपपद्यते । अतो न सर्वाणि समप्रधानानि॥४॥ युक्ति ॥

**गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥**

नैतदस्ति, पौर्णमास्यमावास्यासंयुक्तौ समुदायशब्दाविति । किन्त्वपूर्वयो कर्म्मणोर्विधातारौ। तथा न लक्षणशब्दो भविष्यति । ननु रूपं नास्ति । वाक्यान्तरेण रूपमवगमिष्यामः । पौर्णमास्यामाग्नेयोऽष्टाकपालो भवतीति । यदेतत् पौर्णमासीनाम कर्म्म, तस्यैतद् रूपम् । अग्निर्देवता, पुरोडाशो द्रव्यमिति । अत आग्नेयादिभिर्गुणो विधीयते इति ॥ ५ ॥ पूर्वपक्षः ॥

**चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥**

कर्म्मचोदना वा आग्नेयादय स्युः । कुतः ?। गुणानां युगपच्छासनात् । एकेनैव वाक्येनात्रानेको गुणो विधातुमिष्यते भवता। न च शब्दान्तरेण चोदिते कर्म्मण्यनेको गुण परस्परसम्बन्धे चाऽसति शक्यते विधातुम् । कथम् । यदि तावत् पौर्णमास्यामष्टाकपालो भवतीति सम्बन्धो विवक्षित , न तदाऽयमर्थोऽष्टाकपालः सत्तयाऽभिसम्बध्यते । इति कस्तर्ह्यष्टाकपालः । पौर्णमास्याऽभिसम्बध्यत इति तत्र तदा भवतिर्वर्त्तते, तदानीमाग्नेय इत्ययमस्यान्तिकादप्युपनिपति-

तो भवति सम्बन्धाभावान्नानेन सम्बन्धुमर्हति, अष्टाकपाल आग्नेयो भवतीति। अथाग्नेय पौर्णमास्यां भवतीति विवक्ष्यते तदाग्नेयपुरोडाशयोरसम्बन्ध एव स्यात्। अथ पौर्णमास्यामष्टाकपालस्याग्नेयता विधीयते। वक्तव्यं, केन तस्यामष्टाकपालो विहित इति। अथ तस्यामाग्नेयस्याष्टाकपालता तथाप्येष दोष। अथ पौर्णमासीत्युभाभ्यां सम्बद्ध्येत। परस्परेण द्रव्यदेवतयोरसम्बन्ध एव स्यात्। अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या सम्बद्ध्येयातामित्युच्यते आग्नेयोऽष्टाकपालो य स पौर्णमास्यां भवतीति। तस्याऽप्रसिद्धत्वादेतदप्ययुक्तम्। अथ केनचिदग्नये सङ्कल्पितः पौर्णमास्यां विधीयते। तथापि देवताया अविधानाद्रूपाभाव एव। अथाऽग्निर्देवता भविष्यतीति कश्चिद् ब्रूयात् स वक्तव्य, मिथश्चानर्थसम्बन्ध इति न हि आग्नेयशब्दोऽनुवादो विधिश्च भवतीति। कल्पयिष्यामो देवतामितिचेन्न। असति विधाने देवताया अभावात्। सम्बन्धिशब्दोऽयं देवतेति। स एवाग्निरष्टाकपालस्य देवता, नाज्यस्य। तस्मादवश्यमाग्नेयाष्टाकपालसम्बन्धो विधातव्य। स एष यागो भवतीति तेन पौर्णमासीयागस्याऽपरो याग सम्बन्धी विधीयते, न द्रव्यं, देवता वा न च यागस्य यागाऽन्तरं रूपं भवति। अतो रूपावचनात् पौर्णमास्यमावास्यासंयुक्तौ नापूर्वयो कर्मणोर्विधातारौ। यत्तूक्तं, पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागाननुवदितुं शक्नुतो, नाञ्जस्येनेति। नैष दोष यदा आञ्जस्येन शब्दार्थो नावकल्पते, तदा लक्षणयाऽपि कल्प्यमान साधुर्भवति। यथा, अग्नौ तिष्ठति, अवटे तिष्ठति, अग्निसमीपे अवटसमीपे तिष्ठतीति भवति संव्यवहारः। लक्षणापि हि लौकिक्येवेति॥ ६॥ ॥ उत्तरम्॥

## व्यपदेशश्च तद्वत्॥ ७॥

उग्राणि ह वा एतानि हवींषि अमावास्यायां सम्भ्रियन्ते, आग्नेयं प्रथममैन्द्रे उत्तरे इति समुच्चयं दर्शयति आग्नेयादीनां गुणत्वं विकल्प स्यात्। तत्राग्नेयं प्रथमम्, ऐन्द्रे उत्तरे द्वे इति व्यपदेशो नावकल्पेत। विकल्पे सम्भारपौर्वापर्य्यानुपपत्तिरिति॥ ७॥

## लिङ्गदर्शनाच्च॥ ८॥

लिङ्गं च दृश्यते, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावा-

स्यायामिति॥८॥ यु०॥ आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम्॥३॥

पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजतीति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति। तत्र सन्देह । उपांशुयाजमन्तरा यजतीति किं विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचक, अथ वा अपूर्वस्य यागस्येति तत उच्यते। पौर्णमासीवदुपांशुयाजो भवितुमर्हति कुत । नामसम्बन्धात्। नामसम्बद्धो हि विशिष्टो याग. श्रूयते उपांशुयाजसंज्ञकः। न च द्रव्यदेवते रूपं, प्रकृताश्चोपांशुगुणका यागा विद्यन्ते । तस्मात् समुदायशब्द इति॥ ननूपांशुगुणक यागान्तरम् उपांशुत्वेन रूपेण रूपवद् विधीयते । न एवञ्जातीयक शब्द उपांशुविशिष्ट यागं शक्नोति वक्तुम् । उपांशुयाग इति हि तस्य वक्ता । चजो कुघिण्ण्यतोरिति कुत्वेन भवितव्यम् । अव्युत्पन्न पुनरुपांशुयाजशब्द. । तस्मान्न रूपवद् यागान्तरम् । अथापि नामसयुक्तं यजतिसामान्यमेव, तथाप्यनुपदिष्टदेवताद्रव्यरूपं न यागान्तरं प्रतिपद्यमर्हति। नन्वेवं सति प्रकृतानामप्यवाचक प्राप्नोति । मा भूदुपांशुयाजशब्द., यजतिशब्दो भविष्यति। तथा सति उपांशुयाजशब्देऽप्यनुवादत्वादनाज्ञस्येऽपि न दोषः ॥ ९ ॥ ॥ पूर्वपक्ष ॥

चोदना वाऽप्रकृतत्वात् ॥ १० ॥

कर्मान्तरस्य वाचकः स्यात्, उपांशुयाजं यजतीति । कुत । प्रकृताना यागानामभावात्। न चेत् प्रकृता विद्यन्ते, कस्य समुदायं वक्ष्यति । ननु इदानीमेवोक्तं विष्ण्वादिगुणका. प्रकृता यागा विद्यन्ते इति। न विद्यन्ते । न हि ते विधया, विष्णुरुपांशु यष्टव्य इत्येवमादृय । अर्थवादा हि ते। कथम्। अस्मिन् वाक्ये विध्यन्तरस्य भावात्। उपांशुयाजमन्तरा यजतीत्येतदेतस्मिन् वाक्ये विधीयते। यदीमेऽपि विधीयेरन्, भिद्यते तर्हि वाक्यम् । अपि च यागस्य विष्ण्वादीनाञ्च सम्बन्धोऽत्र गम्यते वाक्ये, न च यागस्य विधानम्। ननु चोपांशुयाजमन्तरा यजतीत्यत्राप्यन्तरालसम्बन्धोऽवगम्यते। बाढम्। स तु विधीयते उपांशुत्वादिसम्बन्ध । एकं हीदं वाक्यम

नैकं विधातुमर्हति । कथम् । जामि वा एतद् यज्ञस्य क्रियते इत्येवमुपक्रम्य तद्वाक्यम्, अजामित्वायेत्येवमन्तम् । तस्य मध्ये समाम्नातं विष्ण्वादिवाक्यम् । तेन सम्बध्यमानं न वाक्यान्तरं भवितुमर्हति । तस्माद्, विष्णुरुपांशु यष्टव्य इत्येवमादयो न विधय, किं तर्ह्यर्थवादाः । क पुनरर्थवादः । आग्नेयाग्नीषोमीययोर्निरन्तरं क्रियमाणयोर्जामितादोष उक्तः । तं भिषजितुम्, उपांशुयाजमन्तरा यजतीति विहितम् । कथं तेन भिषजिष्यते । तस्मिन् क्रियमाणे ज्ञायत एव, यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ चेति । ततश्च व्यवधानादजामिताऽवगम्यत एव । तेनाजामितार्थवादं वक्ष्यामीति विष्ण्वादिसम्बन्धोऽनूद्यते, न त्वन्तरालसम्बन्धस्यान्यत् प्रयोजनमस्त्यतो विधानात् । कथं विष्ण्वादयो यष्टव्या इत्येतदवगम्यते । यष्टव्यान् अयष्टव्यान् वा विष्ण्वादीनुपांशुयाजाभिष्टवाय सङ्कीर्त्तयतीति गम्यते ॥

तत्र केचित्तावदाहु, प्राप्ता एवेति । कुत । शाखान्तरे विधानादिति । यद्यप्यप्राप्तिस्तथाप्युपांशुत्वासामान्यात् प्रजापतिर्देवता विष्णुश्चेत्यनुवादावेव । उपांशुधर्माणौ हि विष्णुप्रजापती । तस्माद् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते, तद् उपांश्वेव क्रियते इत्येवमादिसङ्कीर्त्तनान्मन्त्रसमाम्नानाच्च विष्णुमप्राप्तमपि प्राप्तमिव वदेत् । अग्नीषोमयोस्तु विधायकमुदाह्रियते, एतावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्निति । तस्माद्यागान्तरम् ॥१०॥ सि०॥

## गुणोपबन्धात् ॥ ११ ॥

यदुच्यते, न ज्ञायते, कतमोऽसावुपांशुयाजसंज्ञको याग इति । यस्यायं गुण उपबद्धः । उपांशु पौर्णमास्यां यजन्निति । तस्मान्न दोषः ॥ ११ ॥ ॥ आशङ्कानिरासः ॥

## प्राये वचनाच्च ॥ १२ ॥

प्रधानकर्म्मप्राये वचनं, प्रधानकर्मतामुपोद्बलयति । यथा, अग्र्यप्राये लिखितं दृष्ट्वा भवेदयमग्र्य इति मतिः । तस्मान्न समुदायशब्दः इति ॥ १२ ॥ ॥ युक्ति ॥ उपांशुयाजापूर्वताधिकरणम् ॥ ४ ॥

## आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

आघारमाघारयीति श्रूयते । तथा इमान्यपराणि, ऊर्ध्वमाघारयति, सन्ततमाघारयति, ऋजुमाघारयतीत्येवमादि । इदञ्च, अग्नि-

होत्रं जुहोति, तथा, दध्ना जुहोति, पयसा जुहोतीत्येवमादि । तत्र सन्देह । किम् ऊर्ध्वमाघारयति, दध्ना जुहोतीत्येवमादिभिराघार होमाश्च विहिता । तेषाम् आघारमाघारयति, अग्निहोत्रं जुहोतीत्येतौ समुदायानुवादौ, उतैतावेवापूर्वयोराघारहोमयोर्विधाताराविति । किं तावत् प्राप्तम् । नापूर्वयोर्विधी इति । कुत । अरूपत्वात् । न ह्येतयो पूर्वेभ्यो होमाघारेभ्यो विशिष्टं रूपमस्ति । यत कर्मान्तरमध्यवसेयम् । अत प्रकृतत्वात् प्रकृतानुवादौ ॥ १३ ॥ ॥ पूर्वपक्षः ॥

## संज्ञोपबन्धात् ॥ १४ ॥

संज्ञोपबन्धश्च भवति । अग्निहोत्रं नाम होमं जुहोतीति, आघारसंज्ञकं कर्म करोतीति सञ्ज्ञाविशिष्टावाघारहोमौ विधीयेते । न च विज्ञायेते, कोऽसावाघारो नाम कर्मविशेष, कश्चाग्निहोत्रसंज्ञक इति । ननु विज्ञायते, आघारणमाघार, हवनं होम । यद्याघारणसामान्यं होमसामान्यञ्च विधीयेते, विज्ञातपूर्वौ तर्ह्याघारहोमौ । तेनानुवादौ । अथाव्युत्पन्ना उभयोरपि संज्ञा, तथापि नाघाराग्निहोत्रसामान्यमुच्येत । विशेषाश्रयत्वात् सञ्ज्ञाया. । न च स विशेषो गम्यते इत्यपूर्वावाघारहोमविधीनामत्रकल्प्येते । अपिच कथं क्रिया साधनशब्देनोच्येत । ईप्सिततमं हि यत् साधनं तद् द्वितीयान्तेनोच्यते । क्रिया तिङन्तेन । अनुवादपक्षे क्रियाणां समु ायोऽर्थान्तरं तदीप्सिततमं साधनं भविष्यति ॥ १४ ॥

## अप्रकृतत्वाच्च ॥ १५ ॥

न च प्रकृतमपि द्रव्यदेवतमाघारे विद्यते । येन रूपवान् स्यात् । तस्मादेतावपि समुदायशब्दाविति ॥ १५ ॥ ॥ युक्ति ॥

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्. तत्सन्निधेर्गुणार्थेन पुनःश्रुतिः ॥ १६ ॥

नचैतदस्ति, समुदायशब्दाविति । कर्मान्तरचोदने स्याताम् । कुत । शब्दार्थस्य प्रयोगभूतत्वात् आघारयति. जुहोतीति । होमाघारौ प्रयोक्तव्याविति शब्दार्थ । तेन कर्मान्तरे विधीयेते इत्यवगच्छाम । आघाराग्निहोत्रशब्दौ च हवनाघारणसामान्यवाचिनौ प्रज्ञातौ । अतो नाविज्ञातार्थौ । तेन रूपवन्तौ सन्तौ विधीयेते ॥

यदुक्तम् । ऊर्ध्वमाघारयति, दध्ना जुहोति इत्येवमादिभिर्विहि-

तत्वादनुवादाविति । नैतदेवम् । न ह्येते होमाघारौ विधातुं शक्नुवन्ति । ऊर्ध्वमाघारयति, दध्ना जुहोतीति च । नैतदुक्तं भवति— आघारः कर्त्तव्य, होमः कर्त्तव्य इति, किं तर्हि ऊर्ध्वमाघारसम्बन्धः कर्त्तव्यः, दधिहोमसम्बन्धः कर्त्तव्य इति । तस्मादप्राप्तत्वान्नानुवादौ । ननु सम्बन्धे विहिते अर्थाद्धोमाघारौ भविष्यतः । नैतदेवम् । अस्मिन् हि सति विधानेन सम्बन्धः । तस्मान्नार्थादापद्येते होमाघारौ, अतोऽपूर्वौ विधीयेते इति ब्रूमः ॥

नन्वाघारयति, जुहोतीति होमाघारगतो व्यापारः श्रूयते, न दध्यूर्ध्वतादिसम्बन्धः । सत्यं न श्रूयते । तत्सन्निधेर्गुणार्थेन व्यापारश्रवणमवकल्पिष्यते । ननु पदार्थान्तरगतं व्यापारं श्रुतिर्न शक्नोति वदितुम् । सत्यमेवमेतत्, स्वपदार्थगतं वक्ष्यति, तं तु स्वपदार्थं गुणशब्दो विशेक्ष्यति, स एव विशिष्टः प्रत्येष्यते इति भवेदेतद् विशिष्यात् स्वपदार्थं गुणशब्दो, न त्वेष गुणतो व्यापारः प्रतीयेत । तत्र किं भविष्यति । अव्याप्रियमाणेऽपि गुणे शब्दार्थोऽवक्लप्तो भविष्यति । गुणवचनसान्निधिरिदानीं किमर्थः । अनर्थकस्तु । कथं पुनरनर्थको नाम वेदो भवितुमर्हति । सत्यर्थे नानर्थकः, असति त्वर्थे किमन्यदुच्येत । एवं तर्हि वाक्याद्भविष्यति, श्रुत्यर्थे सति न वाक्यार्थोऽवकल्प्यते । सत्यमेवमेतत् । अविवक्षिते त्ववकल्पिष्यते । कथमविवक्षा । गुणवचनस्य अप्रमादपाठात् । स्वपदार्थस्य च शब्दान्तरेण विहितत्वात् । तस्मात् सिद्धं, गुणार्थेन दध्ना जुहोतीत्येवमादीनां पुनः श्रुतिः । जुहोतेरुच्चारणं चानुवादो गुणसम्बन्धार्थः । यदि जुहोतीत्यनुवादः, केनेदानीं गुणो विधीयते दधिशब्देनेति मा वोचत । नन्विदानीमेव वाक्याद् गुणव्यापारो गम्यते इत्युक्तम् । सत्यमेवमेतत् । अविधीयमानस्तु कुतो गम्यते इति । प्रमाणमस्य नावगम्येत । असति प्रमाणे व्यामोहः स्यात् । एवं तर्हि विधायकौ जुहोत्याघारयतिशब्दौ । कस्य तर्ह्यनुवादः । धात्वर्थस्येति ब्रूमः । यदि विधायकौ, पूर्वमेव विहिते स्वार्थे, किमर्थं पुनरुच्चार्येते । वाक्यार्थो यस्तं विधातुमित्यदोषः । तस्मात् कर्मान्तरचोदने । यदुक्तं, नास्त्याघारे प्रकृतं द्रव्यदेवतमिति । किमेवं सति द्रव्यदेवतेन, यदा प्रसिद्धार्थाभिधानान्निर्ज्ञातमेवास्य रूपम् । अपि च, चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येत्याज्यमस्य द्रव्यं, मान्त्रवर्णिको देवताविधिः । इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृशतु

महतो यज्ञो यज्ञपते इन्द्रवान् स्वाहेत्याघारमाघारयतीति । एवमसा-विन्द्रवान् यद्यस्य इन्द्रो देवता । तद् यदि देवताभिधानमेतदाघारस्य, ततोऽनेनाघारः कृतो भवति । तस्मात् कर्म्मान्तरे, न समुदायशब्दा-विति सिद्धम् ॥ १६ ॥ ॥ आ० नि० ॥ आघाराद्यपूर्वताधिकरणम् ॥५॥

द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥

ज्योतिष्टोम श्रूयते, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदमामनन्ति । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया, अथ वक्षस इति । यथा सोमेन यजेतेति । तत्राप्यैन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णातीत्येवमादि । तत्र संशयः, किमवद्यति-गृह्णाति-चोदितानां कर्म्मणामेवालभतियजती समुदायस्या-नुवदितारौ, अथापूर्वयोः कर्म्मणोर्विधाताराविति । किं तावत् प्राप्तम् । समुदायस्येति । कुतः । ये इमे आलभतियजतिभ्यां कर्म्मणी विधी-येयातामिति चिन्त्येते, पूर्वमेव ते अवद्यति-गृह्णातिभ्यामवगमिते । न चावगमितोऽर्थो विधीयते । हृदयादींस्तु पशुशब्देनानुवदति, सोमशब्देन च रसम् । तस्मात् सोमेन यजेतेत्यनुवादो यजतिः । यजेत स्वर्गकाम इति फलसम्बन्धार्थः । पशुमालभेतेति चालभति-रग्नीषोमसम्बन्धार्थः । अपि च, दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णातीति समुच्चयो दृश्यते । तथा आश्विनो दशमो गृह्यते, तृतीयो हूयते इति च क्रमः । यदि चापूर्वौ यागौ विधीयेते, तत्र ऐन्द्रवायवा-दिभिर्देवता विधीयेरन् । यथा, खादिरे बध्नाति पालाशे बध्नाति रौहितके बध्नातीति । तत्र क्रमसमुच्चयदर्शनेनोपसध्येयाताम् । अथ पुनरस्मिन् समुदायवचने, यजतौ सम्यगेतदवक्लृप्तं भवति । तस्मा-त् समुदायानुवादौ ॥ एवं प्राप्ते ब्रूमः ॥ अपूर्वयोः कर्म्मणोर्विधानचो-दने पशुसोमयोः । कुतः । सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धो, न रसे, आकृतिवचनो हि सोमशब्दो न व्यक्तिवचनः । तथा शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्दमाकृतिवचनमुपच-रन्ति । न चैवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते । येषामिमौ समुदायस्यानुवदितारौ भवेयाताम् । ननु पशुविकारो हृदयादि प-शुशब्देनाग्नीषोमसम्बन्धार्थमनूद्यते । नैतदेवम् । पशुरग्नीषोमीयो

भवतीत्येतावदुच्यते, नायं प्रकृतो हृदयादिः पशुरिति । तत्र यदि, लौकिकस्य पशोर्ग्रहणं ततो मुख्य पशुशब्दः । यदि हृदयादे, ततो जघन्यो विकारसम्बन्धेन । तथा, सोमशब्दोऽपि विकारसम्बन्धेनानुवादः स्यात् । तस्मादपूर्वे कर्म्मणी विधीयेयातां, नानुवादौ । अथ इन्द्रवायवादिषु प्रकृतेषु यागेषु लता विधीयेतेति । उच्यते । न सा शक्या वाक्येन ऐन्द्रवायवी ज्ञातुम् । श्रुत्या हि रस ऐन्द्रवायवः । तस्माद् द्रव्यसयोगवचन प्रकृतेषु यागेष्वपि सत्सु विधातुमनुवदितुं वा न शक्नुवन्ननर्थकः स्यात् । तस्मादपूर्वकर्म्मणी विधीयेयातां, न प्रकृतानामनुवादाविति ॥ १७ ॥ ॥ सिद्धान्त ॥

## अचोदकाश्च संस्काराः ॥ १८ ॥

एवं तावत् प्रकृतेषु सत्स्वपि नानुवादावित्युक्तम् । अथेदानीं, प्रकृता एव यागा न सन्तीत्युच्यते । कुतः । अचोदका संस्काराः । न चैन्द्रवायवादिभिर्यागा विधीयन्ते । तेन ग्रहणमुपकल्पनमात्रं दृष्टार्थम्, उपकल्प्यमाने तु देवतासङ्कीर्त्तनमदृष्टाय । अत ऐन्द्रवायव गृह्णातीतीन्द्रवायुभ्यां सङ्कल्पयतीत्येतावदुक्तं भवति । तत्र यागमन्तरेण सङ्कल्पयतीत्येतन्न युज्यते इति यागः कल्प्येत । स एवाऽऽम्नातो यागो यस्मिन् सति सङ्कल्पोऽवकल्प्येत । तस्मान्न, ऐन्द्रवायवं गृह्णातीत्येवमादिभिर्यागा विधीयेरन्, प्रकृतानां यागानामभावान्न समुदायशब्दो यजतिः । नथालभतिशब्द इति ॥ १८ ॥ ॥ आ० नि०

## तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥

पशौ वृत्ता कथा दशमे पुनरुद्भविष्यति । सोम इदानीं वर्त्तते । कथं क्रमसमुच्चयाविति । इन्द्रवाय्वाद्या देवता नैवं श्रूयन्ते । इन्द्रवायुभ्यां यागो निर्वर्त्तयितव्य, मित्रावरुणाभ्यां यागो निर्वर्त्तयितव्य इति । यद्येवमश्रोष्यन्त, यागं प्रति देवता व्यकल्पिष्यन्त । केवलया हि देवतया तदा यागो निर्वर्त्त्यते इति विहितमभविष्यत् । अथ पुनरिमा अदृष्टार्थे गृह्णातिसंस्कारं प्रति देवता विधीयन्ते । तत्रेन्द्रवायुसङ्कल्पादन्यो मित्रावरुणसङ्कल्पः । तेन गृह्णातौ तत्कृताददृष्टाददृष्टान्तरमुत्पादयति । एवमपरेष्वपि ग्रहणेषु तस्मात् समुच्चयः । ग्रहणन्तु नियतपरिमाणपूर्ध्वपात्रेषु प्रादेशमात्रेषु नियतपरिमाणेषू-

दकक्कलशेषु संस्कृतस्य दशामुष्टिपरिमितस्य कृत्स्नस्य सोमस्य नाव- कल्पते । यद्यपि चावकल्पेन तथापि नित्यवद्विहितानां देवतानां विक- ल्पपक्षे तावत्प्रयोगवचनो मा बाधीति अवयवग्रहणमेव न्याय्यम् । कृ- त्स्नग्रहणे हि तदेवेन्द्रवायुभ्यां सङ्कल्पितं, तदेव मित्रावरुणाभ्यामिति नावकल्पेत । तस्मात् कल्पनभेदात् पृगवास्थितः सोमो नानादेवत- त्वादेव नैकयेन शक्य. कर्तुम् । न चासति देवतायागे देवताभ्यः शक्यते सङ्कल्पयितुम् । तस्मादवश्यं यथा सङ्कल्पिता देवता यष्ट- व्याः । तासु यज्यमानासु ज्योतिष्टोमेन यजेतेति श्रुतो यागो निर्वृत्त एव भवति । न देवतान्तरमाकाङ्क्षति । कृत्स्नेन च दशमुष्टिना सो- मेन याग श्रुत', सोऽसति अभ्यासे नावकल्पत इति अर्थात् स गुणो भ- विष्यतीत्यभ्यासतव्यो यागः । न ह्यनभ्यस्तः सर्वाभिर्देवताभि सर्वेण च सोमेन सम्पन्नो भविष्यति।तस्मिँश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्ता- वेव भवतः । तस्मात्तयोर्दर्शनं युज्यते एत्रेति ॥ १९ ॥ ॥ उपसंहार ॥

संस्कारस्तु न भिद्येत, परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् ॥ २० ॥

यदप्युच्यते- यथा खादिरे बध्नाति, पालाशे बध्नातीति खादिरा- दयः संस्कारं विकल्पन्ते तद्वद्देवता विकल्पयिष्यन्ते इति । तच्च नैवं युक्तम् । तत्र संस्कारमभिनिर्वर्त्तयितुं खादिरादयः श्रूयन्ते । यदि च इन्द्रवाय्वाद्या अपि ग्रहदेवता यागमभिनिर्वर्त्तयितुं श्रूयेरँस्ततोऽत्रा- पि विकल्प स्यात् । न त्वेता यागे श्रुताः । तस्मात् समुच्चीयेरन् ॥ ॥ २० ॥ आशङ्कानिरास ॥ पशुसोमापूर्वताधिकरणम् ॥ ६ ॥

पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात् ॥ २१ ॥

अस्ति वाजपेय., वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र प्राजा- पत्याः पशव. । सप्तदश प्राजापत्यान् पशूनालभते सप्तदशो वै प्र- जापतिः प्रजापतेराप्त्यै श्यामास्तूपरा एकरूपा भवन्ति, एवमेव हि प्रजापति समृद्ध्यै । तत्र संदिह्यते । किं सप्तदशैतानि कर्मा- णि, अथ सप्तदशपशुगुणकमेकं कर्मेति । किं तावत् प्राप्तम् । एकं कर्मेति । कुत । प्रजापतये सप्तदश पशव सङ्कल्प्यन्ते, किमेकं या- गमभिनिवर्त्तयितुम् उत बहूनिति संशये, एकमिति न्याय्यम् । यो हि बहून् यागान् कल्पयति, कल्पयत्यसावेकम् । तत्रैकस्मिन्नेव परिक्लृप्ते सप्तदशानामेव पशूनां परिकल्पनमुपपन्नं भवति । केन च द्वितीयादी-

न् यागानवकल्पयेम । एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना भवति । तस्मादेको यागः सप्तदशभि पशुभिर्निर्वर्त्यते ॥

एवं प्राप्ते ब्रूम ॥ संख्यया कर्म्मभेदो भवत् । पृथक्त्वे पशूनां सति सप्तदशसंख्या निविशेत । तच्च पशूनां पृथक्त्वं बहुषु यागेष्ववकल्पते । नैकस्मिन् । कथम् । एकादशभिरवदानैरसौ यागो निर्वर्त्तयितव्य इत्येवं चोदकः प्रतिदिशति । तानि चैकस्मादेव पशोरवाप्यन्ते । तत्र द्वितीयादेरालम्भो नावदानसम्पादनाय भवितुमर्हति । एकमालभ्यमानमन्वालभ्येरन्नदृष्टार्थायापरे । तथा सत्यतदर्थत्वान्न ते प्राजापत्या भवेयु. । तत्र प्राजापत्यानिति श्रवणमुपरुध्येत । तेनैकस्मिन् पशौ पृथक्त्वे निवेशिनी सप्तदशसंख्या नावकल्प्येत । बहुषु यागेषु बहुभिरेवावदानगणै. प्रयोजनम् । तेन सप्तदशभ्यो यागेभ्य सप्तदश पशूनुपाददीरन् तत्र संख्यासामञ्जस्यं भविष्यति । तस्मात् सप्तदश यागा ॥ नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते वचनात् । नैतदेवम् । पशुषु हिंसासंख्या श्रूयते, नावदानगणेषु । अवदानानि हवींषि यागसाधनानि, न पश्वाकृतिः । सा ह्यवदानप्रकृतिद्रव्य विशिंषन्ती प्रकृतौ प्रधानस्योपकृतवतीति विकृतावप्यवदानप्रकृतिद्रव्यं विशिंषन्ती प्रधानस्योपकरिष्यति तत्र च पशोः सप्तदशसंख्या विकारिका, नावदानगणस्य । तस्मादेकस्मै अवदानगणायैकः पशुरालब्धव्य. प्राप्नोति । तत्र सप्तदशसंख्या नोपपद्यते एवमेवावकल्पिष्यते । यदि श्रृङ्गाभिप्राया वर्णाभिप्राया रूपाभिप्राया वा अभविष्यन् सप्तदशपशवः श्वेत कृष्णो रोहित इत्येवमादय तेषामन्यतमो गृह्यते इति । अथवा तूपराः श्रृङ्गिण एकश्रृङ्गा इत्येवमादयस्तेषामन्यतम इति । ते हि श्यामास्तूपरा एकरूपाः श्रूयन्ते । तदेषु बहुषु यागेषु उपपद्यते, नैकस्मिन् । तस्मात् सप्तदश यागा इति । प्रयोजनमेकस्मिन्नष्टे दुष्टे कृत्स्न. पशुगण आवर्त्तेत, एकमालभ्यमानमन्वालभेरन् पूर्वपक्षे अदृष्टार्थम् । सिद्धान्ते एक एव पशुरावर्त्तते न हि कर्म्मभेदे पशु पश्वन्तरमाकाङ्क्षतीति ॥ २१ ॥

संख्याकृतकर्मभेदाधिकरणम् ॥ ७ ॥

## संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरिति । अत्र संदेह. । किमेभिर्नामधेयै. प्रकृतं ज्योतिष्टोमं सङ्कीर्त्य तत्र सहस्र-

दक्षिणादिर्गुणो विधीयते, अथ वा वक्ष्यमाणविशेषाणि कर्मान्तराण्युपदिश्यन्ते इति । किं प्राप्तम् । प्रकरणानुग्रहात् प्रकृतस्य गुणविधानमिति । ननु वाक्यसामर्थ्याज्ज्योतिरादीनामेते गुणा विधायिष्यन्ते । नैष दोषः । ज्योतिष्टोमस्यैवैतानि वाचकानि । ज्योतिरिति ज्योतिष्टोमस्य प्रतीकमुपादीयते, विश्वज्योतिरिति । त्रिवृदादीन्यस्य ज्योतींषि वाक्यशेषसङ्कीर्त्तितानि । तानि सर्वाण्यस्य । तेनाऽसौ विश्वज्योतिः सर्वज्योतिश्च ज्योतिष्टोम इत्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूमः ॥ संज्ञा हि निश्चो भेदिकाः तेषां ज्योतिराद्याः । उत्पत्तिवाक्ये ह्येताः श्रूयन्ते । तासामिमाः पुनः श्रुतयः । तस्माद्यैष ज्योतिरित्यपूर्वस्य कर्म्मणो विधायकं वाक्यम् । अनुवादे हि सति अप्रवृत्तिविशेषकरमनर्थकं स्यात् । प्रकृतस्य च गुणविधाने विकल्पो भवेत् । तत्र पक्षे बाधः । न च ज्योतिरादयो ज्योतिष्टोमस्य वदितारः । समुदायान्तराणि ह्येतानि । न चावयवेन समानेन समुदायान्तरं तदर्थमेव भवति । यथा शालाशब्दो गृहवचनः । तत्र न शालाशब्दसामान्यान्मालाशब्दादयोऽपि गृहवचना भवन्ति । यत्तु ज्योतिष्टोमस्य ज्योतिरिति प्रतीकमुपादीयते इति । प्रकरणसामर्थ्याद्धि तत्र ज्योतिष्टोमशब्देन परोक्षेणैकवाक्यता भवेत् । सा प्रत्यक्षं ज्योतिःशब्देन सहैकवाक्यतां बाधेत । न चैतन्न्याय्यम् । वाक्यं हि प्रकरणाद् बलीयः । अथ पुनरयं द्योतनार्थत्वाद्वा ज्योतिष्मत्वाद्वा कर्मान्तरे वर्त्स्यति । यच्च त्रिवृदादीनि ज्योतींषि तेषां साकल्यवचनो, विश्वज्योतिः सर्वज्योतिरिति चेन्नेति ब्रूमः ॥ न हि त्रिवृदादिषु ज्योतिःशब्दः प्रसिद्धः । एवं ब्रुवन् प्रसिद्धिं बाधेत । यत्तु वाक्यशेषाज्ज्योतिःशब्दस्त्रिवृदादिवचन इति । तस्मिन्नेव वाक्ये स तत्र प्रयुक्त इति गम्यते प्रमाणान्तरेण, न शब्देन । यत्र तु तत्प्रमाणान्तरं नास्ति, न तत्र वर्त्तितुमर्हति । यथा सिंहो देवदत्त इति सिंहशब्दो देवदत्तवचनः प्रमाणान्तरेण, न तु सिंहमालभेतेति यत्र, तत्र तु तत् प्रमाणान्तरं नास्ति । तस्मान्न विश्वज्योतिः सर्वज्योतिरिति च ज्योतिष्टोमस्य वदितारौ । न चेज्ज्योतिष्टोम उच्यते, सर्वाणि कर्मान्तराणि ॥ २२ ॥ ॥ संज्ञाकृतकर्मभेदाधिकरणम् ॥ ८ ॥

गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

चातुर्मास्येषु वैश्वदेवे समामनन्ति । तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । तत्र सन्दिह्यते, किमामिक्षागुणके कर्म्मणि वाजिनं गुणविधिरुत तस्माद् वाजिनगुणकं कर्मान्तरम् । किं प्राप्तम् । गुणविधिरिति । कुतः ? । वाजेनान्नेन आमिक्षया वाजिनो विश्वेदेवास्ताननूद्य वाजिनं विधीयते तेनोभयं वैश्वदेवम्, आमिक्षा वाजिनं च । तस्मिन्नेव च कर्म्मणि वाजिनगुणविधिः । यथा अग्निहोत्रं जुहोतीत्युक्ते, दध्ना जुहोति, पयसा जुहोतीति ॥ एवं प्राप्ते ब्रूमः ॥ गुणश्चाप्रकृतेन देवताभिधानेन सम्बध्यमानः कर्मान्तरं विदध्यात् । समे हि तदैते वाक्ये भवतः । उभे अपि अपूर्वयोर्यागयोर्विधातृणी । कथं पुनरपूर्वदेवताभिधानं, यदेदानीमेवोक्तं, विश्वेषां देवानामनुवादो वाजिनामिति । तदुच्यते । इह विश्वेषां देवानां देवतात्वं क्वचिच्छ्रुत्या, क्वचिद् वाक्येन । तद्धितनिर्देशे श्रुत्या, चतुर्थीनिर्देशे वाक्येन । यत्र श्रुत्या देवतात्वं, तत्रामिक्षया सहैकवाक्यत्वम् । यत्र चतुर्थी, तत्र वाजिनेन । तत्रैषामेकत्र श्रुत्या देवतात्वम् । वाक्येन द्रव्यविशेषसम्बन्धः । एकत्रोभयमपि वाक्येन । तदिह देवतात्वं प्रति श्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी इत्यामिक्षावाक्ये देवतात्वं विश्वेषां देवानां, न वाजिनवाक्ये इत्यध्यवसीयते । तेनावगम्यते । अप्रकृतेन देवतापदेनास्य सम्बन्ध इति । तस्मात् कर्म्मान्तरमिति ॥ २३ ॥ ॥ देवताभेदकृतकर्मभेदाधिकरणम् ॥ ९ ॥

अथ यदुपवर्णितं, यथाऽग्निहोत्रं जुहोतीत्युक्ते दध्ना जुहोति इत्येवमादयो गुणविधय इति । तत्रोच्यते ।

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥**

युक्तं यद् तत्र गुणविधानं, न तत्राप्रकृतेन केनचिद् गुणेन सम्बन्धः । प्रकृतेन त्वस्ति यागेन । तस्मादनुपवर्णनमेतत् ॥

अथ वा अधिकरणान्तरम् । दध्ना जुहोतीत्येवमादीनि कर्म्मान्तराणि, विकल्पपरिजिहीर्षयाऽवकल्प्यन्ते । तदेव तु कर्म्म जुहोतीति शब्दादवगम्यते, न कर्मान्तरम् । तस्मात् तत्रैव गुणविधिः, वचनाद्विकल्पश्चेति सिद्धम् ॥ २४ ॥ ॥ पूर्वाधिकरणशङ्कानिरासः ॥ यद्वा द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणम् ॥ १० ॥

**फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ॥२८॥**

अग्निहोत्रं प्रकृत्य समामनन्ति, दध्नेन्द्रियकामस्य जुहुयादित्येवमादि । तत्र संशयः । किमग्निहोत्रहोमाद्धोमान्तरं दध्यादिहोम उत दध्यादेर्गुणात् फलमिति । किं प्राप्तम् । होमान्तरमिति । कुतः । फलमिह श्रूयते । तच्च कर्मणो न्याय्यम् ॥ किं दृष्टं हि कर्मण फलम् । कृष्यादितो व्रीह्यादि । नेति ब्रूमः । न ह्येतद् दृष्टेनानेन सिद्ध्यति । यदि दर्शनं हेतु फलज्ञाने, कृष्यादौ पदार्थे तद्दर्शन, न होमे । अथ कृषौ दृष्टमन्यत्रापि भवति । द्रव्यादपि प्रसज्ज्यते । अथ कृषिसदृशाद् भवतीत्युच्यते कृषिसदृशो होम, क्रियात्वाद्, न द्रव्यम्, असदृशं हि तदिति । होमोऽप्यसदृशः । मन्त्रदेवतादिसाधनत्वाद्धोमस्य लाङ्गलादिसाधनत्वाच्च कृषे । त्यागात्मकत्वाद्धोमस्य । पाटनात्मकत्वाच्च कृषेः । अथ किञ्चित् सादृश्यं गृह्यते । द्रव्यस्यापि सदनित्यमित्येवमादि किञ्चित् सादृश्यमस्ति । अथ द्रव्यादन्यत् सदृशतरमस्तीति कृत्वा न द्रव्यं सदृशमित्युच्यते । होमादप्यन्यत् कृषेः सदृशतरमस्ति दृष्टार्थमिति कृत्वा होमोऽप्यसदृशः स्यात् । नचैतत्सिद्धं, यत् क्वचिद् दृश्यते, तदन्यस्मिन् सदृशमात्रे अदृष्टमपि भवितुमर्हतीति । यद्धि यस्य कारणभूतं दृष्टं सिद्धे, तच्चेत् साध्येऽपि, कारणभूतमित्यवगम्यते । भवति तत्तस्य साधकम् । यन्न ज्ञायते कारणभूतमिति न तत् सदृशमपि साधकम् । तस्मात् सदृशमपि साधकमसाधकं चेति परीक्षितव्यमिति । अथ यत् कर्म तत् फलवद् दृष्टम् । होमोऽपि कर्म्म । तेनापि फलवता भवितव्यमिति । उपरते कर्म्मणि द्रव्याणां तत्संयोगानाञ्च द्रव्यान्तरं फलं दृष्टमिति द्रव्यमपि फलवत् स्यात् । अपिच कृषेर्नादृष्टमिति तत्सादृश्याद्धोमादपि नादृष्टं भवेत् । कृषिसादृश्याद्वा व्रीहिरेव भवेद्, नेन्द्रियम् । तस्मान्नैवञ्जातीयकेष्वेतद् भवति दृष्टाददृष्टसिद्धिरिति । कथं तर्हि होमान्न्याय्यं फलमिति । उच्यते । शब्देनावगम्यते तत्फलं, यत फलमिति शब्द आह । ततो न्याय्यं होमाच्च फलमिति श्रुत्या शब्देन गम्यते, दध्नः फलमिति वाक्येन । श्रुतिश्च वाक्याद् बलीयसी । तस्माद् होमात् फलमिति न्याय्यम् । दध्न. फलमिति चान्याय्यम् ॥ अपि च दधि उभयमसमर्थं कर्त्तुं, फलं साधयितुं होमञ्च । ननु कम्बलनिर्णेजनवदेतद्भ-

विष्यति । निर्णेजनं ह्युभयं करोति– कम्बलशुद्धिं, पादयोश्च निर्मलताम् । न ब्रूम एकस्योभयं प्रयोजनमभिनिष्पादयितुं सामर्थ्यं नास्तीति । किं तर्हि फले गुणभूतं दधि होमे चेत्येकं वाक्यं वदितुमसमर्थमिति । यदि फलं दध्ना कुर्य्यादिति ब्रूयात्, न दध्ना होममिति । अथ दध्ना होमं साधयेदिति ब्रूयान्न फलमिति । उभयवचने भिद्येत वाक्यम् । अभिन्नञ्चेदमुपलभ्यते । तस्मान्न गुणात् फलमित्यग्निहोत्रहोमाद्दधिहोमः कर्मान्तरमिति ॥ २५ ॥ ॥ पूर्वपक्ष ॥

## अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

तुशब्दात् पक्षो विपरिवर्त्तते । न कर्मान्तरं, किन्तु गुणात् फलमिति । कथम् । अतुल्ये ह्येते वाक्ये । अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्र कर्म्मसमभिव्याहृतं फलं स्वर्गकामो होमेन कुर्य्यादिति । दध्नेन्द्रियकामस्य जुहुयादिति गुणसमभिव्याहृतम् । न ह्यत्र होम इन्द्रियाय कर्त्तव्य इति प्रतीयते, किं तर्हि– दध्ना होम इन्द्रियकामस्येति । होमस्य दधिसम्बन्ध इन्द्रियाय, न होमस्योत्पत्तिः । य इन्द्रियकामः स्यात् स दध्ना होमं कुर्य्यादिति । कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्तेति । जुहुयादिति ब्रूमः ॥

ननु श्रुत्या होमसम्बद्धमेष पुरुषप्रयत्नं वदति, वाक्येन दधिसम्बन्धम् । न च, वाक्यं श्रुतिमपबाधितुमर्हति । न च युगपदुभयसम्बन्धो न विरुद्ध्यते । वाक्य हि तथा भिद्येतेति । अत्रोच्यते । ये भवदीयं पक्षमाश्रयेरंस्ते श्रुतिमपबाधेरंस्तराम् । अस्मदीये तु पुनः पक्षे जुहुयादितिधात्वर्थः केवलोऽपबाधितो भवति । युष्मदीये तु कृत्स्न एव दध्नेति शब्दः । तं चाप्रमाद्यन्तः समामनन्तीति गम्यते । नचैतत्प्रमत्तगीतमित्युक्तं– तुल्यं हि साम्प्रदायिकमिति । तस्मान्न कर्म्मसमभिव्याहृत फलम् । गुणसमभिव्याहृते तु न कश्चित् प्रमादपाठः । अवश्यं हि, जुहुयादिति दध्नेन्द्रियकामयो सम्बन्धविधानाऽर्थ वक्तव्यं भवति । ननूच्यमानेऽपि न केवल करोत्यर्थोऽवगम्यते । केवले न वचःप्रयोजनम् । स च होमसम्बद्धः । तस्मादसमञ्जसमिति । नेति ब्रूमः । होमसम्बद्धोऽप्यसौ करोत्यर्थ एव, केवलं त्वस्य होमसम्बन्धे विशेष , न तु करोत्यर्थतां बाधते, इन्द्रियकामस्य होमसम्बद्धं प्रयत्नं दधिसम्बद्ध कुर्यादिति । नन्वेव सति स एव दोष , होमसमभिव्याहृतं फलमिति । उच्यते । जुहुयादितिशब्दस्यै-

तत्सामर्थ्ये, यद्धोमविशिष्टं प्रयत्नमाह, न त्वत्र होम साधनत्वेन विधीयते । साध्यत्वेन विशिष्टस्तु प्रयत्नो वाक्येन दध्याश्रितोऽवगम्यते, अत एव च वृत्तिकारेणोक्तं, होममाश्रितो गुण फलं साधयिष्यतीति । यथा राजपुरुषो राजानमाश्रितो राजकर्म्म करोतीति । तस्माद्दध्नः फलं, य इन्द्रियकामः, स दध्ना कुर्यादिन्द्रियमिति । कथमिति । अनयाऽग्निहोत्रेतिकर्त्तव्यतयेति । कुत एतत् । फलसाधनस्य दध्न इतिकर्त्तव्यताऽऽकाङ्क्षत्वात् । अस्याश्च इतिकर्त्तव्यतायाः सन्निधानाच्चोदनालिङ्गस्य च जुहोत्यर्थस्य दर्शनात् । यस्मादेव चाऽस्य जुहोत्यर्थोऽनुवादस्तस्माद्विधायकः । न चान्यद्धोमस्य विधायकं नास्तीति तस्मान्न कर्मान्तरम् । तस्माद्दध्नः फलमिति । अथवा दधिशब्दस्य विवक्षितार्थत्वाद्दधिहोमसम्बन्धोऽयं वाक्येन विधीयते । तेन दध्नो होमेन सम्बध्यमानात् फलं भविष्यतीति ॥ २६ ॥ सिद्धान्तः ॥ दध्यादिद्रव्यसफलत्वाधिकरणम् ॥ ११ ॥

## समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशम् अग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेतेति । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । अत्रायमर्थः सांशयिकः । किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणाद् वारवन्तीयात् पशवः फलम्, एतेन यजेतेत्यनुवाद । अथ किम्, एतेन यजेतेति कर्मान्तरमिति । किं प्राप्तम् । न कर्मान्तरं गुणात् फलमिति । कुतः । एतेन यजेतेति विदितस्यैतद्वचनं, नाऽविदितस्य । अतो न विध्यन्तरम् । पशुकाम एवं यजेतेत्युच्यते, न यजेतेति । कथं कृत्वा ? वारवन्तीयं कृत्वेति । अपिचैतस्यैवेति विस्पष्टम् अकर्मान्तरवचनम् । तस्माद् गुणात् फलमित्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूमः । समेष्वेवञ्जातीयकेषु भिन्नवाक्येषु कर्मयुक्तं फलं भवेत् । एतस्यैव रेवतीषु वारवन्तीयं कृत्वेति । न ह्येतस्य रेवत्यः सन्ति, यास्वऽस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेतेति वाक्यं भिद्येत । अथोच्येत– अस्य पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा, एतेन यजेतेत्यनुवदतीति । तथाऽग्निष्टोमसामेति नावकल्प्येत । अथाग्निष्टोमसामकार्यं भवतीत्युच्यते । एतस्यैवेत्येतद्विवक्षितं स्या-

तु । उभयस्मिन् विवक्ष्यमाणे भिद्येत वाक्यम् । तस्मात् कर्मान्तरम् ॥
अथ कर्मान्तरे कथमवाक्यभेदः । रेवतीषु ऋक्षु वारवन्तीयं साम कृत्वा पशुकामो यजेतत्यपूर्वो याग. सर्वैर्विशेषणैर्विशिष्टो विधीयते । तेनैकार्थत्वं विभागे च साकाङ्क्षत्वमित्येकवाक्यत्वमुपपद्यते । नन्वर्थभेदो यागश्चैवं ह्यपूर्वं कर्त्तव्यः । रेवतीषु वारवन्तीयम् अपूर्वमिति । नेति ब्रूम । निर्वृत्तवारवन्तीयरेवतीगुणको यागो विधीयते, न वारवन्तीयनिर्वृत्ति । अर्थाद् रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यति । शक्यते च तन्निर्वर्त्तयितुम् । उच्यते । रेवतीनां वारवन्तीयस्य च सम्बन्धो न विहितः स्यात् । तत्र च रेवतीष्वन्यान्यपि सामानि भवेयु. । वारवन्तीयं चान्यास्वपि ऋक्षु । नैष दोष । कृत्वेत्यभिनिर्वृत्त सम्बन्धो यागायोच्यते । तेन सम्बन्धो गम्यते । द्वावप्येतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमभिनिर्वृत्तिं पूर्वकालतां च । यथा शोणमानयेति रक्तगुणसम्बद्धोऽश्वः शब्देनैवानयतो विधीयते इति, न वाक्यभेदो भवति । एवमत्रापि द्रष्टव्यम् ॥ नन्वेवमपि बहवोऽर्थाः, रेवत्यः, वारवन्तीयं, तत्सम्बन्धः, यागः, पशुकामश्चेति । नैष दोष । बहवः श्रूयन्ते, एकोऽत्र विधीयते यागो विशिष्टः । ननु रेवत्योऽपि विधीयन्ते, वारवन्तीयमपि । यदि न विधीयेरन्नैव तद्विशिष्टो याग. प्रतीयेत । न ह्यविधाय विशेषणं, शक्यते विशिष्टं विधातुम् । तस्माद् बहुषु विधीयमानेषु नैकार्थ्यम् । अत्रोच्यते । अर्थ इति प्रयोजनमभिधीयते । यावन्ति पदान्येकं प्रयोजनमभिनिर्वर्त्तयन्ति, तावन्त्येकं वाक्यम् । न चात्र बहूनि प्रयोजनानि । न ह्यत्रानेकस्याभिप्रेतस्यानेकं पदं विधायकमस्ति । रेवतीष्विति नैतत्केवलं रेवतीनां विधायकं, रेवतीषु वारवन्तीयमिति । अत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः । नास्मात् सम्बन्धोऽभिप्रेतो गम्यत । प्रातिपदिकार्थस्याव्यतिरेकात् । कृत्वेत्यपि करोतिनं सम्बन्धमात्रे पर्य्यवसित. परप्रयोजनसम्बन्धमाह । एवं विशिष्टस्तु यजातिर्ने परार्थ । तदेकमेषां पदार्थानां प्रयोजनम् । तस्मादेकवाक्यत्वम् गुणे पुन फले प्रकल्प्यमाने अग्निष्टोमसाम्नः कार्ये वारवन्तीयम् । एतस्य च यदग्निष्टोमसाम इति वाक्यभेद स्यात् ॥ अथोच्यते, रेवत्यादिसर्वविशेषण विशिष्टो याग एतस्याग्निष्टुतो विधीयेत । तथापि पशुकामसम्बन्धाद् भिद्येत वाक्यम् । अथैव-

भुज्येत, रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति । नैवं शक्यम् । ऋगन्तरप्रगानाद्विशेषहानाद्वैगुण्यं स्यात् । नन्विदानीमेवोक्तं, शक्यते हि रेवतीषु वारवन्तीयं कर्त्तुमिति । सति वचने शक्यम् । असति वचने न वारवन्तीयग्रहणेन गृह्यन्ते । वचनं तर्हि भविष्यति, पशुकामो रेवतीषु वारवन्तीयमभिनिवर्त्तयेत् । ततो यजेतेति यजतिरनुवादः । यदि वचनं रेवतीषु वारवन्तीयसम्बन्धस्य, सिद्धं कर्मान्तरं, नाग्निष्टुतो गुणविधिः । ननु ततो यजेतेति यागानुवादाद् यागेनास्याङ्गप्रयोजनसम्बन्धो भविष्यति । नैवं शक्यम् । यागं प्रत्यङ्गभावे विधीयमाने पशुकामं प्रत्यसम्बन्धः । उभयसम्बन्धे वाक्यं भिद्येत । अथ यागसम्बन्धोऽनुवादः, प्रकरणेन चाङ्गता । नेदमुपपन्नम् । प्रकरणाद्धि वाक्यं बलवत्तरम् । तस्मात् कर्मान्तरं, यागगुणकं वा रेवतीषु वारवन्तीयं, तद्गुणको वा यागः । तत्र यागपशुकामयोः सम्बन्धस्य विधात्रीं यजतेरुपरितनीं विभक्तिमुपलभामहे लिङ्गं, न तु रेवतीवारवन्तीयसम्बन्धस्य विधायकं साक्षात्किञ्चिदुपलभ्यते । तस्मात् सर्वविशेषणविशिष्टो यागः पशुकामस्य विधीयते इति सिद्धम् ॥ अथ पुनर्विशिष्टे यागे विधीयमाने, तद् रेवतीषु वारवन्तीयं कथमग्निष्टोमसाम भवतीति । उच्यते । वचनादग्निष्टोमसाम्नः कार्यं भविष्यतीति । किमिव हि वचनं न कुर्यात्, नास्ति वचनस्यातिभारः । अथ यदुक्तमेतस्यैवेति । अनन्तरापेक्षं वचनमिति तत्राप्यविरोधादेतद्धर्मकस्येति लक्षणाशब्दो भविष्यति । तस्मान्न गुणात् फलं कर्मान्तरमेवंधर्मकमिति, सिद्धं समेष्वेवञ्जातीयकेषु कर्मयुक्तं फलमिति ॥ २७ ॥ ॥ वारवन्तीयादीनां कर्मान्तरताधिकरणम् ॥ १२ ॥

## सौभरे पुरुषश्रुतेर्निधनं कामसंयोगः ॥ २८ ॥

यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः, स सौभरेण स्तुवीत, सर्वे वै कामाः सौभरे इति समाम्नाय तत्र समामनन्ति । हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामायेति । तत्र विचार्यते । किं सौभरं वृष्टेर्निमित्तं, हीषित्येतदपरं वृष्टेर्निमित्तम्, अथ सौभरमेव वृष्टेर्निमित्तम् । यदा तद् वृष्टेर्निमित्तं, तदा हीषिति सौभरस्य निधनं कर्त्तव्यमिति । एवम्, ऊर्गित्यन्नाद्यकामस्य, ऊ इति स्वर्गकामस्य च तुल्यो विचारः । कथं निधनादपरं

फलं? कथं वा निधनव्यवस्थार्थं श्रवणमिति । यद्येवमभिसम्बन्धः क्रियते हीषिति वृष्टिकामाय कुर्य्यादिति, ततो निधनादपरं फलम्। अथैवमभिसम्बन्ध – हीषिति निधनं कुर्यादिति, तदा निधनव्यवस्थाऽर्थं श्रवणम्। तदा वृष्टिकामायेति सौभरविशेषणं क्रियते, न हीषा सम्बन्धः ॥ किं तावत् प्राप्तम् ॥ सौभरे निधने अपरः कामो विधीयते इति। कुतः। पुरुषश्रुतेः। पुरुषप्रयत्नस्यात्र श्रवणं भवति, कुर्यादिति। तद् वृष्टिकामस्य हीषश्च सम्बन्धे कर्त्तव्ये वक्तव्यं भवति, न तु सौभरनिधनसम्बन्धे। तत्र हि साङ्गं सौभरं कुर्यादिति प्रयोगवचनसामर्थ्यादेव सिद्धम्। तस्मात् कुर्यादिति पुरुषप्रयत्नवचनादवगच्छामः। यतरस्मिन् पक्षे पुरुषप्रयत्नवचनमर्थवत् ततरोऽयं पक्ष इति तत्राऽस्मिन् पक्षे अर्थवद्, निधनादपरं फलमिति। तस्मात् सौभरे एकः कामः, भेदेन निधनादपि द्वितीयः काम इति ॥

अथवा वृष्टिकामायेति पुरुषश्रुतिः। वृष्टिं यः कामयते स पुरुषो वृष्टिकामशब्देनोच्यते। तदस्मिन् पक्षे श्रुतिर्विनियोक्त्री। इतरस्मिन् पक्षे पुनर्वृष्टिकामशब्देन पुरुषवचनेन सता सौभरं लक्ष्येत। तथा लक्षणाशब्दः स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा। तस्मात् पश्यामो निधने द्वितीयः काम इति। एवञ्च फलभूयस्त्वं भविष्यति। तस्मान्निधने अपरः कामः ॥ २८ ॥ ॥ पूर्वपक्षः ॥

सर्वस्योक्तकामत्वात् तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनःश्रुतिः ॥ २९ ॥

वाशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति, यदुक्तं– निधने अपरः काम इति। नैवं सम्बन्धः क्रियते– वृष्टिकामाय हीषिति कुर्य्यादिति। कथं तर्हि। हीषिति निधनं सौभरस्येति। कथम्?। हीषो वृष्टिकामसम्बन्धे क्रियमाणे, निधनं कुर्य्यादिति सम्बन्धो न कृतः स्यात्। तत्र हीषिति निधनमिति नावकल्प्येत। तत्रोभयसम्बन्धे वाक्यभेदः। तत्र निधनशब्दः प्रमादसमाम्नात इति गम्यते। नचैवञ्जातीयकः प्रमादसमाम्नात इत्युक्तम्। तस्मान्न हीषो वृष्टिकामेन सम्बन्धः। तेन न निधनादपरं फलम् ॥

अथ हीषो निधनसम्बन्धे कथम् अवाक्यभेदः? इति। उच्यते। वृष्टिकामाय सौभरमस्त्येव। सौभरस्य निधनं सौभरप्राप्तिरस्त्येव।

तत्र हीषिति कुर्य्यादित्येष एवार्थो विधीयते । तस्माद् वाक्यभेद इति । अतो निधनव्यवस्थेति गम्यते । एवमेव ऊर्गिति, ऊ इति च वदितव्यम् । सर्वस्य सौभरस्य ऊर्ग्वृष्टिस्वर्गकामत्वाच्छक्यते कामवचनै. सौभरं लक्षयितुम् । किमर्थं लक्ष्यते ? इति निधनार्था पुनः श्रुतिर्निधनव्यवस्थां करिष्यतीत्यर्थः ॥ २९ ॥ ॥ सिद्धान्त ॥ सौभर निधनयोः कामैक्याधिकरणम् ॥ १३ ॥ इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पाद ॥ २ ॥ २ ॥

---

अथ द्वितीयाध्यायस्य तृतीयः पाद. ॥ २ ॥ ३ ॥

## गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत् संयोगस्याशेषभूत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । त प्रकृत्य श्रूयते । यदि रथन्तरसामा सोमः स्याद् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रानिति । तत्र सन्दिह्यते । किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथन्तरसाम्नो बृहत्साम्नश्चेति ? । यदि रथन्तरसामग्रहणेन बृहत्सामग्रहणेन च ज्योतिष्टोमोऽभिधीयते, ततस्तस्य ग्रहाग्रताविशेष । अथ नाऽभिधीयते, तत कर्मान्तरस्येति ॥ किं तावत् प्राप्तम् ॥ प्रकरणाज्ज्योतिष्टोमस्येति प्राप्ते, उच्यते ॥ गुणस्तु क्रतुसंयोगादिति ॥ तुशब्द पक्षं व्यावर्त्तयति । नैतदस्ति, ज्योतिष्टोमस्येति । कुतः । क्रतुसंयोगात् । कथं तर्हि ? कर्म्मान्तरस्येति । ननु ज्योतिष्टोमक्रतोरेवैष एवञ्जातीयको वाद., रथन्तरसामा बृहत्सामेति । नेति ब्रूमः । यदि न कृत्स्नक्रतुसंयोगो भवेज्ज्योतिष्टोमस्य वादः । कृत्स्नक्रतुसंयोगस्त्वेष । कथं कृत्स्नक्रतुसंयोगो भवति । कथ वा न कृत्स्नक्रतुसंयोग इति । यदि रथन्तरसत्ता वा, बृहत्सत्ता वा निमित्तं ग्रहाग्रताविशेषस्य, ततो न कृत्स्नक्रतुसंयोग । रथन्तरं बृहद्वा यदि सामास्ति, तत ऐन्द्रवायवाग्रता शुक्राग्रता चेति, ततो ज्योतिष्टोमस्य गुणविधि. । अथ रथन्तरसामसत्ता बृहत्सामसत्ता वा न निमित्तं, तत कृत्स्नक्रतुसंयोग । यदि रथन्तरसामेति कोऽर्थः । अयमर्थः—

यदि रथन्तरसाम अस्य विशेषणं क्रतोरिति । कुत. एतत् ।

समासपदसामर्थ्यात् । समर्थानां हि पदानां समासो भवति– सामर्थ्यञ्च भवति विशेषणविशेष्यभावे । असाधारणं च भवति विशेषणम् । तत्रायमर्थो– यदि रथन्तरमेव साम, बृहदेव वा नान्यदिति । ज्योतिष्टोमस्य च बहूनि सामानि गायत्रादीनि । तस्मान्न ज्योतिष्टोमस्य वाचकावेतौ शब्दाविति । तेन यद्यपि प्रकरणाज्ज्योतिष्टोमस्य गुणविधिरिति गम्यते, तथापि तद् बाधित्वा वाक्येन रथन्तरसाम्नो बृहत्साम्नश्च भवितुमर्हति ॥ ननु यथा ज्योतिष्टोमो न रथन्तरसामा, एवमन्योऽपि न रथन्तरसामा कश्चिदस्ति । उच्यते । कर्मान्तरं रथन्तरसामकं कल्पयिष्यत्येतद्वाक्यम् । यदि रथन्तरसामा सोमः स्यादिति । ननु नास्त्यत्र विधायक शब्दः । उच्यते, अस्ति य एषः स्यादिति । आह । नैष विधातुं शक्नोति यदि शब्दसम्बन्धादविद्यमानस्य निमित्तार्थेनैवञ्जातीयकः शब्दो भवति, न विधानार्थेनेति ॥ अत्र ब्रूमः । यदेतत् सयदिकं वाक्यम् । यदि रथन्तरसामा सोमः स्यादिति । अत्रावान्तरवाक्यमस्ति, रथन्तरसामा सोम स्यादिति । यदवान्तरवाक्यं तस्यान्योऽर्थोऽन्यश्च सयदिकस्य । सयदिको न शक्नोति विधातुम् । यद् अवान्तरवाक्यं तद्विधास्यति । न च रथन्तरसाम्नो बृहत्साम्नो वा भावो निमित्तत्वेन श्रूयमाणोऽर्थवान् भवति । तस्मादविवक्षितो यदिसम्बन्ध । तस्मिंश्चाविवक्षिते पदद्वयमिदं रथन्तरसामा सोम. स्यादिति शक्नोति रथन्तरसामानं क्रतु विधातुं, यदीत्यनर्थकम् ॥ अथ वा, यदि रोचेतेत्यध्याहार' ॥ अथ वा, यथैतद्भवति– पयसा षाष्टिकं भुञ्जीत, यदि शालिं भुञ्जीत, तत्र दध्युपासिञ्चेदिति । एवञ्जातीयकेन वाक्येन शालिभोजनं विहितं भवति एवमत्रापि विहितं द्रष्टव्यम् । यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति । कथं पुनः शालिभोजनं तेन वाक्येन विहितं भवतीति । उच्यते । व्यत्यासेन सम्बन्धः कल्प्येत, यदि दध्युपसेचनमिच्छेच्छालिं भुञ्जीतेति ॥

ननु न खल्विच्छते परां लिङ्विभक्तिमुपलभामहे, सिञ्चतेर्हि तां परां समामनन्तीति । सिञ्चते' खलु सा परा समुच्चरन्ती कमेरर्थं गमयति । कामप्रवेदने हि तां मन्यामहे इति एवमिहापि यद्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति ग्रहीतुमिच्छेदित्यर्थ., ततो रथन्तरसामानं क्रतुं कुर्य्यादिति । नन्वेवं सतीच्छामात्रं भवेन्न ग्रहाग्रताविशेष-

विधानम्। उच्यते। यथास्मिँल्लौकिके वाक्ये- यदि दध्युपसेचनमिच्छे-च्छालिं भुञ्जीतेति दध्युपसेचनसङ्कीर्त्तनाद्दध्युपसिक्तं शालिं भुञ्जीतेति तेनैकवाक्यत्वाद् गम्यते, एवमत्रापि ग्रहाग्रताविशेषसङ्कीर्त्तनात्तेनैकवाक्यत्वाद् ग्रहाग्रताविशिष्टा रथन्तरसामा गम्यते। अथ-वाऽत्र हेतुहेतुमतोर्लिङ् रथन्तरसामा सोम ऐन्द्रवायवाग्राणां ग्रहाणां हेतुः कर्त्तव्य इति। तस्मात् कृत्स्नक्रतुसंयोगाद् गुण कर्मान्तरं प्रयोजयेत्। एवं कृत्स्नक्रतुसंयोगोऽर्थवान् भविष्यति॥ अपि च पूर्वेण निमित्तेन भवितव्यं, परेण नैमित्तिकेन। कथम्?। सति हि निमित्ते नैमित्तिकं भवितुमर्हति, न असति। यच्च भविष्यत् तद् न सत्, भविष्यञ्च रथन्तरसाम, तत् कथ पूर्वकालस्य ग्रहाग्रताविशेषस्य निमित्तं भविष्यतीति। अपि च निःसन्दिग्धं जगत्सामा कर्मान्तरं, तत्सामान्यादितरदपि कर्मान्तरमिति गम्यते। तस्मान्न ज्योतिष्टोमस्य गुणविधानमिति॥ १॥ पूर्वपक्षः॥

**एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात्॥ २॥**

तुशब्दात् पक्षोऽन्यथा भवति। नैतदस्ति, यदुक्तं- क्रत्वन्तरमिति। कथं तर्हि। ज्योतिष्टोमस्यैव ग्रहाग्रताविशेष इति। कुतः। प्रकरणसामर्थ्यात्। नन्वेतदुक्तं- वाक्यसामर्थ्यात् क्रत्वन्तरस्य रथन्तरसाम्नो बृहत्साम्नश्चेति। परिहृतमेतज्ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चेति। पुनर्दूषितमनेकसामत्वाज्ज्योतिष्टोमस्य, विशेषणं रथन्तरेण बृहता वा न प्रकल्पते इति। तदुच्यते। प्रकल्पते विशेषणं, बृहद्रथन्तरयोर्वैकल्पिकत्वात्। भवति स प्रयोगः, यत्र रथन्तरं नास्ति। भवति च स प्रयोगो विद्यमानरथन्तरसामक। तदेतद् रथन्तरं सत्तयैवासाधारणत्वाद् विशेषकम्। तस्माज्ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चेति॥ अथ यदुक्तं- पूर्वेण निमित्तेन भवितव्यमुत्तरेण नैमित्तिकेनेति। नैतत्। नियोगतो भवति हि भविष्यदपि निमित्तम्। यथा वर्षिष्यतीति कृषिगृहकर्मानुष्ठानम्। अपि च तद् दृष्टम्, इदञ्च वाचनिक निमित्तम्। तद् यथावचनं भवितुमर्हति। स्यादिति चेयं लिङ् त्रिष्वपि कालेषु भवति। तस्माद् भविष्यदपि निमित्तम्। यत्तु जगत्सामेति कर्मान्तरं, तत्सामान्याद्

रथन्तरसामापि कर्मान्तरमिति । जगत्साम असम्भवात् कर्मान्तरं सम्भवति। रथन्तरसाम्नो बृहत्साम्नश्च ज्योतिष्टोमस्याभिधानम्। तस्मान्न कर्मान्तरमिति ॥ २ ॥ ॥ सि० ॥ ग्रहाग्रताया ज्योतिष्टोमाऽङ्गताधिकरणम् ॥ १ ॥

अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ ३ ॥

अस्ति राजसूय, राजा राजसूयेन स्वराज्यकामो यजेतेति । तं प्रकृत्यामनन्ति- अवेष्टिं नामेष्टिम्। आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा इत्येवमादि । तां प्रकृत्य विधीयते । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवमिति ।

तत्र सन्दिह्यते । किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणम्, उत ब्राह्मणादीनामयं यागो विधीयते इति । कथं निमित्तार्थता भवेत्, कथं वा यागविधानमिति । यदि राजशब्दो ब्राह्मणादिष्वपि केनचित् प्रकारेण ततो निमित्तार्थता । अथ क्षत्रिय एव, ततः प्रापकाण्येवञ्जातीयकानि श्रवणानि ॥ किं तावत् प्राप्तम् ॥ निमित्तार्थतेति । तत एवं तावदुपवर्ण्यते- यौगिको राजशब्द इति । राज्यं यस्य कर्म स राजा। किं पुना राजकर्म्म । जनपदपुरपरिरक्षणे, ततश्चोद्धरणे। राज्यशब्दमार्य्यावर्त्तनिवासिन प्रयुञ्जन्ते । राज्ञः कर्म्म राज्यमिति चाभियुक्ता उपदिशन्ति । तेन मन्यामहे, यस्यैतत् कर्म्म स राजेति। यथा ये उदमेघं नाम कश्चित् पुरुषं नावेदिषु, तस्य तु पुत्रम् औदमेघिरित्येवं विदु, शक्नयुस्ते यस्तस्य पिता स उदमेघ इति कल्पयितुम्। उदमेघपुत्रस्यैव समभिव्याहारो भवतीति । एवं राज्ययोगाद् राजशब्द इति विज्ञायते ॥ ननु जनपदपुरपरिक्षणवृत्तिमनुपजीवत्यपि क्षत्रिये राजशब्दमान्ध्राः प्रयुञ्जते प्रयोक्तारः । न ब्रूम - न-प्रयुञ्जते इति । किं तर्हि- कर्म्मविशेषनिमित्तत्वाद् राजशब्दस्य, तद्योगादपि राजशब्दो भवतीत्येतदुपपादयाम । प्रयुञ्जते च तद्युक्ते राजशब्दमक्षत्रियेऽपि तदस्मिन्नुपपन्ने प्रकरणवशाद् यदिशब्द समभिव्याहाराच्च राजसूयस्यैव गुणविधानं भविष्यति, न ब्राह्मणस्य वैश्यस्य च कर्म्मान्तरं विधायिष्यतीति ॥ अथवा, असार्वलौकिकस्य प्रयोगस्य सार्वलौकिकेन प्रयोगेण विरुद्ध्यमानस्य अप्रामाण्यं स्यात्। अभ्युपगच्छन्ति हि ते जनपदिन सार्वभौमं प्रयोगम्।

अपिचाविप्रगीता लौकिका अर्था विप्रगीतेभ्य प्रत्ययितनरा भवन्ति तथा आर्य्यावर्त्तनिवासिनां शब्दार्थोपायेष्वभियुक्तानामभिव्याहरतां कर्माणि चानुतिष्ठताम् अन्त्यजनपदवासिभ्यो म्लेच्छेभ्य समीचीनतर आचारो भवति । तस्माद् यौगिको राजशब्द , निमित्तार्थानि श्रवणानि, राजसूयस्य गुणविधिर्न कर्म्मान्तरमिति ॥

एवं प्राप्ते ब्रूम ॥ अवेष्टौ तु खलु क्रतुप्रधानं ब्राह्मणादिश्रवणं ब्राह्मणादीनामवेष्टियागं विधातुं न निमित्तार्थम् । कुत । अप्राप्तत्वाद् ब्राह्मणवैश्ययो । कथमप्राप्ति । क्षत्रियस्य राजसूयविधानात् । राजा राजसूयेन यजेतेति । ननूक्तं- यौगिको राजशब्द इति । एतदप्ययुक्तम् । यतो जातिवचन इति । ननूभयाभिधाने यदिशब्दसम्बन्धात्, प्रकरणाच्च न कर्म्मान्तरविधानं न्याय्यमित्युक्तम् । अत्रोच्यते । नोभयाभिधानमवकल्पते । कुत । यदि तावज्जातिशब्दो राजेति, ततस्तत्कर्मत्वाज्जनपदपरिपालने राज्यशब्दो भविष्यति । तेनार्य्यावर्त्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ यदि राज्यशब्दः परिपालने नित्यसम्बद्धो भविष्यति, ततस्तस्य कर्त्तेति राजशब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति । तत्रान्ध्राणां प्रयोगो न विरोत्स्यते । तस्मान्न प्रयोगदर्शनादुभावपि राजराज्यशब्दौ जातिपरिपालनाभ्यां नित्यसम्बद्धावित्यभ्युपगन्तव्यम् । को नु खलु निर्णय । राजजातीयस्य कर्म्म इत्यतः परिपालनं राज्यशब्देनोच्यते । एवं हि स्मरन्तोऽभियुक्ता , तस्य कर्म इति ष्यञ्प्रत्यय विदधति, न तु तस्य कर्त्तेति प्रत्ययलोपं वा, प्रातिपदिकप्रत्यापत्तिं वा समामनन्ति ॥ तस्माद् राज्ञ कर्म्म राज्यं, न राज्यस्य कर्त्ता राजा ॥ ननु यो यो जनपदपुरपरिरक्षणं करोति, तं तु लोको राजशब्देन अभिवदति । उच्यते । योगाल्लोक प्रयुङ्क्ते । परिपालने राज्यशब्द प्रसिद्ध इति । स तु परिपालने राज्यशब्दो राजयोगादित्यस्माभिरुक्तम् । तस्माद् राजशब्द प्रसिद्धमूलम् । तद्योगाद् राज्यशब्द । तद्योगादपि ब्राह्मणवैश्ययो राजशब्द प्रयुज्यते । न त्वेवं स्मरन्ति, राज्ययोगाद् राजेति ॥ यत्तूक्तम्- अनुमानाद् राज्यस्य कर्त्ता य स राजा, यथा औदमेघे पिता उदमेघ इति । उच्यते । अनुमानात् प्रयोगो बलवान् । राज्यस्य कर्त्तारं राजा इत्यनुमिमीमहे । क्षत्रिये तु प्रत्यक्षं प्रयुञ्जानान् उपलभामहे । तथा योगमप्यनुमिमीमहे, राज्यस्य कर्त्ता राजेति ।

राज्ञः कर्म्म राज्यमिति तु स्मरन्ति । अनुमिमानाश्च स्मृतिमनुमिमते स्म । स्मरन्तस्तु प्रत्यक्षमुपलभन्ते । तेन तत्र स्मृतिर्बलीयसीति । आह । यो यो राज्यं करोति, तत्र राजशब्दं प्रयुञ्जते । न यद् राज्ञः कर्म्म तद्राज्यमिति । तेन मन्यामहे, राज्ययोगो राजशब्दप्रवृत्तौ निमित्तं, न तु राजयोगो राज्यशब्दप्रवृत्ताविति । न ब्रूम – प्रयोगाद् वयं राजयोगं राज्यशब्दप्रवृत्तौ निमित्तमवगच्छाम इति । कथं तर्हि । स्मरणात् । प्रयोगाच्च स्मृतिर्बलीयसी । प्रयोगाद्धि स्मृतिरनुमीयेत ॥ अपिच राज्ययोगस्य निमित्तता व्यभिचरति । जनपदपरिपालनमकुर्वत्यपि राजेत्यान्ध्रा वदन्तीत्युक्तम् । ननु राजयोगाद् राज्यमित्येतदपि व्यभिचरति । न हि राज्ञः स्पन्दितं निमिषितञ्च सर्वं राज्यमित्युच्यते । यदि वयं प्रयोगान्निमित्तभावं ब्रूयाम, तत एवमुपालभ्येमहि । स्मृत्या तु वयं निमित्तभावं ब्रूमः । तेन यद् यद् राजजातीयस्य कर्म्म जात्या विशेष्यते, तद् राज्यमित्यभ्युपगच्छाम । यत्तूक्तम् – आन्ध्रा अपि राज्ययोगाद् राजानमभ्युपगच्छन्तीति । परिहृतमेतत् । प्रयोगो दुर्बलः स्मृतेरिति । यदुक्तम्, आर्य्यावर्त्तनिवासिनः प्रमाणमितरेभ्य आचारेभ्य इति । तुल्य शब्दप्रयोग आचारेष्वित्युक्तम् । तस्माज्जातिनिमित्तो राजशब्दः । एवञ्चेद् यज्ञसंयोगात् क्षत्रियस्य राजसूयेन, यागविधिरवेष्टिरिति ॥ ३ ॥ अवेष्टेः क्रत्वन्तरताऽधिकरणम् ॥ २ ॥

## आधाने सर्वशेषत्वात् ॥ ४ ॥

इदं समामनन्ति – वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति । तत्र सन्दिह्यते । किं ब्राह्मणादिश्रवणं निमित्तार्थं – ब्राह्मणादय आदधाना वसन्तादिष्वादधीरन्निति, उत ब्राह्मणादीनामाधानं विधीयते इति । कथं निमित्तार्थता स्यात् ? कथञ्चाऽऽधानविधानमिति । यदि ब्राह्मणो वसन्ते इति पदद्वयं परस्परसम्बद्धं, ततो निमित्तार्थं श्रवणम् । अथ ब्राह्मण आदधीत इति, आधानविधानं ब्राह्मणस्य । एवं राजन्यादिष्वपि । किं तावत् प्राप्तम् । निमित्तार्थं श्रवणमिति । कुतः । निमित्तसरूपा एते शब्दाः । किं निमित्तसारूप्यम् । ब्राह्मणादीनां वसन्तादिभिः समुच्चारणम् । तच्चाविदितं वेद्यते इति । ननु ब्राह्मणादीनामादधातिनाप्यस्ति समुच्चारणम् । बाढमस्ति समुच्चारणं, न त्वमीषाम् ।

आधानसम्बन्धो न विदितः। केन प्राप्तो विदित इति। कामश्रुतिभिः। काः कामश्रुतयः। अग्निहोत्रं जुहुयात् स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमादयः। कथमाभिः श्रुतिभिराधानं प्राप्तमिति। उच्यते। सामर्थ्यात्। यथाऽग्निहोत्रमभिनिर्वर्त्यते, तथा कुर्यात्; यथा दर्शपूर्णमासावभिनिर्वर्त्येते, तथा कुर्यात्। न च गार्हपत्याहवनीयान्वाहार्य्यपचनादिभ्यो विनैतानि कर्माणि सिद्ध्यन्ति। समामनन्ति हि- यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवतीत्येवमादि। तेन सामर्थ्यादेतदुक्तं भवति, आहवनीयादि कर्त्तव्यमिति। तच्चाधानेन विना न सिद्ध्यतीत्याधानमपि कर्त्तव्यमित्यवगम्यते। तत् केन कर्त्तव्यम्। यस्य कामश्रुतयः। ताश्चाविशेषेण ब्राह्मणादीनाम्। तस्मादमीषामाधानसम्बन्धो विदित इति। अपिचोभाभ्यां ब्राह्मणादीनां सम्बन्धे विधीयमाने वाक्यं भिद्येत। न हि, तदानीमेकोऽर्थो विधीयते। अतो निमित्तार्थाः श्रुतय इत्येवं प्राप्तम्॥

एवं प्राप्ते ब्रूमः॥ आधाने सर्वशेषत्वात् प्रापकाण्याधानस्यैतानि श्रवणानि। कुतः। सर्वकर्मणां शेषभूतमाधानमिति न श्रुतिलिङ्गादीनामन्यतमेन उच्यते। किं तर्हि। अग्नीनां सर्वशेषत्वात्, तच्छेषत्वाच्च आधानस्य। किमतः। यद्येवम्, अग्नयः कामश्रुतिभिः प्राप्नुवन्ति, नाधानमिति। नन्वग्नीनामभ्युपाय आधानमिति। उच्यते। नैतेषामर्जने आधानमेवैकोऽभ्युपायः। किं तर्हि यथान्येषां द्रव्याणामुत्पादने क्रयणादयश्चाभ्युपाया, एवमग्नीनामपीति न नियोगत उत्पादनमेव। तेन पक्षे आधानं प्राप्नोति, पक्षे न। यतरस्मिन् पक्षे अप्राप्तिस्ततरः पक्ष उत्पत्तिं प्रयोजयिष्यति ब्राह्मणादीनामाधानस्य। ब्राह्मण आत्मार्थमादधीतेति। यदा एतद्वचनं तदा आत्मार्थमेवाहिता आहवनीयाद्यो भवन्ति, नान्यथा। एवञ्च सति, न कृत्रिमेण याचितेन वा कर्म्माण्यग्निहोत्रादीन्यनुष्ठातव्यानीति गम्यते। तेन अकृत्रिम एव केवलोऽग्निस्तेषां साधक इति निश्चीयते। कथञ्चात्मार्थता आधानस्य गम्यते इति। कर्त्रभिप्राये हि क्रियाफले आदधीतेत्येतदात्मनेपदं सम्भवति। असत्यस्मिन् वचने कामश्रुतिपरिग्रहे नाधानस्यात्मार्थता भवेत्॥ अपिच सतीषु एतास्वाधानश्रुतिषु न कामश्रुतयः शक्नुवन्त्यपरामाधानश्रुतिं कल्पयितुम्। यथा प्राप्तस्याधानस्य पुनः श्रुतय एताः भवेयुः। असतीष्वेतास्वाधानश्रुतिमपरिगृह्णन्तः

कामश्रुतयोऽशक्यानग्निहोत्रादीन् वदन्तीति परिगृह्णीयुराधानश्रुतिम्। सतीष्वेतासु येषामाधानमुक्तं, तान् अधिकृत्य उत्तरकालाः कामश्रुतयो भवन्तीति गम्यते॥

अत्राह। अस्ति केवलस्याधानस्य विधायिका श्रुतिः। एवं सपत्नं भ्रातृव्यमवर्त्तिं सहते, य एवं विद्वानग्निमाधत्ते इति। तया प्राप्तस्य निमित्तार्थानि ब्राह्मणादीनां श्रवणानि भविष्यन्ति। उच्यते। सम्भारविधानार्था पुनः श्रुतिरेषा। नेति ब्रूमः। भिन्नं हीदं वाक्यं सम्भारविधानवाक्यात्। अन्यो ह्यर्थ आधत्ते इति, अन्यः अप उपसृजतीति। एकार्थविधाने ह्येकं वाक्यं भवति, भिन्नौ चेमावर्थौ। तस्मादत्र वाक्यभेद इति॥ उच्यते॥ वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यस्यां श्रुतौ सत्यां पुनः श्रुतिः केवलस्याधानस्याविधायिका। अपामुपसर्जनं तु विधीयते। तदेकस्मिन्नर्थे विधीयमाने नानेकार्थं भवति। नन्वाधानस्यैतद्विधानम्। गुणार्था सा पुनःश्रुतिः। नेति ब्रूमः। सा ब्राह्मणादिसम्बद्धा प्रथमा श्रुतिः। इयं केवला पुनःश्रुतिः। कुतः। सा हि शब्देन विदधाति। तत्र लिङमुच्चरन्तीं पश्यामः। इयं प्रशस्तमाधानमित्याह। ततः प्रशस्ततामाधानस्यानुमन्यामहे। एवञ्च, वसन्ते ब्राह्मणोऽग्नीनादधीतेत्येषा विधायिका श्रुतिरिति ब्रूमहे। नैतत् प्रशंसावचनमस्मत्पक्षं बाधते। शक्यते ह्यन्येन विहितमन्येन प्रशस्तमिति वदितुम्। यदि त्वेतद् विधायकमित्युच्येत ततोऽस्मत्पक्षं विरुध्येत। कथम्। अज्ञातस्य ज्ञापनं विधानमेतत्। यदि प्रशंसावचनेन अपूर्वं विज्ञाप्येत, तदा लिङा नापूर्वं ज्ञापितं भवेत्। तत्रापूर्वज्ञापनवचनः शब्द उपरुध्येत। न तु लिङा विहिते प्रशंसावचनमुपरुध्यते। विहितेऽपि हि वाक्यान्तरेण प्रशंसावचनमवकल्पते अपि च यल्लिङा विधानं तच्छ्रुत्या, वाक्येन तु प्रशंसा गम्यते। श्रुतिश्च वाक्याद् बलीयसी॥

नन्विदमपि वाक्यं, ब्राह्मणोऽग्नीनादधीतेति। उच्यते। स्वपदार्थमत्र श्रुतिर्विदधात्याधानं ब्राह्मणादिसम्बन्धेन परपदार्थं प्रशंसति, य एवं सपत्नं भ्रातृव्यम् अवर्त्तिं सहते इति। नन्वनेकगुणविधानं त्वया वाक्येनाध्यवसितं भवति। नैष दोषः। अगुणविधिपरं हि वाक्यं भवत्यनेकगुणविधानमित्युक्तं, तद्गुणास्तु विधीयेरन्नविभागाद् विधार्थे न चेदन्येन शिष्टा इति। तस्माद् ब्राह्मणादिसंयुक्ता वि-

धायिका श्रुतिः। इयमपि केवलस्याधानस्य पुनः श्रुतिः सम्भारविधानमुपक्रमितुमिति सिद्धम् ॥

यदुक्तम्—अनेकगुणविधाने वाक्यं भिद्येतेति। यदीमौ गुणविधानविशिष्टौ विधीयेयातां, भवेद् वाक्यभेदः। द्वाभ्यान्तु विशेषणाभ्यां विशिष्टमेकमाधानं विधायिष्यते। तत्र न भविष्यति वाक्यभेदः। तस्माद् ब्राह्मणादीनामाधानस्य प्रापकानि श्रवणानीतिसिद्धम् ॥
॥ ४ ॥ आधानस्य विधेयत्वाधिकरणम् ॥ ३ ॥

## अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥

दर्शपूर्णमासौ प्रकृत्यामनन्ति— दाक्षायणयज्ञेन यजेत प्रजाकामः, साकम्प्रस्थायीयेन यजेत पशुकामः, संक्रमयज्ञेन यजेताऽऽद्यकाम इति। तत्र सन्देहः। किं दर्शपूर्णमासयोरेव गुणात् फलम्, उत कर्मान्तरमेवञ्जातीयकमिति। किं प्राप्तम्। कर्मान्तरमिति। कुतः। संज्ञोपबन्धात्। यद्यपि प्रकरणाद् यजतिशब्दाच्च स एव पूर्वप्रकृतो याग इति गम्यते, तथापि नाऽसावेवंसंज्ञक इति यागान्तरं विधेयं गम्यते ॥ ५ ॥

## अगुणाच्च कर्मचोदना ॥ ६ ॥

न चात्र गुणः उपरुद्ध्यते कश्चिद् यद्विधानार्था चोदना भवेत्। यदि च न यागान्तरम्, आनर्थक्यमेव। अपिच, यदि गुण उपबद्ध्येत ततो यागगुणसम्बन्धो गम्यते इति तदनुष्ठानं विधीयेतेति। अननुबध्यमाने यागमात्रं गम्यते इति तदनुष्ठानं विहितं गम्यते ॥ ६ ॥

## समाप्तं च फले वाक्यम् ॥ ७ ॥

इतश्च कर्मान्तरम्। कथम्। फले समाप्तं वाक्यम्। प्रजाकामो यजेतेति। प्रजाकामस्य याग उपायो विधीयते। विधीयते चेत्। कर्मान्तरम् ॥ ७ ॥ ॥ पूर्वपक्षः ॥

## विकारो वा प्रकरणात् ॥ ८ ॥

दर्शपूर्णमासयोरेवाधिकार एवञ्जातीयकः स्याद् दाक्षायणयज्ञादिः। एवं प्रकरणमनुगृहीतं भवति ॥ ८ ॥ ॥ सिद्धान्तः ॥

## लिङ्गदर्शनाच्च ॥ ९ ॥

लिङ्गमप्येतमर्थं दर्शयति। त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत यदि दाक्षायणयाजी स्यात्। अथो अपि पञ्चदशैव वर्षाणि

यजेत । अत्र हि एव सा सम्पद्यते । द्वे हि पौर्णमास्यौ यजेत द्वे अमावस्ये । अत्र हि एव खलु सा सम्पद् भवतीति । यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव, एवं तर्हि त्रिंशत्सम्पदा प्रयोजनम् । तत-स्तस्य त्रिंशत्सम्पदनुग्रहो युज्यते । तस्मादपि न कर्मान्तरम् ॥ ९ ॥ सिद्धान्ते हेतु. ॥

## गुणात् संज्ञोपबन्धः ॥ १० ॥

यदुक्तं संज्ञोपबन्धात् कर्मान्तरमिति । यदि दाक्षायणशब्दो न केनचिदपि प्रकारेण दर्शपूर्णमासवचनः शक्यते कल्पयितुं, तत उच्येत कर्मान्तरमिति । शक्नोति त्वावृत्तिगुणसम्बन्धाद्वदितुम् । अयमित्यावृत्तिरुच्यते । दक्षस्य इमे दाक्षा, तेषामयनं दाक्षायणम् । कः पुनर्दक्षः । उत्साही । तथा साकम्प्रस्थाय्येऽपि, सहप्रस्थानं गुणसम्बन्धः । एवं सर्वत्र । शक्यते चेद्दर्शपूर्णमासयोर्गुणसम्बन्धो वदितुं, किमिति स एव यागः प्रतीयमानोऽन्य इत्युच्यते ? किमिति वा प्रकरणं बाध्यते ॥ १० ॥

## समाप्तिरविशिष्टा ॥ ११ ॥

यदुक्तं फले वाक्यं समाप्तम् । प्रजाकामादेर्यागानुष्ठानं विधीयते इति । नैवम् । अविशिष्टा फले समाप्तिः । यान्यन्यानि मुक्तसंशयानि गुणे फलस्य विधायकानि वाक्यानि गुणस्य फलवचनानि पर्य्यवसितानि । यथा दध्नेन्द्रियकामस्य जुहुयादित्येवमादीनि तैरेतदविशिष्टम् । अत्रापि हि गुणात् फलमुच्यते । कथं नैतदेवं सम्बध्यते, प्रजाकामस्य यज्ञमनुतिष्ठेदिति । कथं तर्हि प्रजाकामस्य आवृत्तियज्ञमनुतिष्ठेदित्यावृत्तियज्ञ इति यज्ञावृत्तिसम्बन्धोऽनुष्ठातव्यो निर्दिश्यते, न यज्ञः । तस्मात् प्रकृतयोर्दर्शपूर्णमासयोर्गुणात् फलमुच्यते, न यागान्तरं विधीयते इति । एवं साकम्प्रस्थाय्ये संक्रमयज्ञे च द्रष्टव्यमिति ॥ ११ ॥ ॥ आ० नि० ॥ दाक्षायणादीनां गुणताधिकरणम् ॥४॥

## संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥

अनारभ्याधीयते किञ्चित्— वायव्यं श्वेतमालभेत भूतिकामः, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः । दर्शपूर्णमासयोरप्यामनन्ति— ईषामालभेत, चतुरो मुष्टीन्निर्वपतीति । तत्रायमर्थः सांशयिकः । किं दर्शपूर्णमासिके आलम्भे आलम्भो गुणविधिर्दर्शपूर्णमासिके च निर्वापे निर्वापो गुणविधिरुत न प्रकृतिमपेक्षते, इतरश्चेतरश्चेति । यदा न

प्रकृतिमपेक्षते, तदापि किं यावदुक्ते उत यजिमती एते कर्म्मणी इति ॥ किं तावत् प्राप्तम् । प्रकृतयोरालम्भनिर्वापयोर्गुणविधी इति । कुत ? अकर्म्मशब्दत्वात् ॥ नात्र कर्म्मणो विधायक शब्दोऽस्ति । ननु आलभेत निर्वपेदिति च । नैतौ विधातारौ । अविदितस्यार्थस्य वक्ता विधायको भवति । न चैतयोरविदितोऽर्थ । आलम्भः कर्त्तव्य, निर्वापः कर्त्तव्य इति । तस्मादनुवादितारौ । किमर्थमनुवदतः । आलम्भने श्वेतं विधातुं, निर्वापे च चरुम् । तस्मान्नालम्भान्तरं निर्वापान्तरं च । प्रकृतयोरेव गुणविधी इति ॥ १२ ॥ ॥ पूर्वपक्ष ॥

**यावदुक्तं वा, कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥**

न चैतदस्ति– प्राकृतयोर्गुणविधी इति । किं तर्हि, आलम्भान्तरं विधीयते इति निर्वापान्तरञ्च । यदि आलम्भनिर्वापौ विधीयेते ततो न प्राकृतौ तौ विहितौ । यदि न विधीयेते ततः प्राकृतौ लक्ष्येते । यावालम्भनिर्वापौ कर्त्तव्याविति । ततस्तौ लक्षयित्वा श्वेतो विधातव्यो भवति, चरुश्च । तौ च भूतिकामस्य ब्रह्मवर्चसकामस्य चेति द्वावप्यर्थौ विधेयौ स्यातां, तत्र वाक्यं भिद्येत ।
अथवा योऽसौ विधायक शब्द स लक्षयितव्योपयुक्त इति विधायकाभावादेकोऽप्यर्थो न शक्यते विधातुम् । अथ स एव लक्षयिष्यति, तेनैव च विधायिष्यते गुण इति । न मिथो विधानलक्षणसम्बन्धोऽवकल्पते । अथ धात्वर्थोऽनुवाद, प्रत्ययो विधातुमिष्यते इत्युच्यते, य आलम्भ स एतद्गुण. कर्त्तव्य इति । तथापि न प्राकृतो लक्ष्येत । लौकिकोऽपि ह्यालम्भोऽस्ति । प्रत्ययार्थेऽनूद्यमाने प्राकृतोऽनूद्येतेति । स हि कर्त्तव्यो निर्ज्ञातो, न लौकिकः । अतो न प्राकृतानुवादो घटते इति यावदुक्तमालम्भमात्रं निर्वापमात्रं चाऽपूर्वं कर्त्तव्यम् । कर्म्मणः श्रुतिमूलत्वात् । श्रुतिमूलं हि कर्मेत्युक्तं, चोदनालक्षणोऽर्थो धर्म्म इति । तस्मात् कर्मान्तरे ॥ १३ ॥ पूर्वपक्ष ॥

**यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥**

यदुक्तं– न प्राकृतयोर्गुणविधी इति । एतद् गृह्णीम । यत्तूक्तम्– आलम्भमात्रं विधीयते, निर्वापमात्रमिति । एतदपजानीमहे । यजिमती एते कर्म्मणी इति । कुत. । द्रव्यफलभोक्तृसंयोगात् । द्रव्यदे-

वतासंयोगात् । द्रव्यदेवतासंयोगोऽत्र विधीयते, भूतिकामस्य ब्रह्म-वर्चसकामस्य च । कथम् । न हीदमेव उच्यते । श्वेतमालभेतेति । यदि ह्येतावदेवोच्येत, ततः श्वेतालम्भसम्बन्धोऽवगम्यते । इह हि श्वेतं वायव्यमालभेतेत्युच्यते । तेन श्वेतवायव्यसम्बन्धो विधीयते । यथा पटं वयेति पटवयनसम्बन्धो विधेयोऽवगम्यते । पटं दीर्घं वयेति पटस्य दीर्घता विधीयते । दीर्घशब्दप्रयोगात् । एवमिहापि सौर्यवायव्यशब्दप्रयोगाद् द्रव्यदेवताभिसम्बन्धो विधेय इति गम्यते । इतरथा देवताशब्दः प्रमादसमाम्नात इति गम्येत ॥ नन्वत्रापि श्वेतं वायव्यं कुर्य्यात्, न चालभेत इत्यर्थद्वयविधानाद् भिद्येतैव वाक्यम् । नेति ब्रूमः । न ह्यालभेतेत्यस्यायमतिभारो, यद् द्रव्यदेवतासम्बन्धेन पुरुषप्रयत्नं ब्रूयात्, तं चालभेतेत्यर्थविशिष्टम् । श्रुत्यैव हि पुरुषप्रयत्नो विशिष्टो गम्यते । वाक्येन च द्रव्यदेवताश्रय इति । नात्र द्वाभ्यां वाक्याभ्यां प्रयोजनम् । यथा रक्तमश्वं योजयेति । यदा गुणविधिपरं भवति वाक्यं तदा द्वाभ्यां वाक्याभ्यां प्रयोजनं, गुणद्वयविधाने । अथ शोणमानयेत्युच्येत तत्र गुणविधिपरेऽपि वाक्ये पर्यवसिते एव गुणद्वयविधानम् । श्रुत्यैव विशिष्टगुणद्रव्यस्य प्रतीतत्वाद्, न भवत्येकस्य वाक्यस्यातिभारः । एवमिहापीति । सम्बन्धश्च बहुभिः पदैर्विशिष्ट एक एवोच्यते इत्येकार्थत्वम् । विभज्यमानानि चाऽत्र पदानि साकाङ्क्षाणीत्युपपन्नम् एकवाक्यत्वम् । न च यागमन्तरेण देवतायै द्रव्यं सङ्कल्पितव्यमित्येष सम्बन्धोऽवकल्पते । तस्माद् यजिमती एते कर्मणी इति ॥ १४ ॥ सिद्धान्त ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गं खल्वप्येनमर्थं दर्शयति । सोमारौद्रं चरुं निर्वपेदिति प्रकृत्य, परिश्रिते याजयेदिति परिश्रयणविधि । एतस्य वाक्ये यजतिशब्देन सङ्कीर्त्तनमवकल्पते । यदि यजिमती एते कर्म्मणी, अथ प्रकृतौ गुणविधानं यावदुक्त वा, यजातिशब्देनानुवादो नावकल्पेत । तस्माद् अवगच्छामो यजिमती इति ॥ १५ ॥ ॥ सिद्धान्ते हेतु ॥

द्रव्यदेवतायुक्तानां यागान्तरताधिकरणम् ॥ ५ ॥

## विशये प्रायदर्शनात् ॥ १६ ॥

किमिहोदाहरणम् । न तावत् सूत्रेणैव परिगृहीतम् । यथा अवेष्टौ

यज्ञसंयोगात् क्रतुप्रधानमुच्यते इति । नापि च साध्यं प्रतिज्ञातम् । यथा, अयनेषु चोदनान्तरम् । केवलं विशये संशये प्रायदर्शनं हेतुरिति निर्दिश्यते । कस्यायं हेतुरिति न विजानीमः । प्रकृतं यजिमदेतत् कर्म्मेति । तदपि न सम्बध्यमानमिव पश्यामः । तदेतदगमकं सूत्रमेव तावदनर्थकम् ॥

अथ का अत्र प्रतिज्ञा, कश्च सन्देह इति वक्तव्यम् । वृत्तिकारवचनात् प्रतिज्ञां संशयं चावगच्छाम । अत्र भगवानाचार्य इदमुदाहृत्य वत्समालभेत, वत्सनिकान्ता हि पशव इतीमं संशयमुपन्यस्यति स्म । किं यजिमदभिधान एव आलभतिरुतालम्भमात्रवचन इति । उपपद्यते चैतदुदाहरणं, संशयश्च । तत्र च पूर्वपक्षं प्रतिजानीते स्म, यजिमदभिधान इति । इदन्तु प्रत्युदाहरणसूत्रं पूर्वस्याधिकरणस्य, नात्र पूर्वपक्षेणातीव प्रयोजनम् । तथापि पुरुषाणामुच्चावचबुद्धिविशेषान् आलोच्य भवति मन्दानां सामान्यतोदृष्टेनाप्याशङ्का । सापि निवर्त्तनीया । न हि मन्दविषेण वृश्चिकेनापि दष्टो म्रियेत न जातुचित् कदापि तत्र चिकित्सा नादरेण कर्त्तव्या भवेत् । अतस्तां निवर्त्तयितुं पूर्वपक्षमुपन्यस्यति स्म । आलभतिरस्माभिः प्राणिसंयुक्तो यजिमदभिधानो दृष्टः । अयमप्यालभति प्राणिसंयुक्त एव । तेनायमपि यजिमद्वचन एवेति भवति कस्यचिदाशङ्का । अथ वा यजिमदभिधानो दृष्ट आलभतिः प्राणिसंयुक्तः । तस्यायमनुवादो वत्सविधानार्थं । तथाच फलं न कल्पयितव्यं भविष्यतीति ॥ एवं प्राप्ते ब्रूम ॥ अस्मिन् संशये आलम्भमात्रं संस्कार । कुतः । प्रायदर्शनात् । यत्रान्यान्यपि संस्कारकर्म्माणि प्रायभूतानीत्युच्यन्ते । तत्रैतदपि श्रूयते । प्रायादपि चार्थनिश्चयो भवति । यथा, अन्यप्राये लिखितोऽन्य इति गम्यते । ननु लिङ्गं प्रायदर्शनम् । कथमनेन सिद्धिरिति । उच्यते । यथा प्रायदर्शनेन सिद्ध्यति, तथा वर्णयितव्यम् । कथञ्च प्रायदर्शनं हेतुः । न्यायत प्राप्तौ सत्याम् । क पुनर्न्यायः । देवतासम्बन्धाभावान्न यागवचनोऽदृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यतीति । तस्मादेव न्यायप्राप्तं प्रायदर्शनं द्योतकं भवति । तस्मादालम्भमात्रं संस्कार. ॥ १६ ॥

अर्थवादोपपत्तेश्च ॥ १७ ॥

अर्थवादश्च भवति । वत्सनिकान्ता हि पशव इति । यस्माद् वत्सप्रिया पशवस्तस्माद् वत्स आलब्धव्य इति । यदि गां प्रस्तावयितुमालभ्यते, तत्रैतद्वचनमवकल्पते । अथ संज्ञपयितुं, तत्रैवञ्जातीयकं वचनं नोपपद्येत । तस्मादप्यालम्भमात्रं संस्कार इति सिद्धम् ॥ १७ ॥ ॥ वत्सालम्भादीनां संस्कारताधिकरणम् ॥ ६ ॥

## संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

अस्ति अग्नि. । तत्र नैवारश्चरुर्भवतीत्युक्त्वा, यदेनञ्चरुमुपदधातीति समामनन्ति । तत्र संदिह्यते । किं चरुर्यागार्थो यागं कृत्वा अवशिष्ट उपधातव्य, उत उपधानार्थं एवेति । यागार्थ इति ब्रूम । चरोर्हि प्रसिद्धं कार्य्यं यागो, नोपधानम् । उच्यते । यद्यपि यागार्थता चरोः प्रसिद्धा, तथापि देवतावचनसम्बन्धाभावाद् यजातिशब्दासंबन्धाच्च न यागार्थतेति गम्यते । तदुच्यते तस्यैव वाक्यशेषे श्रूयते, बृहस्पतेर्वा एतदन्नं यन्नीवारा इति । तेन देवतावचनेन सन्निहितेनैकवाक्यता भविष्यतीति बृहस्पतिर्देवताक उपधातव्य इति । तस्माद् यागार्थश्चरुरित्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूम ॥

संयुक्तस्त्वर्थशब्देन कार्य्यशब्देनोपदधातीति तदर्थ एव स्यादुपधानार्थं । उपदधातिनाचास्य प्रत्यक्षमेकवाक्यत्वम् । परोक्षं देवतावचनेनानुमेयम् । चरुमुपदधातीति हि प्रत्यक्षं वाक्यम् । बार्हस्पत्यमुपदधातीत्यानुमानिकम् । तस्मात् कृत्स्नश्चरुरुपधातव्यः । ततश्च किञ्चिदिज्यायां विनियुज्येत । तदन्यत्र श्रुतमन्यत्र कृतं भवेत् । यत्तु बार्हस्पत्या नीवारा इति । अर्थवाद स इति । यत्तूक्तं, प्रसिद्धा चरोर्यागार्थतेति । प्रसिद्धिर्वाक्येन बाध्यते । तस्मादुपधानार्थं इति सिद्धम् ॥ १८ ॥ ॥ नैवारचरोराधानार्थताऽधिकरणम् ॥ ७ ॥

## पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥

त्वाष्ट्रं पात्नीवतं विधायेदमुच्यते, यत् पर्य्यग्निकृतं पात्नीवतमुत्सृजन्तीति । तत्र सन्देहः । किं त्वाष्ट्रस्य पर्य्यग्निकृतस्यैव उत्सर्गो विधीयते, उत तस्माद् यागान्तरमिति । यदि पर्य्यग्निकृतमुत्सृजन्तीतिपदद्वयं परस्परेण सम्बद्धं ततस्त्वाष्ट्रस्योत्सर्ग । अथ पात्नीवतशब्द उत्सृजतिना सम्बद्ध्येत, ततो यागान्तरम् । किं तावत् प्राप्तम् । यागान्तरमिति । कुत ।पूर्वस्त्वाष्ट्र पात्नीवतश्च । उभयविशेषणविशिष्ट कथ

पात्नीवतशब्देनानूद्येत। अपिच त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्य्यग्निकृतमिति विशेषणं नावकल्पेत । अतो ब्रूमः । पर्य्यग्निकृतस्य पात्नीवतता विधीयते। स एव याग इति ॥ एवं प्राप्ते ब्रूमः ॥ न कर्मान्तरं, पूर्वस्यैवोत्सृजतिशब्देनावच्छेदो विधीयते । किमेवं भविष्यति । यजिमत्ता तावत् कल्पयितव्या न भविष्यति । उत्सृजतिशब्दश्च श्रुत्या उत्सर्गे विदधद् वाक्येन न बाधितो भविष्यति। कर्मान्तरपक्षे वाक्येन पात्नीवततायां विधीयमानायामर्थात् प्राप्त उत्सर्गो धातुनाऽनूद्येत। अपिच पर्य्यग्निकृतस्य पात्नीवतता पूर्वस्य विहितैव। सा विधातुं न शक्यते। तस्मात् पूर्वस्य कर्मणोऽवच्छेदः । यत्तूक्तं- त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्य्यग्निकृतमिति विशेषणं नावकल्पेतेति। नैष दोषः। अतन्त्रमेवात्र पात्नीवतशब्दो, नाऽसौ विशेष्यते। अत एव त्वाष्ट्रः पात्नीवत उभयविशेषणविशिष्टः केवलेन पात्नीवतशब्देन लक्षणयाऽनूद्यतेति न दोषः । तस्माद् अवच्छेद इति सिद्धम् ॥ १९ ॥ त्वाष्ट्रपात्नीवतस्य पर्यग्निकरणगुणकत्वाधिकरणम् ॥ ८ ॥

## अद्रव्यत्वात् केवले कर्मशेषः स्यात् ॥ २० ॥

न कस्यचिदपि प्रकरणे श्रूयते- एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते इति। तथा, परा वा एतस्यायुः प्राण इति योऽंशुं गृह्णातीति । तत्र सन्देहः । किं यागान्तरमेतद्ग्रहणकम्, उत ज्योतिष्टोमयागे ग्रहविधिरिति । किं प्राप्तम्। यागान्तरमिति। कुतः। अपूर्वनामधेयसंयोगात्। न प्रकृतावेतन्नामधेयको यागोऽस्ति, न ग्रहः कश्चिद् योऽभ्यस्येत। तस्माद् यागान्तरम्। ननु द्रव्यदेवतं न श्रूयते। मा भूद् द्रव्यदेवतं, साक्षादेव यजतिशब्दो विद्यते। तस्मात् कर्मान्तरमदाभ्यसंज्ञकम्, अंशुसंज्ञकं च याग करोतीत्येवं प्राप्तम्॥

एवं प्राप्ते ब्रूमः ॥ अद्रव्यदेवताके केवले नामधेये श्रूयमाणे ब्रूमः। ज्योतिष्टोमे एव ग्रहाभ्यासविशेषविधानमिति । कुतः। एतत् तावद् ग्रहस्य नामधेयं, न यागस्य। ग्रहणेन साक्षात्सम्बन्धात्। व्यवहितत्वाद् यागस्य। अंशुरिति च मुक्तसंशयमेव ग्रहनामधेयम्। न च ग्रहभेदे यागभेदो भवति। न च द्रव्यदेवतं श्रूयते, यतो गृह्णातिर्यजिमद्वचनो भवेत् । यदप्युक्तं- साक्षादत्र यजतिशब्दो विधायक इति । नैवं शक्यं कर्मान्तरं विधातुम् । विहितयागवचनो हि सः।

विशेषाभावात् । तस्माद् यजतिना ज्योतिष्टोम एवोच्यते, अंश्वदाभ्यशब्दाभ्यामन्यपरौ ग्रहाभ्यासौ विधीयेते इति सिद्धम् ॥२०॥ अदाभ्यादीनां ग्रहनामताधिकरणम् ॥ ९ ॥

**अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥ २१ ॥**

अस्त्यग्नि । य एवं विद्वानग्निञ्चिनुते इत्येवं विधाय श्रूयते–अथातोऽग्निमग्निष्टोमेनैवानुयजति, तमुक्थेन, तमतिरात्रेण, तं षोडशिनेत्येवमादि । तत्र सन्देह । किमयमग्निशब्दो यागवचनो ज्योतिष्टोमादिभ्य कर्मान्तरं, चिनुते इत्याख्यातेन विधीयते ? उत द्रव्यवचनो ज्योतिष्टोमादिषु गुणविधानमिति । किं प्राप्तम् । यागवचन इति । कुतः । लिङ्गदर्शनात् । लिङ्गं हि दृश्यते । अग्ने स्तोत्रमग्ने शस्त्रमिति । तथा, षडुपसदोऽग्ने चित्यस्य भवन्तीति । यस्य स्तोत्रशस्त्रमुपसदश्च तस्याग्निशब्दो वाचक इति गम्यते । यागस्यैतत् सर्वम् । तस्माद् यागवचन इति । ननु लिङ्गमसाधकं, प्राप्तिरुच्यतामिति । अत्रोच्यते । अथातोऽग्निष्टोमेनैवानुयजतीति यागमभिनिर्वर्त्तयतीत्युच्यते । तम् अग्निमिति विशिनष्टि । तस्मादग्निसंज्ञक इति गम्यते । अनुशब्दोऽप्युपसर्गो यजतेर्विशेषक एवमुपपद्यते । यद्यग्निर्यागः । तस्मात् क्रतुशब्दः प्रतीयेत ॥ २१ ॥ पूर्वपक्ष. ॥

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥**

द्रव्यं वा अग्निशब्देनोच्येत । कतमद् द्रव्यम् । यदेतज्ज्वलनः अत्र ह्येष प्रसिद्ध । चिनुते इत्येषा हि चोदना चयनार्था, न यजत्यर्थे शक्नोति वदितुम् । चयनेनैनं संस्कुरुते चितौ स्थापयतीति । अनुशब्दश्च पश्चादर्थो भविष्यति । चयने निर्वृत्ते पश्चादग्निष्टोमेन यागेन यजतीति ॥ २२ ॥

**तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥**

यत्तु लिङ्गदर्शनमुक्तं यागवचनोऽग्निशब्द इति । तत् तेष्वेव लिङ्गसंयुक्तेषु वचनेषु, न सर्वत्र । तेषु चित्याग्निसंयोगात् । यागे लक्षणशब्द । तेन क्रतुवचनानि तद्धर्म्मविधानानीत्यदोषः ॥ २३ ॥ ॥ सिद्धान्त ॥ अग्निचयनस्य संस्कारताधिकरणम् ॥ १० ॥

**प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥**

कुण्डपायिनामयने श्रूयते– मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते इत्येवमादि । तत्र संदिह्यते । किं नियते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः ? अथ किं नियताग्निहोत्रान्नियताभ्याञ्च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति । किं तावत् प्राप्तम् । नियतेषु कालविधिरिति । कुतः । कालविधिसरूप एष शब्दो मासमिति । कथं कालविधिसरूपता । यदग्निहोत्रं जुहोतीति विदितं, मासमित्यविदितम् । एवञ्चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च न अर्थान्तरवृत्तौ भविष्यतः । तस्मात् कालविधिः । ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम् । कामं बाध्यताम् । वाक्यं हि बलवत्तरम् ॥ एवं प्राप्ते ब्रूमः ॥ प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे, तस्य वाचकं भवितुमर्हति । ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः । नेत्युच्यते । कथम् । उपसद्भिश्चरित्वेति ह्युक्तेदमभिधीयते– न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति । तस्मादशक्यस्तत्र मासविधिः । अथोच्येत– उपसदोऽपि विधीयन्ते इति । तथा गुणविधानार्थेऽस्मिन् वाक्ये अनेकगुणविधानाद् वाक्यं भिद्येत । अस्मिन् पक्षे पुनरतन्त्रम् । अग्निहोत्रशब्दो न कर्म्म विशेक्ष्यति, तेन वाक्यभेदो न भविष्यति । तस्मात् कर्मान्तरमिति सिद्धम् ॥ २४ ॥ मासाग्निहोत्रादीनां कर्मान्तरताधिकरणम् ॥ ११ ॥

## फलं चाकर्मसन्निधौ ॥ २५ ॥

अनारभ्य किञ्चिच्छ्रूयते– आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इति । अत्र सन्दिह्यते । किं प्राकृतेष्वाग्नेयादिषु फलं विधीयते, उत प्राकृतेभ्यः कर्मान्तराण्येतानि । किं प्राप्तम् । प्राकृतेषु फलविधिरिति । कुतः । विदिता आग्नेयादयः प्रत्यभिज्ञायन्ते । तस्मात् तेषामनुवादः फलसम्बन्धार्थ इति ॥ एवं प्राप्ते ब्रूमः ॥ फलं च भेदकमकर्मसन्निधौ श्रूयमाणम् । कथम् । अनुवादे सति न शक्येत फलं विधातुम् । विधायकस्याभावात् । न हि अविधीयमानो ह्युपायो रुचो भवतीति गम्यते । अपिच रुक्कामे अत्र विधीयमाने । कामस्यानित्यत्वादाग्नेयादीनां नित्यत्वात् सम्बन्धो

मावकल्पेत । एवं सर्वत्र । तस्मात् कर्मान्तराणि ॥ २५ ॥ ॥ आग्नेयादिकाम्येष्ट्यधिकरणम् ॥ १२ ॥

## सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥२६॥

अस्त्यवेष्टि – आग्नेयोऽष्टाकपालः पुरोडाशो भवतीत्येवमादिः। तां प्रकृत्योच्यते, एतयाऽन्नाद्यकामं याजयेदिति । तत्र सन्देह । किं कर्मान्तरमवेष्टे, उतावेष्टिरेवेति । किं प्राप्तम् । कर्मान्तरमिति । उक्तेन न्यायेन । एवं प्राप्ते ब्रूम. । सन्निधौ फलार्थेन पुनः श्रुतिरवेष्टेरेव, न कर्मान्तरमिति । कुतः । अविभागात् । एतयेत्येष शब्दो न शक्नोत्यवेष्ट्या विभक्तं यागमन्यं वक्तुम् । सन्निहितस्य प्रतिनिर्देशक एष शब्दः। तस्मादवेष्टेरेवान्नाद्यकामस्य विधीयते इति । किं प्रयोजनम् । यद्यवेष्टिराग्नेयादीनि हवींषि।अथ कर्मान्तरम्, अन्यहविष्को याग इति ॥ ॥ २६ ॥ ॥ अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ॥ १३ ॥

## आग्नेयसूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥

दर्शपूर्णमासयो , आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति विधाय पुनरुच्यते– आग्नेयोऽष्टाकपालोऽमावास्यायां भवतीति । तत्र सन्देह । किममावास्यायां द्विराग्नेयेन यष्टव्य, उत सकृदिति । किं प्राप्तम् । आग्नेयसूक्तहेतुत्वादभ्यासेन प्रतीयते, एकस्यैवं पुन श्रुतिरविशेषादनर्थकं हि स्यादिति ॥२७॥ पूर्व०॥

## अविभागात्तु कर्मणा द्विरुक्तेर्न विधीयते ॥ २८ ॥

नैतदस्ति, पुनरभ्यसितव्य आग्नेय इति कुत । नाभ्यासस्य वाचकः शब्दोऽस्तीति । नन्वाग्नेयः पुनरुच्चारित परं कर्म्म विधास्यति । नेति ब्रूम । शब्दः पुनरुच्चरितो न पुनरर्थं कर्त्तव्य इति शक्नोति वदितुम् । योऽस्य प्रथममुच्चारितस्यार्थ. शतकृत्वोऽप्युच्चारितस्य स एवार्थो भविष्यति, नान्यः । ननु विहितमेव पुनरविशिष्ट विदधदनर्थको भवति । भवतु काममनर्थकत्वं, न त्वन्यं शक्नोति वदितुम् । भवेदुपपन्नमनर्थकत्वं, न त्वर्थान्तरवचनता । तस्मान्न द्विरभ्यस्येतेति ॥ २८ ॥

## अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥

अथ वा, नानार्थिका पुन श्रुति. । अर्थवादार्था भविष्यतीत्युच्यते । किमर्थवादेन प्रयोजनम् । यदा पूर्वेणैव वाक्येन सार्थवादकेन

विहित आग्नेयः कमन्यमर्थं विधातु श्रुतिः प्रयुज्ज्येत श्रुतिमात्रं यत्र कस्यचिद्विधानार्थं तदनर्थकमित्युक्तम् । आम्नायस्य क्रियार्थत्वादार्थक्यमतदर्थानामिति । श्रुतश्चाश्रुतश्च तावानेव सोऽर्थ । यथा श्रुता च अश्रुता च देवता अङ्गभावं साधयति, एवमेतदिति । तदुच्यते– अन्यार्था वा पुनःश्रुति ॥ न आग्नेयं विध तुम् । ऐन्द्राग्नविधानार्था । आग्नेयोऽष्टाकपालोऽमावास्यायां भवत्येव । न केवलेनाग्निना स साधुर्भवतीतीन्द्रसहितोऽग्नि समीचीनतर । तस्मादैन्द्राग्न कर्त्तव्य इति ॥ २९ ॥ ॥ सिद्धान्तः ॥ आग्नेयद्विरुक्तं स्तुत्यर्थताधिकरणम् ॥ १४ ॥ इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये द्वितीयस्य अध्यायस्य तृतीय पाद. ॥ २ ॥ ३ ॥

अथ द्वितीयाध्यायस्य चतुर्थ पाद ॥ २ ॥ ४ ॥

## यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

बह्वृचब्राह्मणे श्रूयते– यावज्जीवमग्निहोत्रं जुहोतीति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । अत्र संदेह । किं कर्म्मधर्मोऽभ्यासो यावज्जीविकता, उत कर्त्तृधर्मो नियमश्चोद्यते यावज्जीविकतेति । कथं कर्म्मधर्मोऽभ्यास , कथं वा कर्त्तृधर्मो नियम इति । यदि जुहोतिरनुवादः, यावज्जीवमिति विधिस्तत्र कर्म्मधर्मोऽभ्यास. । यदि विपरीतं, तत. कर्तृधर्मो नियम इति । किं तावत् प्राप्तम् । कर्म्मधर्मोऽभ्यास । कुतः । प्रकरणात् । यदीयं वचनव्यक्तिः । जुहोतियजतिशब्दावनुवादौ, यावज्जीवमिति च विधिस्ततः प्रकरणमनुगृह्यते । तस्मादभ्यास. । एवं कृत्वा सत्रमस्तवो युक्तो भविष्यति । जरामर्यं वा एतत् सत्रं यदग्निहोत्रं, दर्शपूर्णमासौ चेति दीर्घकालसामान्यात् । तस्मादभ्यास ॥ १ ॥ ॥ पूर्वपक्ष ॥

## कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥

अत्र ब्रूमो, यावज्जीविकोऽभ्यासो न स्यात्, कर्तुर्धर्मो नियमश्चोद्यते इति । कुत । श्रुतिसंयोगात् । एवं श्रुतिपरिच्छिन्नोऽर्थो भविष्यति । इतरथा लक्षणा स्यात् । कथम् । यावज्जीवन, तावता कालेन कुर्यादिति । तदेतत् प्रदोषपरिसमाप्तमग्निहोत्रमनभ्यस्य, न शक्यते यावज्जीवनकालेन कर्तुम् । पौर्णमास्यमावास्यापरिसमाप्तौ च दर्शपूर्णमासौ यद्युच्येत, जीवनकालस्यैकदेशेऽपि कृत तेन कालेन कृतं भव-

तीति । नैतदेवम् । अर्थप्राप्तं हि तद् न विधातव्यं शब्देन । जीवनपरिमितः कालो यस्तेन परिसमापयितव्यमित्यर्थादभ्यासः । स हि कर्त्तव्यतया श्रूयते । न चासौ जुहोति-यजतिभ्यामुच्यते । लक्षणया तु गम्यते । यावज्जीवं जुहुयात्, यावज्जीवमभ्यस्येदिति । श्रुतिश्च प्रकरणाद् बलीयसी । यदि इयं वचनव्यक्तिरस्य वाक्यस्य, यावज्जीवमित्यनुवादो, जुहोति यजतीति च विधानमित्येवं यजतिजुहोतिशब्दौ स्वार्थावेव भविष्यतः, यावज्जीवशब्दोऽपि जीवनवचन एव, नाभ्यासलक्षणो भविष्यतीति जीवने निमित्ते कर्म्म विधीयते । जीवँश्चेद् होतव्यमिति । जीवनं निमित्तं, न कालः । नियतनिमित्तत्वान्नियतं कर्म्म तेनोच्यते । कर्त्तुर्धर्मो नियमश्चोद्यते इति ॥ २ ॥ ॥ सि० ॥

## लिङ्गदर्शनाच्च कर्म्मधर्म्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत् स्यात् ॥ ३ ॥

लिङ्गञ्च भवति । अपि ह वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी पौर्णमासीममावास्यां वा अतिपातयेदिति । कथं लिङ्गम् । कर्म्मधर्म्मे हि प्रक्रान्तं सत्रं यावज्जीवनकालेन परिसमाप्येत, न तत्र कालातिपातः स्यात् । तत्र चानर्थकमन्यत् स्यात् प्रायश्चित्तादि विधीयमानम् ॥ ३ ॥

## व्यपवर्गञ्च दर्शयति कालश्चेत् कर्मभेदः स्यात् ॥ ४ ॥

व्यपवर्गस्य समापनस्य दर्शनं भवति, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । यदि दर्शपूर्णमासाभ्यामिष्ट्वा सोमस्य कालोऽस्ति, व्यक्तं न यावज्जीवनकालेन तौ परिसमाप्येते । अथ जीवनं निमित्तम्, उपपद्यते कर्म्मभेदः । दर्शपूर्णमासौ परिसमाप्य सोमं कर्मान्तरं कुर्य्यादिति ॥ अपि च, आहिताग्निर्वा एष योऽग्निहोत्रं जुहोति न दर्शपूर्णमासौ यजेत, या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोतीत्यनुध्यायिनीवचनं भवति । नियतो य आहुतिभागस्तस्मिन् अदीयमाने अनुध्यायिनीवचनं भवति । यस्त्वनियत आहुतिभागस्तमनुध्यायन्ति, इद नो भविष्यतीति । नियतश्च भागो नियमपक्षे भवति, न काम्यपक्षे । कर्म्मधर्म्मे च काम्यमग्निहोत्रञ्च दर्शपूर्णमासौ च । तस्मान्नियमपक्षः । अपि च श्रूयते—

जरामर्य्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा

एताभ्यां निर्मुच्यते मृत्युना चेति जरामरणनिर्मोचनावधारणवचनं च नियमपक्षे उपपद्यते। काम्यपक्षे ह्यप्रयोगादपि मुच्येत ॥ ४ ॥

अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥

तु-शब्दोऽन्वाचये इतश्च पश्याम, कर्तुर्धर्मो नियमश्चोद्यते इति। यदि पूर्वस्य होमस्य गुणविधिर्भवेत् स एवैक पूर्वोऽग्निहोत्रहोमोऽनित्य स्यात्, कामसंयोगेन श्रुतो, नान्य कश्चिन्नित्य। तत्र लिङ्गं विरुध्येत। जरामर्यं वा एतत् सत्र यदग्निहोत्रं दर्शपूर्णमासौ, जरया वा एताभ्यां निर्मुच्यते मृत्युना चेति। कथं विरुध्यते। जरामरणनिर्मोचनावधारणवचनं नियमपक्षे उपपद्यते। काम्यपक्षे अप्रयोगादपि मुच्येत ॥ ५ ॥

विरोधश्चापि पूर्ववत् ॥ ६ ॥

इतश्च पश्यामो, न पूर्वाभ्यासो गुणश्चोद्यते इति। कुत। विरोधात्। विरोधो भवति। दर्शपूर्णमासविकारा सौर्यादयोऽपि यावज्जीवमभ्यसितव्या भवेयु। सोऽनारभ्यार्थ प्रतिज्ञातः स्यात्। अतोऽपि पश्यामो नियम इति। सत्रसंस्तवश्च सन्ततभावमुपपत्स्यते ॥ ६ ॥ ॥ हेतुः ॥

कर्तुस्तु धर्मनियमात् कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

यदि कर्त्तुर्धर्मो नियमश्चोद्येत, ततो जीवनं निमित्तम्। जीवने निमित्ते कर्म्म विधीयते। तत्र प्रयोगे परिसमाप्तं कर्म्म। तथा व्यपवर्गस्य दर्शनमवक्लृप्तम्भवति। तस्मात् कर्तृधर्मो नियमश्चोद्यते इति सिद्धं भवति ॥ ७ ॥ युक्तिः ॥ यावज्जीविकाग्निहोत्राधिकरणम् ॥ १ ॥

नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥

इह शाखान्तराण्युदाहरणम्। काठकं, कालापकं, पैप्पलादकम्। इत्येवमादीनि। तत्र सन्देह। किमेकस्यां शाखायां यत् कर्म्म अग्निहोत्रादि श्रूयते, तच्छाखान्तरे पुन श्रूयमाणम्भिद्येत तस्माद्, उत न भिद्येत। भिद्येतेति पश्यामः। कुतः। नामभेदात्। एकं काठकं नाम, अन्यत् कालापक नाम। एवं नामभेदाद्भेद। ननु ग्रन्थनामैतत्। सत्यम्।

कर्मणामपीति ब्रूमः । कर्मभिरप्येवमादीनां सामानाधिकरण्यमेकाविभक्तित्वञ्चेति ॥ रूपभेदाच्च ॥ एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति, एकस्यां द्वादशकपालम् । एवं भिन्नरूप, कथमिव न कर्मान्तरं भविष्यति ॥ धर्मविशेषाच्च ॥ कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति अपरे शाखिनो नाचरन्ति । तथा अग्निमधीयाना केचिदुपध्यायस्योदकुम्भानाहरन्ति, अपरे न। अश्वमेधमधीयाना केचिदश्वस्य घासमाहरन्ति, अपरे न । परेऽन्यं धर्ममाचरन्ति । अश्वघासादेरेकेषामुपकारम् आकाङ्क्षति अश्वमेधादि, एकेषां नाकाङ्क्षति । स एवैक कथं नाकाङ्क्षेत, कथं वाऽन्यदाकाङ्क्षितुम् अर्हति । अतो गम्यते—अन्यदिति ॥ पुनरुक्तिप्रसङ्गाच्च ॥ यदि सर्वशाखाप्रत्ययमेकं कर्म, एकस्यां शाखाया विहितस्य कर्मण शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात् । न तु भेदपक्षे एष दोषोऽस्ति । तस्मादपि कर्मभेद ॥ निन्दावचनाच्च ॥ प्रात प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये अग्निहोत्रं दिवाकीर्त्यम् अदिवा कीर्त्तयन्त सूर्य्यो ज्योतिर्न तदा ज्योतिरेषामिति केचिच्छाखिनोऽनुदितहोमं निन्दन्ति। अपरे पुनरुदितहोमं निन्दन्ति । यथाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद् यदि उदिते जुह्वतीति सर्वशाखाप्रत्यये विरुद्धं, न तु कर्म्मभेदे, तस्मादपि भेद इति ॥ अशक्तेश्च ॥ न शक्नुयु खल्वपि सर्वशाखाप्रत्ययमुपसंहर्त्तुम् । तत्रानारभ्योऽर्थो विधीयते इति प्रतिज्ञात भवेत् । शक्यन्तु कर्म्मभेदे । अत कर्म्मभेद इति ॥ समाप्तिवचनाच्च ॥ असमाप्तेऽपि समाप्तेर्वचनं भवति । केचिदाहुः, अत्रास्माकमग्न परिसमाप्यते इति । अपरेऽन्यपरिसमाप्तिं व्यपदिशन्ति । तदेककर्म्मत्वे नोपपद्यते न हि तत्र च परिसमाप्येत, अन्यत्र न । भेदे तु युक्तम् । तस्माद् भेद इति ॥ प्रायश्चित्तविधानाच्च ॥ केचिदनुदितहोमव्यतिक्रम प्रायश्चित्तमामनन्ति, केचिदुदितहोमव्यतिक्रमे, वृद्धं च प्रायश्चित्तम् । नच कर्मैकत्वे उभयथा वृद्धि सम्भवति। कर्म्मभेदे तु यदनुदिते होमकर्म, तदुदिते वृद्धमितरदप्युदिते । तस्मादपि भेद ॥ अन्यार्थदर्शनाच्च ॥ इदं श्रूयते— यदि पुरा दिदीक्षाणा स्युः यदि वैषां गृहपति गृहपतेर्वानुसात्रिण इति, त एनमव बृहत्सामान क्रतुमुपेयुरुपेतं ह्येषां रथन्तरम् । अथ यदि अदिदीक्षाणा इति इष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनमुपपद्यते यदि कर्म-

भेदः । एककर्म्मत्वेनावकल्पते । कथम् । ताण्ड्यके श्रूयते । एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो, य एतेनानिष्ट्वाऽथान्येन यजेत गर्त्तपत्यमेव तज्जायेत प्रवामायते इति । तत् सर्वत्र स्यात् । तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते । तस्मादपि कर्म्मभेदः ॥ अथापरं लिङ्गदर्शनम् ॥ यत्पक्षसम्मितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात् कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं पापीयान् स्यात्, अथ यदि वेदिसम्मितया मिनोतीति पक्षसम्माने प्रतिषिद्धे वेदिसम्मानस्य दर्शनं भवति । तत्तु कर्म्मभेदे उपपद्यते । पाक्षिकस्य वेदिसम्मानस्य दर्शनम् एककर्म्मत्वे नोपपद्यते । कथम् । एके हि समामनन्ति । रथाक्षमात्राणि यूपान्तरालानि भवन्तीति । तत् सर्वत्र स्यात् तत्र च नो पक्षसम्मानं, नो वेदिसम्मानं स्यात् । वेदिसम्मानदर्शनं नोपपद्यते । तस्मादपि कर्म्मभेदः ॥ अपरञ्च लिङ्गदर्शनम् ॥ केषाञ्चिज्ज्योतिष्टोमे श्रूयते । द्वे सस्तुनानां विराजमतिरिच्येते इति । परेषां तिस्रः सस्तुनानां विराजमतिरिच्यन्ते इति । एककर्म्मत्वे विरोधः । नानाकर्म्मत्वे कस्मिंश्चिज्ज्योतिष्टोमे द्वे, कस्मिंश्चित् तिस्रः । तस्मात् कर्म्मभेद इति ॥ अपि च सारस्वते श्रूयते । ये पुरोडाशिनस्ते उपविशन्ति ये सान्नायिनस्ते वत्सान् वारयन्ति । सान्नायिन इष्टप्रथमयज्ञाः । पुरोडाशिनो विपरीताः । उभयेषां सारस्वते दर्शनमवकल्पते कर्म्मभेदे । एककर्म्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात् । तत्र दर्शनं नोपपद्यते ॥ अपि च श्रूयते । उपहव्यो निरुक्तः, अग्निष्टोमो यज्ञः, रथन्तरसामा, अश्वः श्यावो दक्षिणा । परेषां श्रूयते । उपहव्योऽनिरुक्तः, उक्थो यज्ञो बृहत्सामा, अश्वः श्वेतो रुक्मललाटो दक्षिणेति । कर्म्मैकत्वे रथन्तरवचनं बृहद्वचनं चानर्थकम् । शाखाद्वयप्रत्ययत्वात् । बृहत्सामा रथन्तरसामा वा स्यात् । स चायं प्रकृतित एवंलक्षणकः प्राप्तः । नानाकर्म्मत्वे त्वन्यो बृहत्सामाऽन्यो रथन्तरसामेति युक्तं भवति । तस्माच्छाखान्तरे कर्म्मभेदो भवितुम् अर्हति ॥ ८ ॥ ॥ पूर्वपक्षः ॥

**एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥**

नचैतदस्ति, यदुक्तं शाखान्तरेषु कर्म्मभेद इति । सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययञ्चैकं कर्म्म । अर्थसंयोगस्याविशेषात् । तदेव

प्रयोजनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः।रूपमप्यस्य तदेव द्रव्यदेवतम्। पुरुषप्रयत्नश्च तादृश एव चोद्यते। नामधेयञ्चाविशिष्टम्। तेन तदेव कर्म्म सर्वशाखादिष्विति प्रत्यय ॥ ९ ॥ सिद्धान्तः ॥

## न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥

यदुक्त नामभेद इति। परिहृतं तद् ग्रन्थनामत इति। अथ यदुक्तं, कर्म्मणोऽपि नामसामानाधिकरण्यदर्शनादिति। नैष दोष। ग्रन्थसयोगात् कर्म्म काठकादि, न कर्म्मसयोगाद् ग्रन्थ काठकः। कथं गम्यते। यत् कर्म काठकादिसंयुक्त तत् काठकादिशब्देनोच्यते। किमतोऽपि यद् ग्रन्थसंयोगात् काठकं कालापकं कर्मोच्यते। एकत्वेऽपि काठकग्रन्थसयोगात् काठकं कालापकग्रन्थसंयोगात् तु कालापक भविष्यति ॥ १० ॥ ॥ पूर्वपक्षनिरासः ॥

## सर्वेषाञ्चैककर्म्यं स्यात् ॥ ११ ॥

यदि शब्दभेदाद्भेदो भवेत्, शब्दैक्यात्तर्हि कर्मैक्य भवेत्। तत्र काठकशब्दाभिधानादैक्य भवेत्। अग्निहोत्रस्य दर्शपूर्णमासयोर्ज्योतिष्टोमस्य च तच्छब्दत्वात्। न चैतदेवम्। तस्मादपि अभेद ॥११॥

## कृतकं चाभिधानम् ॥ १२ ॥

इदानीन्तनञ्चैतदभिधान भवेत्। अस्य न पूर्वमासीद्। यत' प्रभृति कठस्य प्रकृष्ट वचन, ततः प्रभृति प्रवृत्तम्। पूर्वं नासीद्भेद', इदानीं भेद इति विरुद्धम् ॥ १२ ॥ ॥ युक्तिः ॥

## एकत्वेऽपि परम् ॥ १३ ॥

एककर्मत्वेऽपि रूपभेदो भवति वचनात्। न च वाचनिके रूपभेदे, असत्यामपि भेदबुद्धौ कर्मणो भेदोऽध्यवसीयेत ॥ १३ ॥

## विद्यायां धर्म्मशास्त्रम् ॥ १४ ॥

अथ यो धर्मविशेष उक्तो विद्याग्रहणार्थं, स न कर्मण उपकारक। कथं गम्यते। श्रुत्यादीनामभावाद् विद्यासंयोगाच्च न कर्मप्रयुक्त इति ॥ १४ ॥ ॥ पूर्वपक्षनिरास' ॥

## आग्नेयवत् पुनर्वचनम् ॥ १५ ॥

अथ यदुक्तं—यथाऽमावास्यायामाग्नेयस्य पुनरुक्तदोषान्मध्यम पक्षो निरस्त एवमयमपि तस्मादेव दोषात् कर्मैकत्वपक्षो निरसितव्य

इति । एतत् परिहर्त्तव्यमित्याभाषान्तं सूत्रम् ॥ १५ ॥ ॥ आशङ्का ॥

अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥

नैव खल्वेतद् द्विर्वचनम् । स एवायमर्थः पुनः श्रावितोऽग्निहोत्रादिर्बहुकृत्वो बहुभिस्तु पुरुषैः । न चैकोऽर्थो बहुभिरुच्यमानः पुनरुक्तो भवति । यदि भवेद्, एकस्मिन्नेव वेदे बहुभिरुच्यमाने भवेत् । तस्मान्न बहुकर्मसमवायोऽयम्, एकमेवेदं कर्मेति ॥ १६ ॥ आ० नि० ॥

अर्थासन्निधेश्च ॥ १७ ॥

अर्थासन्निधेश्च शाखाशब्द उपपन्नो भविष्यति । शाखा इव होमा शाखा । तद् यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य वेदस्य शाखाः । किं शाखासारूप्यम् । यथा नानावस्थानम् । नचैकैकस्यां कृत्स्नं पुष्पं फलं सन्निहितम् । एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं सन्निहितमित्यर्थासन्निधेः शाखाशब्दोपपत्तिः । तस्मादप्येकं कर्मेति ॥ १७ ॥

न चैकं प्रति शिष्यते ॥ १८ ॥

न च यत् काठकेऽग्निहोत्रं तत् काठकमेवैकं पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तद्विहितमेव । पुरुषविशेषवचनाभावात् यच्चाग्निहोत्रस्य किञ्चिदङ्गं विधीयते, सर्वावस्थस्य तदग्निहोत्रस्य । यच्च काठकस्याग्निहोत्रं तच्च तैत्तिरीयकस्येति । विशेषवचनाभावात् । तस्मात् सर्वशाखाभिरेकं समाप्तं कर्मोच्यत इति ॥ १८ ॥

समाप्तिवच्च सम्प्रेक्षा ॥ १९ ॥

अत्रास्माकमग्निः परिसमाप्यत इत्युत्प्रेक्षितारो भवन्ति । अन्वारोहेषु मैत्रायणीयानामग्निः परिसमाप्यते, अस्माकं तेषु न परिसमाप्यत इति । यदि अन्यदेव मैत्रायणीयानामन्यच्च तेषां, कथं ते ब्रूयुरेष्वस्माकं न परिसमाप्यते इति । एकत्वमुपपन्नं, तेषामपि हि ते सन्ति ॥ १९ ॥ ॥ युक्तिः ॥

एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥२०॥

न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते । किं तर्हि निन्दितादितरत् प्रशंसितुम् । तत्र न निन्दितस्य प्रतिषेधो गम्यते, किन्त्वितरस्य विधिः । तत्र एकस्मिन्नग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते । अतो न कश्चिद्विरोध ॥

तथा असमर्थानामेकस्मिन्नपि वेदे विहितकृत्स्नमङ्गजातमुपसं-हर्तुमशक्ति । समर्थानान्तु सर्वशाखाभ्योऽप्यागमितमाधिक विधि-मुपसंहर्तुं शक्तिरस्तीति तेनैककर्मत्वेऽपि न विरुद्धमिति ॥ तथैक-स्मिन्नपि कर्मणि किञ्चिद् वस्तु समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते । यथा आध्वर्यवे समाप्ते ज्योतिष्टोमस्य, समाप्तो ज्योति-ष्टोम इति भवति ॥ २० ॥ ॥ पूर्वपक्षनिरासः ॥

**प्रायश्चित्तं निमित्तेन ॥ २१**

यदुक्तम्- उदितहोमस्यापि प्रायश्चित्तान्ता नावृद्धता गम्यते, अनुदितहोमस्यापि । तदेकत्वे विरुद्ध्यते । अविरुद्धं नानात्वे इति । तत् परिहर्त्तव्यम् ॥ आभाषान्तं सूत्रम् ॥ २१ ॥ ॥ आशङ्का ॥

**प्रक्रमाद्वा नियोगेन ॥ २२ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । नैष दोष. । उदिते होष्यामीति प्रक्रान्ते अन्यथा क्रियमाणे भवति दोषः । तत्र प्रायश्चित्तस्य विषयो भविष्यतीति कर्म्मैकत्वेऽपि न दोष. ॥ २२ ॥ ॥ आशङ्कानिरासः ॥

**समाप्तिः पूर्ववत्त्वाद् यथाज्ञाते प्रतीयेत ॥ २३ ॥**

पूर्ववति समाप्तिवचनं भवति । यत् प्रारब्धं तत् परिसमाप्यते । तत्रास्माकं परिसमाप्तोऽग्निरिति योऽस्माभिर्ज्ञायते, परिसमाप्यते । प्रारब्धश्चेत्यभिप्राय. ॥ २३ ॥

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २४ ॥**

यदुक्त- यदि पुरा दिदीक्षाणा इति द्वादशाहे इष्टप्रथमयज्ञाना-मनिष्टप्रथमयज्ञानां च दर्शनं कर्मभेदे उपपद्यते, न सर्वशाखाप्रत्ययै-ककर्म्मणीति । नैष दोषः । यदि दिदीक्षाणा द्वादशाहेन, अदिदीक्षा-णा द्वादशाहेनेत्येवं तत् । न हि सामवेदे ज्योतिष्टोमस्य विधानम् । किमतोऽपि । यत्र विहितस्तत्रानूद्यते, तेन कर्म्मभेदेऽपि सर्वज्योति-ष्टोमानामेष धर्म्मः प्राथम्य नाम । अतो नानाकर्म्मपक्षेऽपि अवश्यं द्वादशाहस्य हारव्यपदेश कल्पनीयस्तस्माददोषः ॥ २४ ॥

**द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद् व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २५ ॥**

द्रव्ये चाग्नावचोदितत्वादेकादशिन्याः सम्मानपरिमाणं प्रति नैषा व्यवस्था स्यात्। नैवाग्नावेकादशिनी चोद्यते। कुतः। पक्षसम्मानं वेदिसम्मानं वा स्यात्। द्वयमप्येतत् परार्थं कीर्त्त्यते, पश्वेकादशिनीविधानार्थम्। यदि पक्षसम्मिता स्यादयं दोषः स्यात्। वेदिसम्माने न दोषो भवेत्। क एतत् सङ्कटमध्यवसानमर्हति। एकस्मिन् यूपे एकादश पशवो नियोक्तव्या इति। वाचस्तोमादिषु तु यूपैकादशिन्यामस्य नित्यानुवादत्वाद्रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति। नित्यानुवादत्वाच्चासत्यपि पक्षसम्माने वेदिसम्माने वैकादशिनीविधानार्थं वचनमुपपद्यत एवेति न दोषः ॥ २५॥

## विहितप्रतिषेधात् पक्षेऽतिरेकः स्यात् ॥ २६ ॥

अतिरात्रे गृह्णाति षोड़शिनमिति विहितः षोड़शी, नातिरात्रे गृह्णाति षोड़शिनमिति प्रतिषिद्धः। तेन पक्षे द्वयोः स्तोत्रीययोरतिरेकः, पक्षे तिसृणाम्। तस्माददोषः। कथं पुनरयं द्वयोस्तिसृणां वा अतिरेकः। त्रिवृद् बहिष्पवमानं, तत्तावन्नवकम्। पञ्चदशान्याज्यानि, तानि तावच्चत्वारि, तेन सा षष्टिः, पञ्चदशो माध्यन्दिनः पवमानः। तया पञ्चदशसंख्यया सह पूर्वया च नवसंख्यया चतुरशीतिः। सप्तदशानि पृष्ठानि चत्वारि, सप्तदश आर्भवः पवमानः, पञ्चसप्तदशकानि तानीति पञ्चाशीतिः। पूर्वया चतुरशीत्या सहैकोनसप्ततिशतम्। एकविंशं यज्ञायज्ञियं, तयैकविंशत्या सह तस्य नवत्रिशतं स्तोत्रिया इति ब्राह्मणवादः। अग्निष्टोममात्रमभिप्रेत्योच्यते, सा विराट् सम्पूर्णा विराडिति दशाक्षरा। त्रय एकविंशका उक्थपर्य्यायाः, सा त्रिषष्टिः। एकविंशः षोड़शी। तयैकविंशत्या सह चतुरशीतिः। पञ्चदशका रात्रिपर्य्यायास्त्रयः। तत्रैकैकपर्य्यायश्चतुःस्तोत्रः। तदशीतिशतं सम्पूर्णा विराट्। त्रिवृद्रथन्तरं पञ्चसाम, तन्नवकम्। ततश्चतुरशीतेरेकं नवकमागच्छति। तथा निरुक्तसंस्तुतानां विराजमतिरिच्यन्ते। यदा षोड़शी न गृह्यते, तदा एकविंशत्या विना द्वे संस्तुतानां विराजमतिरिच्येते। एवमेककर्म्मत्वेऽपि लिङ्गमुपपद्यते ॥ २६ ॥

## सारस्वते विप्रतिषेधाद् यदेति स्यात् ॥ २७ ॥

यदुक्तं, पुरोडाशिनां साम्नायिनां च सारस्वते दर्शनं भवतीति।

ज्योतिष्टोमपूर्वकत्वात् सर्वकर्म्मणां विप्रतिषिद्धमेतदिति । तेन यदा साम्नायिन इति कल्प्यते ॥ २७ ॥ ॥ पूर्वपक्षनिरासः ॥

**उपहव्येऽप्रतिप्रसवः ॥ २८ ॥**

अथ यदुक्तं, उपहव्ये बृहद्रथन्तरविधानं प्रकृतिप्राप्तमेव । एककर्म्मत्वे प्रतिप्रसवतयाप्यसम्भवाद्विधीयमानमनर्थकं स्यादिति । तत् परिहर्तव्यम् । आभाषान्तं सूत्रम् ॥ २८ ॥ ॥ आशङ्का ॥

**गुणार्था वा पुनः श्रुतिः ॥ २९ ॥**

यदा रथन्तरसामा, तदा अश्व श्वेतो दक्षिणा, यदा बृहत्सामा तदा रुक्मललाट इति ॥ २९ ॥ ॥ आशङ्कानिरास ॥

**प्रत्ययश्चापि दर्शयति ॥ ३० ॥**

यदा न सर्वशाखाप्रत्ययमेकं कर्मेति, कथमेकस्यां शाखायां समाम्नायतेऽन्यस्यां गुणो विधीयते । यथा मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते, अथ च गुणा श्रूयन्ते- ऋतवो वै प्रयाजा समानीय होतव्या इति । तथा येषां शाखिनां, कुटरुरसीत्यश्मादानमन्त्रो नाम्नातस्तेषामपि हि दृश्यते- कुक्कुटोऽसीत्यश्मानमुपादत्ते, कुटरुरसीति वेति । तस्मादेकं कर्म्मेति प्रतीम ॥ ३० ॥युक्तिः

**अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३१ ॥**

यो ह्यन्यशाखावस्थितान् विधीनुपसंहरति, स स्वशाखाहितं क्रममुपरुणद्धीति । तेन शाखान्तरेषु कर्म्मभेद इति ॥ ३१ ॥ आ० ॥

**विरोधिना त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३२ ॥**

उच्यते । नैष शाखान्तरविहितानामैककर्म्ये सति विरोधिना संयोग । न हि क्रमो वाक्येन विरुद्ध्यते । दुर्बलो हि क्रम । बलवद्वाक्यम् वाक्येन च शाखान्तरीयाणामुपसंहारः । तस्मात् सर्वशाखाप्रत्यय सर्वब्राह्मणप्रत्ययश्चैकं कर्म्म चोद्यत इति सिद्धं भवति ॥ ॥ ३२ ॥ आ० नि० ॥ सर्वशाखाप्रत्ययैककर्मताधिकरणम् ॥ २ ॥ इति श्रीभट्टशबरस्वामिन. कृतौ मीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पाद ॥ २ ॥ ४ ॥ समाप्तोऽयं द्वितीयोऽध्याय. ॥ २ ॥

अथ तृतीयेऽध्याये प्रथमः पादः ॥ ३ ॥ १ ॥

## अथातः शेषलक्षणम् ॥ १ ॥

नानाकर्म्मलक्षणं वृत्तम्। अनन्तरं शेषलक्षणं वर्त्तयिष्यामः। कः शेषः, केन हेतुना शेषः, कथञ्च विनियुज्यते? इति। श्रुत्यादीनि च विनियोगे कारणानीति वक्ष्यते। तेषां च बलवदबलवत्ता। एतत्तात्पर्य्येणान्यदप्युपोद्घातादिना ॥ १ ॥ प्रतिज्ञाधिकरणम् ॥ १ ॥

## शेषः परार्थत्वात् ॥ २ ॥

इह सूत्रे शेषस्य लक्षणं, येन च हेतुना शेष इत्युच्यते, तदुभयमाख्यायते। यः परस्योपकारे वर्त्तते, स शेष इत्युच्यते। तद् यथा। ये परार्थास्ते वक्तारो भवन्ति, शेषभूता वयमिहेति। ननु योऽपि प्रधानभूतः सोऽपि कदाचित् परार्थे वर्त्तते। यथा उपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्त्तते। सत्यं वर्त्तते। यस्तु अत्यन्तं परार्थस्तं वयं शेष इति ब्रूमः। यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽनड्वांश्च क्रीयते, वक्ष्यतीत्येव। ननु गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात्। नेति ब्रूमः। आत्मन एवासौ संविदधानो गुणभावं गच्छति। नान्तरीयकत्वाद् गर्भदासस्योपकरोति, अनडुहो वा। यस्त्वत्यन्तं परार्थस्तं वयं शेष इति ब्रूम ॥ अथ तत्र किं वृत्तम्। यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेतेति। तत्र अपूर्वार्थता व्यावर्णिता, दृष्टप्रयोजनानामाख्यातानाम्। इह तु सर्वेषामेव शेषाणां लक्षणमुच्यते ॥ २ ॥ ॥ शेषत्वकारणसहित-शेषलक्षणाधिकरणम् ॥ २ ॥

## द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥

बादरिराचार्योऽत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, न यागफलपुरुषेषु। द्रव्यं क्रियार्थम्, यदि प्रयोजनवती क्रिया, व्यक्तं सा द्रव्येण निर्वर्त्तयितव्या। तस्या निर्वृत्तिर्द्रव्यादृते न भवतीति तन्निर्वृत्तये द्रव्यमेषितव्यं भवति। तस्मात् क्रियार्थं द्रव्यम्। गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम्। लक्षितेन च तेन प्रयोजनम्। विशिष्टस्य क्रियासाधनत्वात्, तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोतीति क्रियार्थ एव। संस्कारो नाम स भवति यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य तेनापि क्रियायां कर्त्तव्यायां

प्रयोजनमिति सोऽपि परार्थः । तस्माद् द्रव्यगुणसंस्कारा: परार्थत्वाच्छेषभूता, न तु यागफलपुरुषा: । यागस्तावत् कर्त्तव्यः पुरुषस्य । न हि तस्मिन्निर्वर्त्तिते किञ्चिद् अपरमस्ति कर्त्तव्यम् । स हि पुरुषार्थः । यदन्यद् द्रव्यादि तत् तदर्थं तस्य शेषभूतम् । स तु न किञ्चिदभिनिर्वर्त्तयितुं क्रियते । फलमपि न तेन क्रियते । तस्मिँस्तु कृते स्वयमेव तद् भवति । तस्मिन् कृते फलमस्य भवतीत्येतावद् गम्यते । नास्ति शब्दो, यागेन क्रियते फलमिति । तस्माद् यागो न शेषभूतः कस्यचिदर्थस्य । फलमपि न पुरुषं प्रत्युपदिश्यते । यः स्वर्गं कामयते स यागं कुर्य्यादित्येतावच्छब्देनोपदिश्यते, नात्मनः, परस्य वाति । स्वर्गं प्रतीच्छामात्रेण स्वर्गकाम इति भवति । तस्मात् पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः । तस्मात् सोऽपि न शेषभूतः । न चेत् फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति प्रत्यक्षश्चास्य द्रव्यत्वात् कर्म्म प्रति गुणभावः । तस्माद् द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिर्मेन इति ॥ ३ ॥

## कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥

जैमिनिस्तु खल्वाचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म, न बादरिरिवावधारणामनुमेने । स हि ददर्श, न यागः कर्त्तव्यतया चोद्यते । फलकामस्य तु तत्साधनोपायत्वेनेति । एवं श्रुतोऽर्थः परिगृहीतो भविष्यति । अर्थवादश्चोपदेशः । एनमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति इह तु तत्सिद्धेनैव फलार्थत्वेन शेषभावं यागस्यादर्शयति स्म । तस्मादनवधारणा द्रव्यगुणसंस्कारा: शेषभूताः । यागोऽपि शेषभूतः फलं प्रतीति ॥ ४ ॥

## फलं च पुरुषार्थत्वात् ॥ ५ ॥

फलमपि पुरुषं प्रत्युपदिश्यते । यः स्वर्गो मे भवेदित्येवं कामयते तस्य यागः । न यः स्वर्गः स आत्मानं लभेतेति । कुतः ? आत्मनेपदप्रयोगात् । कर्त्रभिप्रायः एतद् भवति । क्रियाफलमनुभवेत् कथं पुरुष इति यागः प्रयुज्यते । तस्मात् फलं पुरुषार्थं यागाच्छ्रूयते, नात्मनिर्वृत्त्यर्थम् । तस्माच्छेषभूतमिति ॥ ५ ॥

## पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥

पुरुषोऽप्यौदुम्बरीसम्मानादिषु गुणभूतः श्रूयते । तस्मादनव-

धारणा एषा । द्रव्यगुणसंस्कारेषु शेषत्वं बादरिर्मेने इति ॥ अथ इदानीमत्र शेषान् वृत्तिकारः परिनिश्चिकाय । द्रव्यगुणसंस्कारेष्वेव नियतो यजिं प्रति शेषभावः। आपेक्षिक इतरेषाम् । यागस्य द्रव्यं प्रति प्रधानभाव., फलं प्रति गुणभावः । फलस्य यागं प्रति प्राधान्य, पुरुषं प्रति गुणता । पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसम्मानादिं प्रति गुणत्वम् । तस्मात् संमता अवधारणा । द्रव्यगुणसंस्कारा यागम्प्रति नियोगतो गुणभूता एवेति ॥ ६ ॥ ॥ शेषलक्षणाऽधिकरणम् ॥ ३ ॥

## तेषामर्थेन सम्बन्धः ॥ ७ ॥

स्तो दर्शपूर्णमासौ । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। तत्र श्रूयन्ते धर्मा. । निर्वपणं, प्रोक्षणम्, अवहननमित्येवमादय औषधधर्मा । तथोत्पवनावलापनग्रहणासादनादय आज्यधर्माः । तथा शाखाहरण गवां प्रस्थापनं, गवां प्रस्तावनमित्येवमादयोऽपि सान्नाय्यस्य । तेषु सन्देहः । किं सर्वे, औषधे आज्ये सान्नाय्ये च कर्त्तव्या', उत ये यत्र क्रियमाणा अर्थवन्तस्ते तत्र कर्त्तव्या इति ॥ ननु संयुक्ता एवं श्रूयन्ते । यथा, व्रीहीनवहन्ति, तण्डुलान् पिनष्टीति। बाढ संयुक्ताः । अवघातादयस्तु पदार्था विधीयन्ते श्रुत्य। । वाक्येन एषां व्रीह्यादिसंयोगः । अतोऽस्ति संशयः । किं तावत् प्राप्तम् ॥ तेषामर्थेन सम्बन्धः ॥ अर्थेन प्रयोजनेन । ये यत्र क्रियमाणा. प्रयोजनवन्तस्ते तत्र कर्त्तव्या' । प्रथनादय आज्यसान्नाय्ययोरनुपकारका इति न तत्र करणीयाः । एवमुत्पवनादय औषधसान्नाय्ययोः । शाखाहरणादय आज्यौषधयोः । ननु श्रूयन्ते सर्वे सर्वत्र । एतदेव न जानीमः । श्रूयन्ते न श्रूयन्ते इति । तद्विचारयितव्यम् । यद्यपि श्रूयेरंस्तथाप्यनुपकारकत्वान्नैव कर्त्तव्या भवेयुः ॥ ७ ॥

## विहितस्तु सर्वधर्मः स्यात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ८ ॥

उच्यते । योऽर्थात् प्राप्तः स्यात् स यत्र प्रयोजनं तत्रैव क्रियेत । शब्देन तु सर्वेऽमी पदार्था विहिता । तेन न यत्र केवलं प्रयोजनं प्रत्यक्षं दृश्यते, तत्रैव कर्त्तव्या. । क तर्हि । यत्र यत्र विहिताः । ते चामी सर्वत्र विहिता गम्यन्ते । कुत । संयोगतोऽविशेषात् प्रकरणा

अविशेषाच्च । सर्वेषां तावदाज्यौषधसान्नाय्यानामपूर्वेण साध्यसाधनसंयोगोऽविशिष्टः । यत्र क्रियमाणा अपूर्वस्य कृता भवन्तीति विज्ञायते । तथा प्रकरणमविशिष्टम् । यस्मिन् विहिताः सर्वेषां विहिता भवन्तीति गम्यते । अतः सर्वे सर्वत्र कर्त्तव्याः । यत्त्वमी न सर्वत्रोपकुर्वन्तीति विधानसामर्थ्यात् सर्वत्रोपकारका इति गम्यते । स चाथमदृष्ट उपकारो भविष्यति ॥ ८ ॥ ॥ पूर्वपक्ष ॥

अर्थलोपादकर्म स्यात् ॥ ९ ॥

नैतत्, सर्वे सर्वत्र करणीया इति । ये यत्र नोपकुर्वन्ति, न ते तत्र क्रियामर्हन्तीत्युक्तमेव । ननु विधानसामर्थ्यात् सर्वे सर्वत्रोपकरिष्यन्ति । नेति ब्रूम ॥ ९ ॥ ॥ सिद्धान्तः ॥

फलन्तु सहचेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

नास्ति विधानं, येन सर्वे सर्वत्रोपकुर्वन्ति । न च प्रत्यक्षादिभिरुपकारमवगच्छामः । अर्थापत्तिरपि नियोगतस्तत्रैव भवेत् । यत्रैव शब्देन चोदना भवति, नान्यथा । यदि च प्रथनादीनामाज्यसान्नाय्ययोरनुपकुर्वतामपि तत्प्रकरणे समाम्नायोऽनुपपन्नो भवेत्, ततोऽर्थादृष्ट उपकारः कल्प्येत । ते त्ववश्यं समाम्नानीया औषधार्थम् । फलं हि सहचेष्टयाऽवहननादिकयावगम्यते तुषविमोचनादि । प्रयोजनं च तेन । न तस्मादृते पुरोडाशः सिद्ध्यति । सति चास्मिन् अर्थवान् प्रकरणे समाम्नायः । अर्थवति च तस्मिन्नादृष्टकल्पनायां प्रमाणमस्तीत्यतो न शक्यं कल्पयितुम् । यदि च तत्र तण्डुलादिनिष्पादनं दृष्टं नाभविष्यत् ततो विप्रयोगे तण्डुलादीनामभावादुपकारस्य शब्दार्थमात्रं दृष्टोपकारानपेक्षं कर्त्तव्यमित्याज्यसान्नाय्ययोरपि क्रियमाणानामदृष्टमभविष्यत् । तस्माद् न प्रथनादय सर्वत्र । एवम् उत्पवनादयः शाखाहरणादयश्च । तस्मान्न सर्वे सर्वत्र कर्त्तव्याः । प्रथनादयो नाज्यसान्नाय्ययोः । औषधे एव ते । उत्पवनादय आज्यस्य नौषधसान्नाय्ययोः । शाखाहरणादयश्च सान्नाय्यस्य नाज्यौषधयोरिति सिद्धम् ॥ १० ॥ ॥ युक्ति ॥ निर्वपणादीनामर्थाऽनुसारेण व्यवस्थितविषयताधिकरणम् ॥ ४ ॥

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

ष्टौ दर्शपूर्णमासौ । तत्र समामनन्ति । स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या च उलूखलञ्च मुसलञ्च दृषच्चोपला च । एतानि वै दश यज्ञायुधानीति । तत्र सन्दिह्यते । किं यो य इह शक्यते एभिः कर्त्तुं तस्मै तस्मै पदार्थायैतानि समाम्नातानि, उत यद्येन संयुक्तं तस्मा एवेति ।

किं तावत् प्राप्तम् । यद्येन शक्यमिति । कुतः । एवं विधयो भविष्यन्ति तथार्थवन्तः । इतरथा ते अनुवादा निष्प्रयोजनाः । प्रकरणाविशेषश्च सर्वपदार्थान् प्रति । यज्ञायुधानीति च यज्ञसंयोगोऽविशिष्टः । तस्मात् सर्वं सर्वत्र इत्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूमः ॥ द्रव्यश्चोत्पत्तिसंयोगात् तदर्थमेव चोद्यते ॥ यो येन पदार्थेन सहोत्पत्तिवाक्येन संयुक्तः स पदार्थस्तेनैव कर्त्तव्यः । यथा स्फ्येनोद्धन्तीत्युद्धननार्थता स्फ्यस्य वाक्येन । तदुद्धननं न स्फ्यादन्येन कर्त्तव्यम् । यदा चैवं तदा प्राप्त एव स्फ्यः । तस्यायमनुवादो भवितुमर्हति । एतानि वै दश यज्ञायुधानीति । एवमेकैकस्यानुवादः । तेन तेन वचनेन प्राप्तस्य । यथा, कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति, शम्यां दृषद्युपदधाति, उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनष्टीति । प्रकरणात् सर्वाणि सर्वत्र प्राप्नुयुः, वचनात्तु यथावचनम् । यज्ञायुधशब्दोऽपि सामान्येन प्रयोजनं विदधत् तद् वाक्येनैव । परोक्षं हि सामान्यवचनेन विशेषविधानं भवति, प्रत्यक्षन्तु विशेषवचनेन विशेषविधानम् । तस्माद् यद् येनोत्पत्त्या संयुक्तं, तत् तत्रैव विनियुज्यते इति सिद्धम् ॥ ११ ॥ स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम् ॥ ९ ॥

## अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

ज्योतिष्टोमे क्रयं प्रकृत्य श्रूयते, अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति । तत्र सन्देहः । किम् अरुणिमा कृत्स्नप्रकरणे निविशेत, उत क्रय एवैकहायन्यामिति । कथं पुनररुणया क्रीणातीत्येवं विस्पष्टे क्रयसम्बन्धे गम्यमाने संशय इति । उच्यते । इह हि गुणम् अरुणिमानममूर्त्तं सन्तं क्रियायाः करणमिति शब्द उपादिशति । यत् करणाभिधायिन्या तृतीयाविभक्त्या सयुज्य निर्दिशति,

अरुणयेति । न चामूर्त्तोऽर्थः क्रियायाः साधनं भवितुमर्हति । अतोऽसम्बन्धं क्रीणातिनाऽरुणगुणस्यावगच्छाम । न च अशक्नीयमर्थं प्रमाणभूतः शब्दोऽभिधास्यतीत्येवं प्रकल्पना कदाचिदुपपद्येतापि । केनचित् प्रकारेण सम्बन्ध इति वचनप्रामाण्यप्रकारान्वेषणे बुद्धिर्भवति । तद् यदि परं विचारयन्तः क्रियासम्बन्धसामर्थ्यमवगमिष्यामः । एकवाक्यतया कथ एवारुणिमानं निवेशयिष्यामः । अथ त्वप्रमाद्यद्भिरन्विष्यमाणो न कथञ्चन सम्बन्ध उपपत्स्यते, ततो वाक्यभेदमभ्युपगम्य प्रकरणधर्ममेनमध्यवसास्याम. । तस्मादवश्यं विचारणीयमेतदिति ॥ किं तावत् प्राप्तम् । कृत्स्ने प्रकरणे निवेशः । कस्मात् । संयोगतोऽविशेषात्, प्रकरणाविशेषाच्च । ननु प्रकरणाद् वाक्यं बलीयो भवतीत्येकवाक्यत्वादरुणिमा क्रयेण सम्भन्त्स्यते इति । नैतदेवमवगम्यते । न हि वचनशतेनाप्यनारभ्योऽर्थः शक्यो विधातुम् । यो हि ब्रूयाद् उदकेन दग्धव्यमग्निना क्लेदयितव्यमिति, किं स वचनप्रयोजनसामञ्जस्यमश्नुवीत । न चामूर्त्तोऽर्थः क्रियायाः साधनमुपपद्यते । तस्मादरुणया क्रीणातीति सम्बन्धाभावादेकवाक्यता न भवतीति ॥ ननु नैवायं गुणवचन. । किं तर्हि । द्रव्यवचन कुत. । स्त्रीलिङ्गसम्बन्धात् । द्रव्यविशेषा ह्येते स्त्री पुमान् नपुंसकमिति । स्त्रियां यत् प्रातिपदिकं वर्त्तते, तस्मात् स्त्रीप्रत्ययो भवतीति स्त्रीप्रत्ययश्चारुणयेत्युपलभामहे । तस्माद् द्रव्यवचनोऽरुणशब्द इति । तदेतदपेशलम् । तदेव हि द्रव्यमरुणिम्ना परिच्छिद्यमानमरुणाशब्दाभिधानीयतां लभते । तदेवान्यगुणकं नारुणशब्द. शक्नोत्यभिवदितुम् । अरुणिमानमेष शब्दो न व्यभिचरति । व्यभिचरति पुनर्द्रव्यम् । अव्यभिचारि च कारणं कारणवतामिष्टम् । अतोऽस्य गुणः स्वार्थ इति गम्यते । तदस्य प्रत्यक्षतो गुणवचनता गम्यते । स्त्रीप्रत्ययदर्शनात्तु नूनम् अरुणा-प्रातिपदिक द्रव्यवचनमित्यनुमानम् । प्रत्यक्षञ्चानुमानाद् बलीय. । तस्माद् गुणवचन । कथ तर्हि स्त्रीप्रत्ययसम्बन्ध. । भवति हि गुणवचनस्यापि स्त्रीलिङ्गता । यथा चारुणा बुद्धि., एवमरुणा इति । गुणवचनश्चेत् क्रीणातिना न सम्बद्ध्यते । तस्माद् वाक्यभेदं कृत्वा प्रकरणे सर्वस्मिन्नेव संनिवेश इति ॥

अथ यदि क्रीणातिना न सम्बद्ध्यते तस्मिन्नेव वाक्ये एकहायनीशब्देन संभन्त्स्यते, न भविष्यति वाक्यभेद इति । तन्न । केवलं

हि गुणमरुणशब्दोऽभिदधाति, न द्रव्यगुणौ । केवलश्च द्रव्यमेकहायनीशब्दो, न गुणसहितमिति तयोः सम्बन्धस्य वाचिकां षष्ठीमन्तरेण कथं सम्बन्धो गम्यते । आह । अन्तरेणापि षष्ठीम् एकविभक्तिनिर्देशात् सामानाधिकरण्यमवगमिष्याम । यथा नीलमुत्पलमिति । तदुपपन्नं, रूपादरुणशब्दस्य गुणवचनता कल्पनीयन्त्वेकविभक्तिसंयोगादेकहायनीशब्दसन्निधानाच्च तदेकवाक्यतामभ्युपगम्य एकहायनीशब्दसामानाधिकरण्यम् । न च लिङ्गाद्वाक्यं बलीयः । तस्मादसदेतत् ॥ तत्रोच्यते ॥ यदा केवलगुणवचनतायां शब्दः प्रवर्त्तमानो नान्येन सम्बन्धं लभते, तदाऽनुपदेशकत्वादानर्थक्यं मा भूदिति द्रव्यपरतामापद्यते । तस्यामवस्थायामेकविभक्तियुक्तेन एकहायनीशब्देन सन्निहितेनैकवाक्यतामापद्यमानः समानाधिकरणो भवति । तथा च कृत्वा, नीलमुत्पलमित्युपपद्यते । स चायमरुणाशब्दस्तस्यामवस्थायां वर्त्तते । न हि अस्य स्वार्थमभिदधत इतो विच्छिन्नस्य प्रकरणेऽप्यर्थवत्ता । कुतः । येनैव हेतुना सम्बद्ध्यते, क्रीणातिना न । नामूर्त्तोऽर्थः क्रियायाः साधनं भवतीति । न च क्रियासाधनैर्द्रव्यैः । न हि केवलगुणवचनः शक्नोति द्रव्यमभिधातुमिति स एव हेतुः प्रकरणसम्बन्धाभावेऽपि । तत्रापि सम्बध्यमानः क्रियाभिर्वा सम्बद्ध्येत । तत्साधनैर्वा द्रव्यैः । तच्चोभयमप्यनुपपन्नम् । अतोऽनर्थकत्वपरिजिहीर्षया सन्निहितेनैकहायनीशब्देनारुणाशब्दः सम्बद्ध्यते । नास्ति वाक्यभेदः ॥ नैतदेवम् ॥ न ह्ययमरुणाशब्दः एकहायनीविशेषणं भवितुमर्हति । किं कारणम् । करणविभक्त्या तृतीयया समुच्चारितोऽयं, तेनैतेन तृतीयाश्रुतिसामर्थ्यात् क्रियाविशेषणेन भवितव्यम् । कारकाणां हि क्रियया सम्बन्धो न द्रव्येणेति स एष श्रुतिसामर्थ्यात् क्रियाविशेषणमेकहायनीविशेषणम् । श्रुतिश्च वाक्याद् बलीयसी । तस्मान्नास्यैकहायनीसम्बन्ध इति ॥ ननु च गुणस्य क्रियासम्बन्धाभावादविवक्षिता कारकशक्तिरिति एकहायनीसम्बन्धोऽयमध्यवसित । एवमपि नोपपद्यते । यदि कारकाभिधानमविवक्षितमिति गुणशब्देनैतेन द्रव्यमभिधातुमिष्यते, तदा प्रातिपदिकार्थस्याव्यतिरेक इति प्रथमा विभक्तिः प्राप्नोति । न हि तृतीयान्तस्तमभिसम्बन्धं शक्नोति वक्तुम् । न चान्यथानुपपत्तिरित्यन्योऽस्यानुपपद्यमानोऽर्थः शक्यते कल्पयितुम् । यथा, अग्नौ तिष्ठति माणवक

इत्युक्ते ज्वलनेऽनुपपद्यमानो न अश्वे गवि वा कल्प्यते । अग्निसमीपवचन एवाध्यवसीयते । तद्वदिहाप्यप्रथमान्त शब्दो न कथञ्चिद्-द्रव्यव्यतिरिक्ते प्रातिपदिकार्थे भवितुमर्हतीति । तस्मात् काममनर्थकोऽवगम्यतां, नास्यैकहायनीसम्बन्धोऽध्यवसातव्यः । आह । न ब्रूमो, न कारकमरुणाशब्देनाभिधीयते इति । अव्यक्तमरुणगुणविशिष्टमेतेन कारकमभिधीयते । कदाचिन्नु किञ्चित् विधित्सितं भवति, कदाचिदुपसर्जनीभूतोऽर्थो विधित्सित, प्रधानीभूतोऽनुवादः । तद्यथा, दण्डीत्युपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते । कदाचिन्नु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्य्यते । दण्डी प्रैषानन्वाहेति । यथा, लोहितोष्णीषा ऋत्विज. प्रचरन्तीति । एवमिहापि यद्यनुपसर्ज्जनभूतोऽरुणो गुण, प्रधानभूतं कारकम् । तथाप्यनूदिते कारकेऽरुणगुणविधानार्थं वचनं युज्यते । तस्माद् एकहायनीसम्बन्ध उपपद्यते, नास्ति वाक्यभेद इति ॥ नैतत्सारम् । अत्र हि एकहायनीक्रीणात्योरनवबुद्ध सम्बन्ध बोधयितुमयमेकहायनीशब्द उच्चरित. । स एष कथमिवारुणाशब्देन सम्बद्ध्यते, तदेतदभिहितमपि पुनः पुन पर्य्यनुयुज्यते । कथं पुनरेकहायनीशब्दस्य क्रीणातिना, अरुणगुणेन च समाने समभिव्याहारे क्रीणातिना सम्बन्धोऽभ्युपगमनीयो ? न पुनरारुण्येनेति । शब्दप्रामाण्यात् । भवति हि क्रियासम्बन्धस्य वाचिका विभक्तिरेकहायनीशब्दमनुनिविष्टा, न तु गुणसम्बन्धस्य वाचिका । का पुन क्रियासम्बन्धस्य वाचिका, का वा गुणसम्बन्धस्येति । कारकलक्षणा, क्रियासम्बन्धे विवक्षिते भवति द्वितीयादि । अविवक्षिते पुनः कारके सम्बन्धमात्रविवक्षायां षष्ठी । न चात्र षष्ठीं पश्यामः । पश्यामस्तु खलु तृतीयाम् । अत क्रीणातिना सम्बन्धमभ्युपगच्छाम एकहायनीशब्दस्य, नारुणाशब्देनेति ॥ कथं तर्हि भवत्यत्र सम्बन्धो, नीलमुत्पलमिति । उच्यते । भवति, न तु श्रुतिलक्षण , किं तु वाक्यलक्षणः । उत्पलशब्दसन्निधाने तदपेक्षी नीलशब्दस्तेनैकवाक्यतामभ्युपगच्छन्नजहत्स्वार्थवृत्तिरुत्पलविशेषाभिधानपर उच्चार्य्यमाण सम्बन्धमभ्युपैति ॥

नन्विहापि वाक्यलक्षणस्तद्वदेवारुणिम्ना समं सम्बन्ध एकहायन्या युज्यते । नेति ब्रूम' । श्रुतिर्हि वाक्याद् बलीयसी श्रुतिश्चास्याः क्रियासम्बन्धमाह, न गुणसम्बन्धम् । यदि पुन श्रुतिसामर्थ्यात्

क्रियासम्बन्धोऽभ्युपगम्येत, एकवाक्यत्वादपि गुणसम्बन्धः । नैवं शक्यम् । यो ह्यन्येन सह सम्बन्द्धुमुच्चार्य्यते, न तत्समीपगतोऽप्यन्यस्तेन सह सम्बन्द्धुमर्हति । यथा, भार्य्या राज्ञः, पुरुषो देवदत्तस्येति भार्य्याविशेषणार्थमुच्चार्य्यमाणो राजशब्दो न पुरुषेण सम्बध्यते । तद्वदिह क्रियाविशेषणार्थम् उच्चार्य्यमाण एकहायनीशब्दो नारुणाशब्देन सम्बन्धमर्हति । आह । सत्यमेवमेतत् । असत्यामाकाङ्क्षायामानन्तर्यमकारणम् । सर्वत्र तु बोधिते पदार्थे वाक्यार्थ उपपद्यते, नान्यथा । सामान्यवृत्ति हि पदं, विशेषवृत्ति वाक्यम् । सामान्येनाभिप्रवृत्तानां पदार्थानां यद्विशेषेऽवस्थानं स वाक्यार्थः । तदेतदुक्तं, तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति ॥ तत्र प्रत्यक्षादिभिः पदार्थाः, वाक्यार्थः पुनरानुमानिकः । तदेतदवगम्यताम् । केवलस्वार्थवृत्ति पदमनुपदेशकमिति पदान्तरेण सन्निहितेनैकवाक्यत्वमभ्युपैति, नान्यथेति । तदिह यद्यप्येकहायनीशब्दः क्रीणातिना सम्बध्यमानः कृतार्थो न पदान्तरेण सम्बन्धमाकाङ्क्षति, अरुणाशब्दस्तु पदान्तरेण सम्बन्धमलभमानोऽनर्थक इत्येकहायनीशब्देनैकवाक्यतामभ्युपैति । ननूक्तं- क्रियासम्बन्धार्थो, नारुणासम्बन्धार्थ इति । आह । अरुणाशब्दस्यानर्थक्यपरिहारायोभयसम्बन्धार्थ इति वदामः । अन्यार्थमपि कृतमन्यार्थमपि शक्नोति कर्त्तुम् । तद् यथा, शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च । एवमिहापि क्रयसम्बन्धार्थमेकहायनीशब्द उच्चार्य्यमाणोऽरुणाशब्देन सह सम्भन्त्स्यते, न किञ्चिद् दुष्यति । तस्माच्च वाक्यभेद इति । नैतदस्ति । यद्यप्ययमरुणाशब्दोऽनर्थको मा भूदित्येकहायन्या सम्बद्ध्येत, तथापि सर्व्वस्मिन् प्रकरणे निवेष्टुमर्हति । न चैनं, सोमं क्रीणाति इत्येष शब्दः शक्नोति विशेष्टुम् । न ह्ययं विशेषणत्वेनोच्चार्यते, किं तर्ह्यपूर्वोऽयं विधीयते ॥

नन्वपूर्वोऽपि विधीयमान एकहायनीशब्दवदितरेण सम्भन्त्स्यते । कथम् । प्रयोजनाय ह्युच्चार्य्यमाणः शब्दो येनार्थस्तस्मै तावत् प्रयोजनायावकल्प्यते । सन्निहितश्च बुद्धौ भवति । तेन बुद्धौ सन्निहितेन शक्यते साकाङ्क्षः शब्दः सम्बन्धयितुमिति । नैतदेवम् । यो ह्यसम्बद्ध्यमानोऽनर्थको भवति स सम्बद्ध्यते, नान्यः ।

कुत एतत् । सम्बध्यमाने हि सामान्यं विशेषे अवस्थाप्येत ।

तत्र वाक्येन श्रुतिः पीडिता स्यात् । न चायमसम्बद्ध्यमानः क्रीणातिनाऽनर्थको भवति । प्रकरणगताभिरेकहायनीभिरभिसम्भन्त्स्यते ॥

नन्वेतदुक्तम् । प्रकरणेऽन्यस्य सम्बन्धोऽनुपपन्न इति । नानुपपन्नः । एकस्मिन् वाक्येऽन्योऽर्थो विधीयमानो नान्येन सम्बध्यते वचनव्यक्तिभेदात् । अन्या हि वचनव्यक्तिर्विधीयमानस्य, अन्या गुणेन सम्बद्ध्यमानस्य । अज्ञातवज्ज्ञाप्यते विधीयमानोऽर्थो ज्ञातवदनूद्यते गुणसम्बन्धार्थम् । न च सकृदुच्चार्य्यमाणो ज्ञातवदज्ञातवच्च भवितुमर्हति । एकहायनीशब्दः क्रये विधीयमानोऽज्ञातवत् स्यात् । अरुणाशब्देन सम्बध्यमानश्च ज्ञातवत् । वाक्यभेदे पुनर्न दोषो भवति, प्रकरणे तु वाक्यान्तरैः क्रियाद्रव्यान्तराणि च प्राप्तानि । तैरिदं वाक्यान्तरविहितं सम्बद्ध्यते । तत्रान्यस्मिन् विधीयते, अन्यस्मिन् वाक्येऽनूद्यते इत्युपपन्नं भवति । तस्मात् संयोगतोऽविशेषात् प्रकरणाविशेषाच्च सर्वस्मिन् प्रकरणे द्रव्येषु निवेश इति ॥ एवं प्राप्ते ब्रूम ॥ अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति । यत्रार्थैकत्वं श्रूयते द्रव्यगुणयोस्तत्र द्रव्यगुणावेकस्मिन् पदार्थे नियम्येयाताम् । कुतः ऐककर्म्यादेककार्य्यत्वात् । एकं हि कार्यं द्रव्यगुणयोः श्रूयते क्रयसम्बन्धः । कथमेतदवगम्यते । एकवाक्यत्वात् । कथमेकवाक्यत्वम् । अरुणया पिङ्गाक्ष्या एकहायन्येति अपर्यवसितोऽर्थः साकाङ्क्षत्वादभिधातृप्रतिपत्त्रोः । सोमं क्रीणातीति तु पर्यवस्यति । तयोरेव नैराकाङ्क्ष्यात् । यद्येककार्य्यता, किमिति विकल्पो न भवति । नैतदेवम् । एकार्थास्तु विकल्पेरन्निति विकल्पधर्माणौ प्राप्नुत इत्ययुक्तोऽयं पर्य्यनुयोगः । कथम् । पर्य्यनुयोगो नाम स भवति, यः स्वपक्षं साधयति, विपक्षस्य च प्रतीपमाचरति । न च विकल्पोऽस्मत्पक्षस्य प्रतीपमाचरति । क्रयेणारुणिमासम्बन्ध इत्येष नः पक्षः । न च विकल्पो नानाकार्य्यत्वात् ॥ नन्विदानीमेवोक्तम्– एकं कार्य्यमिति । तच्चापि विरुद्धम् । एवं हि पूर्वमभिहितम् । अमूर्त्तत्वात् । गुणो न क्रियया सम्बद्ध्यते इति । इदानीं विपरीतमभिधीयते । उभावपि द्रव्यगुणावेकार्थौ क्रयमभिनिर्वर्त्तयत इति । उच्यते । नैतद्विरुद्धम् । न च विकल्पः, एकं कार्य्यम् । सामर्थ्यभेदस्तु । साक्षाद् हि द्रव्यं क्रियां प्रत्युपकरोति, गुणस्तु विशिष्टानां साधनम् । यद्येवं न तर्हि गुणः क्रियामभिनिर्वर्त्तयति, साधनस्यासौ विशेषक इति । नैत-

देवम् । गुणस्य क्रियामभिनिर्वर्त्तयत एतदेव सामर्थ्यं, यत् साधनं विशिंष्यात् । आकाङ्क्षति च क्रिया साधनविशेषणम् । चिह्नभूतो हि गुण. साधनं लक्षयति । असति चिह्ने न लक्ष्येत । कतमत् साधनं क्रियाया इति । तत. क्रियां नाध्यवस्येम कर्त्तुमिति भवति क्रियासाधनं गुण । न चैवं सति विकल्पो भवति । यथाऽधिकरणस्य कर्त्रादीनाञ्च . अधिकरण हि कर्त्रादीनि धारयति । तान्यधार्यमाणानि न शक्नुवन्ति क्रियामभिनिर्वर्त्तयितुम् । तथा कर्त्ता करणादीनि समाधत्ते । तान्यसमाहितानि न शक्नुवन्ति स्वं स्वमर्थमभिनिर्वर्त्तयितुम् । यस्मिँस्तु साधनोपकारे कार्य्ये. तस्मिन्नेवोपकारेऽन्यत् साधनं विधीयते, तत्र विकल्प । यथा व्रीहिभिर्यजेत, यवैर्यजेतेति । उभयेऽपि तण्डुलनिर्वृत्त्यर्था. । एवं तर्हि तदेवेद सञ्जातम् । भवत्येकहायनीविधानं, तद्विशेषणञ्चारुणो गुण. । तत्र स एव दोषो वाक्यभेदः प्रसज्ज्येतेति । न ब्रूमोऽरुणाशब्द एकहायनीशब्देन सम्बद्ध्यते इति, किं तर्हि-क्रीणातिनैव सम्बद्ध्यते । एवं हि श्रूयते-अरुणगुणेन क्रयमभिनिर्वर्त्तयेदिति । यथा च तेन निर्वर्त्यते, तथा यतितव्य भवति । न चाविशिंषन् साधन, गुणः क्रियामभिनिर्वर्त्तयतीत्यर्थात् साधनविशेषणतां प्रतिपद्यते । यथा स्थाल्यां पचेदिति क्रियासाधनत्वेन निर्दिष्टेऽर्थात् सम्भवने धारणे च स्थालीं व्यापारयति तद्वदिहापि द्रष्टव्यम् । तस्मान्नास्ति वाक्यभेदप्रसङ्ग इति ॥

नन्वेवमपि वाक्यं भिद्येत । कथम् । प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति . यथा देवदत्त-यज्ञदत्त-विष्णुमित्रा भोज्यन्तामिति प्रत्येकं भुजि. समाप्यते । यथा च, यस्य पित पितामह सोमं न पिबेदिति । एवमिहाप्यरुणया क्रीणाति, एकहायन्या क्रीणातीति । नैतदस्मत्पक्षस्य बाधकम् । एवमपि क्रये एवारुणिमा निवेक्ष्यति, न सर्वस्मिन् प्रकरण इति । सत्यमेष दोषो न भवतिं, किन्त्वनरुणयाप्येकहायन्या क्रय प्राप्नोति, अरुणया चानेकहायन्या । तत्र यदुक्तं द्रव्यगुणयोर्नियम इति, सा प्रतिज्ञा हीयते . न तर्हि ब्रूमो वाक्यभेद इति । कथम् क्रयस्य हि द्रव्यारुणिमानावुपदिश्येते, न क्रयस्तयो. । न च प्रधानं प्रतिगुणं भिद्यते, प्रतिप्रधानं हि गुणो भिद्यते इति । अस्ति चायं दृष्टान्त । समुदाये वाक्यपरिसमाप्तिरिति । यथा गर्गा शतं दण्ड्यन्तामिति तथा अभिषुत्य हुत्वा भक्षयन्तीति । तस्मा-

दुभयविशेषणविशिष्टः क्रयो विधीयते ॥ कथं पुनस्तस्मिंश्चेतरस्मिं-श्च दृष्टान्ते सति एकान्तेनावधार्य्यते। समुदाय एव वाक्यपरिस-माप्तिर्न प्रत्यवयवमिति। अत्र ब्रूमः । इह द्रव्यारुणिमानावुभावपि क्रियासम्बद्धावुपलभ्येते परस्परेणासम्बद्धौ । क्रयोऽपि द्रव्यारुणिम-भ्यां विशिष्ट उपलभ्यते, नान्यतरेण । तत्र यदि द्रव्यपरमरुणिमप-रं च भवति वचनमिदं, ततः प्रत्यवयवम् असंशयं क्रयसम्बन्धः । अथ क्रयविधित्सयाऽभिधीयते, ततो यथैवायम् एकहायनीविशिष्ट एवम् अरुणिमाविशिष्ट इति नियमत उभयसम्बन्धोऽभ्युपगमनीयः । न चात्र द्रव्यारुणिमानावीप्सितौ । ईप्सितस्तु क्रयः । तेन हि ज्यो-तिष्टोमद्रव्यं सोमः परिप्राप्यते। द्रव्यारुणिमानौ क्रयार्थौ सन्तावी-प्सितौ स्यातां, नान्यथा । तस्मात् क्रयो विधीयते। स च नान्यतर-विशिष्टः प्रतीयते इति समुदाये वाक्यपरिसमाप्तिरिह निश्चीयते। यदा चैवं तदा नैकहायनीं मुक्त्वाऽन्यद् द्रव्यं क्रयसाधनमस्ति। न च अरुणादन्यः साधनस्य विशेषको गुण इति नियमः सिद्धो भवति ॥ अत्र वदामः । यदि क्रयस्य साधने गुणोऽभिसम्बन्धमुपैति, तदा वाक्ये भिन्नेऽपि क्रयसाधनत्वादरुणिमाऽस्मिन् द्रव्ये न निवेक्ष्यते, किमर्थमेकवाक्यता प्रयत्नेन साध्यते? इति। तदेतदभिधीयते। भिन्ने हि वाक्ये एकहायनीसाधनकः क्रयोऽवबुद्धो भवति । अरुणासा-धनमपि क्रयान्तरम् । न तस्मिन्नेवैकहायनीसाधने क्रये अरुणिमा विहितो भवति तत्र यत् क्रयान्तरमरुणगुणविशिष्टं तत्रार्थात् प्राप्तम-न्यदपि साधनं भवति। तदपि विशिंषन्नरुणो गुणस्तेन सम्बध्येत । एकवाक्यत्वे तु तत् परिहृतं भवति। तस्मात् साधु अभिधीयते। अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति ॥ १२॥ आरुण्यादि-गुणानामसंकीर्णताऽधिकरणम् ॥ ६ ॥ आरुणन्यायः ॥

## एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥

अस्ति ज्योतिष्टोमः । य एवं विद्वान् सोमेन यजते इति । तत्र श्रूयते दशापवित्रेण ग्रहं सम्मार्ष्टीति । तथा अग्निहोत्रे श्रूयते, अग्ने-स्तृणान्यपचिनोतीति । तथा दर्शपूर्णमासयोः श्रूयते पुरोडाशं प-र्य्यग्निकरोतीति । तत्र सन्देहः । किमेकस्य ग्रहस्य, एकस्य अग्नेः, एकस्य पुरोडाशस्य च सम्मार्जनादि कर्त्तव्यम्? उत सर्वेषां ग्रहा-

णां, सर्वेषामग्नीनां, सर्वेषां पुरोडाशानामिति । किं प्राप्तम् । एको ग्रह, एकोऽग्नि, एक पुरोडाश इह ग्रहीतव्यः । कुत । श्रुतिसंयोगात् । एकत्वश्रुतिसंयुक्ता एते पदार्था । एकं हि द्रव्यमेषु श्रूयते । शब्दलक्षणे च हि कर्म्मणि यच्छब्द आह तदस्माकं प्रमाणम् । यथा पशुमालभेतेत्युक्ते एक एव पशु पुमाश्चाँलभ्यते । एवमत्राप्येको ग्रह. सम्मार्जनीय, एकस्य अग्नेस्तृणान्यपचेयानि, एक. पुरोडाश पर्य्यग्निकर्त्तव्य इति १३ ॥ ॥ पूर्वपक्ष ॥

## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४॥

नैतदस्ति । ग्रहादिष्वेकत्वयुक्तेष्वमी पदार्था कर्त्तव्या इति । सर्वे ग्रहा संमार्ष्टव्या, सर्वेभ्योऽग्निभ्यस्तृणान्यपचेयानि, पुरोडाशमात्रञ्च पर्य्यग्निकर्त्तव्यमिति । कुत । ग्रहजात्या द्रव्यं लक्षयित्वा सम्मार्गादि विधीयते । अविशिष्टञ्च लक्षण सर्वद्रव्येषु । तत्र न गम्यते विशेष । को ग्रह सम्मार्ष्टव्य, को नेति । सामान्यावगमाद्विशेषानवगमाच्च सर्वप्रत्यय तथाऽग्निपुरोडाशानामपि । नन्वेकवचनं श्रूयते, तद्विशेक्ष्यति । नैतदस्ति । एकत्वं हि श्रूयमाणं ग्रहादिष्वेकत्वं ब्रूयाद्, न द्वितीयादीन् प्रतिषेधेत् एकत्वस्यासौ वाचको न द्वितीयादि प्रतिषेधक । तेनाप्रतिषिद्धे द्वितीयादौ सामान्यवचनेन प्राप्तं सम्मार्जनादि किमिति न क्रियेत ॥ तत्रैतत् स्यात् एकवचनमिह श्रूयमाणं प्राप्ते एवैकस्मिन् द्रव्ये, द्वितीयादिषु च, किमन्यत् कुर्य्यादन्यत परिसंख्याया. । न चेदेकवचनं परिसञ्चक्षीत द्वितीयादीन्, अनर्थकमेव स्यात् । शक्नोति च द्वितीयादीन् निवर्त्तयितुम् यथा, अश्वाभिधानीमादत्त इति गर्द्दभाभिधान परिसञ्चष्ट, एवमत्रापि द्रष्टव्यमिति ॥ नैतदेवम् ॥ तत्र मन्त्रस्याभिधान्याश्च य. सम्बन्धस्तदभिधानपरं वचनम् । इमामगृभ्णन्नित्यश्वाभिधानीमिति । न अनेन मन्त्रेण, आदत्त इति लिङ्गेनैवादाने प्राप्तत्वान्मन्त्रस्य परिसंख्या युक्ता । इह पुनर्यदेकवचनं द्रव्ये श्रूयते, तत् श्रूयमाणमप्यावधीयमानत्वेन न निवर्त्तक भवितुमर्हति । यथा कश्चिदोदन निर्दिश्य ब्रूयात्, य एनं भक्षयेत् कश्चित् श्वा मार्ज्जारो वा, स निवारयितव्य इति । तत्र यदि भक्षणं निमित्तत्वेन विधीयते, न श्वमार्ज्जारसम्बन्धस्तत. काकोऽप्यागच्छन् निवार्य्यते श्रूयमाणे-

ऽपि शुनि मार्जारे वा श्वमार्जारसम्बन्धस्य निमित्तत्वेनाविधीयमानत्वात् । एवमिहाप्येकत्वसम्बन्धस्य अविधीयमानत्वाच्छ्रूयमाणेऽप्येकत्वे ग्रहमात्रं संमृज्येतेति ॥ न चात्र द्रव्यैकत्वसम्बन्धविधायकः कश्चिच्छब्दोऽस्ति । ननु सम्मार्ष्टीति । न ह्येतद् द्रव्यैकत्वसम्बन्धस्य विधायकम् । कस्य तर्हि । द्रव्यसंमार्गसम्बन्धस्य विधायकम् । एवं श्रुत्या स्वपदार्थो विहितो भवति । इतरथा वाक्येन परपदार्थो विधीयेत । श्रुत्यसम्भवे च वाक्यं क्रमते, न सम्भवन्त्यां श्रुतौ । अतोऽविधीयमानं विशेषणत्वेन एकत्वं, न द्वितीयादीन् प्रतिषेद्धुमर्हति । एवं सति न द्वितीयादौ सम्मार्गादि क्रियमाणमचोदितं भवति, प्रतिषिद्धं वा । यथैव हि तदेकस्य श्रुतमवगम्यते तथा द्वितीयादेरपि ॥ अयं चापरो दोषः । न तदेकत्वं द्रव्यस्य सम्मार्गादौ विषये नियम्येत । न हि सम्मार्गादिर्यस्मिन् द्रव्ये एकत्वं नियम्येत तस्य विशेषणत्वेन भवति । विधीयते ह्यत्र सम्मार्गादिः । न प्राप्तो लक्षणत्वेन द्रव्यस्याम्नायते । नहि यौगपद्येन विधातुं शक्यते, लक्षणत्वेन चोच्चारयितुम् । प्रसिद्धसम्बन्धो हि शक्नोति लक्षयितुम् । न चाविहित एवञ्जातीयकः शब्दावगम्य प्रसिद्धसम्बन्धो भवति । विधीयते च सम्मार्गादिः । तस्मान्न विशेषकः । न चेद् विशेषकः, न द्रव्ये एकत्वं नियम्यते इति शक्यमाश्रयितुम् ॥ अथैकत्वं सम्मार्गे उच्यते । तत्रापि द्वयी गतिः स्यात् । एकत्वं प्रधानं, सम्मार्गो वा । तच्चोभयमप्यनुपपन्नम् । न तावदेकत्वस्य सम्मार्गः शक्यते कर्तुम् । न च द्रव्ये क्रियमाण एकत्वस्योपकरोति केनचित् प्रकारेण । न चैकत्वस्योपकृतेन किञ्चित् प्रयोजनमस्ति । न हि तद्गुणभूतं श्रुतम् । अथैकत्वं सम्मार्गं प्रति गुणभूतमिति । तदपि न । कथम् । अमूर्त्तत्वात् । न हि तत् सम्मार्गं निष्पादयति । यद्यप्यन्यदमूर्त्तं क्रियां निष्पादयति साधनं विशिंषत्, तथाप्येतन्न भवितुमर्हति । न ह्यत्र ग्रहः सम्मार्गार्थं, सम्मार्गोऽत्र ग्रहाय चोद्यते । स हि प्रयोजनवान्, कल्प्यप्रयोजनः सम्मार्गः । यदि ग्रहः सम्मार्गस्योपकुर्य्यात् तदुपकारिण उपकरोतीति सम्मार्गस्योपकारकमेकत्वं भवेत् । न त्वेतदेवम् । तस्मादेकत्वसम्मार्गयोरसम्बन्धः ॥ ननु प्रधानभूतमपि ग्रहादि सम्मार्गं निष्पादयत्येव । अतस्तत्साधनं तच्च विशिंषत् तदुपकरिष्यति । यथा इज्यार्थे दधनि पयसि च प्रणीता धर्म्मा पार्ष्ठ उपकुर्वन्ति । परिधानार्थे च परिधौ

यूपधर्म्मो बन्धने । तस्मादयम् असमाधिरिति । अत्रोच्यते । न ब्रूम । अतदर्थे साधके न शक्नुवन्त्युपकर्तुमिति । किं तर्हि यदा प्रधानभूतं ग्रहादि लक्षणत्वेनोच्यते, न तदेकत्वस्य ग्रहादिना सम्बन्धो, न सम्मार्गादिनेति । कथम् । यावदिह लक्षणत्वेन किञ्चिदुच्यते, संवादस्तत्र भवति । न तु तद्विधीयते विज्ञानाय । किमर्थं तर्ह्युच्चार्य्यते । अन्यत्तस्य किञ्चिद् विधायिष्यते इति । नन्वेतद् ग्रहादि लक्षयित्वा तस्य सम्मार्गादि विधीयते । तद् यद्येकत्वमसम्बन्धं ऽपरो ग्रहद्रव्ये सम्मार्गादौ वा पदार्थे विधीयेत, द्वयो. सम्बन्धयोर्विधानाद् भिद्येत वाक्यम् । अथोच्यते, ग्रहादि लक्षयित्वा तस्यैकत्वसम्बन्धो विधीयते, न सम्मार्गादिसम्बन्ध इति । तथाच सम्मार्गादीनामध्ययनं प्रमाद इत्यभ्युपगतं स्यात् । नचैतदेवम् । तस्मादुभाभ्यामेकवचनस्यासम्बन्ध इति । एवमेतदेकत्व ग्रहस्य न किञ्चिदुपकारं करोति, न सम्मार्गस्यैवमेव सदनूद्यते । तस्मान्नैतत् किञ्चिदपि कर्तुं विवक्ष्यते इति सर्वेषां ग्रहादीनां सम्मार्गादि कर्त्तव्यमिति । कुतः । संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ यद्यविवक्षितमेकत्वं, कथं तर्ह्येकवचनमुच्चार्य्यते । ननु बहुषु विवक्षितेषु बहुवचनेन भवितव्यम् । उच्यते । न वयमेतद्विचारयामः— एकवचनमुच्चारयितव्यं, नोच्चारयितव्यमिति । उच्चार्य्यमाणे सति किं प्रतिपत्तव्यम् । एकस्मिन्नेव सम्मार्गादि ? उत सर्वेष्विति । तच्च सर्वेष्विति स्थापितम् । अपि च, न विभक्तेर्वचनमेवैकं प्रयोजनम् । किं तर्हि । कारकसम्बन्धोऽपि । अविवक्षिते एकत्वे कारकसम्बन्धार्थमस्योच्चारणं भविष्यति । तस्मान्नानर्थकम् ॥

अपि च, ग्रह प्रातिपदिकार्थं एकत्वं विभक्त्यर्थः । किमतो यद्येवम् । एतदतो भवति । प्रातिपदिकार्थगतं हि विभक्ति स्वमर्थं श्रुत्यैव वदति । अथैवं सति किं न सम्मार्गेण सम्भन्त्स्यते ? इति । तेन हि सम्बध्यमानं वाक्येन सम्बद्ध्येत । न च श्रुत्याऽन्येन सम्बध्यमानं वाक्येनाच्छिद्यान्येन सम्बन्धमर्हति । असम्बध्यमानस्त्वेकत्वेन सम्मार्गो यदि नैकत्वविशिष्टः क्रियते, न किञ्चिद् विपन्नं भवति । नचैकत्वविशिष्टः सम्मार्गादिर्ग्रहादिमात्रस्य च विधीयते इति किमिति द्वितीयस्य तृतीयस्य च न क्रियेतेति ॥ १४ ॥

**चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥**

अथ यदुक्तं- यथा, पशुमालभेतेत्येक एव पशुः पुंपशुश्चालभ्यते, एवमिदमपीति । अस्त्यत्र वैपरीत्यम् । इह ग्रहार्थः सम्मार्गः । तत्र पुनर्यागार्थः पशुः । किमेवं सति भवति । यो यागार्थः परिच्छिनत्ति स यागस्योपकरोति । अपरिच्छिन्नेन न शक्यो यागः कर्तुमिति । न तु ग्रहेण केनचिद्विशिष्टेन सम्मार्गः कर्त्तव्यो यद् ग्रहं विशिंषत् सम्मार्गस्योपकुर्य्यात् । पशोश्चैतन्नैकत्वं यागं प्रत्युपदिश्यते । ननूक्तं, प्रातिपदिकार्थगतं स्वमर्थं विभक्तिः श्रुत्यैवाभिवदतीति । यागे एतद् वाक्येन विधास्यति । तत्र वाक्याच्छ्रुतिर्बलीयसीत्युक्तम् । सत्यं, यत्र श्रौतोऽभिसम्बन्धो विवक्ष्यते । अविवक्ष्यमाणे च वाक्यावगतः सन्नपर्य्युदसितव्यो भवति । तस्मादेकः पुंपशुश्चालभ्यते इति, ग्रहैकत्वं न सम्मार्गस्योपकरोतीति, न ग्रहं शक्नोति विशेष्टुम् । तस्माद्ग्रहैकत्वमविवक्षितमिति ॥ १५ ॥॥ आ० नि० ॥ सर्वेषां ग्रहादीनां सम्मार्गाद्यधिकरणम् ॥ ७ ॥ ग्रहैकत्वन्यायः ॥

## संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥

अस्ति ज्योतिष्टोमः । तत्र श्रूयते, दशापवित्रेण ग्रहं सम्मार्ष्टीति । तत्रैषोऽर्थोऽधिगतः, सर्वे ग्रहाः सम्मार्जितव्या इति । इदमिदानीं संदिह्यते । किं चमसा अपि सम्मार्ष्टव्याः, उत नेति ॥ किं तावत् प्राप्तम् ॥ चमसाद्यपि सर्वं सम्मार्ज्यमिति । कुतः । संयोगतोऽविशेषात् प्रकरणाविशेषाच्चेति । यथैव हि ग्रहाणामपूर्वसम्बन्धः, एवं चमसानामपि । यथैव च ग्रहा अस्मिन् प्रकरणे, एवं चमसा अपि । तस्मात् सर्वत्र सम्मार्गः ॥ ननु ग्रहाः श्रूयन्ते, ते चमसानां निवर्त्तका भविष्यन्ति । उच्यते । प्रदर्शनार्थं ग्रहग्रहणं भविष्यति । ग्रहादि सोमपात्रम् । यस्मिन् गृह्यमाणः सोमो व्यवसिच्येतेत्येवमाशङ्क्यते, तत् सर्वं सम्मार्जितव्यम् । यथा भोजनकालो वर्त्तते, स्थालानि सम्मृज्यन्तामित्युक्ते, यानि यानि भोजने उपयोगमर्हन्ति, तानि तानि सर्वाणि सम्मृज्यन्ते । स्थालग्रहणं लक्षणार्थमिति गम्यते । एवमिहापि द्रष्टव्यमिति ॥ उच्यते ॥ लोकेऽर्थलक्षणः संव्यवहारः । येन येनार्थः सम्मृष्टेन, उक्तोऽनुक्तो वा, स सम्मृज्यतैव । इह तु वेदे शब्दलक्षणः । शब्दश्च ग्रहस्य सम्मार्गमाह । तत्र किमर्थं श्रुतौ सम्भवन्त्यां ग्रहशब्दो लक्षणया कल्प्यते । उच्यते । सम्मार्ष्टीति सम्मार्गं पुरुष-

प्रयत्नं विधातुमेष शब्दः शक्नोति श्रवणेनैव, ग्रहसम्बन्धे तु वाक्येन। श्रुतिश्च वाक्याद् बलीयसी । तस्माल्लक्षणया ग्रहशब्दो वर्ण्यते, न यथाश्रुत इति । तेन यो य सम्मार्जनसंस्कारार्हः स स सम्मार्जितव्य.। न ग्रहेष्वेव व्यवतिष्ठेत, एवञ्जातीयको गुण इति ॥१६॥ ॥ पूर्व ॥

व्यवस्था वाऽर्थस्य श्रुतिसंयोगात् तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

व्यवतिष्ठेत वा ग्रहेष्वेव सम्मार्गो, न चमसेष्वपि प्रसज्ज्येतेति । कुत । अर्थस्य श्रुतिसंयोगात् । श्रूयमाणो हि ग्रहो नोत्स्रष्टव्य । उत्सृज्यमाने श्रुतिरेव बाध्यते ग्रहमिति । प्रमत्तगीतं तत्रभवतामित्यवगम्यत । न चैतन्न्याय्यम् । तस्माद् ग्रहशब्देन ग्रह लक्षयित्वा तस्य सम्मार्गसम्बन्धो विधीयते । न चाविदधत् सम्मार्गं शक्नोति तत्सम्बन्धं विधातुम् । अतो विदधात्येवैष शब्द सम्मार्गम् । न च श्रुतिर्बाधिष्यते । कुत । सम्मार्ष्टीति सम्मृजिगत पुरुषप्रयत्नं श्रुत्या शक्नोति विधातुम् । न तत्र कश्चिद्विशेष । उत्पाद्यमाने वा सम्मृजौ, परेण वा सम्बध्यमाने इति । तेन न ग्रहसम्बन्धेऽपि श्रुतिर्बाधिता भवति । अतो ग्रहेष्वेव सम्मार्गो व्यवस्थातुमर्हतीति ।

नन्वपूर्वसंयोगाविशेषात् प्रकरणाविशेषाच्च चमसेष्वपि प्रसज्ज्यते, न ग्रहेष्वेवास्य विधानमित्युक्तम् । अत्रोच्यते । प्रकरणवद्भिरेकवाक्यतां कृत्वा शक्नोति तत्र विधातुम् । नाऽकृत्वैकवाक्यताम् । सा च प्रकरणाद् अनुमीयते । इय पुनर्ग्रहशब्देन सह प्रत्यक्षा । तस्मान्न प्रकरणे विधानम् । ग्रहैकत्वसम्बन्धे पुनरुत्सृज्य स्वार्थं, न शक्नोति विधातुम् । यदुक्त, यथा स्थालानि सम्मृज्यन्तामिति लक्षणा, तद्वदिहापीति । परिहृतमेतत् । लोके कर्मार्थे लक्षण, शब्दलक्षणं पुनर्वेद इति ॥ १७ ॥ ॥ सिद्धान्त ॥ चमसादौ सम्मार्गाद्यप्रयोगाधिकरणम् ॥ ८ ॥

आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

वाजपेये श्रूयते, सप्तदशारत्निर्वाजपेयस्य यूपो भवतीति । तत्र सन्देह । किं सप्तदशारत्निता वाजपेयस्य ऊर्ध्वपात्रे निविशते, उत पशोर्यूपे निविशते इति । किं तावत् प्राप्तम् । ऊर्ध्वपात्रे इति । कुत । वाजपेयस्य यूपाभावात् । यद् वाजपेयस्यास्ति पात्रं यूपसदृशं तत्र

भवितुमर्हति । अस्ति च षोडशिपात्रम् । तच्च खादिरत्वादूर्ध्वत्वाच्च यूपसदृशम् । तत्र निवेशे सति वाजपेयशब्द आञ्जस्येन भवति । इतरथा वाजपेयाङ्गे पशुयागे लक्षणया वाजपेयशब्दो वृत्त इति गम्येत । ननु त्वत्पक्षेऽपि यूपशब्दो लक्षणयोर्ध्वपात्रे । उच्यते । सर्वथा वयं लक्षणाशब्दान्न मुच्यामहे । मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यते तस्मादूर्ध्वपात्रे निवेश इति ॥ एवं प्राप्ते ब्रूमः ॥ आनर्थक्यात् तदङ्गेषु ॥ वाजपेयशब्दस्तावत् सोमयागविशेषवचनः । तस्य साक्षाद्यूपेन न प्रयोजनम् । अस्ति तु तस्याङ्गं पशुयागः । तस्य तु पशुं बध्नन्तु यूपेन कार्यम् । साक्षाद्वाजपेययूपस्य यदि सप्तदशारत्निता विधीयेत, तस्याभावादनर्थकमेव वचनं प्राप्नोति । तदनर्थकं मा भूदिति योऽस्य पशुयागे यूपस्तत्र निवेशमर्हति । ऊर्ध्वपात्रे च यूपशब्दो लक्षणया स्यात् । नान्वितरस्मिन्नपि पक्षे वाजपेयशब्दो लक्षणयेति । नेति ब्रूमः । वाजपेये एव वाजपेयशब्दो भविष्यति । शक्ष्यति च स पशुयूपं विशेष्टुम् । सोऽस्याङ्गस्योपकारकः । यश्च यस्योपकारिण उपकरोति, भवति स तस्य सम्बद्धो मुख्येनैव सम्बन्धेन । न चैकान्तरितम् इति कृत्वाऽसम्बद्धो भवति । यथा देवदत्तस्य नप्ता इति पुत्रेण च असावन्तरितः । अथ च देवदत्तेन मुख्येनैव सम्बन्धेन सम्बद्धः । तस्मादेष एव पक्ष आश्रयणीयः । न हि एतस्मिन् पक्षे कश्चिदपि लक्षणाशब्दो भवतीति ॥ १८ ॥ ॥ सप्तदशारत्नितायाः पशुधर्मताधिकरणम् ॥ ९ ॥

## कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥१९॥

दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते, अभिक्राम जुहोत्यभिजित्या इति । तत्र सन्देहः । किमभिक्रमणं प्रयाजेष्वेव, निविशते, उत कृत्स्ने प्रकरणे इति । किं तावत् प्राप्तम् । कर्तृगुणेऽभिक्रमणे ब्रूमः । वाक्यभेदः स्यादिति । कर्मणा कर्मणोऽसमवायात् । अभिक्रमणं कर्म अमूर्त्तम्, न तत्कर्म्म हवनं साधयितुं शक्नोति, तस्मान्न तेनैकवाक्यतां याति । अतः सर्वस्मिन् प्रकरणे निविशते । संयोगतोऽविशेषात् प्रकरणाविशेषाच्चेति ॥ नन्वनेनैव हेतुनाऽन्यस्मिन्नपि न निवेक्ष्यते । उच्यते । अन्यत्र पुरुषैः सम्भन्त्स्यते । ननु प्रयाजेष्वपि पुरुषैः सम्बद्ध्येत । नैतदेवम् । जुहोतीति हवने एष शब्दः पुरुषप्रयत्न वि-

दधातुं शक्नोति, न पुरुषाभिक्रमणसम्बन्धम् । नन्वन्यत्रापि पुरुषाभिक्रमणसम्बन्धस्याविधानम् । नैष दोषः । अन्यत्र प्रकरणाम्नानादङ्गभावे निर्ज्ञाते प्रयोगवचनोऽस्य कर्त्तव्यतां वक्ष्यति । तस्मात् सर्वस्मिन् प्रकरणेऽभिक्रमणस्य निवेश इति ॥ १९ ॥ ॥ पूर्वपक्षः ॥

## साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥

नैतदस्ति । यदुक्तमभिक्रमणं प्रकरणे निविशते इति । प्रयाजेष्वेव भवितुमर्हति । कुतः । तैः सहास्यैकवाक्यता । यतः साकाङ्क्षमेतत् पूर्वेण पदेनासमाप्तं वाक्यम्, अभिक्रामं जुहोतीत्यत्र पर्यवस्यति । प्रकरणाच्च वाक्यं बलवदिति प्रयाजेष्वेवाभिक्रमणं निविशते । नन्वभिक्रमणममूर्त्तत्वाद्धोमनिर्वृत्तावसमर्थमित्युक्तम् । उच्यते । साक्षादसमर्थं कर्त्रा सम्बध्यमानं शक्ष्यति निर्वर्त्तयितुम् । कथम् । अभिक्रमणेन समासीदति आहवनीयं कर्त्ता, द्वयमभ्युपायभूतं होमस्य । दूराद्धाऽभिप्रसार्य हस्तं जुहुयात्, समासीदेद्वा अन्वाभिक्रमणेन । तस्मादभिक्रमणमुपकरोति होमस्येत्यवगम्यते । अतः प्रयाजेष्वेव निवेश इति ॥ २० ॥ ॥ सिद्धान्तः ॥ अभिक्रमणादीनां प्रयाजमात्राङ्गताऽधिकरणम् ॥ १० ॥

## संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥

दर्शपूर्णमासयोः सप्तमाष्टमयोर्ब्राह्मणानुवाकयोः सामिधेन्य उक्ताः, नवमे निविदः, दशमे काम्याः सामिधेनीकल्पाः । इदंकामस्यैतावतीरनुब्रूयात्, इदंकामस्यैतावतीरिति । एकादशे च यज्ञोपवीतमाम्नातम् । उपव्ययते देवलक्ष्ममेव तत् कुरुते इति । तत्र संदेहः । किं सामिधेनीरेवानुब्रुवाण उपव्ययेत, उत प्रकरणे सर्वानेव पदार्थाननुतिष्ठता उपव्यातव्यमिति । कुतः संशयः । उपवीतं सामिधेनीनां प्रकरणे समाम्नातम्, अथ निवृत्ते वा तासां प्रकरणे ? इति न ज्ञायते ॥ ननु दर्शपूर्णमासयोरेव प्रकरणमिदम् । परप्रकरणे सामिधेन्यः श्रूयन्ते । सत्यं परप्रकरणे श्रूयन्ते, तथापि तासामवान्तरप्रकरणमपरम् । भवति हि, सामिधेनीरनुब्रूयादिति विशेषाकाङ्क्षं वचनम् । येन तत्सन्निधावभिधीयमानं तस्येति ज्ञायते ॥

कथं पुनर्निवृत्तं तासां प्रकरणमित्याशङ्क्यते । निवित्पदानि तासां प्रकरणं व्यवदधतीति । यद्येवं, कथमनुवर्त्तते प्रकरणमित्याशङ्का ।

परस्तान्निविदां सामिधेनीगुणा एव काम्या विधीयमानाः श्रूयन्ते, यदनन्तरं यज्ञोपवीतमाम्नातं, तेनानिवृत्तं सामिधेनीनां प्रकरणमिति भवति मतिः । अत परप्रकरणे निविद समुपनिपतिता न व्यवदधति यथा द्वादशोपसत्ताऽहीनधर्मो ज्योतिष्टोमप्रकरणे इति । तेन भवति सन्देहः ॥ अस्मिन् सन्देहे किं तावत् प्राप्तम् । सामिधेनीप्रकरणम् अनिवृत्तम् । तत्र उपवीत समाम्नानमिति । कुतः । काम्यानां सामिधेनीकल्पानामानन्तर्य्यवचनात् । हृदयमनुविपरिवर्त्तमानासु सामिधेनीषु उपवीतमामनन्ति । कर्तुश्च वासोविन्यासमात्रं गुणो भवत्युपवीतं नाम । किं कुर्वता तत् कर्त्तव्यमिति भवति तत्र पदार्थाकाङ्क्षा । तत्र बुद्धौ सन्निहितेनाविप्रकृष्टेन सामिधेनीवाक्येनैकवाक्यतामुपगम्य सामिधेनीषूपवीतमुपव्ययते इत्येष शब्दो विदधातीति गम्यते ॥ एवं प्राप्ते ब्रूमः ॥ नास्मिन् सन्देहे यस्त्वयोक्तः स निर्णयः । अस्मिन् सन्देहे, वाक्यभेद इति निर्णय इति । कुतः ? । व्यवायात् । इह समाप्तस्य सानुबन्धस्य सामिधेनीवाक्यस्य, अस्य चोपव्ययते इति वचनस्य, निविदां विधायकेन सामिधेनीभिरसम्बद्धेन ग्रन्थेन व्यवधानं भवति । यस्य च पर्य्यवसितेऽपि वचने तत्सम्बद्धमेवार्थान्तरं प्रक्रमन्ते, न तत्राननुवृत्तं प्रकरणम् । आगच्छति हि तत्सम्बद्धाभिधाने हृदयम् । यत्र तु पर्य्यवसिते वचने तदसम्बद्धमेवार्थान्तरं प्रक्रमन्ते, न तत्र बुद्धौ पूर्वः पदार्थः सन्निधीयते । न च बुद्धावसन्निहितेनैकवाक्यता भवति द्वाभ्यां हि बुद्धाभ्यां पदार्थाभ्यां वाक्यार्थं सञ्जन्यते, नान्यतरेण । सन्निधौ समाम्नानस्यैतदेव प्रयोजनम् । कथमुभाभ्यां पदार्थाभ्यां विशिष्टां बुद्धिमुत्पादयेयुरिति । अनन्तरावबुद्धेन सह वाक्यार्थः शक्यते कर्तुम् । असम्बद्धपदोच्चारणे च नानन्तरावबुद्धो भवति । तस्माद् व्यवहितेन सह नैकवाक्यता भवतीति ॥ अथान्येन प्रकारेण ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं सञ्जनयेद्, अवैदिकः स पुरुषबुद्धिपूर्वको वाक्यार्थो भवेत् । यथाऽन्यस्मादनुवाकादाख्यातपदं गृहीत्वान्यस्माच्च नामपदं यो वाक्यार्थः सञ्जन्यते तादृशं तद् भवेद् यत्रान्येन ध्यानादिना पूर्वपदार्थम् अवगम्य वाक्यार्थं सञ्जनयेत् । तस्मान्नासम्बद्धार्थव्यवधाना एकवाक्यता भवतीति निश्चीयते । तस्मान्न सामिधेनीभिरेकवाक्यता उपवीतस्यति । ननु सामिधेनीकल्पानामनन्तरबुद्धानां सन्निधावुपवीतमाम्ना-

यते । तेन सामिधेनीभि सम्भन्त्स्यते इति । नेति ब्रूम । अतिवृत्तमेवहि सामिधेनीनां प्रकरणम् । निविन्पदर्थ्यबधानात् । वाक्येन हि सामिधनीकल्प। काम्या सम्बन्धमुपगच्छन्ति, न प्रकरणमनुवर्त्तते । न च पुन कल्पवचनेन सामिधन्य प्रकृता भवन्ति । न हि तत्र तासां वचनं, कर्त्तव्या इति । किं तर्हि, संख्याभिः सम्बन्धयितव्या इति । तदपि वाक्येन, न प्रकरणेन । तत्राप्रकृतासु समिधेनीषु यस्यैकवाक्यतां गुणस्य सामिधेनीभिर्नास्ति, न तस्य ताभि । तस्मात् प्रकरण तदनुष्ठेयं, तद् यज्ञोपवीतिनेति सिद्धम् ॥ २१ ॥ उपवीतस्य प्राकरणिकाङ्गताधिकरणम् ॥ ११ ॥

## गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात् ॥२२॥

अग्न्याधेये वारण–वैकङ्कतपात्राण्यहोमार्थानि होमार्थानि च श्रूयन्ते– तस्माद् वारणो वै यज्ञावचर स्यात्, न त्वेतेन जुहुयात् । वैकङ्कतो यज्ञावचरः स्यात्, जुहुयादेतेनेति । न च वारणवैकङ्कतानां पात्राणामग्न्याधेयेन सम्बन्ध । कुतः । यज्ञावचरवचनात् । यज्ञस्यैतानि पात्राणि, वाक्येन प्रकरण बाधित्वा भवन्ति । तत्रैष सन्देह । किं पवमानेष्टिषु निविशन्ते, उत दर्शपूर्णमासादिषु सर्वयागेष्विति । किं तावत् प्राप्तम् । पवमानहवि ष्विति । कुतः । उक्तमेतत् । प्रधानेऽसम्भवन् पदार्थस्तद्गुणे कल्प्यते इति । अग्न्याधेयप्रकरणे च समाम्नानात् पवमानहविषां तद्गुणता । तस्मात् पवमानहवि ष्वित्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूम ॥ गुणानां समत्वात् । पवमानहविषामग्न्याधेयस्य च न परस्परेण सम्बन्ध । यथाऽऽधानमग्नेर्गुण संस्कारार्थं एवं पवमानहवींष्यप्यग्नेरेव गुणभूतानि । कस्तत्र परस्परेण सम्बन्ध इति । यदुक्तम्– आधानस्य प्रकरणे समाम्नायन्ते इति। यद्यपि समाम्नायन्ते तथापि प्रकरणं बाधित्वा वाक्येनाग्नेर्भवन्ति । किमिह वाक्यम् । यदाहवनीये जुहोति तेन सोऽस्याभीष्ट प्रीतो भवतीति ॥ नन्वाहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूत श्रूयते । सत्यम्, अधिकरणमाहवनीय । तथापि त्वाहवनीयार्थ एव यागः । प्रयोजनवत्त्वादाहवनीयस्य, निष्प्रयोजनत्वात् पवमानहविषाम् । कथमेषां निष्प्रयोजनता । फलाश्रवणात् । कल्प्य फलमिति चेत् । सत्यं कल्प्यम् । अग्निसंस्कारस्तु तत् फल, न स्व-

गे: । स्वर्गे कल्प्यमाने छिरदृष्टं कल्प्येत । होमाच्च स्वर्गो भवति । तस्य चाहवनीयेनापरोऽदृष्ट संस्कार इति । तस्मादग्न्यर्थता पवमानहविषाम् । नैषामाधानेन सम्बन्ध । तस्मान्नाधाने श्रूयमाणं, पवमानहविषां भवितुमर्हति । किं तर्हि ? सर्वयागेषु दर्शपूर्णमासप्रभृतिष्वाधानस्य प्रधानभूतेषु निवेश इति ॥ २२ ॥ वारणवैकङ्कतादिपात्राणां कृत्स्नयागगुणताधिकरणम् ॥ १२ ॥ मिथोऽसंबन्धन्याय ॥

## मिथश्चानर्थसम्बन्धात् ॥ २३ ॥

दर्शपूर्णमासयोः श्रूयते । वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावस्यायामिति । तत्र सन्देह. । किमनुवाक्या-छित्वस्य प्रधाने निवेश' ? उताज्यभागयोरिति । किं तावत् प्राप्तम् । प्रधाने इति । कुतः पौर्णमासीसमभिव्याहारादमावास्यासमभिव्याहाराच्च । प्रधानं पौर्णमासी चामावस्या च, नाज्यभागौ । तस्मात् साक्षाद्वाक्यात् प्रधानस्येति प्राप्तम् ॥ तत्र ब्रूम. ॥ मिथ सह द्वाभ्यामनुवाक्याभ्यां न प्रधानस्य कार्य्यमस्ति । यत्र तु द्वे अनुवाक्ये, तत्र तयोर्वार्त्रघ्नता वृधन्वत्ता च विधीयते । प्रधाने चैका अनुवाक्या । तत्र छित्वं वार्त्रघ्नतां वृधन्वत्तां च विदधद् वाक्यमभिद्येत । आज्यभागयोस्तु द्वे प्राप्ते, आग्नेयी सौमी च । तत्र वार्त्रघ्नतां वृधन्वत्तां केवलां शक्ष्यति विधातुम् । ननु प्रधानगामित्वेऽपि द्वयोः प्रधानयोर्द्वे अनुवाक्ये आग्नेयस्याग्नीषोमीयस्य चेति । उच्यते । एका वार्त्रघ्नी आग्नेयी, एका सौमी । तथा वृधन्वत्यौ । तत्र या आग्नेयी सा विधीयमाना सम्बध्येत, न सौमी । अमावस्यायां तावन्नास्त्येव, पौर्णमास्यामप्यग्नीषोमीये एव क्रियमाणे क्रियेत, तत्राप्येकदेवत्या न शक्नुयाद्देवताछित्वे कार्य्यं कर्तुम् । अथोभे अग्नीषोमीये प्राप्ते इति । नैकस्य यागस्य द्वाभ्यामनुवाक्याभ्यां प्रयोजनम् । उपादेयत्वेन ह्यनुवाक्या चोद्यते । तत्रैकत्वं विवक्षितम् । तेन तत्रापि न द्वे । तस्मादाज्यभागयोर्निवेश इति ॥ २३ ॥ ॥ वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गताऽधिकरणम् ॥ १३ ॥ वार्त्रघ्नीन्याय ॥

## आनन्तर्य्यमचोदना ॥ २४ ॥

ज्योतिष्टोमे श्रूयते- मुष्टीकरोति, वाचं यच्छति, दीक्षितमावेदयतीति । तथा, हस्तावववनेनिक्ते, उलपराजिं स्तृणातीति । तत्र सन्दे-

ह । किं मुष्टीकरणं वाग्यमश्च आवेदनार्थम्, उत कृत्स्नप्रकरणे निवेश इति । तथा हस्तावनेजनं किमुलपराजिं स्तरितुम्, उत प्रकरणे सर्वपदार्थान् कर्तुमिति । किं तावत् प्राप्तम् । हस्तावनेजनं हस्तसंस्कारार्थं, वाग्यमः पुरुषसंस्कारार्थः । आमन्त्रयमाण एकाग्रो भवति, पदार्थाननुतिष्ठति । तेन केषां केषां पदार्थानामिमे संस्कारा इत्याकाङ्क्षाऽस्ति । सत्यामाकाङ्क्षायामानन्तर्य्येण निराकाङ्क्षीकरणम् । तस्मादानन्तर्य्यादावेदनार्थौ वाग्यमो मुष्टीकरणञ्च । हस्तावनेजनं चोलपराजिं स्तरितुम् ॥ एवं प्राप्ते ब्रूमः ॥ सर्वैः प्रकरणाधीतैः सम्बन्ध इति । कुत । वाक्यभेदात् । कथं वाक्यभेदः । अर्थद्वयस्याभिधानात् । न हि दीक्षितमावेदयितुमित्यस्मिन्नर्थे, आवेदयतीति । न च स्तरितुमित्यस्मिन्नर्थे, स्तृणातीति । स्तरणमपि विधीयतेऽवनेजनं च । मुष्टीकरणं वाग्यमश्च विधीयते, आवेदनञ्च । न चैषां परस्परेण कश्चित् सम्बन्धोऽस्ति । न च पदार्थाकाङ्क्षायां सत्यामानन्तर्य्यमेकवाक्यत्वे कारणं भवति । तस्मात् प्रकरणधर्म्मा एवञ्जातीयका. ॥ २४ ॥ ॥ सिद्धान्तः ॥

## वाक्यानाञ्च समाप्तत्वात् ॥ २५ ॥

स्वेन स्वेन पदसमूहेन परिपूर्णमेकं वाक्यम् । तथा अपरं, तथा सर्वाणि यान्युदाहृतानि । तस्माद् विस्पष्टमर्थद्वयं, विभागे च निराकाङ्क्षता । तेन वाक्यभेदः । अत संयोगतोऽविशेषात् प्रकरणाविशेषाच्च कृत्स्ने प्रकरणे निवेश इति ॥ २५ ॥ ॥ युक्तिः ॥ मुष्टीकरणादीनां कृत्स्नप्राकरणिकाङ्गताधिकरणम् ॥ १४ ॥

## शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥

दर्शपूर्णमासयोः समाम्नायते—आग्नेयं चतुर्धा करोतीति । तत्र सन्देहः । किमाग्नेयेऽग्नीषोमीये च ऐन्द्राग्ने च सर्वत्र चतुर्धाकरणं, किं वाऽऽग्नेये एवेति । किं प्राप्तम् । शेषश्चतुर्धाकरणम्, आग्नेयमिति देवतागुणसंयुक्त साधारण प्रतीयते । अग्नीषोमीयेऽपि स्यादैन्द्राग्नेऽपि । कुत. । तावप्याग्नेयौ । यस्याग्निर्देवता, अन्या च भवत्यसावाग्नेयः । तद् यथा । या डित्थस्य डवित्थस्य च माता, सा डवित्थस्य भवत्येवमिहापि । यद्याग्नेयस्याग्नीषोमीयस्य च पुरोडाशस्य मिथः

सम्बन्धो न भवेत्, तत आग्नेय एव चतुर्धाकरणं व्यवतिष्ठेत । भवति तु सम्बन्ध । तस्मादव्यवस्था । यथाग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यतीति सर्वेभ्य. प्राशित्रावदानमेवं चतुर्धाकरणमपि ॥२६॥ पूर्वपक्षः ॥

व्यवस्था वाऽर्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षार्था गुणश्रुतिः ॥ २७ ॥

वाशब्द. पक्षं व्यावर्त्तयति । व्यवतिष्ठेत वा चतुर्धाकरणमाग्नेये एव, न साधारणं भवितुमर्हति। कुत । अर्थसंयोगात् । अग्निना देवतयाऽर्थेनैकदैवत्यस्य संयोगो, न द्विदैवत्यस्याग्नीषोमीयस्यैन्द्राग्नस्य चेति । कुतः । यस्य ह्यग्नीषोमौ देवता, उभयविशेषणविशिष्ट संकल्प क्रियते । तस्याग्निः सोममपेक्षमाणो देवता, न निरपेक्षः । यस्य चाग्नि. सोममपेक्षमाणो देवता, न तस्मात्तद्धित उत्पद्यते । समर्थानां हि स उच्यते । सापेक्षं चासमर्थम् । तस्मान्न तद्धितान्तेन निरपेक्षाग्निदैवत्येन द्विदैवत्यस्याभिधानम्। अतो यत्र निरपेक्षोऽग्निर्देवता, तत्रैव चतुर्धाकरणमिति । देवतालिङ्गस्य हि सामर्थ्येन संयोगो भवति तद्धितार्थस्य, नासति सामर्थ्ये ॥

अथ यदुक्तं, यथा प्राशित्रावदानं सर्वेभ्य. क्रियते एवं चतुर्धाकरणमपीति । युक्तं प्राशित्रावदानेन तत्रैव सम्बन्ध क्रियते।आग्नेयस्य प्राशित्रमवद्यतीति । कथं तर्हि, आग्नेयस्य मस्तकं विभज्येति । एकं ह्येतद्वाक्यं प्राशित्रमवद्यतीति, द्वितीयमाग्नेयस्य मस्तकं विभज्येति । तत्राग्नेयस्य मस्तकादवद्यतीति गम्यते । अन्यस्य मस्तकादन्यस्माद्वेत्यनियम । यदि तु तत्र केवलाग्निदैवत्यो नाभविष्यत्, तदाऽऽनर्थक्यपरिहाराय द्विदैवत्योऽप्यग्रहिष्यत ॥ यत्तु— डित्थस्य मातेति। युक्तं तद्वाव्यासङ्गि मातृत्वम् । ततो जातो डित्थ । एतावता सम्बन्धेन, मातेत्युच्यते । नात्र किञ्चिदपेक्ष्यते । स च तावांस्तत्र सम्बन्धोऽस्तीति डित्थस्य मातेति युक्तं वचनम्॥ २७ ॥ सिद्धान्तः॥ चतुर्धाकरणस्याग्नेयमात्राङ्गताऽधिकरणम् ॥ १५ ॥

इति श्रीभट्टशबरस्वामिकृते मीमांसाभाष्ये तृतीयस्याऽध्यायस्य प्रथम. पाद. ॥ ३ ॥ १ ॥

## अथ तृतीयेऽध्याये द्वितीयः पादः ॥ ३ ॥ २ ॥

### अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥

इह मन्त्रा उदाहरणं, बर्हिर्देवसदनं दामीत्येवमादय । किं मुख्ये एवाऽभिधेये मन्त्राणां विनियोगः ? उत गौणेऽपीति । क पुनर्मुख्य , को वा गौण इति । उच्यते । य शब्दादेवावगम्यते. स प्रथमाऽर्थो मुख्य । मुखमिव भवतीति मुख्य इत्युच्यते । यस्तु खलु प्रतीतादर्थात् केनचित् सम्बन्धेन गम्यते, स पश्चाद्भावाज्जघनमिव भवतीति जघन्य । गुणसम्बन्धाच्च गौण इति ॥ यद्येव सर्व एव मुख्य । सर्वो हि शब्दाद् गम्यते यथैव ह्यग्निर्ज्वलतीत्युक्ते ज्वलनसम्प्रत्यय ,एवमेवाग्निर्माणवक इति शब्द एव उच्चारिते माणवके सम्प्रत्यय । अथोच्येत, यस्मिन् निरुपपदाच्छब्दात् सम्प्रत्यय स मुख्य., यस्मिन् सोपपदात् स गौण इति । नैतद् युक्तम् । यस्य हि शब्दस्य रूपं कस्यचिदर्थस्य निमित्त, सोपपदस्यापि तदेव रूपं, निरुपपदस्यापि । न च शक्य निमित्त सति नैमित्तिकेन न भवितुम् । किमत. । यद्येवम्, इदं न शक्यते वदितुम् । उपपदादृते न सोऽर्थो भवति । उपपदे तु सञ्जाते साऽर्थ सञ्जनिष्यते इति । न चासौ समुदायार्थ शक्यते विज्ञातुम् । अन्वयव्यतिरेकाभ्यां हि विभागोऽवगम्यते । अथ वाक्यार्थोऽयमित्युच्यते । नैवं शक्यम् । न ह्यनन्वितः पदार्थो भवति वाक्यार्थः तदेव दृश्यताम् । अग्निशब्द एवायं ज्वलनवचनः । अग्निशब्द एव माणवकस्याभिधातेति । तस्मान्न गौणो मुख्य इति कश्चिद्विशेष ।

अथोच्यत, य सुष्ठु प्रसिद्धः स मुख्य , यो मनागिव स गौण इति । इदमपि नोपपद्यते । प्रसिद्धिर्नाम प्रज्ञानम , न च प्रज्ञाने कश्चिद्विशेषोऽस्ति । अथोच्येत, यस्य बहुश प्रयोगोऽस्ति स मुख्यः । अल्पशः प्रयुज्यमानो गौण इति । नैतदेवम् । अल्पशोऽपि प्रयुज्यमानो नासति सामर्थ्ये प्रत्याययेत् । अत सोऽपि शब्दात् प्रतीयते इति मुख्य एव ॥ अत्रोच्यते ॥ अस्त्यत्र विशेष. । माणवको नाग्निशब्दात् प्रतीयते । कथमवगम्यते । उक्तम्, अन्यायश्चानेकार्थत्वमिति । कथं न विपर्यय । उच्यते । अनादृत्यैव माणवकप्रत्यय ज्वलनमग्निशब्दात् प्रतिय-

न्तो दृश्यन्ते, न त्वनाहृत्य ज्वलनं, माणवकमग्निशब्दात् प्रतियन्ति । कुत एतत् । यो योऽग्निसदृशो विवक्ष्यते, तत्र तत्राग्निशब्दो नियत इति । अत एव विगतसादृश्यादयं तु दृश्यते । अतोऽग्निसादृश्यमस्य प्रवृत्तौ निमित्तम् । न च ज्वलने अप्रतीते तत्सादृश्यं प्रतीयते । तस्माज्ज्वलनस्याग्निशब्दो निमित्त, न माणवकस्य । तस्माज्ज्वलने मुख्यो, न माणवके । एवमेव तृणप्रत्ययस्य बर्हिःशब्दो निमित्तं, न तृणसदृशप्रत्ययस्य । तदेवं द्वैते सति मुख्यपरता शब्दस्य, उत गौणपरताऽपीति युक्तो विचार. ॥ किं तावत् प्राप्तम् ॥ मुख्ये गौणे च विनियोग. । कुत । उभयस्य शक्यत्वादुभयमपि बर्हिःशब्देन शक्यते प्रत्याययितुम्, तृणं च तृणसदृश च, तृणं साक्षात्, तृणसदृशं तृणप्रत्ययेन । यच्च नाम दर्शपूर्णमासयोः साधनभूतन बर्हिःशब्देन शक्यते प्रत्याययितुं तत् सर्वं प्रत्याययितव्यम् । विनिगमनायां हेत्वभावात् ॥ अपि चैवमाश्रीयमाणे पूषाद्यनुमन्त्रणादीनि दर्शपूर्णमासाभ्यां नोत्कृष्यन्ते । तत्रैव गौणेनाभिधानेन प्रकृतां देवतामभिवदिष्यन्ति ॥

एवं प्राप्ते ब्रूम ॥ मुख्ये एव विनियोक्तव्यो मन्त्रो, न गौणे इति कुत । उभयाशक्यत्वात् । प्रकरणे हि समाम्नानात् प्रधानेनैकवाक्यतामुपैति । तत्रैतदापतति, यच्छक्नुयादनेन मन्त्रेण साधयितु, तथा साधयेदिति । स चासावर्थाभिधानसयोगाच्छक्नोत्युपकर्त्तु न गौणमर्थं शक्नोत्यभिधातुम् । तस्मान्न गौणे विनियोगः ॥

ननु मुख्यप्रत्ययाच्छक्यते गौण· प्रत्याययितुम् । सत्यमेतत् । मुख्यप्रत्यायनेनैवास्य प्रयोजनवत्ता निर्वृत्तेति न गौणं प्रति विनियोगे किञ्चित् प्रमाणमस्ति । मुख्ये विनियोगेन त्वानर्थक्यं परिह्रियते । परिहृते आनर्थक्ये न गौणाभिधानमापतति । न ह्यनभिधाय मुख्यं, गौणमभिवदति शब्दः । अतः प्रमाणाभावान्न गौणे विनियुज्येत ॥ अपि च, गौणस्य प्रत्यायने सामर्थ्याद् बहवोऽभ्युपाया· प्राप्नुवन्ति । सामर्थ्यं च शब्दैकदेश इत्युक्तम्, अर्थाद्वा कल्पनैकदेशत्वादिति । तत्र मन्त्रे नियोगतो गौणं प्रति विनियुज्यमाने उपायान्तरं, विना प्रमाणेन बाध्येत । मन्त्राम्नान प्रमाणमिति चेद् ? न तस्योपायान्तरनिवृत्तौ सामर्थ्यमस्ति । ननु मुख्येऽपि विनियुज्यमानस्यैष एव दोष । नेत्युच्यते । यदि मुख्येऽपि न विनियुज्येत, नैव प्रधान-

स्योपकुर्यात् । तत्र चास्योत्पत्तिरनर्थिकैव स्यात् । तस्मादस्ति गौणे मुख्ये च विशेषः । अपि च, यो गौणे मन्त्रं विनियुङ्क्ते स वक्तव्यः-किमर्थं मुख्यं प्रत्याययसीति । स चेत् ब्रूयाद्, नान्यथा गौणप्रत्ययोऽस्तीति । प्रतिब्रूयादेनम्-अन्येऽपि गौणप्रत्ययस्याभ्युपायाः सन्तीति । अथ स एवमभियुक्तः प्रतिब्रूयाद्- मुख्यप्रत्ययोऽपि पाक्षिकोऽभ्युपाय इति ब्रूयादेनं- न तर्हि नियोगतो गौणे विनियोजनीयः । यदा गौणप्रत्ययाय मुख्यमुपादत्ते, तदैतदापतित भवति । मुख्य एव विनियोग इति । अर्थेन च प्रतीतेन प्रयोजनं, न प्रत्यायकेन मन्त्रेण । अतोऽन्येनाप्युपायेन गौणः प्रत्याययितव्यः । न स एव मन्त्र आदर्त्तव्यः । अथापि मन्त्रेण प्रत्यायकेन प्रयोजनं स्यात् तथापि मुख्यप्रत्ययनेनैव निर्वृत्तं प्रयोजनमिति नतरां गौणे विनियुज्येत । तस्मान्मुख्यगौणयोर्मुख्ये कार्यसम्प्रत्यय इति सिद्धम् ॥ १ ॥

संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥

अथ यदुक्तं- पूषाद्यनुमन्त्रणादीनामुत्कर्षो न भविष्यतीति । युक्तस्तेषामुत्कर्षः । संस्कारको हि मन्त्रः । सोऽसति संस्कार्येऽनर्थक इति यत्रार्थवान् तत्र नायिष्यते । न च कश्चिद्दोषो भविष्यति ॥ २ ॥ आ० नि० ॥ लवनप्रकाशकमन्त्राणां मुख्ये विनियोगाधिकरणम् ॥ १ ॥ बर्हिर्न्यायः ॥

वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥

अग्नौ श्रूयते- निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते इति । तत्र सन्देहः । किमिन्द्रस्योपस्थानं कर्त्तव्यमुत गार्हपत्यस्येति । कुतः पुनर्गार्हपत्यमुपतिष्ठते इत्येवं विस्पष्टे वचने संशय इति । उच्यते । यद्धि वाक्येनोपस्थानं तत् स्तुतिवचनेन संस्करणं, न समीपस्थानमात्रम् । न चैन्द्रेण मन्त्रेणाग्नेरभिधानं शक्यते कर्त्तुम् । अतो, गार्हपत्यमुपतिष्ठत इति न गार्हपत्यार्थमुपस्थानमेतदिति जायेत शङ्का । गार्हपत्ये उपस्थानार्थो भवेदिति । तादृशश्च शब्दो नास्ति, तृतीयान्तः सप्तम्यन्तो वा । तस्माद् विचारः, कथमुपपन्नं भवतीति ॥ किं तावत् प्राप्तम् ॥ सामर्थ्यादिन्द्रोपस्थानम् । अशक्यत्वाच्च गार्हपत्योपस्थानस्य । कथं द्वितीया विभक्तिरिति चेत् । अविवक्षितेप्सितार्था वा सम्बन्धमात्रप्रधाना । यद्वोपस्थानवि-

शेषणं सम्बन्धाद् गार्हपत्यशब्दः । तस्माद् गार्हपत्यविशिष्टमुपस्थान-मिन्द्रार्थं कर्त्तव्यमिति । गार्हपत्यश्च देशेन विशिष्यान्मुख्यमेव कार्यं मन्त्राणाम् ॥ एवं प्राप्ते ब्रूमः ॥ वचनात्त्वयथार्थमैन्द्री स्यात् । नैतदस्ति, इन्द्रार्थमुपस्थानमिति, अयथार्थमैन्द्री स्यात् । कुतः । वचनसामर्थ्यात् वचनमिदं भवति, ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति । गार्हपत्ये द्वितीया विभक्तिः प्राधान्यमाह किमिव वचनं न कुर्यात् । नास्ति वचन-स्यातिभारः । तस्माद् गार्हपत्यार्थमुपस्थानम् ॥ ३ ॥

गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात् ॥४॥

अत्राह । नन्वेतदुक्तं—नैन्द्रेण मन्त्रेण गार्हपत्योपस्थानं भविष्य-तीति । उच्यते । वचनाद् भविष्यति । आह । न वचनशतेनापि श-क्यमेतत् । इन्द्रशब्देनाग्निं प्रत्याययेदिति ब्रुवन् विहन्येत । यथा अग्निना सिञ्चेदिति, उदकेन दीपयेदिति । न हि शास्त्रहेतुकः श-ब्दार्थयोः सम्बन्धो भवति । नित्योऽसौ लोकतोऽवगम्यते इत्युक्तम् । औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति । ननु शब्दलक्षणोऽपि भ-वति शब्दार्थयोः सम्बन्धः कृत्रिमः । यथा देवदत्तो यज्ञदत्त इति । भवति कश्चिद् यत्र सम्बन्धस्य विधायकं वाक्यं भवति, न त्वेतद्वा-क्यं शब्दार्थयोः सम्बन्धस्य विधायकं, गार्हपत्यस्येन्द्रशब्दो नामे-ति । कथं तर्हि प्रसिद्धसम्बन्धेन इन्द्रशब्देन गार्हपत्यमुपतिष्ठते इति । न च शक्यते परशब्देन परो वदितुम् । किमत्र वचनं करिष्यति ॥ अत्रोच्यते ॥ गुणाद् वाप्यभिधानं स्यात् सम्बन्धस्याऽशास्त्रहेतुत्वा-दिति ॥ यद्यपि नेदं वाक्यं शब्दार्थसम्बन्धस्य विधाने हेतुभूतं, तथा-प्यनेनेन्द्रशब्देन शक्यं कर्तुं गार्हपत्याभिधानम् । कुतः । गुणसंयो-गाद् गौणमिदमभिधानं भविष्यति । भवति हि गुणादप्यभिधानम् । यथा, सिंहो देवदत्तः, अग्निर्माणवक इति । एवमिहाप्यनिन्द्रे गार्ह-पत्ये इन्द्रशब्दो भविष्यति । अस्ति तु चास्येन्द्रसादृश्यम् यथैव इन्द्रो यज्ञसाधनमेवं गार्हपत्योऽपीति । अथवा इन्द्रतेरैश्वर्यकर्मण इन्द्रो भवति । भवति च गार्हपत्यस्यापि स्वस्मिन् कार्ये ईश्वरत्वम् । तस्मादिन्द्रशब्देन यः प्रत्याय्यतेऽर्थः स प्रतीतः सादृश्याद् गार्हप-त्यं प्रत्याययिष्यति, ऐश्वर्याद् वा प्रत्याययिष्यतीति न दोषः ॥ ४ ॥

आ० नि० ॥ इन्द्रप्रकाशकमन्त्राणां गार्हपत्ये विनियोगाधिकरणम् ॥

॥ २ ॥ गार्हपत्यन्यायः ॥

तथाह्वानमपीति चेत् ॥ ५ ॥

स्तो दर्शपूर्णमासौ, तत्रेदं समाम्नायते । हविष्कृदेहीति त्रिरवघ्नन्नाह्वयतीति । तत्र सन्देह । किमेष मन्त्रोऽवहन्तिं प्रत्युपदिश्यते उत हन्तिरस्य कालं लक्षयतीति । कथ हन्ति प्रत्युपदिश्यते, कथं वा कालं लक्षयेत् ? यद्येवं सम्बन्ध क्रियेत– हविष्कृदेहीत्यवघ्नन्निति, ततो हन्ति प्रत्युपदिश्यते । अथावघ्नन्नाह्वयतीति, ततोऽस्य काल लक्षयतीति । किं तावत् प्राप्तम् ॥ तथा आह्वानमपि ॥ यथा ऐन्द्री गार्हपत्यं प्रत्युपदिश्यते, एवमेष मन्त्रो हन्ति प्रत्युपदिश्यते । एवं श्रुतिरनुगृहीता भवति । इतरथा लक्षणा स्यात् । हन्तिकालस्य मन्त्रस्य च सम्बन्धो भवेत् । न हन्तेर्मन्त्रस्य । एवं च सत्याह्वयतीत्ययमनुवाद । आह्वानं करोति । यो हि, एहीति ब्रूते स आह्वयति । तत्र केनचिद् गुणेन मन्त्रो हन्तिं प्रत्याययिष्यति । तस्मान्नाह्वाने विनियोक्तव्यः ॥ ५ ॥ ॥ पूर्वपक्ष ॥

न कालविधिश्चोदितत्वात् ॥ ६ ॥

नैतदस्ति, हन्ति प्रत्युपदिश्यते इति । किं तर्हि । काललक्षणा स्यात् । कुत । त्रिराह्वयतीति त्रिवमत्र विधीयते । यद्यस्मिन्नेव वाक्ये मन्त्रो विधीयेत, अनेकगुणविधानाद् वाक्यभिद्यत । तस्मान्नैवमभिसम्बन्ध एवमवघ्नन्निति । कथं तर्हि । अवघ्नन्नाह्वयतीति । नन्वस्मिन्नपि पक्षे मन्त्रो विधीयते कालश्च तत्र स एव दोषो भवेत् । नेति ब्रूम । अवहननकाल एवार्थेन हविष्कृदाह्वानव्या । तत्रायमेव सम्बन्धोऽनूद्यते, केवला तु त्रिरावृत्तिर्विधीयते । यत्तु काललक्षणाऽर्थे शब्द इति । नैष दोषः । लौकिकी हि लक्षणा, मन्त्रोऽपि च रूपादेवाह्वाने प्राप्त, सोऽप्यनूद्यत एव । चोदितश्च वाक्यान्तरेणाऽवघात शक्नोति कालं लक्षयितुम् । तस्मादाह्वाने विनियोक्तव्यम् इति ॥ ६ ॥ ॥ सि० ॥

गुणाभावात् ॥ ७ ॥

इदं परोत्तरं सूत्रम् । अथ कस्मान्न गुणादवहन्तिं ब्रूते । हविष्करोति हि अवहन्ति । तस्माद् हविष्कृत् किमेवं भविष्यति । रूपादेवावहन्तौ मन्त्रे प्राप्ते केवल त्रिरावृत्तिमेव वक्ष्यति, न भविष्यति

वाक्यभेद इति । अत्रोच्यते । गुणाभावाद् गौणमभिधानमवहन्तौ न सम्भवतीति । न ह्यसौ आहूतोऽस्मीत्यवगच्छति । तत्र अदृष्टार्थमाह्वानं स्यात् । यजमानस्य पत्न्यां हविष्कृति दृष्टार्थमाह्वानम् । तस्मान्न हन्तिमन्त्र इति ॥ ७ ॥ ॥ आ० नि० ॥

## लिङ्गाच्च ॥ ८ ॥

लिङ्गं च भवति । वाग्वै हविष्कृद्वाचमेवैतदाह्वयतीति । न च वाचोऽवहन्तिना सादृश्यमस्ति । अस्ति तु यजमानस्य पत्न्या । सा हि स्त्री । वागिति च स्त्रीलिङ्गः । अवहन्तिस्तु न स्त्री, न पुमान्, न नपुंसकमिति । नन्ववहन्तेरपि स्त्रीलिङ्ग शब्दोऽस्ति, क्रिया इति । अत्र ब्रूमः । न नियोगतोऽवहन्तेः स्त्रीलिङ्ग शब्द. । पुंल्लिङ्गोऽपि तस्याऽस्ति, अवघात इति । नपुंसकलिङ्गोऽपि, कर्मेति । अपि च, पत्न्याः स्वरूपेण सादृश्यम्, अवहन्ते पररूपेण शब्देन । तस्मात् पत्न्यां हविष्कृति लिङ्गमनुरूपतरं भवति ॥ ८ ॥

## विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

अवहन्तिमन्त्रे सति अस्मिन्मन्त्रे विध्यन्तरकोपः स्यात् । अपहतं रक्ष इत्यवहन्ति, अपहता यातुधाना इत्यवहन्तीति । तत्र पक्षे अभावान्नित्यवच्छ्रुतिरुपरुद्ध्येत । तस्मादवघ्नन्निति काललक्षणार्थे इति ॥ ९ ॥ युक्ति ॥ आह्वानप्रकाशकमन्त्राणाम् आह्वाने विनियोगाऽधिकरणम् ॥ ३ ॥

## तथोत्थानविसर्जने ॥ १० ॥

ज्योतिष्टोमे श्रूयते– उत्तिष्ठन्नन्वाह, अग्नीदग्नीन् विहरेति । तथा, व्रतं कृणुतेति वाचं विसृजतीति । तत्र सन्देह । किमुत्थानं वाग्विसर्जनं च प्रतिमन्त्रयोरुपदेश., उत कालार्थः संयोग इति । अत्र पूर्वाधिकरणन्यायोऽतिदिश्यते । यस्तत्र पूर्व पक्ष स इह पूर्व पक्ष' । यस्तत्र सिद्धान्तः स इह सिद्धान्तः । अग्नीदग्नीनित्येवमुत्तिष्ठन्नन्वाहेति । व्रत कृणुतेत्येव वाच विसृजतीति पूर्व पक्ष' । लक्षणाऽभावादुत्तिष्ठन्नन्वाहेति सिद्धान्ते सम्बन्ध । व्रतं कृणुतेत्युच्यमानं वाचं विसृजतीति वाक्येन पूर्वः पक्ष । लिङ्गेन सिद्धान्त ॥ यद्यपि च शक्यते, उत्थानक्रिययाऽग्नीदग्नीन् विहरेति वक्तुम् । उत्थानेनाग्निरिध्यते, विहिश्च विह्रियते इति । व्रतं कृणुतेति च वागभिधानम् । त-

थाऽग्रदृष्टार्थं वचनं भवतीति न मन्त्रयोरुत्थानविसर्जनार्थता कल्प्येत । कल्प्यमानायां च मन्त्रान्तरं विहितं बाध्येत । या पशूनामृषभो वाच इति । अपि चोत्थानवाग्विसर्गौ प्रति मन्त्रौ विधीयमानावदृष्टार्थौ स्याताम् । प्रेषणे तु दृष्टार्थौ । तत्, लक्षणैवात्र न्याय्या ॥ ॥ १० ॥ ॥ ३ ॥ अग्निविहरणादिप्रकाशकमन्त्राणां तत्रैव विनियोगाऽधिकरणम् ॥ ४ ॥

## सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥

दर्शपूर्णमासयो श्रूयते, सूक्तवाकेन प्रस्तरं प्रहरन्तीति । तत्र सन्देह । किं सूक्तवाक. प्रस्तरप्रहरणं प्रत्युपदिश्यते, उत इयं काललक्षणेति । तदुच्यते । काललक्षणेति । कुत. । सूक्तवाकस्य देवतासङ्कीर्त्तनार्थत्वात् । प्रस्तरप्रहरण च प्रत्यशक्ते, प्रस्तरस्य च स्रुग्धारणार्थत्वात् ॥ ११ ॥ ॥ पूर्वपक्षः ॥

## उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥

उपदेशो वा प्रस्तरप्रहरण प्रति मन्त्रस्य स्यात् । एव श्रुतिविहितोऽर्थो भवति । सूक्तवाकेनेति करणविभक्तिसंयोगात् । इतरथा लक्षणा स्यात्, सूक्तवाकेन लक्षणेन प्रस्तरं प्रहरेदिति । एवञ्च कृत्वा याज्याशब्द उपपन्नो भवति । सूक्तवाक एव याज्या, प्रस्तर आहुतिरिति ॥ १२ ॥ ॥ सिद्धान्त. ॥

## स देवतार्थस्तत्संयोगात् ॥ १३ ॥

यदुक्तं- देवतासङ्कीर्त्तने सूक्तवाकः समर्थो, न प्रस्तरप्रहरणे इति । उच्यते । न । देवतावचनं प्रहरणेन न सम्बन्ध्यते । प्रहरणं हि यजिः । मान्त्रवर्णिका देवताविधि । एवमभिसम्बन्ध । अग्निरिद् हविरजुषतावीवृधत इत्येव देवतामनुक्रम्य, आशास्तेऽय यजमान इत्युक्त्वा, इदमिदमशास्ते इति च । यदनेन हविषा आशास्ते तदस्य स्यादिति प्रस्तर हविर्निर्दिशति । अग्न्यादींश्च देवताविशेषान् । तेन प्रहरतिर्यजति । एवं सूक्तवाकेन प्रस्तरः प्रहर्तुं शक्यते, यदि प्रहरतिर्यजतिरग्न्यादिदेवताकश्च । तस्मात् सूक्तवाकस्य हरतिसंयोगेऽपि देवतार्थता घटत एव । यदि, अग्निरिदं हविरजुषतावीवृधत इत्येवमाद्येव श्रूयेत, न, आशास्तेऽयं यजमान इत्येवमादीनि अपराणि, ततोऽग्न्यादय एवेष्टानान्तरेना. इत्येव पर्यवसित वाक्यं भवेत्

यतस्तु खलु आशास्तेऽयं यजमान इत्येवमादीन्यपराणि श्रूयन्ते, तेनेह पर्यवसानम् । अग्न्यादयः पुरोडाशादिभिरिष्टाः । अपरं तु यजमान आशास्ते । तदनेन प्रस्तरेण प्राप्नुयादिति ॥ ननु सत्स्वप्यतेषु देवतासङ्कीर्त्तने एव पर्यवस्येत्, पुरोडाशादिभिरिष्टा अग्न्यादय । तत एव यजमान आयुरादीन्यप्याशासानः प्राप्नुयादिति । उच्यते । उभयथा सम्बन्धे सति प्रहरणे विनियोक्तव्य । लिङ्गं च न बाधितं भविष्यति । वाक्यं चानुग्रहीष्यते इति ॥ अथ वाऽग्निरिदं हविरजुषतेति प्रस्तर एव हविर्निर्दिश्यते एवमिदमिति । सन्निहितवचनमुपपन्नं भविष्यतीति ॥ १३ ॥ ॥ पूर्वपक्षनिरासः ॥

प्रतिपत्तिरिति चेत् स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १४ ॥

अथ स्रुग्धारणे विनियुक्तस्य प्रस्तरस्य प्रहरणं प्रतिपत्तिरित्युच्यते । तत्र प्रतिवचनं, स्विष्टकृद्वदेतत् स्यादिति । यथेज्यार्थात् पुरोडाशाद्, वचनप्रामाण्यात् स्विष्टकृदिज्यते, यागश्च स भवति । प्रतिपाद्यते च पुरोडाशः, एवं प्रतिपाद्यतैव हि प्रस्तरो यागश्च निर्वर्त्यते इति न दोषः । प्रतिपाद्यमानोऽपि हि त्यज्यते । प्रत्यक्षतः प्रतिपाद्यते । वचनादिज्यां साधयतीत्येव गम्यते । तस्मात् सूक्तवाक प्रहरतिमन्त्र इति ॥ १४ ॥ ॥ आशङ्कानिरासः ॥ सूक्तवाकस्य प्रस्तरप्रहरणाङ्गताधिकरणम् ॥ ५ ॥ प्रस्तरप्रहरणन्याय. ॥

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १५ ॥

दर्शपूर्णमासयो, सूक्तवाकेन प्रस्तरं प्रहरतीति श्रूयते । तत्र सन्देह । किं पौर्णमास्यां कृत्स्न सूक्तवाक प्रयोक्तव्य, कृत्स्नोऽमावास्यायाम्, उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोग इति । तदुच्यते । उभयत्र सर्ववचनमिति । कुत । कृत्स्नो हि मन्त्र. सूक्तवाक इत्युच्यते । स पदेनापि विना, सूक्तवाको न स्यात् । तत्र सूक्तवाकेन न प्रहृतं भवेत् । तस्मादुभयत्र कृत्स्न. सूक्तवाको वदितव्य ॥ १५ ॥ ॥ पूर्वपक्ष ॥

यथार्थं वा शेषभूतसंस्कारात् ॥ १६ ॥

ये पौर्णमासीदेवतावाचिन शब्दास्ते पौर्णमास्यां प्रयोक्तव्या, नाऽमावास्यायाम् । ये अमावास्यादेवतावाचिनस्ते अमावास्यायां, न पौर्णमास्याम् । शेषभूतमर्थं संस्कुर्वन्तो मन्त्रा उपकुर्वन्ति, नान्यथे-

त्युक्तम् । तस्माद् ये यत्रोपकुर्वन्ति, ते तत्र प्रयोक्तव्या इति न कृत्स्नः पौर्णमास्यां, न कृत्स्नश्चामावास्यायामिति ॥ १६ ॥ ॥ ।स० ॥

वचनादिति चेत् ॥ १७ ॥

अथ यदुक्तं वचनमिदं भविष्यति, सूक्तवाकेन प्रहरतीति । तत्र पदेनापि ऊनेन न सूक्तवाकेन प्रहरणं भवेत् । कृत्स्नस्य हि सूक्तवाकस्योपदेश इति ॥ १७ ॥ ॥ आशङ्का ॥

तदुच्यते ॥

प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १८ ॥

उभे पौर्णमास्यमावास्ये प्रति एष कृत्स्नशब्दः । उभयोः प्रकरणात् । उभयोरसौ कृत्स्न उच्यते, अवयवशोऽवयवे इति ॥ नैतदेवम् ॥ न हि सापेक्षाणाम् इतिकर्त्तव्यतया सम्बन्धः । न हि इतिकर्त्तव्यता एतद्विशिष्टा श्रूयते । इतिकर्त्तव्यताविशिष्टत्वेन गम्यन्ते कुतः । न हि इतिकर्त्तव्यतां प्रति कर्माणि विधीयन्ते । फलं प्रति तेषां विधिः । इतिकर्त्तव्यता तु कर्मणां विधीयते । तत्र सन्निधानाविशेषात्, कस्य किं विधीयते, कस्य नेति न गम्यते विशेषः । साधनत्वेन च सर्वेषां निर्देशादितिकर्त्तव्यताया सन्निधानाच्च, वचनाच्चास्य, प्रकरणलिङ्गस्याविशेषात् एकैकस्य कृत्स्नं प्रकरणं निराकाङ्क्षस्य, न सहायमपेक्षमाणस्य । तस्मादेकैकं प्रति कृत्स्नः सूक्तवाक उपदिश्यते । संविभागेऽपि प्रधानानां, कृत्स्न एव प्रयोक्तव्य इति यानि यत्रानर्थकानि पदानि, तान्यपि तत्र प्रयोक्तव्यानि । अदृष्टाय भविष्यन्ति । सूक्तवाकेन प्रहरतीति वचनात् । नास्ति वचनस्यातिभारः । गुणेन वा केनचिदभिधानं तासां देवतानां निर्वर्त्तयिष्यन्तीति ॥ अत्रोच्यते नैतदेवम् । उक्तम् । मुख्यमेव कार्य्यं मन्त्राणां, न गौणमिति । संस्कारार्थत्वादुत्कर्षो न्याय्यः । न गौणमभिधानमिति । कस्तर्हि कृत्स्नसंयोगस्य समाधिरुच्यते ? इति । एष समाधिः । न ह्येतदेकं वाक्यं यः कृत्स्नः सूक्तवाकः । बहून्येतानि वाक्यानि । येषां प्रधानदेवताभिधायीनि पदानि मध्ये, साधारणानि तन्त्रपदानि पुरस्तादुच्चार्यन्ते, तथा परस्तात् यथा परस्तात् । यथाऽग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृताग्नीषोमाविदं हविरजुषेतामवीवृधेतामित्येवमादीनि । तेषां पुरस्तात्तन्त्रम् । यथा, इदं द्यावापृथिवी-

इति । परस्तादपि, यथा, अस्यामृधेदिति । तान्येतानि सर्वाणि सूक्तवचनेन सूक्तवाकशब्दं लभन्ते । न च, तेषां समुदायः कश्चिदर्थं वदति । तस्मान्न समुदाय· सूक्तवाकः । न च साक्षात्साधनम् । सूक्तवाकसामान्यस्यैकत्वात्। सूक्तवाको वर्त्तते इत्येकवचनं भवति। सूक्तवाकेन प्रस्तरं प्रहरतीति तु येन केनचित् सूक्तवाकेन प्रह्रियमाणे यथाश्रुतं कृतं भवति । तस्मान्न समुदाय सूक्तवाकः । यत्तु अमावास्यादेवतावाचीनि पदानि, न पौर्णमास्यां प्रयुज्यन्ते, न तत्र सूक्तवाकशब्दो बाध्यते । प्रकरणं तत्र लिङ्गेन बाधितम्। तच्च न्याय्यमेव तस्मात् पौर्णमास्याममावास्यायां च विभज्य सूक्तवाक· प्रयोक्तव्य इति ॥ १८ ॥ ॥ आ० नि० ॥ सूक्तवाकानामर्थानुसारेण विनियोगाधिकरणम् ॥ ६ ॥ सूक्तवाकन्याय ॥

## लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम् ॥ १९ ॥

इह काम्ययाज्यानुवाक्याकाण्डमुदाहरणम् । इन्द्राग्नी रोचना दिव, प्रवर्षणिभ्य, इन्द्राग्नीनवति पुरः श्लथद्वृत्रमित्येवमाद्या ऋचः । अपरा अपि काम्या इष्टय. । ऐन्द्राग्नमेकादशकपालं निर्वपेत्, यस्य सजाता वियायु, ऐन्द्राग्नमेकादशकपालं निर्वपेद् भ्रातृव्यवान् अग्नये वैश्वानराय द्वादशकपालं निर्वपेद् रुक्काम ।अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् सपत्नमभिद्रोष्यन्नित्येवमाद्याः । तदेता याज्यानुवाक्याः प्रति सन्देह. । किं यावत् किञ्चिदैन्द्राग्नं कर्म, तत्र सर्वत्रानेन ऐन्द्राग्नेन याज्यानुवाक्यायुगलेन भवितव्यम्, उतैतस्यामेव ऐन्द्राग्न्यामिष्टौ काम्यायामिति । एवं वैश्वानरीययोर्याज्यानुवाक्ययो । एवं सर्वत्र ॥ किं तावत् प्राप्तम् ॥ यावत् किञ्चिदैन्द्राग्नं वैश्वानरीयमग्नीषोमीयं जातवेदसं च सर्वत्रैता याज्यानुवाक्या भवेयु । कुतः ' लिङ्गात् । ननु क्रमसमाख्याने विशेषके भविष्यतः । सत्यम् । तथापि क्रमं समाख्यां च शक्नोति लिङ्गं बाधितुमिति ॥ एवं प्राप्ते ब्रूम ॥ लिङ्गक्रमसमाख्यानात् तास्वेव काम्यास्वेता याज्यानुवाक्या इति गम्यते । य एव हि लिङ्गक्रम एषां कर्म्मणां, स एवासां याज्यानुवाक्यानाम् । तेन तासामेव ताः शेषभूता इति ॥

ननु लिङ्गं बलवत्तरमित्युक्तम् । सत्यमेतत् । इह तु समाख्या बलीयसी । न ह्येता· समाख्यानादृते एषां काम्यानां कर्म्मणां प्राप्नुव-

न्ति । न भिन्नदेशानां कर्म्मणाम् । कुतः । समाख्यामन्तरेण आसाम् ऋचां याज्यानुवाक्यात्वमेव न विज्ञायते, कुतो भिन्नदेशानां कर्म्मणां याज्यानुवाक्या भविष्यन्ति ? इति । या चैषां समाख्या सा काम्यानामेव याज्यानुवाक्यात्वमाचष्ट, न सर्वेषाम् । यदि समाख्या नाद्रियते । याज्यानुवाक्यात्वमेवैषां न भवति । यदि आद्रियते, तदा काम्यानामेव । एवं हि तत् समाख्यायते, काम्ययाज्यानुवाक्याकाण्डमिति ॥

अथ किमर्थमुभयमुपदिश्यते, लिङ्गक्रमादिति । समाख्यानादिति च । अस्ति तत्र पाथिकृतीयं व्रातपतीयं च कर्म्म । सामिधेनीकार्यमप्यस्ति । याज्यानुवाक्याकार्यमपि । यदि लिङ्गक्रमादित्येतावदेवोच्येत, सामिधेनीकार्येऽपि लिङ्गेन तासां विनियोगः स्यात् । अथ किमर्थं लिङ्गक्रमौ व्यपदिश्येते । सर्वा याज्यानुवाक्याकार्ये एव विनियुज्येरन्, सामिधेनीषु विनियोगो न स्यात् । अथ पुनः समाख्यानाल्लिङ्गक्रमाच्च निर्वृत्ते याज्यानुवाक्याकार्ये, सामिधेनीषु विनियोगः सिद्धो भवति, यथा आग्निवारुण्या इष्टे क्रमेऽतीते सौमारौद्रीणामनागते, मनोऋचस्ता सामिधेनीषु धाय्या इत्युच्यन्ते । तथा, पृथुपाजास्तं सम्बाधे इति द्वे धाय्ये कल्प्येते । तस्मादुभयं व्यपदेष्टव्यमिति ॥ १९ ॥ काम्ययाज्यानुवाक्याकाण्डानां काम्यमात्राङ्गताऽधिकरणम् ॥ ७ ॥

## अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥२०॥

ज्योतिष्टोमे श्रूयते । आग्नेय्या आग्नीध्रमुपतिष्ठते, ऐन्द्र्या सदः, वैष्णव्या हविर्धानमिति । तत्र सन्देहः । किं प्रकृताभिरेवंलिङ्गवतीभिरुपस्थातव्यम्, उत दाशतयीभ्यः एवंलिङ्गा आगमयितव्या ? इति ॥ किं तावत् प्राप्तम् प्रकरणे च मन्त्रो लिङ्गेन विधीयमानो दाशतयीभ्य एवागमयितव्यः, आग्नेयीत्येवमादिभिर्हि शक्या दाशतय्योऽभिवदितुम् । यश्चायं प्रकृत , स कार्यान्तरं विनियुक्तो, न इहाप्युपदेशमर्हति । उपदिष्टोपदेशो हि न न्याय्य एवञ्जातीयकस्य । कथञ्जातीयकस्य ? । यः कस्मिंश्चिद्विशेषेणापदिष्टः । नासौ सामान्येन लिङ्गेन अन्यत्रोपदेशमर्हति । कथम् । यदि तत् लिङ्गं तस्य लक्षणत्वेन, तत स विशिष्टो लक्ष्येत, येनानेनैवंलिङ्गेनतत् करोतीति । ततो नोपदि-

शो भवति । अथोपदिश्यते, एवंलिङ्गेन करोतीति । ततो न लक्ष्यते, तेनोपदिष्टस्यैवञ्जातीयकस्यैवञ्जातीयकं पुनरुपदेशो न न्याय्य । तस्माद् दाशतयीलिङ्गवन्तो मन्त्रा ग्रहीतव्या ॥ ननु प्रकरणसामर्थ्यतः प्रकृता ग्रहीतुं न्याय्या । नेत्युच्यते । लिङ्गं हि प्रकरणाद् बलीयः । आह विरोधे सति लिङ्गेन प्रकरणं बाध्येत । न चैतयोर्विरोधः । न वयं प्रकरणमनुजिघृक्षन्तः प्रकृतं लिङ्गवन्तमुपाददाना लिङ्गमुपबाधेमहि । यदि तु प्रकृतं विलिङ्गमुपाददीमहि, ततो बाधेमहि लिङ्गम् । उभयं सम्पादयिष्यामः प्रकरणं लिङ्गञ्च । नैतदेवम् । लिङ्गेन प्रत्ययो भवति दाशतयेनापि कर्त्तव्यमिति । दाशतय्योऽपि हि आग्नेयीशब्देन शक्यन्ते वदितुम् । स प्रत्ययो लिङ्गजनितो यन्मिथ्येति कल्प्यते, तत् प्रकरणानुरोधात् । स चेत् प्रकरणमनुरुद्ध्यते, मिथ्येति कल्प्यते । अथ नानुरुद्ध्यते सम्यगिति, तस्माद् विरोधः । विरोधे च प्रकरणदौर्बल्यम् ॥

उच्यते । तल्लिङ्गवत्ताऽनेनोपस्थानेनानुग्रहीतव्या, न दाशतयी मन्त्रव्यक्तिः । सा च प्रकृते मन्त्रे उपादीयमाने निरवशेषा उपात्ता भवति । दाशतय्यां पुनर्मन्त्रव्यक्तौ उपादीयमानायां प्रकरणाद् या मन्त्रव्यक्तिः प्राप्नोति, सा बाधिता भवत्यसति विरोधे । न च इह लिङ्गप्रकरणयोर्विरोधः, प्रकरणाद् व्यक्तिः प्रतीयते, लिङ्गात् सामान्यम् । अन्या च व्यक्तिरन्यत् सामान्यम् । तस्मात् प्रकृतो लिङ्गवानुपादेय इति । उच्यते । सत्यमेवमेतत् । प्रकृते उपादीयमाने प्रकरणं न बाधितं भवति लिङ्गमप्यनुगृहीतम् । लिङ्गजनितस्तु प्रत्ययः कश्चिन्मिथ्येति कल्पितो भवति । ननु व्यक्तिरपदार्थः । कथं व्यक्तावनुपादीयमानायां प्रत्ययो बाध्येत । उच्यते । एतदेव न विजानीमो, लिङ्गवत्ताऽत्राङ्गं न वेति । किन्तु तद्धितनिर्देशोऽयम् । तत्र देवताया मन्त्रो लक्ष्यते । मन्त्रव्यक्तिर्हि साधनं, न सामान्यं नाम किञ्चिद्परम् । देवनैवात्र सामान्यं, यया साधनं लक्षयितव्यम् । न च गम्यते विशेषः—अयमसौ मन्त्रो, नायमसाविति । अनवगम्यमाने विशेषे सर्वे तल्लिङ्गा ग्रहीतव्या इति । दाशतय्यामपि मन्त्रव्यक्तौ भवति प्रत्ययः स प्रकरणानुरोधेन बाध्येतेत्यन्याय्यम् । एवं सति न दाशतय्य एवोपादातव्या भवन्ति । प्रकृतमप्युपाददीरन् । नन्वेतदुक्तं—कार्य्यान्तरे प्रकृतस्योपदेशः नासावर्थान्तरे उपदेक्ष्यते इति ।

उच्यते । न नियोगत स एवार्थान्तरे वर्त्तते । स चान्यश्च सामान्येन लिङ्गेन नैव सति किञ्चिद् दुष्यति । नन्वेतद् दुष्यति । न । उभयमनुगृहीतं भवति लिङ्गं प्रकरणञ्च । सत्यम् । नानुगृहीतं भवति । किन्त्वननुग्राह्यमेव प्रकरणं लिङ्गप्रत्ययविरुद्धात् । अपि च, न लिङ्गं प्रकरणं वा अनुग्रहीतव्यमिति । तत्परिच्छिन्ने प्रवृत्तिर्भवति यद्वगम्यते, एतत् फलवदिति । तत्र प्रवर्त्तते । किमतो यद्येवम् । एतदतो भवति । न लिङ्गमनुगृहीतं क्वचिदित्यपरस्मिँस्तत्परिच्छिन्ने न प्रवृत्तिर्भवितुमर्हति । तस्माद्दाशतय्यो ग्रहीतव्या इति गम्यते ॥२०॥ पूर्व०॥

## तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २१ ॥

तदाख्यो ज्योतिष्टोमसमाख्यात एव ग्रहीतव्यः । कुतः ॥ प्रकरणोपपत्तिभ्याम् ॥ प्रकृतो हि असौ । प्रकृतप्रत्ययश्च न्याय्य । कथम् । न ज्योतिष्टोमं प्रति मन्त्रस्य व्यापारविधानमुपपद्यते । प्राप्तत्वादेव । व्यापारविशेषविधानं तूपपद्यते । अप्राप्तत्वाद् व्यापारविशेषस्य । अनपेक्ष्य च प्रकरणं दाशतये विधीयमाने वाक्य भिद्येत । उपस्थानञ्च कुर्यात् । तच्चैव लिङ्गेनेति ॥ २१ ॥ ॥ सि० ॥

## अनर्थकश्चोपदेशः स्यादसम्बन्धात् फलवता न ह्युपस्थानं फलवत् ॥ २२ ॥

ननु च प्रकरणाज्ज्योतिष्टोमस्योपकारक स्यात् । यद्युपस्थानज्योतिष्टोमसम्बन्धो विवक्ष्येत, तदोपस्थानं ज्योतिष्टोमे उपदिश्येत । प्रकरणात्तेनैकवाक्यतामियात् । यदा तु खलूपस्थानस्य मन्त्रसम्बन्धो विवक्ष्यते सर्वोपस्थानेषु, तदा मन्त्र प्राप्नोति प्रकरण बाधित्वा-न प्रकरणं विशेषकं भवितुमर्हति । उभयसम्बन्धे वाक्यभेद । असमत्पक्षे न पुनरयं दोषः । येनाग्नेयेनैन्द्रेण वा ज्योतिष्टोमे व्यापारः क्रियते, तेनोपस्थानव्यापारविशेष । तदा ज्यौतिष्टोमिको विधीयते, अन्यत् सर्वमनूद्यत इति, न दोषो भवति । अथवा आग्नीध्र-हविर्धानसद् सम्बन्धमात्रं विधीयते, उपतिष्ठते इत्ययमनुवाद । अनेन मन्त्रेण आग्नीध्रमुपतिष्ठते इति समासीदति इत्यर्थः । तस्मात् प्रकृता मन्त्रा एवञ्जातीयका उपादातव्या इति ॥ २२ ॥

## सर्वेषां चोपदिष्टत्वात् ॥ २३ ॥

यदप्युक्तमुपदिष्टा हि ते प्रकृता. कार्य्यान्तरे इति । तदुच्यते ।

उक्तोत्तरमेतत् । अपि च न केनाचिद् नोपदिष्टाः, सर्वे ग्रावस्तोत्रे आश्विने शस्यमाने सूर्येऽनुदृशति । तेन न प्रकृते कश्चिद्विशेष । तस्मात् प्रकृतस्यैव ग्रहणम् ॥ २३ ॥ युक्ति. ॥ आग्नीध्रोपस्थाने प्राकृतानां मन्त्राणां विनियोगाधिकरणम् ॥ ८ ॥

## लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥ २४ ॥

भक्षमन्त्रः श्रूयते- भक्षे हि मा विश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वाय । एहि वसो पुरोवसो प्रियो मे हृदयोऽस्यश्विनोस्त्वा बाहुभ्यां सध्यासम् । नृचक्षसन्त्वा देव सोम सुचक्षा अवख्येषम् । हिन्वमे गात्रा हरिवो गणान्मे मा वितीतृष । शिवो मे सप्तर्षीन् उपतिष्ठस्व मा मेऽवाङ्नाभिमतिगाः मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु वसुमद्गणस्य रुद्रमद्गणस्य आदित्यमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य माध्यन्दिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इत्येवमादि ॥

तत्र सन्देह । किं कृत्स्न एषोऽनुवाको भक्षणे विनियोजनीयः, उत कश्चिदस्यावयवोऽन्यत्रापीति । किं प्राप्तम् ॥ लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥ सर्वोऽनुवाको भक्षणे विनियोजनीय । कुत । भक्षयामीत्येष शब्दो व्यक्तं भक्षणे विनियोजनीय, भक्षणमेष शक्नोति वदितुं, नान्यत् किञ्चित् । अन्यानि चास्य पदानि भक्षणविशेषणवचनान्येव, यत्र यत्र भक्षयामीति तत्र तत्र प्रयुज्यन्ते ॥ नन्वेहि वसो इत्येवमादि, सध्यासमित्येवमन्तं ग्रहणार्थं, स्वेन पदसमूहेन परस्पराकाङ्क्षिणैकार्थे, विभिन्नं भक्षणवाक्यात् । नृचक्षसमित्येवमादि अवख्येषमित्येवमन्तमवेक्षणवचनम् । हिन्व मे गात्रा हरिव इत्येवमादि च, मा मेऽवाङ्नाभिमतिगा इत्येवमन्तं सम्यग्जरणार्थम् । तद् बहुत्वादर्थानाम् । बहूनि वाक्यानि । कथमेतच्छक्यं वदितु, सर्वमिदमेकं वाक्यं भक्षणे विनियुज्यते इति ॥ उच्यते ॥ सर्वाण्येतानि भक्षणविशेषणानीत्युक्तम् । आह । एवमपि भिद्येत वाक्य विशेषणविशेष्याणां युगपद्वचनासम्भवात् । उच्यते । न विशेषणानि विवक्ष्यामो, विशेषणैर्ग्रहणावेक्षणादिभिर्विशिष्ट एकोऽर्थो विवक्ष्यते । नैवं सम्यग्

भवति । विशेषणवचनानामविवक्षितस्वार्थवचनता, भक्षणविशेषणपरता चेति । लक्षणया तु गम्यते । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा । तस्मान्नैकं वाक्यमिति ॥ अत्रोच्यते ॥ यद्यप्यमी ग्रहणादयो बहवोऽर्था गम्यन्ते, न तु सर्वे ईप्सिता इति, भक्षणमेवैकं प्रत्यायायितव्यम् । तद्धि श्रुतम् । विशेषणान्यश्रुतानि । न तै प्रतीतैः प्रयोजनम् । प्रयोजनं च यावतः पदसमूहस्यैक, तावदेकं वाक्यम् । तस्माद् विशिष्टभक्षणार्थमेतदेकं वाक्यमिति भक्षणे विनियोक्तव्यम् । समाख्यान च भवति । भक्षाऽनुवाक इति । कृत्स्नश्चाऽनुवाको, नावयव. ॥ ननु च समाख्या लौकिक शब्द कथं वैदिकमङ्गं नियंस्यतीति । यद्यपि लौकिकस्तथाप्यनादिस्तस्यानुवाकेन सम्बन्धः । किमतो यद्येवम् । एतदतो भवति । भक्षणमभिव्याहृतमनुवाकं ब्रूते । समभिव्याहारश्च सति सम्बन्धे भवति । यथा पाचको लावक इति । समभिव्याहारात् सम्बन्धमनुमास्यामहे । आह । नानुमानगम्य एवञ्जातीयकेष्वङ्गभावो, विधानादेवावगम्यते, नान्यथा । न च समाख्या विधात्री । अत्रोच्यते । समाख्या सम्बन्धिनौ बुद्धौ सन्निधिमुपनेष्यति, प्रयोगवचनो विधास्यतीति । तस्मात् कृत्स्नोऽनुवाको भक्षणे विनियोक्तव्य इति ॥ २४ ॥ ॥ पूर्व० ॥

**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥२५॥**

नैतदेवं, कृत्स्नोऽनुवाको भक्षणे विनियुज्यत इति, रूपाद् ग्रहणवाक्यं ग्रहणे विनियुज्येत, एहि इत्येवमादि सध्यासमित्येवमन्तम् । नृचक्षसमित्येवमादि च, अवख्येषमित्येवमन्त दर्शने । कुतः । मुख्यार्थमेवं तद्वाक्य भवति, इतरथा लक्षणार्थता स्यात् । मुख्यार्थता च न्याय्या, न लक्ष्यार्थता ॥ उच्यते ॥ विशेषणानामभिधाने, न किञ्चिदस्ति प्रयोजनमित्युक्तम् । अत्रोच्यते । नैवैतानि विशेषणानि । पृथगेवैतानि ग्रहणादीनि स्वैः स्वैर्वाक्यैरुच्यन्ते इति । कुतः । अस्ति हि तैः प्रयोजनम । चोदितानि हि तानि । कानिचित्तु पृथग्वाक्यैः, कानिचिदर्थप्राप्तानि, तान्यवश्यं प्रकाशयितव्यानि । तानि प्रकाशयिष्यन्त्येतानि वाक्यानि । रूपं चैषां तत्प्रकाशनसामर्थ्यम् । अतो नानार्थत्वान्नैकं वाक्यमुच्यते । ननु भक्षणवाक्यशेषीभवितुमप्येषां रूपमिति । उच्यते । बाढमस्ति रूपं, न तु तद्विशेषणान्येतानि कल्प्यन्ते ।

कस्य हेतोरदृष्टार्थानि तथा भवन्ति । उक्तैरनुक्तैर्वा विशेषणैस्तावानेव सोऽर्थः । इतरथा ग्रहणादीनि प्रकाशयिष्यन्ति । तथा दृष्टार्थानि भविष्यन्ति । तस्माद् रूपोपदेशाभ्यामपकर्षो भवेत् केषाञ्चिदत्र इति ॥ २५ ॥ ॥ सिद्धान्तः ॥ भक्षमन्त्राणां यथालिङ्गं ग्रहणादौ विनियोगाधिकरणम् ॥ ९ ॥

## गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २६ ॥

भक्षानुवाके श्रूयते । मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु । वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । तत्र सन्देहः, किं मन्द्रादिः तृप्यत्वित्येवमन्त एको मन्त्रः, वसुमद्गणादिरपरः ? उत मन्द्रादिर्भक्षयाम्यन्त एक एव मन्त्र इति । किं तावत् प्राप्तम् । द्वौ मन्त्रौ, द्वौ ह्येतावर्थौ । अन्या तृप्तिरन्यद् भक्षणम् । ततोऽर्थभेदाद् वाक्यभेदः । तदुक्तम् । तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वादिति ॥ एवं प्राप्ते ब्रूमः । गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यादिति । तृप्तिर्भक्षणविशेषणत्वेनाभिधीयते । भक्षयामि वाक् तर्प्स्यतीति ॥ ननु तृप्यत्वित्येषाऽन्य शब्दोऽन्यश्च तर्प्स्यतीति । एषा भविष्यन्ती क्रियायामुपपदभूतायां भवतीति । तत्र द्वयोः क्रिययोरस्ति सम्बन्धो भक्षयामि वाक् तर्प्स्यतीति । इह पुनर्भक्षयामि तृप्यत्विति नास्ति कश्चित् सम्बन्धः । उच्यते । न ह्ययं विधौ तृप्यत्विति विज्ञायते । क तर्हि ? । प्रार्थनायां वा प्राप्तकाले वा । यदि भक्षयामि वाक् तर्प्स्यतीत्येवमभिसम्बन्धः क्रियते, यदि वा भक्षयामि वाचस्तर्प्तुं प्राप्तः काल इति । तेन विशेषणविशेष्यभावादेकार्थतायामेकवाक्यत्वे मन्त्रैक्यमुपपद्यते । ननु निराकाङ्क्षे एते वाक्ये भङ्क्त्वा रूपं साकाङ्क्षे क्रियेते । अत्रोच्यते । यद्यप्येते वाक्ये भिन्नार्थे निराकाङ्क्षे द्वावर्थावभिवदेयातां, तथापि भक्षणस्य प्रकाशनं दृष्टं प्रयोजनं, न तर्पणस्येति कृत्वैकार्थ्यमेव भवेत् । किमङ्ग पुनर्गुणभावे गम्यमाने एवात्र । तस्माद् गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यादिति ॥ २६ ॥ ॥ मन्द्राभिभूतिरित्यादेर्भक्षयामीत्यन्तस्यैकशस्त्रताधिकरणम् ॥ १० ॥

## लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणा-
## ममन्त्रत्वम् ॥ २७ ॥

एष एव मन्त्र उदाहरणम् । इह च प्रदानानि ऐन्द्राणि अनैन्द्राणि च विद्यन्ते । तेषां भक्षणान्यपि सन्ति । तत्र सन्देहः । किमैन्द्रेष्वनैन्द्रेषु च मन्त्रः ? उतैन्द्रेष्वेव मन्त्रः । अनैन्द्राणाममन्त्रकं भक्षणमिति । किं तावत् प्राप्तम् । अनैन्द्राणाममन्त्रकं भक्षणमिति । कुतः । समानविधानान्येतानि प्रदानानि तेष्विन्द्रपीतमित्यात मन्त्रोऽनिन्द्रपीतं न शक्नोति वदितुम् । न च समानप्रकरणे ऊहः सम्भवति । असति वचने अन्यार्थानभिधानात् । तस्मादमन्त्रकं भक्षणमेवञ्जातीयकेष्विति ॥ २७ ॥ ॥ पूर्वपक्षः ॥

## यथादेवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २८ ॥

अथ वा यथादेवतमूहेन लक्षयितव्यम् । कस्मात् ध्रुवचमसा हि प्रकृतिभूता । के पुनर्ध्रुवचमसाः । ये शुक्रामन्थिप्रचारे सवनमुखीयाः । ऐन्द्रास्ते भवन्ति । तेषां प्रकृतिभूतं प्रदानं, विकृतिभूतान्यन्यानि । कथमवगम्यते ? तत्प्रकृतित्वं हि दर्शयति । कथम् । अनुष्टुप्छन्दस इति षोडशिनि अतिरात्रे भक्षमन्त्रं नमतीति । किमत्र दर्शनम् । नमतीति विपरिणामं दर्शयति ॥ ननु वचनमेतत् स्यात् । नेत्युच्यते, नैतत् नमतीति श्रूयते । कथं तर्ह्यत्र नमतीति, अनुष्टुप्छन्दस इति भक्षमन्त्रं नमतीति । स एष ऊहो विकारेषूपपद्यते । तस्मादेते विकाराः । अतोऽनैन्द्रेष्वपि चोदकप्राप्तो मन्त्र ऊहितव्यो भवति । उच्यते । विकारा एते इति लिङ्गमपदिष्टम् । न्यायोऽभिधीयतामिति । उच्यते । ऐन्द्रः सोमो गृह्यते मीयते च । तेन ऐन्द्रेषु सोमोऽनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव, अधर्मका इतरे साकाङ्क्षा । कथं पुनर्ज्ञायते, ऐन्द्रः सोमो गृह्यते मीयते चेति । मन्त्रवर्णात् । इन्द्राय त्वा वसुमत इत्येवमादिर्मन्त्र ऐन्द्रं सोमं वदितुं शक्नोतीति, नान्यम् । तस्मादैन्द्रः सोमः । तेन ऐन्द्रेषु सोमधर्माः । अन्यानि तु प्रदानानि साकाङ्क्षाणि । अतो धर्मान् ग्रहीष्यन्तीति—न्यायः । तस्माद् यथादेवतमूहितव्यो मन्त्र इति । एवं स्थितं तावदपर्यवसितम् । तत एवं सति चिन्तान्तरं वर्त्तिष्यते ॥ २८ ॥ ॥ सिद्धान्तः ॥ इन्द्रपीतस्येत्यादिमन्त्राणां सर्वेषु भक्षणेषूहेन विनियोगाः

ऽधिकरणम् ॥ ११ ॥

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २९ ॥

सन्ति पुनरभ्युन्नीता सोमा, शुक्रामन्थिप्रचारे एव सवनमुखीया । तेषां होतुर्वषट्कारेऽनुवषट्कारे च चतुर्भिर्मध्यत कारिणां चमसैर्हुत्वा होत्रकाणां चमसै सकृत्सकृद् वषट्कारे एव हुत्वा पुन सशेषेष्वेव पात्रेषु सोमोऽभ्युन्नीतः । एवं हि तत्र अध्वर्य्यु सम्प्रेष्यति । मध्यत.-कारिणां चमसाध्वर्यवो वषट्कृतेऽनुवषट्कृते जुहुत होत्रकाणां चमसाध्वर्यव. सकृद् हुत्वा शुक्रस्याभ्युन्नीयोपावर्त्तध्वमिति । तत्र होत्रका नानादेवता यजन्ति । मैत्रावरुणो मित्रावरुणौ, मित्रं वयं हवामहे इति । ब्राह्मणाच्छंसी इन्द्रम्, इन्द्रं त्वा वृषभ वयमिति । पोता मरुत., मरुतो यस्य हि क्षये इति । नेष्टा त्वष्टारं पत्नीश्च, अग्ने पत्नीः इहावह इति । आग्नीध्रोऽग्निम्, उक्ष्णां नाय वशां नाय इति । तत्र तैश्चमसैः पूर्वस्मिन् वषट्कारे इन्द्र इष्टः । पुनरभ्युन्नीय मित्रावरुणाद्या देवता इष्टा. । शेषास्तत्रेन्द्रस्य मित्रावरुणादीनां च । तत्र सन्देह । किं प्रस्थितदेवतायाश्च इन्द्रस्य मित्रावरुणादीनां चोपलक्षणमुतेन्द्रो नोपलक्षयितव्यः ? इति ॥ किं तावत् प्राप्तम् ॥ पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणम् । कस्मात् । द्विशेषत्वात् । चमसे चमसे तत्र द्वयो शेष । प्रकृतौ यस्यै हुतं, तच्छेषस्तत्पीत इत्युक्तम् । इहापि तद्वदेव वदितव्यम् । तस्माच्चमसे चमसे द्वयोरुपलक्षणम् ॥ २९ ॥

अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३० ॥

अपनीतं प्रस्थितदेवतायाः शेषं मन्यामहे । कुत । मित्रावरुणादिभ्यस्तत्पात्रस्थमभ्याश्राव्यते । कथमेतत् । उच्यते । मित्रावरुणादयो हीज्यन्ते । तद् यथा आचार्य्यशेषं देवदत्तो भुञ्जानो यदि शेषं पूर्णकाय प्रयच्छति । पूर्णको देवदत्तमुपलक्षयति । देवदत्तशेषं भुङ्क्ते इति, नाचार्य्यशेषम् । तस्मान्न प्रस्थितदेवतया इन्द्र उपलक्षयितव्य इति ॥ ३० ॥ ॥ पूर्वपक्षः ॥

ग्रहणाद्वापनयः स्यात् ॥ ३१ ॥

नचैतदस्ति, इन्द्रो नोपलक्षणीय इति । तस्यापि ह्यसौ शेषः प्रत्यक्षमवगम्यते । नन्वपनीत इति । उच्यते । नासावपनीयते । सकृद्धुताश्चमसानभिद्रोणकलशाद् गृह्णाति । सशेषश्चमसो लक्षणमन्य-

स्योन्नीयमानस्य । ततश्चमसस्थो होतुमुन्नेतव्यः प्रेषितो वा । यत्तु यक्ष्यमाणा देवता प्रति आश्रावित इति । उच्यते । आश्राव्यते तत्र देवताभ्यो, न त्विदं वा तद्वेति । तेन यद्धोतुं गृहीतं तद् आश्रावितमिति गम्यते । न चाऽऽश्रावणवेलायां देवताभिसम्बन्धः, यद् यद् देवताभिसम्बद्धं, तद् आश्राव्यते । तस्मादस्तीन्द्रशेषो लक्ष्यते च । अतः सर्वेषामुपलक्षणमिति। क्त्वाचिन्तैषा । नात्र प्रयोजन वक्तव्यम्। पूर्वाधिकरणस्यैवैतत् प्रयोजनमवधार्य्यते ॥ ३१ ॥ सिद्धान्त. ॥

अभ्युन्नीतसोमभक्षणे इन्द्रस्याप्युपलक्षणाधिकरणम् ॥ १२ ॥

## पात्नीवते तु पूर्ववत् ॥ ३२ ॥

अस्ति पात्नीवतो ग्रह , यदुपांशु पात्रेणाग्रयणात् पात्नीवतं गृह्णातीति । द्विदेवत्यानां शेषा आग्रयणस्थाल्यामुपनीता । तत. पात्नीवतो गृह्यते । अथ हुते पात्नीवते तच्छेषे भक्ष्यमाणे भवति सन्देह । किमिन्द्रवाय्वादय उपलक्षयितव्या , न वा ? इति । किं तावत् प्राप्तम् । उपलक्षयितव्या. । तेषामपि ह्यसौ शेषो यथा प्रस्थितदेवताया इति ॥ ३२ ॥

## ग्रहणाद्वापनीतं स्यात् ॥ ३३ ॥

अपनीयते हि स शेष इह, न यथापूर्ववत् । तत्र हि पात्रलक्षणत्वेन सङ्कीर्त्यते. न सोमो ग्राह्यत्वेन। इह त्वाग्रयणाद् गृह्णातीति स्थालीस्थ सोमो निर्दिश्यते होतुं यक्ष्यमाणदेवतां प्रति। ननु स्थाल्यामाग्रयणो नाग्रयणश्च । तत्र यस्तस्माद् आग्रयणाद् गृह्यते, स पात्नीवत । यस्तु सम्पातान्नासौ पात्नीवत इति । उच्यते । आग्रयणोऽपादानं, तस्माद् योऽपैति आग्रयणो नाग्रयणो वा, स सर्व पात्नीवत । आग्रयणाच्चैप सर्वोऽपेतः ॥

नन्वनाग्रयणादप्यपेतः । नैष दोष । आग्रयणात्तावदपेतः । तेनाऽसौ पूर्वदेवताभि पीत इति न शक्यते वक्तुम् । यो हीन्द्रार्थस्य सोमस्यावयव शेष स इन्द्रपीत इति प्रकृतावुच्यते । इहापि तद्वदेव पूर्वदेवतार्थस्यावयवो वदितव्य । ननु योऽसौ पूर्वदेवतार्थस्तस्यैवायमवयव । नेति ब्रूम । न हि हुतस्यावयवो दृश्यते । ननु प्रकृतावपि हुतस्यावयवो न दृश्यते। उच्यते। हुताहुतस्य समुदायस्य तत्राऽवयव उपलक्ष्यते तद्दवतस्य । नन्विहापि समुदाय एवासीत्तद्दैवत्य ।

तस्यैवायमवयवः । नेत्युच्यते । आसीदयं समुदायस्तद्देवत्यः, इदानीं तस्यावयवोऽन्यदेवत्यो जातः । तेन समुदायस्तद्देवत्यत्वादपेतः । आह । पूर्वदेवतापीतस्यामावयव आसीत्तेन भूतपूर्वगत्या भविष्यति । उच्यते । प्रकृतौ न भूतपूर्वगत्याभिधानं कृतम् । इहापि तद्वदेव न कर्त्तव्यमिति । अपि चेन्द्रदेवत्यस्तत्रेन्द्रपीत इत्युक्तम् । अनपनीता च तस्येन्द्रदेवत्यता, अस्य पुनः पूर्वदेवतासम्बन्धोऽपगतः । तस्मान्नात्र पूर्वदेवता उपलक्षणीया इति ॥ ३३ ॥ ॥ सिद्धान्तः ॥ पात्नीवतभक्षणे इन्द्रादीनामनुपलक्षणाधिकरणम् ॥ १३ ॥

त्वष्टारं तूपलक्षयेत् पानात् ॥ ३४ ॥

अस्ति पात्नीवतः सोमः । तत्र मन्त्रः, अग्नाइ पत्नीवन् सजूर्देवेन त्वष्ट्रा सोमं पिबेति । तत्र सन्देहः । किं त्वष्टा उपलक्षयितव्यो, न वेति । किं प्राप्तम् । उपलक्षयितव्यः । कुतः । पानात् । पानं श्रूयते सजूर्देवेन त्वष्ट्रा सोमं पिबेति । तेनायमग्नये पत्नीवते सह त्वष्ट्रा दीयत इति गम्यते । यस्मै च येन सह दीयते, उभाभ्यां तद्दीयते । एवं तत्सहदानं भवति । यथा देवदत्ताय यज्ञदत्तेन सह शतं दीयतामित्युक्ते, तत्रोभाभ्यामपि दीयते । तस्मात् त्वाष्ट्रोऽप्यसौ सोम इति त्वष्टोपलक्षयितव्यः । असावपि इन्द्र इव पिबतीति ॥ ३४ ॥ पूर्व० ॥

अतुल्यत्वात्तु नैवं स्यात् ॥ ३५ ॥

नैतदेवम् । शब्दप्रमाणका वयम् । यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्चाग्नेः पत्नीवतः पानमाह, त्वष्टुः सहभावमात्रम् । न ह्यनुष्ठीयमाने सहभावः सिद्ध्यतीति त्वष्टरि पानमनुमीयते । ननु त्वष्टुः पानञ्चोदितम् । सत्यं चोदितं मन्त्रवर्णेन, न चोदनया । चोदना हि पात्नीवतं गृह्णातीति । लोके तु कार्य्यं दृष्ट्वा चोदितमनुष्ठीयत एव । लोकतश्चैतत्पारिच्छिन्नं, नैवञ्जातीयकेन वाक्येन, त्वष्टुः सोमः कृतो भवतीति ॥ ३५ ॥ ॥ सिद्धान्तः ॥ पात्नीवतशेषभक्षे त्वष्टुरनुपलक्षणीयताधिकरणम् ॥ १४ ॥

त्रिंशच्च परार्थत्वात् ॥ ३६ ॥

तस्मिन्नेव पात्नीवते मन्त्रः, एभिरग्ने सरथं याह्यर्वाक् नानारथं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वेति । तत्र सन्देहः । किं त्रयस्त्रिंशतो देवानामुपलक्षणं कर्त्तव्य-

## तत्रार्थात् प्रतिवचनम् ॥ ४२ ॥

एतदवगतं, तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेदिति । अथ प्रतिवचने सन्देह. । किं लौकिकं प्रतिवचनमुत एतदेवेति । किं प्राप्तम् । एतद् वैदिकं, प्रश्ने विनियुक्तम् । लौकिकमन्यत् प्रतिवचनं भवितुमर्हति । एवं प्राप्ते ब्रूमः । तत्रैतदेव प्रतिवचनमिति ।

ननु प्रश्नलिङ्गमेतद् उपह्वयस्वेति । उच्यते । यदस्य पूर्वमुपहूत इति प्रतिवचनस्य समर्थं, तत् प्रतिवचनकार्यं भविष्यति । आह । विपरीतमेतत् समाम्नानम् । पूर्वं हि प्रश्ने भवितव्यं, तत प्रतिवचनेन । उच्यते । अर्थात्, पूर्वं प्रतिवचनकार्यं भविष्यति । अर्थो हि क्रमाद् बलीयानिति ॥४२॥ वैदिकवाक्येन प्रतिवचनाधिकरणम् ॥१६॥

## तदेकपात्राणां समवायात् ॥ ४३ ॥

इदं सन्दिह्यते । किं यः कश्चिद् अनुज्ञापयितव्यः ? उत समानपात्र इति । अविशेषाभिधानाद् य. कश्चिद् इति प्राप्ते । उच्यते । तत् खल्वनुज्ञापनमेकपात्राणां स्यात् । कुतः । अनुज्ञापनमिहाङ्गम् । अनुज्ञापनस्य चैतद्रूपम् । यत्रान्येन कर्त्तव्यमन्यश्चिकीर्षेत्, सोऽनुमन्यस्वेति ब्रूते, सहभोजनादि वा आचरितुकामश्चित्तमन्यस्यानुकूलयति । तदेतद् नानापात्रेषु नैव सम्भवति । न हि तत्रान्येन कर्त्तव्यम्, अन्यो वा चिकीर्षतीति । सहभोजनादौ वा पदार्थे सम्मानयति । एकपात्रे तु सोमे साधारणे संस्कर्त्तव्ये न्यायेन समो विभाग. प्राप्नोति । तत्राविभज्य पीयमाने कदाचिदन्येन पातव्यमन्य पिबेत् । तत्रानुज्ञापनं सम्भवति, त्वया अर्द्धं पातव्यं, मया अर्द्धम् । कदाचिदहमभ्यधिकं न्यूनं वा पिबेयं, तदनुज्ञातुमर्हसीति । एकपात्रे वा पानं त्वया सहाचरन्नहं तव चित्तप्रसादन व्याहन्यामिति सम्भवत्यनुज्ञापना । तस्मादेकपात्रेष्वेवैतत् स्यादिति ॥४३॥ ॥ एकपात्राणामनुज्ञापनाधिकरणम् ॥ १७ ॥

## याज्यापनयेनापनीतो भक्षः प्रवरवत् ॥ ४४ ॥

अस्ति ज्योतिष्टोम., तत्र क्रतुयागेषु श्रूयते, यजमानस्य याज्या सोऽभिप्रेष्यति होतरेतद् यजेति, स्वयं वा निषद्य यजतीति । यदा स्वय यजति, तदा सन्देह. । किमस्य भक्षोऽस्ति, नास्तीति । तदु-

च्यते । याज्यायामपनीयमानायां नापनीयेत भक्षणम् । होतुरेव तु भक्षणं स्याद्, न यजमानस्येति । कुतः । अन्या हि याज्या, अन्यद् भक्षणम् । न चान्यस्मिन्नपनीयमानेऽन्यदपनीयते । यथा तस्यामेव याज्यायामपनीयमानायां प्रवरो नापनीयते, तद्वदेतदपीति ॥ ननु याज्याया अधि वषट्करोतीति, यत्र याज्या तत्र वषट्कारः । यत्र वषट्कारस्तत्र भक्षणमपीति । नेत्युच्यते । न तावद् याज्यायामवयवभूतो वषट्कारो, येन याज्याऽग्रहणेनाऽसौ न गृह्येत । यत्तु तस्या अधि वषट्करोति, अन्येनापि प्रयुज्यमानाया उपरि होता वषट् करिष्यति । याज्यापनयो हि वचनात् । न वषट्कारापनयः । यावद्वचनं, वाचनिकं भवत्येव । वचनं हि तद्विषयमेव ॥ ४४ ॥ ॥ पूर्व० ॥

## यष्टुर्वा कारणागमात् ॥ ४५ ॥

यष्टुर्वा भक्षः स्यात् । कुतः ॥ कारणागमात् ॥ भक्षस्य कारणं वषट्कार । स च याज्यायामागच्छन्त्यामागच्छति । एवं हि श्रूयते, याज्याया अधि वषट्करोतीति ॥ नन्वेतदुक्तं, यजमानेनापि प्रयुज्यमानायां होता अधि वषट्करोतीति । नैष समाधिः । अनवानता यष्टव्यं, वषट्कारेण यागः क्रियते, न याज्यामात्रेण । तस्माद् आ वषट्काराद् न अवानितव्यं यजमानेन । अन्यश्चेद् वषट् कुर्य्याद् अवान्याद् याजमानः । न च यजेत । यष्टव्ये चासौ चोद्यते । न याज्यामात्रवचने । स्वयं निषद्य यजतीति साङ्गस्य निषद्ययागे विधानात् ॥ ४५ ॥ ॥ सि० ॥

## प्रवृत्तत्वात् प्रवरस्यानपायः ॥ ४६ ॥

अथ यदुक्तं, यथा प्रवरो नापनीयते, एवं भक्षोऽपीति । उच्यते । अशक्यत्वात् । प्रवरो नापनीयते । अतिक्रान्तो हि स कथमपनीयेत होतुः । भ्रष्टे चावसरे, अनुष्ठीयमानो यजमानस्य विगुणः स्यात् । न च विगुणः कथञ्चिदर्थं साधयेत् । नात्र चोदकेन प्राप्नोति । अथोच्येत, यच्छक्यं तच्चोदकेन प्रापितं, यद् न शक्यं तत् प्रापितमिति । प्रकृतिरियम् । अपूर्वस्यात्र विधानं, यादृशमुक्तं, तादृशं यदि शक्यते कर्त्तव्यम् । यदि न शक्यते, यत्रैव शक्यते तत्रैव कार्य्यम् । न यत्र विगुणमिति । तस्मात् प्रवरस्यानपायो युक्तो, न भक्षस्येति ॥ ४६ ॥ ॥ आ० नि० ॥ स्वययष्टुर्भक्षास्तिताधिकरणम् ॥ १८ ॥

**फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्॥४७॥**

ज्योतिष्टोमे श्रूयते– स यदि राजन्यं वा वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ता सम्पिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति। तत्र सन्देहः। किं फलचमसो भक्षविकार, उत इज्याविकार इति। किं फलचमसं भक्षयेदित्यर्थः, उत फलचमसेन यजेतेति। किं प्राप्तम्। फलचमसो नैमित्तिको भक्षविकार। भक्षणेन हि श्रुतेन एकवाक्यता भवतीति। तमस्मै भक्षं प्रयच्छेदिति, न तेन यजेतेतिशब्दोऽस्ति। तस्माद् भक्षविकार.॥ ४७॥ ॥ पूर्व०॥

**इज्याविकारो वा संस्कारस्य तदर्थत्वात्॥ ४८॥**

इज्याविकारो वा फलचमसः। फलचमसेन यजेतेत्यर्थः। कथम्। यदेतद् भक्षणम्। एतत् सोमसंस्कारार्थं, फलचमसस्यापि यदि भक्षणं फलचमससंस्कारार्थं, फलचमसस्यान्यत्रानुपयोगादनर्थकम्। अथ भक्षणं प्रधानम्। तथा न सोममित्यनुवादो नावकल्पते। यदि त्विज्याविकारो भवेत्, तत फलचमससंस्कारोऽवकल्पते। तस्मादिज्याविकार॥ आह। कथं यजिसम्बन्धेऽसति इज्याविकारो भविष्यतीति। उच्यते। अस्ति यजिसम्बन्धः। कथमिति। यदि राजन्यं वा वैश्यं वा याजयेद् न्यग्रोधस्तिभीः सम्पिष्य तमस्मै भक्षं प्रयच्छेद्, याजयितुमिति गम्यते। भक्षसम्बन्धे हि न पूर्वमुत्तरेण सम्बध्यते। यदि सोमं भक्षणेन संस्कर्तुमिच्छेन्न्यग्रोधस्तिभीः संस्कुर्यादिति। तस्मान्न भक्षणसम्बन्धः। यागो हि प्रकृतोऽस्ति, तेन सह सम्भन्त्स्यते, न दोषो भविष्यति॥ ननु तमस्मै भक्षं प्रयच्छेदिति वचनाद् भक्षसाधनमिति गम्यते, न यागसाधनमिति। भक्षशब्दानन्तर्य्यात्। उच्यते। श्रूयमाणे सम्बन्धे अनर्थकमिति कृत्वा प्रकृतसम्बन्ध इत्युच्यते। कथ तु भक्षसम्बन्ध इति। यद्धि यागद्रव्य भक्षयितव्यं, तच्चोदकेन भवति, तस्माद् भक्षसम्बन्धं लभते, भक्षसम्बन्धेन च यागसम्बन्ध एव लक्ष्यते। यदि तेनेज्यते, ततः स भक्षो भवति। तस्माद् भक्षवचनात् सुतरां तेनेज्यते इति गम्यते। सैषा व्यवधारणकल्पना। तमस्मै भक्षं प्रयच्छेत्, तमस्मै भक्षं कुर्य्यादित्यर्थः। यथा स भक्षो भवति, तथा कुर्य्यादिति। यदि च

तेनेज्यते, ततोऽयं भक्षो भवति । तस्मात् तेन यष्टव्यमिति ॥ ४८ ॥ सि० ॥

होमात् ॥ ४९ ॥

होमविशेषवचनं भवति, यदान्याँश्चमसाञ्जुह्वति अथैतस्य दर्भतरुणकेनोपहत्य जुहोति इति । इज्याविकारे सति दर्भतरुणकेनेति जुहोतौ गुणवचनमवकल्पते । तस्मादपीज्याविकारः ॥ ४९ ॥

चमसैश्च तुल्यकालत्वात् ॥ ५० ॥

यदान्यांश्चमसानुन्नयन्ति, अथैनं चमसमुन्नयन्तीति । इज्याविकारे सति उन्नयनदर्शनं युज्यते, न भक्षविकारे । तस्मादपीज्याविकारः ॥ ५० ॥

लिङ्गदर्शनाच्च ॥ ५१ ॥

इतश्च पश्याम, इज्याविकार इति । कुतः । लिङ्गदर्शनात् । किं लिङ्गं भवति । सोमप्रतिषेधानुवादः । तमस्मै भक्षं प्रयच्छेद्, न सोमभमाति । इज्याविकारे सति सोमो न भक्ष्यते । तस्मात् पश्याम इज्याविकार इति ॥ ५१ ॥ ॥ हेतु० ॥ फलचमसस्य इज्याविकारताऽधिकरणम् ॥ १९ ॥

अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥

अस्ति राजसूये दशपेयः, तत्र श्रूयते । शतं ब्राह्मणाः सोमान् भक्षयन्ति, दशदशैकैकचमसमनुप्रसर्पन्तीति । अत्र राजन्यचमसे सन्देहः । किं तं राजन्या अनुप्रसर्पेयुः, उत ब्राह्मणा इति । किं प्राप्तम् । राजन्या इति । कथम् । दशदशैकैकं चमसमनुप्रसर्पेयुरिति अनुप्रसर्पतां सङ्ख्या विधीयते । एकस्यां राजन्यजातौ दशसङ्ख्या विधीयते । राजन्यजातिः सैव । तेन तं दश राजन्या अनुप्रसर्पेयुः । एवं शतं ब्राह्मणा राजन्याश्च । तेषु शतशब्दोऽनुवादः । अनुवादसरूपश्च, शतं भक्षयन्तीति । तस्माद् राजन्या राजन्यचमसमनुप्रसर्पेयुरिति । केचिदाहुः । ब्राह्मणराजन्यानामेकस्मिँश्चमसे भक्षणं विरुद्ध्यते इति न स दोषः । न हि सोमेनोच्छिष्टा भवन्तीति श्रूयते ॥ ५२ ॥ ॥ पूर्व० ॥

ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

ब्राह्मणा वा राजन्यचमसमनुप्रसर्पेयुः । कथम् । शतं ब्राह्मणाः सोमं भक्षयन्तीति विधिः श्रुत्या ब्राह्मणगतामेव सङ्ख्यामाह । तस्मात्

शतं ब्राह्मणाः । तेषां भक्षणार्थमनुप्रसर्पनामेकैकस्मिँश्चमसे दशदशोपदिश्यन्ते । तस्माद् ब्राह्मणशतस्य दश ब्राह्मणा राजन्यचमसमनुप्रसर्पेयुरिति ॥५३॥ ॥ सिद्धान्त ॥ ब्राह्मणानामेव राजन्यचमसाऽनुप्रसर्पणाधिकरणम् ॥२०॥ इति श्रीशबरस्वामिकृते मीमांसाभाष्ये तृतीयस्याध्यायस्य पञ्चम पाद समाप्तः ॥ ३ ॥ ५ ॥

अथ तृतीये अध्याये षष्ठः पादः ॥ ३ ॥ ६ ॥

## सर्वार्थमप्रकरणात् ॥ १ ॥

अनारभ्य किञ्चिदुच्यते । यस्य खादिर स्रुवो भवति स छन्दसामेव रसेनावद्यति । सरसा अस्य आहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्येवमादि । तत्र सन्देहः । किं, खादिरता स्रुवे, पालाशता जुह्वां, प्रकृतौ निविशते ? उत प्रकृतौ विकृतौ चेति । किं प्राप्तम् ॥ सर्वार्थम् अप्रकरणात् ॥ प्रकृतिविकृत्यर्थमेवञ्जातीयकम् । कुत । अप्रकरणात् । न कस्यचित् प्रकरणे श्रूयन्ते । तानि वाक्येन सर्वत्र भवेयुरिति ॥ १ ॥ ॥ पूर्व० ॥

## प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥

प्रकृतौ वा निविशेरन्ननारभ्याधीतानि पात्राणि । कुत । अद्विरुक्तत्वात् । एवमद्विरुक्तं भविष्यतीति । द्विरुक्ततायां को दोषः । असम्भव इति ब्रूमः । यद्धि प्रकृतौ विकृतौ च भवति अस्ति तत् प्रकृतौ । प्रकृतौ चेदस्ति, चोदकेनैव विकृतिं प्राप्नोति । ततो नानारभ्यविधिमाकाङ्क्षति । तस्मादनाकाङ्क्षितत्वादनारभ्य विधिर्न तत्र विदधाति । तेन ब्रूम । प्रकृत्यर्थं एवेति ॥ २ ॥ ॥ सि० ॥

## तद्वर्जन्तु वचनप्राप्ते ॥ ३ ॥

अप्रकरणात् प्रकृतिविकृत्यर्थमेवेत्युच्यते । यत्तु, चोदकेन प्राप्नोतीति । अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । तस्मादनारभ्यविधिवर्जं चोदकः प्रापयिष्यति । अनारभ्यविधिवाक्येन प्रत्यक्षेण स्रुवे खादिरता, चोदकवाक्येन आनुमानिकेन विकृतौ । आनुमानिकाच्च प्रत्यक्षं बलवत् । तस्मात् प्रकृतिविकृत्यर्थोऽनारभ्यविधि ॥ ३ ॥

## दर्शनादिति चेत् ॥ ४ ॥

यदि अनारभ्य विधिश्चोदकाद् बलीयान्, अनारभ्यविधिना प्रा-

तेन चोदकमाकाङ्क्षति। निराकाङ्क्षे वैकृते कर्म्मणि चोदको नैव प्राप्नोति। तत्र प्रयाजादीनां दर्शनं नैवोपपद्येत। दृश्यन्ते च प्रयाजादयः क्वचित्, प्रयाजे प्रयाजे कृष्णलं जुहोतीति। अथ चोदको बलीयाँस्तत एतद्दर्शनमुपपद्यते। तस्मात् प्रकृत्यर्थोऽनारभ्यविधिः ॥ ४ ॥ आ० ॥

## न चोदनैकार्थ्यात् ॥ ५ ॥

न प्रकृत्यर्थः, सर्वार्थ इति ब्रूमः। अप्रकरणे समाम्नानात्। यदुक्तम्, अनारभ्य विधिना निराकाङ्क्षस्य न चोदक इति। तन्नोपपद्यते। न हि अनारभ्य विधिश्चोदनां निराकाङ्क्षीकरोति। प्राप्ते हि चोदके न स्रुवे खादिरता अनारभ्यविधिना शक्या विधातुम्। असति चोदकेऽनारभ्यविधिरपि नास्ति। न चानारभ्य विधिः स्रुवं प्रापयति, तस्य च खादिरताम्। कुतः॥ चोदनैकार्थ्यात् ॥ एकार्था हि चोदना, यस्य खादिरः स्रुवो भवतीति। न चात्र स्रुव खादिरता चोभयं विधीयते। स्रुवस्य सतः खादिरतामेष शब्द आह। स च चोदकेन प्राप्त। तस्मादस्ति चोदकः। स हि अनारभ्य विधिवाक्यस्य प्रत्यक्षत्वात् तं वर्जयित्वा अन्यं प्रापयति। तस्मात् प्रकृतिविकृत्यर्थोऽनारभ्य विधिः ॥ ५ ॥ ॥ आ० नि० ॥

## उत्पत्तिरिति चेत् ॥ ६ ॥

इति चेत् पश्यसि, उत्पत्तिरेषां प्रकृतिविधिभिस्तुल्या, प्रकृतावङ्गानि सङ्क्षेपेण विस्तारेण चोद्यन्ते। पञ्च प्रयाजान् यजतीति सङ्क्षेपेण। समिधो यजतीत्येवमादिना विस्तरेण। इहापि यस्य खादिरः स्रुवो भवति इत्येवमादिर्विस्तार, यस्यैवंरूपः स्रुव इति सङ्क्षेपः। एवं रूप प्रकृतौ विधिर्दृष्ट, अयमप्येवंरूपः। तस्मात् प्राकृत इति सामान्यतो दृष्टानुमानम्। तस्मात् प्रकृत्यर्थोऽनारभ्यविधिरिति ॥ ६ ॥ ॥ आ० ॥

## न तुल्यत्वात् ॥ ७ ॥

नैतदेवम्। न हि एवञ्जातीयकं सामान्यतो दृष्टं साधकं भवति। केवलमत्र प्राकृतविधिसारूप्यं, न तु प्रकृतावेतद् भवतीति प्रमाणमस्ति। अपि च विकृतावपि सङ्क्षेपविस्ताराभ्यामङ्गानि विधीयन्ते। तिस्र आहुतीर्जुहोतीति सङ्क्षेप। आमनमस्यामनस्य देवा इति विस्तार। अतो वैकृतैरप्यनारभ्यविधयस्तुल्याः। तस्मादयमहेतु प्रकृतिनिवेशस्य ॥ ७ ॥

**चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थः ॥ ८ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । न सर्वार्थोऽनारभ्यविधिः । प्रकृत्यर्थः स इति ब्रूमः । कुतः । चोदनार्थकार्त्स्न्यात् । कृत्स्नं चोदकः प्रापयति, नानारभ्य विधिना वैकृतमपूर्वं निराकाङ्क्षम् । पात्राणां हि तद्वाक्येन, न यागानाम् । यागाश्चोदनालिङ्गसंयोगात् प्रकृतिमपेक्षन्ते, तया सहैकवाक्यतां यान्ति । प्राकृताश्च ताञ्छक्नुवन्ति निराकाङ्क्षीकर्त्तुं, नाऽनारभ्यविधयः । तस्मादवश्यं चोदक उत्पादयितव्यः । स चेदुत्पाद्यते, नार्थोऽनारभ्यविधिना । न चासौ प्रकरणादीनामभावात् प्रवर्त्तमानोऽपि वैकृतेन यागेन सम्बध्यते । तस्माद् वैकृतेन कर्म्मणा नानारभ्यविधिः सम्बध्यते । तस्य वैकृतस्य मुख्यस्यानारभ्यविधिर्वाक्यशेषः । प्रकृतौ वेति प्रतिषेधे चोदकसामर्थ्यात् प्राकृते वाक्यशेषे प्राप्ते अनारभ्य विधिर्न भविष्यति । तस्माद् अनारभ्य विधिः प्रकृत्यर्थः ॥ ८ ॥ ॥ आ० नि० ॥ स्रुवादिषु खादिरतादिविधेः प्रकृतिगामिताधिकरणम् ॥ १ ॥

**प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ९ ॥**

अनारभ्य किञ्चित् सामिधेनीनां परिमाणमाम्नातं, सप्तदश सामिधेनीरनुब्रूयादिति । तत्र सन्देहः । किमेतत् प्रकृतौ, उत विकृताविति । किं प्राप्तम् । पूर्वेण न्यायेन प्रकृताविति प्राप्तम् । प्रकृतौ च पाञ्चदश्यमाम्नातं, तेन विकल्प इति ॥ एवं प्राप्ते ब्रूमः । विकृतावेवञ्जातीयको विधिः स्यात् । कस्मात् । प्रकृते पाञ्चदश्येन निराकाङ्क्षत्वात् । ननु विकल्पो भविष्यतीत्युक्तम् । प्रकरणविशेषात् पाञ्चदश्येन न विकल्पः । विषमशासनात् । विकृतौ तु आनुमानिकं पाञ्चदश्यं बाधित्वा, अनारभ्यविधिवाक्येन प्रत्यक्षेण साप्तदश्यं निवक्ष्यते । अद्भिरुक्तं चैतत् प्रयोगवचनमुपसंहरिष्यति । तस्मादेवञ्जातीयकं विकृत्यर्थम् ॥ ९ ॥ ॥ सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताऽधिकरणम् ॥ २ ॥

**नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ १० ॥**

दर्शपूर्णमासयोराम्नातं, गोदोहनेन पशुकामस्य प्रणयेदिति । तथा, अग्नीषोमीये पशौ श्रूयते यूपं प्रकृत्य, बैल्वो ब्रह्मवर्चसकामेन कर्त्तव्य इति । एवञ्जातीयकेषु सन्देहः । किं प्रकृतौ निवेशो, विकृतौ

वेति । किं प्राप्तम् । विकृताविति । प्रकृतिरन्येन पात्रेण यूपेन च निराकाङ्क्षा । एवं प्राप्ते ब्रूमः । प्रकृतौ नैमित्तिकं निविशते । निमित्तसंयोगेन विधानात् । खादिरपालाशरौहितका अविशेषेणोक्ताः, चमसश्च । गोदोहनं बैल्वश्च विशेषविहितौ । विशेषविधिना चाऽविशेषविधिर्बाध्यते । प्रकरणं सामान्य, निमित्तसंयोगो विशेष. । सामान्येन यत् प्राप्नोति तत् परोक्षं लक्षणया । यत्तु विशेषेण, तत् प्रत्यक्षं श्रुत्या । श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात् । तस्मात् प्रकृतावेव स्यात् ॥ १० ॥ गोदोहनादीनां प्रकृतिगामिताधिकरणम् ॥ ३ ॥

## इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥

सन्ति पवमानेष्टय, अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये इति । तासां प्रकरणं समाम्नातं ब्राह्मणो वसन्ते अग्निमादधीतेति । तत्र सन्देह । किम् अग्न्याधेयं पवमानेष्ट्यर्थम्, उत नेति । किं प्राप्तम् । इष्ट्यर्थमिति । कुत ॥ प्रकरणात् ॥ तासां प्रकरणे श्रूयते । अतस्तदर्थम् ॥ ११ ॥ ॥ पूर्व० ॥

## न वा तासां तदर्थत्वात् ॥ १२ ॥

पवमानेष्टयो हि अग्न्यर्थाः । यदि अग्निरिष्ट्यर्थः स्यात्, ततस्तदर्थमग्न्याधेयमिष्टीनामुपकुर्यात् । निष्फलास्तु इष्टयः । तदर्थमग्न्याधेयमपि निष्फलं स्यात् । कथं पुनरग्न्यर्थता पवमानेष्टीनाम् ? । निष्प्रयोजनत्वादेव, प्रयोजनवत्त्वाच्चाग्नीनाम् । भावयितव्या अपि यो भूतानामग्नीनामर्थेन क्रियेरन् । तस्मादग्न्याधेयं न पवमानेष्ट्यर्थम् ॥ १२ ॥ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ १३ ॥

लिङ्ग दर्शयति, यथा अग्न्यर्था पवमानेष्टय इति । किं लिङ्गम् । जीर्य्यति वा एष आहित पशुर्यदग्नि, तदेतान्येव अग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत् । तेन वा एष न जीर्यति । तेनैनं पुनर्नवं करोति तत्र सूक्ष्ममिति ॥ १३ ॥ ॥ युक्ति ॥ आधानस्य पवमानेष्ट्यऽनङ्गताधिकरणम् ॥ ४ ॥

## तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १४ ॥

तत्रैतदाधानं किं प्रकृत्यर्थम्, उत सर्वकर्मार्थमिति सन्देहः । किं प्राप्तम् । उच्यते तत् प्रकृत्यर्थम । कथम् । यथाऽन्ये अनारभ्य-

धादाः प्रकृत्यर्थौ, तेनैव हेतुना ॥ १४ ॥ ॥ पूर्व० ॥

सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ॥ १५ ॥

सर्वकर्मार्थं वाऽऽधानम् कोऽर्थः । सर्वकर्मार्थं यदग्निद्रव्यं, तदर्थमाधानं, न प्रकृत्यर्थम् । न प्रकृतीः प्रकृत्य श्रूयते । न च श्रुत्यादयोऽस्य सन्ति, येऽङ्गभावमुपपादयन्ति । अन्येष्वनारभ्य वादेष्वन्यतो निर्ज्ञातेऽङ्गभावे ततो विचारः । किं प्रकृतेरङ्गभूतानि विकृतेरिति । तस्मात्तेषु युक्तम् । इह त्वङ्गभावे न कारणमस्ति । तस्मादग्निप्रयुक्तमाधानं, न कर्म्मप्रयुक्तम् । सर्वकर्मार्था अग्नय इति सर्वार्थमित्युच्यते ॥ अपि चास्य स्वत कालो विधीयते, स न विधातव्यः । यदा ज्योतिष्टोमस्य प्रयोगस्तदा इदं कर्त्तव्यम् । तदा च वसन्तः । एवं यदा दर्शपूर्णमासयोः प्रयोग., तदा कर्त्तव्यम् । तदा पौर्णमासी अमावास्या वा । अप्रकृत्यर्थन्तु न प्रकृतिप्रयोगे क्रियेत । तत्र कालवचनं युक्तम् । तस्मान्न प्रकृत्यर्थम् ॥ १५ ॥ आधानस्य सर्वार्थताऽधिकरणम् ॥ ५ ॥

तासामग्निः प्रकृतितः प्रयाजवत् स्यात् ॥ १६ ॥

सन्ति पवमानेष्टयः, अग्नये पवमानायेत्येवमाद्याः । तत्र सन्देहः । किं पवमानेष्टिसंस्कृतेऽग्नौ पवमानेष्टयः कर्त्तव्याः, उत नेति । किं प्राप्तम् । तासां खलु पवमानेष्टीनां पवमानेष्टिसंस्कृतोऽग्निः प्रकृतितः स्यात् । कुतः । चोदकसामर्थ्यात्, प्रयाजवत् । यथा तासु प्रयाजा भवन्ति चोदकेन, एवं पवमानेष्टिसंस्कृता अग्नयोऽपि भवेयुः ॥ १६ ॥ ॥ पूर्व० ॥

न वा तासां तदर्थत्वात् ॥ १७ ॥

न वा इष्टिसंस्कारोऽग्नीनां पवमानेष्टिषु स्यात् । कस्मात् । तासां तदर्थत्वात् । ता. पवमानेष्टयोऽग्निसंस्कारार्था इत्युक्तम् । यच्च नामाङ्गभूतं तच्चोदकेन गृह्यते । अग्निप्रयुक्तश्च पवमानेष्टिसंस्कारो, न दर्शपूर्णमासप्रयुक्त । तेन न चोदकेनाकृष्यते । अपिच पवमानेष्टय इष्टिसंस्कारवर्जितां प्रकृतिमपेक्षन्ते । अविहितत्वात्तस्यामवस्थायां पवमानेष्टीनाम् ॥ १७ ॥ ॥ सिद्धान्तः ॥ पवमानेष्टीनामसंस्कृतेऽग्नौ कर्तव्यताधिकरणम् ॥ ६ ॥

तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥

ज्योतिष्टोमे, पशुः अग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति, तथा सवनीयोऽनुबन्ध्यश्च । सन्ति च पशुधर्म्माः—उपाकरणम्, उपानयनम्, अक्ष्णया बन्धो, यूपे नियोजनं, संज्ञपनं, विशसनमित्येवमादय । ते, किं सर्वेषामग्नीषोमीयसवनीयानुबन्ध्यानामुत अग्नीषोमीयस्य सवनीयस्य वा, उताग्नीषोमीयस्यैवेति । किं प्राप्तम् । अविशेषात् सर्वपशूनाम् । कथमविशेषः । ज्योतिष्टोमप्रकरणे सर्वे पशव समाम्नाताः । तत्प्रकरणापन्नत्वात् सर्वे पशुधर्म्माः सम्बद्ध्यन्ते । न चैषां तत्र कश्चिद्विशेष ॥ एवं प्राप्ते ब्रूमः । सवनीयस्यैते धर्म्मा भवेयु । तुल्यः सर्वेषां पशुविधिः स्याद्, यदि प्रकरणे विशेषो न भवेत् । भवति तु प्रकरणे विशेषः । सवनीयानां प्रकरणे पशुधर्म्माः समाम्नाता । आग्नेय पशुरग्निष्टोमे आलभ्यः । आग्नेयो हि अग्निष्टोम । ऐन्द्राग्नः पशुरुक्थ्ये आलभ्यः । ऐन्द्राग्नानि हि उक्थ्यानि । ऐन्द्रो वृष्णिः षोडशिनि आलभ्य । ऐन्द्रो वै वृष्णि ऐन्द्र षोडशी । सारस्वती मेषी अतिरात्रे आलभ्या । वाग् वै सरस्वती इति प्रकृत्य पशुधर्म्मा आम्नाताः । तस्मात् सवनीयस्य प्रकरणाद् भवितुमर्हति ॥ १८ ॥

## स्थानाच्च पूर्वस्य ॥ १९ ॥

यदुक्तं, प्रकरणात् सवनीयार्था इति । एतद् गृह्णीमः । क्रमात्त्वग्नीषोमीयस्य । तस्य हि क्रमे औपवसथ्ये अहनि समाम्नातम् । तस्माद् द्वयोरपीति ॥ १९ ॥ ॥ पूर्व० ॥

## श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥

एकेषां शाखिनां श्वः सवनीयानामाम्नानम् । तदपेक्ष्य इयमेषां गुणार्था पुनः श्रुतिः । क पुनर्गुणो, यदर्थैषा श्रुतिः । उच्यते । पशून् सङ्कीर्त्य, यथा वै मत्स्योऽविदितो जनमवधुनुते, एव वा एते अप्रज्ञायमाना जनमवधुन्वते इति एषामविज्ञाने दोषमभिधाय, एभिः कथं सवनानि पशुमन्तीति प्रश्नरूपकेण वपाप्रचारो गुणो विधीयते । तदर्थैषा श्रुतिः । वपाप्रचारेणैकवाक्यत्वात् । किमतो यद्येवम् । न सवनीयानां प्रकरणेन पशुधर्म्माः, क्रमादग्नीषोमीयार्था एवेति । किं पुनस्तत् । श्व आम्नानम् । आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति ॥ २० ॥ ॥ सि० ॥

## तेनोत्कृष्टस्य कालविधिरिति चेत् ॥ २१ ॥

नैतदस्ति । क्रमादग्नीषोमीयार्था एवेति । प्रकरणात् सवनीयाऽर्था । पूर्वेद्युरेवाम्नानं विधानार्थम् । आश्विनवाक्यं कालगुणविधानाऽर्थम् । कथम् । तेन वपाप्रचारेण उत्कृष्टस्य काल एव विधीयते प्रात सवने वपाप्रचारे चोदिते सति पश्वालम्भोऽपि तत्रैव प्राप्नोति । तत्र कालानियमे प्राप्ते आश्विनं ग्रहं गृहीत्वेति कालमात्रं विधीयते । त्रिवृता यूपं परिवीयोपाकरोतीत्यनुवाद । इतरथा हि परिव्याणस्य कालो विधीयेत, उपाकरणस्य च । तत्रानेकगुणविधानाद् वाक्यं भिद्येत । तस्मात् सवनीयार्थाः पशुधर्म्मा इति ॥ २१ ॥ ॥ आ० ॥

## नैकदेशत्वात् ॥ २२ ॥

नैतदेवम्, अग्नीषोमीयार्था एवैते क्रमात् । आश्विनकालं हि आम्नानं विधानार्थम् । गुणार्थे एतस्मिन् वाक्यं भिद्येत, न विधानाऽर्थे । न हि वपाप्रचारेणोत्कृष्टस्य कालविधि· सम्भवति । एकदेशो हि वपाद्रव्यम् । तेन सन्निपातिनो वपासंस्काराद्उत्कर्षेणोपाकरणम् ॥ ॥ २२ ॥ ॥ आ० नि० ॥

## अर्थेनेति चेत् ॥ २३ ॥

आह । अर्थेन तर्हि उत्कृष्टस्य कालो विधीयते । मुष्टिना पिधाय वपोद्धरणमासीत आ वपाहोमादिति श्रूयते । पूर्वेद्युर्वपोद्धरणं मुष्टिना पिधाय न शक्नुयादेतावन्तं कालमासीनेन अवस्थातुम् । अवश्यमाहारविहारादयस्तेन कर्त्तव्या इति ॥ २३ ॥ ॥ आ० ॥

## न श्रुतिविप्रतिषेधात् ॥ २४ ॥

नैतदेवं, श्रुतिविप्रतिषेधो भवेदेवम् । न च श्रुतिविप्रतिषेधः । तृणमुष्टिना पर्णमुष्टिना वा पिधायिष्यते । ननु आस्ते इत्युपवेशने भवति । नाऽवश्यमुपवेशने एव, औदासीन्येऽपि दृश्यते । तद् यथा–गृहाणि परिगृह्य आस्ते, क्षेत्राणि परिगृह्य आस्ते इत्यनुपवेशनेऽपि भवति व्यापारनिवृत्तौ । इहापि तृणमुष्टिना पर्णमुष्टिना वा पिधाय आ वपाहोमादुदासिष्यते । तस्मादाश्विनकालमाम्नानं विधानार्थे, न सवनीयानां प्रकरणे पशुधर्म्माः । तस्मान्न सवनीयार्था. ॥ २४ ॥

## स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥

नास्ति सवनीयानां प्रकरणमित्येवं सति पूर्वेणैव हेतुना स्थानेन

पूर्वस्याग्नीषोमीयस्य भवितुमर्हति । संस्कारोऽयं पशुयागप्रयुक्तः, न ज्योतिष्टोमप्रयुक्तः । ज्योतिष्टोमप्रयुक्तत्वे न विशेषः पशूनां स्यात् । पशुयागा अपि हि धर्म्मान् प्रयोक्तुमपूर्वत्वात् समर्था प्रकरणवन्तश्च । तस्मात् क्रमादग्नीषोमीयधर्म्मा इति ॥ २५ ॥ ॥ उपसंहारः ॥

## लिङ्गदर्शनाच्च ॥ २६ ॥

इतश्च पश्यामोऽग्नीषोमीयार्था: पशुधर्म्मा इति । कुतः । लिङ्गदर्शनात् । लिङ्गमस्मिन् अर्थे भवति । वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने इति पशुपुरोडाशं दर्शयति । इतरथा समानविधानेषु सर्वेषु पशुष्वग्नीषोमयोर्देवतयोः संस्कारार्थः सन् पुरोडाशः सामर्थ्यादग्नीषोमीयस्य भवेद्, न सवनीयस्य । तयोर्देवतयोरभावात् । दर्शयति च । तस्मादग्नीषोमीयार्था इति ॥२६॥ ॥ हेतुः ॥

## अचोदना गुणार्थेन ॥ २७ ॥

इदं पदोत्तरं सूत्रम् । आह । ननु छिद्रापिधानार्थः पशुपुरोडाशः । नेति ब्रूमः । अचोदना गुणार्थेन । तस्य छिद्रापिधानार्थेन न चोदना । अर्थवादः स इत्युक्तम् । तस्माद्देवतासंस्कारार्थः । तस्मादग्नीषोमीयार्थत्वे, सवनीये पुरोडाशस्य दर्शनमुपपद्यते, न साधारण्ये । तस्मादग्नीषोमीयार्था पशुधर्म्मा इति ॥ २७ ॥ ॥ उपाकरणादीनामग्नीषोमीयधर्मताधिकरणम् ॥ ७ ॥

## दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥

अस्ति सायं दोहः । तथा अस्ति प्रातर्दोहः । सन्ति तु दोहधर्माः शाखाहरणं, गवां प्रस्थापनं, प्रस्तावनं, गोदोहनमित्येवमादयः । ते किं सायं दोहार्थाः, उत उभयार्था इति । किं तावत् प्राप्तम् । दोहयोस्तयोरसंयुक्तः धर्म्मैः शृतं भवेत् । कस्मात् । सायं दोहस्य हि क्रमे औपवसथ्येऽहनि शाखाहरणादीन् समामनन्ति । तस्मिन्नेवाहनि सायं दोहः तस्मात् क्रमात् सायं दोहार्था दोहधर्म्मा इति ॥ २८ ॥ ॥ पूर्व० ॥

## प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥

प्रकरणं हि साधारणम् । यथैव दध्नः, एवं पयसः । क्रमाच्च प्रकरणं बलवत्तरम् । तस्मादुभयार्था दोहधर्माः । अपिच, न सायं दोहस्य पूर्वेद्युराम्नानम् । क्व तर्हि ? उत्तरेद्युः । कथम् । एवमामनन्ति— ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यामिति । अमावास्यायां

हि उभयं साङ्गं चोद्यते । स एष सायं दोहोऽर्थात् पूर्वेद्युरनुष्ठीयते । स्वभाव एष दध्नो, यत् पूर्वेद्युरुपक्रान्तमपरेद्युरभिनिर्वर्त्तते । तस्मात् सायं दोहस्य क्रमे आम्नाता इत्येतदेव तावन्नास्ति । अत उभयार्था दोहधर्मा इति ॥ २९ ॥ ॥ सिद्धान्तः ॥ शाखाहरणादीनामुभयदोहधर्मताधिकरणम् ॥ ८ ॥

## तद्वत् सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्रैन्द्रवायवाद्या ग्रहाः प्रातःसवने दश आम्नाताः । तत्र धर्मा श्रूयन्ते, उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवाः । दशापवित्रेण ग्रहं सम्मार्ष्टीति । सन्त्यपरे माध्यन्दिने सवने, अपरे तृतीयसवने ग्रहाः । तेषु माध्यन्दिनीयेषु तार्त्तीयेषु च सवनेषु सन्देहः । किं सर्वेषु ग्रहधर्माः कर्त्तव्याः, उत प्रातःसवने ये ग्रहास्तेष्विति । किं प्राप्तम् । प्रातःसवनग्रहेषु भवेयुः । तेषां क्रमे समाम्नानाद्, नेतरेषाम् ॥ एवं प्राप्ते ब्रूमः । सवनान्तरे प्रातःसवनान्माध्यन्दिने तृतीयसवने च ग्रहाम्नानं तद्वदेव भवितुमर्हति । सर्वेषां हि तुल्यं प्रकरणम् । यत्रैते धर्माः समाम्नाताः वाक्येन ग्रहमात्रस्य विधीयन्ते । क्रमाच्च वाक्यप्रकरणं बलीयसी । तस्मात् सर्वार्था ग्रहधर्मा इति ॥ ३० ॥ ॥ सादनादीनां सवनत्रयधर्मताधिकरणम् ॥ ९ ॥

## रशना च लिङ्गदर्शनात् ॥ ३१ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र रशना श्रूयते, रशनाधर्माश्च । त्रिवृद् भवति दर्भमयी भवति प्रपिष्टानां कर्त्तव्या चेति । तत्र सन्देहः । किमेते धर्मा अग्नीषोमीयरशनायाः सवनीयरशनायाश्च साधारणा ? उताग्नीषोमीयरशनाया एवेति । किं प्राप्तम् । प्रकरणादग्नीषोमीयरशनाया इति ॥ एवं प्राप्ते ब्रूमः । उभयो साधारणा इति । कुत ॥

लिङ्गदर्शनात् । लिङ्गं भवति । एवमाह, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति सवनीयपरिव्याणे रशनां दर्शयति । सा यदि साधारणी, तत एतद्दर्शनमवकल्पते । यद्यग्नीषोमीयाया, ततोऽप्राकृतात् सवनीयपरिव्याणान्निवर्त्तेत । सवनीये च परिव्याणान्तरमप्राकृत यत्र त्रिवृत्त्वं दृश्यते । कथम् स-

वै आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति । तत्र यदि न साधारणी रशना, वाससा परिव्याणं प्राप्नोति । रशनां तु दर्शयति । तस्मात् साधारणी रशना, तत्साधारण्याच्च तद्धर्मा अपि साधारणाः । तदेतल्लिङ्गाद् रशनासाधारण्यम् । कोऽत्र खलु न्यायः ? इति । उच्यते । प्रकरणादग्नीषोमीयस्य, वाक्याद् यूपमात्रस्येति ॥ ॥ ३१ ॥ रशनात्रिवृत्त्वादीनां पशुधर्मताधिकरणम् ॥ १० ॥

आराच्छिष्टमसंयुक्तमितरैः सन्निधानात् ॥ ३२ ॥

दूराद् यच्छिष्यते ज्योतिष्टोमस्य, यथौपसदानुवाक्याकाण्डे अंश्वदाभ्यौ । तत्र सन्देहः । किं ज्योतिष्टोमसमाम्नाता ग्रहधर्माः कर्त्तव्याः ? उत नेति । किं प्राप्तम् । न कर्त्तव्याः । असन्निधानात् । यथा, पयसा मैत्रावरुणं श्रीणातीति वचनान्मैत्रावरुणस्यैव श्रपणं, न सर्वेषाम् । एवमिदमपि धर्म्मजातं प्रकरणस्थानामेव, न सर्वेषामिति ॥ ३२ ॥ ॥ पूर्व० ॥

संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ ३३॥

संयुक्तं वा धर्मैरेवञ्जातीयकं स्यादप्रकरणस्थमपि । कुतः । यतः प्रकरणाद् वाक्यं बलीयः । नन्वन्यत्र क्रियमाणा ज्योतिष्टोमस्य नोपकुर्युः । उच्यते । उपकरिष्यन्ति । अंश्वदाभ्ययोस्तदर्थत्वाज्ज्योतिष्टोमार्थत्वाच्छेषोऽयं ग्रहधर्म्मः । ग्रहनिमित्तो ज्योतिष्टोमस्योपकारकः । यावान् ग्रहो ज्योतिष्टोमस्योपकरोति, तस्य सर्वस्य भवितुमर्हति । तस्माद् अंश्वदाभ्ययोरपि ग्रहधर्मा कर्त्तव्या इति॥३३॥सि०॥

निर्देशाद् व्यवतिष्ठेत ॥ ३४ ॥

यदुक्तम्, यथा मैत्रावरुणं पयसा श्रीणातीति । तद् युक्तम् । श्रपणे वचनात् प्रकरणं बाधित्वा व्यवस्थानम् । इह तु विपरीतम् । तत्र सर्वेषु ग्रहेषु प्रकरणं, विशिष्टेषु वाक्यम् । इह तु सर्वेषु ग्रहेषु वाक्यं, विशिष्टेषु प्रकरणम् । तस्मादप्रकरणस्थस्यापि धर्मा इति ॥ ॥ ३४ ॥ ॥ आ० नि० ॥ अंश्वदाभ्ययोरपि सादनादिधर्मवत्त्वाऽधिकरणम् ॥ ११ ॥

अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३५ ॥

अनारभ्याग्निमुच्यते । चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधातीति । सन्ति तु प्रकरणे इष्टकाधर्माः । अखण्डा-

अक्ष्णलामिष्टकां कुर्य्यादिति । तथा, भस्मना इष्टका संयुज्यादिति। तत्र सन्देहः । किमप्रकरणे समाम्नातानामिमे धर्माः कर्त्तव्याः ? उत नेति । किं प्राप्तम् । न कर्त्तव्याः । कुतः । असन्निधानादिति प्राप्ते । उच्यते । अग्न्यङ्गमेवञ्जातीयकं तद्वदेव स्याद्, यद्वद् ग्रहाः । प्रकरणाद्धि वाक्यं बलवत् । अमूषां चेष्टकानामग्न्यर्थत्वात् ॥ ३५ ॥ चित्रिण्यादीष्टकानामग्न्यङ्गताधिकरणम् ॥ १२ ॥

नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३६ ॥

ज्योतिष्टोमे श्रूयते– स यदि राजन्यं वा वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमामिति । ज्योतिष्टोमे सन्ति सोमधर्मा, मानम् उपावहरणं क्रयोऽभिषव इत्येवमादयः । तत्र सन्देह । किं समानविधाना इमे धर्मा सोमस्य फलचमसस्य च ? उत सोमधर्मा , फलचमसस्य तु तद्विकारत्वादिति । गुणकामानां प्रवृत्तिरप्रवृत्तिर्वा प्रयोजनमधिकरणचिन्तायाः ॥

किं प्राप्तम् । समानविधाना. प्रकरणाविभागादिति प्राप्ते । उच्यते । नैमित्तिकमेवञ्जातीयकमसमानविधानं स्यात् । कुतः । अतुल्यत्वात् । अतुल्यः सोमेन फलचमस. । सोमो नित्यवदाम्नातः । फलचमसो नैमित्तिकः । किमतः । यद्येवं, धर्म्मा अपि नित्यवदाम्नाताः न शक्या अनित्यवत् कर्त्तुम् । यदि साधारणाः । तत्र अनारभ्योऽर्थो विधीयेत । अपि च नैमित्तिक फलचमसः । स सोमधर्म्मान् गृह्णाति । तत्र धर्म्माः साधारणा सन्तो द्विरुक्ता इत्युच्येरन् । तस्माद् असमानविधाना. ॥ ३६ ॥ मानोपावहरणादीनां सोममात्रधर्मताऽधिकरणम् ॥ १३ ॥

प्रतिनिधिश्च तद्वत् ॥ ३७ ॥

अस्ति प्रतिनिधिः, श्रुते द्रव्येऽपचरति । यथा व्रीहिष्वपचरत्सु नीवाराः । तत्र सन्देह । किं नीवारा समानविधाना ? उत नेति । किं प्राप्तम् ॥ प्रतिनिधिश्च तद्वत् ॥ यथा नैमित्तिकं नित्येन असमानविधानम्, एवं प्रतिनिधिरतुल्यत्वात् । का अतुल्यता । व्रीहीणां विहिताः, न नीवाराणाम् । इयम् अतुल्यता । व्रीहीणां विहिताः, नीवाराणाम् अर्थापत्त्या भवन्ति ॥ ३७ ॥ ॥ पूर्व० ॥

तद्वत् प्रयोजनैकत्वात् ॥ ३८ ॥

नैतदस्ति, असमानविधानः प्रतिनिधिरिति । तद्वत् स्याद्, यद्वत् श्रुत । न प्रकृतिविकारभावः । कुत । व्रीहित्वं हि व्रीहिधर्म्माणां व्रीहिद्रव्यको निमित्त, न च, व्रीहित्वस्य, स्थाने नीवारत्वं भवतीति श्रूयते । तस्मान्न प्रकृतिविकारभावः । कथं तर्हि नीवारेषु धर्म्मा भवन्तीति । उच्यते । या व्रीहित्वेन परिच्छिन्ना व्रीहिव्यक्तय , नीवारेषु ताः सन्ति । तासामर्थेन ते धर्म्मा क्रियन्ते । तासां च व्यक्तीनामन्यासां च व्रीहिगतानां तुल्य एष विधिः । का तुल्यना । उभयेऽपि व्रीहित्वलक्षिता इति । तस्मात् समानविधाना इति ॥ ३८ ॥ ॥ सि० ॥

अशास्त्रलक्षणत्वाच्च ॥ ३९ ॥

इतश्च न प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभाव । कुतः ? । अर्थलक्षणत्वात् । अर्थाद्धि प्रतिनिधि क्रियते, न चाऽर्थेनैतदवगन्तुं शक्यते । व्रीहित्वस्य स्थाने नीवारत्वं भवतीति । तस्मान्न प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभावो भवतीति ॥ ३९ ॥ ॥ युक्तिः ॥ प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

नियमार्था गुणश्रुतिः ॥ ४० ॥

अथ यः श्रुत प्रतिनिधि । तत्र किं सामानविध्यमुत नेति । यथा, यदि सोमं न विन्देत पूतीकानभिषुणुयादिति । असामानविध्यमिति ब्रूम. । अश्रुताद्धयेतद्विपरीतम् । एवं प्राप्ते, उच्यते ॥ नियमार्था गुणश्रुतिः ॥ अत्राप्यर्थलक्षण एव प्रतिनिधि । सोमे अविद्यमाने सोमसदृशं द्रव्यं प्राप्तम् तत्र सुसदृशे द्रव्ये प्राप्ते ईषत् सदृशं नियम्यते । अन्यस्मिन् प्रतिनिधातव्येऽन्यत् प्रतिनिधीयते श्रुतस्य स्थाने । न यागद्रव्यत्वेन ॥ ४० ॥ ॥ श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाऽधिकरणम् ॥ १५ ॥

संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥४१॥

आस्त ज्योतिष्टोम । तत्र संस्था समाम्नाता । अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति । तत्र दीक्षणीयादयो धर्म्मा । तेषु सन्देह । किं सर्वसंस्थ ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्म्मा उक्ताः, उताग्निष्टोमसंस्थामभिप्रेत्येति । किं प्राप्तम् । सर्वसंस्थासु

समानं विधानम् । कुतः । प्रकरणाविशेषात् । नास्ति प्रकरणे विशेषो येन ज्ञायेत अग्निष्टोमसंस्थं प्रकृत्य इति । तस्मात् समानविधाना संस्था इति ॥ ४१ ॥ ॥ पूर्व० ॥

व्यपदेशश्च तुल्यवत् ॥ ४२ ॥

तुल्य इव प्रकरणे व्यपदेशो भवति । यदि अग्निष्टोमो जुहोति, यदि उक्थ्यः परिधिमनक्ति, यदि अतिरात्र एतदेव यजुर्जपन् हविर्धानं प्रतिपद्येतेति सर्वावस्थस्य विशेषवचनात् अवगम्यते । यदपि सामान्यं, तदपि सर्वावस्थस्यैवेति. यदि हि न समानं विधानम्, अग्निष्टोमसंस्थस्यैव स्यात् । नेह अग्निष्टोम सङ्कीर्त्तनम् । असङ्कीर्त्त्यमानेऽपि धर्म्मसम्बन्धो भवतीति, सर्वावस्थस्य कीर्त्तनात् सर्वावस्थप्रकरणमित्यवगच्छाम ॥ अपि च श्रूयते, आग्नेयमजमग्निष्टोमे आलभेत, ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं वृष्णिं तृतीयं षोडशिनीति । द्वितीयस्य तृतीयस्य च दर्शनं सामानाधिकरण्ये घटते । उक्थ्ये हि द्विनिमित्ते स्त , अग्निष्टोमस्तोत्रमुक्थ्यस्तोत्रञ्चेति । तत्र द्वौ नैमित्तिकौ आग्नेयः पशु , ऐन्द्राग्नश्चेति । तेन द्वितीयदर्शनं तत्र युज्यते । एवं षोडशिनि अतिरात्रे च प्रकृतिविकारभावे तु प्रत्यक्षश्रुतैरैन्द्राग्नादिभिरतिदेशेन प्राप्त आग्नेयो बाध्यते । तत्र द्वितीयादिदर्शनं नोपपद्येत । भवति च । तस्मात् सर्वावस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्म्मा इति ॥ ४२ ॥ ॥ युक्ति ॥

विकारास्तु कामसंयोगे नित्यस्य समत्वात् ॥ ४३ ॥

नैतदस्ति, समानविधाना इति । किं तर्हि उक्थ्यादय संस्थाविकारभूता. स्यु । अग्निष्टोमसंस्थमुरीकृत्य दीक्षणीयादयो धर्म्मा समाम्नाता । कुत । उक्थ्यादीनां कामसंयोगेन श्रवणात् । पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्य्यकाम स्तुवीत, अतिरात्रेण प्रजाकामं याजयेदिति । काम्यो गुण श्रूयमाणो नित्यमर्थं विकृत्य निविशते । कथम् । गुणादेवञ्जातीयकं काम्यं फलनिर्वृत्ति. । पशुकाम उक्थ्यं गृह्णीयाद्, न ज्योतिष्टोमकाम उक्थ्यग्रहणकामो वा यथा पशवो भवन्ति, तथा गृह्णीयादित्यर्थ. । कथमिति । तत्रावश्यमितिकर्त्तव्यता अपेक्षितव्या, सन्निधानान्नित्यस्येतिकर्त्तव्यतयेति गम्यते । कथं पुनरियमितिकर्त्तव्यता, सा नित्यस्येत्यवधार्य्यते, न पुनरस्यैव

काम्यस्य, साधारणी वेति । उच्यते । यत्र यत्र गुणे कामो भवति तत्र तत्र क्रियायां साध्यमानायां, नान्यथा । सा तत्रेतिकर्त्तव्यता या अन्तिकमुपनिपतति, सा साधनस्य वा साध्यस्य वेति सन्दिह्यमाना साध्यस्य भवितुमर्हति, नासौ साध्यस्याभवन्ती साधनेन सम्बद्ध्यते । एवं हि स इतिकर्त्तव्यताविशेषश्चोद्यते । अनेन साधने साधकमुपकुर्यादिति । न चास्ति स प्रकारो, येनासाध्यमानायां क्रियायां तन साधक कुतो भवेत् । तस्मात् साधकस्यापि इतिकर्त्तव्यताविशेषमभ्युपगच्छता, साध्यस्यापीत्येतदभ्युपगमनीयम् । साध्यश्च ज्योतिष्टोमः, साधिकाः संस्थाः । तस्माज्ज्योतिष्टोमस्य तावत् सा इतिकर्त्तव्यतेति सिद्धम् ॥ अथ कस्मान्न साधारणी । नित्यवदाम्नानात्, यदैव ज्योतिष्टोम , तदैव दीक्षा । यदा तु ज्योतिष्टोमे पशुकामस्तदोक्थ्यसंस्थाः । सर्वदा ज्योतिष्टोमे धर्माः कर्त्तव्याः, एकदा उक्थ्यसंस्था । तत्र सर्वदा ज्योतिष्टोमस्य धर्माः कर्त्तव्याः । ते चोक्थ्यादिसंस्थस्य अर्थेनेति पूर्वमुत्तरेण विरुद्ध्यते, यदि सर्वदा नोक्थ्यादीनामर्थेन । अथोक्थ्यादीनामर्थेन न सर्वदा, उभयं विप्रतिषिद्धम् । तस्मान्न साधारणी । नित्यवदाम्नान च यदि अनित्यस्य स्यात्, नित्यवदाम्नानं तद् अनित्य क्रियेत । तत्र नित्यवदाम्नानं बाध्येत । तस्मान्नित्यसंस्थस्य ज्योतिष्टोमस्य, न काम्यस्योक्थ्यादिसंस्थस्येति ॥ ४३ ॥ ॥ सि० ॥

अपि वा द्विरुक्तत्वात् प्रकृतेर्भविष्यन्तीति ॥ ४४ ॥

नन्वग्निष्टोमसंस्थापि काम्या श्रूयते । द्वे हि तत्र आम्नाते । एकं नित्यवद् एकं काम्यम् । तत्र द्वयोर्वाक्ययोः सामर्थ्यान्नित्य एव सकामो भविष्यति । नित्यताविघातो नास्तीत्यग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य दीक्षणीयादयो धर्मा भविष्यन्तीति ॥ ४४ ॥ ॥ युक्तिः ॥

वचनात्तु समुच्चयः ॥ ४५ ॥

अथ यदुक्तं, द्वितीयतृतीयदर्शनं समानविधित्वेऽवकल्पते, नान्यथेति । वचनं तद् भविष्यति, न दर्शनम् । ऐन्द्राग्न उक्थ्ये द्वितीयो विधीयते । तथैन्द्र षोडशिनि तृतीय ॥ ४५ ॥ ॥ आ० नि० ॥

प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४६ ॥

इतश्च पश्यामः प्रकृतिविकारभाव इति । कुत. । प्रतिषेधात् पूर्व-

लिङ्गानाम् । यदि अग्निष्टोमो जुहोति, यदि उक्थ्यः परिधिमनक्ति, न जुहोतीति होमाभावदर्शनं न स्यात् । प्राप्ते निमित्ते वचनप्रामाण्यात् सामान्यविधेः ॥ ४६ ॥ ॥ युक्ति. ॥

## गुणविशेषादेकस्य व्यपदेशः ॥ ४७ ॥

अथ यदुक्तं, व्यपदेश इति । एकस्यैवाधिकृतस्य यथोक्तेन न्यायेन अयमनाधिकृतेन गुणेन व्यपदेशः । अग्निष्टोमग्रहणञ्चानुवाद इति ॥ ४७ ॥ ॥ आ० नि० ॥ दीक्षणीयादिधर्माणामग्निष्टोमाङ्गताधिकरणम् ॥ १६ ॥ इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये तृतीयस्याऽध्यायस्य षष्ठः पादः ॥ ३ ॥ ६ ॥

अथ तृतीये अध्याये सप्तमः पादः ॥ ३ ॥ ७ ॥

## प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥

स्तो दर्शपूर्णमासौ, तत्र बर्हिर्बर्हिर्धर्माश्च, तथा वेदिर्वेदिधर्माश्च । तत्र सन्देहः । किं बर्हिरादयो बर्हिरादिधर्माश्च प्रधानस्य, उत अङ्गप्रधानानामिति । किं तावत् प्राप्तम् ॥ प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ प्रधानस्य एवञ्जातीयका धर्माः । कस्मात् ? । प्रकरणविशेषात् । प्रधानानां हि प्रकरणं, नाङ्गानाम् । प्रकरणेन चैषां सम्बन्धः । तस्मात् प्रधानस्य ॥ १ ॥ ॥ पूर्वपक्षः ॥

## सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥

सर्वेषां वाऽङ्गप्रधानानामिमे धर्माः । नात्र शेषत्वं प्रकरणाद् भवति । उपकारलक्षणं हि तत् । यद् यस्योपकरोति, तत्तस्य शेषभूतम् । सर्वेषां चाङ्गप्रधानानामिमे धर्मा उपकुर्वन्ति । कथमवगम्यते ? । वाक्यात् । वेद्यां हवींषि आसादयतीति हविर्मात्रं वाक्याद् गम्यते । प्रधानहवींषि प्रकरणात् । वाक्यं च प्रकरणाद् बलीयः । तस्माद् बर्हिषि हवींष्यासादयतीति ॥ आह । यदि प्रकरणं वाक्येन बाध्यते, लौकेऽपि बर्हिषामिमे धर्मा उक्ता भवन्ति । तत्र को दोषः । मन्त्र धर्मा कर्त्तव्या प्राप्नुवन्ति । उच्यते । प्रकरणाद्दर्शपूर्णमासयोरुपकारका एवेति गम्यते । तस्माल्लौकिकेषु न कर्त्तव्या । एवं चेद्, अङ्गान्यपि न दर्शपूर्णमासशब्दकानि । तस्मात्तेष्वपि न प्राप्नुवन्ति । उच्यते । यद्यप्यङ्गानि न दर्शपूर्णमासशब्दकानि, दर्शपूर्णमासयोरुप-

कारकाणि । एषु क्रियमाणा धर्मा दर्शपूर्णमासयोरुपकरिष्यन्ति । तस्मादङ्गप्रधानेषु कर्त्तव्या इति ॥ २ ॥ ॥ सिद्धान्तः ॥

**आरादपीति चेत् ॥ ३ ॥**

पिण्डपितृयज्ञेऽपि बर्हिर्धर्मैर्युज्येत । सोऽपि दाते बर्हिषि वर्त्तते । तस्य चाराद् बर्हिषाऽस्ति प्रयोजनम् । तदप्याराच्छिष्टधर्मवत् स्यात् ॥ ३ ॥ ॥ आशङ्का ॥

**न तद् वाक्यं हि तदर्थत्वात् ॥ ४ ॥**

न तस्य बर्हिरेतैर्धर्मैर्धर्मवत् । वाक्यं हि एकं दर्शपूर्णमासाभ्यां सह धर्माणाम् । तेन दर्शपूर्णमासयोरुपकारका धर्माः, यद् दर्शपूर्णमासार्थं, तत्र प्राप्नुवन्ति, नान्यत्र । तस्मात् पिण्डपितृयज्ञबर्हिषो न भविष्यन्ति ॥ ४ ॥ ॥ आ० नि० ॥

**लिङ्गदर्शनाच्च ॥ ५ ॥**

लिङ्गं भवति । एवमाह । स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीत्यभिघारणस्य आज्यभागार्थतां दर्शयति ॥ ५ ॥ ॥ हेतु ॥ बर्हिरादीनां दर्शपौर्णमासतदङ्गोभयाङ्गताऽधिकरणम् ॥ १ ॥

**फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥**

ज्योतिष्टोमे केशश्मश्रुणोर्वपनं पयोव्रतानि तपश्चाम्नातानि । तेषु सन्देहः । किमङ्गप्रधानार्थानि, उत प्रधानार्थानि ? । किं तावत् प्राप्तम् । अङ्गप्रधानार्थानीति पूर्वेण न्यायेन प्राप्तम् ॥ एवं प्राप्ते ब्रूमः । स्वामियुक्तमेतत् । तस्मात् प्रधानस्य । कस्मात् । फलसंयोगात् । पुरुषस्य यागेन अयं सम्बन्धः । यागोऽपूर्वस्य दाता । पुरुषः प्रतिग्रहीता । नन्वपरोऽप्यस्ति सम्बन्धः । यागो निर्वर्त्त्यः, पुरुषोऽभिनिर्वर्त्तक इति । फलेन तु सम्बन्धो भविष्यतीत्येवमर्थं पुरुषः श्रूयते न हि यागः स साधयति । यागः सत्तया सम्भन्त्स्यत इति । किमिति तर्हि निर्वर्त्त्यते फलं भवतीति । संस्काराश्च संस्कुर्वन्तीत्युच्यन्ते । यत् तस्य संस्कर्त्तव्यस्य प्रयोजनं, तत्र सामर्थ्यं जनयन्तीति । फलं च ग्रहीतुं पुरुषस्य प्रयोजनं, न यागमात्रं निर्वर्त्तयितुम् । तस्माद् ये पुरुषसंस्कारास्ते पुरुषं फलप्रतिग्रहणसमर्थं कुर्वन्ति, न यागनिर्वृत्तिसमर्थम् । आह । यदि याग-

निर्वृत्तौ न सामर्थ्यं जनयन्ति, कथं तर्हि यागधर्मास्ते भवन्ति। उच्यते। यागस्य स्वार्थं साधयतः साहाय्ये वर्त्तन्ते। कश्च तस्य स्वार्थः। यदस्य कर्त्ता फलेन सम्बध्यते। तस्मात् स्वामिसंस्काराः प्रधानार्था इति॥ ६॥ ॥ स्वामिसंस्काराणां प्रधानार्थताधिकरणम्॥ २॥

## चिकीर्षया च संयोगात्॥ ७॥

ज्योतिष्टोमे श्रूयते, षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन इयति शक्ष्यामहे इति। तत्र सन्देहः। किमेषा वेदिरङ्गप्रधानार्था, उत प्रधानार्था? इति। किं तावत् प्राप्तम्। चिकीर्षया च संयोगात् प्रधानार्थेति। का चिकीर्षा। इयति शक्ष्यामहे इति। यच्चिकीर्षितं, तस्यार्थेनैषा श्रूयते, शक्ष्यामह अस्यां कर्त्तुमिति। प्रधानं च तस्य चिकीर्षितं, नाङ्गानि। प्रधानं हि फलवद्, नाङ्गानि। आह। यदि अङ्गानि न चिकीर्षितानि, किमर्थं क्रियन्ते इति। उच्यते। अचिकीर्षितान्यप्यङ्गानि क्रियन्ते, यद्यपि तानि न चिकीर्ष्यन्ते, तथापि तैरचिकीर्षितैरन्यच्चिकीर्ष्यते। तस्मात् तानि क्रियन्ते इति। यच्चिकीर्षितं तस्य वेदिः। तस्मात् प्रधानार्थेति। स्थित तावदपर्यवसितम्॥ ७॥ ॥ सौमिकवेद्यादीनामङ्गप्रधानोभयाङ्गताऽधिकरणस्य पूर्वपक्षः॥

## तथाभिधानेन॥ ८॥

स्तो दर्शपूर्णमासौ। तत्र श्रूयते, चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्यामिति। तत्र सन्देहः। किमङ्गप्रधानार्थमभिमर्शनमुत प्रधानार्थमिति। किं तावत् प्राप्तम्। प्रधानार्थमिति। प्रधाननामधेयश्चैतत् पौर्णमासी अमावास्येति च। तस्मात् प्रधानस्याभिमर्शनमिति॥ ८॥ ॥ पूर्व०॥

## तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात्॥९॥

स्थितादुत्तरम्॥ यदुक्तं प्रधानं चिकीर्षितं नाङ्गानि। तस्मात् प्रधानस्य वेदिरिति। तन्न। तद्युक्ते फलश्रुतिः। साङ्गात् फल श्रूयते। तस्मात् साङ्गं चिकीर्षितम्। यद्यप्यङ्गानि न चिकीर्षितानि, तथापि वेद्यां कर्त्तव्यानि। अन्यथा न साङ्गं वेद्यां कृतं भवति॥ ९॥ निरुक्ताऽधिकरणसिद्धान्तः॥ ३॥

## गुणाभिधानात् सर्वार्थमभिधानम्॥ १०॥

यदुक्तं, प्रधाननामत्वात् पौर्णमासीशब्दस्यामावास्याशब्दस्य च, प्रधानहविषामभिमर्शनमिति । नैतदेवम् । अङ्गहविषामप्यभिमर्शनं स्यात् । कुतः । गुणाभिधानात् । गुणोऽभिमर्शनमित्यभिधानं भवति । कतमत् तदभिधानम् । यद् गुणोऽभिमर्शनमिति ब्रूते । पौर्णमासीममावास्यामिति च द्वितीयान्तं पौर्णमास्यर्थमभिमर्शनं कर्त्तव्यम्, अमावास्यार्थमभिमर्शनं कर्त्तव्यमिति । अतो यत्र यत्र क्रियमाणं पौर्णमास्याममावास्यायां वोपकरोति, तत्र तत्र कर्त्तव्यम् । यद् यत् पौर्णमास्याममावास्यायां वाभिसम्बध्यते, साक्षात्, प्रणाड्या वा, तत्र तत्र क्रियमाणं तयोरुपकरोति । तस्मात् प्रधानहविषामङ्गहविषां च कर्त्तव्यमिति ॥ १० ॥ ॥ सि० ॥ अभिमर्शनस्याङ्गप्रधानोभयाङ्गताधिकरणम् ॥ ४ ॥

## दीक्षादक्षिणं तु वचनात् प्रधानस्य ॥ ११ ॥

ज्योतिष्टोमे दीक्षाः श्रूयन्ते । तिस्रो दीक्षा इति । तथा दक्षिणाः श्रूयन्ते । तस्य द्वादशशतं दक्षिणा इति । तत्र सन्देहः । किं दीक्षादक्षिणमङ्गप्रधानार्थमुत प्रधानानामिति । किं प्राप्तम् । पुरुषाणामङ्गप्रधानार्थत्वाद्दीक्षादक्षिणस्याङ्गप्रधानार्थतेति । एवं प्राप्ते ब्रूमः । दीक्षादक्षिणं प्रधानस्य । कुतः । वचनात् । वचनं हि भवति । दीक्षाः सोमस्य, दक्षिणा सोमस्येति । न हि वचनस्यातिभारो नाम कश्चित् । तस्माद्दीक्षादक्षिणं वचनात् सोमस्येति ॥ ११ ॥

## निवृत्तिदर्शनाच्च ॥ १२ ॥

निवृत्तिं दीक्षाणां दर्शयति । कथम् । अध्वर्य्यो यत् पशुना अयाक्षीरथ कास्य दीक्षेति, यत् षड्ढोतारं जुहोति सास्य दीक्षेति । असत्यामपि दीक्षायां वचनं भवति । तस्माद्, अङ्गानां दीक्षादक्षिणमिति ॥ १२ ॥ युक्ति ॥ दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥ ५॥

## तथा यूपस्य वेदिः ॥ १३ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र यूपं प्रकृत्य श्रूयते, वज्रो वै यूपो यदन्तर्वेदि मिनुयात्तन्निर्दहेत्, यद् बहिर्वेद्यनवरुद्धः स्यादर्द्धमन्तर्वेदि मिनोति अर्द्धं बहिर्वेदि अवरुद्धो भवति, न निर्दहतीति ॥ तत्र सन्देहः । किमन्तर्वेदि इति यूपाङ्गभावेन वेदिरुपादिश्यते ? उत अर्द्धम् अन्तर्वेदि

अर्द्धं बहिर्वेदीति देशलक्षणार्थम् उच्यते ? इति । कथं यूपाऽङ्गभावेन कथं वा देशलक्षणेति । यदि यूपाङ्गस्य वेद्यन्तरस्य च सम्बन्धो विवक्षितः, एवं वेदिसम्बद्धो यूपः कर्त्तव्यः, ततो यूपाङ्गभावेन । अथ यस्मिन् देशे मीयमानस्यार्द्धं वेद्यभ्यन्तरे, अर्द्धं च बहिः, स देश उपदिश्यते । ततो देशलक्षणा ॥ किं प्राप्तम् । तथा यूपस्य वेदिर्यथा दीक्षादक्षिणं प्रधानस्य, तथा यूपस्य वेदिः, तथा यूपो मातव्य, तथा मीयमानस्यार्द्धं वेद्यभ्यन्तरे भवति । एवं वेदिश्रुतिरप्यनुग्रहीष्यते, इतरथा वेदिशब्दो लक्षयेद्देशम् । श्रुतिलक्षणाविषये श्रुतिर्न्याय्या, न लक्षणा । तस्माद् यूपाङ्गभावेन वेदिर्निर्दिश्यते ॥१३॥ पूर्व० ॥

## देशमात्रं वाऽशिष्येणैकवाक्यत्वात् ॥ १४ ॥

देशमात्रं वा वेदिशब्देन लक्ष्यते, न वेदियूपाङ्गम् । कुत ? ॥ अशिष्येणैकवाक्यत्वात् ॥ अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्येतेनैकवाक्यता या, सा शासितव्येन, यदि देशलक्षणा । अथ यूपाऽङ्गभावेन वेद्या निर्देशः, ततो न शासितव्यो बहिर्वेदिनिर्देशो भवति । वेद्यां यूपस्याङ्गभावेनोपदिश्यमानायाम्, अर्द्धं बहिर्वेदि इत्येतदुच्चार्यमाणं न कस्मिँश्चिदुपकारे वर्त्तते ॥ अथ बहिर्वेदिदेशमपि यूपाऽङ्गभावेनोपदिशेद्वाक्यम्भिद्येत । तस्माद् यूपाङ्गभावेन वेद्या निर्देशे बहिर्वेदिशब्दः सर्वथा न शासितव्यः । यदि तु देशलक्षणा, ततो विशिष्टे देशे लक्ष्यमाणेऽवश्यवक्तव्यो बहिर्वेदिशब्दो भवति । अनुच्यमाने वेद्यभ्यन्तरे यस्मिन् कस्मिंश्च प्रदेशे यूप इति गम्यते । अथ पुनर्बहिर्वेदिशब्दे श्रूयमाणे, यतरस्मिन् देशे मीयमानस्यार्द्धमन्तर्वेदि अर्द्धं बहिर्वेदि, स देशो लक्षयितुमिष्टो भवति । स च बर्हिर्वेदिशब्देन विना न शक्यते लक्षयितुमित्यवश्यं शासितव्यो भवति । तस्माद्देशलक्षणेति ॥ १४ ॥ सि० ॥ अन्तर्वेदेर्यूपानङ्गताधिकरणम् ॥६॥

## सामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात् सामिधेनीनाम् ॥ १५ ॥

ज्योतिष्टोमे श्रूयते, उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुरिति । हविर्द्धानयोर्यस्मिन् हविर्द्धाने सुन्वन्ति, तत् सामिधेनीभिः सम्बन्धयेदित्यर्थः । तत्र सन्देह । किं सामीधेनीनामङ्गभावेन हविर्द्धानं चोद्यते, हविर्द्धानविशिष्टाः सामिधेन्योऽनुवक्तव्याः ? उत हवि-

र्धानेनामूषामनूच्यमानानां देशो लक्ष्यते ? इति । किं तावत् प्राप्तम् । सामिधेनीनामङ्गत्वेन हविर्द्धानं चोद्यते । यस्मिन् हविर्द्धाने सुन्वन्ति, तत् सामिधेनीभिः सम्बन्धयेदिति । तेन हविर्द्धानसम्बद्धाः सामिधेन्योऽनुवक्तव्या इति वचनात् सामिधेन्यङ्गभावे सति हविर्द्धानश्रुतिरनुग्रहीष्यते । इतरथा देशं लक्षयेदिति । तस्मात् सामिधेन्यङ्गं हविर्द्धानम् ॥ १५ ॥ ॥ पूर्वपक्षः ॥

## देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६ ॥

देशलक्षणार्थं वा एतदुच्यते । यस्मिन् सुन्वन्ति, तस्मिन् देशे सामिधेन्योऽनुवक्तव्या इति । प्रत्यक्षं हि अर्थकर्म सोमस्य तेन क्रियते । दक्षिणे हविर्द्धाने सोममासादयतीति, सोमासादनार्थं तावदेतदुपादेयम् । सामिधेन्योऽपि अग्निसमिन्धनार्थमुपादेया इति । इह त्वेतावदुच्यते, यस्य हविर्द्धानस्य समीपे सुन्वन्ति तत्सम्बद्धा सामिधेन्योऽपि अग्निसमिन्धनार्थमुपादेया इति । तत्र न ज्ञायते, किं सामिधेन्यः सम्बद्धाः हविर्धानस्योपकुर्वन्ति ? किं हविर्धानं सामिधेनीनामिति । तदुच्यते । सामिधेन्यस्तावद्धविर्द्धानस्य नोपकुर्वन्ति । न हि तावद् विधीयन्ते, सामिधेन्योऽनुवक्तव्या इति । किं तर्हि ? हविर्धानविशेषसम्बन्धस्तासां विधीयते । न चाविहितमङ्गं भवति । नाप्येवं विधीयते, हविर्द्धानमासामनुच्यमानानामुपादातव्यं सम्बन्धयितुमिति । कथं तर्हि ? हविर्धानविशेषसम्बन्धः सामिधेनीनां श्रूयते । हविर्धानसम्बन्धो विधीयते । न च सामिधेनीसम्बन्धो हविर्द्धानस्य प्राप्तः, यो विशेषार्थमनूद्येत । केन तर्हि हविर्धानस्य सम्बन्धः । प्रत्यक्षं हि अर्थकर्म सोमस्य, न तु सामिधेनीकर्म प्रत्यक्षं हविर्धानस्य । भवति तु देशस्य सामिधेनीसम्बन्धः । अपरेण वेदिमिति होतुर्देशो लक्षितः । स उत्तरस्य दक्षिणस्य वा हविर्द्धानस्य समासन्नः । तत्र यत् सुन्वन्ति, तदन्वाहुरित्युपपद्यते वचनम् । तस्माद्देशलक्षणार्थं हविर्धानग्रहणम् ॥

अथैवमभिसम्बन्धः कस्मान्न भवति । यस्मिन् हविर्धाने सुन्वन्ति, तस्य हविर्धानस्य सामिधेनीसम्बन्ध इति । नैवं शक्यम् । एवं ह्यावर्थौ विधातव्यौ भवतः । हविर्धानसम्बन्धो, हविर्धानविशेषसम्ब-

न्धश्च। तत्र वाक्यमभिद्यते। तस्मान्नैवमभिसम्बन्ध इति ॥१६॥ सि०॥

समाख्यानं च तद्वत् ॥ १७ ॥

समाख्यानं च तद्वदेव भवति । यथाऽस्माभिर्न्याय उपदिष्टः सोमार्थे हविर्धानमिति ॥१७॥ ॥ युक्ति. ॥ हविर्धानस्य सामिधेन्यऽनङ्गताधिकरणम् ॥ ७ ॥

शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगे स्यात् ॥ १८ ॥

इह कर्माण्युदाहरणम् । अग्निहोत्रं जुहुयात् स्वर्गकामः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेति। तत्र सन्देहः । किमेतानि कर्माणि स्वयमनुष्ठातव्यानि, उतात्रोत्सर्गमात्रं स्वयं कुर्य्यात्, शेषमन्य. स्वयं वा ? उत शेषमन्य एवेति । किं प्राप्तम् । स्वयं प्रयोगे स्यात् । कुत. । यतः स्वयं प्रयुञ्जानस्य फलं भवति । कथमवगम्यते ॥ तल्लक्षणत्वात् ॥ शब्दोऽस्यार्थस्य लक्षण, स्वयं प्रयुञ्जानस्य फलं भवतीति । कतमः स शब्दः । स्वर्गकामो यजेतेति य स्वर्गं कामयते, स एवोच्यते, यागं कर्त्ता भवन् फलं साधयेदिति । साङ्गे च कर्त्ता भवन् फलं प्राप्नोति । तस्मात् स्वयप्रयोगे स्यात् ॥ १८ ॥

उत्सर्गे तु प्रधानत्वात् शेषकारी प्रधानस्य, तस्मादन्यः स्वयं वा स्यात् ॥ १९ ॥

उत्सर्गे प्राधान्यमस्ति । कथम् । य उत्सर्गं करोति तेन सर्वं कृतं भवति । कथम् । परिक्रय उत्सर्ग । तेन आनताः सर्वं कुर्वन्ति । तस्माद् य. परिक्रयं करोति तेन स्वयमेव सर्वं कृतं भवति । तस्मादुत्सर्गमात्रं स्वयं कुर्य्यात् । शेषमन्यः स्वयं वा ॥ १९ ॥ ॥ पूर्व० ॥

अन्यो वा स्यात् परिक्रयाम्नानाद्विप्रतिषेधात् प्रत्यगात्मनि ॥ २० ॥

शेषस्यान्य एव स्यात् कर्त्ता । कुत. परिक्रयस्याम्नानत्वात् । पुरुषानतिप्रकारेषु बहुषु प्राप्तेषु परिक्रयो नियत । तस्मात् परिक्रयेणानतैः सर्वे पदार्था कर्त्तव्या इति । विप्रतिषिद्धश्चात्मनि परिक्रय । यदि स्वयं कुर्य्याद् अपरिक्रीतेन कृतं स्यात् । तत्र परिक्रयाम्नानान-

र्थक्यम् । अदृष्टार्थो वा प्रतिज्ञायेत । तस्मादन्यैः परिक्रीतैः शेषाः पदार्थाः कर्त्तव्या इति । उत्सर्गे तु स्वयं कुर्वता सर्वं स्वयं कृतं भवति ॥ २० ॥ ॥ सि० ॥ अङ्गानामन्यद्वाराऽनुष्ठानाधिकरणम् ॥ ८ ॥

**तत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥ २१॥**

तत्र तैः परिक्रीतैः कर्त्तव्येष्वनियमेन कर्त्तृपरिमाणं स्यात्।कुतः। अविशेषात् । न कर्त्तृपरिमाणे विशेषः कश्चिदाम्नायते । अर्थेन तत्परिमाणं यावद्भिरसाविति कर्त्तव्यता निर्वर्त्तते, तावतो वृणीते ॥ ॥ २१ ॥ ॥ पूर्व० ॥

**अपि वा श्रुतिभेदात् प्रतिनामधेयं स्युः ॥ २२ ॥**

यावन्ति कर्त्तृनामधेयानि कर्म्माणि श्रूयन्ते, तावन्तो वरीतव्या भिद्यन्ते । तानि च नामधेयश्रवणानि । तान् पुरोऽध्वर्युर्विभजति, प्रतिप्रस्थाता मन्थिनं जुहोति, नेष्टा पत्नीमभ्युदायति, उन्नेता चमसाननुन्नयतीति । तथा प्रस्तोता प्रस्तौति, उद्गाता उद्गायति, प्रतिहर्त्ता प्रतिहरति, सुब्रह्मण्यः सुब्रह्मण्यामाह, होता प्रातरनुवाकमनुब्रूते, मैत्रावरुणः प्रेष्यति, चानुचाह, अच्छावाको यजति, ग्रावस्तुद् ग्राव स्तोत्रीयामन्वाह । एतावद्भि कर्म्मणि प्रयोजनम् । तेन तेऽवश्यमेतानि यथाश्रुतानि कर्त्तुं वरीतव्याः । एतद्व्यतिरिक्तोऽन्यः पदार्थो न विद्यते । योऽपि वाक्येन नोपदिष्ट, स समाख्यया गम्यते । तस्मादेतावतो वृणीत इति ॥ २२ ॥ ॥ सि० ॥

**एकस्य कर्मभेदादिति चेत् ॥ २३ ॥**

एवं चेत् प्रतिज्ञायते, एतावतो वृणीत इति । तन्न । यो यस्तत्कर्म्म करिष्यतीति सङ्कल्प्यते, स स तत्तच्छब्दाभिधेयो भवति । एकोऽपि बहून् पदार्थान् कर्त्तुं बहुभिर्नामधेयैरुच्येत।तस्मादनियमः ॥२३॥आ०॥

**नोत्पत्तौ हि ॥ २४ ॥**

नैतदेवम्, उत्पत्तौ पुरुषाणाम् । उत्पाद्यमानेषु पुरुषेषु नामधेयानि भिद्यन्ते । ब्रह्माणं वृणीते, होतारं वृणीते, उद्गातारं वृणीते, अध्वर्युं वृणीते इत्येवमादि । तस्मात् कर्म्मणि तैरेवन्नामकैः प्रयोजनम् । अवश्य ते वरीतव्याः । तस्माद् एषां वरणे सङ्कीर्त्तनं न विधि । प्रयोजनस्याभावान्नानुवाद । न वेदे तावन्तो वरीतव्या इति ब्रूयात् । अनर्थकमेव स्यात् । शक्नोति चेदं प्रत्याययितुं सङ्ख्याविशेषम् । त-

स्मादू य सङ्ख्याविशेष एषां प्रतीयते तदर्थमेतद्वचनम् । तस्मात् षोडश कर्त्तारो वरीतव्या, सामस्तावत्कर्तृकश्च स्यात् । एव दर्शपूर्णमासयोरपि ॥ २४ ॥ ॥ आ० नि० ॥ परिक्रीतानाम् ऋत्विजां संख्याविशेषनियमाधिकरणम् ॥ ९ ॥

## चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥

सन्ति ज्योतिष्टोमे चमसाध्वर्यवः । चमसाध्वर्यून् वृणीत इति । तेषु सन्देह । किमेषामन्यतमाः, उतैतेभ्योऽन्ये ? इति । किं तावत् प्राप्तम् । एतावतां संकीर्तनादेषामेवान्यतमा इति प्राप्ते, ब्रूम । चमसाध्वर्यवश्चापरं भवेयुस्तेभ्योऽन्ये इति । कुत. । तैर्व्यपदेशात् । तै. परिगणितैरेषा व्यपदेशो भवति । मध्यत कारिणां चमसाध्वर्यवो, होत्रकाणां चमसाध्वर्यव इति ॥ ननु य एव प्रकृतास्त चमसाध्वर्य्यवो भवेयुः । नेति ब्रूम । कुतः ॥ तैर्व्यपदेशात् ॥ मध्यत - कारिणां चमसाध्वर्य्यवो होत्रकाणां चमसाध्वर्य्यव इति । षष्ठी सम्बन्धे सति भवति । ऋत्विग्भिस्ते व्यपदिश्यन्त । ऋत्विजस्तेषां स्वामिनो, न यजमान । यजमानपुरुषेभ्यश्चैतेऽन्य इति नः प्रतिज्ञातम् । न यजमानेन चमसाध्वर्य्यवं कर्तुं वरीतव्या., ऋत्विग्भिस्त वरीतव्या इति । अपिचैषामुत्पत्तिवाक्ये एव भेद । चमसाध्वर्यून् वृणीत इति ॥ २५ ॥ चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥ १० ॥

## उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥

तेष्वेव सन्देह । किमनियमः, एको द्वौ बहवो वा ? उत बहव एवेति । अनियम इति प्राप्ते, उच्यते । बहव इति । कुत ॥ उत्पत्तौ बहुश्रुत. ॥ चमसाध्वर्य्यव इत्येषामुत्पत्तौ बहुश्रुतिर्भवति । तस्माद् बहव इति ॥ २६ ॥ चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ॥ ११ ॥

## दशत्वं लिङ्गदर्शनात् ॥ २७ ॥

ज्योतिष्टोमे चमसाध्वर्यवः । ते च बहव इत्युक्तम् । कियन्तो बहव इति सन्देहे । त्रयो बहुवचनसामर्थ्यादिति प्राप्ते ब्रूम ॥ दशत्वं लिङ्गदर्शनात् ॥ ते दश भवेयु । तथाहि । लिङ्गं ज्योतिष्टोमविकारे दशपेये श्रूयते, दश चमसाध्वर्यवो दश दश एकैकं चमसमनुसर्पन्तीति । एतस्मात् कारणाद्दशपेयो भवतीति ब्रुवन् दश चमसाऽध्वर्यून् दर्शयति । यदि त्रयो भवेयुरेतद्दर्शनं नोपपद्यत ।

तस्मात् त्रीनतीत्यैषा सङ्ख्या । यदि च दश न भवेयुर्नोपपद्येतैतद्दर्शनम् । तस्माद् भवन्ति दश । दश चैषां स्वामिनः । तस्मात् प्रयोजनभावाद्दशसङ्ख्योपादीयते । तस्यां चोपादीयमानायामपरापि सङ्ख्याऽनुगृह्यते । तेनापि दश भवेयुः ॥ २७ ॥ ॥ चमसाध्वर्यूणां दशसख्यानियमाधिकरणम् ॥ १२ ॥

शमिता च शब्दभेदात् ॥ २८ ॥

अस्ति शमिता, शमितारमुपनयीतेति । स किं सङ्कीर्त्तितानामन्यतमः, उत अन्यस्तेभ्य इति। किं प्राप्तम् । तेषां वरणे सङ्कीर्त्तनात्, तेषामन्यतम इति प्राप्ते, उच्यते ॥ शमिता च शब्दभेदात् ॥ शब्दो भिद्यते । एवसंज्ञकेनैतत् कर्म कर्त्तव्यमिति । तस्मादेवंसंज्ञक उत्पादयितव्यः । अस्य सङ्कीर्त्तनात् सङ्ख्याविवृद्धिर्गम्यते । तस्मादन्य शमिता स्यात् अपि च, क्लोमा चोर्द्धं वैकर्त्तनं च शमितुः । तद् ब्राह्मणाय दद्याद् यद्यब्राह्मणः स्यादिति अब्राह्मणाशङ्का भवति । सा ऋत्विजि नोपपद्यते ॥ २८ ॥ ॥ पूर्व० ॥

प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥

सत्यं सङ्ख्याविवृद्धिर्गम्यते, न तूत्पद्यमानेषु । या त्वनुत्पत्तिस्तेषु गम्यते, तत्रैकस्य कर्मभेदादित्येवमप्यवकल्पते यत्तूक्तम्, अब्राह्मणाशङ्का भवतीति । यजमानाभिप्राया सा, यदि अब्राह्मणो यजमानः स्यादिति। ननु यदि अब्राह्मणः स्यादिति प्रकृत शमिता सम्बद्ध्यते। उच्यते । शमयतीति शमिता । यौगिक एष शब्दः प्रकृतेष्वप्यवकल्पते । शामित्रमप्याध्वर्यवे समाम्नानादध्वर्युणा कर्त्तव्यम् । तस्मात्, शमनादध्वर्युः शमिता । एव सति अप्रकृतो यजमानः सम्बध्यते ॥ २९ ॥ ॥ सि० ॥ शमितुरपृथक्त्वाधिकरणम् ॥ १३ ॥

उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥

ज्योतिष्टोमे सन्त्युपगा नाम, ते शब्दभेदात् सङ्ख्याविवृद्धिं प्रत्याययन्तीत्यऽध्वर्य्वादिभ्योऽन्ये इति प्राप्ते ब्रूमः । तेषामेव केचित् स्युरिति । कस्मात् । उत्पत्तौ परिगणनाद् यौगिकत्वाच्च शब्दस्य । लिङ्गमिदं भवति । नाध्वर्युरुपगायेदिति । यद्यभ्योऽन्ये भवेयुर्नाध्वर्युं प्रतिषेधेत् । अप्राप्तत्वात् । यतस्तु प्रतिषेधति, अतोऽवगच्छामः— उत्पत्तौ सङ्कीर्त्तितानामेवान्यतम इति॥३०॥ उपगाऽपृथक्त्वाऽधिकरणम् ॥१४॥

## विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ ३१ ॥

अस्ति सोमविक्रयी । तत्र सन्देह । स किमध्वर्य्यादीनामन्यतम, उतैभ्योऽन्य इति । किं प्राप्तम् । तेषां सङ्कीर्त्तनात्तेषामन्यतम इति प्राप्ते ब्रूमः । विक्रयी त्वन्य स्यादिति । विक्रयो न चोद्यते, क्रयश्चोद्यते । तत्र अर्थाद्विक्रय । ज्योतिष्टोमस्य च पदार्थान् कर्त्तुमध्वर्य्वादय उत्पाद्यन्ते, न तु विक्रयो ज्योतिष्टोमस्य श्रूयते । तस्मान्नाध्वर्य्वादीनामन्यतम इति ॥ ३१ ॥ ॥ सोमविक्रेतु. पृथक्त्वाधिकरणम् ॥ १५ ॥

## कर्म्मकार्य्यात् सर्वेषां ऋत्विक्त्वमविशेषात् ॥ ३२ ॥

ये एते पुरुषा ज्योतिष्टोमस्य श्रूयन्ते, ते किं सर्वे एते ऋत्विजः, उत केचिदेषामिति । किं प्राप्तम् । सर्वे । कुत । कर्म्मकार्य्यात् । सर्वे यागस्य साधनं कुर्वन्ति, तस्मात् सर्वे क्रतौ यजन्ति । ये च क्रतौ यजन्ति ते ऋत्विज । न कश्चिद्विशेष आश्रीयते— इमे एव क्रतौ यजन्तीति ऋत्विजः, इमे नेति । तस्मात् सर्वेषाम् ऋत्विक्त्वम् ॥ ननु परिसङ्ख्या श्रूयते, सौम्यस्याध्वरस्य यज्ञक्रतो. सप्तदश ऋत्विज इति । उच्यते । परिसङ्ख्यायां बहवो दोषा. सन्तीत्यवयुत्यवादोऽयं भविष्यति ॥ ३२ ॥ ॥ पूर्व० ॥

## न वा परिसङ्ख्यानात् ॥ ३३ ॥

न वा सर्वे । कस्मात् ? ॥ परिसङ्ख्यानात् ॥ एवं हि श्रूयते, सौम्यस्य अध्वरस्य यज्ञक्रतो. सप्तदश ऋत्विज इति । स एष न विधि । बहुतराणां प्राप्तत्वात् । नानुवाद । प्रयोजनाभावात् । न चेत् परिसङ्ख्यापि, आनर्थक्यमेव स्यात् । ननु परिसङ्ख्यायां स्वार्थहानं परार्थकल्पना प्राप्तबाधश्च । उच्यते । स्वार्थहानमदोष प्राप्तत्वात् । परार्थकल्पना च प्रत्ययात् । बहूनाम् ऋत्विक्त्वे ज्ञाते पुनः सप्तदशर्त्विज इत्युच्यते । सप्तदशभिर्ऋत्विक्शब्दस्य सम्बन्धः पुनः प्रकाश्यते, अधिकैश्च न प्रकाश्यते । तत्र विज्ञायते एतत्— ऋत्विक्शब्दस्य पुरुषैः सम्बन्धे पुन. प्रकाश्यमाने सप्तदशभ्योऽभ्यधिका वर्जिता इति गम्यते तत्र किं सप्तदशभि सम्बन्धो विवक्षित, किं वा अधिकानां वर्जनमिति । सप्तदशसम्बन्धस्याप्रयोजकत्वादधिकानां वर्जनं विवक्षितमिति गम्यते । आह । ननु प्रतिपद्यमानेष्व-

ऽभ्यधिकेषु प्रतिषेधो न प्राप्नोति । न हि ते क्रतौ न यजन्ति । न वा क्रतौ यजन्तो न ऋत्विजः स्युः । उच्यते । सत्यम् । न, प्रतिषेधाद् ऋत्विक्शब्देन न सम्बद्ध्यते, किन्तु प्रतिषेधसामर्थ्याद्धि ऋत्विक्कार्ये न भवन्ति । किं पुनर्ऋत्विक्कार्यम् । ऋत्विज उपवसन्तीति, ऋत्विजो वृणीते, ऋत्विग्भ्यो दक्षिणा ददातीति । आह । यद्यृत्विजां कार्यं, कथं तत् केषाञ्चिदृत्विक्शब्दकानां न स्यात् । उच्यते । एवं तर्हि द्विविधोऽयं ऋत्विक्शब्दः— क्रतुयजननिमित्तो, वरणभरणनिमित्तश्च । तत्र यागनिमित्तस्य ग्रहणमनर्थकम्। तस्माद् वरणभरणनिमित्तो गृह्यते इति ॥ आह । नन्वितरेतराश्रयमेवं भवति । ये ऋत्विजस्ते वरीतव्याः, ये व्रियन्ते ते ऋत्विज इति। तदितरेतराश्रयम्। उच्यते। न हि ऋत्विजो वृणीते इत्ययमर्थ , ऋत्विज सन्तो वरीतव्या इति । कथं तर्हि । वरणेन ऋत्विजः क्रियन्ते इति । एवं द्वितीयानिर्देशो युक्तो भविष्यति । अध्वर्युं वृणीते इत्येवंलक्षणः । दृष्टाऽर्थता च वरणस्य भविष्यति॥कथमात्मेच्छया अध्वर्युर्भवतीति चेत् कश्चिद् ब्रूयात्, भवतीति ब्रूयाम् । कथम् । एवंशब्दकेनाऽयं पदाऽर्थः कर्त्तव्य इति, नास्त्येवंशब्दकः। यश्च नास्ति, स यदि शक्यते कर्त्तुं, कर्त्तव्यो भवति। यथा, जुह्वा जुहोतीति अविद्यमाना जुहूः क्रियते । एवमेतदपि द्रष्टव्यम् । तत्रार्थादनियमेन ऋत्विक्शब्दसम्बन्धे कर्त्तव्ये, करणविशेषेण कर्त्तव्य इति नियम्यते।तस्मान्नेतरेतराश्रयम्। तस्मात् सप्तदशैव ऋत्विज कर्त्तव्या इति परिसङ्ख्या । सप्तदश ऋत्विजः संस्कारैः कर्त्तव्या इति ॥ ३३ ॥ ॥ सि० ॥

## पक्षेणेति चेत् ॥ ३४ ॥

एवं चेन्मन्यसे, यथोक्तपक्षेणैतदेवमुच्येत । अवयुत्यवादपक्षेण सप्तदशर्त्विज इति । तत् परिहर्त्तव्यम् ॥ ३४ ॥ ॥ आ० ॥

## न सर्वेषामनधिकारः ॥ ३५ ॥

नैतदेवम् । नात्र सर्वेषां पुरुषाणां वचनं, यानधिकृत्य अवयुत्यवादो भविष्यति । यत्र परा सङ्ख्या कीर्त्यते तत्राऽवयुत्यवादो भवति । यथा द्वादशकपाले यदष्टाकपालो भवतीति । न चेह परा सङ्ख्या कीर्त्यते । तस्मान्नाऽवयुत्यवाद इति ॥ ३५ ॥ ॥ आ० नि० ॥ ऋत्विग्गितनाम्नोऽसर्वगामिताधिकरणम् ॥ १६ ॥

## नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३६ ॥

सप्तदश ऋत्विज इति समधिगतम् । कतमे ते सप्तदश इति इदं चिन्त्यते । किं प्राप्तम् । अज्ञानम् । एवं प्राप्ते ब्रूमः ॥ नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् । दक्षिणासम्बन्धेन नियम्येरन् । एवं ह्याम्नायते । ऋत्विग्भ्यो दक्षिणां ददातीति । एवमभिधाय दक्षिणादानक्रमपरे वाक्ये ब्रह्मादयः श्रूयन्ते । अग्नीधेऽग्रे ददातीति, ततो ब्रह्मणे, ततोऽमुष्मै च अमुष्मै चेति केचिदेव विशिष्टाः श्रूयन्ते । एवं ये श्रूयन्ते ते तावद् ऋत्विजः । ततोऽभ्यधिका नान्ये भवितुमर्हन्ति । दक्षिणाभिर्नियम इति ॥ ३६ ॥

## उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

ये ऋत्विजस्ते यजमाना इत्येवमभिधाय ब्रह्मादीनां दीक्षाक्रमपरे च वाक्ये दीक्षां दर्शयति । कथम् । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातार, ततो होतारम् ।
ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्द्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारम् उद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, अग्नीधं ब्रह्मणः, प्रतिहर्त्तारम् उद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यम् उद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वाचार्य्यप्रेषित इति । दीक्षा च यजमानसंस्कारः । तस्माद् ब्रह्मादय ऋत्विजः सप्तदश इति ॥ ३७ ॥ ॥ युक्तिः ॥ दीक्षादक्षिणावाक्योक्तानामेव ब्रह्मादीनां सप्तदशर्त्विक्त्वाऽधिकरणम् ॥ १७ ॥

## स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥

एतदुक्तं, सप्तदश ऋत्विज इति, ते च ब्रह्मादयः । तत्र सन्देहः । किमेषां सदस्यः सप्तदशः, उत गृहपतिः । किं तावत् प्राप्तम् । सदस्य इति । स हि कर्म्मकरः । इतरः स्वामी । यश्च कर्म्मकर स परिक्रेतव्यः । ऋत्विजश्च परिक्रीयन्ते । तस्मात् सदस्य सप्तदश ऋत्विगिति । अपि च, तस्य चमसमामनन्ति वरणं च । ऋत्विग् वरीतव्यो न स्वामी । तस्मात् सदस्यः सप्तदश इति प्राप्ते, उच्यते ॥ स्वामिसप्तदशाः कर्म्मसामान्यात् ॥ स्वामी एषां सप्तदशः स्यात् । कुतः ।

कर्म्मसामान्यात्, यज्ञे कर्त्तार ऋत्विजो भवन्ति । यज्ञे च कर्त्ता गृहपति, तस्माद् ऋत्विक् । यज्ञकर्म्मसामान्यात् । यदुक्त, तं समामनन्ति, तस्य चमसमामनन्ति वरणं च । तस्मात् सदस्यः सप्तदश इति । उच्यते । ब्रह्माणमेव ते समामनन्ति, वरणमपि चमसश्च ब्रह्मण एव । स हि सदसि भव । तस्मात् स्वामिसप्तदशाः ॥ ३८ ॥ ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥ १८ ॥

## ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ॥ ३९ ॥

स्वामिसप्तदशा ज्योतिष्टोमस्य ऋत्विजः समधिगता । अत्रेदानीमयं सन्देह । किं सर्वं पुरुषकार्य्यं तै कार्य्यम्, अग्निभिश्च गार्हपत्यादिभिरग्निकार्य्यम्, उत क्वचिद् व्यवस्थेति । किं तावत् प्राप्तम् ॥ ते सर्वार्थाः, प्रयुक्तत्वाद् अग्नयश्च स्वकालत्वात् ॥ ते वृताः सर्वस्मै पुरुषकार्य्याय स्यु । अग्नयश्चाग्निकार्य्याय । कुत । तैः कार्य्यैराकाङ्क्षितत्वात् । प्रति स्वं ग्रहणमेषामनुवाद', स्वकालत्वादग्नयश्च सर्वार्था इति । समधिगतमेतत् ॥ ३९ ॥ अग्ने प्रकृतिविकृतिसर्वार्थताधिकरणम् ॥ १९ ॥ ॥ ॥ आध्वर्यवादिष्वध्वर्य्वादीनां कर्तृतानियमाधिकरणस्य पूर्वपक्ष ॥

## तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्याऽर्थवत्त्वात् ॥ ४० ॥

तत्संयोगाद् विशिष्टपुरुषसंयोगाद् व्यवतिष्ठते । ये येन पुरुषेण समाख्यायन्ते, ते तेन कर्त्तव्याः । एवं तेषां पुरुषसंयोगोऽर्थवान् भविष्यति । आध्वर्य्यवमध्वर्य्युणा, हौत्रं होत्रा, औद्गात्रमुद्गात्रेति ॥ ४० ॥ सि० ॥ आध्वर्यवादिष्वेवाध्वर्य्वादीनां कर्तृतानियमाधिकरणम् ॥२०॥

## तस्योपदेशसमाख्यानेन निर्देशः ॥ ४१ ॥

किमेष एवोत्सर्ग', सर्वं समाख्यातं समाख्यातपुरुषै' कर्त्तव्यमिति । नेति ब्रूमः । तस्योपदेशाद्विशेषसमाख्यानाच्च निर्देशः । यथोपदेशः । तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति । समाख्या, पोत्रीया नेष्ट्रीयेति । एष समाख्यायाश्चापवाद इति ॥ ४१ ॥

## तद्वच्च लिङ्गदर्शनम् ॥ ४२ ॥

यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयादिति होत्रे प्रातरनु-

वाके समाख्यया प्राप्तं होतारं दर्शयति। तथेदमपरं लिङ्गं भवति, उद्गीथ उद्गातॄणाम् ऋच प्रणव उक्थशंसिनां प्रतिहारो अध्वर्यूणा-मिति समाख्याकृत भेदं दर्शयति। तथेदमपि लिङ्गं भवति। यो वाध्वर्यो स्वं वेद स्ववानेव भवति। एतद् वाध्वर्योः स्वं यदाश्राव-यतीति समाख्याकृतं नियमं दर्शयति॥ ४२॥ ॥ समाख्याऽऽयात-कर्तृत्वस्यापि क्वचिद् बाधाधिकरणम्॥ २१॥

## प्रैषानुवचनं मैत्रावरुणस्योपदेशात्॥ ४३॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। यो दीक्षितो यदग्नीषोमीयं पशुमालभेत इति। तत्रेदं समामनन्ति। तस्मान्मैत्रावरुणः प्रेष्यति चानु चाहेति। तत्र संशयः। किं सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रा-वरुणः स्याद्, उत यत्रानुवचनं प्रैष इति। किं तावत् प्राप्तम्। सर्वा-ऽनुवचनेषु, अविशेषात्। न हि कश्चिद्विशेष आश्रीयते। अस्मिन्ननु-वचने मैत्रावरुणोऽस्मिन्नेति। तस्मात् सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुण स्यात्॥ ४४॥ ॥ पूर्व०॥

## पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात्॥ ४४॥

पुरोऽनुवाक्यां वा मैत्रावरुणोऽनुब्रूयात्। कुतः। यत्र प्रैषश्चानु-वाक्या च सहाम्नायेते तत्र मैत्रावरुण। यत्र केवलानुवाक्या न तत्र मैत्रावरुण। यत्र वा केवलः प्रैषस्तत्रापि न। यत्रोभे समुच्चीयेते, तत्र स भवेत्। तथा हि समुच्चितयोस्तं समामनन्ति। तस्मान्मैत्रा-वरुणः प्रेष्यति चाऽनु चाहेति। चशब्दात् समुच्चितयोरिति गम्यते॥ ४६॥ ॥ सि०॥

## प्रातरनुवाके च होतृदर्शनात्॥ ४५॥

इतश्च पश्यामो न सर्वानुवचनेषु मैत्रावरुण इति। कुतः। यतः प्रातरनुवाके होतारं दर्शयति। कथम्। यत्र होतुः प्रातरनुवाकमनु-ब्रुवत उपशृणुयात् तदाध्वर्युर्गृह्णीयादिति। तस्मान्न सर्वानुवचनेषु मैत्रावरुण इति॥४५॥ ॥युक्ति॥ समुच्चितयोरनुवचनप्रैषयोर्मैत्रावरुण-कर्तृकत्वाधिकरणम्॥ २२॥

## चमसांश्चमसाध्वर्यवः समाख्यानात्॥ ४६॥

सन्ति चमसाध्वर्यवस्तेषु सन्देह। किं चमसाध्वर्यवश्चमसा-ञ्जुहुयुरुताध्वर्युरिति। चमसाध्वर्यव इति ब्रूमः। कस्मात्। चमसेषु

आध्वर्यवं ते कुर्वन्तीति चमसाध्वर्यवः । तस्मात्ते जुहुयुरिति ॥ ४६ ॥
॥ पूर्व० ॥

अध्वर्य्युर्वा तन्न्यायत्वात् ॥ ४७ ॥

अध्वर्युर्वा जुहुयात् । एष हि न्यायः । यदाध्वर्यवपदार्थमध्वर्युः कुर्यात्, आध्वर्यवश्च होम । तस्मादध्वर्युर्जुहुयात् । ननु चमसाध्वर्यव इति विशेषसमाख्यानाच्चमसाध्वर्यवो होष्यन्तीति । नेत्युच्यते । चमसेष्वेतेऽध्वर्युवद्भवन्तीति चमसाध्वर्यव । यदि तैरध्वर्य्युर्जुहोति, ततस्तैश्चमसाध्वर्युभिरपि होतव्यम् । यदि चमसाध्वर्यवो जुह्वति, नाध्वर्युस्तदा ते न तद्वत् स्युश्चमसाध्वर्यवः । तस्मान्न जुहुयुरिति ॥
॥ ४७ ॥ ॥ सि० ॥

चमसे चान्यदर्शनात् ॥ ४८ ॥

चमसे चान्यं चमसाध्वर्योर्दर्शयति । कथम् । चमसांश्चमसाऽध्वर्यवे प्रयच्छति, तान् स वषट्कर्त्रे हरति, अन्यो हुत्वा चमसाध्वर्य्यवे प्रयच्छतीति गम्यते । कथम् । स वषट्कर्त्रे हरति, भक्षयितुमिति गम्यते । तस्माद् हुतस्य चमसाध्वर्य्यवे प्रदानम् । यो जुहोति, स प्रयच्छति । तस्मादन्यो जुहोतीति । अपिच । यो वाऽध्वर्योः स्वं वेद स्ववानेव भवति । स्रुग्वा अध्वर्योः स्वं वायव्यमस्य स्वं चमसोऽस्य स्वमिति । न तावदस्य चमसः स्वम् । यजमानस्य हि सः । चमसोऽस्य स्वमिति ब्रुवन्नध्वर्योश्चमसेन होमं दर्शयति ॥४८॥ युक्तिः॥

अशक्तौ ते प्रतीयेरन् ॥ ४९ ॥

अथ कथं चमसाध्वर्यव इति समाख्यानम् । उच्यते । अशक्तौ ते प्रतीयेरन् । यदा व्यापृतत्वान्न शक्नोति अध्वर्युर्होतुं तदा समाख्यासामर्थ्यात्ते होष्यन्ति ॥ ४९ ॥ ॥ आ० नि० ॥ चमसहोमेऽध्वर्य्वोः कर्तृताधिकरणम् ॥ २३ ॥

वेदोपदेशात् पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥५०॥

अस्ति औद्गात्रे समाख्यातः श्येनः, आध्वर्यवे वाजपेय । तत्र सन्देह । किं श्येने उद्गातृभिरेव पदार्थाः कर्त्तव्याः, वाजपेये अध्वर्युभिः? उत उभयत्र नानर्त्विग्भिरिति । किं प्राप्तम् ॥ वेदोपदेशात् ॥ समाख्यानादित्यर्थ ॥ पूर्ववत् ॥ यथा, आध्वर्यवमिति समाख्यानात् पदार्थानध्वर्युः करोति, एवमेव वेदान्यत्वे यथोपदेशं स्यु ।

यो येन समाख्याते वेदे उपदिष्टस्तस्य पदार्थास्तेनैव कर्त्तव्या । साङ्ग स तत्रोपदिश्यते । तस्माच्छयेन उदूगातृभिर्वाजपेये चाऽध्वर्युभि. पदार्था कर्त्तव्या इति ॥ ५० ॥ ॥ युक्त ॥

**तदूग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात् सहाऽङ्गैरव्यक्तः शेषे ॥ ५१ ॥**

तदूग्रहणात् प्राकृतधर्म्मग्रहणादू वा स्वधर्म्म चोदकप्राप्तैः संयुक्तः स्यात् । चोदकसामर्थ्यात् सहाङ्गै· कुर्यादिति श्रूयते । तानि चाङ्गानि ज्योतिष्टोमे सन्त्यपेक्ष्यन्ते । तत्र ज्योतिष्टोमे नानार्त्विजस्तैरस्य सहैकवाक्यता । ननु प्रत्यक्षा समाख्या, चोदक आनुमानिक । उच्यते । सत्यं प्रत्यक्षा समाख्या । लौकिकी तु सा । तत्रानुमाय वैदिकं शब्दं तेनैकवाक्यता स्यात् ।
चोदकेन पुनर्विप्रकृष्टाधीतया प्रत्यक्षया इतिकर्त्तव्यतया सहैकवाक्यता। तस्माच्चोदको वलवत्तर. ॥ यत्तूक्त, समाख्यानादिति । तत्रोच्यते । अव्यक्त शेषे समाख्यातो भविष्यति । य. पदार्थो न चोदकेन प्राप्नोति, तत्र समाख्यया नियमो भविष्यति । यथा, श्येने कण्टकैर्वितुदन्तीति उदूगातारो वितोत्स्यन्ति, वाजपेये चोषपुटैरर्पयन्तीत्यध्वर्यवोऽर्पयिष्यन्ति ॥ ५१ ॥ ॥ सि० ॥ श्येनवाजपेययोरनेककर्तृकताऽधिकरणम् ॥ २४ ॥ ॥ इति श्रीशवरस्वामिनः कृतौ मीमांसाभाष्ये तृतीयस्याध्यायस्य सप्तम· पादः समाप्त ॥ ३ ॥ ७ ॥

अथ तृतीय अध्याये अष्टम पाद ॥ ३ ॥ ८ ॥

**स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥**

अस्ति परिक्रयो, ज्योतिष्टोमे द्वादशशतं, दर्शपूर्णमासयोरन्वाहार्यम्। तत्र सन्देह.। किमध्वर्युणा परिक्रेतव्या ऋत्विज ? उत स्वामिनेति । किं प्राप्तम । समाख्यानादध्वर्य्युणति प्राप्ते ब्रूम । स्वामिकर्म्म परिक्रय' । कस्मात् । कर्म्मणस्तदर्थत्वात् । फलकामो हि यजमान । यश्च फलकामस्तेन स्वयं कर्त्तव्यम् । स यदि परिक्रीणीते, तत स्वयं सर्वं करोतीति गम्यते । अथ न परिक्रीणीते न सर्वं कुर्यात् । तस्मात् स्वामी परिक्रीणीत इति ॥ १ ॥

## वचनादितरेषां स्यात् ॥ २ ॥

किमेष एवोत्सर्गः । नेत्युच्यते ॥ वचनादितरेषां स्यात् ॥ यत्र वचनं भवति तत्र वचनप्रामाण्याद् भवति परिक्रयः । य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यादिति ॥ २ ॥ ॥ क्रयस्य स्वामिकर्मताऽधिकरणम् ॥ १ ॥

## संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन् ॥ ३ ॥

ज्योतिष्टोमे श्रूयते— केशश्मश्रू वपते, दतो धावते, नखानि निकृन्तते, स्नातीति । तत्र सन्देहः । किमेवञ्जातीयका अध्वर्युणा कर्त्तव्याः, उत यजमानेनेति । किं प्राप्तम् ? । अध्वर्युणा कर्त्तव्या संस्कारा यथावेदं व्यवतिष्ठेरन् समाख्यानात् पुरुषेण कर्म्मवत् । यथा, अन्ये पदार्था यस्मिन् वेदे आम्नातास्तत्समाख्यातेन पुरुषेण क्रियन्ते, एवमेतेऽपीति ॥ ३ ॥ ॥ पूर्व० ॥

## याजमानास्तु तत्प्रधानत्वात् कर्मवत् ॥ ४ ॥

यजमानेन वा कर्त्तव्याः । कुतः । पुरुषप्रधानत्वात् । कथं पुरुषप्राधान्यम् । कर्त्रभिप्रायं क्रियाफलं गम्यते, तस्मात् पुरुषस्य कर्म्मकरणसामर्थ्यमुपजनयन्ति । न च कश्चिद् येन कर्म्मकरणेन सामर्थ्यमुपजन्यते तदर्थं पुरुषान् क्रीणातीति । ईप्सितेभ्यः पदार्थेभ्यः क्रीणाति । येन यस्य सामर्थ्यं भवति, तत् तेनैव कर्त्तव्यम् । कर्म्मवत् । यथा प्रधानकर्म्माणि पुरुषार्थानि यजमानस्य भवन्त्येवमेतदपीति ॥ ४ ॥ ॥ सि० ॥

## व्यपदेशाच्च ॥ ५ ॥

परस्मैपदव्यपदेशश्च भवति । तमभ्यनक्ति, शरेषीकयाऽनक्तीति च । अन्यो यजमानस्याञ्जनमभ्यञ्जनं करोतीति गम्यते ॥ ५ ॥ ॥ हेतुः ॥

## गुणत्वे तस्य निर्देशः ॥ ६ ॥

यदुक्तं समाख्यानाद् यथावेदमिति । नैतदेवम् । गुणत्वे तस्य निर्देशः । तत्र वयं समाख्यां नियामिकामिच्छामो, यत्र कर्म्मणः प्राधान्यम् । यदर्थं क्रेतव्याः पुरुषाः प्राप्तास्तत्र समाख्यया नियमः । कल्प्यो हि सम्बन्धो वपनादिभिः पुरुषाणामदृष्टार्थत्वात् । क्लृप्त

आरादुपकारकैः। न च क्लृप्ते उपपद्यमाने कल्प्यः शक्यः कल्पयितुम्। तस्मान्न पुरुषप्राधान्ये समाख्या नियामिका स्यात्॥६॥ आ० ॥

चोदनां प्रति भावाच्च ॥ ७ ॥

चोदनेत्यपूर्वं ब्रूमः। अपूर्वं प्रति संस्कारा विधीयन्ते ते ह्यसम्भवाद् द्रव्येषु कल्प्यन्ते। सन्निकृष्टद्रव्याभावे च विप्रकृष्टेषु भवेयु.। यदा तु सन्निकृष्टे द्रव्ये सम्भवन्ति तदा न विप्रकृष्टेषु प्रयोक्तव्याः। कृतार्थत्वात्। तस्माद् याजमाना इति ॥ ७ ॥ ॥ हेतु ॥

अतुल्यत्वादसमानविधानाः स्युः ॥ ८ ॥

इदं पदोत्तरं सूत्रम्। अथ कस्मान्न समानविधाना भवन्ति ?। अविशेषविधानाद्धि पुरुषमात्रस्य प्राप्नुवन्ति। तदुच्यते। नैतत् समानं सर्वपुरुषाणां विधानम्। कुतः। अतुल्यत्वात्। अतुल्या एते एतद्विधानं प्रति। का अतुल्यता। यद् यजमानस्य विहिता न ऋत्विजाम्। कथं यजमानस्य विहिता इत्यवगम्यते। अर्थात् स्वयं प्रयोगे स्यादिति॥ नन्वविशेषाद् ऋत्विजामपि विहिताः। प्रयोजनाऽभावादविहिता इति पश्याम। कथं प्रयोजनाभावः। ऋत्विग्भिः क्रियमाणा, न यजमानेन कृता न कारिताः। अतदर्थत्वात् परिक्रयस्य। स्वयंकृताश्च नार्थिन उपकुर्वन्ति। तस्मादप्रयोजनाः। अत ऋत्विजामऽविहिताः। एतदतुल्यत्वम्। तस्मान्न समानविधाना इति ॥ ८ ॥ ॥ आ० नि० ॥ वपनादिसंस्काराणां याजमानताधिकरणम् ॥ २ ॥

तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥

तपः श्रूयते- द्व्यहं नाश्नाति, त्र्यहं नाश्नातीति। तत्र सन्देहः। किमार्त्विजं तपः, याजमानमिति। किं प्राप्तम्। समाख्यानादार्त्विजं तप इति प्राप्तम्। एवं प्राप्ते ब्रूमः। याजमानं तप इति। कुतः। फलसिद्धित्वात्। फलसिद्ध्यर्थं तपः। तपःसिद्धस्य यागफलं सिद्ध्यति। कथमेतदवगम्यते। दुःखं हि तपः। दुःखं चाधर्म्मफलम्। अधर्मो यागफलस्य प्रतिबन्धको भवति। अश्रेयस्करो हि स। तस्मिन् सति न श्रेयो भवितुमर्हति। तस्मात् सोऽपनेतव्य। फलभोगेन च विरुद्ध्येते धर्माधर्मौ। तस्माद् दुःखफलभोगाय धर्म. श्रूयते। यत्तेन दुःखमुत्पादयितव्यमिदं तदिति। एवं दृष्टार्थं भवति, नादृष्टं कल्पयितव्यम्। तेन फलोपभोगेन क्षीणेऽधर्मेऽप्रतिबद्धो यागः फलं

श्यतीति । फलसिद्धिश्च यजमानस्य कर्त्तव्या, नर्त्विजाम् । तस्माद् याजमानं तप इति ॥ ९ ॥

## वाक्यशेषश्च तद्वत् ॥ १० ॥

एतमेवार्थं वाक्यशेषोऽपि द्योतयति । यदा वै पुरुषे न किञ्चनान्तर्भवति, यदास्य कृष्णं चक्षुषो नश्यति, अथ मेध्यतम इति । यदा अनशन तदा मेधार्ह इति । मेधश्च यज्ञो, यज्ञश्च त्याग । त्यागं कर्तुमर्ह. तपसा क्रियते इति वाक्यशेषो भवति । त्यागी च यजमानः । तस्माद् याजमान तप इति ॥ १० ॥ ॥ युक्तिः ॥

## वचनादितरेषां स्यात् ॥ ११ ॥

किमेष एवोत्सर्ग', सर्वं तपो याजमानमिति ॥ वचनादितरेषाम ॥ यत्र वचनं, तत्र ऋत्विजाम । यथा सर्वे ऋत्विज उपवसन्तीति ॥ ११ ॥ ॥ विशेषः ॥ तपसो याजमानताधिकरणम् ॥ ३ ॥

## गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

अथ यदुक्त, समाख्यानादार्त्विजं तप इति । गुणत्वान्न समाख्यया गृह्यते । यत्र पुरुषस्य गुणभावस्तत्र समाख्या नियामिका ॥ एवं वा श्येने श्रूयते—लोहितोष्णीषा लोहितवसना ऋत्विज प्रचरन्तीति । तथा वाजपेये श्रूयते, हिरण्यमालिन ऋत्विजः प्रचरन्तीति । तत्र सन्देहः । किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्त्तव्या, वाजपेये चाऽध्वर्युभिर्हिरण्यमालित्वम् ? उत उभयमपि सर्वर्त्विजामिति । किं तावत् प्राप्तम् । समाख्यानात् । श्येने उद्गातृभिर्वाजपेये अध्वर्युभिरिति । एवं प्राप्ते ब्रूमः । गुणत्वाच्च वेदेन न व्यवस्था स्यात् । गुणो लोहितोष्णीषता हिरण्यमालित्वं च ' पुरुषः प्रधानम् । अतो लोहितमुष्णीष हिरण्यमाला च पुरुषविशेषणत्वेन श्रूयते, न कर्त्तव्यतया । तस्मात् पुरुषप्राधान्यम् । किमतो यद्येवं, पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम् । अपि च, गुणत्वश्रवणात् सर्वपुरुषाणामेनद्विधानमिति गम्यते । प्रधानसन्निधौ हि गुणः शिष्यमाण प्रतिप्रधानमुपदिष्टो भवति । तत्र वचनेन प्राप्तं, कथ समाख्यया विद्यमानयापि नियन्तुं शक्येत । तस्मादुभयत्र सर्वर्त्विग्भिरेवञ्जातीयको धर्म्मः क्रियतेति ॥ १२ ॥ ॥ आकाङ्क्षानिरास ॥ लोहितोष्णीषताऽऽदीनां सर्वर्त्विग्धर्मताधिकरणम् ॥ ४ ॥

## तथा कामोऽर्थसंयोगात् ॥ १३ ॥

ज्योतिष्टोमे समामनन्ति, यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयादिति । तत्र सन्देह । किम् आर्त्विजः कामोऽथ याजमान इति । किमेवं, यदि कामयेताध्वर्युरिति ? उत यजमान इति एवं संशयः । किं प्राप्तम् । आर्त्विजः कामः । समाख्यानात् । अर्थी प्रकृतोऽध्वर्युः । स वाक्येन सम्बद्ध्यते, मिनुयादिति । तस्माद् आर्त्विजः काम इति । एवं प्राप्ते ब्रूमः । तथा कामः स्यात् । यथा तपः । याजमानः काम इत्यर्थः । कुतः । अर्थसंयोगात् । अर्थेन यागस्य साऽङ्गस्य, यजमानः फलेन सम्बद्ध्यते इति गम्यते । उपग्रहविशेषाज्ज्योतिष्टोमेन स्वर्गकामो यजेतेत्युपग्रहविशेषाच्च मिनुयादित्यध्वर्युं परार्थमिति गम्यते । अथ यदुक्तं, प्रकृतेनार्थिना सहैकवाक्यत्वादिति । उच्यते । एवमपि प्रकृतेन वाक्येन सहैकवाक्यता । यजमाने कामयमाने मिनुयादिति ॥ १३ ॥

## व्यपदेशादितरेषां स्यात् ॥ १४ ॥

यत्र भवति व्यपदेशस्तत्रार्त्विज कामो भवति । यथा, उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते, तमागायतीति । यद्यात्मने इति यजमानायेति परिकल्प्येत, यजमानग्रहणं वाशब्दश्च न समर्थितौ स्याताम् । तस्माद् यजमानव्यपदेशादात्मानमेवोद्गाता प्रतिनिर्दिशतीतिं गम्यते ॥ १४ ॥ ॥ विशेषः ॥ ॥ वृष्टिकामनाया याजमानताधिकरणम् ॥

## मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥

इहैवञ्जातीयका मन्त्रा उदाहरणम्– आयुर्दा अग्ने आयुर्मे देहीति, वर्चोदा अग्ने असि वर्चो मे देहीति । एषु सन्देह । किम् आर्त्विजा उत याजमाना इति । समाख्यानादार्त्विजा इति प्राप्तम् ॥ एवं प्राप्ते ब्रूमः । मन्त्राश्चैते तद्वद् भवेयुर्यथा कामः । एवमात्माभिधायिपदं युक्तं भवति । आयुर्मे, वर्चो मे इति । आयुर्वर्च इत्येवमादिभिः कर्म्मफलमभिधीयते । अग्ने त्वं कर्म्मफलं मे साधयेति । तदिह कर्म्मफलमुत्साहार्थं सङ्कीर्त्त्यते । यजमानश्च तेन उत्सहते, नान्यः । यद् ऋत्विजः कर्मफलं, न तदर्थोऽग्निः । सिद्धं हि तत् । यद् यजमानस्य तदर्थोऽग्निः । तच्चासिद्धम् । सद् आशासितव्यं, यदुत्साहं जनय-

त्यऽवैगुण्याय। ऋत्विगपि सिद्धे यदुत्सहते, तद् यजमानस्यैव कर्मफलायोत्सहते। तत्रात्माभिधायिपदं नावकल्पते। यजमाने चात्माऽभिधायिपदं कल्प्यमानमगौणं भवति, तस्माद् याजमानाः ॥ १५ ॥

## विप्रयोगे च दर्शनात् ॥ १६ ॥

विप्रयोगे चाग्नीनां प्रवासे उपस्थानमग्नेः। इह एव सन् तत्र सन्तं त्वाग्ने इति। न च प्रोषितोऽग्निभ्य ऋत्विग् भवति। कर्म कुर्वत एष वाचकः शब्दः। भवति तु यजमानोऽग्निभ्यः प्रोषितोऽपि। यजमानः संविधाय सोऽग्निहोत्राय प्रवसति। शक्यते च विदेशस्थेनापि त्यागः कर्तुम्। स एव प्रोषितस्योपस्थानविशेषं ब्रुवन् यजमानस्योपस्थानं दर्शयति। तेनैव एवञ्जातीयका यजमानस्य भवेयुरिति ॥ १६ ॥ ॥ युक्ति ॥ आयुर्दादिमन्त्राणां याजमानताधिकरणम् ॥ ६ ॥

## द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

स्तो दर्शपूर्णमासौ, तत्र द्व्याम्नाता मन्त्रा आध्वर्यवे काण्डे याजमाने च। आज्यं यैर्गृह्यते पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामीत्येवमादयः। तथा स्रुग्व्यूहनमन्त्राः। स्रुचौ व्यूहति, वाजस्य मा प्रसवेनेति। तत्र सन्देहः। किं ते उभाभ्यामपि कर्त्तव्या उत अध्वर्युणैवेति। किं प्राप्तम्। समाख्यानादाध्वर्यवा इति। इति प्राप्ते, उच्यते। उभावपि तान् प्रयुञ्जीयातामिति। कुतः। द्व्याम्नानस्यार्थवत्त्वात्। द्वाभ्यां समाख्यानाद् द्वावपि कर्त्तारौ गम्येते तस्माद् द्वौ ब्रूयाताम्। अध्वर्युः- एतेन प्रकाशितमनुष्ठास्यामीति। यजमानो— न प्रमदिष्यामीति ॥१७॥ द्व्याम्नातस्योभयप्रयोज्यताधिकरणम् ॥७॥

## ज्ञाते च वाचनं न ह्यविद्वान् विहितोऽस्ति ॥१८॥

वाजपेये श्रूयते- क्लृप्तीर्यजमानं वाचयति, उज्जितीर्यजमानं वाचयतीति। अत्र सन्देहः। किं ज्ञश्चाज्ञश्च सर्वो वाचयितव्य, उत ज्ञ एवेति। किं प्राप्तम्। अविशेषाज्ज्ञश्चाज्ञश्चेति। इति प्राप्ते, ब्रूमः। ज्ञ एवेति। कुतः। न ह्यविद्वान् विहितोऽस्ति। यो ह्यविद्वान्नासावधिकृतः। सामर्थ्याभावात्। ननु प्रयोगकाले शिक्षित्वा प्रयोक्ष्यते, सामर्थ्याद्धिक्रियेतेति। नेति ब्रूमः। वेदाध्ययनादुत्तरकाले प्रयोगः श्रूयते। न प्रयोगश्रुतिगृहीतं वेदाध्ययनम्। कुतः। अनारभ्य कर्मणि वेदे श्रूयते। तस्मात् स्वाध्यायोऽध्येतव्य इति। सत्येतस्मिन् व-

चने, अग्निहोत्रं जुहुयादित्येवमादिभिर्वेदोऽध्येतव्य इत्येतदुक्तं भवतीति न शक्यते कल्पयितुम्। तत्र होममात्रे चोदिते वेदाध्यायी शक्त इत्यधिक्रियते, नाविद्वान्। कियता पुनर्विदितेन विद्वानधिक्रियते ? इति। यावता विदितेन शक्तो भवति यथोक्तं क्रतुमभिनिर्वर्त्तयितुम्। तस्मात् तावद् यो वेद स तेन क्रतुनाऽधिक्रियते ॥ ननु वेदमधीयीतेति वचनात् कृत्स्नो वेदोऽध्येतव्य इति भवति, न वेदाऽवयवेनाधिक्रियते इति। उच्यते 'क्रतूनां ज्ञानार्थं वेदाध्ययनं कार्य्यम्। तत्रान्यस्मिन् क्रतौ कर्त्तव्येऽन्यक्रतुज्ञानं न दृष्टाय भवति। तस्मात् क्रत्वन्तरज्ञानमधिकारे नाद्र्त्तव्यम्। क्रत्वन्तरज्ञानाय क्रत्वन्तरग्रन्थ. सर्वे क्रतव. कथं ज्ञायेरन्। पृथक् पृथगिति कृत्स्नस्य वेदस्याध्ययनं श्रूयते। तस्मात् स्वपदार्थज्ञोऽधिक्रियेतेति। तेनास्वपदार्थज्ञस्य कर्मैव नास्ति। कथमसौ वाच्येत तस्मात् साध्वभिधीयते। ज्ञ एव वाचयितव्य इति ॥ १८ ॥ अभिज्ञस्यैव वाचयितव्यताधिकरणम् ॥ ८ ॥

**याजमाने समाख्यानात् कर्माणि याजमानं स्युः ॥१९॥**

स्तो दर्शपूर्णमासौ। तत्र कर्माण्याम्नातानि द्वादश- वत्सं चापावसृजति, उखाश्चाधिश्रयति, अत्र च हन्ति, दृषदुपले च समाहन्ति, अधि च वपते, कपालानि चोपदधाति, पुरोडाशं च अधिश्रयति आज्य च, स्तम्बयजुश्च हरति अभि च गृह्णाति, वेदिं परिगृह्णाति, पत्नीं च सन्नह्यति, प्रोक्षणीश्चासादयाति आज्यं च। तानि द्वादश द्वन्द्वानि दर्शपूर्णमासयोरिति। अत्र सन्देह। किमेतान्यध्वर्योः कर्म्माणि, उत यजमानस्येति। किं प्राप्तम्। याजमाने समाख्यानात् कर्म्माणि याजमान स्यु। विशेषसमाख्यानाद् याजमानानीति गम्यते। यथा पोत्रीयं नेष्ट्रीयमिति ॥ १९ ॥ ॥ पूर्व० ॥

**अध्वर्य्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥२० ॥**

अध्वर्युर्वा कुर्यादेतानि। तदर्थो हि अध्वर्यु· परिक्रीत इति समाख्यानाद् अवगम्यते। आध्वर्यवे एव सर्वे इमे पदार्था समाम्नाता। याजमाने एषां द्वन्द्वतोच्यते। द्वन्द्वता च समभ्यासक्रिया। तत्राध्वर्यु पदार्थान् करिष्यति, यजमानेनापि समभ्यासीकरणमित्येतदशक्यम्। तत्र अङ्गगुणविरोधे च तादर्थ्यादिति द्वन्द्वतागुणो

बाधितव्यः । तस्मादाध्वर्यवा एते पदार्था इति ॥ यदुक्तं, समाख्याना-दिति । तत् परिहर्त्तव्यम् । उच्यते । न्यायपूर्वं समाख्यानं, समा-ख्यानाद् यजमानेन छन्दता सम्पादयितव्या । इदं चेदं च सम्पाद-येति यजमानो ब्रूयात् । केषुचिच्चात्र पदार्थेषु यजमानस्यानुमन्त्रण-म् । तन्निमित्ता समाख्या भविष्यति । अपूर्वं त्वपकृष्येत । यदुक्तं, यथा पोत्रीयं, नेष्ट्रीयमिति, एवमत्रापीति । तदुच्यते । युक्तम् । तत्र वि-शेषसमाख्यानात् । इह तु छन्दता याजमानीया, पदार्थास्तु आध्व-र्यवा एव । तस्माद् अदोषः ॥ २० ॥ सि० ॥ ॥ द्वादशछन्दानाम् आध्वर्यवत्वाधिकरणम् ॥ ९ ॥

## विप्रतिषेधे करणः, समवायविशेषादितरमन्य-स्तेषां यतो विशेषः स्यात् ॥ २१ ॥

अस्ति ज्योतिष्टोमे पशुरग्निषोमीयः । तस्य यूपस्य परिव्याणे मन्त्रौ । एकः— अध्वर्यो: परिवीरसीति करणः । अपरो- होतुर्युवा सुवासा इति क्रियमाणानुवादी । तयोश्चोदकपरम्परया कुण्डपायि-नामयनं प्राप्तयोर्भवति सन्देहः । कः पुनरसौ । तत्र ऋत्विक्समास आम्नातः, यो होता सोऽध्वर्युरिति । किं करणमाध्वर्यवं होता कु-र्यात् ? किं हौत्रं क्रियमाणानुवादिनमिति । किं प्राप्तम् । अनियम इति ॥ इति प्राप्ते, उच्यते । विप्रतिषेधे करणः स्याद् आध्वर्य्यवः परिवीरसी इति । न क्रियमाणानुवादी, होतुर्युवा सुवासा इति । कु-तः । समवायविशेषात् । द्वौ तत्र समवायौ होतुश्चोदकेन हौत्रेषु, प्रत्यक्षश्रवणेन आध्वर्यवेषु, यो होता सोऽध्वर्युरिति । एवं प्रत्यक्षम-ऽध्वर्यो: कार्यं चोद्यते । प्रत्यक्षं चानुमानाद् बलीयः । तस्माद् आध्व-र्यवं करणं परिवीरसीति होता कुर्यात् । अथ हौत्रं विरुद्धं कः कु-र्यात् । इतरमन्य । तेषां यतो विशेषः स्यात् । अन्यो होतृपुरुष एव स्यात् । यस्याव्यापृतता, प्राधान्यविशेषो वा ॥ २१ ॥ होतुराध्वर्यव-करणमन्त्रानुष्ठातृत्वाधिकरणम् ॥ १० ॥

## प्रैषेषु च पराधिकारात् ॥ २२ ॥

स्तो दर्शपूर्णमासौ । तत्र प्रैषः समाम्नातः । प्रोक्षणीरासादय, इध्मा बर्हिरुपसादय, स्रुव. सम्मृड्ढि, पत्नीं सन्नह्य आज्येनोदेही-ति । तत्र सन्देह. । किं य एव प्रैषे, स एव प्रैषार्थे ? उतान्यश्च प्रैषे-

ऽन्यश्च प्रैषार्थे इति । किं प्राप्तम् । एक एव प्रैषप्रैषार्थयोरिति । कुत । समाख्यानात् । अन्य इति चाश्रुतत्वात् ॥ नन्वात्मन. प्रैषो विप्रतिषिद्ध्यते । उच्यते । न प्रैषो भविष्यति । प्राप्तकाले लोटं वक्ष्यामः । आह । प्राप्तकालेऽपि सति युष्मदादिष्वेवोपपदेषु मध्यमादयो व्यवस्थिताः । न पुरुषसङ्करो भवति । उच्यते । सत्यां विवक्षायां युष्मदादिषु मध्यमादयः । यदा तव प्राप्त काल इति विवक्ष्यते, तदा युष्मद्येव मध्यमो नास्मदि शेषे वा । यदा खलु क्रियायाः प्राप्तः काल इत्येतावद् विवक्ष्यते, न तव मम वेति, न तदा युष्मदादीनामनुरोधेन मध्यमादयो भवितुमर्हन्ति । न चेदं युगपद् विवक्षितुं शक्यते । पदार्थस्य प्राप्तः कालः, तव चेति । भिद्येत हि तथा वाक्यम् । तेन, यदि वा निर्ज्ञाते पदार्थकाले तव काल इति शक्यते वदितुं, यदि वा तवेति निर्ज्ञाते पदार्थस्य काल इति । तत्र पदाऽर्थस्य कालो वदितव्यो, न तु युष्मदर्थस्य । तेन हि स्मृतेन प्रयोजनम् । स हि कर्त्तव्य इत्यवगतो, न तु युष्मदर्थस्तथा । तस्मात् समाख्यानादध्वर्योरेव प्रैषप्रैषार्थौ इति । इति प्राप्ते, ब्रूमः । प्रैषेष्वन्योऽन्यस्तदर्थेष्विति । कुत । पराधिकारात् । परस्मिन् हि प्रैषे उपपद्यते, नात्मनीति । आह । ननूक्तं प्राप्तकाले भविष्यतीति । उच्यते । न, सम्भवति प्रैषे, प्राप्तकालता न्याय्या । तस्या हि युष्मदर्थो गम्यमानो न विवक्षित इत्युच्यते, सम्भवति चात्र प्रैषार्थः । तस्मात् प्रैषः। प्रैषश्चेद्, अन्य प्रैषार्थ इति सिद्धम् ॥ २२ ॥ प्रैषप्रैषार्थयोः पृथक्कर्तृकत्वाधिकरणम् ॥ ११ ॥

## अध्वर्युस्तु दर्शनात् ॥ २३ ॥

अथैवं गते, इति सन्दिहाने । किमध्वर्युरग्नीधं प्रैष्येद्, उताग्नीदध्वर्युमिति । अनियमोऽविशेषादिति प्राप्ते, ब्रूमः । अध्वर्युरुक्तप्रैषार्थकारी स्यात् । कुतः । दर्शनात् । दर्शनं भवति, तिर्यञ्चं स्फ्यं धारयेत् यदन्वञ्चं धारयेत् वज्रो वै स्फ्यो वज्रेणाध्वर्युं क्षिण्वीतेति । यं प्रेष्यति तस्य हस्ते स्फ्यः । स्फ्येनाध्वर्युं क्षिण्वीतेत्यन्यमध्वर्युं प्रेषकार्यं दर्शयति । तस्मादग्नीदध्वर्युं प्रेष्येदिति ॥ २३ ॥ ॥ पूर्व० ॥

## गौणा वा कर्मसामान्यात् ॥ २४ ॥

नैतदस्ति, अग्नीधः प्रैषोऽध्वर्यो प्रैषार्थ इति । किं खलु अध्वर्यु-

रेवाग्नीध्रं प्रेष्येत् । एवमध्वर्युणा प्रैषः प्रैषार्थश्चोभावपि कृतौ भविष्यत । तत्र आध्वर्यवमिति समाख्याऽनुगृहीष्यते । तस्माद्ध्वर्युरेव मुख्यः स्यात् । किमस्य मुख्यत्वम् ? । यदनेन सर्वं कर्त्तव्यं समाख्यानादिति । अथ यदुक्तमध्वर्युः प्रचरिता दृश्यत इति । तदुच्यते । सत्यं दृश्यते । न त्वस्य प्रैषार्थकरणे प्रमाणमस्ति चिन्त्यमानम् । तस्मादेतन्मिथ्यादर्शनम् । यस्य हि दर्शनस्य प्रमाणं नास्ति, व्यामोह स । तथा शुक्तिकायां रजतविज्ञानम् । अस्ति तु अग्नीध्रः प्रैषार्थकरणे प्रमाणम् । तस्माद् अग्नीध्र. प्रचरिता । प्रचरितरि चाऽध्वर्युशब्दो दृश्यते । तस्माद् गौण, आध्वर्यवे वेदे समाम्नातान् पदार्थान् करोतीति कृत्वाऽध्वर्युरित्युच्यते, आग्नीध्र इति । तस्माद् आध्वर्यवः प्रैषः, आग्नीध्रः प्रैषार्थ इति ॥ २४ ॥ सि० ॥ प्रैषप्रैषार्थयोर्यथाक्रममाध्वर्यवाग्नीध्रनाधिकरणम् ॥ १२ ॥

## ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥

दर्शपूर्णमासयोरामनन्ति, ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं गृह्णातीति । तत्र सन्देह', किम् ऋत्विक् फलमाशासितव्यम्, अग्ने वर्चो विहवेष्वस्तु इति ? उत यजमानस्यति । किं प्राप्तम् । अध्वर्योरेवेति । कुत । एवं श्रुतिरादृता भविष्यति । इतरथा लक्षणा स्यात् । आत्मना यजमानं लक्षयेत् । तस्माद् ऋत्विक्फलमाशासितव्यमिति । कोऽर्थः । अनया समिधा धार्यमाणेऽग्नौ यागः सम्भविष्यति । तत्र विहवेषु स्पर्द्धास्थानेषु अहं वर्चस्वी भविष्यामीत्यध्वर्योर्वचनम् । एवमुत्साही भविष्यतीति ॥ २५ ॥ ॥ पूर्व० ॥

## स्वामिनो वा तदर्थत्वात् ॥ २६ ॥

यजमानस्य वा वचनं, तदर्थत्वात् कर्म्मण । यजमानार्थं हीदं कर्म्म साङ्गम् । उपग्रहविशेषात्, साङ्गस्यास्य प्रयोजन यजमानस्य फलनिष्पत्तिर्नाध्वर्यो सुप्रचरितुरपि यश । किमतो यद्येवं फलसङ्कीर्त्तनात् फलकर्त्तव्यता गम्यते । तदेतदग्न्यन्वाधानं यजमानस्य फलसङ्कीर्त्तन क्रियमाणेऽनेन मन्त्रेण फलसम्बन्धात् प्रकाशितं कृतं भवति, नाऽध्वर्युयश कीर्त्तनेन । तस्माद् यजमानफलमाशासितव्यमिति । अथ कस्मान्न यजमान एव मन्त्रो भवतीति । उच्यते । अग्न्यन्वाधान समाख्यया आध्वर्यवम् । तच्चैवंगुणो मन्त्रो करोत्या-

ध्वर्यवः । स उच्यतेऽनेन मन्त्रेणेति । तस्माद् आध्वर्यवो मन्त्रः । मम वर्चोऽस्त्वित्यपि यजमानस्य वर्चो ममेति व्यपदिशति लक्षणया । यथा, राजनि जयं वर्त्तमानं सैनिका अस्माकमिति व्यपदिशन्त्येवम् ॥ २६ ॥ ॥ सि० ॥

लिङ्गदर्शनाच्च ॥ २७ ॥

लिङ्गमप्यमुमर्थं दर्शयति । एवं हि आह । यां वै काञ्चन ऋत्विज आशिषमाशासते यजमानस्यैव सेत्याशिषो यजमानार्थकतां दर्शयति । तस्मादपि ब्रूमो यजमानफलमाशासितव्यमिति । पक्षोक्तमेव प्रयोजनमिति ॥ २७ ॥ ॥ हेतु ॥ करणमन्त्रेषु स्वामिफलस्याशासितव्यताधिकरणम् ॥ १३ ॥ वर्चोन्यायः ॥

कर्मार्थन्तु फलन्तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥

इदं समधिगतं, करणेषु मन्त्रेषु स्वामिन फलमाशासितव्यमिति । किमेष एवोत्सर्गः । नेत्याह क्वचित् ऋत्विजामपि फलमाशासितव्यमिति, यत्र कर्मार्थं फलम् । यथा, अग्नाविष्णू मावक्रमिषं विजिहाथां मा मा सन्ताप्तमिति । असन्तप्तोऽध्वर्य्युः कर्म्म शक्नोति कर्त्तुम् । कर्म्मसिद्धिर्यजमानस्योपकारिकेति ऋत्विक्फलमाशासितव्यमत्रेति ॥ २८ ॥

व्यपदेशाच्च ॥ २९ ॥

यत्र च व्यपदेशो भवति, तत्रार्त्विजम् । दक्षिणस्य हविर्द्धानस्याधस्ताच्चत्वार उपरवा प्रावेशमुखाः प्रादेशान्तरालाः । तत्र हस्तौ प्रवेश्याध्वर्युर्यजमानमाह, किमत्रेति । स आह, भद्रमिति । तन्नौ सहेत्यध्वर्युः प्रत्याहेति व्यपदेशो भवत्यध्वर्योर्यजमानस्य च । तन्नौ सहेत्युभयोर्वचनमध्वर्युयजमानयोः । तस्मादध्वर्युफलमाशासितव्यमत्रेति ॥ २९ ॥ ॥ ॥ करणमन्त्रेषु कर्मार्थफलस्य ऋत्विग्धर्मताऽधिकरणम् ॥ १४ ॥

द्रव्यसंस्कारः प्रकरणाविशेषात् सर्व्वकर्म्मणाम् ॥ ३० ॥

दर्शपूर्णमासयोर्बर्हिर्धर्मा वेदिधर्माश्च । तेषु सन्देह । किमङ्गप्रधानार्था, उत प्रधानार्था इति । प्रकरणात् प्रधानार्था इति । इति प्राप्ते, उच्यते । नैवं, द्रव्यसंस्कारोऽङ्गप्रधानार्थो, यथा व्याख्यानमेवोत्तरविवक्षया प्राप्तिरेषा क्रियते इति ॥ ३० ॥ द्रव्यसंस्कारस्याङ्-

प्रधानार्थताधिकरणम् ॥ १५ ॥

निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥

ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र श्रूयते । बर्हिषा यूपावटमवस्तृणाति, आज्येन यूपमनक्तीति । तत्र संशयः । किं तयोराज्यबर्हिषोराज्यबर्हिर्धर्मा प्राकृता कर्त्तव्याः, उत नेति । किं प्राप्तम् । कर्त्तव्या इति । कुतः । वाक्यं हि बर्हिर्मात्रस्याज्यमात्रस्य च धर्म्माणां विधायकम् । तदिहाऽपि वाक्य चोदकेन प्राप्तम् । न चैतद्बर्हिराज्यं निष्प्रयोजनम् । तस्मादत्र धर्म्माः क्रियेरन्निति ॥ एवं प्राप्ते ब्रूमः । निर्देशाद् विकृतावऽपूर्वस्यानधिकार । निर्दिष्टा एते धर्म्माः प्रकृतौ । यत्र प्रधानस्योपकुर्वन्ति प्राकृतकार्य्ययोराज्यबर्हिषोः । ये च प्रधानस्योपकारिणो धर्म्मास्ते इहातिदिश्यन्ते । प्रधान हि चोदकोऽपेक्षते, न धर्म्मान् । प्रधानस्य हि चोदकेन सामान्यं, न धर्म्माणाम् । अपि च । न अन्याऽर्थ इति ज्ञातेन सन्निहितेनाप्येकवाक्यता भवति अन्यसम्बन्धोपपत्तौ सत्याम् । यथा भार्या राज्ञः, पुरुषो देवदत्तस्येति । किमङ्ग पुनर्विप्रकृष्टेन, निर्ज्ञातं खल्वङ्गत्व प्रधानापेक्षायां भवति । केवलमिहाऽतिदेशः क्रियते । पदार्थापेक्षायामङ्गत्वमपि साधयितव्यं स्यात् । धर्म्माश्चापेक्ष्यमाणाः साधारणा भवेयु । तथा ऊहो नावकल्पेत । लिङ्गविशेषदर्शनाच्च व्यवतिष्ठेरन् धर्म्माः । तत्र दर्शनं नोपपद्येत । वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने इति । तथा न पिता वर्धते, न माता, न नाभिः, प्राणो हि स इति । तस्माद् यद्द्वारा प्रकृतौ कृताः, तद्द्वारैव विकृतौ, नान्यद्वारा । न च यूपावटस्तरणं प्रकृतावस्ति यूपाञ्जनं वा । तस्मान्न तत्र प्राकृता धर्म्मा भवेयुरपूर्वत्वात् ॥ ३१ ॥ ॥ अपूर्वप्राकृतधर्माणां विकृतावसम्बन्धाऽधिकरणम् ॥ १६ ॥

विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥

दर्शपूर्णमासयोरामनन्ति, समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्र करोति, तथा अरत्निमात्रे विधृती करोतीति । तत्र संशयः । किं वेदिस्तरणार्थाद् बर्हिषो विधृती पवित्रे, उतान्यत इति । किं तावत् प्राप्तम् । वेदिस्तरणार्थाद् बर्हिषः कार्ये । किं कार-

णम्। तद्धि प्रकृतं, धर्म्मांश्चाविशेषात् सर्वबर्हिषामर्थेन। तस्मात् तत इति प्राप्ते। ब्रूमः। अन्यतः क्रियेत। कुत। विरोधात्। कथं विरोधः। श्रूयते हि, त्रिधा तु पञ्चधा तु वा वेदींस्तृणातीति। तद् येनास्तीर्यते, कथं तद् विधृति पवित्रं क्रियेत। न हि सम्भवत्येकं स्तरणाय विधृतिपवित्राय च। तदेतदुपदिष्टवचनमनेकगुणत्वं चोभे अप्यसम्भाविनी प्रतिज्ञाते स्याताम्। तस्मान्न तत. क्रियेतेति। यदि न तत', कुतस्तर्हि। अव्यक्त एवञ्जातीयक. शेषे। अस्ति तत्र परिभोजनीयं नाम बर्हि, तत' कर्त्तव्यम् ॥ ३२ ॥ ॥ विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्त्तव्यताधिकरणम् ॥ १७ ॥

**अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥**

ज्योतिष्टोमे श्रूयते, पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे इति। तत्र संशय। किमन्यत एवं क्रियेत, उत प्रकृतेभ्य इति। किं प्राप्तम्। पूर्वेण न्यायेनाऽन्यत इति। तत्रोच्यते। तत एकदेशस्यापनयः। कुतः। विद्यमानसंयोगात्। विद्यते हि तत्र पुरोडाशो धानाः पयस्या च। तत्संयोग एव न्याय्यो नान्यसंयोग इति। पुरोडाशादीनामेव संस्कारो, नैन्द्रवायवादीनाम् 'कुतः। पुरोडाशादिषु द्वितीयादर्शनात्। प्रत्यक्षश्चैकदेशापनयेन उपकारो, नैन्द्रवायवादिसम्बन्धेन। एवं प्रकृतानुग्रहो भविष्यति। तस्मात् प्रकृतस्योपदेशेन तत् क्रियेत। न चात्रोपदिष्टो देश आशङ्क्योऽनेकगुणभावश्चान्येन शकलेन होमोऽन्यश्च प्रतिपाद्यते इति ॥ ३३ ॥ ॥ प्राकृतपुरोडाशादीनां निधानाधिकरणम् ॥ १८ ॥

**विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥**

इदमामनन्ति। यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्त्तव्या इति। अत्र संशय। किमङ्गप्रधानार्थमुपांशुत्वम्, उत प्रधानार्थमिति। किं प्राप्तम्। विकृतौ सर्वार्थः शेष. स्यात्। अविशेषादङ्गानां प्रधानानां च प्रकृतिवत्। यथा प्रकृतौ वेदिधर्म्मा आज्यधर्म्माश्चाङ्गप्रधानार्था', एवमत्रापि ॥ ३४ ॥ पूर्व० ॥

**मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ॥ ३५ ॥**

प्रधानार्थो वा एष विकृतिषु स्यात्। एवमिदं सर्वार्थमुच्येत, प्रकरणं बाधित्वा वाक्येनाङ्गप्रधानार्थमिति। तदेवेदानीं वाक्यं वि-

डोषितं, काम्या इष्टय इति । काम्याश्च प्रधानयागाः, अङ्गयागाः प्रधानार्थाः । तस्माद् अङ्गमचोदितम् । यत् कामेन फलवच्चोद्यते, तदेवानया उपांशुत्वेतिकर्त्तव्यतयाऽनुबध्यते । तस्मात् प्रधानार्थमुपांशुत्वम् ॥ ३५ ॥ ॥ सि० ॥ काम्येष्टिषूपांशुत्वधर्मस्य प्रधानार्थताऽधिकरणम् ॥ १९ ॥

## सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ ३६ ॥

श्येने श्रूयते, घृतनवनीतमाज्यमिति । तत्र सन्देहः । किं नवनीतं प्रधानस्य, उताङ्गानामिति । किं प्राप्तम् । प्रधानस्य । तस्य हि प्रकरणमिति वचनप्रामाण्यान्नवनीतेन प्रधानं निर्वर्त्तयितव्यमिति । एवं प्राप्ते ब्रूमः । असम्भवे एतस्मिँस्तदङ्गानां श्येनाङ्गानां स्यात् । कथमसम्भवः ? । सोमद्रव्यकत्वात् प्रधानस्य । ननु वचनान्नवनीतं भविष्यति । न श्येने नवनीतं भवतीत्येष वाक्यार्थः । कस्तर्हि ? । श्येने नवनीतमाज्यं भवतीति नवनीताज्यसम्बन्धो विधीयते, श्येनाज्यसम्बन्धोऽनूद्यते । न च साक्षाच्छ्येनस्याज्यसम्बन्धोऽस्ति, श्येनाङ्गानां तु विद्यते । यस्यास्ति, तस्यानूद्य नवनीतं विधीयते सन्निधानविशेषात् ॥ ३६ ॥

## आधानेऽपि तथेति चेत् ॥ ३७ ॥

एवं चेद् दृश्यते, श्येनाङ्गानां नवनीतमिति, आधानेऽपि पवमानेष्टिषु स्यात् । ता अपि हि श्येनस्योपकुर्वन्ति, तत्संस्कृतेऽग्नौ श्येनो निर्वर्त्तते इति ॥ ३७ ॥ ॥ आ० ॥

## नाप्रकरणत्वादङ्गस्य तन्निमित्तत्वात् ॥ ३८ ॥

न श्येनस्य प्रकरणे पवमानेष्ट्योऽग्न्याधानं वा श्रूयते । किमतः? यद्येवम्, आधानस्य च श्येनस्य च न कश्चिदस्ति सम्बन्धः, अग्नीनामाधानम्, अग्नयश्च श्येनस्य । तस्मान्न पवमानहविःषु नवनीतम् । नैतच्छ्येनाङ्गत्वे निमित्तं, यदाधानमग्नीनामुपकरोति । यदि प्रकरणादीनामन्यतमदस्ति, तन्निमित्तं भवेत् । तस्मान्न श्येनाग्न्याधानयोः सम्बन्धोऽस्तीति ॥ ३८ ॥ आ० नि० ॥ श्येनाङ्गानां नवनीताऽऽज्यताधिकरणम् ॥ २० ॥

## तत्काले वा लिङ्गदर्शनात् ॥ ३९ ॥

इदमिदानीं सन्दिह्यते, किं सुत्याकालानामङ्गानां नवनीतमुत

सर्वेषामिति । सुत्याकालानां स्यात् । लिङ्गदर्शनात् । इदं श्रूयते । सह पशूनालभते इति । तत्र पुनर्वचनम्–अग्नीषोमीयस्य स्थानेऽग्नीषोमीयः पुरोडाशः, अनुबन्ध्यायाः स्थाने मैत्रावरुणीयस्येति च स्थाने शून्ये दर्शयति । तेनाऽवगम्यते श्येनस्य वचनं सुत्याकालानामङ्गानां विशेषं विदधातीति ॥ ३९ ॥ ॥ पूर्व० ॥

## सर्वेषां वाऽविशेषात् ॥ ४० ॥

सर्वेषामेव चाङ्गानां नवनीतं स्यात् । कुतः । अविशेषात् । असति विशेषे सर्वेषामप्यङ्गानामिति ॥ ४० ॥ ॥ सिद्धान्तः ॥

## न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

यदुक्तं लिङ्गं, तत्परिहरणीयम् । नास्ति तावत् प्रमाणं यच्छ्येनस्य वचनं सुत्याकालानामङ्गानामिति । किन्तु दर्शनम् । तदप्रमाणमूलत्वान्मिथ्यादर्शनं मृगतृष्णावत् । कथं तु मध्ये पशूनामालम्भ इति । न्यायात् । को न्यायः । क्रमानुग्रहः । एवं वचनवर्जितः क्रमोऽनुगृहीतो भवतीति । तस्मात् सर्वेषामङ्गानां नवनीतमिति ॥ ४१ ॥ आ७ नि० ॥ सर्वेषामेव श्येनाङ्गानां नवनीताज्यताधिकरणम् ॥ २१ ॥

## मांसन्तु सवनीयानां चोदनाविशेषात् ॥४२॥

शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेदं समामनन्ति– संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति, तेषां तरसाः पुरोडाशाः सवनीया भवन्तीति । तत्र सन्देह । किं सवनीयानामन्येषाञ्च सम्भवतां पुरोडाशानां स्थाने तरसा, उत सवनीयानामेवेति । किं प्राप्तम् । सर्वपुरोडाशानां मांसमयता स्यात् । न शक्यते पुरोडाशानां च मांसमयता विधातुम् । सवनीयशब्देन च पुरोडाशान् विशेषयितुम् । भिद्येत हि तथा वाक्यम् । तस्मात् सर्वपुरोडाशानां मांसमयतेति । इति प्राप्ते, उच्यते ॥ मांसं तु सवनीयानां स्यात् । तरसाः सवनीया भवन्तीति तरससवनीयसम्बन्धो विधीयते, तरसाः पुरोडाशा भवन्ति इत्ययं त्वनूद्यते । कुत एतत् । सर्वपुरोडाशेषु सवनीयशब्दोऽनुवादो न घटते, पुरोडाशशब्दस्तु सवनीयेष्ववकल्पते । तस्मात् पुरोडाशशब्दोऽनुवाद इति । तस्मात् सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति ॥ ४२ ॥

भक्तिरसन्निधावन्याय्येतिचेत् ॥ ४३ ॥

इति चेत् पश्यसि, सवनीयेषु पुरोडाशशब्दोऽनुवादो भविष्यतीति । धानादिषु पुरोडाशशब्दो न वर्त्तते । भक्तिश्चान्याय्या मुख्ये सम्भवति ॥ ४३ ॥ ॥ आ० ॥

स्यात् प्रकृतिलिङ्गत्वाद् वैराजवत् ॥ ४४ ॥

प्रकृतौ ज्योतिष्टोमे धानादिष्वयं पुरोडाशशब्दो भाक्तः, सन्निहिते प्रयुक्तः । इहापि भाक्त एव प्रयोक्ष्यते । अत्रापि हि सवनीयशब्देन ते सन्निहिताः । प्रकृतौ लिङ्गसमवायाच्छब्दप्रवृत्तिर्विकृतावपि तथैव । यथा, छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्तीति । यथा उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा इति प्रकृतिलिङ्गेन सामशब्देन वैरूपपृष्ठो वैराजपृष्ठ इति गम्यते । एवमिहापि सवनीयानां मांसमयतेति ॥ ४४ ॥ ॥ आ० नि० ॥ ॥ सवनीयानां मांसमयताऽधिकरणम् ॥ २२ ॥

इति श्रीशबरस्वामिविरचिते मीमांसाभाष्ये तृतीयस्याऽध्यायस्याऽष्टमश्चरणः ॥ ३ ॥ ८ ॥ सम्पूर्णश्च तृतीयोऽध्यायः ॥ ३ ॥

॥ १ ॥

शाबरभाष्ये तृतीयाध्यायचतुर्थचरणे नवमसूत्रानन्तरं
षण्णां सूत्राणां व्याख्या नोपलब्धेति तेषां
वार्तिकमेव मुद्रितं वेदितव्यम् ॥

---

## उपवीतं लिङ्गदर्शनात् सर्वधर्मः स्यात् ॥ १ ॥

अत. परं षट् सूत्राणि भाष्यकारेण न लिखितानि तत्र व्याख्यातारो विवदन्ते । केचिदाहुर्विस्मृतानि । लिखितो ग्रन्थः प्रलीन इत्यपरे । फल्गुत्वादुपेक्षितानीत्यन्ये । अनार्षत्वादित्यपरे । तथाच, दिग्विभागश्च तद्वदिति निवीताधिकरणातिदेशस्तदानन्तर्यादुपपद्यत इति । वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि । सन्ति च जैमिनेरेवम्प्रकाराण्यप्यनत्यन्तसारभूतानि सूत्राणि । व्यवहितातिदेशाश्च पानव्यापच्च तद्वदित्यादिष्वाश्रिताः । तस्मात् सूत्रमात्रं व्याख्येयम् । तत्र कैश्चित्त्रीण्यधिकरणानि कल्पितानि । अपरैश्चत्वारि । प्रथमं तावदिदं चिन्त्यते । यदेतत्पूर्वाधिकरणे दर्शपूर्णमासयोर्विधीयमानत्वेनोपवीतमुदाहृतं तत्र सन्देह । किं तद्दर्शपूर्णमासयोरेवावतिष्ठते अथ वा सर्वकर्मार्थमिति । ये त्वधिकरणत्रयं समर्थयन्ते तेषामेवं सन्देहः ।किं दर्शपूर्णमासयोरवस्थान विधिश्चाथ सर्वकर्मार्थत्वमनुवादश्चेति॥किं प्राप्तम् । सर्वधर्म स्यात् । कुत ॥ कर्मान्तरेऽनुवादोऽस्य सिद्धवद्य प्रतीयते * सोऽन्यथानुपपत्त्यैतां लिङ्गत्वात् प्रक्रियां जयेत्॥मृताग्निहोत्रे हि पितृदेवत्ये श्रूयते, प्राचीनावीती दोहयेत्,यज्ञोपवीती हि देवेभ्यो दोहयतीति। तद्यदि सर्वार्थमुपवीतं ततोऽयं पित्र्येऽग्निहोत्रसम्बन्धी नित्यवद् यज्ञोपवीतानुवादोऽवकल्पते । न चाऽयं दर्शपूर्णमासस्थस्यैवानुवादः । विप्रकृष्टत्वात्। हेतुवन्निगदार्थवादानर्थक्याच्च।यदि हि तस्मिन्नेव कर्मण्यन्यावस्थेयं धर्मो भवति, ततश्च तदवस्थापरिजिहीर्षया हेतुवन्निगदोऽवकल्पते । न तु क्रत्वन्तरस्थं परिहर्त्तव्यमत्यन्तविप्रकर्षेणैवाप्रसक्तत्वात् । न च देवेभ्य इति बहुवचनं दर्शपूर्णमासयोरवकल्पते । वैकल्पिकेन्द्रमहेन्द्रैकदेवत्यत्वात् साम्नाय्यस्य। अग्निहोत्रे तु सायम्प्रातर्दैवतालोचनेनोपपन्नं बहुत्वम् । तस्मादग्निहोत्रस्थोपवीतानुवादान्यथानुपपत्ते सर्वधर्मत्वमिति ॥१॥

## न वा प्रकरणात्तस्य दर्शनम् ॥ २ ॥

न वा सर्वधर्मः । कुतः । प्रकरणाद्दर्शपौर्णमासार्थत्वप्रतीतेः । अथ यदुक्तं लिङ्गदर्शनादिति । परिहृतं तत् । तस्यैवैतद्दर्शनं दर्शपूर्णमासस्थस्येति । सन्निकृष्टानुवादासम्भवे च विप्रकृष्टानुवादोऽप्याश्रीयते । यथाप्राप्त्यपेक्षो हि स भवति । बहुवचनं चाविवक्षितम् । अथ वा प्रकृतिविकृतिदेवतालोचनेनोपपत्स्यते । ततश्चायमर्थो भवति । यस्माद्देवयुक्तकर्मान्तरधर्मोऽयमतः पित्र्येऽग्निहोत्रे न कर्त्तव्य इति ॥ २ ॥ ॥ उपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ १ ॥

## विधिर्वा स्यादपूर्वत्वात् ॥ ३ ॥

तदेवोदाहरणमुपन्यस्यते देवलक्ष्ममेव तत्कुरुत इति । तत्र विधिरनुवाद इति सन्देह । कथं पुनरनवधारिते विधित्वे सर्वार्थत्वदर्शपूर्णमासार्थत्वविचारो वृत्तः । सिद्धेन व्यवहारादिदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यम् । किं प्राप्तम् । अनुवाद इति । कुतः ॥ स्मृतिभि पुरुषो नित्यं कृतो यज्ञोपवीतवान् * वर्त्तमानापदेशाश्च न विधावुपपद्यते ॥ नित्योदकी नित्ययज्ञोपवीतीति हि सर्वदा यज्ञोपवीतं प्राप्तं क्रतावप्यस्ति । न चैष विधिसरूपः शब्द' । तस्मादनुवाद इति । एवञ्च निवीतप्राचीनावीताभ्यामवैलक्षण्यं भविष्यतीत्येवं प्राप्ते ब्रूम ॥ विधिरेष भवेदेवमपूर्वोऽर्थो विधास्यते * सर्वानुवादो व्यर्थो हि स्तुतेश्च विधिकल्पना ॥ न हि समस्तानुवादवाक्यस्य किञ्चित् फलमस्ति । निवीतप्राचीनावीतसङ्कीर्त्तनमपि च विधीयमानोपवीतस्तुत्यर्थत्वेनैवार्थवद्भविष्यति । वर्त्तमानापदेशानामपि च तदाभासत्वात्प्रयोगवचनाऽर्थवादपञ्चमलकारेभ्यो विधिशक्तिर्व्याख्याता । तस्माद्विधिः । यत्तु स्मृतेरेव प्राप्तमिति । तत्राप्यपूर्वत्वादिदमेवोत्तरम् । अन्य एव ह्यसौ पुरुषधर्मे प्राप्तोऽन्यश्चायमपूर्वः क्रतुधर्मो विधीयते।तस्मान्नानुवादः । अस्य च प्रयोजनं कर्त्रधिकरणे वक्ष्यामः। एवं वा, यत्तु मृताग्निहोत्रे श्रूयते— प्राचीनावीती दोहयेत् । यज्ञोपवीती हि देवेभ्यो दोहयतीति । तत्रैवं विचार्यते । किमिदमहीनस्थितमिव द्वादशत्वं दर्शपौर्णमासगतमेव स्तुत्यर्थमुक्तम् ? उत जीवदग्निहोत्रे विधानार्थमिति । किं प्राप्तम्।ततः पूर्ववदेव सूत्रं व्याख्यातव्यम् । एवञ्च सति प्रकरणबहुवचनयोरनुग्रहो भविष्यति । तस्मात् सत्यप्यनुवादसरूपत्वेऽर्थवत्त्वाय प्रयोगवचनादिभ्यो विधित्वं कल्पनीयम् । एतस्मिंश्च व्या-

स्थाने स्थितं तावदपर्यवसितमित्येवमुत्तरमधिकरणमारब्धव्यम्॥३॥
उपवीतस्य विधित्वाधिकरणम् ॥ २ ॥

## उदक्त्वं वाऽपूर्वत्वात् ॥ ४ ॥

तस्मिन्नेव मृताग्निहोत्रे श्रूयते । ये पुरोदञ्चो दर्भास्तान् दक्षिणाऽग्रांस्तृणीयादिति । केचित्तु महापितृयज्ञे श्रूयत इत्युदाहरन्ति । तत्र, ये पुरोदञ्च इत्यत्र सन्देहः । किं विधिरनुवाद इति । किं प्राप्तम् । ततश्च शब्देनान्वादिश्यते । अयमपि विधिरपूर्वत्वादिति । प्राप्तिपूर्वको ह्यनुवादो भवति । न चास्य पुरुषार्थतयाऽपि प्राप्तिरस्ति । न चाऽस्य स्तुत्यऽर्थताऽपि युज्यते । हिशब्दाद्यप्रयोगात् । तस्मात् सिद्धवदुक्ताऽन्यथाऽनुपपत्त्यैवास्यापि विधित्वमिति ॥ ४ ॥

## सतो वा लिङ्गदर्शनम् ॥ ५ ॥

आचारप्राप्तस्योदगग्रत्वस्य द्योतकमात्रं लिङ्गदर्शनमेतन्न विधिः । कुत. ॥ लिङ्गादिरहिते वाक्ये तदा विधिरूप्यते * न कथञ्चिद्यदा युक्त्या प्राप्तिलेशोऽपि गम्यते ॥ यच्छब्दयोगाद्दाख्याततद्विशेषरहितत्वाच्च स्फुटमिहानुवादत्वमवधारितम् । तद्यथा कथञ्चिदपि प्राप्तौ सत्यां नातिक्रमितव्यम् । अस्ति चात्र प्राप्तिरग्रवन्ति प्रागग्राणि उदगग्राणि वाऽपवर्गवन्ति प्रागपवर्गाण्युदगपवर्गाणि वेति स्मृतेः । तस्मात्तत्समानार्थ एवायं सिद्धवदनुवादः । तथैव च स्तुत्यर्थं । पुरा ह्येतदुक्तं, न तु साम्प्रतं मृतावस्थायामिति । स्थितादृण्येतदेवोत्तरम् । हिशब्दवदाख्यातेन यत. कुतश्चित् प्राप्तेरपेक्षितत्वात् । प्रकरणे च तदभावात् किमनवगम्यमानमेव विधित्वं कल्पितम् ? उत यत्रतत्रस्था प्राप्तिराश्रीयतामिति । तत्र प्राप्त्याश्रयणमपेक्षितं, न तु विधित्वमिति तदेव ज्यायः । प्रकरणबहुवचनयोश्चोक्तम्, अस्त्येव चान्योऽत्र विधिरिति नानर्थक्यम् ॥ तस्मादनुवाद इति नित्येऽग्निहोत्रे दोहे, विनाऽप्युपवीतेनाऽवैगुण्यम् ॥ ५ ॥ ॥ ॥ उपवीतोदगग्रत्वयोरनुवादताऽधिकरणम् ॥ ३ ॥

## विधिस्तु धारणेऽपूर्वत्वात् ॥ ६ ॥

इदानीमेवंविधशब्दाभावेऽनुवादत्वस्यातिप्रसक्तस्याऽपवाद आरभ्यते । तत्रैव दिष्टगताग्निहोत्रे महापितृयज्ञे वा श्रूयते, अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयतीति । तत्रोपरि हि

देवेभ्य इत्यत्र पूर्ववदेव विध्यनुवादत्वसन्देहे हिशब्दयोगाद् वर्त्त-
मानापदेशाद्विध्यन्तरेण चैकवाक्यत्वादाचारतश्च प्राप्तेरनुवाद इति
प्राप्नोति। कथमाचारत प्राप्तिरिति चेत्। उच्यते॥ सर्वमभ्यर्हितं
द्रव्य प्रच्छादनमपेक्षते * यत्र क्वचन च प्राप्ते समित्तत्र नियम्यते॥
देवार्थस्य स्रुचि प्रक्षिप्तस्य हविष आहवनीयदेश नीयमानस्यावश्य-
मेव हस्तो वाऽन्यद्वा किञ्चिद् द्रव्यम् आचारादुपरि दातव्यम्। तत्र
प्रत्यासत्ते समिन्नियम्यते। स्रुग्दण्डे समिधमुपगृह्यानुद्रवतीति
चास्यापि विधेराचारापेक्षितार्थविधानादेतदेव फल विज्ञायते। त-
स्मादुपरिधारयतीति प्राप्तस्योपवीतादेरिवाऽनुवाद। सतो वा लिङ्ग-
दर्शनमिति प्राप्ते, अभिधीयते॥ धारणे विधिरेव स्याद् न हि प्राप्ति
कुतश्चन * समित्प्रच्छादनाशक्तेर्नाचारादुपरिस्थता॥ सत्यमाचारात्
प्रच्छादन कर्त्तव्य, न तु तत्र समित् पक्षेऽपि प्राप्नोति या सन्निधोर्न्नि-
यम्येत। हस्ताद्येव हि तत्र योग्यत्वात् प्राप्नुयान्न समित्। ननु च
सोमचमसादीना वचनसामर्थ्याद्या काचिदानत्यर्थता भवत्येवमत्रापि
या काचित् प्रच्छित्तिर्भविष्यतीति। भवेदेव यदि तदीयदक्षिणासंयोग-
वदिहापि प्रच्छादनसयोग श्रूयेत। न तु श्रूयते। उपसङ्ग्रहमात्रविधा-
नात्। यदि सोमचमसेऽपि दक्षिणासयोगरहित दानमात्रमश्रोष्यत
ततो नैवानत्यर्थत्वमाश्रयिष्यतास्रुग्दण्ड इति च देशनियमात् सुतरां
हविष प्रागसौ धारयितव्या। तेनोपरिधारणमप्राप्तम्॥ न चाऽप्राप्तं
हेतुवन्निगदेन वर्त्तमानापदेशेन वाऽनुवदितुं शक्यम्। अतोऽस्य
व्यवधारणकल्पनयाऽनुवादसरूपत्व भङ्क्त्वा वाक्य भित्त्वा विधि-
त्वमाश्रीयते। पित्र्ये होमेऽधस्तात् स्रुग्दण्डस्य समिद्धारयितव्या।
दैवे च पुनरुपरिष्टादिति। विधित्वे चैवमादीनामुक्त कल्पनाप्रकार।
तस्माद्विधिरिति॥ ६॥ ॥ समिद्धारणस्य विधिताधिकरणम्॥ ४॥

श्रीहरिः ।

# मीमांसादर्शनम् ।



श्रीशबरस्वामिविरचितभाष्यसहितम् ।

चतुर्थप्रभृति-षष्ठाध्यायपर्यन्तम् । ४-६ ।

पं० रत्नगोपालभट्टेन संशोधितम् ।

चौखम्भासंस्कृतपुस्तकालयाऽध्यक्ष-
हरिदासात्मजहरिकृष्णदासगुप्तेन
स्वकीये विद्याविलास यन्त्रे
संमुद्रितम् ।

—:o:—

# MÎMÂNSÂDARŜANA,

With the commentary of Sabara swami.

FOUR TO SIX CHAPTERS.

Edited by

Paṇḍita Ratna Gopâla Bhaṭṭa

PRINTED AT SHE VIDYÂ VILÂSA PRESS,

BY HARIKRISHNA DÂSA GUPTA.

BENARES CITY.

1910.

श्रीहरिः ।

# मीमांसादर्शनाधिकरणसूची ॥ अ० ४ । ५ । ६ ॥

अ० ५ । पा० २ ॥



अ० ५ । पा० ३ ॥



अ० ५ । पा० ४ ॥

अ० ६ । पा० ४ ॥



अ० ६ । पा० ५ ॥

श्रीगणेशाय नमः ।

अथ मीमांसादर्शने शाबरभाष्ये चतुर्थे अध्याये

प्रथमः पादः ॥ ४ ॥ १ ॥

## अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम् । इहेदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते । कः क्रत्वर्थः । कः पुरुषार्थ इति । यापि प्रयोजकाप्रयोजकफलविध्यर्थवादाऽङ्गप्रधानचिन्ता, साऽपि क्रत्वर्थपुरुषार्थजिज्ञासैव । कथम् । अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः । फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः । प्रयोजकः कश्चित् पुरुषार्थोऽप्रयोजकः क्रत्वर्थः । तस्मात् क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति सूत्रितम् । तत्र, अथातःशब्दौ प्रथमे एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति प्रकृतं शेषविनियोगलक्षणमपेक्षते । अत इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते । क्रतवे यः स क्रत्वर्थः । पुरुषाय यः स पुरुषार्थः । जिज्ञासाशब्दोऽपि तत्रैव समधिगतः । ज्ञातुमिच्छा जिज्ञासेति । तदेतत् प्रतिज्ञासूत्रं, क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति ॥ १ ॥ ॥ प्रतिज्ञाऽधिकरणम् ॥ १ ॥

## यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ॥ २ ॥

अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थ इति लक्षणं वाच्यम् । तथा हि लघीयसी प्रतिपत्तिः, पृष्टाकोडेन उपदेशो गरीयसी । तदुच्यते । यस्मिन् प्रीतिः पुरुषस्य, यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिर्भवति स पुरुषार्थः पदार्थः । कुतः । तस्य लिप्सा अर्थेन च भवति, न शास्त्रेण । क्रत्वर्थो हि शास्त्राद् अवगम्यते, नान्यथा । अविभक्तो हि पुरुषार्थः प्रीत्या । यो यः प्रीतिसाधनः स पुरुषार्थः पुरुषाऽर्थे लक्षिते तद्विपरीतः क्रत्वर्थ इति क्रत्वर्थस्य लक्षणं सिद्धम् ॥ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा सूत्रं वर्ण्यते । दर्शपूर्णमासयोराम्नायते अनतिदृश्यं स्तृणाति, अनतिदृश्यमेवैनं प्रजया पशुभिः करोतीति । तथा, आहा-

र्थपुरीषां पशुकामस्य वेदिं कुर्य्यात्, वत्सजानुं पशुकामस्य वेदं कुर्य्यात्, गोदोहनेन पशुकामस्य प्रणयेदित्येवमादीनि । तत्र संशयः । किमेवञ्जातीयका: क्रत्वर्थाः, उत पुरुषार्था इति । किं प्राप्तम् । क्रत्वर्था इति । कुतः । प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं च । तदुक्तं, द्रव्यगुणसंस्कारेषु बादरिरिति । तस्मात् क्रत्वर्थाः इत्येवं प्राप्तम् ॥ एवं प्राप्ते ब्रूमः । यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एवेति । प्रीतिस्तेभ्यो निर्वर्त्तते । तस्मादेते पुरुषार्था इति । ननु प्रत्यक्ष उपकारः क्रतोर्दृश्यत इत्युक्तम् । उच्यते । सत्यं दृश्यते, न तु क्रतोरुपकाराय एभ्य सङ्कीर्त्तितेभ्यः फलेभ्य एते श्रूयन्ते । न च य उपकरोति स शेषः । यस्तु यदर्थः श्रूयते स तस्य शेष इत्युक्तं, शेषः परार्थत्वादिति ॥ ॥ द्वितीयवर्णकम् ॥ २ ॥

एव वा, द्रव्यार्जनमुदाहरणम् । इह द्रव्यार्जनं तैस्तैर्नियमैः श्रूयते । ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना । तत्र सन्देहः । किं क्रत्वर्थो द्रव्यपरिग्रहः, उत पुरुषार्थ इति । किं प्राप्तम् । क्रत्वर्थो नियमात् । यद्येष पुरुषार्थ स्यान्नियमोऽनर्थको भवेत् । प्रत्यक्षेण तदवगम्यते । नियमादनियमाच्चार्जितं द्रव्यं पुरुषं प्रीणयतीति । तस्मात् क्रत्वर्थः । कामश्रुतिभिश्चास्य सहैकवाक्यता दृष्टा । इतरथाऽनुमेयेन फलवाक्येन सहैकवाक्यतां यायात् । लिङ्गं चापि भवति । अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याहिताग्ने सतोऽग्निर्गृहान् दहेत्, यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेदित्येवमादि । तद्धि द्रव्योपघाते चोद्यते । यदि द्रव्यपरिग्रहः कर्मार्थस्तत एतदपि सति सम्बन्धे कर्मार्थमित्युच्यते । इतरथाऽसति सम्बन्धे कर्मार्थमित्यनुमीयते । फलं चास्य कल्प्येत । तस्माद् यजतिश्रुतिगृहीतं द्रव्यार्जनं येन विना यागो न निर्वर्त्तते, स यागस्य श्रुत्या परिगृहीत इति गम्यते । तस्मात् क्रत्वर्थ इति ॥ एवं प्राप्ते ब्रूमः । पुरुषार्थ इति । एतस्मिन् कृते पदार्थे प्रीतिः पुरुषस्य भवति, तस्मादस्य लिप्सा अर्थलक्षणा शरीरधारणार्था । यस्य शरीरं ध्रियते, व्यक्तं तस्यास्ति द्रव्यम् । शरीरिणश्च यागः श्रूयते । तस्माद् विद्यमानद्रव्यस्य विनियोग उच्यते । न द्रव्यार्जनं श्रुतिगृहीतं, विनापि हि द्रव्यार्जनवचनेनार्जन शब्दस्य यागो निर्वर्त्तत एव । तस्मात् पुरुषार्थो द्रव्यपरिग्रहः । अपि च, यदि शास्त्रात् कर्मार्थं द्रव्यार्जनं, त-

ऽन्यत्र विनियुज्येत तथार्जितम् । तत्र सर्वतन्त्रपरिलोपः स्यात् । अपि च, उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः । तत्रैतन्नोपपद्यते । अपि वा एष सुवर्गाल्लोकाच्छिद्यते, यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वा अतिपातयेदिति । एवञ्च सति, प्रयोगकालाद् बहिरेतदङ्गं सदनुपकारकं स्यात् । न चाऽऽधानवद् भवितुमर्हति । तत्र हि वचनं, वसन्तेऽग्निमादधीतेति । न चैतदङ्गम् ॥

अथ यदुक्तं, नियमवचनमनर्थकं, पुरुषार्थे द्रव्यपरिग्रहे सतीति । उच्यते । नैतावता पुरुषार्थता व्यावर्त्तते । प्रत्यक्षा हि सा । त्वया च परोक्षं युक्तिबुद्ध्या व्यपदिश्यते । न च परोक्षं प्रत्यक्षस्य बाधकं भवति । तस्मान्नियमवचनात् काममपरमदृष्टं कल्प्येत, न तु दृष्टहानम् । तस्माद् यत् पुरुषस्य प्रयोजनं प्रीतिः, तदर्थं धनस्यार्जनमित्येवं च सति, व्रीहिणा यागः कर्त्तव्यः, प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा । नात्र कश्चिद् विशेषः । प्रीत्यर्थमुपार्जितोऽपि व्रीहिः व्रीहिरेव, कर्म्मार्थमुपार्जितोऽपि व्रीहि व्रीहिरेव । तस्मान्न प्रयोगचोदनागृहीतं द्रव्यार्जनम् ॥

अथ यदुक्तम्, अनुमेयेनाप्रकृतेन वा शब्देन युष्मत्पक्षे तु नियमस्यैकवाक्यता, अस्मत्पक्षे तु दृष्टेन प्रयोगवचनेनेति । नैष दोष । अस्मत्पक्षेऽपि दृष्टेन भुजिना, न फलवचनेन । कथं तर्हि । नियमाद्ऽदृष्टं भवतीति गम्यते । यथैव भवदीये पक्षे । आह । अस्मत्पक्षे फलवत एकवाक्यभावात् फलवत उपकरोतीति गम्यते । उच्यते । अस्मत्पक्षेऽपि फलवत एवैकवाक्यभावः । एतावांस्तु विशेषः । तव श्रुतं फलं, मम तु दृष्टमिति ॥

अथ यल्लिङ्गमुक्तं, गृहदाहादिषु कर्म श्रूयते इति । तत्रोच्यते । यद्यपि न क्रत्वर्थं द्रव्यार्जनं, तथापि दाहे निमित्ते फलाय वा कर्माङ्गभावाय वा जामवत्यादीनां विधानमुपपद्यते एव । तस्मात् पुरुषार्थं द्रव्यार्जनं, प्रीत्या हि तदविभक्तमिति ॥२॥ तृतीयवर्णकम् ॥३॥ क्रत्वर्थपुरुषार्थलक्षणाधिकरणं वर्णकान्तरद्वयसहितम् ॥२॥

**तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्याऽनतिशङ्कत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥**

इह प्रजापतिव्रतानि उदाहरणम् । नोद्यन्तमादित्यमीक्षेत नास्तं यन्तमित्यादीनि । तत्र सन्देहः । किं क्रत्वर्थानि प्रजापतिव्रतानि उत पुरुषार्थानीति । किं प्राप्तम् । क्रत्वर्थानीति । कुतः । एवं हि फलं न कल्पयितव्यं भविष्यतीति । ननु श्रूयते एवैतेषां फलमेतावता हैनसाऽयुक्तो भवतीति । उच्यते । नैतत् फलपरं वचनं, वर्त्तमानापदेश एवैष शब्द इति । तेन यत्रादित्य ईक्षितव्यः प्राप्तस्तत्रायं प्रतिषेध । उद्यतोऽस्तंयतश्च नियमो वा स्यात् कश्चित् कर्माङ्गभूतः ॥ एवं प्राप्ते ब्रूमः ॥ तदुत्सर्गे ॥ प्रीत्युत्सर्गेऽपि कर्म्माणि पुरुषार्थाय भवेयुरेवञ्जातीयकानि । कर्त्तुरेतानि उपदिश्यन्ते, न कर्मण । अर्थप्राप्तेन कर्त्रा सम्बन्धो यः, स विधित्सित । न कर्मसम्बन्धोऽविद्यमान एव । शास्त्रं चानतिशङ्क्यं पितृमातृवचनादपि प्रमाणतरम् । स्वयं हि तेन प्रत्येति । इन्द्रियस्थानीयं हि तत् । न चैवमादिभिर्द्रव्यस्य कश्चिद् दृष्ट उपकारः साध्यते । तस्मात् तेन पुरुषार्थेनाऽभिसंयोगात् क्रियायामेवञ्जातीयकायां पुरुष. श्रूयते । अपि च पुरुषप्रयत्नः पदार्थविधिमात्र लक्षयितुमुच्चार्य्येत । स्वयमविवक्षितः स्यात् ॥

अथ यदुक्तं, यत्रादित्यस्येक्षणं प्राप्तं, तत्रोद्यतोऽस्तंयतश्च प्रतिषेध इति । सत्यं प्रतिषेधो न्याय्यः । तथा श्रुतिरनुगृह्येत, इतरथा नियमो लक्ष्येतेति । किन्त्विह नियमः शब्देन श्रूयते, तस्य व्रतमिति तेन नियम एष – नोद्यन् आदित्य ईक्षितव्य इति । अपि चैतावता हैनसाऽयुक्तो भवतीति पुरुषसम्बद्धो दोषः कीर्त्यते, न कर्मसम्बद्ध. । तस्मात् पुरुषार्थानि प्रजापतिव्रतानीति । गोलक्षणान्यप्येवमेव कर्त्तरीकर्ण्यं कर्त्तव्या इत्येवमादीनि ॥ ३ ॥

## अतिशेषात्तु शास्त्रस्य यथाश्रुतिफलानि स्युः ॥ ४ ॥

उच्यते । यद्येवम्, इमान्यपि पुरुषार्थानि स्युः । समिधो यजति, तनूनपातं यजति, नानृतं वदेदित्येवमादीनि । अत्रापि पुरुषप्रयत्नसङ्कीर्त्तनम्, अत्रापि न द्रव्यं चिकीर्ष्यते इति ॥ ४ ॥ ॥ आ० ॥

## अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसम्बन्धात् ॥ ५ ॥

अपि वा नैतदस्ति, समिदादीन्यपि पुरुषार्थानि प्राप्नुवन्तीति । कारणाग्रहणे पुरुषार्थानि प्रजापतिव्रतानि भवेयु । न तत्र श्रुत्यादिक किञ्चित् कारणं गृह्यते, येन कर्मणामङ्गभूतानीति गम्यते ।

तस्मात् तानि पुरुषार्थानि । अर्थस्य कर्मणो नाऽभिसम्बन्धः प्रजापतिव्रतैः । इह तु समिदादीनां प्रकरणं नाम कारणं गृह्यते । येन कर्मार्थानीति विज्ञायते । तस्माद् विषम उपन्यासः । पुरुषप्रयत्नश्चैवं सत्यऽनुवादः ॥ ५ ॥ आ० नि० ॥

## तथा च लोकभूतेषु ॥ ६ ॥

लोकेऽपि, निष्पन्नकार्यादिषु प्रयोजनवत्सु यद् असंयुक्तं फलेन श्रूयते, तत् तदङ्गं विज्ञायते इति मन्यमाना उपचारं जपं वोपदिश्यैव कृतिनो मन्यन्ते, न ब्रुवते, इदमस्य प्रयोजनवतोऽङ्गमिति । तथाचाऽपरेऽपि मन्यमाना न दुरुक्तं मन्यन्ते । तस्मात् समिदादीनि कर्माङ्गानि, न प्रजापतिव्रतानीति सिद्धम् ॥ ६ ॥ युक्तिः ॥ प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ॥ ३ ॥

## द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन् ॥ ७ ॥

स्तो दर्शपूर्णमासौ, तत्राम्नायते, स्फ्यश्च कपालानि च अग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानीति । तत्र संशयः । किमेतानि द्रव्याणि प्रदातव्यानि, उत स्वेन स्वेनार्थेन सम्बन्धनीयानि । तदेतत्सिद्ध्यर्थमिदं चिन्तनीयम् । किमेष विधिः, उत अनुवाद इति । विधौ सति प्रदानमनुवादे सति यथार्थसम्बन्धः । किं प्राप्तम् । विधिरिति । तथा हि प्रवृत्तौ विशेषः, इतरथा वादमात्रमनर्थकम् । प्रदाने चैषां यज्ञायुधशब्दोऽनुगृहीतः । यज्ञस्यायुधानि यज्ञस्य साधनानीति । इतरथा उद्धननादीनामायुधानि भवेयुः श्रवणेन, लक्षणया यज्ञस्य । संख्या चैवमवकल्पते । यागेनैकेन सम्बन्धात् । इतरथा नानाऽर्थसम्बन्धाद्दशेति संख्या नावकल्पते । तस्मात् प्रदीयेरन् । अविशेषेण विहितं प्रकरणेन प्रधानस्य भवितुमर्हति ॥ ७ ॥ ॥ पूर्वं० ॥

## स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद् यथाश्रुति स्युः ॥ ८ ॥

न चैतदस्ति विधिः, प्रदेयानीति । अनुवादः । प्राप्तत्वात् । स्फ्येनोद्धन्ति कपालेषु श्रपयत्यग्निहोत्रहवण्यां निर्वपति शूर्पेण विविनक्ति, कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति, शम्यायां दृषदमुपदधाति, प्रोक्षिताभ्यामुलूखलमुसलाभ्याम् । अवहन्ति, प्रोक्षिताभ्यां

हृषदुपलाभ्यां पिनष्टीत्येवं स्वेन स्वेन वाक्येनोद्धननादिषु प्राप्नुवन्ति। प्राप्तानां वचनमनुवादः । प्रकरणमपि वाक्येन बाध्यते, यज्ञायुधशब्दश्चानुवादपक्षे न्याय्यो, न विधिपक्षे। गौणो हि स आयुधशब्दः स्फ्यादिषु, संख्यापि पाठाभिप्राया भविष्यति। विस्पष्टं चैतदुद्धननादिभिः स्फ्यादीनि प्रयुक्तानीति । भवन्ति हि तत्र विधिः। स्फ्येनोद्धन्तीत्येवमादि । न तु यज्ञायुधानि कर्त्तव्यानीति। तस्माद् उद्धननादिषु वाक्येन प्राप्तानामनुवाद इति ॥ ८ ॥ सि० ॥

## चोद्यन्ते चार्थकर्मसु ॥ ९ ॥

अर्थकर्म्मसु चोद्यन्ते पुरोडाशादीनि, तान्यपि विकल्पेरन्। तत्र पक्षे बाधो, न समुच्चयः। पुरोडाशादीनां निरपेक्षाणां यजिसम्बन्धात्, स्फ्यादीनां च। एवं वा चोद्यन्ते, चार्थकर्म्मसु चोद्यन्ते, परिधानीये कर्म्मणि, आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति । यदि प्रदीयेरंस्तत्र न भवेयुः । तस्मादपि न प्रदातव्यानीति ॥ ९ ॥

## लिङ्गदर्शनाच्च ॥ १० ॥

लिङ्गदर्शनेन च, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति। तस्मादप्यनुवाद इति ॥१०॥ युक्ति ॥ यज्ञायुधानामनुवादताधिकरणम् ॥ ४ ॥

## तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो, यदग्नीषोमीयं पशुमालभते इति। तथा, अनड्वाहौ युनक्तीति । तथा अश्वमेधे, वसन्ताय कपिञ्जलानालभते इति । तत्र सन्देहः । किं विवक्षितमेकत्वं द्वित्वं बहुत्वं च, उताऽविवक्षितमिति ? । तत्रैकत्वमयज्ञाङ्गभूतं, न विवक्षितमित्यर्थः। अर्थस्य गुणभूतत्वात् । न आलम्भस्य गुणभूता सङ्ख्या नियोजनस्य वा । कस्य तर्हि ? । पशोरनडुहोः कपिञ्जलानां च। विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतं सङ्ख्यार्थं ब्रूते। वाक्येन सा यज्ञाङ्गं ब्रूयात् । वाक्याच्च श्रुतिर्बलीयसी । तस्मान्न यज्ञाङ्गं विवक्षितमिति ॥ आह। मा भूद् यज्ञाङ्गम्। पश्वादीनामङ्गमऽविवक्षितं तथापीति। उच्यते। न पश्वादीनामङ्गेनोक्तेनानुक्तेन वा किञ्चित् प्रयोजनमस्ति, यज्ञाङ्गेन ह्यऽविपन्नेन प्रयोजनम् । विपन्नेऽपि हि पश्वाद्यङ्गेऽविगुण एव क्रतुर्भवति। यज्ञाच्च फलं, न पश्वादेः । तस्मात्

पश्वादेर्गुणेन अज्ञातेन ज्ञातेन वा न किञ्चित् प्रयोजनमस्तीति न तद् विवक्षितम् । यद्धि प्रयोजनवत् तद् विवक्षितमित्युच्यते ॥११॥ पूर्व० ॥

एकश्रुतित्वाच्च ॥ १२ ॥

भवति च किञ्चिद् वचनं, येन विज्ञायते न तद् विवक्षितमिति । यदि सोममपहरेयुरेकां गां दक्षिणां दद्यादिति । यदि हि विवक्षितं भवेद् नैकामिति ब्रूयात् । गामित्येकवचनस्य विवक्षितत्वात् । तथा, अवी द्वे धेनू द्वे इत्यत्रापि द्वे इति वचनं ज्ञापकम् । अविवक्षितम्, अवी इति द्वित्वमिति । त्रीन् ललामानित्यत्रापि त्रीनिति वचनं लिङ्गं, ललामानिति बहुवचनमविवक्षितमिति ॥ १२ ॥

प्रतीयते इति चेत् ॥ १३ ॥

एवं चेत् पश्यसि, अविवक्षिता संख्येति । तन्न । प्रतीयते हि संख्या आख्यातवचनस्याङ्गभूता । यथा पशुमानयेत्युक्ते एक एवानीयते । पशू इति द्वौ । पशूनिति बहव आनीयन्ते, यश्च प्रतीयते स शब्दार्थः तस्माद् यज्ञस्याङ्गभूता संख्याऽत शब्दाद् गम्यते । न च शब्दाद् गम्यमानम् ऋते कारणाद् अविवक्षितं भवति ॥ १३ ॥ आ० ॥

नाशब्दं तत्प्रमाणत्वात् पूर्ववत् ॥ १४ ॥

नतैदेवं, सत्यं प्रतीयते, न त्वयं शब्दार्थो, व्यामोहादेषा प्रतीतिः । कुत एतत् । वाक्याद्धि यज्ञाङ्गमित्यवगम्यते । वाक्यं च श्रुत्या बाध्यते । तस्मादशब्दार्थोऽयं यज्ञ एकत्वादीनि । अशब्दार्थोऽपि हि प्रतीयते । यथा, पूर्वो धावतीति, स पूर्व इत्युच्यते । यस्य अपरोऽस्ति, तेन पूर्व इत्युक्ते अपरो गम्यते । न त्वपरो, धावतीति श्रवणात् प्रतीयते । एवमिहापि पशुमित्येकत्वं गम्यते, न तु यज्ञे । यथैव हि पूर्वमित्युक्तेऽपरो गम्यते एव केवल, न तु स विधीयते कस्मिँश्चिदर्थे । एवमिहापि संख्या प्रतीयते एव केवलं, न तु कर्त्तव्यतया यज्ञे विधीयते न पशौ ॥ कथं न पशौ विधीयते इति चेत् । विधायकस्याभावात् । आख्यातशब्दो विधायको भविष्यतीत्येतदपि नोपपद्यते, द्रव्यदेवतासम्बन्धस्य स विधायक सन् आलभते इति न संख्यासंख्येयसम्बन्धं विधातुमर्हतीति । भिद्येत हि तथा वाक्यम् । तस्माद् विवक्षिता संख्या इति ॥ १४ ॥ आ० नि० ॥

## शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथान्येषाम् ॥ १५ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । न यज्ञे संख्याशब्देन श्रूयते इति । आख्यातवाच्ये हि अर्थे उपलभ्यते, लोके पशुमानयेत्येकवचने सति एकत्वपशुविशिष्टमानयनं प्रतीयते । पशू आनयेति द्वित्वविशिष्टं गम्यते । तत्र हि एकत्वमपैति, द्वित्वमुपजायते । यस्य चागमे यदुपजायते, स तस्यार्थ इति गम्यते । तस्य ज्ञानं, यथान्येषां शब्दानाम् । अश्वमानयेति उक्ते अश्वानयनं प्रतीयते । गामानयेति गवानयनम् । तत्राऽश्वोऽपैति गौश्चोपजायते, तेन ज्ञायते, अश्वशब्दस्याऽश्वोऽर्थो गोशब्दस्य गौरिति ॥ यदुक्तं, श्रुत्या वाक्याऽर्थो बाध्यते इति । उच्यते । न श्रुतिर्ब्रूते, वाक्यार्थो नास्तीति । केवलं तु प्रातिपदिकार्थगतां संख्यामाह । तादृशी संख्या वाक्येन यज्ञे विधीयते । प्रातिपदिकार्थो हि आख्यातवाच्येन सम्बद्ध्यते, विभक्त्यऽर्थोऽपि । तथाहि । तद्विशेषणविशिष्ट आलम्भो गम्यते । तत्रैकार्थत्वादेकवाक्यमवकल्पते । पशौ हि संख्यायां विधीयमानायामेक आख्यातशब्दो न शक्नुयादाख्यातार्थं विधातुं, संख्यासंख्येयसम्बन्धं च । तस्माद् यज्ञे विवक्षिता संख्येति ॥ १५ ॥ सि० ॥

## तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥

किम् ? इति । कर्णा याम्या अवलिप्ता रौद्रा, नभोरूपा पार्जन्या । तेषामैन्द्राग्नो दशम इति । यदि त्रित्वं विवक्षितं तदा ऐन्द्राग्नो दशमो भवति । तथा कृष्णा भौमा, धूम्रा आन्तरिक्षा, बृहन्तो दिव्याः शबला वैद्युता, सिध्मास्तारका इति प्रकृत्य आह, अर्द्धमासानां वा एतद् रूपं यत् पञ्चदशिन इति । तस्मादपि पश्यामो, विवक्षिता संख्येति । यत्तूक्तम् । एकां गामित्यविवक्षां दर्शयतीति । अत्रोच्यते । गोसंख्यासम्बन्धं विधातुमेतदुच्यते । इतरथा हि । गोदक्षिणासम्बन्धो विहितो गम्येत । तस्माद् विवक्षितेऽपि वाच्यमेतत् । अवी द्वे धेनू द्वे त्रीन् ललामानिति चानुवादाः ॥ १६ ॥ ॥ युक्तिः ॥ पश्वेकत्वादेर्विवक्षाधिकरणम् ॥ ५ ॥ पश्वेकत्वन्याय. ॥

## तथा च लिङ्गम् ॥ १७ ॥

एवं च कृत्वा समानश्रुतिकं लिङ्गमपि विवक्षितं भविष्यति । त-

भेदं दर्शनमुपपद्यते । वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते, ग्रीष्मे माध्यन्दिने सिंहीमैन्द्रीं शरदि अपराह्णे श्वेतां बार्हस्पत्यामिति । तत्र श्रूयते । गर्भिणयो भवन्तीति । गर्भः स्त्रीणां गुणः । तेन स्त्रियो दर्शयतीति भविष्यति । तथा अश्व ऋषभो वृष्णिर्वस्तः पुरुष इति, ते प्राजापत्या इति । तत्र श्रूयते । मुष्करा भवन्ति सेन्द्रियत्वायेति । मुष्करत्वं पुंसां गुणः । तेन पुंप्राप्तिं दर्शयतीति ॥ अधिकरणान्तरं वा । तथा च लिङ्गमिति । संख्याधिकरणं लिङ्गाधिकरणेऽतिदिश्यते। लिङ्गमविवक्षितम् । श्रुत्या वाक्यस्य बाधितत्वात् । न च विवक्षितमिव श्रूयते इति, भवति लिङ्गम् । स्त्री गौः सोमक्रयणीति स्त्रीवचनात् सोमक्रयणीत्यविवक्षितमेव लिङ्गं प्रतीयते । ननु कथं मृगीमानयेति न मृग आनीयते । नैवम् । अशब्दं तु तत्, पूर्वो धावतीति यथा । लिङ्गं विवक्षितं वा वाक्यार्थस्य श्रुत्याऽप्रतिषिद्धत्वात् । तथा च लिङ्गं, गर्भिणयो भवन्तीति । तथा च, मुष्करा भवन्तीति । यदुक्तं, स्त्री गौः सोमक्रयणीति । तत्र स्त्रीत्यविवक्षितम् । तथा प्रजापतये पुरुषान् हस्तिन आलभते इति पुरुषग्रहणमविवक्षितम् । विस्पष्टो हि न्याय उक्तो लिङ्गविवक्षायाम् । तस्माद् विवक्षितं लिङ्गमिति ॥ १७ ॥ ॥ ॥ युक्ति ॥ पूर्वाऽधिकरणांश. ॥ लिङ्गस्य विवक्षितत्वाऽधिकरणं च ॥ ६ ॥

## आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥

अत्राश्रयिणः पदार्था उदाहरणम् । उत्तमः प्रयाज पशुपुरोडाशः स्विष्टकृदित्येते यागा उदाहरणम् । एषु सन्देहः । किं यजिमात्रं संस्कारो देवतायाः, उत यजिना अदृष्टं देवताया क्रियते इति । किं प्राप्तम् । आश्रयिषु अविशेषेण भावोऽर्थः प्रतीयते इत्याश्रयिष्वेवजातीयकेष्वपूर्वस्य भावोऽर्थः प्रत्येतव्योऽविशेषादन्यैराख्यातशब्दैः। यजतिददातिजुहोतीति । उक्तमेतद् भूतं भव्यायोपदिश्यते इति ॥१८॥

## चोदनायान्त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते ॥ १९ ॥

अस्यां तु चोदनायामनारम्भोऽपूर्वस्य । विभक्तोऽयमाख्यातशब्दो, यो दृष्टार्थस्ततो नापूर्वम् । यः खल्वऽदृष्टार्थस्ततोऽपूर्वमिति । दृष्टार्थश्चायम् । अस्मिन् हि यागे क्रियमाणे देवता स्मर्यते, स्विष्टकृ-

त्यपि द्रव्यं प्रतिपाद्यते । न चान्येन शब्देनात्र अपूर्वं विधीयते । तस्माद् यजिमात्रं संस्कार इति ॥ १९ ॥ ॥ आ० ॥

स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥ २० ॥

स्याद् वा अपूर्वमतः, सत्यामपि देवताचिकीर्षायां, तस्मिन् देवतासंस्कारार्थे गुणभूतता यागस्य द्रव्यप्रतिपादनेन च । मन्त्रेण तत्र देवता स्मर्यते । तस्मिन् मन्त्रेण दृष्टेऽर्थे क्रियमाणे त्यागोऽपरोऽदृष्टार्थः श्रूयते । तस्य न किञ्चिद् दृष्टमस्ति । देवताश्रयात्तु देवतागतं तदपूर्वमिति गम्यते ॥ २० ॥ ॥ सि० ॥ आश्रयिणामदृष्टार्थताधिकरणम् ॥ ७ ॥

अर्थे समवैषम्यतो द्रव्यकर्मणाम् ॥ २१ ॥

अतिक्रान्तस्तृतीयविषय. । अत. प्रभृति द्रव्याणां कर्मणां चार्थे प्रयोजने समवैषम्यं वक्ष्यते । क्वचित् साम्य, क्वचिद् वैषम्यम् । आमिक्षावाजिनयोर्वैषम्यं, क्रयपांशूनां वैषम्यं, दण्डस्य मैत्रावरुणधारणे यजमानधारणे च साम्यम् । एवं तत्र तत्र द्रष्टव्यं साम्यं वैषम्यं चेति ॥ २१ ॥ ॥ प्रतिज्ञाधिकरणम् ॥ ८ ॥

एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥

चातुर्मास्येषु वैश्वदेवे श्रूयते, तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति । तत्र सन्देह । किं तप्ते पयसि दध्यानयनमामिक्षा प्रयोजयति, न वाजिनम्, उत उभयमिति । किं प्राप्तम् ? । उभयमिति । कुत । यस्मिन् कृते, यन्निष्पद्यते प्रयोजनवत्, तत् तस्य प्रयोजकमिति गम्यते । दध्यानयने च कृते उभयं निष्पद्यते । आमिक्षापि । तत एव वाजिनमपि । तत्रान्यतरार्थं क्रियेत, यदि विनिगमनार्थो हेतुर्भवेत् । अगम्यमाने विशेषे उभयार्थमानयनमिति गम्यते । तस्मादेका असौ उभाभ्यामपि प्रयोजिता निष्पत्तिरिति ॥ २२ ॥ ॥ पूर्व० ॥

संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥

नैतदस्ति, उभयं प्रयोजकमिति । आमिक्षा प्रयोक्त्री । कुत' । नात्र यद्दधिपयोभ्यां निर्वर्त्यते, तद्धवि' । यदि तद्धवि स्यादुभयं ताभ्यामेव निष्पद्यं । इति गम्येत विशेषः । किं तर्हि हविरिति । पयो

दधिसंसृष्टम् । कुत एतत् । सा वैश्वदेवीत्युच्यते, न ततो वाजिनं निष्पद्यते इति ॥ ननु स्त्रीलिङ्गनिर्देशाद् आमिक्षा हविः । सा च ततो निष्पद्यते । वाजिनञ्च हवि । तदपि निष्पद्यते इति । नेत्युच्यते । तदेव हि पय. तप्तं दधिसंयुक्तमामिक्षा भवति तस्मात् स्त्रीलिङ्गम् अदोषः । आह । यदि पयो दधिसंसृष्टं हविः । किं तर्हि । उच्यते । आमिक्षा प्रयोजिकेति । उच्यते । आमिक्षायां दधिपयसी विद्येते, न वाजिने । कथमवगम्यते । संसर्गरसनिष्पत्ते. । तत्र हि दधिपयसो. संसृष्टयो रस उपलभ्यते, तेन तत्र दधिपयसी इत्यनुमानं भवति । वाजिने तिक्तकटुको रस. ॥ आह । तप्ते पयसि दध्यानीयमाने उभयं भवति । दध्ना च पय. संसृज्यते वाजिनाच्च विविच्यते । तत्र संसर्गश्चिकीर्षितो, न विवेक इति । कुत एतत् उच्यते । शाब्दः संसर्गो दध्ना, अशाब्दो वाजिनेन विवेकः पयस इति । सर्वनाम च पूर्वोक्तेन शब्देनैकवाक्यतां याति । इतरस्मिन् पक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणार्थं स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या । तस्माद् आमिक्षार्थं दध्यानयनम् । आमिक्षाशब्दश्चात्रानुवादः । आमिक्षैव सा भवति यत्र तप्ते पयसि दध्यानीयते । तस्मादामिक्षा प्रयोक्त्री, वाजिनमप्रयोजकमिति ॥ २३ ॥ ॥ सि० ॥

## मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

न चोभयं प्रयोजकं न्याय्यम् । नात्र वचनमस्ति । इदं प्रयोजकमिदं नेति । असति प्रयोजकेऽनर्थकं भवतीति प्रयोजकं कल्प्यते । तत्रैकस्मिन्नपि प्रयोजके सिद्धेऽर्थवति उपदेशे नान्यदपि प्रयोजकं भवितुमर्हति । न च न गम्यते विशेषः । कथं गम्यते । मुख्यशब्दाभिसंस्तवान्मुख्यशब्दः संस्तोतुं न्याय्य इति । प्राथम्यात्तु तस्य तावत् प्रयोजकत्वज्ञानम् । तस्मिन् सति प्रयोजके, परिक्षतत्वाद्गानर्थक्यस्य, न द्वितीयमपि प्रयोजकम् । प्रथमा च आमिक्षा, द्वितीयं वाजिनम् । तस्मादामिक्षा प्रयोक्त्री ॥ अपि च मुख्यशब्देन चामिक्षा स्तूयते । मिथुनं वै दधि च शृत च अथ यत् संसृष्टं मण्डमिव मस्त्विव परि च ददृशे गर्भ एव स इति, गर्भस्तुता आमिक्षा । मिथुनस्य च गर्भः प्रयोजको, न गर्भोदकम् । तस्मादपि आमिक्षा प्रयोजिकेति मन्यामहे । किं भवति प्रयोजनम् । यद्युभयं प्रयोजकं, वाजिने नष्टे,

पुनस्तप्ते पयसि दधि आनेतव्यम । अथ वाजिनम् अप्रयोजकं, नष्टे वाजिने लोपो दध्यानयनस्य ॥ २४ ॥ हेतुः ॥ तप्ते पयसि दध्यानयनस्याऽऽमिक्षाप्रयुक्तताधिकरणम् ॥ ९ ॥ वाजिनन्यायः ॥

## पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

ज्योतिष्टोमे श्रूयते, अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति । तत्रेदमपरं श्रूयते । षट्पदान्यनुनिष्क्रामतीति । तथा, सप्तमं पदं गृह्णातीति । इदमपरम् । यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्षमभ्यञ्ज्यादिति । तत्र सन्देहः । किं सोमक्रयण्यानयनं पदपांस्वर्थम् ? उत क्रयप्रयुक्तमिति । किं प्राप्तम् । नयनादुभयं निष्पद्यते, क्रयः पदं च । तस्मादुभयं प्रयोजकम् । न हि गम्यते विशेष इति । तदुक्तम् । एकनिष्पत्तेः सर्वं समं स्यादिति ॥ एवं प्राप्ते ब्रूमः । पदकर्म अप्रयोजकमिति । कुतः । यस्मान्नयनं क्रयार्थम् । न हि नयनमन्तरेण विशिष्टे देशे क्रय उपपद्यते । तस्मात् क्रयेण तावन्नयनं प्रयुक्तमिति गम्यते । क्रयप्रयुक्तं चेद्, न पदप्रयुक्तमपि भवितुमर्हति ।

अपि चैकहायन्याः पदपांसवो ग्रहीतव्या इति नास्ति शब्दः । ननु प्रकृतैकहायनी पदपांसुग्रहणवाक्येन सम्भन्त्स्यते । नेति । ब्रूमः । एकहायन्या क्रीणातीति विशिष्टेन वाक्येन क्रये उपदिष्टा एकहायनी प्रकृतत्वात् पदपांसुवाक्येन सम्बद्ध्यते, प्रकरणाच्च वाक्यं बलीयः । अथेदानीमेकहायनी क्रयणार्थं सङ्कीर्त्तिता सती सन्निहितत्वात् प्रसङ्गमुपजीवता पदपांसुवाक्येन सम्बद्ध्येत । याऽसौ परार्था, एतस्याः पदं ग्राह्यमिति । तस्मात् क्रयप्रयुक्तं नयनम्, अप्रयोजकं पदमिति ॥ किं पुनश्चिन्तायाः प्रयोजनम् । यद्युभयम् । एकहायनीनयनस्य प्रयोजकम् । यद्येकहायन्याः सप्तमं पदं ग्रावणि निधीयते, तदा पुनरेकहायनी नीयेत सप्तमाय पदाय । यदा पदं न प्रयोजकं, तदा नैकहायनी पुनः षट्पदान्यनुनिष्क्रामयितव्येति ॥ २५ ॥ ॥ गवाऽऽनयनस्य पदकर्माप्रयुक्तताधिकरणम् ॥ १० ॥

## अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

दर्शपूर्णमासयोः श्रूयते, कपालेषु पुरोडाशं श्रपयतीति । तथा, पुरोडाशकपालेन तुषानुपवपतीति । तत्र संदेहः । किमुभयं कपालानि प्रयो-

जयति पुरोडाशश्रपणं तुषोपवापश्च, उत श्रपणं प्रयोजकं, न तुषोपवाप इति । किं प्राप्तम् । विनिगमनायां हेतोरभावादुभयमिति प्राप्ते।उच्यते अर्थाभिधानंप्रयोजनसम्बद्धमभिधानं यस्य यथा पुरोडाशकपालमिति पुरोडाशार्थं कपालं पुरोडाशकपालम्। कथमेतदवगम्यते । पुरोडाशस्तावत् तस्मिन् काले नास्ति, येन वर्त्तमानः सम्बन्धः कपालेन स्यात्। तेनैव हेतुना न भूतः। स एष कपालस्य पुरोडाशेन भविष्यता सम्बन्धः। भविष्यता सम्बन्धश्च तन्निमित्तस्य भवति। तस्मात् पुरोडाशेन प्रयुक्तं यत् कपालं, तेन तुषा उपवप्तव्या इति । एवञ्च सति चरौ पुरोडाशाभावे यदा तुषानुपवप्तुं कपालमुपादीयते, न तत् पुरोडाशकपालं स्यात् । न चेन्न तेन तुषा उपवप्तव्या भवन्ति । तस्मान्न तुषोपवापः कपालानां प्रयोजकः। प्रयोजकं तु श्रपणमिति ॥ २६ ॥ कपालानां तुषोपवापाप्रयुक्तताधिकरणम् ॥ ११ ॥

पशावनालम्भालोहितशकृतोरकर्मत्वम् ॥२७॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय । तत्र श्रूयते । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया इत्येवमादि । तथा, लोहितं निरस्यति, शकृत्संप्रविद्ध्यति, स्थविमतो बर्हिरलङ्क्त्वापास्यतीति । तत्र सन्देहः । किं हृदयादिभिरवदानैरिज्या पशो प्रयोक्त्री, उत शकृत्संप्रव्याधो लोहितनिरसनं च तदपि प्रयोजकमिति । किं प्राप्तम् । पक्वनिष्पत्तेः सर्वं समं स्यात् । उभयं प्रयोजकमिति ॥ एवं प्राप्ते ब्रूमः । पशौ शकृल्लोहितयोरप्रयोजकत्वम् । न हि तदर्थः पशोरालम्भः । शकृत्संप्रविद्ध्यति लोहितमपास्यतीत्युच्यते । न पशोरन्यस्य वेति । पशुरग्नीषोमीयो वाक्येन । यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । शकृल्लोहिते पशोः प्रकरणेन भवेतां, प्रकरणं च वाक्येन बाध्यते । नन्वेते शकृल्लोहिते प्रतिपाद्येते, तेन यागार्थस्य पशोर्नान्यस्येति निश्चयः। एवञ्चेद् अप्रयोजके शकृल्लोहिते इति। किं भवति प्रयोजनम् । साम्ये सति शकृल्लोहिताभावेऽन्य पशुरालम्भनीयः, शकृल्लोहितयोरप्रयोजकत्वे लोपः ॥ २७ ॥ ॥ शकृल्लोहितयोः पशावप्रयोक्तृत्वाऽधिकरणम् ॥ १२ ॥

एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्॥२८॥

दर्शपूर्णमासयोः श्रूयते, उत्तरार्द्धात् स्विष्टकृते समवद्यतीति ।

तत्र सन्देहः । किं पुरोडाशस्याग्नेययाग प्रयोजकः, स्विष्टकृदप्रयोजकः ? उत उभयमिति । किं प्राप्तम् । एकानर्थक्यात्सर्वं समं स्यादिति । एवं प्राप्ते ब्रूमः । एकदेशद्रव्यश्चैवञ्जातीयकोऽप्रयोजको भवेत् । कुतः । विद्यमानसंयोगात् । नैकदेशकर्म्मावयविनं प्रयुङ्क्ते । विद्यमानस्यावयविन एकदेश उपादातव्य इति । तत्रार्थो भवति । नावयविनमुपाददीतेति । यथेक्षुखण्डमस्मै प्रयच्छ, मोदकशकलमस्मै प्रयच्छेति, नेक्षुमुपाददीतेति गम्यते । सत इक्षो खण्डमुपाददीत, सतो मोदकाच्छकलमुपाददीतेति । तस्मादन्यार्थं द्रव्यं तस्योत्तरार्द्धाद् अवद्यम् । अस्ति चाग्न्यर्थः पुरोडाशः । तस्मात् स्विष्टकृदप्रयोजक इति ॥ २८ ॥ सि० ॥

## निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥

इति चेत् पश्यसि, अप्रयोजकः पुरोडाशस्य स्विष्टकृदिति । नैतदेवम् । अग्निं प्रति निर्देशात् तस्य पुरोडाशस्य स्विष्टकृदर्थमन्यः पुरोडाश उत्पादयितव्यो यस्योत्तरार्द्धात् स्विष्टकृदिज्यते । तस्याऽनन्य सङ्कल्पितस्य नेष्टे यजमानः । कथमसौ तदन्यस्मै देवतायै दद्यात् । कथमग्निं प्रति निर्देश इति । इदं श्रूयते, अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायंस्ते यज्ञवास्त्वभ्यायंस्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यंस्तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व आदित्याय ध्रियस्व स नाध्रियत तमब्रुवन् अग्नये ध्रियस्वेति सोऽध्रियत । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । तस्मात्तेन स्विष्टकृतो न सम्बन्धः । एवं चेत्तस्मादन्यद् द्रव्यमर्थादुत्पादयितव्यम् । न ह्यनुत्पन्नस्य द्रव्यस्योत्तरार्द्धं भवतीति ॥ २९ ॥ आ० ॥

## न शेषसन्निधानात् ॥ ३० ॥

नैतदेवं, सन्निहितो हि शेषः । यस्मिन्ननुत्पाद्यमानेऽर्थो न सिद्ध्यति, सोऽर्थादुत्पाद्यते । सन्निहिते च शेषे सति सिद्ध्यति उत्तरार्द्धाद् ग्रहणम् । तस्मान्नार्थाद् द्रव्यमुत्पादयितव्यं, यदेवान्यार्थं द्रव्यं सन्निहितं तस्यैवोत्तरार्द्धाद्ग्रहीतव्यम् । उत्तरार्द्धमात्रं हि स्विष्टकृत श्रूयते, नामुष्य द्रव्यस्येति । न चैतावता व्यवहारो भवति । सर्वो हि कस्यचिदुत्तरार्द्धः । स एष सन्निहितमपेक्षते । सन्निहितं

च परार्थम् । तस्मात् परार्थाद् द्रव्यात् स्विष्टकृदिज्या । अतश्च अप्रयोजिकेति । यदुक्तम् । अनीशा अनेन न शक्यं दातुमिति । तदुच्यते । वाचनिक एव शेषप्रतिपादनार्थ उत्सर्ग । स शक्य कर्तुम् । दानं हि उत्सर्गपूर्वकः परस्य स्वत्वसम्बन्धः । स न शक्यो ऽनीशा अनेन ॥ ३० ॥ आ० ॥ नि० ॥

## कर्मकार्यात् ॥ ३१ ॥

कर्म्मनिमित्तश्च स्विष्टकृतो भाग इति श्रूयते । कथम् । देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति । सोऽब्रवीद्वरं वृणै भागोमेऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रवीद् उत्तरार्द्धादेव मह्य सकृत्सकृदवद्यादिति कर्म्म कुर्वतो भागोऽयमुत्तरार्द्धादिति स्तुतिर्भवति । यद्याग्नेयस्योत्तरार्द्धादित्युच्यते । ततोऽस्ति कर्मार्थेन भागेन सादृश्यमिदं, तदाश्चर्य हव्यं यत् किल वहसीति । तत्र सति सादृश्ये स्तुतिरुपपद्यते । प्रयोजकत्वे चासति सादृश्ये स्तुतिसामञ्जस्यं न स्यात् । तस्मादप्रयोजकः पुरोडाशस्य स्विष्टकृद्भाग इति ॥ ३१ ॥

## लिङ्गदर्शनाच्च ॥ ३२ ॥

लिङ्गमपि भवति तद् यत् सर्वेभ्यो हविर्भ्य समवद्यति । तस्मादिदमुदरं विश्वरूपमन्नं समवधीयते इति । यदि परार्थाद् द्रव्यात् सन्निहितादिज्यते तदा तत्सन्निधानाविशेषात् सर्वेभ्योऽवदीयत इत्युपपद्यते। प्रयोजकत्वे त्वेकस्मादेवावदीयेत । तस्मादप्यप्रयोजकः॥ तथेदमपरं लिङ्गं, शेषादिडामवद्यति शेषात् स्विष्टकृतं यजतीति । नन्वयं विधि स्यात् । नेति ब्रूम. । नात्र विधिविभक्तिर्वर्त्तमानापदेशो ह्ययमिति ॥ ३२ ॥ ॥ ॥ युक्ति ॥ पुरोडाशस्य स्विष्टकृदप्रयुक्तताऽधिकरणम् ॥ १३ ॥

## अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् ॥ ३३॥

अस्ति वाजपेयो, वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र श्रूयते, सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशो वै प्रजापति प्रजापतेराप्त्यै इति । प्राजापत्यानां क्रतुपशूनां च समुच्चयो वक्ष्यते । प्राजापत्येषु चाम्नानादिति । अस्ति तु प्रकृतौ, प्रयाजशेषेण हवींष्यभिघारयतीति । तत्र सन्देह । किं प्राजापत्यानां वपा अभिघारयितुं प्रयाजशेषस्य धारणार्थं पात्रमपरमुत्पादयितव्यं, ततस्तेन प्राजापत्यानां वपा अभिघारयितव्या. ? उत न शेषो धारयितव्य , नैव ततः

प्राजापत्यानां वपा अभिघारणीया इति । किं प्राप्तम् । अभिघारणे प्रयाजशेषधारणार्थं पात्रमुत्पाद्यते । प्रातःसवने च प्रयाजशेषो विप्रकृष्टकाले माध्यन्दिने सवने, ब्रह्मसामकाले प्राजापत्यानामालम्भः श्रूयते । तान् पर्य्यग्निकृतानुत्सृजन्ति । ब्रह्मसाम्न्यालभते इति । व्यापृता च जुहूर्भवति । तस्मात् पात्रान्तरमुत्पादनीयमिति । यथाऽनुयाजेषु पृषदाज्यधारणार्थं पात्रमुत्पाद्यते, पृषदाज्येनानुयाजान् यजतीति वचनात् । एवमत्रापीति ॥ ३३ ॥ पूर्व० ॥

## न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥

न वा प्राजापत्यानां वपा अभिघार्य्याः । कुतः । शेषाभावात् । कथं शेषाभाव इति चेत् । अपात्रत्वात् । कथमपात्रता । एकदेशत्वात् । प्रयाजार्थस्य हि गृहीतस्याज्यस्य स एकदेशः शेषः । किमतो यद्येवम् । एकदेशव्यापारः श्रूयमाणो नावयविनमुपादेयत्वेन चोदयति । आह । उत्पत्तिं न चोदयेत् । धारणमुत्पन्नस्यार्थाद् भविष्यतीति । उच्यते । एकदेशत्वादभिघारणं द्रव्यमेव न प्रयुङ्क्ते इत्युच्यते । कृतार्थस्य द्रव्यस्यायमेकदेशः प्रतिपाद्यते, नाभिघारणमर्थकर्म्म । ननु हविषां, द्वितीयानिर्देशात् प्राधान्यं स्यात् । नेत्युच्यते । अदृष्टो हि हविषामुपकारः कल्प्येत ।आज्यप्राधान्ये पुनर्जुह्वा रिक्तत्वं दृष्टं प्रयोजनम् । आज्यभागार्थेन आज्येन असंसर्गा, जुह्वा रिक्तया प्रयोजनं, नाभिघृतेन हविषा । तस्मात् प्राजापत्यानामभिघारिताभिर्वपाभिः प्रयोजनमेव नास्ति, किमर्थं शेषो धार्य्यते इति ॥३४॥सि०॥

## हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥

हेतुत्वाच्चाभिघारणस्य । सहालभते इति स्तुतिर्भवति । तीर्थे वै प्रात सवनं, यत् प्रात.सवने पशव आलभ्यन्ते, तीर्थे एवैतानालभते, सयोनित्वायाथो वपानामभिघृतत्वायेत्यर्थान्तरेण वपाभिघारणमनुगृह्णन्नेहास्तीति दर्शयति ॥ ३५ ॥

## अभावदर्शनाच्च ॥ ३६ ॥

अभावं खल्वप्यभिघारणस्य दर्शयति, सव्या वा एतर्हि वपा यर्हि अनभिघृता, ब्रह्म वै ब्रह्मसाम, यद् ब्रह्मसाम्न्यालभते तेन असव्याः, तेन अभिघृता इति । सव्यशब्दो रूक्षे भाष्यते । सव्या वपा इत्यनभिघृततां दर्शयति ॥ ३६ ॥ ॥ हेतुः ॥

सति सव्यवचनम् ॥ ३७ ॥

आह नैतद्दर्शनं, सत्येव हि अभिघारणे भवत्येतत् सव्यवचनम्। अस्ति हि वपाया अन्यदभिघारणम् । उपस्तृणात्याज्यं हिरण्यशकलं, वपा हिरण्यशकलं ततोऽभिघारयतीति । तस्मिन् सति कथं सव्या भवेयुः । ब्रूते च । तस्मान्नैतच्छक्यमवगन्तुम् । रूक्षास्ता वपा दृश्यन्ते इति।तेन नूनमभिघारणं प्रयाजशेषेणास्तीति । सत्यस्मिन्नभिघारणे प्रत्यक्षे रूक्षास्ता इति दर्शनं व्यामोह इति ॥ ३७ ॥ ॥ पूर्व० ॥

न तस्येति चेत् ॥ ३८ ॥

एवं चेद् दृश्यते, सत्यभिघारणे सव्या इति वचनमलिङ्गमिति । नालिङ्गं, तस्यैतद्वचनं यत् स्नेहनं करोति । कतमत् तत् । यत् प्रथमम् । प्रथमं हि स्नेहनं करोति, न द्वितीयम् । स्निग्धस्य तद् भवति । न च स्निग्धस्य स्नेहनं क्रियते, यथा भवति लोके वादो, यदस्माभिः कान्ताराग्निर्गतैर्देवदत्तस्य गृहे स्निग्धं भुक्तं, तेन वयमरूक्षा कृता इति । सत्स्वप्यन्येषु स्निग्धेष्वेव भोजनेष्वेवं तस्याऽरूक्षकरणस्याभावाद् रूक्षा इति वचनमुपपद्यते, अस्मिँस्तु सति नोपपद्यते । तस्मादपि प्रयाजशेषेणाभिघारण प्राजापत्यानां नास्तीति ॥ ३८ ॥

स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

इदं पदोत्तरं सूत्रम् । यदि प्रथमस्याभावात् सव्या इति वचनं भवत्यनुपपन्नं, तर्ह्यन्यस्य प्रथमस्य विद्यमानत्वात् । कतमत् तत् । यच्छ्रूप्यमाणाया अपरमुद्वासिताया । अत्रोच्यते । स्यात्तस्य मुख्यत्वात् । यत् प्रयाजशेषेणाभिघारणम् । तस्यैवाभावादेतदुपपद्यते । सत्यपि श्रप्यमाणाया अभिघारणे उद्वासितायाश्च । यत् तावच्छ्रूप्यमाणायास्तदग्नेरर्चींषि दहन्ति, यदुद्वासितायास्तदग्न्यवयवा ऊष्मावयवाश्च नाशयन्ति । सैषा रूक्षैव 'इदन्तु प्रयाजशेषेण शीतायाः क्रियते । तत् स्नेहयति । तेन स्निग्धाया प्रदानकालमभिघारणं यत्, तन्न स्नेहयति । तदिदं स्नेहनस्याभिघारणस्याभावात् सव्यतावचनमुपपद्यते इति उक्तम् । तस्मान्न प्रयाजशेषा धार्य्यने इति ॥ ३९ ॥ ॥ आ०नि०॥ अभिघारणे शेषधारणतत्पात्रयोरननुष्ठानाधिकरणम्॥१४॥

समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ ४० ॥

दर्शपूर्णमासयो श्रूयते, अतिहायेडो बर्हिः प्रति समानयतीति।

तत्र सन्देहः । किं समानयनमाज्यस्य धर्माणां च प्रयोजकमुताप्रयोजकमिति । किं प्राप्तम् । अप्रयोजकमिति । कुतः । प्रयाजानुयाजार्थस्याज्यस्यायमेकदेशः समानीयते इति पूर्वेण न्यायेनाऽप्रयोजकता प्राप्ता । तदुच्यते ॥ मुख्यं समानयनं लिङ्गदर्शनात् ॥ किं लिङ्गम् । चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजान् यक्ष्यन् भवतीत्यातिथ्यायां श्रूयते । यदि प्रयाजार्थं समानयनं, ततस्तत्रैकं चतुर्गृहीतं समानीयते । एकमप्यनुयाजानां भवति । ततश्चातिथ्येष्टां ता सन्तिष्ठते इत्यनुयाजाभावे उपभृति समानयनार्थमेकं चतुर्गृहीतं प्राप्य, न त्वनुयाजार्थम् । तत्र बहूनां चतुर्गृहीतानां दर्शनमुपपद्यते । इतरथा हि अनुयाजाभावे नैवोपभृति चतुर्गृह्येत । तत्र चतुर्गृहीतानीति बहुवचनं नोपपद्यते । तस्मात् प्रयोजकं समानयनमिति ॥ ननु लिङ्गमुपदिश्यते । का प्राप्तिः । उच्यते । दृष्टं तत्र प्रयोजनम् । प्रयाजौ द्वौ यष्टव्यौ । तत्र जुह्वामाज्येन प्रयोजनं नोपभृति रिक्तायाम् । उपभृतो रेचनमदृष्टार्थं, जुह्वां निधानं दृष्टार्थमेव । तेन प्रयाजहोमार्थमाज्यसमानयनमौपभृतमाज्यं प्रयोजयति । तदपि हि प्रयाजाऽर्थमनुयाजार्थञ्चेति वक्ष्यते ॥ ४० ॥

## वचने हि हेत्वसामर्थ्यं ॥ ४१ ॥

अथ कस्मान्न वचनमेतत्, चतुर्गृहीतान्याज्यानीति । उच्यते । वचने हि हेतुरसमर्थितः स्यात् । न हि अत्रानुयाजान् यक्ष्यन् भवतीति । यदा समानयनं न प्रयाजार्थमिति गम्यते, तदा वचनम् । यदा वचनं, तदा नानुयाजाभावो हेतुः । असति हेतौ, न ह्यत्रानुयाजान् यक्ष्यन् भवतीति हेतुवन्निगदो नोपपद्येत । तस्मात् प्रयाजार्थं समानयनं प्रयोजकमौपभृतस्याज्यस्य । किं भवति प्रयोजनम् । प्रयाजार्थे समानयने यावत् प्रयाजार्थं, तावत् सर्वं समानेयमर्द्धमौपभृतस्य अप्रयोजकत्वे न नियोगतोऽर्द्धं यावत् तावद् वा ॥ ४१॥ आ०नि०॥ समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥ १५ ॥

## तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥

दर्शपूर्णमासयोः श्रूयते, चतुर्जुह्वां गृह्णात्यष्टावुपभृति गृह्णातीति । तत्र सन्देहः । किं जौहवमौपभृतं चोभयमुभयार्थं- प्रयाजेभ्यश्चानुयाजेभ्यश्च, उत जौहवं प्रयाजेभ्य, औपभृतमनुयाजेभ्य. ?

अथवा औपभृतं प्रयाजेभ्योऽनुयाजेभ्यश्चेति । किं प्राप्तम् । उभयमुभयार्थम् । कुतः । यद् यदाज्येन क्रियते, तस्मै भवितुमर्हत्यविशेषात् ॥ ४२ ॥ ॥पूर्व० ॥

**तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥**

नैवम् । उभयमुभयार्थमिति । जौहव प्रयाजार्थम्, औपभृतमुभयार्थम् । कथम् । यज्जुह्वां गृह्णाति, ऋतुभ्यस्तद् गृह्णाति, ऋतवो वै प्रयाजा इति जौहववचनमनुयाजप्रतिषेधार्थं प्रयाजान् सङ्कीर्त्तयति ॥ आह । ननु नास्त्यत्रानुयाजप्रतिषेधार्थं वचनम् । यदेतत् प्रयाजेभ्यस्तद् गृह्णातीति । प्रयाजेषूपदेशकमेतत् । नास्त्यस्यानुयाजप्रतिषेधे सामर्थ्यमिति । उच्यते । न ब्रूमः । प्रतिषेधकमेतदिति । किं तूत्पत्तिवाक्ये आज्यानां नैव प्रयोजनाभिसम्बन्धः । अनेन वचनेन प्रयाजप्रयोजनता क्रियते जौहवस्य । अनुयाजप्रयोजनताऽस्य वचनाभावादेव न गम्यत इति । अनुयाजप्रतिषेधार्थं वचनमित्युच्यते॥४३॥सि०

**औपभृतं तथेति चेत् ॥ ४४ ॥**

इति चेद् दृश्यते, जौहवमनुयाजेभ्यः प्रतिषिद्ध्यते, औपभृतमुभयार्थमिति । भवतु जौहव प्रयाजार्थं, न त्वौपभृतमुभयार्थम् । तदपि तथा स्याद् यथा जौहवम् । कथम् । एतदप्यनुयाजार्थमेव श्रूयते, यदुपभृति गृह्णाति अनुयाजेभ्यस्तद् गृह्णाति । छन्दांसि ह्यनुयाजा इति अनुयाजार्थताऽस्येति ॥ ४४ ॥ ॥ आ० ॥

**स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥**

नैतदेवमुभयार्थं ह्यौपभृतम् । एवं हि श्रूयते । यदष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णातीति । ननूक्तमनुयाजेभ्यस्तद् गृह्णातीत्यनुयाजार्थताऽस्येति । उच्यते। जुहूप्रतिषेधान्नित्यानुवादः। उभयस्मिन्नौपभृते जौहवे चोभयार्थे प्राप्ते जौहवमनुयाजेभ्यः प्रतिषिद्धं, नौपभृतम् । तदौपभृतस्योभयार्थतायां सत्यामनुयाजार्थतावचनं नित्यानुवादो भवितुमर्हति, न शक्नोति प्रयाजार्थतां प्रतिषेद्धुम् । प्रत्यक्षश्रुता हि सा । तस्मादौपभृतमुभयार्थम् । समानयनं च ततो जुह्वां श्रूयते । तस्मादपि प्रयाजार्थता न शक्या बाधितुम् ॥ ॥ ४५ ॥ ॥ आ० नि० ॥ औपभृतजौहवयोः क्रमेणोभयानुभयार्थताऽधिकरणम् ॥ १६ ॥

तदष्टसंख्यं श्रवणात् ॥ ४६ ॥

अष्टावुपभृति गृह्णातीति श्रूयते । तत्र सन्देहः । किं तदौपभृतमाज्यमष्टसंख्येन ग्रहणेन संस्क्रियते, उत चतुःसंख्या गुणभूता द्वयोर्ग्रहणयोरिति । किं तावत् प्राप्तम् । अष्टसंख्या गुणभूता, न चतुःसंख्ये द्वे इति । कुतः ॥ श्रवणात् ॥ अष्टसंख्या श्रूयते । चतुःसंख्या अष्टसंख्यया लक्ष्यते । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, तस्माद् अष्टसंख्यं ग्रहणमेतदिति ॥ ४६ ॥ ॥ पूर्व० ॥

अनुग्रहाच्च जौहवस्य ॥ ४७ ॥

अनुग्रहवादश्च भवति । चतुर्गृहीतं वा एतदभूत्तस्य आघारमाघार्य्य शिरितः प्राचीनं प्रयाजान् यजति समानयते चतुर्गृहीतत्वायेति चतुर्गृहीतानुग्रह कथं स्यादिति । किं चतुर्गृहीतं भवति समानयनेन ? । नेति ब्रूमः । चतुर्गृहीतं प्रथममेव तत् । आघारेऽप्याघारिते, यद् अवशिष्टं चतुःसंख्यमेव तस्य ग्रहणमासीत् । किं तर्हि चतुर्गृहीतत्वायेति । चतुर्गृहीतस्यानुग्रहार्थम् । अल्पं हि चतुर्गृहीतं होमायापर्य्याप्तं तत्पर्याप्तं कथं स्यादिति । एवं चतुर्गृहीतशब्देनाल्पमिति लक्ष्यते । अल्पत्वं च बहुत्व कस्यचिदपेक्ष्य भवति । यदि ह्यौपभृतमष्टसंख्यमेवं चतुर्गृहीतमल्पं भवति । तत्र चतुर्गृहीतशब्देन अल्पता शक्यते लक्षयितुम् । तस्मादपि पश्याम, औपभृते अष्टसंख्या गुणभूतेति ॥ ४७ ॥ युक्तिः ॥

द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥

तुशब्दः पक्षं व्यावर्त्तयति । द्वे एते चतुर्गृहीते । एवं हेतुः समर्थितो भवति । आतिथ्यायां चतुर्गृहीतानि आज्यानि भवन्ति । न हि अत्रानुयाजान् यक्ष्यन् भवतीति । असत्स्वप्यनुयाजेष्वेतदष्टगृहीतमेवौपभृतं भवेत् । यदाऽष्टसंख्या गुणभूता, न तदा द्वयोश्चतुर्गृहीतयोः सतोश्चतुर्गृहीतानि आज्यानीति बहुवचनमाज्येषूपपद्यते । तस्माच्चतुर्गृहीते द्वे इति ॥ आह, लिङ्गमेतत् । प्राप्तिरुच्यतामिति । तदभिधीयते । अनारभ्योच्यते, चतुर्गृहीतं जुहोतीति सर्वहोमेषु । तेन प्रयाजानुयाजेष्वपि न तदष्टगृहीतेन शक्यते बाधितुम् । नानाविषयत्वात् । अष्टगृहीतं हि ग्रहणे, चतुर्गृहीतं हि होमे । अस्ति हि सम्भवो यद् अष्टगृहीतं गृह्येत, चतुर्गृहीतं हूयेत । तदेतदिह अष्टत्वं ग्रहणे

भवति । कथं द्वे चतुर्गृहीते होमे सम्पादयेत् ? तस्मादू द्वे एते चतुर्गृहीते, अष्टगृहीते गृह्यमाणे गृह्येते द्वे न अगृहीत्वा अष्टगृहीतं कश्चित् सम्पादयेत् । तस्मादू द्वे एते चतुर्गृहीते इति ॥ अथ यदुक्तमष्टगृहीत श्रूयते । श्रुतिश्च लक्षणाया गरीयसीत्युच्यते । उक्तमस्माभिरष्टसंख्यायाः प्रयोजनं, कथं द्वे चतुर्गृहीते स्यातामिति । अपिचाष्टावुपभृति गृह्णातीत्युपभृति समानीते द्वे चतुर्गृहीते कथ स्यातामिति । इतरथाऽसत्यष्टशब्दे नानापात्रयोर्गृह्येयाताम् । तस्मादष्टशब्दश्रवणमदोषः । साध्वेतत् । द्वे चतुर्गृहीते उपभृतीति । प्रयोजनं, द्वयोश्चतुर्गृहीतयोः सतो समानयनेऽर्द्धं समानेतव्य भवति । अष्टगृहीते सति न नियोगतोऽर्द्धम् । तथा यत्रानुयाजार्थं न ग्रहणं, तत्राप्यष्टगृहीतम् । यथा पूर्वं पक्ष । यथा च सिद्धान्तस्तथा चातुर्मास्येषु चतुर्गृहीतमुपभृति भवतीति ॥४८॥ ॥ सिद्धान्त ॥ उपभृति द्विचतुर्गृहीताचरणाऽधिकरणम् ॥ १७ ॥ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथम पादः समाप्तः ॥ ४ ॥ १ ॥ प्रयोजकपादोऽयम् ॥

अथ चतुर्थे अध्याये द्वितीयः पाद ॥ ४ ॥ २ ॥

## स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदमाम्नातम् । खादिरे बध्नाति, पालाशे बध्नाति, रोहिते बध्नातीति । तत्सन्निधाविदमपरमाम्नायते । स्वरुणा पशुमनक्ति, यूपस्य स्वरुं करोतीति ॥

अथेदानीमिदं सन्दिह्यते, किं भेदेन यूपात् स्वरुरुत्पादयितव्य, उत यूपं क्रियमाणमनुनिष्पन्नः शकलो ग्रहीतव्य ? इति । तत्रेदं तावन्नः परीक्ष्यं, किं छेदनाद्युत्पत्तेः प्रयोजक स्वरुः, उताप्रयोजक ? । प्रयोजकश्चेदू भेदेन यूपान्निष्पाद्येत । न चेत् प्रयोजको, यूपं निष्पद्यमानमनुनिष्पन्नः शकलो ग्रहीष्यते इति । स कथं प्रयोजकः स्यात् । कथं वा न प्रयोजक इति । यद्येषा वचनव्यक्ति, स्वरुशब्दवाच्यं भाव्यते । कथम् । जोषणादिना इतिकर्त्तव्यताविशेषेणेति । तत, स्वरुणा पशुमनक्तीति स स्वरुरित्यवगम्यो ग्रहीष्यते । तत प्रयोजकः । अथैवं विज्ञायते, स्वरुणा पशुमनक्तीति । अनवगतः

स्वरुः । एतावदस्य विज्ञायतेऽनेन तेन क्रियते इति । इदमपि, यूपस्य स्वरुं करोतीति यूपैकदेशं स्वरुकार्येऽनेन विनियुङ्क्ते इति ततोऽप्रयोजक ॥ किं तावत् प्राप्तम् । स्वरुस्त्वनेकनिष्पत्ति. स्वकर्मशब्दत्वात् । स्वरुर्न यूपेनैकनिष्पत्ति स्यात् । यूपमनपेक्षमाणस्य स्वरोर्जोषणादिनोत्पत्ति । कुत । स्वकर्मशब्दत्वात् । स्वो हि अस्य कर्मशब्द स्वरुनाथा विधायको भवति, स्वरुं करोतीति । एवञ्च यूपकाष्ठाद्यवयवस्य स्वरुत्वं क्रियते इति । यूपस्य स्वरुं करोतीति लक्षणया यूपशब्द , खदिराद्यवयवस्येत्यर्थः । कुतः । स्वरुत्वभावना हि श्रुत्या गम्यते । स्वरुं करोतीति, स्वरुमुत्पादयतीति । यूपावयवोपादानं वाक्येन । वाक्याच्च श्रुतिर्बलीयसीति । तस्मादेवं सति न नियोगतो यूपकाष्ठादेव स्वरुरुत्पादयितव्यः । निरपेक्षादन्यस्मादपि वृक्षात् कर्त्तव्यो भेदनाति ॥ १ ॥ ॥ पूर्व० ॥

जात्यन्तराच्च शङ्कते ॥ २ ॥

इतश्च निरपेक्षस्य स्वरोरुत्पत्तिरिति गम्यते । कुत· । जात्यन्तरादपि आशङ्का भवति, वृक्षान्तरात् । कथम् । नान्यस्य स्वरुं कुर्यात्, यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयु., यूपस्य स्वरु करोतीति । न हि यूपमनुनिष्पन्नस्य ग्रहणे जात्यन्तराशङ्काऽवकल्पते । यूपशकलो हि स्वरुकार्ये तदानीं विनियुज्येत । तस्मादपि भेदन यूपात् स्वरुत्पादयितव्य इति ॥ २ ॥ ॥ युक्ति ॥

तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥

वाशब्द पक्षं व्यावर्त्तयति । यूपैकदेशो हि यूपमनुनिष्पन्न· शकलो ग्रहीतव्य इति । कस्मात् । एवमाम्नायते । यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयु· । यूपस्य स्वरु करोतीति । न चात्रायमर्थो विधीयते, स्वरुमुत्पादयतीति । किं तर्हि । स्वरुकार्यं कर्तुं यमुपादत्त, तं यूपादिति । कुत । स्वरुत्वस्य तन्निमित्तत्वात् । स्वरुत्वमत्र श्रूयते स्वरो । यूपस्य स्वरुं करोतीति । कस्यात्मीयम् ? यूपस्येति । आत्मीयश्च समुदायस्यैकदेशो भवति । तस्मादिदमुच्यते। अप्राणिनः षष्ठी पञ्चम्यर्थे भवति । यथा शाकस्य देहि, शाकाद्देहीति । तथा क्वचित् तृतीयार्थे— घृतस्य यजति, घृतेन यजति । पञ्चम्यर्थे- घृताद् यजति, घृतस्य यजतीति । द्वितीयार्थे वा- सोमस्य

पिबति, सोमं पिबति, सोमात् पिबतीति ॥ ननूक्तं, यूपावयवोऽत्र वाक्येन विधीयते, श्रुत्या स्वरोरुत्पत्तिः, श्रुतिश्च वाक्याद् बलीयसीति । उच्यते । सत्यम् । एवं यूपस्येति तु शब्दोऽविवक्षितार्थो भवति । तत्र श्रुतिरपि बाध्यते, वाक्यमपि । न त्वस्मत्पक्षे किञ्चिद् अविवक्षितार्थं स्वरुं करोतीति स्वार्थं एवानुवादो भविष्यतीति । यूपशकलो विधायिष्यते । स्वरुशब्दश्चाञ्जनार्थेन शकले उपचरित इति गम्यते । अवयवप्रसिद्धिश्चैनमर्थं गमयिष्यति । भवति हि ब्राह्मणम्— अथ कस्मात् स्वरुर्नाम । एतस्माद् वेपोऽवच्छिद्यते । तदस्यैतत् स्वमिवारुर्भवति । तस्मात् स्वरुर्नामेति ॥ ३ ॥ ॥ सि० ॥

## शकलश्रुतेश्च ॥ ४ ॥

इतश्च यूपमनुनिष्पन्नस्य ग्रहणम् । कुतः । शकलश्रुतेः । शकलश्रुतिर्भवति स्वरोः । यः प्रथमः शकलः परापतेत्, स स्वरुः कार्य्य इति । शकलश्चैकदेशः । एकदेशश्चाप्रयोजकः । सम्बन्धिशब्दत्वात् । तावता च व्यवहारात् समुदायापेक्षिणः । तत्र प्रकरणादन्यार्थेन खदिरादिना जोषणादिकर्मविशिष्टेन यागार्थेन प्रकृतेनास्यैकवाक्यता । यूपाय खदिरादि जोषयते, छिनत्ति, तक्षति च । तत्र यः शकलः प्रथमः परापतितस्तं च स्वरुमञ्जनार्थं करोतीति । स्वरुशब्दं च तत्रानुवदन्नेवोपचरति । तस्मान्नैतदस्ति पृथङ्निष्पत्तिः स्वरुरिति । येनान्यस्मादपि वृक्षादिति शङ्क्यते । तस्माज्जात्यन्तराशङ्कावचनं नित्यानुवादो यूपशकलस्तुत्यर्थः ॥ ४ ॥

## प्रतियूपं च दर्शनात् ॥ ५ ॥

इतश्च न पृथङ्निष्पत्तिः स्वरुः । कुतः । एकादशिन्यां, प्रतियूपं च दर्शनात् । यथाऽनुपूर्वं स्वरुभिः पशून् समज्य मध्यमे रशनागुणे स्वे स्वे स्वं स्वं यूपशकलमुपगूहतीति स्वरुबहुत्वं दर्शयति । यदि च स्वरुः पृथङ्निष्पत्तिः स्यादेक एवैकादशिन्यां तन्त्रेण कार्य्यं साधयेत् । यूपमनुनिष्पन्नस्य तु ग्रहणे प्रकृतौ स्वयूपशकलेनाऽञ्जनं कृतमित्येकादशिन्यामपि चोदकः स्वयूपशकलमेव प्रापयतीति बहुत्वमुपपन्नं भवति । स्वयूपशकलग्रहणं च प्राकृतस्य ग्रहणादध्यवसीयते । यादृशोऽसौ प्राकृतस्तादृशोऽसौ ग्रहीतव्यो, न विशिष्ट इति । तस्मात् स्वरुरुत्पत्तेर्न प्रयोजक इति ॥ ५ ॥ युक्ति ॥

## आदाने करोतिशब्दः ॥ ६ ॥

अथ यदुक्तमुत्पत्तिरस्य शब्देनोच्यते, स्वरुं करोतीति । एवञ्च करोतिशब्दोऽवकल्पिष्यते इति । उच्यते । आदाने करोतिशब्दो भविष्यति। स्वरुं करोति, स्वरुमादत्ते इति । यथा काष्ठानि करोति, गोमयानि करोतीति आदाने करोतिशब्दो भवति, एवमिहापि द्रष्टव्यम् ॥ ६ ॥ आ० नि० ॥ स्वरोश्छेदनाद्यप्रयोजकताऽधिकरणम् ॥ १ ॥

## स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय । तत्र श्रूयते, स्वरुणा पशुमनक्तीति । अथैष सन्देह. । किं स्वरुरुत्पत्तिं प्रयोजयति, उत यूपमनुनिष्पन्नस्य ग्रहणमिति । किं प्राप्तम् । स्वरुस्त्वनेकनिष्पत्ति. स्यात् । प्रयोजयत्युत्पत्तिमिति । कुतः । स्वोऽस्य कर्मशब्दो भवति । स्वरुं करोतीति स्वरुमुत्पादयतीत्यर्थः । एवञ्चेद् उत्पत्तिरस्य शब्दवती । तस्मान्नैकया निष्पत्त्या यूपश्च स्वरुश्च निष्पाद्यते इति॥१॥पूर्व०

## जात्यन्तराच्च शङ्कते ॥ २ ॥

यदि यूपमनुनिष्पन्नस्य ग्रहणं भवेत्, यूपकाष्ठस्यैव स्वरुः स्यात् । अन्यवृक्षाशङ्का नोपपद्येत, भवति च । यद्यन्यस्य वृक्षस्य स्वरुं कुर्य्यादन्येऽस्य लोकमन्वारोहेयुर्यूपस्य स्वरुं करोतीति । तस्मादपि पश्यामः, प्रयोजक स्वरुरिति ॥ २ ॥ ॥ युक्ति ॥

## तदेकदेशो वा स्वरुत्वात्तस्य तन्निमित्तत्वात् ॥ ३ ॥

यूपमनुनिष्पन्नो वा गृह्येत स्वरु., तदेकदेशो हि एष । षष्ठीनिर्देशाद्, यूपस्य स्वरुं करोतीति। यदि हि छेदनमुभयार्थं स्यान्न स्वरुयूपयो' कश्चित् सम्बन्धो भवेत् । तत्र षष्ठी नोपपद्येत । अस्ति तु षष्ठी । तस्माद् यूपैकदेशः स्वरु , अवयवो यूपस्य । स्वरुर्नामैकदेशः कर्त्तव्य , यथा पुरोडाशशकलमिति ॥ ३ ॥ सि० ॥

## शकलश्रुतेश्च ॥ ४ ॥

शकलश्रुतिश्च भवति, य. प्रथम' शकल परापतेत् स स्वरुः कार्य्य इति । एकदेशाश्चाऽप्रयोजका भवन्ति । नैकदेशे श्रूयमाणे अवयवी कर्त्तव्य इति शब्दो भवति। विद्यमानस्याऽवयविन एकदेशो गृह्यते । तस्मादप्यऽप्रयोजकः ॥ ४ ॥

## प्रतियूपं च दर्शनात् ॥ ५ ॥

प्रतियूपं च खल्वपि स्वरवो दृश्यन्ते एकादशिन्याम् । यथाऽनुपूर्वं स्वरुभि पशून् समज्य मध्यमे रशनागुणे स्वे स्वे स्वं स्वं यूपशकलमुपगूहतीति । स यदि स्वरुमान् यूप कार्य्य इत्यर्थं, स्वरुं करोतीति । तता बहूनां स्वरूणां दर्शनमुपपद्यते । प्रयोजकत्वे स्वरोः एक एव समञ्जनार्थे स्वरुरुत्पाद्यते।तस्मात् प्रयोजक इति ॥५॥ युक्तिः ॥

## आदाने करोतिशब्दः ॥ ६ ॥

अथ यदुक्तम्, उत्पत्तिरस्य शब्देनाभिधीयते स्वरुं करोतीति । करोतिशब्दश्चावकल्पिष्यते इति । उच्यते । आदाने करोतिशब्दो भविष्यति, स्वरुं करोतीति स्वरुमादत्ते इति । यथा काष्ठानि करोति, गोमयानि करोतीत्यादाने करोतिशब्दो भवत्येवमिहापि द्रष्टव्यम् ॥ ६ ॥ आ० नि० ॥ पूर्वाधिकरणसंक्षेपार्थं ॥

## शाखायां तत्प्रधानत्वात् ॥ ७ ॥

दर्शपूर्णमासयोः श्रूयते शाखामधिकृत्य, प्राचीमाहरत्युदीचीमाहरति प्रागुदीचीमाहरतीति । तत्र सन्देह । किमयं दिग्वाद, उत शाखावाद इति । दिग्वाद इति प्राप्तम् । तथा श्रुतिशब्द, शाखावादे लक्षणेति । तस्माद्दिग्वाद इति । एवं प्राप्ते ब्रूमः । शाखावाद इति । कुत । यदि तावदयमर्थ, प्राची दिगाहर्त्तव्येति । ततोऽशक्योऽर्थं । अथ प्राचीं दिशं प्रत्याहरणीयेति, तत का आहर्त्तव्येति । वाक्ये शाखाशब्दस्याभावादनुपपन्नोऽयं सम्बन्ध । अथ प्रकृता शाखेति, ततः प्राचीशब्देन तस्या एवाभिसम्बन्धो न्याय्यः । कुतः । प्रत्यक्षा हि प्राचीशब्देन हरतेरेकवाक्यता । प्रकरणाच्छाखाशब्देन भवेत् । उभयथाऽत्र प्राचीशब्दो लक्षणया प्रकृतां वा शाखां लक्षयेद्दिशो वाऽनीप्सितत्वात् । विहारदेशमीप्सितमयुक्तम् ॥ अपि च, प्राचीति सम्बन्धिशब्दोऽयम् । सम्बन्धिशब्दाश्च सर्वे सापेक्षा विना पदान्तरेण न परिपूर्णमर्थमभिवदन्ति । सामान्यपदार्थसम्बन्धे च संव्यवहारानुपपत्ति । सर्वस्यैव देशस्य कुतश्चित् प्राग्भावात् । तथा शाखाशब्दोऽपि सम्बन्धिशब्दो, वृक्षस्येत्येतदपेक्षते । यदा वृक्षस्येत्येतदपेक्षते, तदा वृक्षस्य शाखा प्राची उदीची प्रागुदीची वेति भवति सम्बन्धः । तथाच संव्यवहारोऽवकल्पते । यत्तु शाखावादे ल-

ग्रणेति उच्यते। भवति लक्षणयापि शब्दार्थः ।तस्माच्छाखाभावाद् इति॥
॥ ७ ॥ शाखाया आहार्यताधिकरणम् ॥ २ ॥

## शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद् वैषम्यं तत् ॥ ८ ॥

दर्शपूर्णमासयोः समाम्नायते, मूलतः शाखां परिवास्योपवेषं करोतीति । तत्रायमर्थः सांशयिकः । किं शाखाछेदनस्योभयं प्रयोजकं—शाखा उपवेषश्च, उत शाखा प्रयोजिका उपवेषोऽनुनिष्पादीति । किं प्राप्तम् । उभयं छेदनान्निष्पद्यते । शाखा शाखामूलं चोभयं च प्रयोजनवत् । अग्रेण वत्सापाकरणादि करिष्यते, मूलत उपवेषः । तेन विशेषाभावादुभयं प्रयोजकमिति प्राप्ते, उच्यते । शाखायां ब्रूमः ॥ तत्प्रधानत्वात् ॥ शाखाप्रधानत्वादुपवेषेण विभागो भवेत् । शाखामनुनिष्पन्नो गृह्येत । कथं तत्प्राधान्यम् । शाखां परिवास्येति द्वितीयानिर्देशात् । ननूपवेषं करोतीत्यपि द्वितीया । उच्यते । नाऽसौ परिवासयते कर्म । कस्य तर्हि । करोतेः ॥ आह । कस्मादेवमभिसम्बन्धो न भवति । शाखां परिवास्य मूलत उपवेषं करोतीति । शाखाशब्दश्च यथैव अग्रे तथा मूलेऽपि । तत्र अयमर्थः । छेदनेनाग्रमूले विभजेत् । किं प्रयोजनम् । विभज्य मूलमुपवेषं करिष्यामीति । उच्यते । नैवम् । व्यवहितकल्पना हि एवं भवेत् । अव्यवधानेन शाखार्थे परिवासनम् । वृत्ते तस्मिन्नुपवेषकरणम् ॥ ननु प्रकृतत्वान्मूलमुपवेषशब्देन सम्बद्ध्यते । उच्यते । उभयसम्बन्धे विरोधः । विरोधे च प्रकरणाद् वाक्यं बलीयः । अथ सन्निहितेन सम्बद्ध्यते, तथापि शाखाप्रयुक्तेनेत्यापतति । सिद्धमेवोपवेषो न प्रयोजयति छेदनमिति । एतदत्र वैषम्यम् ॥ ८ ॥

## श्रुत्यपायाच्च ॥ ९ ॥

शाखया वत्सानपाकरोति, शाखया गा प्रापयति, शाखया दोहयतीत्येवमादिषु शाखाग्रहणेषु नोपवेषस्य व्यापारस्ततः शाखाशब्दोऽपैति । न हि तन्मूलं शाखेत्याचक्षते । किमतो यत्रैवं, यत्र शाखाशब्दस्तदर्थं छेदनम् । द्वितीयानिर्देशात् । अथापि मूले शाखाशब्दो भवेद्, एवमपि शाखाशब्दोपदिष्टेषु न मूलम् । अमूलपरिवासितत्वात् । यच्चैवं संस्कृतया शाखया क्रियते, तदर्थं छेदनम् । न चोप-

धानं मूलपरिवासितया क्रियते। तस्मान्न तदर्थं छेदनम्। किं भवति प्रयोजनम्। पौर्णमास्यामपि शाखोत्पाद्या। यथा पूर्वः पक्षः। यथा सिद्धान्तः। तथा नोत्पादयितव्येति ॥ ९ ॥ ॥ छेदनस्य शाखाप्रयुक्तताऽधिकरणम् ॥ ३ ॥

## हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणां चार्थशेषत्वात् ॥ १० ॥

दर्शपूर्णमासयोरामनन्ति, सह शाखया प्रस्तरं प्रहरतीति। तत्र सन्देहः। किं शाखाप्रहरणं प्रतिपत्तिकर्म, उतार्थकर्मेति। किं प्राप्तम्। हरणे तु जुहोतिः स्यात्। अर्थकर्म इत्यर्थः। कुतः। योगसामान्यात्। योगोऽस्याः समानः प्रस्तरेण, सह शाखया प्रस्तरं प्रहरतीति। सहयोगे यत्र तृतीया तस्य गुणभावो, यत्र द्वितीया तस्य प्राधान्यम्। प्रस्तरे च विस्पष्टो यजिः। शाखापि तस्मिन्नेव यजौ प्रस्तरस्य विशेषणं, समानयोगित्वात् ॥ आह ॥ ननु तत्र तत्र गुणभूता शाखा। तस्याः प्रतिपत्तिर्न्याय्या। इतरथाऽनेकगुणभावः प्रसज्ज्येतेति। उच्यते। द्रव्याणां चार्थशेषत्वादुत्पत्त्या चिकीर्षितस्य शेषभूतान्येव द्रव्याण्यपदिश्यन्ते भूतं भव्यायोपदिश्यते इति। तस्मादनेकगुणतैव द्रव्याणां न्याय्येति ॥ १० ॥ ॥ पूर्व० ॥

## प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥

प्रतिपत्तिर्वा शाखाप्रहरणम्। शब्दस्य तत्प्रधानत्वात्। शब्दोऽत्र शाखाप्रधानः। कथम्। द्वितीयाश्रवणात्। नन्वन्यत्रैव सा द्वितीया, प्रस्तरे, न शाखायाम्। उच्यते। प्रस्तरे द्वितीयार्थः शाखायामपि। कथम्। तुल्ययोगात् सह शाखया, एवं प्रस्तरः प्रहृतो भवति। यदि शाखापि प्रह्रियते। तेन तुल्ययोगे सहशब्दोऽयम्। यदि प्रस्तरः प्रहरणे प्रधानं, शाखापि प्रस्तरविशेषणं, तर्हि तुल्ययोगः। तस्माद् यः प्रस्तरे द्वितीयार्थः, स शाखायामपि। अतः शाखा प्रधानम्। अपिच तत्र तत्र शाखा गुणभूता। तस्यामन्यत्र उपदिश्यमानायामनेकगुणभावः। तत्र को दोषः। दृष्टं कार्य्यं हित्वा अदृष्टं कल्प्येत। कृतप्रयोजनायाः शाखाया अपनयनेन वेदिविवेचनात् सुखप्रचारे दृष्टं कार्य्यं, न तु प्रहरणे किञ्चित् सूक्ष्ममपि दृष्टमस्ति। तस्मात् प्रतिपत्तिर्न्याय्या ॥ आह। ननु तृतीयाश्रवणात् परार्थेन शाखोच्चारणेन भवितुं न्याय्य-

म् । उच्यते । भवेदेतन्न्याय्यं, यदि निर्ज्ञातकाला शाखा स्यात् । तत्र प्रस्तरस्य कालपरिच्छेदाय कीर्त्यमाना परार्था उच्चार्येत । इह पुनरेतद्विपरीतम् । निर्ज्ञातकालः प्रस्तरोऽनिर्ज्ञातकाला शाखा । तस्मात् सत्यपि तृतीयाश्रवणे प्रस्तर एव शाखायाः कालं परिच्छेत्स्यति । यथा द्वितीयानिर्दिष्टस्तथा शाखा द्रष्टव्या । यथा तृतीयानिर्दिष्टा तथा प्रस्तरः । सामर्थ्यं हि बलवत्तरमिति ॥ ११ ॥ सि० ॥

## अर्थेऽपीति चेत् ॥ १२ ॥

आह । ननु गुणभावेऽपि द्वितीया भवति । यथा सक्तु मारुतैककपालेषु ॥ १२ ॥ आ० ॥

## न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

नैतत् सक्त्वादिभिस्तुल्यम् । तत्र सक्त्वादेरन्यत्रानधिकारात् । इह च शाखयाऽन्यस्यार्थस्य कृतत्वाद् वत्सापाकरणादेः । आह । ननु पुनरुक्तमेतत्— सक्त्वादीनां प्रदर्शनं समाधिश्चेति । उच्यते । न पुनरुक्तता महान् दोषः । बहुकृत्वोऽपि पथ्यं वेदितव्यं भवति । ग्रन्थभयेन पुनरुक्तं नेच्छन्ति । अर्थाग्रहणात्तु बिभ्यतः पुनः पुनरभिधीयमानं बहु मन्यन्त एव । किं चिन्तायाः प्रयोजनम् । यदि अर्थकर्म पौर्णमास्यामपि शाखोत्पाद्या, अथ प्रतिपत्तिर्नोत्पादयितव्येति ॥१३॥ आ० नि० ॥ शाखाप्रहरणस्य प्रतिपत्तिकर्मताऽधिकरणम् ॥ ४ ॥

## उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद्विभागः स्यात् ॥ १४ ॥

दर्शपूर्णमासयोराम्नायते, अपः प्रणयत्यापो वै श्रद्धा श्रद्धामेवालभ्य यजते इति । उभयत्र च प्रणीतानां व्यापारः । प्रणीताभिर्हवींषि संयौतीति । तथा, अन्तर्वेदि प्रणीता निनयतीति । तत्र सन्देहः । किमुभयमासां प्रयोजकं सयवनं निनयनं च ? उत सयवनार्थानां निनयनं प्रतिपत्तिरिति । किं प्राप्तम् । उत्पत्तिसंयोगो नासां केनचित् प्रयोजनेन । उभाभ्यामुत्पन्नानां संयोगः । तस्मान्न गम्यते विशेषः । अगम्यमाने विशेषे उभयार्थानां विभागोऽयं, काश्चिद् यागः सयवनं, काश्चिन्निनयने इति आज्यवत् । यथा सर्वस्मै वा एतद् यज्ञाय गृह्यते यद् ध्रुवायामाज्यमिति ॥ १४ ॥ ॥ पूर्व० ॥

**संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥**

संयवनार्थाः प्रणीताः । कुतः । तृतीयानिर्देशात् । संयवनेऽपां गुणभावो, द्वितीयानिर्देशाच्च निनयने प्राधान्यम् । चिन्तायाः प्रयोजनं— पुरोडाशाभावे प्रणीतानामभावो, यथा पयस्यायाम् ॥ १५ ॥ सि० ॥ निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ५ ॥

**प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥**

ज्योतिष्टोमे श्रूयते । वाग्वै देवेभ्योऽपाक्रामत् । यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् । सैषा वाग् वनस्पतिषु वदति । या दुन्दुभौ या च तूणवे या च वीणायाम् । यद् दीक्षिताय दण्डं प्रयच्छति वाचमेवावरुन्धे, क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति, मैत्रावरुणाय दण्डं प्रयच्छतीत्येतदुदाहरणम् । तत्र संशयः । किं दीक्षितधारणे शेषभूतस्य दण्डस्य मैत्रावरुणधारणं प्रतिपत्तिः ? अथवा अर्थकर्मेति । किं प्राप्तम् । मैत्रावरुणाय दण्डदानं प्रतिपत्तिः । कुतः । दीक्षितधारणे कृतार्थत्वात् । दण्डेन दीक्षयन्तीति शेषभूतस्यान्यत्र व्यापारः प्रतिपत्तिर्न्याय्या । यथा, चात्वाले कृष्णविषाणां प्रास्यतीति कण्डूयने शेषभूतायाः प्रासनं प्रतिपत्तिः । एवमत्रापि द्रष्टव्यम् । द्वितीया च दण्डे विभक्तिः । तस्मात् प्राधान्यमिति ॥ १६ ॥ ॥ पूर्व० ॥

**अर्थकर्म वा कर्तृसंयोगात् स्रग्वत् ॥ १७ ॥**

अर्थकर्म्म वा स्यात् । कुत । कर्तृसंयोगात् । कर्तृसंयोगो भवति । मैत्रावरुणाय दण्डमिति । कर्तृदण्डसंयोगो भवति । तस्मिँश्च दण्डो गुणभूतः । पुरुषः प्रधानभूतः । पुरुषं हि स प्रचरितुं समर्थं करोति । कथम् । यथा पूर्वं तमोऽवगाहतेऽप. सर्पति गां च सर्पं च वारयति, अवलम्बनं च भवति । अतः पुरुषप्राधान्यान्न प्रतिपत्तिः । स्रग्वच्च द्रष्टव्यम् । यथा स्रजमुद्गात्रे ददातीत्यऽसत्यप्युपकारे पुरुषस्य प्रयोजनवत्त्वान्निष्प्रयोजनत्वाच्च स्रजो भवति पुरुषप्राधान्यम् । एवमिहापि द्रष्टव्यम् । तस्मान्न प्रतिपत्तिरिति ॥ अथ यदुक्तं, द्वितीयाश्रवणाद्दण्डप्राधान्यमिति । उच्यते । तथा युक्तं चानीप्सितमिति द्वितीया द्रष्टव्या । कुत । मैत्रावरुणे चतुर्थीनिर्देशात् । सम्प्रदाने हि चतुर्थी भवति । सम्प्रदानं च कर्मणा अभिप्रेयते । तत्र दण्डादभिप्रेततरो

मैत्रावरुण इति गम्यते ॥ १७ ॥ ॥ सि० ॥

## कर्मयुक्ते च दर्शनात् ॥ १८ ॥

दण्डी प्रैषानन्वाहेत्यनूद्यते । तेन प्रचरतो दण्डं प्रदर्शयति । तद् अर्थकर्मणि सत्युपपद्यते । प्रतिपत्तौ तु दण्डो मैत्रावरुणाय दत्तस्ततोऽपवृज्येत । कृतं च कर्त्तव्यमिति न तेन प्रयोजनमिति न धार्य्येत । तत्रैतद्दर्शनं नोपपद्यते । तथा, अहिरिवाभूद्भोगैः पर्य्येतीति मैत्रावरुणं ब्रूयात् अहिरिव भोगैः पर्य्येति इति । तथा, मुशलयन्वाहेति । मुशलशब्दश्च दण्डे प्रसिद्धः । यथा, क्व नु खलु मुशलिनो माणवका गङ्गामवतरेयुरिति । तस्मादप्यर्थकर्म ॥ १८ ॥ युक्ति ॥ दण्डदानस्याऽर्थकर्मताऽधिकरणम् ॥ ६ ॥

## उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ॥ १९ ॥

यदुक्तं, यथा कृष्णविषाणाप्रासनमिति । तत्रोच्यते । युक्तं तत्रोत्पद्यमानं यद् येन प्रयोजनेन सम्बद्धमुत्पद्यते, तत् तदर्थमेव न्याय्यम् । तस्यान्यत्र गमने प्रतिपत्तिरित्येतदुपपद्यते, यदि न दृष्टं प्रयोजनं भवति । इह तु दृष्टं प्रयोजनं मैत्रावरुणस्य धारणं । तस्माद्विषममेतत् ॥ अथवा अधिकरणान्तरं, विषाणाया कण्डूयनं प्रासनं च उभयमपि प्रयोजकमिति पूर्वः पक्षः । एकनिष्पत्तेः सर्वं समं स्यादिति । उत्तरः पक्षः, कण्डूयनं तृतीयानिर्देशाद् विषाणाया गुणभावः । प्रासने च द्वितीयानिर्देशादन्यत्र च कृतार्थत्वात् प्राधान्यमिति ॥ १९ ॥ प्रासनस्य प्रतिपत्तिकर्मताऽधिकरणम् ॥७॥ पूर्वाधिकरणे आशङ्कानिरासः ॥

## सौमिके च कृतार्थत्वात् ॥ २० ॥

अस्ति ज्योतिष्टोमेऽवभृथो, वारुणेनैककपालेन अवभृथमभ्यवयन्तीति । तत्राम्नायते, वरुणगृहीतं वा एतद् यज्ञस्य यदृजीषं यद्ग्रावाणो यदौदुम्बरी यदधिषवणफलके, तस्माद् यत्किञ्चित् सोमलिप्तं द्रव्यं तेन अवभृथं यन्तीति । तत्र संशयः । किं सोमलिप्तानां द्रव्याणामवभृथगमनं प्रतिपत्तिः, अथवा अर्थकर्मेति । किं तावत् प्राप्तम् । प्रतिपत्तिरिति कुतः । कृतार्थत्वात् । कृतार्थान्येतानि द्रव्याणि तत्र तत्र, तेषामवभृथगमनं प्रतिपत्तिर्न्याय्या ॥ २० ॥ सि० ॥

## अर्थकर्म वाभिधानसंयोगात् ॥ २१ ॥

अर्थकर्म्म वा, अभिधानेन सयागात् ॥ तेन, अवभृथं यन्तीति । तेन अवभृथसञ्ज्ञक निष्पादयन्तीति। तृतीया तेनेति, द्वितीया अवभृथमिति । तस्मात् सोमलिप्त गुणभूतमवभृथ प्रधानभूत इति ॥२१॥पूर्व०

## प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थावभृथश्रुतिः ॥ २२ ॥

प्रतिपत्तिर्वा । कुत । तन्न्यायत्वादेव । एष हि न्यायो, यदन्यत्र कृतार्थमन्यत्र प्रतिपाद्यत । तदिह यदि सोमलिप्तं द्रव्यमवभृथे करणं विधीयते ततोऽर्थकर्म्म, अथ सोमलिप्तस्य यानं विधीयते तत प्रतिपत्ति. । न ह्यत्र सोमलिप्तं विधीयतेऽवभृथे । तथा सति अवभृथसोमलिप्तसम्बन्धोऽभ्यवयन्तीत्यनेनाख्यातेन विधीयेत । तत्र वाक्येन विधानं स्याद्, न तु श्रुत्या । यानेऽमुना विधीयमाने श्रुत्या विधानम् । तत्परिगृहीत भवति । श्रुतिश्च वाक्याद् बलीयसी । तस्मात् प्रतिपत्तिः । अथ यदुक्तम्. अर्थकर्म्मं अभिधानेन सयोगादिति । तत्र ब्रूम । एवं सति देशार्था अवभृथश्रुति. । अवभृथं यन्तीत्यवभृथेन देश लक्षयति । यस्मिन् देशेऽवभृथस्तं देशं यन्तीति । तस्मात् प्रतिपत्तिरिति ॥ २२ ॥ उत्तरम् ॥ अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ८ ॥

## कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात्॥२३॥

इदं श्रूयते, पशुबन्धस्य यज्ञक्रतो. षड् ऋत्विजः, दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विज., चातुर्मास्यानां क्रतूनां पञ्च ऋत्विज', अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्, सौम्यस्याध्वरस्य यज्ञक्रतो सप्तदश ऋत्विज. । तथा, समे दर्शपूर्णमासाभ्यां यजेत, प्राचीनप्रवणे वैश्वदेवेन यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्ययेति । तत्र सन्देहः । किं कर्तृदेशकाला विधीयन्ते, उतानूद्यन्ते इति । किं तावत् प्राप्तम् । कर्तृदेशकालानाम् अचोदनमनुवाद । कुत. । प्रयोगे नित्यसमवायात् । प्रयोगे नित्यसमवेता एते इति । न ऋते कर्तृदेशकालेभ्य. प्रयोग' सिद्ध्यति । तेन प्रयोगचोदनायैव प्राप्तानामनुवाद । ननु विषमादिप्रतिषेधार्थमेतद्वचनं भविष्यति । नेति ब्रूमः । उपदेशकमेवञ्जातीयकं वचनं, न प्रतिषेधकम् । तस्मादनुवाद इति ॥ २३ ॥ ॥ पूर्व० ॥

## नियमार्था वा श्रुतिः ॥ २४ ॥

उच्यते, न चैतदस्त्यनुवाद इति । अनुवादमात्रमनर्थकम् । यदि विधिः, एवमपूर्वमर्थं प्रकरिष्यति । तस्माद् विधिरिति । ननु प्रयोगाऽङ्गत्वात् प्राप्त एवेति । उच्यते । नियमार्था श्रुतिर्भविष्यति । कोऽयं नियम । अनियतस्य नियतता । प्रयोगाङ्गतया सर्वे देशा प्राप्नुवन्ति, न तु समुच्चयेन । यदा समो, न तदा विषमः । यदा विषमो, न तदा सम । स एष समः प्राप्तश्चाप्राप्तश्च । यदा न प्राप्तः, स पक्षो विधिं प्रयोजयति । अतो विषमचिकीर्षायामपि समो विधीयते। तस्माद् विषमस्याप्राप्तिर्विधौ सति भवतीति समो विधीयते । एवमितरेष्वपि । तस्माद् विधिरिति ॥ २४ ॥ ॥ सि० ॥ कर्तृदेशकालविधीनां नियमार्थताधिकरणम् ॥ ९ ॥

## तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २५ ॥

अधिकरणप्रदेशोऽयम् । इदमामनन्ति । वायव्यं श्वेतमालभेत भूतिकामः । यथा, सोमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, यथा नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणामिति तत्र सन्देहः । किं श्वेतादिवर्णो विधीयते, उत अनूद्यते इति । किं प्राप्तम् । अनूद्यते । द्रव्यश्रुतिगृहीतत्वात् । विधिर्वा, पक्षे प्राप्तस्य नियमार्थ इति । पक्षोक्तं प्रयोजनमुभयोरप्यधिकरणयोः ॥ २५ ॥ ॥ द्रव्यगुणविधानस्य नियमार्थताधिकरणम् ॥ १० ॥

## संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

अयमप्यधिकरणप्रदेशः । दर्शपूर्णमासयो श्रूयते । व्रीहीनवहन्ति, तण्डुलान् पिनष्टीति । तत् किमिमौ विधी, उतानुवादौ ? इति संशयेऽर्थप्राप्तत्वादनुवादाविति प्राप्ते नियमार्थत्वाद् विधी इति ॥२६॥ अवघातादिसंस्कारविधानस्य नियमार्थताधिकरणम् ॥ ११ ॥

## यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥

शेषविनियोग उक्तः । किं तत् प्रधानं ? यस्यैते शेषा इति । उच्यते।यजति ददाति जुहोतीत्येवँलक्षणम् । अथ किंलक्षणको यजतिर्जुहोतिर्ददातिश्च ? इति । यजतिचोदना तावद् द्रव्यदेवताक्रियम्।

द्रव्यं, देवता च, तस्य द्रव्यस्य क्रिया, यया तयोः सम्बन्धो भवति । समुदाये समुदितेष्वेषु यजतिशब्दो भवति। लोके, इष्टोऽनेन पशुपतिरिति । तेन मन्यामहे, द्रव्यदेवताक्रियस्यार्थस्य यजतिशब्देन प्रत्यायनं क्रियते इति । लक्षणकर्म्मणि प्रयोजनं न वक्तव्यम् । ज्ञानमेवात्र प्रयोजनमिति ॥२७॥ ॥ यागस्वरूपनिरूपणाऽधिकरणम् ॥१२॥

## तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥२८॥

अथ किंलक्षणको जुहोतिरिति । तदुक्तं यजत्युक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके । तस्माद् यजतिरेवासेचनाधिको जुहोतिः । हुतमनेनेत्येवञ्जातीयके वक्तारो भवन्ति लोके । वेदेऽपि यजतिचोदितं जुहोतिना अनुवदति । सग्रामिणं चतुर्होत्रा याजयेत् चतुर्गृहीतमाज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्द्धं जुहुयादुत्तरेणार्द्धमिति ॥ अथ ददाति· किंलक्षणक इति । आत्मनः स्वत्वव्यावृत्तिः, परस्य स्वत्वेन सम्बन्धः। यजति–ददाति–जुहोतिषु सर्वेषूत्सर्गः समान· । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रं, जुहोतिरासेचनाऽधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन सम्बन्ध इत्येष एषां विशेष इति ॥ २८ ॥ ॥ होमस्वरूपनिरूपणाधिकरणम् ॥ १३ ॥

## विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥२९॥

ज्योतिष्टोमे श्रूयते, यद् आतिथ्यायां बर्हिस्तदुपसदां, तदग्नीषोमीयस्येति। तत्र सन्देहः। किं परद्रव्यस्योपदेश· १ उत निरिष्टिकस्य२ अथवा धर्म्मविधिप्रदेशः ३, अथवा द्रव्यसाधारण्यमिति । किं प्राप्तम् । १ परद्रव्यस्य उपदेश । कुतः। परद्रव्यस्योपदेशसदृश· शब्दो, यद् आतिथ्यायां तदुपसदामिति।यथा, यो देवदत्तस्य गौः स विष्णुमित्रस्य कर्त्तव्य इति देवदत्तादाच्छिद्य विष्णुमित्राय दीयते इति । अत· परद्रव्यस्योपदेश इति । न चैतदस्ति । तथा सति आतिथ्यायां तस्य विधानं यत् पूर्वं, तदनर्थकं स्यात् ॥ २ एवं तर्हि निरिष्टिकस्योपदेशः । तेन आतिथ्यायां यद् विहितम्, आतिथ्यायां यदुपात्तमिति । तथा सत्यर्थवद् आतिथ्यायां तद् वचनम् । निरिष्टिकेन तूपसदः कर्त्तव्या भवन्ति । न चैष शिष्टानामाचारो, न च सर्वे चोदकप्राप्ता धर्म्मा भवेयुः । अतो ब्रूम·, ३ विधेः कर्म्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ तद् बर्हि· परिसमाप्तायामातिथ्यायाम-

पयुक्तं, पूर्वं तदातिथ्यायाः, उपसत्काले आतिथ्यासम्बन्धस्तस्य नास्ति। भूतपूर्वेण आतिथ्यया कर्मणा लक्ष्येत । लक्षणाशब्दश्च न न्याय्य। तस्मादातिथ्याबर्हिष आञ्जस्याभावाद् यद्धर्मकमातिथ्याबर्हिस्तद्धर्मकमुपसदामग्नीषोमीयस्य चेति न्याय्यम् ॥ २९ ॥ ॥ पूर्व० ॥

**अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥ ३० ॥**

अपि वेति पक्षो व्यावर्त्तते । उत्पत्तिसंयोग एवैषोऽस्य बर्हिषः । यदि हि उत्पन्नमातिथ्यायां बर्हिर्विशिष्टं स्यात्, तस्य धर्मा औपसदे बर्हिषि अतिदिश्येरन्, न तु तदस्ति केनचिद् वाक्येन । एवं प्रकृत्य, बर्हिषो विशेषो वक्ष्यते । आश्ववाल' प्रस्तर , विधृती चैक्षव्यौ इति । तेन, न परविहितं बर्हिरुच्यते, न निरिष्टिकं, न कुतश्चिद्धर्मा प्रतिदिश्यन्ते । किं तर्हि । साधारणममीषां बर्हिरुच्यते । यदातिथ्यायां विधीयते, तदेवोपसदाम् । अग्नीषोमीयस्य च विधीयते इति अविशिष्टानां बर्हिषा संयोग एकेन सर्वेषाम् । यद् आदौ बर्हिर्लूयते, तल्लवनं सर्वेषामर्थेन, साधारणो बर्हिषः प्रयोगः । एवं श्रुतिः शब्दस्य परिगृहीता भविष्यति । इतरथा धर्मलक्षणा भवेत् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मात् त्रयाणां साधारणं बर्हिरिति, पक्षोक्तं प्रयोजनम् ॥३०॥ सि० ॥ बर्हिष आतिथ्यादिसाधारण्याऽधिकरणम् ॥ १४ ॥ इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ ४ ॥ २ ॥

अथ चतुर्थे अध्याये तृतीयः पादः ॥ ४ ॥ ३ ॥

**द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ॥ १ ॥**

यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति सरसा अस्य आहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोतीति । यस्याश्वत्थी उपभृद् भवति ब्रह्मणैवास्यान्नमवरुन्धे । यस्य वैकङ्कती ध्रुवा भवति प्रत्यंचास्याहुतयस्तिष्ठन्ति । अथो प्रैव जायते यस्यैवंरूपाः स्रुवा भवन्ति । सर्वाण्यवैनं रूपाणि पशूनामुपतिष्ठन्ते, नास्य अपरूपमात्मन् जायते इति । तथा ज्योतिष्टोमसंस्कारे

फलश्रुतिः।यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । तथा, केशश्मश्रू वपते दतो धावते नखानि निकृन्तति स्नाति, मृता वा एषा त्वगमेध्यं वाऽस्यैतदात्मनि शमलं तदेवोपहत्य मेध्य एव मेधमेवमुपैति । कर्मणि फलं श्रूयते । अभीपू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ, यत् प्रयाजानुयाजा इज्यन्ते, वर्म वा एतद् यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै इति ॥ अत्र सन्देह । किमिमे फलविधय , उतार्थवादा इति । किं प्राप्तम् । फलविधय· । प्रवृत्तिविशेषकरत्वात् फलविधे· । यथा, खादिरं वीर्यकामस्य यूपं कुर्यात्, पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्येति । यथैते फलविधयः, एवमिहापि द्रष्टव्यम् । एवं प्राप्ते ब्रूमः । फलार्थवादा इति । कुत । परार्थत्वात् । क्रत्वर्थान्येतानि । जुहू· प्रदाने गुणभूता, उपभृदुपधारणे, स्रुवा आज्यधारणे, अञ्जनवपनादि च यजमाने, आघारावाज्यभागौ प्रयाजानुयाजाश्चाग्नेयादिषु । यदि फलेऽपि गुणभाव· स्याद्, अन्यत्रोपदिष्टानामन्यत्र पुनर्गुणभाव उपदिष्ट इति प्रतिज्ञायेत । न चैतन्न्याय्यम् । परार्थता हि गुणभाव । क्रत्वर्थता चैषां शब्देन, जुह्वा जुहोति जुह्वा होममभिनिर्वर्त्तयतीति । एवं सर्वत्र । तस्मान्नैते पुरुषार्था ॥ १ ॥ ॥ सि० ॥

उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥

अथोच्येत । पुरुषमपि प्रति गुणभाव उपदिष्टो, यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीत्येवमादिभिर्वाक्यैरिति । तच्च न । कस्मात् । उत्पत्तेरतत्प्रधानत्वात् । तत्र, पालाश्या जुह्वा अपापश्लोकश्रवणं क्रियते इति न कश्चिच्छब्द आह । एतावच्छ्रूयते, यस्यासौ भवति, न स पापं श्लोकं शृणोतीति । एतावदत्र शब्देन गम्यते, यस्यैवंलक्षणा जुहूस्तस्य अपापश्लोकश्रवणमिति । तत्र, जुह्वा तत् क्रियते, जुहूर्वा तदर्थेति । नैतच्छब्द आह ॥ नन्वनुमानादेतद् गम्यते । ध्रुवं पालाश्या जुह्वा तत् क्रियते, यतस्तस्यां सत्यां तद् भवतीति । अत्रोच्यते न । एवञ्जातीयकं कार्यकारणत्वेऽनुमानं भवति । कार्यकारणसम्बन्धो नाम स भवति, यस्मिन् सति यद् भवति, यस्मिँश्चासति यन्न भवति, तत्रैव कार्यकारणसम्बन्ध । इह तु तद्भावे भावो ज्ञातो, नाभावेऽभाव· । यस्य पालाशी न भवति तस्य

अपापश्लोकश्रवणं नास्तीति । नैवञ्जातीयकः शब्दोऽस्ति । तेन न नियोगतोऽत्रगम्यते, तेनेदं क्रियते इति । लक्षणमेतत् पुरुषस्य गम्यते । तस्मान्नानुमानम् ॥ अपिच । यस्यापि जुहूः पालाशी भवति, तस्यापि पापश्लोकश्रवणं भवति । कथमवगम्यते । प्रत्यक्षतः । नन्वेवं सति अग्निहोत्रेणापि फलं न साध्येत । न हुतमात्रेण फलं दृश्यते इति । नैष दोषः । न हि तत्रोच्यते, तावतैव फलं भवतीति । इह तु वर्त्तमानायां जुहूसत्तायां वर्त्तमानस्य पापश्लोकश्रवणस्य प्रतिषेधः तस्माच्च तत्रानुमानम्, इदं कार्यमिदं कारणमिति । अग्निहोत्रादिषु तु शब्देनैव कार्यकारणसम्बन्ध उच्यते । तस्मात् तत्र तत्कालेऽदृश्यमानेऽपि फले, कालान्तरे फलं भविष्यतीति गम्यते, न त्वेवञ्जातीयकेषु । तस्मान्नैवञ्जातीयकेभ्यः फलमस्तीति ॥ ननु यस्य पालाशी जुहूर्भवति, न स पापं श्लोकं शृणोतीत्येवमुक्ते तत एव तत् फलं भवतीति गम्यते। तस्मादिहापि कालान्तरे फलं भविष्यतीति । उच्यते । सत्यं गम्यते । प्रमाणं तत्र किमिति विचारयामः । न तावत् प्रत्यक्षं, नानुमानं, नेतरद् दृष्टविषयमुपमानादि । नो खल्वपि शब्द इत्येतदुक्तम् । वाक्यार्थोऽपि पदार्थोपजनितो भवति, नान्यथा । तदुक्तं, तद्भूतानां क्रियार्थेन समाम्नाय इति । तस्मादप्रमाणमूलत्वान्मिथ्याविज्ञानमेतत् । लौकिकेषु वाक्येषु । अथैवं गम्यते । तानि हि विज्ञातेऽर्थे प्रयुज्यमानानि अध्याहार्य्यपदानि गौणानि विपरिणतव्यवहितार्थानि च प्रयुज्यन्ते । तस्मात् तत्सादृश्याद् वचनागम्येष्वप्यर्थेषु भवति तत्स्वरूपो मिथ्याप्रत्ययः । यथा मृगतृष्णादिषु ॥ अपि च, वर्त्तमानापदेशोऽयम् । न चायमर्थो वर्त्तमानः । तस्मान्न खादिरस्रुवादिसद्भावे तत् फलं भवेत् । तदेवमापतति । खादिरादौ सति भवति तत् फलं, नापि भवति । असत्यपि भवति वा न वा इति । नैवं विज्ञायते । कुतस्तत् फलमिति । तस्मादेवञ्जातीयकेषूच्चारितेषु न क्वचित् प्रवृत्तिर्न कुतश्चिन्निवृत्तिरित्यानर्थक्यमक्रियार्थत्वात् । अर्थवादे तु सति भवति प्रयोजनं खादिरादेः, स्रुवादिषु कर्मार्थेषु प्रयोजनवत्सु । यद्येषां क्रतुं प्रति प्रयोजनवत्ता न स्यात्, तत एतदेव फलं कयाचिच्छन्दवृत्त्या, भवेद् वा न वा इति विचार्येत । सति तु पारार्थ्ये नैव काचिच्छन्दप्रवृत्तिराश्रयितुं शक्यते । कैमर्थ्ये हि सा कल्प्येत । तस्मादेवञ्जातीयका अर्थवादाः । अर्थवादत्वं चाऽवर्त्तमाने वर्त्तमानशब्दः प्रशसार्थे

उपपत्स्यते ॥ २ ॥ ॥ युक्तिः ॥

## फलं तु तत्प्रधानायाम् ॥ ३ ॥

अथ यदुक्तं, यथा– खादिरं वीर्यकामस्य यूपं कुर्याद् बैल्वमन्नाद्यकामस्य पालाशं ब्रह्मवर्चसकामस्येति । युक्तं तेषु । विधिविभक्तिः कुर्यादिति वीर्य्यखादिरसम्बन्धस्य विधात्री । न च वर्त्तमानापदेशिनी । तस्मात् तत्राऽविरोध इति । एवं हि पदवाक्यार्थन्यायविदः श्लोकमामनन्ति—

कुर्यात् क्रियेत कर्त्तव्यं भवेत् स्यादिति पञ्चमम् ।

एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्, इति ॥ विधिविभक्तिं हि विधायिकां लिङ्गं मन्यमानाः श्लोकमिमं समामनन्ति। अस्ति चात्र विधिविभक्तिः । तस्मादनुपवर्णनमेतदिति ॥ ३ ॥ ॥ आ० नि० ॥ द्रव्यसंस्कारकर्मणां क्रत्वर्थताधिकरणम् ॥ १ ॥

## नैमित्तिके विकारत्वात् क्रतुप्रधानमन्यत् स्यात् ॥ ४ ॥

अस्ति ज्योतिष्टोमे नैमित्तिकं– बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्य्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्येति । तथाऽग्नौ नैमित्तिकं– साहस्रं प्रथमं चिन्वानश्चिन्वीत, द्विसाहस्रं द्वितीयं त्रिसाहस्रं तृतीयमिति । तथा दर्शपूर्णमासयोः श्रूयते– गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्त्तिकेन प्रतिष्ठाकामस्येत्येतानि नैमित्तिकानि । तेषु सन्देहः । किमेतान्येव नैमित्तिकानि नित्यार्थे, उतान्यत् । तत्र तत्र नित्यार्थे इति ॥

किं प्राप्तमेतान्येव ? इति । कुतः । अत्र ब्रह्मसामादिभिरवश्यं भवितव्यम् । चोदितानि हि तानि । सन्निहितानि साधनानि आकाङ्क्षन्ति । न चैषां सन्ति विहितानि साधनानि । समीपतश्च नैमित्तिकान्युपनिपतन्ति । तैः प्रकृतैः सन्निहितैरेतानि निराकाङ्क्षीक्रियन्ते इत्येतन्न्याय्यम् । कथम् । नैमित्तिकं हि सन्निहितं वाक्याद् अवगम्यते, नान्यच्छ्रूयते । यावांश्च श्रुतस्योत्सर्गे दोषस्तावानेव अश्रुतकल्पनायाम् ॥ आह । ननु निमित्तार्थानि तानि प्रकृतानि । उच्यते । नैष दोषः । अन्यार्थमपि प्रकृतमन्येन सम्बद्ध्यते । यथा, शाल्यर्थं कुल्याः प्रणीयन्ते । ताभ्यश्च पानीयं पीयते । उपस्पृश्यते च । एवमिहापि द्रष्टव्यम् । अथवाऽस्त्येवात्र अवान्तरवाक्यम् । यथा, गोदोहनेन प्र-

णयेदिति । तदकामसम्बद्धं गोदोहनेन प्रणयनं प्रापयति । न च शक्यं श्रुतमुत्स्रष्टुम् । योऽप्ययं पशुकामस्येति शब्द, स पशुकामसम्बन्धं शक्नुयात् कर्तुं, नाऽवान्तरवाक्यस्यार्थं निवारयितुम् । न च गम्यमानं, विना कारणनाविवक्षितमिति शक्यं वदितुम् । भवन्ति च क्लिष्टानि वाक्यानि । यथा श्वेतो धावति, अलम्बुसानां यातेति । तस्मान्नैमित्तिकान्येव नित्यार्थे भवितुमर्हन्तीति ॥ एवं प्राप्ते ब्रूम । नैमित्तिके श्रूयमाणे क्रत्वर्थमन्यत् स्यादिति । कुत । विकारत्वात् विशेष श्रुतत्वादित्यर्थ. । विशेषे हि तत्र नैमित्तिकं श्रूयते । तद् असति तस्मिन् विशेषे न भवितुमर्हति । यदुक्तम्, अवश्यकर्त्तव्यानीति । नैष दोष. । अवश्यकर्त्तव्यत्वात् करिष्यन्ते । यत्तु नान्यदेषां विहितं साधनमिति । सामान्यविहितं भविष्यतीति न दोष. । किन्तु तत् ? । अभीवर्त्तो ब्रह्मसाम अष्टादशमन्त्रगतोऽग्नि' वारणं प्रणयनपात्रम् । अथ यदुक्तं, सन्निहितै प्रकृतैर्नैमित्तिकैर्ब्रह्मसामादीनि सम्भत्स्यन्ते इति । नति ब्रूमः । न हि बार्हद्गिरादीनां प्रकरणम् । अथोच्येत, प्रकृतैः स्तोत्रादिभि सम्बद्ध्यन्ते इति । एतदपि नोपपद्यते । यद्यपि प्रकृतानि नित्यानि स्तोत्रादीनि, तथापि वाक्येन निमित्तसंयोगे श्रूयन्ते बार्हद्गिरादीनि । वाक्यं च प्रकरणाद् बलीय । यदुक्तं, सान्निधानाद्वाक्यादवगतोऽयमर्थ इति । नैवञ्जातीयको वाक्यार्थं सामान्य पदार्थं बाधितुमर्हति । निमित्तसंयोगे हि बार्हद्गिरादीनामर्थवत्ता । तस्मात् तत्र तत्रान्यन्नैमित्तिकादिति ॥ अथ यदुक्तम्—अवान्तरवाक्येन गोदोहनमपि प्रापितं न शक्यमुत्स्रष्टुम् ऋते कारणादविवक्षितं कल्पयितुम् ' क्लिष्ट हि तद् भवतीति । उच्यते । कारणादविवक्षितम् । किं कारणम् । न हीदं युगपद् भवति, परिपूर्णेन चार्थाभिधानमवान्तरवाक्येन चेति । कथम् । प्रणयतीति प्रपूर्वे नयतौ विधिविभक्ति स्वपदगतमर्थं श्रुत्या विदधाति । प्रणयनादिसम्बन्धमपि गोदोहनादि श्रुत्या, वाक्येन च । यस्तु फलस्य गोदोहनादेश्च सम्बन्ध, स हित्वा श्रुत्यर्थं केवलेन वाक्येन । अथ प्रणयनस्य गोदोहनादिसम्बन्धं, गोदोहनादेश्च फलेन सम्बन्धं वदतीत्युच्यत । न ह्यर्थाऽभिधानाद् भिद्येत नितरां वाक्यम् । न चैतन्न्याय्यम् ॥ यत्तु, श्वेतो धावतीत्येवमादि, भवेत् तत्र विशेषानवगमादुभयार्थावगतिः । इह तु गम्यते विशेषः कामिपदोच्चारणम् । नेह

श्रौतोऽर्थः । मन्येत यदि गोदोहनादे क्रियासम्बन्धो विवक्ष्यते, कामिपदं प्रमादो भवेत्। न चाऽयं प्रमादः । नैवाऽवान्तरवाक्यार्थे विवक्षिते कामिपदसम्बन्धोऽवकल्पते। तस्मान्न श्लिष्टं वाक्यम्। गोदोहनादि-कामिसम्बन्ध एवात्राभिधीयते, न नित्यकार्यं भवितुमर्हतीति। एव सर्वत्र ॥ ४ ॥ ॥ नैमित्तिकाना बार्हद्गिरादीनामनित्याऽर्थत्वाधिकरणम् ॥ २ ॥

## एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥

अग्निहोत्रे श्रूयते, दध्ना जुहोतीति। पुनश्च दध्नेन्द्रियकामस्य जुहुयादिति । तथा अग्नीषोमीये पशावाम्नायते, खादिरे बध्नातीति, पुनश्च खादिरं वीर्यकामस्य यूपं कुर्यादिति। तत्र सन्देहः। किमत्राऽप्यन्यन्नित्यार्थमुत नैमित्तिकमेवेति। किं प्राप्तम्। पूर्वेण न्यायेनान्यदिति। एवं प्राप्ते ब्रूमः। एकस्योभयत्वे नित्यत्वे नैमित्तिकत्वे च संयोगपृथक्त्वं कारणम्। तदिह संयोगपृथक्त्वमस्ति। एकः संयोगो दध्ना जुहोतीति, एको दध्नेन्द्रियकामस्येति। तथैकः—खादिरे बध्नातीति, अपरः— खादिरं वीर्यकामस्येति । तस्मान्नित्यार्थे कामाय च दधिखादिरादीति ॥ ५ ॥ ॥ सि० ॥

## शेष इति चेत् ॥ ६ ॥

इति चेत् पश्यसि, कस्मान्न पूर्वस्यायमपि शेषो भवति । यदेतदुक्तं- दध्ना जुहोति, खादिरे बध्नातीति तस्यैव तु दध्न फलमिन्द्रियं, तथा खादिरस्य वीर्यम्। तच्चेदं चैकं वाक्यमिति ॥ ६ ॥ आ० ॥

## नार्थपृथक्त्वात् ॥ ७ ॥

नैतदेवं, पृथगेतावर्थौ- यश्च दधिहोमसंयोगो यश्च दधीन्द्रियसंयोग । तथा खादिरस्य बध्नातिना संयोगो वीर्येण च । द्वावेतावर्थौ, द्वावपि च विधित्सितौ। अर्थैकत्वाच्चैकं वाक्यं समधिगतम् । इहाऽर्थद्वयेन भिद्येत वाक्यम् । कथम्। जुहोतिसमभिव्याहृता विधिविभक्तिः । असम्भवे श्रौतस्य होमविधानस्य, गुणं समभिव्याहृतं विधातुमर्हति । तदसम्भवं गुणफलसम्बन्धम् । तत्र हि अत्यन्ताय श्रुतिरुत्सृष्टा वाक्यानुरोधेन स्यात् । न च युगपत् सम्भवासम्भवौ सम्भवतः । तस्माद् यदेव नैमित्तिकं तदेव नित्यार्थमिति ॥ ७ ॥ आ० नि० ॥ दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम् ॥ ३॥ संयोग-

पृथक्त्वन्यायः ॥

**द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्म्मः स्यात् ॥ ८ ॥**

ज्योतिष्टोमे समामनन्ति- पयोव्रतं ब्राह्मणस्य, यवागूराजन्यस्य, आमिक्षा वैश्यस्येति । तत्र सन्देहः । किमयं पुरुषधर्मः, उत क्रतोरिति । प्रकरणं बाधित्वा वाक्येन विनियुक्तः पुरुषस्येति । एवं प्राप्ते ब्रूमः । पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम । स क्रतुधर्मो भवितुमर्हति, प्रकरणानुग्रहाय । ननु वाक्यात् पुरुषधर्म इति । नेति ब्रूमः । तथा सति फल कल्प्यं, क्लृप्तमितरत्र । प्रयोगवचनेनोपसंहृतं हि तत् प्रधानस्य । तस्मात् क्रतुधर्म्मः ॥ ८ ॥ सि० ॥

**पृथक्त्वाद् व्यवतिष्ठेत ॥ ९ ॥**

अथ पुरुषसंयोग· किमर्थः । व्यवस्थापनार्थ इति ब्रूमः । पयोव्रतं ज्योतिष्टोमस्य भवति । तत्तु ब्राह्मणकर्त्तृकस्यैव, नान्यकर्त्तृकस्येति । एवं सर्वत्र ॥ ९ ॥ ॥ युक्ति ॥ पयोव्रतादीनां क्रतुधर्मताऽधिकरणम् ॥ ४ ॥

**चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते ॥ १० ॥**

इदमामनन्ति-तस्मात् पितृभ्यः पूर्वेद्युः करोतीति । तथा सर्वेभ्यो वा एष देवेभ्य सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते, य· सत्रायागुरते, स विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेतेत्येवँल्लक्षणके श्रुते भवति सन्देहः । किं निष्फलमेतत् कर्म्ममात्रम्, उत सफलमिति । किं प्राप्तम् । निष्फलमिति । कुतः । फलाश्रुतेः । शब्दप्रमाणके कर्म्मण्येवञ्जातीयके, न हि अशब्दं प्रतीयते ॥ ननु वैदिकानि कर्माणि फलवन्ति भवन्तीत्येवमुक्तम् । उच्यते । फलदर्शनात्तानि फलवन्तीत्युक्तम् । न वैदिकत्वात् । एवं तर्हि कर्त्तव्यतावगमात् फलवन्तीत्यध्यवस्यामः । सुखफलं हि कर्त्तव्यं भवतीति । उच्यते । प्रत्यक्षविरुद्धमेवञ्जातीयकस्य कर्त्तव्यत्वम् । साक्षाद्धि तद् दुःखफलमवगच्छामः । न चैवञ्जातीयकं प्रत्यक्षविरुद्धं वचनं प्रमाणं भवति । यथाऽम्बुनि मज्जन्त्यलाबूनि, शिला· प्लवन्ते, पावकः शीत इति । अपिचानुमानादत्र सुखफलता । य-

स्मात् कर्त्तव्यमतः सुखफलमिति। प्रत्यक्षं चानुमानाद् बलीय । तस्मान्निष्फलमेवञ्जातीयकमिति ॥ एव हि अत्र फलं कल्प्येत। यद्येतत् फलवद्, एवमुपदेशोऽर्थवान् भवतीति । उच्यते । कामं वाक्यमनर्थकमिति न्याय्यं वचनं भवेत्। भवन्ति ह्यनर्थकान्यपि वचनानि, दश दाडिमानि षडपूपा इत्येवञ्जातीयकानि। ननु विश्वजिद् व्यापार सुखफल इति। उत्तर सुखफल हि भवत्यपूर्वं, न व्यापार । नचायमपूर्वस्य कर्त्तव्यतामाह। फलकर्त्तव्यतायां हि सत्यां तदवगम्यते। वाक्यार्थश्च फलस्य कर्त्तव्यतामाह, न पदार्थः। न चात्र फलसम्बद्धं वाक्यमस्ति। तस्मान्नायमपूर्वस्य विधायकः शब्दः । व्यापारमात्रमेव विदधाति। स च व्यापारो न तदात्वे सुखफलो, नापि आयत्याम् । भङ्गित्वात्। तत्रापूर्वं कल्पयित्वा फलमवगम्येत। फलं च कल्पयित्वा अपूर्वम्। एवमितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। तस्मान्निष्फलमेवञ्जातीयकमिति ॥ आह। अध्याहरिष्यामहे फलवचनम्। उच्यते। न शक्यं परिपूर्णे वाक्ये अध्याहर्त्तुम्। परिपूर्णं हीदं वाक्य, विश्वजिद् यागः कर्त्तव्य इति। न किञ्चित् पदमस्ति साकाङ्क्षं, येन अध्याहृत्य फलं सम्बद्ध्येत। यथा अक्षेमेऽपि पथि भवति विप्रलम्भक उपदेश । क्षेमेऽय, यथा गच्छतु भवान् अनेनेति । परिपूर्णमेवेदं वाक्यं, नाध्याहारमर्हति विप्रलम्भककर्त्तृकम् । एवमिदमपि परिपूर्णं वाक्यं नाध्याहारमर्हति । अपिचाध्याह्रियमाणेनैवेदं वाक्यं सम्बद्ध्येत। विश्वजिद् याग कर्त्तव्यः । इदं च फलं भवतीति । द्वाविमावर्थौ। एकार्थं च वाक्यं समधिगतम्। तस्मादनर्थकमेवञ्जातीयकं कर्मेति ॥ १० ॥

**अपि वाम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धस्तस्माच्छ्रुत्येकदेशः सः ॥ ११ ॥**

अपि वेति पक्षव्यावृत्ति । न चैतदस्ति, अफलमिति। फलचोदना अर्थेन गम्येत। कतमेन अर्थेन। कर्त्तव्यतावचनेन । आह। ननु व्यापारस्य प्रत्यक्षविरुद्धा कर्त्तव्यता । न व्यापारस्योच्यते। कस्य तर्हि । व्यापारेणान्यस्य कस्यचिदिति । भवति तेनेदानीं वाक्यं

साकाङ्क्षम् । तत्राध्याहारोऽवकल्पते । भवति चाध्याहारेणापि कल्पना । यथा, द्वारं द्वारमित्युक्ते, संव्रियतामपाव्रियतामिति । कथं पुनरवगम्यते, इहाध्याहारेण कल्पयितव्यमिति । आम्नानसामर्थ्यात् । एवमिदमाम्नानमर्थवद् भविष्यति । शक्नोति च अर्थमवगमयितुम् । तस्मान्नानर्थकम् ॥

ननु यत् पदमध्याह्रियते तत् पौरुषेयम् । तेनावगतं चाप्रमाणम् । उच्यते । नापूर्वमध्याहरिष्याम । वैदिकेनैवास्य, सहान्यत्र समाम्नातेनैकवाक्यतामध्यवस्यामः । आह । नैवं शक्यम् । अन्तिकादुपनिपतितं हि पदं वाक्यार्थमुपजनयितुमलं भवति, न दूरादवतिष्ठमानम् । अत्रोच्यते । व्यवहितमपि हि पराणुद्य व्यवधायकम् । आनन्तर्येण मनसि विपरिवर्त्तमानम् अलमेव भवति विशेषमुपजनयितुम् । यथा–

इत पश्यसि धावन्तं दूरे जातं वनस्पतिम् ।

त्वां ब्रवीमि विशालाक्षि ! या पिनक्षि जरद्गवम्, इति इत'–पश्यसि–शब्दो बुद्धा भवति । सः, दूरे जातं वनस्पतिमेतै पदैर्व्यवहितेन जरद्गवमित्यनेन शब्देन व्यवधायकानि अपोह्य सम्बद्ध्यमान सम्बद्ध्यते । अर्थानां हि अर्थवत्त्वेन हेतुना व्यवहितान्यपि वचनानि सम्बद्ध्यन्ते । यानि पुनरर्थतो ह्यऽसमर्थानि । तान्यानन्तर्येऽपि सति न परस्परेण सम्बन्धमर्हन्ति । यथा, या पिनक्षि जरद्गवमित्येवमादीनि । तस्मान्न पौरुषेयता भविष्यति । आह । नन्वत्रापि अपेक्षा पौरुषेयी । उच्यते । नापेक्षा वेदे । वेदार्थप्रतिपत्तावभ्युपाय एष भवति । अनन्तरापेक्षायाम् असम्भवन्त्यामाम्नानसामर्थ्यादितरापेक्षा वृत्तिराश्रीयते । तस्माच्छ्रुत्येकदेशः स. । फलकामपदं दूरेऽपि सत् तस्य वाक्यस्यैकदेशभूतमित्यर्थ ॥ ११ ॥ ॥ सि० ॥

## वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥

इन्द्राय राज्ञे शूकर इति । यथा वाक्यान्तरस्थेन विधिशब्देन गुणविधानं भवति, एवं फलविधानमपि भवितुमर्हतीति । यथा, वरुणो वा एतमग्रे प्रत्यगृह्णादिति व्यवधारणकल्पना । एवमिदमपि द्रष्टव्यम् ॥१२॥ युक्ति ॥ विश्वजिदादीनां सफलत्वाऽधिकरणम् ॥५॥

## तत्सर्वार्थमनादेशात् ॥ १३ ॥

तस्मात् पितृभ्य पूर्वेद्यु' करोतीति । विश्वजिता यजतेति फलवद् एवंविधं कर्मेत्येतत् समधिगतम् । इदं तु सन्दिह्यते । किं सर्वफलमेतत् कर्म, उतैकफलमिति । किं प्राप्तम् । तत् सर्वार्थमिति । कुत । अनादेशात् । न किञ्चिदिह अनिदिश्यते । इदं नाम फलमिति । अस्ति चेद् विज्ञायेत । तस्मात् सर्वार्थमविशेषात् ॥१३॥ पूर्व० ॥

## एकं वा चोदनैकत्वात् ॥ १४ ॥

एकं फलं स्याद्, न वा सर्वार्थम् । कुत. । चोदनैकत्वात् । साकाङ्क्षत्वादेतदर्थिपदेन सम्बद्ध्यते इत्युक्तम् । यच्चानेकेनापि सम्बद्धुं शक्नोति, तदेकेन सम्बद्ध्यते । एकेन सम्बद्धं सन्निराकाङ्क्षं भवति । न तदपरेणापि सम्बन्धमर्हति । तस्मादेकैव कर्त्तव्यताचोदना न्याय्या । तस्मादेकफलतेति ॥ १४ ॥ ॥ सि० ॥ विश्वजिदादीनामेकफलताऽधिकरणम् ॥ ६ ॥

## स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥ १५ ॥

एवञ्जातीयकेष्वेवोदाहरणेष्वेतत् समधिगतम्, एकं फलमिति । इदमिदानीं सन्दिह्यते । किं यत्किञ्चिद् उत स्वर्ग इति । यत्किञ्चिदिति प्राप्तम् । विशेषानभिधानात्, तत उच्यते । स स्वर्ग. स्यात् सर्वान् प्रत्यविशिष्टत्वात् । सर्वे हि पुरुषाः स्वर्गकामाः' कुत एतत् । प्रीतिर्हि स्वर्ग. । सर्वश्च प्रीतिं प्रार्थयते । किमतो यद्येवम् । अविशेषवचन. शब्दो न विशेषे व्यवस्थापितो भविष्यति । यजेत कुर्यादिति । तस्मात् स्वर्गफलमेवञ्जातीयकमिति ॥ १५ ॥ ॥ सि० ॥

## प्रत्ययाच्च ॥ १६ ॥

भवति चानादिष्टफले कर्म्मणि स्वर्ग फलमिति प्रत्ययो लोके । एवमुच्यते । आरामकृद्देवदत्त., नियतोऽस्य स्वर्ग । तड़ागकृद्देवदत्तः नियतोऽस्य स्वर्ग इति । किमतो यद्येवम् ? । इत्थमनेन न्यायेन स्वर्गे सम्प्रत्ययो भवति । यस्मात् स्वर्गफलेषु कर्म्मसु कर्त्तव्येषु फलवचनं नैवोच्चारयन्ति, गम्यते एवेति । तस्मादपि अवगच्छाम । एवञ्जातीयकेषु स्वर्ग फलमिति ॥ १६ ॥ ॥ युक्तिः ॥ विश्वजिदादीनां स्वर्गफलताधिकरणम् ॥ ७ ॥ इदमधिकरणत्रय विश्वजिन्न्याय ॥

## क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः ॥ १७ ॥

रात्रीः प्रकृत्य श्रूयते, प्रतितिष्ठन्ति ह वा एते, य एता उपयन्ति ।

ब्रह्मवर्चस्विनोऽन्नादा भवन्ति, य एता उपयन्तीति । तत्र सन्देहः । किं ते फलार्थवादाः, उत फलविधय इति । किं प्राप्तम् । फलार्थवादा इति कार्ष्णाजिनिर्मेने । कुतः । फलार्थवादसरूपा एते शब्दा इति । किं सारूप्यम् । विधिविभक्त्यभावः । अङ्गवत् । यथा, यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यतीत्येवमादिषु ॥१७॥ ॥पूर्व०॥

**फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥**

आत्रेयः पुनराचार्य्य एवञ्जातीयकेभ्यः फलमस्तीति मेने, न फलार्थवाद इति । कुतः । अश्रुतफलत्वेऽप्यमीषां फलचोदनया वाक्यशेषभूतया भवितव्यम् । तस्मादन्या व्यवहिता सती अव्यवहिता कल्पनीया । इयं त्वव्यवहिता क्लृप्तैव । प्रतिष्ठया ब्रह्मवर्चसस्त्तया च समभिव्याहार आसां प्रत्यक्षः । विधिविभक्तिमात्रमन्यतोऽपेक्ष्यम् । आह । कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति । यदनेन प्रतिष्ठादिना धात्वर्थेन सम्भन्त्स्यते इति । उच्यते । सह धात्वर्थेन भविष्यति, न केवलम् । तस्माददोषः । अथ वा रात्रीणां या विधायिका विभक्तिः, सा इममपि प्रतिष्ठादिविशेषं विधास्यति प्रयोगवचनेन । स्तुतिर्वा सह प्रतिष्ठादिभिर्विधात्री भविष्यतीति ॥ १८ ॥ सि० ॥

**अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥**

अथ यदुक्तं, यथा यस्य खादिरः स्रुवो भवतीत्येवमादिषु फलश्रुतिः अर्थवादो भवति, एवमिहापि स्यादिति । युक्तं तत्र फलार्थवादः, फलविध्यसम्भवात्, फलार्थवादसम्भवाच्च । तदुक्तं, द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ॥ १९ ॥ आ०नि०॥ रात्रिसत्रस्यार्थवादिकफलकत्वाधिकरणम् ॥ ८ ॥ रात्रिसत्रन्यायः ॥

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥२०॥**

काम्यानि कर्म्माण्युदाहरणम् । सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्येवमादीनीति । तत्र सन्देहः । किमेषां स्वर्गः फलं कामश्च, उत काम एवेति । किं प्राप्तम् । काम्ये कर्मणि नित्यः स्वर्गः स्यात् । कथम् । सर्वपुरुषार्थाभिधायी सामान्यवचनः शब्दो न विशेषे अवस्थापितो भवति । शक्यते हि अस्य दूरस्थेनापि स्वर्गकामशब्देन सम्बन्धः । आह । ननु विशेषकः शब्दः श्रूयते, ब्रह्मवर्चसकाम इति । नैष विशेषकः । उपाधिकर एषः । यथा काष्ठान्याहर्तुं प्रस्थित उच्यते,

भवता शाकमपि आहर्त्तव्यमिति । काष्ठाहरण शाकाहरणमुपाधिः क्रियते इति । किमिदमुपाधि क्रियत इति । काष्ठाहरणाधिकारसमीपे द्वितीयं कर्मोपधीयते । सति काष्ठाहरणे, इदमपरं कर्त्तव्यमिति । एवमिहापि स्वर्गफले फलमपरमुपधीयते, ब्रह्मवर्चसकामो यागेन स्वर्गमभिनिर्वर्त्तयेदिति । न हि तत्र ब्रह्मवर्चसफलवचनं स्वर्गफलस्य प्रतिषेधकम् । यथा यज्ञाऽङ्गे क्रत्वर्थे । गोदोहनेन पशुकामस्य प्रणयेदिति । य पशुकाम स गोदोहनेन प्रणयनमभिनिर्वर्त्तयेदिति ॥ २० ॥ पूर्व० ॥

## वीते च कारणे नियमात् ॥ २१ ॥

वीते च कारणे, वीतायां फलेच्छायामाप्ते वा फले समाप्तिनियमो दृश्यते । वृष्टिकामेष्ट्यां, यदि वर्षेत् तावत्येव जुहुयात्, यदि न वर्षेत् श्वोभूते जुहुयादिति । यदि न स्वर्ग., किमर्थः समाप्तिनियमो भवेत् । तस्मान्नित्य स्वर्ग इति ॥ २१ ॥ युक्ति ॥

## कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥

कामो वा फलं भवेद्, न स्वर्ग । तत्संयोगेनास्य चोदना भवति, न स्वर्गकामसंयोगेन । आनुमानिकोऽस्य स्वर्गकामेन एकवाक्यभाव. । प्रत्यक्षस्तु कामवचनेन । प्रत्यक्षं चानुमानाद् बलीय । तस्मात् काम एव फलमिति ॥ २२ ॥ सि० ॥

## अङ्गे गुणत्वात् ॥ २३ ॥

अथ यदुक्तं, यथा यज्ञाङ्गे इति । युक्तम् । अङ्गे गुणत्वात् । प्रत्यक्षस्तत्र क्रतुना संयोग., कामेन च । य. पशुकाम. स्यात् स गोदोहनेन प्रणयनमभिनिर्वर्त्तयेदिति । न त्वत्र प्रत्यक्षः शब्दोऽस्ति । यो ब्रह्मवर्चसकामः स्यात्, स यागेन स्वर्गमभिनिर्वर्त्तयेदिति । कथं तर्हि । यो ब्रह्मवर्चसकाम स्यात्, स तद् यागेन निर्वर्त्तयेदिति । तस्मान्नाङ्गवद् भवितुमर्हतीति ॥ २३ ॥

## वीते च नियमस्तदर्थम् ॥ २४ ॥

अथ यदुक्तं, वीतायां फलेच्छायामवाप्ते वा फले समाप्तिनियमो दृश्यते इति । तत्र ब्रूम । वीते नियमस्तदर्थम् । वीते नियमो भवति, तस्मै प्रयोजनाय । कस्मै । शिष्टाविगर्हणाय । उपक्रम्य अपरिसमापयतस्तदनन्तरमेवैनं शिष्टा विगर्हयेयु, प्राक्रमिकोऽयं कापुरुष इति वदन्तः । ये हि देवेभ्यः सङ्कल्प्य हवि, न यागमभिनिर्वर्त्त-

यन्ति, तान् शिष्टा विगर्हन्ते । तस्मादवश्यं समापयितव्यम् । तत्रै-तद्दर्शनं युक्तं भविष्यति । यदि वर्षेत् तावत्येव जुहुयादिति । तस्मात् काम्यानां काम एव फलमिति ॥ २४ ॥ आ० नि० ॥ काम्यानां यथोक्तकाम्यफलकत्वाधिकरणम् ॥ ९ ॥

सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥

इदमाम्नायते—एकस्मै वा अन्या इष्टयः कामाय आह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वान्ये क्रतव कामाय आह्रियन्ते, सर्वेभ्यो ज्योतिष्टोम इति । तत्र सन्देहः । किमङ्गकामैरङ्गाङ्गकामैश्च सहास्यानुवादः, अथवा विधिरिति । किं प्राप्तम् । अनुवाद इति । यदेतत् सार्वकाम्यं, तदनूद्यते । अङ्गकामैश्च अङ्गाङ्गकामैश्च सह । सन्ति हि अङ्गकामाश्चाङ्गाङ्गकामाश्च । यथा, आहार्य्यपुरीषां पशुकामस्य वेदिं कुर्य्यात्, खननपुरीषां प्रतिष्ठाकामस्येत्येवमादय । तथा, यदि कामयेत वर्षेत् पर्जन्य इति नीचै सदो मिनुयादिति । तद् विहितमेवेदमभिधीयते इत्यनुवादं न्याय्यं मन्यामहे ॥ २५ ॥ पूर्व० ॥

फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥

फलविधिर्वा । कुत । प्रधानशब्देन फलसंयोगो भवति । सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोम इति च । प्रधानाभिधानेन च प्रधानस्य सर्वफलवत्ता विहिता । तस्मान्नानुवाद । अथाऽङ्गकामान् अङ्गाङ्गकामाँश्चापेक्षते, तथा लक्षणाशब्द स्यात् । श्रुतिश्च लक्षणाया गरीयसी । तस्मात् प्रयोगवचनेन विधिरिति ॥ २६ ॥ ॥ सि० ॥ दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥ १० ॥

तत्र सर्वेऽविशेषात् ॥ २७ ॥

एतज्जातीयकेष्वेवोदाहरणेष्वेतदुक्तं, प्रधाने सर्वकामानां विधिरिति । इदमिदानीं सन्दिह्यते । किं सकृत्प्रयोगे सर्वे कामा, उत पर्य्यायेणेति । किं प्राप्तम् । सकृत्प्रयोगे सर्वे कामा इति । कथम् । सर्वेषां कामानां दर्शपूर्णमासौ निमित्त, ज्योतिष्टोमश्चेति । निमित्तं चेत् सर्वेषां कामानां, कोऽत्र खलु कामो न भविष्यति ? इति । तस्माद् यौगपद्येन सर्वे कामा इति ॥ २७ ॥ ॥ पूर्व० ॥

योगसिद्धिर्वार्थस्योत्पत्त्यसंयोगित्वात् ॥ २८ ॥

न चैतदस्ति, सर्वे युगपत् कामा इति । पर्य्यायो योगसिद्धिः ।

पर्य्यायेण भवेयु. कामा इति। कुत । अर्थस्योत्पत्त्यसंयोगित्वात्। अर्थां इमे कामा नाम, न सर्वे एव युगपदुत्पद्यन्ते। असम्भवो युगपदुत्पत्ते. सर्वेषां, विरोधात्। अथ वा, उत्पत्त्यसंयोगित्वादिति। न। कामानामेतदुत्पत्तिवचनम्। उत्पन्नानां लक्षणत्वेन वचनम्। ये सर्वे कामास्तेभ्यो दर्शपूर्णमासौ ज्योतिष्टोमश्चेति। न सर्वे कामाः कर्मणः श्रूयन्ते, ये सर्वे कामास्तेभ्यो हि कर्म विधीयते। तस्मान्न कामानां साहित्यं गम्यते इति ॥ २८ ॥ सि० ॥ दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥ ११ ॥ योगसिद्धिन्याय ॥ इदमधिकरणद्वयं दर्शपूर्णमासन्याय ॥

## तत्र सर्वेऽविशेषात् ॥ २७ ॥

काम्यानि कर्माण्युदाहरणम्। सौर्यं चरु निर्वपेद् ब्रह्मवर्चस काम, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः, चित्रया यजेत पशुकाम, वैश्वदेवीं सांग्रहायणीं निर्वपेद् ग्रामकाम इति। तेषु सन्देह.। किमिह लोके कामा, उतामुष्मिँल्लोके इति। किं प्राप्तम्। तत्रामुष्मिँल्लोके कामाः। अविशेषात्। यथा स्वर्गः, एवमिमेऽपि । न हि अनन्तरनिर्वृत्ते कर्म्मणि फलमुपलभ्यते पश्वादि। यच्चानन्तरमुपलभ्यते, तत् तत इति विज्ञायते। यथा यत्काल मर्दन, तत्कालं मर्दनसुखम्। यच्च कालान्तरे उपलभ्यते, तस्याप्यन्यदेव कारणं प्रत्यक्षम्। शरीरग्रहणस्य तु नादृष्टादृते किञ्चित् कारणमस्ति। तस्माद् विशिष्टेन्द्रियशरीरादि फल पशुसम्बन्धसमर्थं पशुफलात् कर्म्मणो भवतीत्येवं बोद्धव्यम्। तद्धि दर्शयति। कैकयो यज्ञ विवित्सन् दाल्भ्यमुवाच। अनया मा राष्ट्रप्रतिपादनीयया इष्ट्या याजयेति। सोऽब्रवीत्। न वै सोम्य राष्ट्रप्रातिपादनीयां वेत्थ, अमुष्मै कामाय यज्ञा आह्रियन्ते इति जन्मान्तरफलतां दर्शयति। तस्माज्जन्मान्तरफलानि काम्यानीति ॥ २७ ॥ पूर्व० ॥

## योगसिद्धिर्वार्थस्योत्पत्त्यसंयोगित्वात् ॥ २८॥

इहैवैषां सिद्धिर्योगस्याउत्पत्त्या योगो न सम्भवति। यः पशुभ्यः कामयते स एतेन यागेन कुर्य्यादिति। नात्रैतद् गम्यते, इह जन्मनि न सम्भवतीति। यच्चानन्तरं नोपलभ्यते इति। तन्न। प्रत्यक्षानुमानाभ्यां न गम्यते। शब्देन त्वस्ति गतिः। यत्तु कालान्तरेऽन्य-

त् कारणमिति । नैष दोषः । अन्यदपि भविष्यति. एतदपि । यश्चाऽमुष्मै कामाय यज्ञा आह्रियन्ते इति । अत्रोच्यते । एवमस्य ऋषेर्मतम् । इह यस्य फलं तेन त्वां न याजयामि, यस्यामुत्र फलं तेन च याजयिष्यामीति । तस्मादेतत् परिहृतमिति ॥ २८ ॥ सि० ॥ काम्यानामैहिकामुष्मिकफलवत्त्वाधिकरणम् ॥ १२ ॥ वर्णकान्तरम् ॥

## समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥ २९ ॥

अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेतेति । तत्र सन्देहः । किमङ्गप्रयोजनसम्बन्ध एष, उत कालार्थः संयोग इति । अङ्गप्रयोजनसम्बन्ध इति ब्रूम. । एवं हि श्रुतिविनियुक्तोऽर्थः । इतरथा कालो लक्ष्येत । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा । तस्मादग्न्यङ्गं सौत्रामणी, वाजपेयाङ्गं बृहस्पतिसव इति ॥ २९ ॥ ॥ सि० ॥

## *कालश्रुतौ काल इति चेत् ॥ ३० ॥

एवं चेत् पश्यसि, अङ्गप्रयोजनसम्बन्ध इति । अथ कालविधानं कस्मान्न भवति । कालविधिरूपो हि शब्द, चित्वा चयनेऽभिनिर्वृत्ते इति ॥ ३० ॥ आ० ॥

## नासमवायात् प्रयोजनेन स्यात् ॥ ३१ ॥

नैतदेवम् । असमवायात् । शब्दप्रयोजनेन शब्दार्थेनेत्यर्थ । शब्दार्थश्रयनम् । तेन असमवाय स्यात् सौत्रामण्या वाजपेयेन च बृहस्पतिसवस्य । प्रकरणं च बाध्येत । अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मो गम्यते याग । वाजपेयप्रकरणे च वाजपेयस्य । इतरथा, तयोः प्रकरणेऽन्यस्य धर्मः कालो गम्येत । तस्मादङ्गप्रयोजनसम्बन्ध इति ॥३१॥ आ० नि० ॥ सौत्रामण्यादीनां चयनाद्यङ्गताधिकरणम् ॥१३॥

## उभयार्थमिति चेत् ॥ ३२ ॥

दर्शपूर्णमासयोरामनन्ति, संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति । तत्र सन्देहः । किमुभयाङ्गं वैमृधः, कालार्थं पौर्णमासीसंयोगः ? उताङ्गप्रयोजनसम्बन्ध इति । किं प्राप्तम् । एवं चेदुभयार्थो वैमृधः । कुतः । प्रकरणे उभयोराम्नानसामर्थ्यात् । कालविधिसारूप्याच्च संस्थाप्येति ॥ ३२ ॥ पूर्व० ॥

**न शब्दैकत्वात् ॥ ३३ ॥**

एकः शब्दः, अनुनिर्वपतीति, एकस्मिन्नेव वाक्ये न द्वौ सम्बन्धौ शक्नोति विधातुम् । वैमृधस्य दर्शपूर्णमासाभ्यां, पूर्णमासीकालेन च । एकार्थत्वाद्धि एक वाक्यं समधिगतम् ॥ ३३ ॥ सि० ॥

**प्रकरणादिति चेत् ॥ ३४ ॥**

प्रकरणादिति यदुक्तं, तत् परिहर्त्तव्यम् ॥ ३४ ॥ आ० ॥

**नोत्पत्तिसंयोगात् ॥ ३५ ॥**

नैतदेवम्, एतदेव वैमृधस्योत्पत्तिवाक्यम् । तद्दर्शपूर्णमासाभ्यां वा प्रकरणादेकवाक्यभावमियात् । प्रत्यक्षं वा पौर्णमास्या । तत्र प्रत्यक्षसंयोगः प्रकरणाद् बलवान् । प्रत्यक्षश्च पौर्णमास्या संयोगः, परोक्ष कालेन । तस्मात् पौर्णमास्या अङ्गं वैमृध इति ॥३५॥ सि० ॥ वैमृधादे पौर्णमास्याद्यङ्गताधिकरणम् ॥ १४ ॥

**अनुत्पत्तौ तु कालः स्यात् प्रयोजनेन सम्बन्धात्॥ ३६ ॥**

ज्योतिष्टोमे श्रूयते— आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, प्रहृत्य परिधीञ्जुहोति हारियोजनमिति । तत्र सन्देह । किमङ्गं विधीयते, उत काल इति । अङ्गविधाने श्रुतिः, कालविधाने लक्षणा । तस्मादङ्गविधानमिति प्राप्ते ब्रूम । अनुत्पत्तिवाक्ये काल स्यात् । आग्निमारुतं सोमाङ्गम्, अनुयाजाः पश्वङ्गम् । तत्र न तयो. परस्परेण सम्बन्ध । तथा परिधय पश्वङ्गं, हारियोजनम् अन्यदेव प्रधानम् । अनुयाज आग्निमारुतं च प्राप्तम् । आनन्तर्य्यमेव तयोर्न प्राप्तम् । तद् विधीयते । तथा, हारियोजनस्य परिधिप्रहरणस्य च । एवञ्च सति, न हारियोजनस्य परिधिप्रहरणेन कश्चिदुपकार क्रियते, हारियोजनेन वा परिधिप्रहरणस्य । ननु परिधिप्रहरणस्योपरिष्टाद्भावेन तस्य उपक्रियेतेति । उच्यते । न हि उपरिभावार्थं परिधिप्रहरणमनुष्ठेयम् । विद्यते एवैतत् पश्वर्थम् । तस्मिंश्च सति तस्योपरिभावो विद्यते एवेति । तस्मात् कालार्थं सम्बन्ध इति ॥ ३६ ॥ अनुयाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम् ॥ १५ ॥

**उत्पत्तिकालविषये कालः स्याद् वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥**

इदमाम्नायते, दर्शपूर्णमासौ इष्ट्वा सोमेन यजेतेति । तत्र सन्देहः । किमेतदङ्गस्य विधानम्, उत कालस्येति । किं प्राप्तम् । श्रुतेरङ्गस्येति प्राप्ते उच्यते । अस्मिन् कालाङ्गविधानसंशये काल स्यात् । वाक्यस्य तत्प्रधानत्वात् । कालप्रधानं ह्येतद् वाक्यं, न यागविधानपरम् । अतत्परताऽस्य । रूपावचनात् । कथं रूपाऽवचनम् । देवताभावात् । कथमभावः । अश्रुतत्वात् । या हि यस्य श्रूयते, सा तस्य देवता भवति । श्रुत्या हि देवता गम्यते, न प्रत्यक्षादिभिः । तस्मान्नापूर्वस्य यागस्य विधानम् । कालार्थे अनुवादे नाऽयं दोषः । विहितदेवताको हि अनूद्यते । तस्मादत्र कालार्थं सम्बन्ध इति । तच्च दर्शयति— एष वै देवरथो यद् दर्शपूर्णमासौ, यद्दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यतीति । प्रदर्शिते मार्गे रथेन यातुं सुखं भवति । एवं दर्शपूर्णमासाविष्ट्वा सोमेन यष्टुं सुख भवति । दर्शपूर्णमासप्रकृतीनि तस्य दीक्षणीयादीनि स्वभ्यस्तानि भवन्ति । एवम् अर्थवादोऽर्थवान् भवति ॥ ३७ ॥
सोमादीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम् ॥ १६ ॥

## फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ ३८ ॥

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति । तत्र सन्देहः । किमात्मनि श्रेयसाय, उत पुत्रनि.श्रेयसायेति । आत्मनि श्रेयसायेति ब्रूम । नेमानि फलदानि परस्य भवन्ति कर्माणि । कुत । आधाने आत्मनेपदनिर्देशात् । यथा, यद्येकं कपालं नश्येदेको मास. संवत्सरस्यापेतः स्यात् । अथ यजमानः प्रमीयेत द्यावापृथिवीयम् एककपाल निर्वपेत् । यदि द्वे नश्येयातां द्वौ मासौ संवत्सरस्य अपेतौ स्याताम् । अथ यजमानः प्रमीयेत आश्विनं द्विकपालं निर्वपेत् । सङ्ख्यायोद्वासयति यजमानस्य गोपीथायेति । कपालनाशे निमित्ते आत्मनि श्रेयसफल कर्म दर्शयति । एवमिहापि द्रष्टव्यम् । तस्मादात्मनि श्रेयसमिति ॥ एवं प्राप्ते ब्रूमः । फलसंयोगो न स्यात् पितुः । फलवचनं शेषभूतं पुत्रस्य न पितु । कथम् । एवं श्रूयते, वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते । यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यन्नवकपालो भवति त्रिवृतैवास्मिँस्तेजो दधाति । यद् एकादशकपाल त्रिष्टुभैवास्मिन् इन्द्रियं दधाति । यद्

द्वाशकपालो जगत्यैवास्मिन् पशून् दधाति । यस्मिञ्जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवतीति । यो जातस्तत्र फलं श्रूयते । नास्ति वचनस्यातिभारः । तस्मात् पुत्रस्य फलमिति । यदुक्तं, न परस्य फलदान्येतानि कर्माणीति । तदुच्यते । यत् पुत्रस्य फलम्, आत्मनः सा प्रीतिः । तस्मादात्मनेपदं न विरुध्यते । एतामेवात्मनः प्रीतिमभिप्रेत्य भवति वचनम् । आत्मा वै पुत्र इति ॥ अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे * आत्मा वै पुत्रनामासि स जीव शरदः शतम्, इति ॥ ३८ ॥

एवं वा—

**अङ्गानान्तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥**

अथ यदुक्तं, यद्येकं कपालं नश्येदित्येवमादि । तत्रोच्यते। अङ्गानामुपघातसंयोगो निमित्तार्थ उपपद्यते, नान्यथा । न हि कपाले नष्टे तदन्वेषणार्था इष्टिर्युक्ता । न हि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते ॥ ३९ ॥ ॥ आ० नि० ॥ वैश्वानरेष्टेः पुत्रगतफलकत्वाऽधिकरणम् ॥ १७ ॥

**अङ्गानान्तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥**

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति । तत्र सन्देह । किं जातमात्रे, उत कृते जातकर्मणीति । जातमात्रे इति ब्रूमः । सम्प्राप्ते हि निमित्ते नैमित्तिकेन भवितव्यम् । एवं प्राप्ते ब्रूमः । कृते जातकर्मणीति । कुतः । सामर्थ्यात् । कृते हि जातकर्मणि प्राशनं तस्य विधीयते । यदि प्राग् जातकर्मणः इष्टिः क्रियते, प्राशनकालो विप्रकृष्येत । तत्रास्य शरीरधारणं न स्यात् । अथ यदुक्तं, सम्प्राप्ते निमित्ते हि नैमित्तिकेन भवितव्यमिति । उच्यते । अङ्गानामुपघातसंयोगो निमित्तार्थः । उपघातः पुत्रजन्म, तद् भूतं निमित्तम् । न तत्कालोऽङ्गम् । तच्च निमित्तम् । कृतेऽपि जातकर्मणि नापैति । इतरस्मिन् पक्षे कालोऽपेयात् । लक्षणा चास्मिन् पक्षे स्यात् । तस्मात् कृते जातकर्मणीति ॥ अथ किमन्तर्दशाहे यस्मिन् कस्मिन् वा अहनि, उत स्वकाले इति । किं प्राप्तम् । यस्मिन् कस्मिन् वा अहनीति । एवमनियमः प्राप्त । अत्रोच्यते । पौर्णमास्याममावास्यायां वा । कुतः । श्रुतेः । एवं हि श्रूयते । य इष्ट्या पशुना सोमेन वा यजेत, स पौर्णमास्याममावा-

स्यायां वा यजेतेति । नातिभारो वचनस्य इतरस्मिन् पक्षे कालोऽपेयात् । लक्षणाप्यस्मिन् पक्षे स्यात् । अन्यस्यां तिथावन्तर्दशाहे वा कुर्वन् सर्वाण्यङ्गानि उपसंहर्तुं न शक्नुयात् । कालं शौचञ्च नोपसङ्गृह्णीयात् । तस्मादतीते दशाहे पौर्णमास्याममावास्यायां वा कुर्यादिति ॥ ३९ ॥ ॥ वैश्वानरेष्टेर्जातकर्मोत्तरकालताधिकरणम् ॥१८॥ इदमधिकरणद्वयं जातेष्टिन्याय ॥

**प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥**

अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति । अङ्गप्रयोजनसम्बन्ध इत्युक्तम् । एतदिदानीं सन्दिह्यते । किं चितमात्रे, तन्त्रमध्ये एव कर्त्तव्यम् ? उत स्वकाले कर्त्तव्यमिति। तथा वाजपेये किं बृहस्पतिसवे, उत स्वकाले इति । मुख्यकालत्वमनयोः स्यात् । कुत. । प्रधानकालत्वादङ्गानाम् । एको हि काल प्रधानानामङ्गानां चेति वक्ष्यते । अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्निति । अग्निचयनं कृत्वा न तावत्येव स्थातव्यं, सौत्रामणीसंज्ञकोऽपरो याग कर्त्तव्य इति । तथा वाजपेयमभिनिर्वर्त्य नैतावता कृती स्यात्, बृहस्पतिसवसंज्ञकं यागमभिनिर्वर्त्तयेदिति ॥४०॥ पूर्व०॥

**अपवृत्ते तु चोदना तत्सामान्यात् स्वकाले स्यात् ॥ ४१ ॥**

अपवृत्ते यागे चोद्यते यागान्तरमिदम् । अपवृत्तिश्च सर्वेषु यागाङ्गेषु अकृतेषु न भवति । न यथा भवान् मन्यते यागमात्रे निर्वृत्ते इति । कुत । करणविभक्त्या संयोगात् । वाजपेयेन इष्ट्वा वाजपेयेन फलस्य व्यापारं कृत्वा साङ्गेन च व्यापारो गम्यते, न निरङ्गेन। भवेत् तन्त्रमध्य प्रयोगो यदि वाजपयमभिनिर्वर्त्यैतीप्सितभावो वाजपेयस्य स्यात् । ततः प्रधानमात्रं वाजपेयसंज्ञकमभिनिर्वर्त्यैति गम्येत, न त्वेवमस्ति । तस्माद् यथोक्तानि सर्वाण्यङ्गानि कृत्वेत्यर्थ । एवञ्चेद्, निर्वृत्ते प्रयागे अनतिक्रान्ते वाजपेयकाले याग. प्रयुज्यते। तस्य चोदनासामान्याज्ज्योतिष्टौमिके विध्यन्ते प्राप्त स्वेन चोदकप्राप्तेन कालेन भवितव्यम् । सौत्रामण्याश्चोदनासामान्याद्दर्शपूर्णमासकालेनेति ॥ आह । वाजपेये तावद् इष्ट्वा इति वचनाद् यागमभिनिर्वर्त्यैति गम्यते। अग्नौ तु नापपद्यते । तत्र चित्वा इति वचनाच्चयनमभिनिर्वर्त्यैत्यर्थ.

स्यात् । उच्यते । नैतदेवम् । अग्निं चित्वेति हि श्रूयते । अग्निश्चयनेन संस्कृत्य इत्यर्थः । अग्निरिति ज्वलनोऽभिधीयते । न तस्य स्थलस्थापनमात्रमुपकारः । यदि स्थलस्थिते यागो भवति, ततश्चयनेन अग्नेरुपकारोऽस्ति । तमभिनिर्वर्त्येति स्थलस्थितेऽग्नौ यागमभिनिर्वर्त्येति गम्यते । यावत् स्थलस्थितेऽग्नौ यागो न भवति, न तावदग्निश्चयनेनोपक्रियते । येनाग्निर्यजमानस्योपकरोति, सोऽग्नेरुपकारो न स्थलस्थापनमात्रम् । तस्मात् तत्रापि यागमभिनिर्वर्त्येति गम्यते ॥ ४१ ॥ ॥ सि०॥ सौत्रामण्याद्यङ्गानां स्वकालकर्तव्यताधिकरणम् ॥ १९ ॥ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ४ ॥ ३ ॥

अथ चतुर्थे अध्याये चतुर्थ पादः ॥ ४ ॥ ४ ॥

## प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥

सन्त्यनुमत्यादीन्यैष्टिकानि कर्माणि । महादयः पशव, पवित्रादय. सोमाः, वाल्मीकवपायां होम इत्येवमादीनि दार्विहोमिकानि । तथा, यष्टौर्हीं दीव्यति, राजन्यं जिनाति, शौनःशेफमाख्यापयति अभिषिच्यते इति । एतेषां सन्निधौ श्रूयते । राजसूयेन स्वाराज्यकामो यजेतेति । स एष रूपवतां सन्निधावरूपः शब्दः श्रूयमाण समुदायवाचक. समधिगतः । तत्र सन्देहः । किं सर्वेषामनुमत्यादीनां समुदायस्य राजसूयशब्दो वाचक, उत केषाञ्चिद्वाचकः केषाञ्चिन्नेति । किं प्राप्तम् । सर्वेषां वाचक इति । कुत । प्रकरणशब्दसामान्यात् । प्रकरणशब्दः सर्वेषां समानो राजसूयेनेति । राजा तत्र सूयते तस्माद् राजसूयः । राज्ञो वा यज्ञो राजसूय । तत् प्रकरणसान्निधाने सति, विशेषाभावे च सर्वेषां वाचको भवितुमर्हति । यश्च राजसूयशब्दितस्तत फलंभवति।तस्मात्सर्वाणिप्रधानानीति॥१॥पूर्व०

## अपि वाङ्मनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २ ॥

अपि वेति पक्षव्यावृत्तिः । या अनिज्यास्ता अङ्गं, यथा विदेवनाऽऽदयः । राजसूयसंज्ञकेन यागेन स्वाराज्यं कुर्यादित्युच्यमाने यागेनैव स्वाराज्यं साध्यते, न अयागेन । अयागाश्च विदेवनादय. । तस्मादङ्गं भवेयुरिज्यानां फलवतीनां श्रूयमाणा इति ॥ २ ॥ सि० ॥ राजसूयेज्यानां विदेवनाद्यङ्गकत्वाधिकरणम् ॥ १ ॥

## मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥

राजसूयेऽभिषेचनीयमध्ये यशोही दीव्यतीति विदेवनादय समाम्नाता । ते किमभिषेचनीयस्याऽङ्गम्, उत कृत्स्नस्य राजसूयस्येति संशय । उच्यते । मध्याम्नानादभिषेचनीयस्येति । तथा आनन्तर्यमनुग्रहीष्यते इति ॥ ३ ॥ पूर्व० ॥

## सर्वासां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

सर्वासां चानुमत्यादीनां चोदनानामङ्गं विदेवनादि स्यात् । कुत । चोदनातः समत्वात् । समाना एता अनुमत्याद्याश्चोदना । ता सर्वा, फलवत्यश्च प्रधानभूता । सर्वासामासां प्रकरणम् । न हि अभिषेचनीयस्य केवलस्य । कामादभिषेचनीयस्य प्राप्नुवन्ति । प्रकरणात् सर्वासाम् । प्रकरण च क्रमाद् बलीय । तस्मान्नाभिषेचनीयस्य केवलस्येति । अभिषेचनीयस्य तु मध्ये स्थान विदेवनादीनां, तत्र क्रियमाणा सर्वासामुपकुर्वन्तीति ॥ ४ ॥ सि० ॥ विदेवनस्य कृत्स्नराजसूयाङ्गताधिकरणम् ॥ २ ॥

## प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥

राजसूये उपसद प्रकृत्य श्रूयते । पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद् वैष्णवेनेति । तत्र सन्देह । किमुपसदङ्ग सौम्यादय, उत उपसत्काला इति । उपसदङ्गमिति ब्रूमः । कुत । उपसत्संयोगस्य श्रुतत्वात् । कालविधौ सति लक्षणा स्यात् । तस्मादुपसदङ्गमिति ॥ ननु कालवदङ्गं भविष्यति । तथा सत्युभयमनुगृह्यते । उपसत्संयोगश्च । पुरस्तादिति च कालाभिधानम् । उपसच्छब्दसंयोगादुपसदङ्गता भविष्यति । पुरस्ताच्छब्दसामर्थ्याच्च पूर्वादिषु प्रयोग इति । उच्यते । विप्रतिषिद्धं ह्युभयं, न शक्नोत्युपसदामित्येष शब्द सौम्यादींश्च विशेष्टुमेकस्मिन् वाक्ये, पूर्वादींश्च । भिद्येत हि तथा वाक्यम् । तस्मान्न बलवदङ्गम् ॥ ५ ॥ पूर्व०

## अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥

अपि वेति पक्षव्यावृत्ति । कालमात्रं स्यात् । नाङ्गप्रयोजनसम्बन्ध । कुत । अदर्शनाद्विशेषस्य । नान्यैः कालाभिधानैरस्य कश्चिद्

विशेषो लक्ष्यते । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्येवमादिभिः । अत्रापि हि सौम्यादयो विहिता, उपसद्दोऽपि । इदमानुपूर्व्यमविहितम् । तद् विधीयते । तस्मात् कालमात्रमिति ॥ ६ ॥ ॥ सि० ॥ ॥ सौम्यादीनामु सत्कालकत्वाधिकरणम् ॥ ३ ॥

## फलवदुक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥

वैश्वदेवीं साङ्ग्रहायणीं निर्वपेद् ग्रामकाम इति । तत्र आमनहोमाः श्रूयन्ते । आमनस्य इति तिस्र आहुतीर्जुहोतीति । अत्र सन्देहः । किं समप्रधानभूता आमनहोमाः साङ्ग्रहायणीष्ट्या, उताङ्गं तस्या इति । किं प्राप्तम् । समप्रधानभूता इति । कुतः । तुल्यहेतुत्वादितरस्य । तुल्यं हि यजिमत्त्वम् । नन्वफला होमाः । उच्यते । ग्रामकाम इत्यत्रानुपज्ज्यते । तस्मात् समप्रधानभूता इति ॥ एवं प्राप्ते ब्रूमः । फलवद् वा उक्तहेतुत्वादितरस्य प्रधानं स्यात् । न चैतदस्ति । समप्रधानभूता होमा इष्ट्या इति । फलवद् हि अफलस्य प्रधानम् । फलवती चेष्टि । अफला होमाः ॥ ननूक्तम्— अनुषङ्गो भविष्यतीति । उच्यते । नानुषङ्गं प्राप्नोति । कुतः । व्यवायात् । ननूक्तं, व्यवायान्नानुपज्ज्येतेति । केन व्यवायः । परिधिमन्त्रैः उग्रोऽस्युग्रस्त्वं देवेष्वध्युग्रोऽहं सजातेषु भूयासं प्रियः सजातानामुग्रश्चेत्ता वसुविदित्येवमादिभिः । एताननुक्रम्य, आमनस्येति तिस्र आहुतीर्जुहोतीत्यामनन्ति । तस्मात् साङ्ग्रहायण्या अङ्गम् आमनहोमा इति ॥ ७ ॥ आमनहोमानां सांग्रहायण्यङ्गताधिकरणम् ॥ ४ ॥

## दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥

ज्योतिष्टोमे श्रूयते— यां वै काञ्चिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येत, यत् प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनामिति । तत्र सन्देहः । किं नित्यो दधिग्रहः, उत नैमित्तिक इति । किं प्राप्तम् । दधिग्रहो नैमित्तिकः स्यात् । श्रुतिसंयोगात् । देवतान्तराये निमित्ते श्रूयते । न च नित्योऽन्तरायः । तस्मान्नैमित्तिक इति ॥ ८ ॥

## नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥

यदुक्तं, नैमित्तिक इति तद् गृह्यते, किन्तु नित्यश्च । कुतः । ज्येष्ठशब्दात् । ज्येष्ठशब्दो भवति । ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते,

ज्यैष्ठ्यमेव गच्छतीति । ज्येष्ठशब्दश्च प्राधान्ये प्राथम्ये वा स्यात् । एष प्रथमो, न प्रधानम् । यदि नित्य , एवं प्रशस्यत्वमुपपद्यते। न जातु चलाचलं हि प्रशंसन्ति । तस्मान्नित्यश्च नैमित्तिकश्चेति विनापि निमित्तेन ग्रहीतव्यो, निमित्तेनापि पुनरिति ॥ ९ ॥ ॥ पूर्व० ॥

## सार्वरूप्याच्च ॥ १० ॥

सर्वरूपता च श्रूयते । सर्वेषां वा एतद्देवानां रूपं यदेष ग्रहो यस्य एष गृह्यते सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते इति । न हि देवतारूपमस्माकं किञ्चिदन्यत् प्रत्यक्षम्, अन्यदतो नित्यत्वात् । तस्मादपि नित्यश्च नैमित्तिकश्चेति ॥ १० ॥ ॥ युक्तिः ॥

## नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥

तदुक्तं, नित्यो नैमित्तिकश्चेति । तत्र नित्य एव स्यात् । ज्येष्ठशब्दात् सार्वरूप्याच्च । यदुक्तं, देवतान्तराये निमित्ते श्रूयते इति । न देवतान्तरायो निमित्तत्वेन गम्यते । तयोरध्वर्य्युयजमानयोः कर्मण्यऽन्तरायेण असम्बन्धात् । न ह्येतच्छ्रूयते, अध्वर्य्युणा देवता अन्तरितव्या यजमानेन वेति । अनित्यो हि अन्तरायः । न चैवंशब्दोऽस्ति अन्तराये सति दधिग्रहो ग्रहीतव्य इति । विनैव संयोगेन दधिग्रहस्य ग्रहणम् । अन्तरायसमाधानं त्वस्य प्रयोजनमिति । तदेतन्नित्यवद् ग्रहणम्, अनित्यं प्रयोजनम् । नित्यं गृह्णीयाद् अनित्यमन्तरायं समाधातुमिति नावकल्पते । तत्र प्रयोजने अनित्यत्वाद् ग्रहणे नित्यवच्छ्रुतिर्बाध्येत । अर्थवादत्वे तु न बाध्यते । न हि तद् अन्तरायं समाधातुं गृह्यते । अन्यदेव प्रयोजनमस्यास्तीति प्रशंसितुमभिधीयते । दधिग्रहस्य तु सोमाङ्गतैव प्रयोजनमिति ॥ भङ्गित्वाच्चान्तरायस्य । भङ्गी चान्तराय अनित्यो नित्यप्रशंसार्थं सङ्कीर्त्यते । तस्मान्नैष दोषः । नित्य एव दधिग्रह इति ॥ ११ ॥ सि० ॥ ॥ दधिग्रहस्य नित्यताधिकरणम् ॥ ५ ॥

## वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ १२ ॥

अस्ति अग्निः, य एवं विद्वानग्निश्चिनुते इति । तत्र श्रूयते । यो वै संवत्सरमुख्यमभृत्वाग्निश्चिनुते, यथा सामिगर्भो विपद्यते तादृगेव तदार्त्तिमार्च्छेत् । वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् ।

संवत्सरो वाग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काले आगते विजायते। एवमेव संवत्सरमाप्त्वा काले आगतेऽग्निश्चिनुते। नार्त्तिमृच्छेदिति। एषा वाग्ने प्रिया तनूर्यद् वैश्वानरः। प्रियामेवास्य तनूमवरुन्धे इति। तत्र सन्देहः। किं नित्यो वैश्वानर, अथ नैमित्तिक इति। किं प्राप्तम्। अत्रापि नित्य एव अर्थवादः। उख्यस्य संवत्सराभरणेन कृतो दोषो वैश्वानरेण विहन्यते इति। नित्यैश्चास्य समानसङ्ख्यत्वं भवति। त्रीण्येतानि हवींषि भवन्ति। त्रय इमे लोका एषां लोकानामारोहायेति, लोकानां हविषां सामान्यं नास्ति। यदि यथा लोका नित्यास्त्रय एवमिमानि हवींषि नित्यानि त्रीणि। एवं लोकैः संस्तवो घटते। तस्मान्नित्यो वैश्वानर इति ॥१२॥ पूर्व० ॥

## पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥

उत्पन्नस्य निमित्ते उख्याभरणे निर्घातेन संयोगः। नाऽसंयुक्तस्योत्पन्नस्य दोषनिर्घातप्रयोजनता। तस्मादिह न दधिग्रहवद् विरोधोऽस्ति। तेन नार्थवादो, नैमित्तिक इति॥ अथ यदुक्तं लोकैः समानसङ्ख्यत्वं नित्यत्वादुपपद्यते, नान्यथेति। तत्र ब्रूम। त्रित्वाल्लोकानां हविषां च सामान्यादर्थवादो भविष्यतीति ॥ १३ ॥ ॥ सिद्धान्तः ॥ वैश्वानरस्य नैमित्तिकत्वाधिकरणम् ॥ ६ ॥

## षट्चितिः पूर्ववत्त्वात् ॥ १४ ॥

अस्ति अग्निः, य एवं विद्वानग्निश्चिनुते इति। तत्र श्रूयते, संवत्सरो वा एनं प्रतिष्ठायै नुदति योऽग्निश्चित्वा न प्रतितिष्ठति। पञ्च पूर्वाश्चितयो भवन्ति। अथ षष्ठीश्चितिं चिनुते इति। तत्र सन्देह। किं योऽयं नित्य एवाग्निः स एवायं षट्चितिक उच्यते, उत एकचितिको नैमित्तिक इति। किं प्राप्तम्। तस्मिन्नेव नित्ये अग्नौ षष्ठी चितिरेषा विधीयते। नित्यायामेव षष्ठ्यामेषोऽर्थवाद। योऽपि न प्रतिष्ठार्हे, सोऽप्यनया षष्ठ्या चित्या प्रतिष्ठातुमर्हतीति चितिप्रशंसा। किमर्थमेवं वर्ण्यते। षष्ठीशब्दश्रवणात्। षण्णां हि पूरणी षष्ठी। एकस्यां हि चितौ षष्ठीशब्दो न सामञ्जस्येन स्यात्। तस्मात् षट्चितिकोऽग्निर्नित्य इति ॥ १४ ॥ ॥ पूर्व० ॥

## ताभिश्च तुल्यसङ्ख्यानात् ॥ १५ ॥

ताभिश्च पूर्वाभिरस्यास्तुल्यवत् प्रसङ्ख्यानं भवति। कथम्।

इयं वाव प्रथमा चितिः, ओषधयः पुरीषम् । अन्तरिक्षं वाव द्वितीया चितिः, वयांसि पुरीषम् । असौ वाव तृतीया चितिः, नक्षत्राणि पुरीषम् । यज्ञो वाव चतुर्थी चितिः, दक्षिणा पुरीषम् । यजमानो वाव पञ्चमी चितिः, प्रजा पुरीषम् । संवत्सरो वाव षष्ठी चितिः, ऋतवः पुरीषमिति । तुल्यानां च तुल्यवद् अनुक्रमणं भवति । यथा, देवा ऋषयो गन्धर्वास्तेऽन्यत आसन् । असुरा रक्षांसि पिशाचाः तेऽन्यत आसन्निति । तुल्यवच्चामूषां चितीनामनुक्रमणमनया षष्ठ्या । तस्मादेतया, तत्तुल्यया भवितव्यम् । यदि च यस्मिन्नेव क्रतौ तास्तस्मिन्नेवैषा, तत एताभिस्तुल्या । तस्माद् अपि स एव नित्योऽग्निः षट्चितिक इति ॥ १५ ॥

## अर्थवादोपपत्तेश्च ॥ १६ ॥

अर्थवादश्च भवति, षट् चितयो भवन्ति, षट् पुरीषाणि, तानि द्वादश सम्पद्यन्ते, द्वादश मासाः संवत्सरः, संवत्सर एव प्रतितिष्ठतीति । तदेकचितिके अग्नौ न सामञ्जस्येन वचनं भवति । तस्मान्नित्य एव षट्चितिकः ॥ १६ ॥ ॥ युक्तिः ॥

## एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥

एकचितिर्वा नैमित्तिकः स्यात् । कुतः । अपवृक्ते हि यागे चोद्यते, अप्रतिष्ठया निमित्तेन । यो न प्रतितिष्ठति तस्यैषा चितिरुच्यते नैमित्तिकी । सा न नित्या भवितुमर्हति ॥ अपि चापवृक्ते यागे चोद्यते सा, न वर्त्तमाने भवितुमर्हति । ननु चित्वेति चयने निर्वृत्ते, न यागे । उच्यते । नैतत् पदार्थे निर्वृत्ते चित्वेति । किं तर्हि । वाक्यार्थे । अग्निं चित्वेति अग्नेश्चयनेनार्थमभिनिर्वर्त्त्येति । कृते च यागे चयनेन अग्नेरर्थो निर्वर्त्तितो भवति, नान्यथा । षष्ठीशब्दश्च, पञ्च पूर्वाश्चितय उक्तास्ता अपेक्ष्यावकल्पिष्यते । तस्मान्निर्वृत्ते यागे इत्युच्यते । तस्माद् वचनादेकचितिरग्निः ॥ १७ ॥ ॥ सि० ॥

## विप्रतिषेधात्ताभिः समानसङ्ख्यत्वम् ॥ १८ ॥

द्वयोः सूत्रयोरिदमुत्तरं, ताभिश्च तुल्यसङ्ख्यानाद् अर्थवादोपपत्तेश्चेति । ताभिर्नित्याभिः समानसङ्ख्यत्वं भविष्यति । अर्थवादश्चोपपत्स्यते । पञ्च पूर्वाश्चितयो भवन्ति, याभिरसौ चितिभिः प्रतितिष्ठते, अथेयं षष्ठी प्रतिष्ठार्थेति । ताश्च सपुरीषा अपेक्ष्य द्वादशत्वेन

संस्तवो भविष्यति । विप्रतिषेधादेकस्य षट्सङ्ख्याया द्वादशसङ्ख्यायाश्चेति । अतुल्यानामपि तुल्यवद् अनुक्रमणं भवति । यदा, देवा मनुष्याः पितरस्तेऽन्यत आसन्निति ॥१८॥आ०नि०॥षष्ठ्याश्चितेनैमित्तिकत्वाधिकरणम् ॥ ७ ॥

## पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥

अस्ति आमावास्ये कर्मणि पितृयज्ञः । अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति । तत्र संशयः । किम् आमावास्यस्य कर्मणः पिण्डपितृयज्ञोऽङ्गम्, उत अनङ्गमिति । किं प्राप्तम् ? अङ्गं फलवत्सन्निधानान्निष्क्रयवचनाच्च ॥ आह । ननु फलवत्सन्निधावफलं तदङ्गं भवति । फलवच्चेद् कल्प्येत स्वर्गेणेति । उच्यते । सत्यम् । अमावास्ययैकवाक्यत्वान्न शक्यः स्वर्गः कल्पयितुमिति । आह । कालवचनत्वान्न कर्मणैकवाक्यत्वं सम्भवतीति । उच्यते । लक्षणयापि तावत् कर्मैकवाक्यता सम्भवति । स्वर्गे कल्प्ये न लक्षणा, न श्रुतिः । एवञ्चामनन्ति, यत् पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एतद् यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते इति । अमावास्यां प्रति निष्क्रेतुं च श्रूयते । तस्मात् तदङ्गभूतमिति ॥ एवं प्राप्ते ब्रूमः । पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । अनङ्गभूतः पिण्डपितृयज्ञः । कस्मात् । स्वकालत्वात् । स्वशब्दाभिहितेन कालेन अस्य सम्बन्धो, न कर्मणा लक्षितेनेति । यथा, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । यथा, तदेतत् पुरस्तादुपसदां सौम्येन चरन्तीति । अत्र काले एवायं मुख्यः शब्दो, न कर्मणि । कर्मणि लक्षणा । श्रुतिश्च लक्षणाया बलीयसी । यच्चोक्तं लक्षणया कर्मैकवाक्यता भविष्यतीति । तच्च न । कस्मात् । अनुवादे हि लक्षणा न्याय्या, न विधौ । विधिश्चायम् । तस्मान्नामावास्याकर्म्मणा सम्बन्धः एकस्मिन् काले द्वे कर्म्मणी परस्परेणासम्बद्धे इति॥१९॥सि०

## तुल्यवच्च प्रसङ्ख्यानात् ॥ २० ॥

तुल्यवच्चान्यैः प्रधानैः प्रसङ्ख्यायते । चत्वारो वै महायज्ञाः — अग्निहोत्रं, दर्शपूर्णमासौ, ज्योतिष्टोमः, पिण्डपितृयज्ञ इति महायज्ञैस्तुल्यवत् प्रसङ्ख्यायते । काऽस्य महायज्ञता स्यात् । अन्यत फलवत्तायाः । तस्मादनङ्गम् ॥ २० ॥

## प्रतिषिद्धे च दर्शनात् ॥ २१ ॥

इतश्चाऽनङ्गम् । प्रतिषिद्धे आमावास्ये पिण्डपितृयज्ञं दर्शयति । पौर्णमासीमेव यजेत भ्रातृव्यवान्, नामावास्यां, हत्वा भ्रातृव्यम् अमावास्यया यजेत, पिण्डपितृयज्ञेनैव अमावास्यायां प्रीणातीति । असत्याममावास्यायां पिण्डपितृयज्ञ दर्शयति । तदनङ्गत्वे उपपद्यते । तस्मादपि नाङ्गं पिण्डपितृयज्ञ इति ॥

किं प्रयोजनं चिन्तायाः । यदि पौर्णमास्यामाधानं, ततोऽनन्तरायाममावास्यायां न क्रियते, यथा पूर्वपक्ष । यथा तर्हि सिद्धान्तस्तथा कर्त्तव्यः । इदमपरं प्रयोजनम् । कुण्डपायिनामयने मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेतेति । यथा पूर्वः पक्षस्तथा कर्त्तव्य पिण्डपितृयज्ञ । यथा सिद्धान्तस्तथा न कर्त्तव्य इति । श्लोकमपि उदाहरन्ति—

आधानं पौर्णमास्यां चेद् वृत्ते दर्शे करिष्यते ।
अनङ्गं पितृयज्ञश्चेत् तत्रैव न करिष्यते, इति ॥ २१ ॥ ॥ युक्ति ॥

पिण्डपितृयज्ञस्यानङ्गताधिकरणम् ॥ ८ ॥

## पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥

ज्योतिष्टोमे श्रूयते, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूप परिवीय आग्नेयं सवनीयं पशुमुपाकरोतीति । तत्र संशय । किं पश्वङ्गं रशना उत यूपाङ्गमिति । किं प्राप्तम् । पश्वङ्गम् । कुतः । तदागमे विधानात् । पश्वागमे हि विधीयते । पशुना अस्याः सम्बन्ध उत्पत्तिवाक्ये श्रूयते, परिव्याणं कृत्वा उपाकरोति पशुं नान्यथेति । एवं श्रुतिर्भवति । कालवचने लक्षणा स्यात् । परिव्याणेन कालो लक्ष्येतेति ॥ २२ ॥ ॥ पूर्व० ॥

## यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥

ज्योतिष्टोमे प्रत्यक्षो हि यूपस्य संस्कार । रशना हि या च यावतीं च द्रढिम्नो मात्रां यूपस्य सञ्जनयति, द्रढिम्ना च प्रयोजनं यूपस्य । तस्माद् यूपस्यैव द्रढिम्ने रशना स्यात् । द्वितीया च विभक्तिस्तत्प्राधान्ये एव भवति । रशनायां च तृतीया । तृतीया च गुणत्वे तस्याः । तस्माद् यूपाङ्गम् । यत्तु– तदागमे विधानादित्युक्तं, तत्परिहर्त्तव्यम् । उच्यते । तदागमे विधानं वाक्यम् द्वितीया च विभक्तिः । श्रुतिः प्रत्यक्षं च, वाक्यं बाधेयातामिति । यत्तु लक्षणेति ।

श्रुत्यसम्भवे लक्षणापि न्याय्यैव ॥ २३ ॥ सि० ॥

अर्थवादश्च तदर्थवत् ॥ २४ ॥

एवञ्च मन्त्रार्थवादोऽर्थवान् भविष्यति । युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति । तस्माद् यूपाङ्गं रशनेति ॥ किं प्रयोजनं चिन्तायाः । अग्नौ श्रूयते । एकयूपे एकादश पशवो नियोज्या इति । प्रतिपशु रशना कार्य्या । यदि पूर्वः पक्षः । सिद्धान्ते द्वैरशन्यमेव । श्लोकमप्युदाहरन्ति ॥ पश्वङ्गं रशना चेद् यद्येकस्मिन् बहून् नियुञ्जीत * प्रतिपशु रशना कार्या यूपे चेद् द्वैरशन्यं स्याद्, इति ॥ २४ ॥ ॥ युक्तिः ॥ रशनाया यूपाङ्गताऽधिकरणम् ॥ ९ ॥

स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय सोमाङ्गभूतो यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र श्रूयते । स्वरुणा स्वधितिना च पशुमनक्तीति । तत्र सन्देहः । किं यूपाङ्गं स्वरुरुत पश्वङ्गमिति । किं प्राप्तम् । यूपाङ्गमिति ब्रूमः । कुतः । एकदेशत्वात् । एकदेशः स्वरुर्यूपस्येति श्रूयते । यूपस्य स्वरुं करोतीति । स्वरुमन्तं यूपं कुर्यादित्यर्थः । एवं स यूपो भवतीति । यथा चषालम् ॥ २५ ॥ पूर्व० ॥

निष्क्रयश्च तदङ्गवत् ॥ २६ ॥

यूपाङ्गमिव स्वरुं निष्क्रयवादो दर्शयति । अपश्यन् ह स्म वै पुरा ऋषयो ये यूपं प्रापयन्ति, सम्भज्य स्रुवन्ते मन्यन्ते, यज्ञवैशसाय वा इदं कर्मेति ते प्रस्तरं स्रुवनिष्क्रयम् अपश्यन्, यूपस्य स्वरुम् अयज्ञवैशसायेति निष्क्रयश्रवणात् तदङ्गता विज्ञायते । तस्माद् यूपाङ्गमिति ॥ २६ ॥ ॥ युक्ति ॥

पश्वङ्गं वार्थकर्मत्वात् ॥ २७ ॥

पश्वङ्गं वा । तस्य हि अञ्जनार्थेन स्वरुणा प्रयोजनम् । तथा हि श्रूयते । स्वरुणा पशुमनक्तीति । तदञ्जनं पशोः, स्वरोरुत्पत्तिं प्रयोजयति । यदि तदर्थं एषः स्वरुस्ततो दृष्टं प्रयोजनम् । अथ यूपार्थ, अदृष्ट प्रयोजनं ततः कल्प्यम् । तस्मात् पश्वङ्गमिति ॥ २७ ॥ ॥ सि०॥

भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

कया भक्त्या । एवमाह । यूपः किलाग्नौ प्रक्षेप्तव्यः । यत् स्वरुः प्रक्षिप्यते । तेन यूप प्रक्षिप्यते इति । स एष निष्क्रय इव भवति । अन्यया भक्त्या स्तुतिरिति ॥ किं भवति प्रयोजनम् । एकयूपे एकादश पशवो यदा नियुज्यन्ते, तदैकस्यैव पशो. समञ्जनम् । पूर्वस्मिन् पक्षे । सर्वेषां सिद्धान्ते । श्लोकश्च भवति— स्वरुर्यूपाङ्गमिति चेदेकस्यैव समञ्जनम् * बहूनामेकयूपत्वे सर्वेषां तु समञ्जनम्, इति ॥ २८ ॥ ॥ आ० नि० ॥ स्वरोः पश्वङ्गताऽधिकरणम् ॥ १० ॥

## दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥

स्तो दर्शपूर्णमासौ । तत्र श्रूयन्ते आग्नेयाग्नीषोमीयोपांशुयाजैन्द्राग्नसान्नाय्ययागा । तथा, अघारावाज्यभागौ, प्रयाजानुयाजाः, पत्नीसंयाजा, समिष्टयजु, स्विष्टकृदिति । तत्र सन्देह । किं सर्वे यागा प्रधानभूता, उत केचिद् गुणभूता इति । किं प्राप्तम् । दर्शपूर्णमासयोर्यावत्य इज्यास्ता सर्वा प्रधानभूता इति । यजेत स्वर्गकाम इत्यविशेषेण यागेभ्य फलं श्रूयते । फलवच्च प्रधानम् । सर्वे चामी यागा । तस्मात् सर्वे प्रधानभूता इति ॥ २९ ॥ पूर्व० ॥

## अपि वाङ्गानि कानिचिद् येष्वङ्गत्वेन संस्तुतिः सामान्यो ह्यभिसंस्तवः ॥ ३० ॥

अपि वा कानिचिदङ्गानि भवयु' । कानि पुनस्तानि । येष्वङ्गत्वेन संस्तुति । यथा अभीषू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ । यत् प्रयाजानुयाजाश्चेज्यन्ते वर्म्म वा एतद् यज्ञस्य क्रियते, वर्म्म वा यजमानस्य भ्रातृव्यस्याभिभूत्यै इति । अभीषू रथस्याङ्ग, चक्षुषी चक्षुष्मत , वर्म्म वर्म्मवतः । सामान्यो हि अभिसंस्तवो युक्त । यदि चाङ्गानि तानि संस्तुतानि, ततः संस्तवोऽर्थवान् भवति । तस्मादङ्गसंस्तुतान्यङ्गानीति ॥ ३० ॥ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥

एवं च कृत्वाऽन्यार्थदर्शनमुपपन्नं भवति । प्रयाजे प्रयाजे कृष्णलं जुहोतीति । न च प्रयाजान् यजति, न चानुयाजान् यजतीति च ॥ ३१ ॥ ॥ युक्ति' ॥

## अविशिष्टन्तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥

अविशिष्टमेतत् कारणं संस्तवो नाम । आग्नेयादीनामप्यङ्गत्वेन संस्तुतिरस्ति । शिरो वा एतद् यज्ञस्य यदाग्नेयो, हृदयमुपांशुयाग., पादावग्नीषोमीय इति । शिर शिरस्वतोऽङ्गं, हृदयं हृदयवतः, पादौ पादवत इति सर्वस्यैवाऽङ्गत्वेन संस्तुतिरिति सर्वमेवाऽङ्गं प्राप्नोति । तत् प्रधान न स्यात् । असति प्रधाने कस्याङ्गम् । तस्मान्नैतदङ्गमिति ॥ ३२

## नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥

अथ यदुक्तम् अन्यार्थदर्शनं परार्थत्वाद् न तत्साधकं भवति । परार्थं हि तद् वाक्यं, न दृश्यमानस्य प्रयाजादे· प्रापणार्थम् । तस्मादन्यदस्य प्रमाणमन्वेष्टव्य, श्रुत्यन्तरं न्यायो वा । तस्मिन्नसति, मृगतृष्णादर्शनमिव तद् भवति । संस्तुतिरप्यसति न्याये असाधिकैव ॥ ३३ ॥ ॥ युक्ति ॥

## पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वं, तत्सन्निधाव-ऽसंयुक्त तदङ्ग स्याद्भागित्वात्कारणस्या-ऽश्रुतश्चान्यसम्बन्धः ॥ ३४ ॥

तुशब्द· पक्षं व्यावर्त्तयति । यदुक्त, सर्वाणि समप्रधानानीति । नैतदेवम् । दर्शपूर्णमासशब्दवाच्यानि प्रधानानि कर्माणि । कुत· । फलसंयोगात् । दर्शपूर्णमासशब्दकेभ्य· फलं श्रूयते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । कानि पुनर्दर्शपूर्णमासशब्दकानि । येषां वचनं पौर्णमासीशब्दोऽमावास्याशब्दो वा आग्नेयादीनि तानि । नन्वमावास्याशब्दकानां नैव फलं श्रूयते । उच्यते । पृथक्त्वे समुदाययोर्निवेश एतयोरभिधानयो· । पौर्णमासीति च, अमावास्या इति च । त्रिष्वाग्नेयादिषु य समुदायस्तत्र पौर्णमासीशब्द । इतरेष्वऽमावास्याशब्द· । कथं पौर्णमासी अमावास्या इति च द्विशब्द श्रूयते । द्व्यर्थवद् व्यपदेशाच्च । कथ तद्व्यपदेश । द्विवचननिर्देशात् । दर्शपूर्णमासाभ्यामिति । एकार्थौ च दर्शामावास्याशब्दौ । कथम् । दर्शो वा एतयो पूर्व·, पूर्णमास उत्तरस्तयोरथ यत् पूर्णमासं पूर्वमारभते तद्यथापूर्वं प्रक्रियते । दर्शपूर्णमासमारभमाण सरस्वत्यै चरुं निर्वपेत्, सरस्वते द्वादशकपालममावास्या वै सरस्वती, पूर्ण-

मासः सरस्वान्। उभावेतौ यथापूर्वं कल्पयित्वारभते ऋद्ध्यै ऋध्नोत्येवाथो मिथुनत्वायेति। तत्र दर्शशब्देन प्रकृत्या अमावास्याशब्देन ब्रुवन्नेकार्थतां दर्शयति। शक्यते च चन्द्रस्यादर्शनेन अमावास्या दर्श इति लक्षयितुम्। यथा चक्षुषोरभावे सति चक्षुष्मानिति चक्षुर्भ्यां लक्ष्यते। एतस्माद् व्यपदेशाच्च श्रुतितश्च, लोके श्रवणाद्, एकार्थतामेवाध्यवस्यामः। तत् पुनर्मुख्यलक्षणं यत् फलवत्त्वम्। यदन्यत् तत्सान्निधौ श्रूयते, तत् तदङ्गम्। कथम्। इतिकर्त्तव्यताकाङ्क्षस्य सन्निधौ श्रूयमाणम्, इतिकर्त्तव्यताविशेषणत्वेन परिपूरणसमर्थं तदङ्गं भवितुमर्हति। अकल्प्यमाने वाक्यशेषे फलं कल्पयितव्यं स्यादिति॥ आह। ननु दर्शपूर्णमासफलमेवात्रानुषज्ज्यते। उच्यते। शक्यमनुषक्तुं, किन्तु दर्शपूर्णमासवाक्यं साकाङ्क्षमेव स्यात्। अन्या अस्य इतिकर्त्तव्यता अश्रुता कल्प्येत। एषामपि प्रयाजादीनामन्या कल्प्येत एतदितिकर्त्तव्यता अवगम्यमाना उत्सृज्ज्येत। तेनाऽङ्गत्वं, कारणं भागीति। एषामन्येन फलेन सम्बन्धोऽश्रुतः। तस्मान्न सर्वाणि समप्रधानानि, आधारादीनि गुणकर्माणीति॥ ३४॥॥

## गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥३५॥

नामविशेषसंयुक्ताश्च गुणविशेषा विधीयन्ते। यथा, चतुर्होत्रा पूर्णमासीमभिमृषेत् पञ्चहोत्रा अमावास्यामिति सर्वेषु प्रधानेषु। अस्मिन् समुदाये चतुर्होत्रा, अस्मिन् पञ्चहोत्रा इतिविभागाविज्ञानाच्चेदं नोपपद्येत। भवति चैवंलक्षणकं गुणविधानम्। तस्मादस्मत्पक्ष एवेति। अपि चाङ्गत्वेन आधारादीनां संस्तुतिरुपपन्ना भविष्यति॥ ३५॥॥ युक्तिः॥

## तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसम्बन्धः॥ ३६॥

अथ यदुक्तम्— आग्नेयादीनामप्यङ्गत्वेन संस्तुतिरङ्गत्वं ख्यापयेदिति। तत् परिहर्त्तव्यम्॥ ३६॥॥ आ०॥

## उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशः स्यात्॥ ३७॥

नैष दोषः। प्रधानानामप्येषां सतामुत्पत्त्यपेक्षा शिरआदिस्तुतिर्भविष्यतीति। जायमानस्य हि पुरुषस्याग्रे शिरो जायते, मध्ये मध्यं, पश्चात् पादौ। एवमाग्नेयोऽग्रत, उपांशुयाजो मध्ये, अग्नीषोमीयः पश्चादिति। एतस्मात् सामान्यादेषा स्तुतिरिति॥३७॥॥ आ० नि०॥

**तथा चान्यार्थदर्शनम् ॥ ३८ ॥**

चतुर्दश पूर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति। इतरथा न चतुर्दश पौर्णमास्यामाहुतयो भवेयु । न वा अमावास्यायां त्रयोदशेति। तस्मादाग्नेयादीनि प्रधानानि, आघारादीन्यङ्गानीति सिद्धम् ॥ ३८ ॥ ॥ युक्ति ॥ आघारादीनामङ्गताऽधिकरणम् ॥ ११ ॥

**ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥**

अस्ति ज्योतिष्टोमो, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र दीक्षणीयादयश्च यागा विद्यन्ते, सौत्ये चाहनि सोमयाग. । तत्र संदेहः। किमत्र यागमात्रं प्रधानम्, उत सोमयाग इति । किं प्राप्तम्। ज्योतिष्टोमे तुल्यानि सर्वाणि भवेयु. । कुत । अविशिष्टं हि कारणम्। यागात् फलं श्रूयते। सर्वे चामी यागा.। फलवच्च प्रधानम्। तस्माज्ज्योतिष्टोमे सर्वे यागा. प्रधानमिति ॥ ३९ ॥ पूर्व० ॥

**गुणानान्तूत्पत्तिवाक्येन सम्बन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात् ॥ ४० ॥**

गुणानां तु उत्पत्तिवाक्येन सम्बन्धो भवति । केषां गुणानाम्?। ज्योतिषां स्तोमानाम् । कतमेन उत्पत्तिवाक्येन सम्बन्धो भवति । ज्योतिष्टोमेन स्वर्गकामो यजेतेति ज्योतिष्टोमाद् यागात् स्वर्गः श्रूयते, न यागमात्रात् । यत्र च ज्योतींषि स्तोमा., स ज्योतिष्टोम । कस्य ज्योतींषि स्तोमा.। सोमयागस्येति ब्रूमः । एवं हि आम्नायते। कतमानि वा एतानि ज्योतींषि, ये एते तस्य स्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशा । एतानि वा ज्योतींषि । तान्येतस्य स्तोमा इति। सोमयागस्य स्तोमा अङ्गम् । समभिव्याहारात्। ग्रहं वा गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकरोतीति, ते च स्तोमास्त्रिवृदादय । कथम्। त्रिवृद् वहिष्पवमानं, पञ्चदशान्याज्यानीत्येवमादिभि श्रवणै ॥ तस्मात् त्रिवृदादिस्तोमक सोमयागः । स ज्योतिष्टोम इति। यश्च ज्योतिष्टोमस्तत फलम्। यतश्च फलं तदेव प्रधानमिति। कथं पुनस्त्रिवृदादयो ज्योतींषि । उच्यते । भवन्तु वा ज्योतींषि, मा भूवन्, ज्योति शब्देन तावदुक्तानि । वचनमात्रेणाऽपि शब्दो भवति, विशेषतो लक्षणायाम्। अपि च द्योततेर्वा दीप्तिकर्मणो ज्योतिःशब्दं लभन्ते। द्योत्यते हि तै शब्दैर्द्योतयन्तीति वा-

स्तुत्याम् । तस्मात् सोमयागो ज्योतिष्टोमः । स च प्रधानं, गुणभूता दीक्षणीयादय इति ॥ ४० ॥

## तथा चान्यार्थदर्शनात् ॥ ४१ ॥

शिरो वा एतद् यज्ञस्य यद्दीक्षणीया इत्येवमादि च लिङ्गं दृश्यते । तथा गुणाश्च ज्योतिष्टोमविकारे दीक्षणीयादयो दृश्यन्ते । चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात् । प्रायणीयायां द्वे चतुर्विंशतिमाने इति तुल्यत्वे न प्रवर्त्तयिष्यन्ते दीक्षणीयादय । तस्माद्ऽपि सोमयाग. प्रधानमिति ॥ ४१ ॥ सि० ॥ ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥ १२ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य चतुर्थः पाद ॥ ४ ॥ ४ ॥ समाप्तश्चायमध्यायः ॥ ४ ॥

अथ पञ्चमे अध्याये प्रथमः पादः ॥ ५ ॥ १ ॥

## श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तम् । तत्र प्रस्मर्त्तव्यम् । इहेदानीं क्रमनियमलक्षणमुच्यते । तत् श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यैर्वक्ष्यते । श्रुत्यादीनां च बलाबलम् । आदितस्तु श्रुतिक्रमश्चिन्त्यते । किं यथाश्रुति पदार्थानां क्रम आस्थेय , उतानियमेनेति । किं प्राप्तम् । एकत्वात् कर्त्तुरनेकत्वाच्च पदार्थानाम, अवश्यम्भाविनि क्रमे लाघवात् प्रयोगप्रांशुभावाच्चानियम इत्येवं प्राप्ते ब्रूम ॥ श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वादिति । श्रुतिर्ग्रहणम् अक्षराणां, तन्निमित्तं यस्य क्रमस्य, स साधु क्रम । श्रुतिप्रमाणका हि वैदिका अर्था । नैषामन्यत् प्रमाणमस्तीत्युक्तम् । किमिहोदाहरणम् । सत्रे दीक्षाक्रम ये ऋत्विजस्ते यजमाना इत्युक्त्वा, तेषां दीक्षाक्रमं विधत्ते । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्द्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातु , मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मण', प्रतिहर्त्तारमुद्गातु , अच्छावाकं होतु । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मण., सुब्रह्मण्यमुद्गातु , ग्रावस्तुत होतु' । ततस्तमन्यो ब्राह्मणा दीक्षयति, ब्रह्मचारी वा आचार्यप्रेषित इति । अनिय-

मेन क्रमः कर्त्तव्यो, यथा पूर्वः पक्ष । यथा तर्हि सिद्धान्तः । एष एव क्रम कर्त्तव्य इति ॥ तत्राह । अन्याय्यं श्रुतिवचनमिति । उच्यते । किमयं न साधु । न, न साधुरिति ब्रूमः । न्याय्यं तर्हि । न ब्रूमो, न साधु' क्रम इति । किं तर्हि । उक्तस्य पुनर्वचनमन्याय्यमिति । उच्यते । साधोर्वचनं बहुशोऽप्युच्यमान न्याय्यमेव । असाधोस्तु सकृदप्यन्याय्यम् । आह । सकृद्वचनेन ज्ञानस्य पुनर्वचनं न प्रयोजनमस्तीति । उच्यते । भवति अपस्मरणमपि प्रयोजनमित्युक्तम् । वृत्तिकारेण तत् कार्यमिति चेत् । सूत्रकारस्याप्यविशेषो वृत्तिकारेण ॥ प्रथमवर्णकम् ॥ १ ॥

अथ वा अर्थान्तरमेवेदम् । तत्र हि अन्य एव संशयो विचारो निर्णयश्च । श्रुतिप्रमाणको धर्म', अन्यप्रमाणक इति संशय' । प्रत्यक्षादीनामधिगम्य निमित्तत्वान्न तत्प्रमाणक, अतीन्द्रियत्वाच्चोदनालक्षण इति विचार । चोदनालक्षण एवेति निर्णय । इह तु सिद्धे तत्प्रामाण्ये व्यवहारक्रमस्य साधुत्वावधारणम् ॥ द्वितीयवर्णकम् ॥ २ ॥

अथ वा श्रुतिविचारोऽयम् । किं पदार्था कर्त्तव्याः ? इति विधानं, किं वा क्रमो विधीयते इति । अनेकार्थविधानानुपपत्ते क्रमेऽनुवाद' पदार्थानां विधि' । अवदानवाक्येष्विव पदार्थविधानं श्रुत्या, क्रमविधानं वाक्येन । तस्मान्न क्रमो विधीयते इति पूर्वः पक्ष' । नन्ववदानवाक्येषु क्रमो विधीयते । सत्यं विधीयते । पाठेन, न श्रुत्या । ये ऋत्विजस्ते यजमाना इति तु, दीक्षायाः प्राप्तत्वात् क्रमविधानार्था श्रुतिरिति सिद्धान्त' । तस्मादपुनरुक्तमिति ॥ १ ॥ तृतीयवर्णकम् ॥ ३ ॥ ॥ क्रमनियमाधिकरणं वर्णकत्रयसहितम् ॥ १ ॥ श्रुतिबलीयस्त्वन्याय' ॥

## अर्थाच्च ॥ २ ॥

किमेष एवोत्सर्गः । सर्वत्र श्रुतिवशेनैव भवितुमर्हतीति । उक्तं हि, चोदनालक्षणोऽर्थो धर्म इति । एवं प्राप्ते ब्रूम. । अर्थाच्च सामर्थ्याच्च क्रमो विधीयते इति । गुणभूतो हि पदार्थानां क्रमो भवति । यश्च यस्य निर्वर्त्यमानस्योपकरोति स तस्य गुणभूतः । यस्मिंश्चाश्रीयमाणे पदार्थ एव न सम्पद्यते, न स गुणभूत' । विनापि तेन न वैगुण्यम् । एवं प्रत्यक्षः क्रमस्य गुणभावो यत्र, तत्रार्थेन स एवाश्र-

यितव्यः । यथा जाते वरं ददाति । जातमञ्जलिना गृह्णाति । जातमभिप्राणितीति । अर्थात् पूर्वमभिप्राणितव्यं, ततोऽञ्जलिना ग्रहीतव्यः, ततो वरो देय इति । तथा विमोकः पूर्वमाम्नातः, पश्चात्तद्योगः । अर्थाद् विपरीतं कार्यः । याज्यानुवाक्ये तु विपर्ययेणाम्नाते विपर्ययेण कर्त्तव्ये । नात्र पाठक्रमो मीयते । यतो देवतोपलक्षणार्थाऽनुवाक्या, प्रदानार्था याज्या । अग्निहोत्रं जुहोतीति पूर्वमाम्नातम् । ओदनं पचतीति पश्चात् । असम्भवात् पूर्वमोदनः पक्तव्यः । प्रैषप्रैषार्थौ तु विपर्ययेण आम्नातौ । तौ च विपर्य्ययेण कर्त्तव्यौ ॥ २ ॥ ॥ क्रमस्य क्वचिदार्थिकत्वाऽधिकरणम् ॥ २ ॥

अनियमोऽन्यत्र ॥ ३ ॥

अन्यस्मिन् विषये क्रमस्य नियमो नास्ति । यथा दर्शपूर्णमासयोर्याजमानानां प्रयाजानुमन्त्रणादीनां नानाशाखान्तरसमाम्नातानां, वसन्तमृतूनां प्रीणामीत्येवमादीनाम्, एको ममेत्येवमादीनाञ्च ॥ ३ ॥ ॥ क्रमस्य क्वचिदनियमाधिकरणम् ॥ ३ ॥

क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥४॥

दर्शपूर्णमासयोराम्नातं— समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति । तत्र संशयः । किमनियतेनैव क्रमेणैषामनुष्ठानम्, उत, यः पाठक्रमः स एव नियम्येतेति । किं प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति ॥ एवं प्राप्ते ब्रूमः । क्रमेणैव नियम्येतैकस्मिन् क्रताविति । कुतः । तद्गुणत्वात् । तद्गुणत्वं हि गम्यते पदार्थानाम् । यथा, स्नायादनुलिम्पेद् भुञ्जीतेति च क्रमेणानुष्ठानमवगम्यते वाक्यात् पदार्थानाम् । यथा चाऽदृष्टार्थेपूपदिश्यमानेषु कश्चिद् ब्रूयात्— देवाय धूपो देयः, पुष्पाण्यवकरितव्यानि, चन्दनेनानुलेप्तव्यः, उपहारोऽस्मै उपहर्त्तव्यः, एवं कृते देवस्तुष्यतीति । तमन्य प्रतिब्रूते— नैतदेवं, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाणि अवकरितव्यानीति । एवं मन्यते, धूपदानस्य प्राथम्यमनेनोक्तमिति । तस्माद् वाचनिक एषाम् एष क्रम इति ॥ ४ ॥ सि० ॥

अशाब्द इति चेत् स्याद्वाक्यशब्दत्वात् ॥ ५ ॥

इति चेत् पश्यसि, अथैवं गम्यमाने अशाब्द एव क्रमः । कथम्

पदार्थपूर्वको वाक्यार्थः । पदेभ्यश्च पदार्था एवावगम्यन्ते, न क्रमः । स्यादेतदेवं, यदि पदार्थानां समूहस्य श्रवणं प्रत्यायकमर्थस्य स्यात् । न तु समुदायः प्रत्यायक इत्युक्तं, तद्भूतानां क्रियार्थेन समाम्नाय इत्यत्र । तस्मात् क्रमस्य वाचकशब्दाभावाद् व्यामोह एष क्रमोऽवगम्यते । एवञ्चापूर्वासत्तिरनुग्रहीष्यते । इतरथा सापि विप्रकृष्येत घटीयन्त्र इव । दर्शयिष्यति च । हृदयस्याग्रेऽवद्यति, अथ जिह्वाया, अथ वक्षस इति । यदि नियामकः पाठक्रमस्ततो न विधातव्यमेतत् । नियामके हि पाठक्रमे पाठक्रमादेव प्राप्नुयात् ॥ ५ ॥ ॥ आ० ॥

**अर्थकृते वानुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धस्तस्मात् स्वशब्दमुच्येत ॥ ६ ॥**

एकस्मिन् क्रतावेकत्वात् कर्तुरनेकस्मिन् पदार्थेऽर्थकृतत्वात् क्रमस्य । तत्रैष एव क्रमो नियम्येतानुमानेन । कुतः । परार्थत्वाद् वेदस्य । परार्थो हि वेदो यद् यदनेन शक्यते कर्त्तुं तस्मै तस्मै प्रयोजनायैव समाम्नायते । शक्यते च अनेन पदार्थो विधातुं, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्माद् वेदः पदार्थांश्च विधातुमुपादेयः । क्रियाकाले च प्रतिपत्तुं न शक्यते विशेषः । विधातुमयं समाम्नायते, न प्रतिपत्तुमिति । अगम्यमाने विशेषे उभयार्थमुपादीयत इति गम्यते । प्रतिपत्तुं चानेन क्रमेण शक्यते, नान्येन । अत एव च क्रत्वा पाठक्रमापचारे विनष्ट इत्युच्यते । इतरथा हि यद् यस्य प्रयोजनं, तस्मिन् निर्वर्त्तमाने एव किं नष्टं स्यात् । अदृष्टं कल्प्येत तच्चान्याय्यं दृष्टे सति । तस्मात् स्वशब्दः क्रमः । य एव पदार्थानां वाचकः शब्दः, स एव क्रमस्यापि ॥ ६ ॥ आ० नि० ॥

**तथा चान्यार्थदर्शनम् ॥ ७ ॥**

एवञ्चान्यार्थं दर्शयति, व्यत्यस्तमृतव्या उपदधाति । व्यत्यस्तं षोडशिनं शंसति । आश्विनो दशमो गृह्यते । तं तृतीयं जुहोतीति । यद्यनियमेनोपधानं शंसनं च व्यत्यस्तवचनमनर्थकं स्यात् । न हि कथञ्चिद्व्यत्यास इति । तथा आश्विनस्य तृतीयस्य होमानुवादो नावकल्प्येत, यदि पाठक्रमेण नियम इति । तथा, अभिचरता प्रतिलोमं होतव्यम् । प्राणानेवास्य प्रतीचः प्रतियौतीति क्वचित् प्रतिलोमं विदधदनुलोमं दर्शयति । तदुपपद्यते यदि पाठक्रमेण प्रयोगः । इतरथा,

सर्वमनुलोमं स्यात्, प्रतिलोमदर्शनं नोपपद्येत । तथा चतुर्थोत्तमयोः प्रतिसमानयतीत्युक्ते सति, अतिहायेडो बर्हिं प्रतिसमानयतीत्युच्यते । तेन बर्हिषश्चतुर्थतां दर्शयति । सा पाठक्रमे नियामकेऽवकल्पते ॥७॥ युक्तिः ॥ क्रमस्य क्वचित् पाठानुसारिताधिकरणम् ॥ ४ ॥ पाठक्रमन्याय ॥

## प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥

वाजपेये सप्तदश प्राजापत्यान् पशूनालभते इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्मा. । तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्य । द्वितीयादिषु भवति संशय. । किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्य., उत द्वितीयादिष्वनियम इति । कि तावत् प्राप्तम् । नियमकारिण शास्त्रस्याभावादनियम इति ॥

एवं प्राप्ते, ब्रूम. । यतः पूर्व आरब्धस्तत एव द्वितीयादयोऽपि पदार्था आरब्धव्या इति । कुत' एतत् ॥ तदुपक्रमात् । सर्वे हि पदार्था प्रधानकालान्न विप्रकृष्टव्या । प्रधानं हि चिकीर्षितम् + कृतं वा तेषां निमित्तम् । सहवचनं हि भवति + पदार्थैं सह प्रधानं कर्त्तव्यमिति । बहुपदार्थसमाम्नानात्त्ववश्यम्भावी विप्रकर्ष । तथापि तु यावद्भिर्नाव्यवहित. शक्य पदार्थ. कर्त्तुं तावद्भिर्व्यवधानमवश्यं कर्त्तव्यं, ततोऽभ्यधिकेन न व्यवधातव्यमिति । यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात् । तथा प्रयोगवचनं बाधेत । ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति । उच्यते । अनुमतानां व्यवधायकानां त्यागेन कश्चिदभ्यधिको गुणो भवतीति । तस्माद् यत पूर्वपदार्थ आरब्धस्तत एवोत्तर आरम्भणीय इति ॥ ॥ ८ ॥ ॥ सि० ॥

## सर्वमिति चेत् ॥ ९ ॥

इति चेत् पश्यसि, प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रह इति । सर्वं तर्हि गुणकाण्डमेकस्मिन्नपवर्जयितव्यम् । यथा सौर्यादिषु ॥९॥ आ०

## नाकृतत्वात् ॥ १० ॥

नैतदेवम् । सहप्रयोग एव हि नानुष्ठित स्यात् ॥१०॥ आ० नि० ॥

## क्रत्वन्तरवदिति चेत् ॥ ११ ॥

अथ यदुक्तं, यथा क्रत्वन्तरेषु सौर्य्यादिष्विति । तत् परिहर्त्तव्यम् ॥ ११ ॥८॥ आ० ॥

नासमवायात् ॥ १२ ॥

न तेषामर्थात् क्रमः प्राप्नोति, यो नियम्येत । अङ्गाऽऽश्रयो हि नियमो भवितुमर्हति । अनङ्गसमाश्रयस्य स्वयमङ्गता कल्प्येत ॥ १२ ॥ आ० नि० ॥ क्रमस्य क्वचित् प्रथमप्रवृत्त्यनुसारिताऽधिकरणम् ॥ ५ ॥ प्रावर्तिकक्रमन्यायः ॥

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममित्येवमादि श्रूयते तत्र आगमेन सङ्ख्यापूरणमिति वक्ष्यते। तत्रागमे क्रियमाणे, किमनियमजक्रमाः सर्वा ऋच आगमयितव्या , उत काण्डक्रमेण्य इति । किं प्राप्तम् । अनियमेनेति। कुतः । अतिरात्रे त्रिनवादिशब्दार्थेनैताः प्राप्नुवन्ति । तत्रैतासां प्राप्नुवतीनां पाठक्रमो नास्तीति । एवं प्राप्ते उच्यते । यदासां समाम्नाये स्थानं, तेनैताःअत्र नियम्यन्ते । याः पूर्वं समाम्नातास्ताः पूर्वमेव प्रयोक्तव्याः। आनुपूर्व्यस्य हि दृष्टमेतत् प्रयोजनम् । यदुत्तरस्फुरणं तदपि चिकीर्षितमेवेति । त्रिनवादिशब्दैरतिरात्रे यौगपद्येनासां प्राप्ते पाठक्रमस्याविषय इत्यधिकरणान्तरमिति भवति मतिः । समाम्नायपाठक्रमादेवात्र नियम इति पुनरुक्तता गम्यते इत्यन्यथा वर्ण्यते—

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

साद्यस्क्रे श्रूयते, सह पशूनालभते इति । तत्रैषोऽर्थः समधिगतः। सवनीयकाले त्रयाणामालम्भ इति । अथात्र पाठक्रमात्, किमग्निषोमीय पूर्वमालब्धव्यः, उत स्थानक्रमात् पूर्वं सवनीय इति । किं प्राप्तम् । पूर्वमग्नीषोमीय इति । कुतः । पाठक्रमात् । एवं प्राप्ते ब्रूमः । सवनीय पूर्वं, स्थानात् । यदि पूर्वमग्नीषोमीयः स्यात्, सवनीयस्थानं व्याहन्येत । आश्विनं गृहीत्वा त्रिवृता यूपं परिवीयेति । नन्वितरत्रापि पाठक्रमो बाध्येत । बाध्यताम् । तस्य हि प्रतिषेधार्थं सहशब्दः समाम्नातः । अप्रतिषिद्धं चाश्विनग्रहस्थानम् । तन्न बाधितव्यम् ॥ १३ ॥ ॥ क्रमस्य क्वचित् स्थानानुसारिताऽधिकरणम् ॥ ६ ॥

## मुख्यक्रमेण वाङ्गानां तदर्थत्वात् ॥ १४ ॥

सारस्वतौ भवतः । एतद् वै दैव्यं मिथुनमिति श्रूयते । तत्र सन्देहः । किं स्त्रीदेवत्यस्य प्रथमं धर्मा, उत पुंदेवत्यस्येति । नियमकारिणः शास्त्रस्याभावादनियम इति प्राप्ते ब्रूमः । मुख्यक्रमेण वा नियमः स्यादिति स्त्रीदेवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नानम् । प्रणो देवी सरस्वतीति । तस्मात् स्त्रीदेवत्यस्य पूर्वं प्रदानेन भवितव्यम् । तस्मात् स्त्रीदेवत्यस्य पूर्वं धर्माः कार्याः । तथा हि प्रधानकालता भवत्यङ्गानाम् । इतरथा, यैः पदार्थैर्व्यवधानं सामर्थ्यादनुज्ञातं, तेभ्योऽधिकैरपि व्यवधानं स्यात् ॥ १४ ॥ ॥ अङ्गक्रमस्य मुख्यक्रमानुसारिताधिकरणम् ॥ ७ ॥

## प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत ॥ १५ ॥

दर्शपूर्णमासयोः पूर्वमौषधधर्माः समाम्नाताः, तत आज्यस्य । तत्र सन्देहः । किमग्नीषोमीयधर्माणां मुख्यक्रमेण पूर्वमाज्यस्य धर्माः कर्त्तव्याः, उत यथापाठमिति । मुख्यक्रमानुग्रहेण आज्यस्य पूर्वमिति प्राप्ते ब्रूमः । प्रकृतौ यथापाठं प्रतीयेत । स्वशब्दो हि तेषां पाठक्रमः । सोऽन्यथा क्रियमाणे बाधितः स्यात् । सहत्वस्य पुनरुपसंग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे सन्निकृष्यमाणे न बाधितो भविष्यति । अपि च पाठक्रमे स्वशब्दः, स्वाध्यायोऽध्येतव्य इति । मुख्यक्रमेण प्रयोगवचनैकवाक्यता सूक्ष्मा ॥ १५ ॥ ॥ अङ्गेषु मुख्यक्रमापेक्षया पाठस्य बलवत्त्वाधिकरणम् ॥ ८ ॥

## मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्माद्‌ुत्पत्तिदेशः सः ॥ १६ ॥

दर्शपूर्णमासयोराग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र सन्देहः । कतमः पाठो बलीयानिति । उच्यते । अनियमः । नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्ते ब्रूमः । मन्त्रपाठो बलीयान् । कुतः । प्रयोगरूपसामर्थ्यात् । प्रयोगाय मन्त्रस्य रूपसामर्थ्यम् । तदस्य सामर्थ्यं, येन मन्त्रः प्रयुज्यते । तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति । ननु च ब्राह्मणपाठस्यापि तदेव प्रयोजनम् । उच्यते । उत्पत्तिदेशः सः । अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति ॥ १६ ॥ ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ॥ ९ ॥

**तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥**

अस्ति अध्वरकल्पा नामेष्टिः, आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वती आज्यभागा स्याद् बार्हस्पत्यश्चरुरिति । तत्र सन्देहः । किमाग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्य्याः । चोदको बलवत्तरः प्रयोगवचनात् ? उत उपांशुयाजविकारस्य प्रयोगवचनो बलवत्तरश्चोदकादिति । किं प्राप्तम् । विकृतौ अस्यां, यथाप्रधानं स्यात् । तद्वचनात् । तेषां साक्षाद्वचनक्रमो विकृतौ तेन सन्निहितानाम् । उपसंहारकः प्रयोगवचनो हि प्रत्यक्षः । तद्धर्माणां चानुमानिकश्चोदकेन हि स प्राप्तः । तस्मात् प्रत्यक्षः प्रयोगवचनो बलवत्तरः । तत्र चोदक आनुमानिको बाध्यते ॥ १७ ॥ पूर्व० ॥

**विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥**

मुख्याङ्गक्रमविप्रतिपत्तौ वा, यथा प्रकृतौ तथैव विकृतौ भवितुमर्हन्तीति । कुतः । प्रकृत्यन्वयात् । यादृशाः प्रकृतौ धर्मास्तादृशा एव विकृतौ भवितुमर्हन्तीति मुख्यक्रमेण क्रियमाणा न प्रकृतिवत् कृताः स्युः । चोदको हि प्रयोगवचनाद् बलवत्तरः । स हि उत्पादयति प्रापयति च । प्रापितान् अभिसमीक्ष्य प्रयोगवचन उपसंहरति । स प्राप्तेषूत्पन्नः प्राप्तिनिमित्तक उत्तरकालं पूर्वप्राप्तं न बाधितुमर्हति चोदकं, प्रत्यक्षोऽपि सन् । बहिरङ्गत्वाद् यथाप्राप्तानेवोपसंहरिष्यति । तस्मात् पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्येति ॥ १८ ॥ सि० ॥

प्रयोगवचनाच्चोदकस्य बलवत्त्वाधिकरणम् ॥ १० ॥

**विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥**

चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तस्यावयवाः, अग्नयेऽनीकवते प्रातरष्टाकपालो, मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति । तत्र सन्देहः । किमता द्व्यहकाला इष्टयः, उत सद्यःकाला इति । किं प्राप्तम् विकृतिस्तत्काला भवितुमर्हन्तीति यथाशिष्टम् । यथा प्रकृतिरुक्ता, तथा विकृतिः स्यात् प्रकृतिधर्मा हि सा । तस्माद् या विकृतिः, सा द्व्यहकाला भवितुमर्हतीति ॥ १९ ॥ पूर्व० ॥

**अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपः स्यात् ॥ २० ॥**

अह्नः कालेषु ये पदार्था उच्यन्ते, प्रातर्मध्यन्दिने सायमिति । क्रमेण ते एकस्मिन्नहनीति प्रतीयन्ते । यथा देवदत्त प्रातरपूपं भक्षयति, मध्यन्दिने विविधमन्नमश्नाति, अपराह्णे मोदकान् भक्षयतीति। एकस्मिन्नहनीति गम्यते । तस्मात् सद्यस्काला एवञ्जातीयका विकृतय । द्व्यहकालत्वं हि चोदकप्राप्तमानुमानिकं, प्रत्यक्षरूपया सद्यस्कालतया बाध्येत ॥ २० ॥ ॥ सि० ॥

## कालोत्कर्ष इति चेत् ॥ २१ ॥

इति चेत् पश्यसि– प्रात साङ्गं श्रूयते, तथा मध्यन्दिने सायं चेति । उत्कर्षो भविष्यति । यथैतेषु कालेषु साङ्गम् । न च द्व्यहकालताया बाधः । एकस्याह्न प्रातरनीकवन्तमुपक्रंस्यते । द्वितीयस्य प्रातर्यक्ष्यते । एवं सान्तपनीया पूर्वेद्युर्मध्यन्दिने उपक्रंस्यते । अपरेद्युर्मध्यन्दिने यक्ष्यते । तथा गृहमेधीये सायमुपक्रमणं पूर्वेद्यु , सायं यागोऽपरेद्युरिति । ननु वाक्यादेकमहर्गम्यत इत्युक्तम् । उच्यते । पदार्थसामर्थ्यजनितो हि वाक्यार्थो भवति । न चात्र पदार्थसामर्थ्यमस्ति, येनैकमहर्गम्येत ॥ २१ ॥ ॥ आ० ॥

## न तत्सम्बन्धात् ॥ २२ ॥

नैतदेवम् । कस्मात् । तत्सम्बन्धात् । एककालसम्बद्धानि प्रधानानि अङ्गैः सह श्रूयन्ते । कथम् । साङ्गं हि प्रधानं प्रात काले श्रूयते, तथा मध्यन्दिने सायं च । न अङ्गानि प्रात कालादिषु । तत्राऽन्यकालेष्वङ्गेष्वन्यकालेषु च प्रधानेषु न साङ्गं तेषु कालेषु कृतं स्यात् । तस्मात् सद्यस्काला एवता विकृतय इति । अपि च, द्व्यहं साकमेधैरिति श्रूयते । तत् सद्यस्कालासूपपद्यते ॥ २२ ॥ आ० नि० ॥ विकृतौ क्वचित् प्रकृतिधर्मानतिदेशाधिकरणम् ॥ ११ ॥ साकमेधीयन्याय. ॥

## अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥

ज्योतिष्टोमे श्रूयते, आग्निमारुतादूर्ध्वम् अनुयाजैश्चरन्तीत्युत्कर्ष । तथाऽग्नीषोमीये पशौ, तिष्ठन्तं पशु प्रयजन्तीत्यपकर्ष । तत्र सन्देह.। किमुत्कर्षे अनुयाजमात्रमुत्कृष्यते, अपकर्षे च प्रयाजमात्रम् ? उत उत्कर्षेऽनुयाजादि, अपकर्षे च प्रयाजान्तमिति । किं तावत् प्राप्तम् । यावदुक्तमुत्कर्षापकर्षयो. स्यात् । कुत । अङ्गानां मुख्यकालत्वात् । एवमन्येषां प्रधानकालता भविष्यतीति । तत्र सहत्वस्य प्रापकः प्र-

योगवचनोऽनुग्रहीष्यते ॥ २३ ॥ ॥ पूर्व० ॥

तदादि वाऽभिसम्बन्धात्तदन्तमपकर्षे स्यात् ॥ २४ ॥

तदादि उत्कर्षे, तदन्तमपकर्षे गम्येत । कुत । अभिसम्बन्धात् । यदनुयाजानां परस्तात् समाम्नायते, तत् प्रधानादन्तर प्रयोगवचनेन प्राप्तं बाधित्वा पाठसामर्थ्यादनुयाजेभ्य परस्तात् क्रियते । तथा यस्तत. पर, स तत परस्तादेवमेक उत्कृष्यमाण सर्वं गुणकाण्डमुत्कर्षति । तथाऽपकृष्यमाणोऽपकर्षतीति ॥२४॥ ॥ सि० ॥ अनुयाजाद्युत्कर्षप्रयाजान्तापकर्षाधिकरणम् ॥ १२ ॥ तदादितदन्तन्याय ॥

प्रवृत्त्या कृतकालानाम् ॥ २५ ॥

ज्योतिष्टोमे श्रूयते प्रातरनुवाककाले, प्रतिप्रस्थातः सवनीयान् निर्वपस्वेति प्रेष्यतीति सवनीयानां निर्वापकाल. । अस्ति च बहिष्पवमाने स्तुते, अग्नीदग्नीन् विहर बर्हिस्तृणीहि पुरोडाशानलङ्कुर्विति । तत्र सन्देह । किं प्रातरनुवाककाले सवनीयान् निरूप्य प्रचरणीहोमादय. सौमिका. पदार्था., उत पौरोडाशाः प्रागलङ्करणादिति । किं प्राप्तम् । अनियम । नियमकारिण शास्त्रस्याभावादित्येवं प्राप्ते ब्रूम । प्रवृत्त्या कृतकालानाम् ज्ञातकालानां पदार्थानां प्रवृत्त्या नियम. स्यात् । प्रयुज्यमानमेव हि पूर्वपदार्थमभिनियच्छति । स तस्य परस्तात् समाम्नात, परस्तात् कर्त्तव्य. । सौमिकस्य तु पदार्थस्य प्रचरणीहोमस्य वचनात् क्रमो बाधित । अलङ्करणं च बहिष्पवमानस्य परस्तात् समाम्नातम् । तस्मात् तस्य पूर्वं पदार्थो निर्वपणादीनामन्त. । तत उत्तरे सौमिक पदार्था. कर्त्तव्या इति ॥२५॥

शब्दविप्रतिषेधाच्च ॥ २६ ॥

शब्दश्च विप्रतिषिद्ध्यते । अलङ्कुर्वित्युक्त. प्रोक्षणादीन् प्रतिपद्येत । अस्मत्पक्षे तु, अलङ्कुर्वित्युक्ते अलङ्करणमेव प्रतिपत्स्यते । तत्रालङ्करणे प्राप्तकाले प्राप्तकालवचनो लोडन्तोऽनुग्रहीष्यते । तस्मादत्र प्रावृत्तिक. क्रम इति ॥२६॥ युक्तिः ॥ प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभावितार्धिकरणम् ॥ १३ ॥

असंयोगात्तु वैकृत तदेवं प्रतिकृष्येत ॥ २७ ॥

अस्ति दर्शपूर्णमासप्रकृतिके पशावग्नीषोमीये वैकृतं यूपकर्म । तत् प्रतिकृष्यते दीक्षासु यूपं छिनत्तीति । तत् प्रतिकृष्यमाणमवा-

चीनान्यप्यग्नीषोमीयप्रणयनादीनि प्रतिकर्षति ? उत नेति संशये । प्रतिकर्षति । सम्बन्धादिति गम्यते ॥ तथा प्राप्ते ब्रूम । विकृतावभ्यधिकं यत्, तत् प्रतिकृष्यमाण ततोऽर्वाचीनान्यपि अग्नीषोमीयप्रणयनादीनि न प्रतिक्रष्टुमर्हति । कथम् । असंयोगात् । पाशुकं यूपकर्म । तत. प्राचीनं सौमिकम् । न तयो परस्परेण सम्बन्धः । न सौमिक पदार्थ. पाशुकस्योपकारकः पशोर्वा । यदि हि तयोरुपकारक स्यात्, ततस्तस्योपकुर्वत क्रमोऽन्यस्य साहाय्यं कुर्वन् गुणभूतः स्यात् । न त्वेतदस्ति । तस्माद् नैषां परस्परेण क्रमे नियमः । अतो यूपमात्रं प्रतिकृष्यते । अपि च यूपमात्रं प्रतिकृष्य कृतार्थे शब्दे सौमिकानां स्वक्रमबाधो न भविष्यतीति ॥ २७ ॥ वैकृतयूपकर्ममात्रापकर्षाधिकरणम् ॥ १४ ॥ यूपकर्मन्यायः ॥

## प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥

ज्योतिष्टोमे श्रूयते, आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यनुयाजा उत्कृष्यमाणा दाक्षिणाग्निकौ होमौ उत्कर्षन्ति, न ? इति संशयः । सम्बन्धादुत्कर्षन्ति, इति प्राप्ते उच्यते । नैतावुत्क्रष्टुमर्हन्ति ये तयो स्वे अनुयाजा, सम्बद्धास्ते । न प्रयुक्ताः परकीयै । तेषामर्थो निर्वर्त्तित इति । पदार्थानां च क्रमो भवति, न पदार्थप्रयोजनानाम् । यौगपद्येन हि पदार्था उपकुर्वन्तीति वक्ष्याम । पदार्थानां चोत्पत्तिः क्रमवती । पृथक्शब्दत्वादुत्पत्ते. । न पदार्थप्रयोजनस्य युगपत्प्रयोगवचनेन अभिहितत्वात् । अतोऽनुयाजोत्पत्तेरुत्कर्षिकाया अभावाद् दाक्षिणाग्निकौ होमौ नोत्कृष्येयातामिति । अपि चानुयाजमात्रमुत्कृष्य कृतार्थे शब्दे दाक्षिणाग्निकयोर्होमयोः स्वक्रमबाधो न भविष्यतीति ॥ २८ ॥ दक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥

## तथाऽपूर्वम् ॥ २९ ॥

दर्शपूर्णमासयोर्वेदि, हविरभिवासनोत्तरकाले समाम्नाता । साऽमावास्यायां प्रतिकृष्यते । पूर्वेद्युरमावास्यायां वेदिं करोतीति । सा त्वपकृष्यमाणा ततोऽर्वाचीनान् पदार्थानपकर्षति ? नेति संशय. । उच्यते । सम्बन्धात् प्रतिकर्षतीत्येवं प्राप्ते ब्रूमः । तथाऽपूर्वम् । अप्रकृतिपूर्विकायाममावास्यायां वेदिकरणं पूर्वेद्युराम्नातम् । उभयोरपि श्वोभूते हविरभिवासनम् । अभिवासनं कृत्वा अमावास्यायां वेदिः

कर्त्तव्य इति, न श्रुत्यादीनामन्यतमत् कारणमस्ति । तस्मान्नाभिवासनान्ताः प्रतिकृष्टव्या इति । अभिवासने चापकृष्यमाणे हवींषि भस्मीभवेयुः ॥ २९ ॥ ॥ ॥ पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाऽधिकरणम् ॥ १६ ॥

**सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥३०॥**

चातुर्मास्येषु साकमेधावयवः सान्तपनीया नाम इष्टिः– मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपतीति । सा दैवान्मानुषाद् वा प्रतिबन्धादुत्कृष्यमाणा अग्निहोत्रमुत्कर्षेन्न वेति संशये । उच्यते । सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद् वैगुण्यात् । यदि नोत्कर्षेद् अग्निहोत्रसवनेऽग्निहोत्रकाले उद्धृते अग्नावग्निहोत्रं विगुणं स्यात् । तस्मादुत्कृष्टव्यं, सवनवत् । यथा प्रात सवनं दैवान्मानुषाद् वा प्रतिबन्धादुत्कृष्यमाणं माध्यन्दिनं सवनमुत्कर्षतीति । एवमत्रापि द्रष्टव्यम् ॥ ३० ॥ पूर्व० ॥

**अव्यवायाच्च ॥ ३१ ॥**

एवं सान्तपनीयमग्निहोत्रेण न व्यवहितं भविष्यतीति । तत्र क्रमोऽनुग्रहीष्यते । क्रमभेदे च दोषः श्रूयते। अप वा एतद् यज्ञाच्छिद्यते, यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतीयते इति ॥ ३१ ॥ युक्ति ॥

**असम्बन्धात्तु नोत्कर्षेत् ॥ ३२ ॥**

नाग्निहोत्रस्य सान्तपनीया अङ्गं, न सान्तपानीयाया वा अग्निहोत्रम् । तेन नासावग्निहोत्रस्य परस्तात् कर्त्तव्या । अतो नाग्निहोत्रमुत्कृष्टव्यम् ॥ ३२ ॥ सि० ॥

**प्रापणाच्च निमित्तस्य ॥ ३३ ॥**

प्राप्तं चाग्निहोत्रस्य निमित्तम् । सायं जुहोति, प्रातर्जुहोति, उदिते जुहोति, अनुदिते जुहोति, प्रथमास्तमिते जुहोति, सन्धौ जुहोति, नक्षत्राणि दृष्ट्वा जुहोतीति । तन्नातिक्रमितव्यम् । तस्मादपि नोत्कर्षः । यदुक्तं, वैगुण्यमिति । उत्कर्षेऽपि वैगुण्यं कालान्यत्वात् । अङ्गप्राप्तेर्जघन्य कालविधिर्बाध्यतामिति चेन्न । कालस्य निमित्तत्वात् । तदपाये अश्रुतमेव सर्वं क्रियेत । निमित्तं चानुपादेयत्वेन श्रवणात् । सप्तमी हि आधारादिष्वसम्भवान्निमित्तसप्तमी द्रष्टव्या ॥ ३३ ॥ युक्तिः ॥

अथ यदुक्तं सवनवदुत्कष्टव्यमिति । तदुच्यते—

**सम्बन्धात् सवनोत्कर्षः ॥ ३४ ॥**

सम्बद्धं हि सवन सवनेन । एकक्रतुसम्बन्धात्तदुत्कृष्यते ॥ ३४ ॥ आ० ॥ नि० ॥ सान्तपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् ॥ १७ ॥

**षोड़शी चोकथ्यसंयोगात् ॥ ३५ ॥**

ज्योतिष्टोमे श्रूयते, षोड़शिनं प्रकृत्य, तं पराञ्चमुक्थेभ्यो विगृह्णातीति । यदा दैवान्मानुषाद् वा प्रतिबन्धादुकथ्यान्युत्कृष्यन्ते, किं तदा षोड़श्युत्कष्टव्यो, नेति भवति सशय. । किं प्राप्तम् । नोत्कष्टव्य । कुतः । एवं स्तोत्रं स्वस्मिन् काले षोड़शिनः कृतं भविष्यतीति। समयाध्युषिते सूर्ये षोड़शिनस्तोत्रमुपाकरोतीति। तस्मादनुत्कर्ष इति॥

एवं प्राप्ते ब्रूम । षोडशी चोत्कष्टव्य. । कस्मात् । उक्थ्यसंयोगात् । उक्थ्यसंयोगो हि षोड़शिनो भवति, तं पराञ्चमुक्थ्येभ्यो विगृह्णातीति । तस्मादुत्कष्टव्य' षोड़शी । यदुक्तं, षोड़शिनस्तोत्रकालेन अवर्जन भविष्यतीति । उच्यते । स्तोत्रक्रममनुरुद्ध्यमानस्य प्रधानक्रमो विरुद्ध्येत । तस्मान्न स्तोत्रक्रमोऽनुरोद्धव्यः । उभयं न शक्यमनुग्रहीतुम् । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति श्रूयते । तस्मादुत्कष्टव्यः षोड़शीति ॥ ३५ ॥ उक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम् ॥ १८ ॥ इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये पञ्चमस्याध्यायस्य प्रथम. पाद ॥ ५ ॥ १ ॥

अथ पञ्चमे अध्याये द्वितीय पाद ॥ ५ ॥ २ ॥

**सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥**

वाजपेये, सप्तदश प्राजापत्यान् पशूनालभते इति श्रूयते अग्नीषोमीये च पशौ पशुधर्मा समाम्नाताश्चोदकेन प्राप्ता । तेषु संशय । किमेकस्यादेरारभ्य धर्मान् सर्वान् कृत्वा द्वितीयस्य पुनरादित उपक्रमितव्या ? अथ प्रथमस्तावत् सर्वेषां कर्त्तव्यस्ततो द्वितीय इति । किं प्राप्तम् । एकैकस्य सर्वेऽपवर्जयितव्या इति । कुतः । प्रधानासत्तेरनुग्रहाय । इतरथा प्रधानासत्तिर्विप्रकृष्येत । यथा बहुष्वश्वेषु प्रतिगृहीतेषु ये पुरोडाशास्तेषु नैकजातीयानुसमय , एवमिहापीति ॥ १ ॥ ॥ पूर्व० ॥

## सर्वेषां वैकजातीयं कृतानुपूर्वत्वात् ॥ २ ॥

एकजातीयानुसमयः कर्त्तव्यः । किमेवं भविष्यति ? । सहत्वमनुग्रहीष्यते । तत्सहत्वं श्रूयते । वैश्वदेवीं कृत्वा पशुभिश्चरन्तीति । एकस्मिन् काले पशूनां प्रचारः ॥ नन्वेवं सति पूर्वस्य पदार्थस्योत्तरः पदार्थः पश्वन्तरव्यापारेण व्यवधीयते । नैष दोषः । एवमपि कृतमेव आनुपूर्व्यम् । योऽसौ पश्वन्तरे व्यापारः स एवासौ, न पदार्थान्तरम् । पदार्थान्तरेण व्यवधानं भवति ॥ २ ॥ ॥ सि० ॥

## कारणादभ्यावृत्तिः ॥ ३ ॥

अथ यदुक्तं, बहुषु पुरोडाशेषु नैकजातीयानुसमय इति । तत् परिहर्त्तव्यम् । अत्रोच्यते । युक्तं तत्र, यत् कारणादभ्यावृत्ति । एकजातीयानुसमये हि क्रियमाणे सहस्रस्याधिश्रयणे कृते प्रथमः शुष्येत् । तस्य च प्रथमं न शक्येत कर्तुम् ॥ ३ ॥ ॥ आ० नि० ॥ वाजपेयपशूनां सर्वेषामेकदोपाकरणादिधर्मानुष्ठानाधिकरणम् ॥ १ ॥ पदार्थानुसमयन्याय ॥

अथ वा अधिकरणान्तरम् ॥

## कारणादभ्यावृत्तिः ॥ ३ ॥

अनेकसहस्राश्वप्रतिग्रहे तन्त्रानुष्ठानमिति पूर्वः पक्षः । काण्डानुसमयोऽभ्युपेतव्य इति सिद्धान्त ॥ ३ ॥ ॥ सहस्राश्वप्रतिग्रहणस्थले एकैकस्यैकदा सर्वधर्मानुष्ठानाधिकरणम् ॥२॥ काण्डानुसमयन्यायः॥

## मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥४॥

मुष्ट्यादिषु संशयः । किं मुष्टिना अनुसमयः, उत चतुर्भिर्मुष्टिभिरिति । किं प्राप्तम् । मुष्टिनेति । कुत । एकमुष्टिनिर्वापो हि एक पदार्थो, न चतुर्मुष्टिनिर्वाप । कथम् । एकस्मिन् मुष्टौ निरुप्ते यतीभावः पर्यवस्यति । न शक्यं वदितुम् । न किञ्चिन्निरुप्तमिति । न च निरुप्ते निर्वापो न कृतः स्यात् । न च मुष्टिमात्रेण निरुप्तेन न प्रयोजनम् ।न हि एकस्मिन्ननिरुप्ते चत्वारः सम्भवन्ति । मुष्टिसमानाधिकरणो हि चतुःशब्दः । तस्मान्मुष्टिना अनुसमय कार्यः । एवं, कपालानुपदधातीति । तथा, मध्यादवद्यति पूर्वार्द्धादवद्यति । तथा अङ्क्तेऽभ्यङ्क्ते वपति पावयतीति ॥ ४ ॥ पूर्व० ॥

**सर्वाणि त्वेककार्य्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥**

सर्वाणि तु समाप्यानुसमेयानि एकमुष्टिनिर्वाप· पदार्थ· । चतु·संख्यत्वान्निर्वापस्य । कथं चतुःसङ्ख्यता । चतुःशब्दस्य निर्वपतिना सम्बन्धात् । एवं सह कर्मणा, अनेकगुणाविधानं न्याय्यम् । इतरथा, मुष्टिसम्बन्धे सति वाक्यभेदः प्रसज्ज्येत । अनिर्वापाङ्गं च स्यात् । तथोपधानादिष्वपि, अष्टाकपालम् एकादशकपालं निर्वपतीति निर्देशात् । द्विरवद्यति त्रिरभ्यङ्क्ते एकविंशत्या पावयतीति सङ्ख्यादीनां क्रियागुणत्वं भवति । तस्मात् समुदायेनानुसमय इति ॥ ५ ॥ ॥ सि० ॥ मुष्टिकपालादीनां समुदायानुसमयाधिकरणम् ॥ ३ ॥

**संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥**

दर्शपूर्णमासयोः श्रूयते, द्विर्हविषोऽवद्यति इति । तत्र संशयः । किमवदानेनानुसमयः, उतावदानेन प्रदानान्तेनेति । किं प्राप्तम् । अवदानेनेति ब्रूम । कुतः । पृथक्पदार्थत्वात् । पृथक्पदार्थो हि अवदानम् । यतीभावस्य पर्यवसानात् । अवद्यतिवचनात् । एवं प्राप्ते ब्रूमः । संयुक्ते तु प्रक्रमात् तदङ्गं स्यात् । इतरस्य तदर्थत्वात् । नावदानं पृथक् पदार्थः । प्रदानस्य स उपक्रमः । इतरथा अवद्यतेरदृष्टार्थता स्यात् । सङ्ख्याविशेषविधानार्थं च पुनर्वचनम् । तस्मात् पदार्थावयवोऽवदानम् । न चावयवसहत्वं प्रयोगवचनेनोच्यते । तस्मात् प्रदानान्तेनाऽनुसमय इति ॥ ६ ॥ अवदानस्य प्रदानान्तानुसमयाधिकरणम् ॥ ४ ॥

**वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ ॥**

ज्योतिष्टोमे अग्नीषोमीयपशौ यूपस्याञ्जनाद्या· पदार्थाः श्रूयन्ते । तेषु यूपैकादशिन्यां प्राप्तेषु संशयः । किमञ्जनादीनामेकैकेनानुसमय, उताञ्जनादिना परिव्याणान्तेनेति । किं प्राप्तम् । परिव्याणान्तम् अञ्जनादि स्यात् । कुतः ? वचनात् । वचनमिदं भवति । अञ्जनादि यजमानो यूपं नावसृजेत् आ परिव्याणादिति । न च शक्यं बहुष्वञ्जनादिना अनुसमयः कर्तुं, न चाऽनवस्रष्टुम् । तस्मात् परिव्याणान्तेनानुसमयः ॥ ७ ॥ सि० ॥

**कारणाद्वानवसर्गः स्याद् यथा पात्रवृद्धिः ॥ ८ ॥**

सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यते इति पदार्थेन अनुसमयः । अनवसर्गश्च प्रकृतावर्थात् कृतः । साहाय्यं यजमानेन अध्वर्योः ।

एवं दृष्टार्थताऽनवसर्गस्य। इतरथा अदृष्टार्थता स्यात्। न चार्थात् कृतं चोदक प्रापयति। तस्माद् यूपान्तरेणोच्छ्रयितव्येन कारणेनावसृजेत्। यथा पृषदाज्येन अनुयाजान् यजतीत्यर्थात्तस्य धारणार्थं पात्रम्भिद्यते॥ ८॥ पूर्व०॥

न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्र-विवृद्धिः॥ ९॥

न वैतत्पदार्थेन अनुसमय इति। परिव्याणान्तेन पदार्थकाण्डेन अनुसमयः स्यात्। शब्दकृतं हि प्रकृतौ अनवसर्जनम्। शक्नोति हि कृतेऽपि यजमानाद् अध्वर्युर्यूपमुच्छ्रयितुम्। सौकर्यमितिचेद् विधिशब्दो, बाध्येत दृष्टार्थता। एव हि नियम्येत भोजने प्राङ्मुखता इव। अतोऽसम्भवात्, पदार्थकाण्डेन अनुसमय। प्रयोगवचनस्य च न्यायमात्रत्वम्। चोदकस्ततो बलीयान्। पात्रविवृद्धिस्त्वर्थात् कर्त्तव्या॥९॥पूर्वपक्षनिरास॥अञ्जनादेः परिव्याणान्तानुसमयाधिकरणम्॥५॥

पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात्॥ १०॥

वाजपेये प्राजापत्या पशवः। तेषु सन्देहः। किमेकैकस्य पशोर्दैवतान्यवदाय ततः सौविष्टकृतानि, तत ऐडानि। अथ दैवतैर्दैवतानामनुसमय, सौविष्टकृतै सौविष्टकृतानाम्, ऐडैरैडानामिति। किं तावत् प्राप्तम्। एकैकस्य कृत्स्नानि अवदाय ततो होतव्यम्। प्रकृतौ वचनात्। एतत्कृतं प्राजापत्येष्वपि चोदकेनैव प्राप्नोति॥१०॥पूर्व०॥

दैवतैर्वैककर्म्यात्॥ ११॥

नैतदेवम्। दैवतैर्दैवतानां, सौविष्टकृतै सौविष्टकृतानाम्, ऐडैरैडानामिति। कस्मात्। ऐककर्म्यात्। एवं सहकृतं भवति। यच्च वचनात् प्रकृतौ कृत्स्नावदानमिति। दैवतानि अवदाय न तावति एव होतव्यम्। सौविष्टकृतानि अवदेयानि। सौविष्टकृतानि अवदाय न तावत्येव होतव्यम्। ऐडानि अवदेयानीति प्रकृतौ श्रूयते। तदिह दैवतैर्दैवतानामनुसमयं कुर्वन्नैनं प्राकृतं धर्मं बाधेत। दैवतानि अवदाय नैव जुहोति, सौविष्टकृतानि अवद्यतीति। अथ सौविष्टकृतान्यवदाय नैव जुहोति। ऐडानि अवद्यतीति। तस्मात् पदार्थमात्रेणानुसमय इति॥ ११॥ सि०॥

## मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥

एवं मनोतामन्त्रस्तन्त्रं भविष्यति । इतरथा पर्यायेणैव स्यात् । तस्माद्दैवतैर्दैवतानां, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति ॥ १२ ॥ ॥ युक्ति ॥ दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम् ॥ ६ ॥

## नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥

अस्ति राजसूये नानाबीजेष्टि । अग्नये गृहपतये सुतीनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुमित्येवमादि । अस्ति तु तत्र प्राकृतोऽवहन्ति. । तत्र सन्देह । किं तत्रैकमुलूखलं पर्यायेण, उत यौगपद्येन बहूनीति । कुत. संशयः । यदि कृष्णाजिनाधस्तरणादय पृथक् पदार्थास्ततो भेदः । अथ कृष्णाजिनास्तरणादिस्तण्डुलनिर्वृत्त्यन्त एकः पदार्थस्ततस्तन्त्रमिति । किं तावत् प्राप्तम् । एकमिति । कुत । पर्यायेण विभवात् । एकस्योपादानेन सिद्धेर्द्वितीयस्योपादानमनर्थकं स्यात् । तस्मात् तन्त्रमिति ॥ १३ ॥ सि० ॥

## विवृद्धिर्वा नियमानुपूर्वस्य तदर्थत्वात् ॥ १४ ॥

विवृद्धिरुलूखलानां स्यात् । नियतं हि आनुपूर्व्यं पाठकृतं सहत्वे सति उपपद्यते । पदार्थानां चानुसमयः । पृथक्पदार्थाश्चाधस्तरणादयो यतीभावस्य पर्यवसानाद् अधस्तरणादिभिश्च पदैरभिधानात् । तस्माद् विवृद्धिरिति ॥ १४ ॥ ॥ पूर्व० ॥

## एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

एकं वा उलूखल पर्यायेण स्यात् । एको ह्यधस्तरणादिस्तण्डुलपर्यन्त. पदार्थः । स्तरणादिर्हन्तेरुपक्रम फलीकरणान्तश्च तस्यैव शेष । यतो हन्तिस्तण्डुलनिष्पत्त्यर्थं, एव स्तरणादीनां हन्तेश्च नादृष्टार्थता भविष्यति । तस्मात् तन्त्रमिति ॥ १५ ॥ ॥ उत्तरम् ॥ नानाबीजेष्टौ उलूखलादीनां तन्त्रताधिकरणम् ॥ ७ ॥

## विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् ॥ १६ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय' । तत्र श्रूयते, पृषदाज्येनाऽनुयाजान् यजतीति । तत्र सन्देहः । किं प्रयाजानुयाजानामेकं पात्रमाज्यस्य पृषदाज्यस्य च धारणार्थम्, उत भिद्यते ? । किं प्राप्तम् । एकमिति । कुतः । प्रकृतावेकं, प्रकृतिवद् इहापि एकेन भवितव्यम् ।

एवं प्राप्ते, ब्रूमः । पात्रभेदः स्यात् । कुतः । अर्थभेदात् । शुद्धस्य प्रयाजा अर्थः । पृषतोऽप्यनुयाजाः । पृषति गृह्यमाणे प्रयाजानां वैगुण्यं, शुद्धेऽनुयाजानाम् । न चैकस्मिन् पात्रे विविक्तं शक्यं कर्तुम् । मर्यादायामपि क्रियमाणायां प्रदीयमानं संसृज्येत । अपि चाकारभेदादुपभृत उपभृत्त्वं विहन्येत । प्राणिमात्रपुष्करा हि सा, एकपुष्करा च । अथोच्येत, पृषदाज्यमप्याज्यमेवेति न मिश्रत्वं दोषायेति । नैतदेवम् । प्रकृतावुत्पवनावेक्षणयोः प्रयोजनमेतद् यदाज्यस्यापरेण द्रव्येणासंसर्गः । एवं चेदनुपपन्नं, यत् प्रयाजाः पृषदाज्येनेज्येरन्निति । अपि च । एवं सति अवश्यं हविषः काचिन्मात्राऽपनीयते । न च शक्यं प्रयाजकार्येऽवसितेऽनुयाजार्थं ग्रहीतुम् । प्रकृतावेककालं ग्रहणम् । इहाप्येककालमेव कर्त्तव्यम् । तस्मात् पात्रभेद इति ॥१६॥

अग्नीषोमीयपशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ॥ ८ ॥

## प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥

अग्नौ नक्षत्रेष्ट्यां श्रूयते— अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत्, सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा इत्येवमादिहोमाः समाम्नाताः । सन्ति तु प्रकृतौ नारिष्टहोमाः । तत्र सन्देहः । किं नारिष्टहोमाः पूर्वम्, उत उपहोमा इति संशये । उच्यते । प्राकृतं पूर्वं, वैकृतमन्ते स्यादिति । कुतः । चोदितस्य परिपूर्णस्य शेष आम्नायते । यथा जातस्य पुत्रस्य क्रीडनकम् ॥ १७ ॥ ॥ सि० ॥

## मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात् प्राकृतानां व्यवायः स्यात् ॥ १८ ॥

आत्रेयो मन्यते स्म, मुख्यानन्तर्यं वैकृतस्य, पश्चात्तु प्राकृतं प्रयुज्येत । प्रधानानन्तरं विकृतस्य पाठः प्रत्यक्षः । तस्मात् पूर्वमुपहोमास्ततो नारिष्टहोमा इति । प्राकृतानां व्यवायः स्यात् । यतस्तेन श्रूयन्ते ॥ १८ ॥ ॥ पूर्व० ॥

## अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥१९॥

बादरायणस्त्वाचार्यो मन्यते स्म । अन्ते वैकृतानां प्रयोग इति । कुतः । प्रधानशब्दगृहीतत्वात् । प्राकृतानामङ्गानां प्रधानशब्दगृहीत-

त्वम् । तत्प्रधानशब्दगृहीतानि हि प्राकृतान्यङ्गानि । तस्माच्च प्रधानशब्दात् परमेतत् । सोऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्य. स्वाहा इत्येवमादि । तस्मात् प्रत्यक्षादेव क्रमान्नारिष्टहोमेभ्य. पराञ्च उपहोमा इति ॥ १९ ॥ ॥ उत्तरम् ॥

**तथा चान्यार्थदर्शनम् ॥ २० ॥**

अन्यार्थोऽपि चैतमर्थं दर्शयति । अध्वरस्य पूर्वमथाग्नेरुपप्रैत्येतत् कर्म, यदग्निकर्मेति । पश्चात् समाम्नातस्य पश्चात् प्रयोगं दर्शयति ॥ ॥ २० ॥ ॥ युक्ति. ॥ नारिष्टहोमस्योपहोमपूर्वताधिकरणम् ॥ ९ ॥

**कृतदेशात्तुपूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगा-न्न्यायमात्रमितरत् ॥ २१ ॥**

राजसूये श्रूयते, अक्षैर्दीव्यति शौनःशेफमाख्यापयति, अभिषिच्यते इति । तत्र सन्देहः । किं देवतादीनामन्ते प्रयोगः, उत अभिषेकात् पूर्वम् ? इति । किं प्राप्तम् ? अन्ते तु बादरयण इत्यन्ते प्रयोगः कर्त्तव्य इति । एवं प्राप्ते ब्रूम । कृतदेशाद् अभिषेकात् पूर्वं तु प्रयोग । कृतदेशो हि अभिषेक । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते इति प्रत्यक्षानुग्रहायाभिषेकात् पूर्वं प्रयोक्तव्यम् । न्यायमात्रमितरत् । अन्ते तु बादरायण इति ॥ २१ ॥ ॥ ॥ विदेवनादीनामभिषेकपूर्वताऽधिकरणम् ॥ १० ॥

**प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥**

अस्ति अग्निः, य एवं विद्वानग्निश्चिनुते इति । तत्र दीक्षणीयायाः पूर्वं सावित्रहोमा', उखासम्भरणम्, इष्टका , पशुश्चेत्येतदाम्नातम् । किं तदेव पूर्वं कर्त्तव्यम्, उत दीक्षणीया ? इति । किं प्राप्तम् ? वैकृतानामन्ते प्रयोग' । अन्ते तु बादरायण इति । एवं प्राप्ते ब्रूमः । पूर्वं सावित्रहोमाः, इष्टका , पशुरुखासम्भरणं च । कुतः? प्रत्यक्षपाठात् । पुनस्तत्र दीक्षणीया आम्नाता, तस्याश्च पुरस्तात् सावित्रहोमा इष्टकाः पशुरुखासम्भरणं च । तस्मात् तेषां पूर्वं प्रयोग इति ॥ २२ ॥ ॥ सावित्रहोमादीनां दीक्षणीयापूर्वप्रयोगाधिकरणम् ॥ ११ ॥

**सन्निपातश्चेद् यथोक्तमन्ते स्यात् ॥ २३ ॥**

अग्नौ दीक्षणीयाया परतो रुक्मप्रतिमोचनादि आम्नातम् । तस्मिन्नेव क्रमे चोदकेन दीक्षितसंस्कारा. प्राप्ताः । तत्र सन्देहः । कि-

ऽनियमः, उत पूर्वं रुक्मप्रतिमोचनादि, उत दीक्षितसंस्कारा इति । किं प्राप्तम् । अनियमः । अथ वा, यथा प्रत्यक्षपाठक्रमाद्दीक्षणीयायाः पुरत उखासम्भरणादयः, एवं रुक्मप्रतिमोचनादीनीति ॥ एवं प्राप्ते ब्रूमः । दीक्षितसंस्काराः पूर्वं कर्त्तव्या इति । कुतः । दीक्षणीयां प्रति यः पाठक्रमः, यथा च चोदकः, तथोभयेऽपि परस्ताद्दीक्षणीयायाः कार्याः । यस्तेषां परस्परापेक्षः क्रमस्तत्र न कश्चिदुखासम्भरणस्येव प्रत्यक्षः पाठक्रमः पूर्वत्वं साधयति । अस्ति तु संस्काराणां प्रकृतौ पूर्वं पाठः, विकृतौ रुक्मप्रतिमोचनस्योत्तरः । तेन यथोक्त एव क्रमः स्यात् । अन्ते वैकृतमिति । अथ किमर्थं सन्निपात आशङ्क्यते ? । नन्वयं सन्निपात एव व्यक्तः।असन्दिग्धे सन्दिग्धवचनमेतत् । यथा—

ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः ।

शास्त्राणि चेत् प्रमाणं स्युः प्राप्तास्ते परमां गतिमिति । तस्माद् न दोष इति ॥२३॥ ॥ याजमानसंस्काराणां रुक्मप्रतिमोकात् पूर्वभाविता-ऽधिकरणम् ॥१२॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये पञ्चमस्य अध्यायस्य द्वितीयः पादः ॥ ५ ॥ २ ॥

अथ पञ्चमे अध्याये तृतीयः पादः ॥ ५ ॥ ३ ॥

## विवृद्धिः कर्म्मभेदात् पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥

अग्नीषोमीये पशौ श्रूयते, एकादश प्रयाजान् यजति एकादशा-ऽनुयाजान् यजतीति । चातुर्मास्येषु नव प्रयाजान् यजति नव अनुयाजान् यजतीति । अग्नौ श्रूयते, षडुपसद इति । तत्र सन्देहः । किं प्रतिप्रयाजमेकादशसङ्ख्या प्रत्यनुयाजं च । तथा चातुर्मास्येषु नवसङ्ख्या, तथा अग्नौ चोपसत्सु षट्सङ्ख्या, उत सर्वसम्पाद्या सङ्ख्या इति । किं प्राप्तम् । प्रतिप्रधानं सङ्ख्या भिद्यते इति । कुतः । भिन्नानि हि तानि कर्माणि । तानि च प्रधानानि प्रति, सङ्ख्या श्रूयते । प्रधानसन्निधौ च गुणः शिष्यमाणः प्रतिप्रधानम्भिद्यते । यथा पृषदाज्येना-ऽनुयाजान् यजतीति प्रत्यनुयाजं पृषत्ता गुणो भिद्यते । एवमिहा-ऽपीति ॥ १ ॥ पूर्व० ॥

## अपि वा सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

सर्वसम्पाद्या सङ्ख्या कल्प्येत । कुतः । पृथक्त्वनिवेशिनी हि सङ्ख्या असति पृथक्त्वेऽभ्यासेन कल्प्येत, यावत्यसम्भवो भेदस्य, तावत्येवाभ्यस्येत । यावति सम्भवति तावति पृथक्त्वनिवेश एव न्याय्य । तस्मात् सपाद्यैव सङ्ख्या । यत्तु पृषदाज्यादिति । न । पृषक्ता एकस्य न संभवति । न असौ पृथक्त्वनिवेशिनी । न चैकस्य क्रियमाणा सर्वेषां तन्त्रेणोपकरोतीति । तस्माद् अवश्यं भेत्तव्या । तन्त्रेण तूपकरोति सङ्ख्या । इतरापेक्षा हि सा भवति । एवं सति सहत्वस्य प्रापक प्रयोगवचनोऽनुग्रहीष्यते इति ॥ २ ॥ ॥ सि० ॥ ॥ प्रयाजादीनामेकादशादिसंख्यायाः सर्वसम्पाद्यताधिकरणम् ॥ १ ॥

## स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् ॥ ३ ॥

उपसत्सु सन्देह । किमावृत्तिर्दण्डकलितवत् ? उत स्वस्थानाद् विवर्द्धन्ते इति । किं तावत् प्राप्तम् । आवर्त्तनीयानामर्थानामेष धर्मो यदुत दण्डकलितवत् । यो हि उच्यते, त्रिरनुवाक पठ्यतामिति स आदित आरभ्य परिसमाप्य पुनरादित आरभ्यते । तस्माद्दण्डकलितवदावृत्ति ॥ एव प्राप्ते ब्रूमः । स्वस्थानाद् विवर्द्धितुमर्हति । कुत । कृतानुपूर्व्यत्वात् । कृतमानुपूर्व्यमुपसत्सु । प्रथमां कृत्वा मध्यमा कर्त्तव्या, तत उत्तमेति । तत्र यदि दण्डकलितवदावृत्तिः स्याद्, उत्तमां कृत्वा पुनराद्याया अभ्यासे क्रियमाणेऽस्थाने सा विवृद्धिः कृता भवति । स्वस्थानविवृद्धौ नैष दोष । तस्मात् स्वस्थाने विवृद्धिरिति ॥ ३ ॥ प्रथमादीनां तिसृणामुपसदां स्वस्थानावृत्त्यधिकरणम् ॥ २ ॥

## समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ४ ॥

दर्शपूर्णमासयो सामिधेन्य. सामिधेनीरन्वाहेति । तत्र काम्याः सामिधेनीकल्पा, एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्येत्येवमादय. । तत्र आगमेन सङ्ख्यापूरणं वक्ष्यते । तत्र सन्देह । किमागन्तूनामन्ते निवेश, उत समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति । किं तावत् प्राप्तम् । अन्ते निवेश । अन्ते तु बादरायण, इत्यनेन न्यायेनेति । एव प्राप्ते ब्रूमः । समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति । कुत. । द्यावापृथिव्योरन्तराले समर्हणात् सस्तवादि-

त्यर्थः । इयं वै समिध्यमानवती, असौ समिद्धवती । यदन्तरा, तद् धाय्या इत्यन्तरिक्षसंस्तुतेऽस्मिन्नन्तराल विधीयन्ते । तस्मान्नान्ते स्युरिति ॥ ४ ॥ पूर्व० ॥

## तच्छन्दो वा ॥ ५ ॥

अथ वा या धाय्याशब्दिकास्तास्तत्र भवितुमर्हन्ति। तेन शब्देन तत्र सस्तवः । सस्तवाच्च विधानम् । यथा, पृथुपाजवत्यौ धाय्ये उष्णिक्ककुभौ धाय्ये इति । काः पुनरेता धाय्या इति नाम । नाऽस्य शब्दस्य प्रसिद्धिमुपलभामहे । उच्यते । सामिधेन्यो धाय्या.। कुत.। एवं हि भगवतः पाणिनेर्वचनम्– पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु इति ।अस्माद् वचनाच्छ्रुतिमनुमिमीमहे । कतमासु सामिधेनीषु इति । उच्यते । अविशेषात् सर्वास्विति गम्यते । इह तु समिध्यमानवतीं समिद्धवती चान्तरेण धाय्याः स्युरिति । सर्वासु सामिधेनीषु सतीषु धाय्यावचनाद् विशिष्टानां सामिधेनीनां धाय्याशब्द इति गम्यते। ननु पाणिनिवचनादविशेषेण सर्वा धाय्याः । नेत्याह । विशिष्टास्वपि वचनमुपपद्यते एव । यदि विशिष्टास्ततः का इति । उच्यते । यासु धाय्याशब्दः श्रूयते, तास्तावद् धाय्याः । तासु च धाय्यासु सतीषु वचनमर्थवद् भवति । अर्थवति च सति वचनं न अन्या धाय्या.।प्रमाणाभावादिति ॥५॥ सि० ॥

## उष्णिक्ककुभोरन्ते दर्शनात् ॥ ६ ॥

उष्णिक्ककुभोश्चान्ते प्रयोगो दृश्यते । यज्जगत्या परिदध्यादन्तं यज्ञं गच्छेत् । अथ यत्त्रिष्टुभा परिदधाति नान्तं गच्छतीति । ननु त्रिष्टुबत्रान्ते दृश्यते, न उष्णिक्ककुभाविति । उच्यते । त्रिष्टुभमेवाऽयम् उष्णिक्ककुभाविति ब्रूते । कथम् । त्रिष्टुभो वीर्यमित्येवमन्त संस्तुतेस्त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभाविति कारणे कार्यवदुपचारः कृत ॥ ६ ॥ ॥ युक्ति. ॥ सामिधेनीष्वागन्तूनामन्ते निवेशाऽधिकरणम् ॥ ३ ॥

## स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात् पर्यासादागन्तवः स्युस्तथाहि दृष्टं द्वादशाहे ॥ ७ ॥

सन्ति विवृद्धस्तोमकाः क्रतव । एकविंशन अतिरात्रेण प्रजा-

कामं याजयेयुस्त्रिणवेन ओजस्कामं त्रयस्त्रिंशेन प्रतिष्ठाकाममिति । तत्र आगमेन सङ्ख्यापूरणं वक्ष्यते । अथ बहिष्पवमाने वैकृतेष्वानीयमानेषु भवति संशयः । किं वैकृतानामन्ते निवेशः । उत प्राक् पर्यासादिति । किं प्राप्तम् । पुरस्तात् पर्यासादागन्तवः स्यु. । तथा हि दृष्टं द्वादशाहे । स्तोत्रियानुरूपौ तृचौ भवतः । वृषण्वन्तस्तृचा भवन्ति । तृच उत्तमः पर्यास इति । इहापि प्राक्पर्यासादागन्तुभिर्भवितव्यम् ॥ ७ ॥ ॥ पूर्व० ॥

### पर्य्यास इति चान्ताख्या ॥ ८ ॥

पर्यासशब्दश्चान्तवचनो लोके दृश्यते । यथा– क्षेत्रपर्यास , नदीपर्यास इति । एवं पर्यासोऽन्ते कृतो भविष्यति ॥ ८ ॥ ॥ युक्तिः ॥

### अन्ते वा तदुक्तम् ॥ ९ ॥

अन्ते वा एवञ्जातीयकं वैकृतं स्यात् । उक्तम् । अन्ते तु बादरायण इति ॥ ९ ॥ ॥ सि० ॥

### वचनात्तु द्वादशाहे ॥ १० ॥

अथ यदुक्तम् । तथाहि दृष्टं द्वादशाहे इति । तत् परिहर्त्तव्यम् । अत्रोच्यते । वचनाद् द्वादशाहे भवति । स्तोत्रियानुरूपौ तृचौ भवतः । वृषण्वन्तस्तृचा भवन्ति, तृच उत्तमः पर्यास इति । न हि वचनस्यातिभारोऽस्ति ॥ १० ॥

### अतद्विकारश्च ॥ ११ ॥

न चायं तद्विकार , यत्ततो धर्मान् गृह्णीयादिति ॥ ११ ॥

### तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥

योऽपि तद्विकारस्तत्राप्यन्ते एव निवेशः । कुतः । अपूर्वत्वात् । वृषण्वतां तृचानां वृषण्वन्त एव प्राक्पर्यासात् । यावद् वचनं वाचनिकं, न सदृशमुपसङ्क्रामति ॥ १२ ॥ ॥ युक्तिः ॥ बहिष्पवमाने आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

### अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥

इहापि विवृद्धस्तोमकाः क्रतव उदाहरणम् । तत्रोत्तरयोः पवमानयो साम्नामागम इति वक्ष्यते । तत्र आगम्यमानेषु सामसु सन्देहः । किं तेषामन्ते निवेशः, उत गायत्रीबृहत्यऽनुष्टुप्स्विति । किं

प्राप्तम् । अन्ते उत्तरयोर्दध्यात् । उक्तोऽत्र न्यायः- अन्ते तु बादरायण इति । तस्माद् अन्ते निवेश इति ॥ १३ ॥

## अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥

गायत्रीबृहत्यनुष्टुप्सु निवेश । कस्मात् । वचनात् । त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुबिति । अत्र ह्येव आवपन्ति अत एवोद्वपन्तीति वचनेन अस्त्युपालम्भः । तस्मान्नैषामन्ते निवेश इति ॥ ॥ १४ ॥ ॥ सि० ॥ तत्रैवागन्तूनां साम्नां मध्ये निवेशाधिकरणम् ॥५॥

## ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥१५॥

औपानुवाक्ये काण्डे ग्रहा इष्टकाश्च समाम्नाताः । एष वै हविषा हविर्यजते, यो दाभ्यं गृहीत्वा सोमाय यजते इति । तथा, परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णातीति । तथा इष्टकाश्चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधातीति । तत्र सन्देह. । किं ग्रहेष्टकमौपानुवाक्यं सवनशेषश्चितिशेषश्च । अथ किं क्रतुशेषोऽग्निशेषश्चेति । किं प्राप्तम् । सवनचितिशेष । कुत । ग्रहै. सवनान्यारभ्यन्ते, इष्टकाभिश्चितयः । यच्च येनारभ्यते तत्तदङ्गम् ॥१५॥ पूर्व०

## क्रत्वग्निशेषो वा चोदितत्वादचोदनानुपूर्वस्य ॥१६॥

क्रत्वग्निशेषः स्यात् । कुत. ? चोदितत्वात् । अग्निश्चेतव्यः श्रूयते । य एवं विद्वानग्निं चिनुते इति । न चितिश्चेतव्या । इष्टकाचयनेन अग्निश्चेतव्य श्रूयते । अग्निमिति द्वितीयानिर्देशात् । तथा यो दाभ्यं गृहीत्वा सोमाय यजते इति । अदाभ्यस्य यजतिना सम्बन्ध. । तथा अंशोः । तस्मात् सकृद् यागसम्बन्धं कृत्वा कृतार्थः शब्दो भवति, श्रुतं सम्बन्धमभिनिर्वर्त्य । तथा सकृदग्निसम्बन्धं कृत्वा कृतो मन्येत । अचोदना चितिसवनयोः । न हि ते कर्त्तव्यतया चोद्येते । परार्थे हि तयोः श्रवणम् । किं प्रयोजनम् । सवनचितिशेषत्वे, प्रतिसवनं ग्रहणं, प्रतिचिति चेष्टकोपधानम् । क्रत्वग्निशेषत्वे सकृद् ग्रहणोपधाने ॥ १६ ॥ ॥ सि० ॥ ग्रहेष्टकादीनां क्रत्वग्निशेषताधिकरणम् ॥ ६ ॥

## अन्ते स्युरव्यवायात् ॥ १७ ॥

औपानुवाक्ये श्रूयते । चित्रिणीरुपदधाति, वज्रिणीरुपदधातीति । तत्र सन्देह. । किमेताः पञ्चम्यां चितावुपधेया, उत मध्यमा-

यामिति । किं प्राप्तम् । पञ्चम्यामेवेष्टकाः कृतक्रमाः । अन्या नैताभि-र्व्यवेष्यन्ते ॥ १७ ॥ ॥ पूर्व० ॥

### लिङ्गदर्शनाच्च ॥ १८ ॥

आवपनं वा उत्तमा चितिः । अन्या इष्टका उपदधातीति ॥ १८ ॥ युक्तिः ॥

### मध्यमायान्तु वचनात् ब्राह्मणवत्यः ॥ १९ ॥

नैवैता अन्त्यायां चितौ । कस्यां तर्हि । मध्यमायाम् । कुतः । ब्राह्मणवत्य एता इष्टका । तासां मध्यमा चितिराम्नायते । यां वै काश्चिद् ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितावुपदध्यादिति । ननु सर्वा एवेष्टका ब्राह्मणवत्य । नेत्याह । अपरा लिङ्गक्रमात् समाख्यानाच्च । तस्मादेता नान्ते स्युरिति ॥१९॥ ॥ सिद्धान्त ॥ चित्रिण्यादीनां मध्यमचितौ उपधानाधिकरणम् ॥ ७ ॥

### प्राग्लोकम्पृणायास्तस्याः सम्पूरणार्थत्वात् ॥ २० ॥

औपानुवाक्ये काण्डे इष्टकाः समाम्नाताः— वज्रिणीरुपदधाति, चित्रिणीरुपदधाति, भूनेष्टका उपदधातीति । तत्रेदं समधिगतं, मध्यमायां चितावुपधेया इति । तत्र सन्देह । किं प्राग् लोकम्पृणाया, उत पश्चादिति । किं प्राप्तम् । अन्ते तु बादरायण इति । एवं प्राप्ते उच्यते । प्राग् लोकम्पृणायाः । तस्याः सम्पूरणार्थत्वात् । सम्पूरणार्थता तस्याः श्रूयते— यद्देवास्योनं, यच्छिद्रं, तदनया पूरयति, लोकम्पृण च्छिद्रम्पृण इति । अपूर्वत्वाद् वार्थस्य, विधिरेवायं संस्तवेनेति गम्यते । तस्मात् प्राग् लोकम्पृणायाः स्यात् ॥ २० ॥ ॥ लोकम्पृणातः पूर्वं चित्रिण्याद्युपधानाधिकरणम् ॥ ८ ॥

### संस्कृते कर्म्म संस्काराणान्तदर्थत्वात् ॥ २१ ॥

आधाने सन्ति पवमानेष्टयः । सन्ति च नियतानि कर्माण्यग्निहोत्रादीनि । अनियतानि चैन्द्राग्नादीनि । तत्र सन्देह । किं पवमानेष्टीः कृत्वा कर्माणि प्रतिपत्तव्यानि, उत आहितमात्रेष्वग्निष्विति । किं प्राप्तम् । आहितमात्रेष्विति । कुतः । आहितमात्रेष्वसावग्निषु कर्माणि कर्तुं समर्थो भवति । यथा, आहिताग्निर्न क्लिन्नं दार्वादध्यादिति । दर्शयति च, अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्तीत्याहितमात्रेष्वग्निहोत्रं

दर्शयति । तस्मान्न पवमानेष्टय. प्रतीक्षितव्या इति ॥ एवं प्राप्ते ब्रूम. । पवमानेष्टिभि संस्कृतेष्वग्निषु कर्माणि वर्त्तेरन् । कुतः । संस्काराणां तदर्थत्वात् । संस्कारशब्दा एत आहवनीयादयः । संस्कारस्य कस्यचिदभावेन, आहवनीयादिषु प्रतिपत्ति. स्यात् । तस्मात् संस्कृतेषु अग्निषु कर्माणीति ॥ २१ ॥ ॥ पूर्व० ॥

## अनन्तरं व्रतं तद्भूतत्वात् ॥ २२ ॥

यत्तु, आहिताग्निर्न क्लिन्नं दार्वादध्यादित्येवमादि । युक्तम् । यद् आहितमात्रेषु क्रियते, आहिताग्नेस्तद् व्रतमुच्यते । स च आहितमात्रेषु आहिताग्नि संवृत्त.। तस्मादनन्तरं व्रतं स्यात् । तद्भूतत्वात् ॥ २२ ॥ आ० नि० ॥

## पूर्वं च लिङ्गदर्शनात् ॥ २३ ॥

अथ यदुक्तम्, आहितमात्रेष्वग्निहोत्रं दर्शयति, पूर्वमिष्टिभ्यः इति । तस्य क परिहार. ? इत्याभाषान्तं सूत्रम् ॥ २३ ॥ आभासः ॥

## अर्थवादो वाऽर्थस्य विद्यमानत्वात् ॥ २४ ॥

अर्थवाद एव । कुत । अर्थस्य विद्यमानत्वात् । विद्यमानो हि तत्रान्य एवाग्निहोत्रहोमः । कथं होतव्यम्, अग्निहोत्रं न होतव्यम् ? इति मीमांसन्ते ब्रह्मवादिन । यद् यजुषा जुहुयाद् अयथापूर्वमाहुती जुहुयात् । यदि न जुहुयाद् अग्निः परापतेत् । तूष्णीमेव होतव्यमिति । तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवाद ॥ २४ ॥ ॥ उत्तरम् ॥

## न्यायविप्रतिषेधाच्च ॥ २५ ॥

न्यायविप्रतिषेधश्च भवेत् । यद्यनन्तरमग्निहोत्रादय. स्युः । यः पूर्वोक्तो न्याय , स विप्रतिषिध्येत । न वा तासां तदर्थत्वादिति । तस्मात् सस्कृते कर्माणि भवेयुरिति ॥ २५ ॥ ॥ युक्ति ॥ इष्टिसंस्कृताऽग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ९ ॥

## सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥

अग्निचिद् वर्षति न धावेन्न स्त्रियमुपेयात् । तस्माद् अग्निचिता पक्षिणो न अशितव्या इत्येवमादयः पदार्था श्रूयन्ते । तेषु सन्देहः किं सञ्चितमात्रे प्रतिपत्तव्या', उत क्रतवन्ते ? इति । किं प्राप्तम् । सञ्चितमात्रे एवेति । अग्नि यश्चितवान् सोऽग्निचिदिति तस्य श्रूयमाणाश्चितव्रतोऽनन्तरमेव प्राप्नुवन्ति । प्राप्ते निमित्ते नैमित्तिक कर्त्त-

व्यम् । तस्मादनन्तरमेव ॥ २६ ॥ ॥ पूर्व० ॥

क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥

प्रयोगवचनो हि अत्र तान् पदार्थान् प्रापयति, येषां क्रत्वर्थत्वम् । न चैषां क्रत्वर्थत्वमस्ति । पुरुषार्था ह्येते । कथम् । प्रतिषेधे पुरुषः श्रूयते । वर्षति न धावेन्न स्त्रियमुपेयादित्येवमादि । न च क्रत्वर्था एते प्रसक्ताः, येन प्रतिषेध क्रतोरुपकुर्यात् ॥ २७ ॥ ॥ सि० ॥

ननु पुरुषार्था अपि चितवत श्रवणाच्चयनानन्तरं प्राप्ताः । नेति ब्रूम.—

अग्नेः कर्मत्वनिर्देशात् ॥ २८ ॥

अग्न्यर्थं चयनं तत् । यदग्ने. स्वकार्य्यं कुर्वतः साहाय्ये वर्त्तते, तत् तदर्थम् । कश्च तस्य स्वार्थ. । यागसिद्धि. । सिद्धे च यागे चयनेन उपकृतं भवति । तस्मात् सिद्धे यागेऽग्निचित् । तेन क्रत्वन्ते इति ॥ २८ ॥ युक्ति. ॥ अग्निचिद्वर्षणादिव्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

परेणावेदनाद्दीक्षितः स्यात् सर्वैर्दीक्षाभिसम्बन्धात् ॥ २९ ॥

ज्योतिष्टोमे श्रूयते, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति । तथा दण्डेन दीक्षयति, मेखलया दीक्षयति, कृष्णाजिनेन दीक्षयतीत्येवमादि । तत्र सन्देह । किं सर्वैर्दीक्षितो भवति, अथवा इष्ट्यन्ते दीक्षित इति । किं तावत् प्राप्तम् । सर्वैरिति । कुत. । दीक्षाऽभिसम्बन्धात् । दीक्षासम्बन्धो भवति, दण्डेन दीक्षयति, दीक्षामस्य करोतीत्यर्थ । यदि इष्ट्यन्ते दीक्षितः स्यात् कथमस्य दण्डेन दीक्षां कुर्यात् । तेन इष्ट्या न दीक्षितः । न चाऽस्य इष्ट्यन्ते दीक्षितशब्दं पश्यामः । आवेदने त्वस्य दीक्षितशब्दः । तस्मान्न तावति दीक्षितः स्यात् । न च सम्भवति समुच्चये विकल्पो न्याय्य । पक्षे बाधः स्यात् । तत्र प्रयोगवचनो बाध्येत । तस्माद् भिन्नेष्वपि दीक्षासम्बन्धवाक्येषु प्रयोगवचनेन सहैकवाक्यतेत्यावेदनकाले दीक्षित. स्यात् ॥ ॥ २९ ॥ ॥ पूर्व० ॥

इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥

इष्ट्यन्ते वा दीक्षित. स्यात् । तदर्था हि सा दीक्षणार्था । कथम् ।

दीक्षिष्यमाणस्य अदीक्षितस्य सा भवति । यदि तस्या उत्तरकाले दीक्षितः, एवं सा दीक्षिष्यमाणस्य । तस्माद् वाक्यादवगम्यते । भवति तदा दीक्षित इति । दीक्षाकरणे पदार्थे निर्वृत्ते किमिति न दीक्षितः स्यात् । वाक्यं हि निरपेक्षं दीक्षित इति ज्ञापयति ॥ यत्तु, दीक्षासम्बन्धो दण्डेन दीक्षयतीति कथं स दीक्षितत्वे स्यादिति दण्डेनैवं सम्पादयतीत्यवगच्छाम । यत्तु अनन्तरं दीक्षितशब्दो नाऽस्तीति । न शब्दस्याप्रयोगोऽर्थाभावे हेतुः । सत्यप्यर्थे तदवसराभावान्न प्रयुज्यते शब्दः। अन्येन च दीक्षित इत्यवगम्यते वाक्येन। आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति । यच्चावेदनकाले दीक्षितशब्द इति । इष्ट्यन्तेऽपि दीक्षितस्यासावविरुद्धः । प्रयोगवचनश्चाविरुद्धः । यत एकं दीक्षाकरणमन्यैर्दीक्षितं सम्पादयतीति गम्यते ॥ ३० ॥ सि० ॥

## समाख्यानं च तद्वत् ॥ ३१ ॥

इतश्च पश्याम, इष्टिर्दीक्षणार्था, इष्ट्यन्ते च प्रवृत्तिरिति । कस्मात् । समाख्यानं च तद्वदिति यद्वन्न्याय उपदिष्टः । कथम् ? । दीक्षणीया इति तादर्थ्यकरी समाख्या भवति । यथा- स्नानीयं, भोजनीयञ्चेति । तस्माच्च पश्याम - इष्टिर्दीक्षणार्था, इष्ट्यन्ते च प्रवृत्तिरिति ॥ ३१ ॥ युक्ति ॥ दीक्षाया इष्टिसिद्धताधिकरणम् ॥ ११ ॥

## अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ ३२ ॥

इह काम्या इष्टय उदाहरणम् । ऐन्द्राग्नमेकादशकपालं निर्वपेदित्येवमादयः । गवादयः सोमाः । सौम्यादयः पशवः । तत्र सन्देहः । किं येन क्रमेणाधीतास्तेनैव क्रमेण प्रयोक्तव्याः, उतानियम इति । किं तावत् प्राप्तम् । क्रतूनामानुपूर्व्यं यत् पाठे, तदेव प्रयोगे भवितुमर्हति । एवं पाठक्रमोऽनुगृहीतो भविष्यति । इतरथा पाठक्रमो बाध्येत। तन्मा भूदिति क्रमेणानुष्ठातव्यम् ॥ ३२ ॥ ॥ पूर्व० ॥

## न वाऽसम्बन्धात् ॥ ३३ ॥

न वाऽयं क्रमो नियम्येत । कुतः । असम्बन्धात् । पृथक् पृथगेषां कर्मणां प्रयोगवचनानि । तानि स्वपदार्थानामुपसंहारकाणि । यो यस्य नोपकारकः, स तस्य न क्रमेण, नोत्क्रमेण । यो यस्योपकरोति कस्यचित् तस्योपकुर्वतः क्रमः साहाय्ये वर्त्तते । न चैतानि कर्माणि

अन्योऽन्यस्योपकुर्वन्ति । तस्मान्नैषां क्रमः साहाय्ये वर्त्तते । तस्मादसम्बन्ध इति ॥ ३३ ॥ ॥ सि० ॥

काम्यत्वाच्च ॥ ३४ ॥

काम्यानि चैतानि कर्माणि । कामाश्च न क्रमेणोत्पद्यन्ते । तेन निमित्तस्याक्रमत्वान्न क्रमवन्त इति ॥ ३४ ॥ युक्ति ॥

आनर्थक्यान्नेति चेत् ॥ ३५ ॥

इति यदुक्तं पूर्वपक्षे, तदेव पुनरुच्यते परिहर्तुम् । एवं क्रमेण पाठोऽर्थवान् भविष्यतीति । एतदाभाषान्तं सूत्रम् ॥३५॥ ॥ आ० ॥

स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

स्यादर्थवान् क्रमपाठः । असत्यपि प्रयोगे क्रमे, विद्याग्रहणार्थत्वात्; कर्मावबोधनार्थायां विद्यायां क्रमनियमादृष्टं तदाश्रयमेव भविष्यतीति । यथा, त्वत्पक्षे परेषु सर्वस्वारात् । यस्यापि क्रमोऽङ्गमिति पक्षस्तस्यापि सर्वस्वारात् परेषां सर्वस्वारेण यः क्रमस्तस्याऽदृष्टार्थता अवश्यं कल्पनीया ॥ ३६ ॥ ॥ आ० नि० ॥ काम्येष्टीनामनियमेनानुष्ठानाधिकरणम् ॥ १२ ॥

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥

ज्योतिष्टोमे श्रूयते, एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथान्येन यजेत गर्त्तपत्यमेव तज्जायते प्र वा मीयते इति । तत्र सन्देहः । य एतेनेति कस्यायं वाद इति प्रश्नेन एवोपक्रमः । उच्यते । य एतेनेत्यग्निष्टोमस्य वादः । कुतः । प्रकरणात् । तस्य हि प्रकरणे भवत्येतद्वचनम् । प्रकृतवाचीनि च सर्वनामानि भवन्ति ॥ ३७ ॥ ॥ सि० ॥

लिङ्गाच्च ॥ ३८ ॥

लिङ्गमपि भवति । तत्र श्रूयते । यस्य नवतिशतं स्तोत्रीया इति। अग्निष्टोमस्य हि भवन्ति नवतिशतं स्तोत्रीयाः । कथम् । त्रिवृद् बहिष्पवमानं, पञ्चदशान्याज्यानि, तानि चत्वारि । सा एकोनसप्ततिः । पञ्चदशो माध्यन्दिनः पवमानः । तेन चतुरशीतिः । सप्तदशानि पृष्ठानि, तानि चत्वारि । साऽष्टषष्टिः । चतुरशीत्या सह द्विपञ्चाशच्छतम् । सप्तदश आर्भवः पवमानः । तेन षष्ट्यधिकं शतं नव च । एकविंशं यज्ञायज्ञीयमिति तदेतन्नवतिशतमग्निष्टोमस्य । तस्मा-

तृप्त्यग्निष्टोम. ॥३८॥ हेतु. ॥ यज्ञानामग्निष्टोमपूर्वकताधिकरणम् ॥१३॥

अथान्येनेति संस्थानां सन्निधानात् ॥ ३९ ॥

अथान्येनेति किं संस्थानां वादः, अथ ज्योतिष्टोमविकाराणामेकैकाहादीनामिति । किं तावत् प्राप्तम् । संस्थानामिति । कुतः । सन्निधानात् । सन्निहिता स्तस्मिन् प्रकरणे संस्था । तासां वादः । प्रकरणानुग्रहाय ॥ ३९ ॥ पूव० ॥

तत्प्रकृतेर्वापत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥

तत्प्रकृतेर्वा गवादेर्वाद. स्यात् । आपत्तिविहारौ हि प्रकृतिविकारमात्रेषूपपद्येते, न तुल्यशब्देष्वेव ज्योतिष्टोमशब्दकेषु । नैवमभिसम्बन्ध क्रियते । अथान्येन ज्योतिष्टोमशब्दकेनेति । कथं तर्हि । अन्येनेति प्रकृतादितरद् ब्रवीति । न स ज्योतिष्टोमेन विशिष्यते । न हि शब्दस्यार्थं समीपगतेन कृतप्रयोजनेनैकदेशेऽवस्थापयितव्यो भवति । न हि वाक्येन श्रुतिर्बाध्यते । अथ, ज्योतिष्टोमादन्येनेत्यभिसम्बद्ध्यते, ततो नतरां सस्थावाद. । कथं पुनरापत्तिविहारौ । प्रजापतिर्वा अग्निष्टोम , स उत्तरानेकाहानसृजतेति सृष्ट्वा अब्रुवन् । न वै स्वेनात्मना प्रभवाम इति । तेभ्य स्वातन्त्र्यं प्रायच्छत् । तथा च ते प्राभवन् तत् । यथा वा इदमग्नेर्जातादध्यग्नयो विह्रियन्ते । एवं वा, एतस्माद् यज्ञादन्ये यज्ञक्रतवो विह्रियन्ते । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते, स तं दीपयति, य पञ्चदशं स तं, य सप्तदशं स तं, य एकविंशं स तमित्येवमाहुरेको यज्ञ इति । एते वै सर्वे ज्योतिष्टोमा भवन्तीति । एवं वैकृताना सङ्कीर्त्तनात्, तेषामेव वाद इति गम्यते । कथम् । अथान्येनेति योऽसावन्यस्तत्र प्राकृतान् धर्मान् विहृतान् दर्शयति । अतो मन्यामहे, यस्यातो विहृति., तेनान्येनेति ॥४०॥

प्रशंसा वा विहरणाभावात् ॥ ४१ ॥

यद्येवं न तर्हि तद्विकाराणां वादः । तत्र न विहारो नापत्ति प्रकरणादिभि । ते धर्मा ज्योतिष्टोमस्य । यदि हि गवादयो विह्रियेरन् प्रकरणादीनि बाध्येरन् । तदापत्तिः प्रत्यक्षविरुद्धा । प्रशंसा त्वेषा । आपत्तिविहाराभावात् ॥ ४१ ॥ ॥ आ० ॥

विधिप्रत्ययाद्वा न ह्येकस्मात् प्रशंसा स्यात् ॥ ४२ ॥

अत्रोच्यते, यद्यप्यापत्तिविहारौ न विधीयेते, ते तथापि चोद-

केन विधीयेते । ये प्रकृतौ कर्त्तव्यास्ते चोदकवचनाद् विकृतावपि कर्त्तव्या गम्यन्ते । तद्यापत्तिविहाराविव यत्र भवतस्तेनान्येनेति गम्यते । न हि अकस्मात् प्रशंसा स्यात् । योऽसावन्य, स कथमनया प्रशंसया लक्ष्येतेत्येवमर्थां प्रशंसा ॥ ४२ ॥ आ० नि० ॥ ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकताधिकरणम् ॥ १४ ॥

**एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥**

य एतेनानिष्ट्वा, अथान्येन यजेतेति श्रूयते । तत्र एषोऽर्थः समधिगत । तद्विकाराणां वाद इति । अथेदानीं सन्दिह्यते । किमेकस्तोमकस्य, अनेकस्तोमकस्य चेति । किं प्राप्तम् । एकस्तोमकस्य वादः। कुतः । क्रतुसंयोगात् । एकस्तोमे क्रतुसंयोगो भवति । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, य पञ्चदशं स तं, यः सप्तदशं स तं, यः एकविंशं स तम् । त्रिवृदादय एकस्तोमकाः । तस्मात् तेषां वाद इति ॥ ४३ ॥ ॥ पूर्व० ॥

**सर्वेषां वा चोदनाविशेषात् प्रशंसा स्तोमानाम् ॥ ४४ ॥**

सर्वेषां चैष वादः, एकस्तोमकानामनेकस्तोमकानां च । कुत. । अविशेषवचनादन्यशब्दस्य । नन्वेकस्तोमकाः क्रतवः सङ्कीर्त्यन्ते । सत्यं सङ्कीर्त्यन्ते । प्रशंसार्थं, न विशेषार्थम् । कः पुन. प्रशंसार्थ । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, चोदकप्राप्ता धर्मा अभ्यस्ता. प्रकृतौ, विकृतौ सुखं प्रतिपद्यन्ते ॥ ४४ ॥ ॥ सिद्धान्त ॥ सर्वेषामेकानेकस्तोमकानामग्निष्टोमपूर्वकताधिकरणम् ॥ १५ ॥ ॥ इति श्रीशबरस्वामिन. कृतौ मीमांसाभाष्ये पञ्चमस्याध्यायस्य तृतीयः पादः ॥ ५ ॥ ३ ॥

अथ पञ्चमे अध्याये चतुर्थः पादः ॥ ५ ॥ ४ ॥

**क्रमको योऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥**

इह पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां सह बाधां प्रति विचारणम् । किं पाठक्रमस्ताभ्यां तुल्य, उत बाध्यते इति । किं प्राप्तम् । तुल्यबलावेतौ । पाठोऽपि हि कारणं श्रुत्यर्थावपि । न च प्रामाण्ये कश्चिद् विशेषोऽस्ति । तस्मादनियम इति । एवं प्राप्ते ब्रूमः । पाठक्रमो हि बाध्यते श्रुत्या अर्थेन च । कुत. । श्रुतिविशेषाद् अर्थपरत्वाच्च । श्रु-

तिविशेषः क । यत्र श्रवणं तत्र प्रत्यक्षं कारणम् । पाठक्रमस्त्वानुमानिकः । पाठक्रमेण स्मरणम् । एवमभिनिर्वर्त्तयितव्यमित्यवगम्यते। तस्यार्थवत्त्वेनैकयोपपत्त्या तस्यैवानुष्ठानं, श्रुत्या पुनरनुष्ठानमेव। एवं भवतीति प्रत्यक्षादवगम्यते । तथाऽर्थेन । कुतः ? । अर्थपरत्वात् । अर्थार्थं हि सर्वं प्रधानार्थं, प्रधानमभिनिर्वर्त्तयतीति सर्वं क्रियते । तस्मात् पाठस्ताभ्यां बाध्यते ॥ किमुदाहरणं प्रयोजनं च । श्रुत्याम्, आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति । अत्र पाठक्रमस्य बलीयस्त्वे तृतीयस्य ग्रहणं, सिद्धान्ते तु दशमस्य । अर्थे, अग्निहोत्रहोमः पूर्वमाम्नायते, पश्चाच्छ्रपणम् । एवं कर्त्तव्यं, यदि पाठो बलवान् । सिद्धान्ते श्रपणं पूर्वं, ततो होम. ॥ १ ॥ ॥ पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम् ॥ १ ॥

**अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥**

स्तो दर्शपूर्णमासौ । तत्र पूर्वं दध्नो धर्माः समाम्नाताः, पश्चादाग्नेयस्य । प्रदानं चाग्नेयस्य पूर्वम् । तत्र सन्देहः । किं प्रावृत्तिकेन क्रमेण पूर्वं दध्नोऽवदानाभिघारणासादनानि, उत मुख्यक्रमेण पूर्वमाग्नेयस्येति । कि प्राप्तम् । अनियम इति । एवं प्राप्ते ब्रूमः । अवदानादिषु प्रावृत्तिकेन पूर्वं दध्न इति । कुतः । एवमनुज्ञातेभ्यो व्यवधायकेभ्यो नाभ्यधिकोऽन्यो वा व्यवधायक कल्पितो भविष्यति। दर्शयति च दध्न पूर्वमेव देयमिति ॥ २ ॥ ॥ पूर्व० ॥

**यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥**

यथाप्रदानं वा कर्तव्यानि। यस्य प्रदानं पूर्वं तस्यावदानानि पूर्वम् । तस्माद् आग्नेयस्य । कुत । प्रदानचोदनागृहीतत्वाद् अवदानादीनाम् । प्रदानोपक्रमा एते, न पृथक्पदार्था एते इत्युक्तम् । अभिघारणमवदानं च तस्य प्रदानचिकीर्षयैव क्रियते । आसादनमपि प्रदानाऽर्थमेव आसन्नकरणम् । एवं दृष्टार्थता भवति । तस्मान्मुख्यक्रमेणाऽङ्गानां प्रयोग इति ॥ यत्तु दध्न पूर्वं प्रवृत्तिरिति । अर्थात् पूर्वं प्रवृत्तिः, न पाठात् । प्रावृत्तिकाच्च मुख्यक्रमो बलीयान्, मुख्यक्रमे गृह्यमाणे प्रथम एकः पदार्थो विप्रकृष्टकालः स्यात् । प्रावृत्तिके पुनर्गृह्यमाणे सर्वेषां विप्रकर्ष. । तस्मान्मुख्यक्रमो बलीयानिति। अथ यल्लिङ्ग-

मुक्तं, दध्नः पूर्वमवदेयमिति । अत्रोच्यते । श्रुताभिप्रायमेतद् भविष्यति । तस्माददोषः ॥ ३ ॥ ॥ सि० ॥

लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गमप्यस्मिन् अर्थे भवति । स वै ध्रुवामेवाग्रेऽभिघारयाति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीति । तस्मादपि मुख्यक्रमेण नियम इति ॥४॥ ॥ युक्ति ॥मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाऽधिकरणम् ॥ २ ॥

वचनादिष्टिपूर्वत्वम् ॥ ५ ॥

इष्टिपूर्वत्वं समाम्नातम् । तत्र सन्देहः । किमिष्टिपूर्वत्वं, सोमपूर्वत्वं वा विकल्पः, अथवा इष्टिपूर्वत्वमेवेति । किं प्राप्तम् । इष्टिपूर्वत्वमेव स्यात् । कुत. । वचनात् । वचनमिदं भवति । एष वै देवरथो यद्दर्शपूर्णमासौ, यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यतीति । नास्ति वचनस्यातिभारः । तस्मादिष्टिपूर्वत्वमेवेति ॥ ५ ॥ युक्तिः ॥

सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदन्तेनानर्थकं हि स्यात् ॥ ६ ॥

इष्टिपूर्वत्वमित्येतद् गृह्णीमः । किन्तु सोमश्चैकेषां पुरो दर्शपूर्णमासयो. स्यात् । कुतः । अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् । यः सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं स प्रतीक्षेद् न नक्षत्रमिति । यः सोमयागं क्रतुमादधीत, स न प्रतीक्षेत नक्षत्रं नाप्यृतुं तावत्येवादधीतेति आनन्तर्यमुच्यते । इतरथा, ऋतुनक्षत्रातिक्रमवचनमनर्थकं स्यात् । आनन्तर्येऽनपेक्ष्यमाणे यस्यैव ऋतुनक्षत्रे उक्ते तस्यैव तयोरनादर कीर्त्तितः स्यात् । तस्मादस्ति सोमाधानयोरानन्तर्यमिति । अपि च विस्पष्टा चाद्यतनी विभक्तिः, सोमेन यक्ष्यमाण इति । सा च न इष्टिपूर्वत्वमनुज्ञाय विवक्ष्यते, न तदाऽद्यतनकालविवक्षा । तत्रायं शब्दो विप्रतिषिद्ध्येत । तस्माद् आनन्तर्यविवक्षेत्यवगम्यते ॥६॥ सि०

तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥ ७ ॥

इतश्च सोमाधानयोरानन्तर्यम् । कुत । तदर्थवचनात् । य' सोमेन यजेत सोऽग्निमादधीतेति च सर्वैरप्यसौ यक्ष्यमाणोऽग्निमाधत्ते सोमेन अग्निहोत्रादिभिश्च । न असति सोमस्य विशेषे सोमार्थता

स्यात्। अयमसौ विशेषः स्यात्। यदानन्तर्य्यं सोमाधानयोरिति॥७॥

## अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशा-दानन्तर्य्याद्विशङ्का स्यात्॥ ८॥

सोमेन अयक्ष्यमाणस्य च पवमानहविषां कालो निर्दिश्यते। यः सोमेन अयक्ष्यमाणोऽग्निमादधीत, स पुरा संवत्सराद् हवींषि निर्वपेदिति। न खलु कश्चिदयक्ष्यमाण। सर्वस्य विहितत्वात्। तस्मादनन्तरमयक्ष्यमाण इति गम्यते॥ ८॥ युक्ति॰॥

## इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम्॥ ९॥

इदं प्रयोजनसूत्रं वर्ण्यते। क्षीणमधिकरणम्। किं प्रयोजनं चिन्ताया। इष्टिरयक्ष्यमाणस्य सोमेन निरभिसन्धिके आधाने तदर्थत्वे तु सोमपूर्वत्वम्। सोमार्थतायां त्वाधानस्य सोमपूर्वत्वं स्यात्॥ ॥ ९॥ ॥ इष्टिसोमयोः पौर्वापर्यानियमाधिकरणम्॥ ३॥

## उत्कर्षाद् ब्राह्मणस्य सोमः स्यात्॥ १०॥

अस्ति आधानं, तत्रैषोऽर्थः समधिगतः। इष्टिपूर्वत्वं सोमपूर्वत्वं चेति। इदानीं सन्देह। किं त्रयाणां वर्णानामिष्टिपूर्वत्व सोमपूर्वत्वं वा, उत ब्राह्मणस्य सोमपूर्वत्वमेव, उत केवला पौर्णमासी उत्कृष्यते, ब्राह्मणस्य उभौ कल्पौ? इति। अथ वा कर्मान्तरमिदं यदूर्ध्वं सोमात्। अथवैकं हविरुत्कृष्यते, ब्राह्मणस्योभावेव कल्पाविति। किं प्राप्तम्। त्रयाणां वर्णानामिष्टिपूर्वत्वं सोमपूर्वत्वं वा। कुतः? । अविशेषात्। न कश्चिद् विशेषमवगच्छाम। एवं प्राप्ते ब्रूमः। ब्राह्मणस्य सोमपूर्वत्वं स्यात्। कस्मात्। उत्कर्षात्। उत्कर्षो हि श्रूयते। आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति। यदेवाद. पौर्णमासं हविस्तत्र हि अनुनिर्वपेत्। तर्हि उभयदेवत्यो भवतीति। किमिव हि वचनं न कुर्यात्। तस्माद् ब्राह्मणस्य सोमपूर्वत्वमेवेति॥ १०॥ ॥ पूर्व०॥

## पौर्णमासी वा श्रुतिसंयोगात्॥ ११॥

यदुक्तं, ब्राह्मणस्य सोमपूर्वत्वमेवेति। तन्न। तस्याप्युभौ कल्पौ। कुतः। अविशेषात्। न हि कल्पयोर्ब्राह्मणस्य कश्चिद्विशेष आम्नायते। नन्विदानीमेवोक्तं, ब्राह्मणस्योत्कर्ष इति। नेति ब्रूमः। पौर्ण

मासीमात्रस्य तत्रोत्कर्षः । श्रुतिसंयोगः पौर्णमास्याः । तत्र यदेवाद्‌ पौर्णमासं हविरिति । यावद्वचनं वाचनिकं, तत्र न न्याय क्रमते । तुल्ययोरेकदेशे उत्कृष्टे नूनमपरोऽप्येकदेश उत्कृष्यते इति ॥११॥ सि०॥

**सर्वस्य वैककर्म्यात् ॥ १२ ॥**

यदुच्यते केवला पौर्णमासी उत्कृष्यत इति । तन्न । कृत्स्नस्य दर्शपूर्णमासकर्मण उत्कर्षः । एवं फलेन सम्बन्धः । इतरथा न स्यात् फलम् । एकदेशत्वात् पौर्णमास्याः केवलायामुत्कृष्यमाणायामवशिष्टस्य पूर्वत्र क्रियमाणस्य न फलं स्यात् । एकदेशत्वाद् अफलत्वाच्चोत्कृमपि न क्रियेत । समुदाये चोत्कृष्यमाणे भवति फलम् । तस्माद् अर्थात् समुदायस्योत्कर्षः, एवं कृत्स्नोपदेशोऽर्थवान् भविष्यतीति । तस्मात् सर्वस्योत्कर्षः । सोमपूर्वत्वमेव ब्राह्मणस्येति ॥ १२ ॥

**स्याद्वा विधिस्तदर्थेन ॥ १३ ॥**

नैतदस्ति, यदेवं समुदायस्यासति वचने उत्कर्षः परिकल्प्येत, तस्मादन्यदेवैवन्नामकं कर्म ऊर्ध्वं सोमात् स्यात् । एवम् एकांशस्याश्रुते फलं न कल्पयितव्यं भविष्यति । नामधेयन्तु द्वयो कर्मणोरेकम् । अक्षाः पादा माषा इति । यथा पौर्णमासधर्मकं वा कर्मान्तरं चोद्यते इति कर्मविधानं, श्रुतेरेतद् भवति । तद् वाक्यस्य बाधकम् । तस्मात् कर्मान्तरमिति ॥ १३ ॥ ॥ पूर्व० ॥

**प्रकरणात्तु कालः स्यात् ॥ १४ ॥**

कर्मान्तरस्यैतद्वाचकमिति प्रमाणाभावः । प्रकृतस्य कर्मणो वाचकमिति प्रत्यक्षम् । यच्च सप्रमाणकं, तद् ग्राह्यम् । अन्यायश्चानेकार्थत्वम् । धर्मग्रहणे लक्षणाशब्दः श्रुतिसम्भवे कल्प्यः स्यात् । अपि चास्य रूपं न गम्यते । रूपावचनान्न कर्मान्तरम् । तस्मात् प्रसिद्धेन नाम्ना प्रकृतस्य कर्मणो ग्रहणं कालविधानार्थं स्यात् । फलवत्त्वाच्च कृत्स्नस्योत्कर्षः । ब्राह्मणस्य च तथैव । यत्तु, श्रुतिर्वाक्याद् बलीयसीति । अत्रोच्यते । यत्र फलं न श्रूयते, वाक्यार्थोऽपि तावत् तत्र गृह्यते । न चेह फलस्य श्रवणमस्ति । कल्प्यं फलमिति यदुच्यते, न तत् फलवचनमन्तरेण । तत्र फलवचनः शब्दः कल्प्येत । तेन च सहैकवाक्यता कालवचनेन तु सह प्रत्यक्षेणैकवाक्यतेति । तस्मान्न कर्मान्तरम् । स्थितं तावदपर्यवसितमधिकरणम् ॥ १४ ॥ ॥ सि० ॥

ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम् ॥ ४ ॥

**स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥**

यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तु स प्रतीक्षेद् न नक्षत्रमिति । अत्र सन्देहः । किमाधानस्यायं कालविशेषबाधः, उत सोमस्येति । किं प्राप्तम् । आधानस्य कालबाध । स्वकाले स्यात् सोम । कुत. । अविप्रतिषेधात् । अङ्गमाधानम् । तस्य कालबाधो न्याय्यः, न प्रधानस्य । अङ्गगुणविरोधे च तादर्थ्यादिति वक्ष्यते ॥ १५ ॥ पूर्व० ॥

**अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥ १६ ॥**

अपनयो वा आधानात् सोमकालस्य स्यात् । कुतः । आधानस्य सर्वकालत्वात् । नैवाधाने कश्चित् कालनियमोऽस्ति, यदहरेवैनं श्रद्धोपनमेत् तदहरादधीत इति । अप्राप्तमेव तदाधानस्य । यत् प्रतिषिध्यते । तस्मात् सोमस्य कालबाध इति ॥ १६ ॥

**पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् ॥ १७ ॥**

स्थितादुत्तरम् । न वा एतदस्ति । कृत्स्नौ दर्शपूर्णमासौ उत्कृष्येते । ऊर्ध्वं सोमात् । केवला पौर्णमासी उत्कृष्यते । कुत. । वचनात् । वचनमिदम् । यदेवाद' पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेदिति । नास्ति वचनस्यातिभारः । तस्मात् पौर्णमासीमात्रमुत्कृष्येत । यत्तु फलं नास्तीति । समुदायादेव फलं भविष्यतीति । वचनादेवं विज्ञानात् । तस्माददोष ॥ १७ ॥

**एवं शब्दसामर्थ्यात् प्राक् कृत्स्नविधानात् ॥ १८ ॥**

एकं वा हविरुत्कृष्येत, न कृत्स्ना पौर्णमासी । कुतः । शब्दसामर्थ्यात् । एकं हविरुत्क्रष्टुं, शब्दः समर्थः । यदेवादः पौर्णमास हविरिति श्रूयते । यावद्वचनं वाचनिकं, तावद्वचनेनोत्क्रष्टुं शक्यते, नाऽन्यदपि । प्राक् सोमात् कृत्स्नं विधीयते । ततो यद् वचनेनोत्कृष्यते, तदूर्ध्वं सोमात्, यन्नोत्कृष्यते, तत् प्राग्भवितुमर्हति । तस्मादेकं हविरुत्क्रष्टव्यम् । ब्राह्मणस्योभौ कल्पाविति ॥ १८ ॥ ॥ सि० ॥ नर्तु प्रतीक्षेदित्यादिना सोमकालबाधाधिकरणम् ॥ ५ ॥

**पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥ १९ ॥**

इदं श्रूयते । आग्नेयो वै ब्राह्मणो देवतया स सोमेन इष्ट्वा अग्नीषोमी-

यो भवति । यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत् । तर्ह्युभयदेवत्यो भवतीति । यस्मात् तस्मिन् काले सोऽग्नीषोमीयो भवति, न प्राचीने काले, तस्माद् अदो हविरनुनिर्वपेदिति । अग्नीषोमीयत्वं विधाय द्विदेवताकत्वं हेतुत्वेन निर्दिश्यते । तस्मादग्नीषोमीयं हविर्हेतुमत् स्यात्, नान्यदेवताकम् । तदा असौ अग्नीषोमौ यष्टुमर्हति, न प्राक् । सास्य देवता इति भवति पुरुषस्यापि यष्टुर्देवताभिसम्बन्धः । तस्मात् पुरोडाशाऽग्नीषोमीयो, नान्यद्धविरिति सिद्धम् ॥१९॥ सि० ॥

## आज्यमपीति चेत् ॥ २० ॥

इति चेत् पश्यसि अग्नीषोमीयत्वात् पुरोडाश इति । आज्यमपि हि अग्नीषोमीयम् । तस्मात् तदप्युत्कृष्येत ॥ २० ॥ आ० ॥

## न मिश्रदेवतत्वादैन्द्राग्नवत् ॥ २१ ॥

मिश्रदेवतं हि आज्यम् अग्नीषोमीयं प्राजापत्यं, वैष्णवमिति च । पुरोडाशस्त्वग्नीषोमीय एव । न त्वत्र मिश्रदेवतस्य वादः । मिश्रदेवतस्य हि प्रागपि भावोऽवकल्प्यते । यद्यपि तदानीं यजमानो नाऽग्नीषोमीयस्तद्देवताईः, तथापि आज्यं हविः करिष्यत्येव । प्रजापतिं यक्ष्यति, विष्णुं वा । तस्मात् तस्योर्ध्वभावे न एष हेतुरग्नीषोमीयत्वं नाम । यथा चतुर्द्धाकरणं मिश्रदेवतत्वादैन्द्राग्ने न भवति, तद्धत्तत्र आग्नेय इति ऐन्द्राग्नो न शक्यते वदितुम् । तद्धित साकाङ्क्षान्नोत्पद्यते इति । एवमिहाऽग्नीषोमीयशब्देन न शक्यमाज्यं वदितुम् । अग्नीषोमीयो हि असौ । तस्माच्छक्यं प्राग् यजमानेन कर्तुमिति । तस्मान्न तस्योत्कर्षेऽग्नीषोमीयता यजमानस्य हेतुरिति । मिश्रदेवतस्य ग्रहणसामान्यादैन्द्राग्नवदित्युक्तम् ॥ २१ ॥ आ० नि० ॥ आज्यस्य सोमादनुत्कर्षाधिकरणम् ॥ ६ ॥

## विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥

इह वैकृतानि कर्माण्युदाहरणम् । ऐन्द्राग्नमेकादशकपालं निर्वपेदित्येवमादीनि । तत्र सन्देहः । किमेता विकृतयः सद्यस्कालाः, उत द्व्यहकालाः ? इति । किं प्राप्तम् । विकृतिः प्राकृतान् धर्मांश्चोदकेन गृह्णाति । अतस्ते धर्मा आनुमानिकाः । पौर्णमासी चान्य कालः । स यदि वा प्रकृत्या गृह्येत, यदि वा विकृत्या, असम्भवेऽन्यतरस्याः

कालस्त्यक्तव्य. तत्रानुमानिको वैकृतस्य त्यज्यतां, न प्रत्यक्षश्रुत-प्राकृतस्येति न्याय्यम् । तस्मात् सद्यस्काला एता विकृतयो भवेयुरिति ॥ २२ ॥ ॥ सि० ॥

**द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥**

द्वैयहकाल्ये क्रियमाणे यथान्यायं कृतं भवति । तस्माद् द्वैयहकाल्यं स्यात् । चोदकस्तथाऽनुगृहीतो भवति । प्रकृतौ हि श्रूयते । पूर्वेद्युरग्निं गृह्णाति । उत्तरमहर्देवतां यजेतेति । तस्माद् द्व्यहकालमेकमभिनिर्वर्त्य, तदहरेवोपक्रम्यापरेद्युः परिसमापयेत् ॥२३॥ ॥पूर्व०

**वचनाद्वैककाल्यं स्यात् ॥ २४ ॥**

नैतदेवं, द्व्यहकाला विकृतयो भवेयुरिति । सद्यस्काला स्युः । कस्मात् । वचनमिदं भवति, य इष्ट्या पशुना सोमेन आग्रयणेन वा यक्ष्यमाण स पौर्णमास्याममावास्यायां वा यजेतेति । साङ्गस्यैतद्वचनम् । तस्मात् साङ्गं पौर्णमास्याममावास्यायां वा कुर्वीतेति गम्यते । तेन सद्यस्काला विकृतय ॥ २४ ॥ उत्तरम् ॥ विकृतानामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ॥ ७ ॥

**सान्नाय्याग्निषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥ २५ ॥**

इह सान्नाय्यविकाराश्च अग्नीषोमीयविकाराश्च उदाहरणम् । सान्नाय्यविकारास्तावत् । यथा, आमिक्षा पशुरिति, अग्नीषोमीयमेकादशकपालं, निर्वपेच्छ्यामाकं, ब्राह्मणो वसन्ते ब्रह्मवर्चसकाम इत्येवमादयः । तत्र सन्देह । किमेते प्रागूर्ध्वं च सामात् । उत ऊर्ध्वमिति । किं प्राप्तम् । प्रागूर्ध्वं च विशेषानवगमात् । एवं प्राप्ते ब्रूम । ऊर्ध्वं सोमात् स्युरिति । प्रकृतिर्हि एषामूर्ध्वं सोमात् । चोदकेन एभिरपि ऊर्ध्वं सोमाद् भवितव्यम् । सान्नाय्यस्योर्ध्वं सोमाद् वचनेन, असोमयाजी सन्नयेदिति । अग्नीषोमीयस्यापि, आग्नेयो ब्राह्मणो देवतया स सोमेन इष्ट्वा भवति, यदेवाद. पौर्णमास हवि, तत्तर्ह्यनुनिर्वपेदिति, तर्हि स उभयदेवत्यो भवतीति । तद्विकृतिरपि सोमादूर्ध्वं भवितुमर्हति ॥ २५ ॥ सोमात् सान्नाय्यविकारादीनामुत्कर्षाधिकरणम् ॥ ८ ॥

**तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥**

सोमविकारा गवादय एकाहाः । तेषु सन्देहः । किं दर्शपूर्णमासात् प्रागूर्ध्वं च प्रयोक्तव्याः, उत ऊर्ध्वमिति ? । किं प्राप्तम् ? । अनियम, अविशेषात् । एवं प्राप्ते ब्रूमः । तथा सोमविकारा दर्शपूर्णमासाभ्यामूर्ध्वं स्यु । ज्योतिष्टोमो दर्शपूर्णमासाभ्यामूर्ध्वं भवति । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । चोदकेनैष धर्मो गवादिष्वप्येकाहेषु प्राप्नोति । तस्मात् तेऽपि दर्शपूर्णमासाभ्यामूर्ध्वं कर्त्तव्या इति ॥ २६ ॥ सोमविकाराणां दर्शपूर्णमासात् पूर्वं कर्त्तव्यताऽधिकरणम् ॥९॥ इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये पञ्चमस्याध्यायस्य चतुर्थः पाद. समाप्त ॥ ५ ॥ ४ ॥ समाप्तश्च पञ्चमोऽध्यायः ॥ ५ ॥

अथ षष्ठे अध्याये प्रथमः पाद ॥ ६ ॥ १ ॥

## द्रव्याणां कर्म्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादि समाम्नायते । तत्र सन्देहः । किं स्वर्गो गुणतः, कर्म प्रधानतः । उत कर्म गुणतः, स्वर्ग प्रधानत इति । कुतः संशयः । इह स्वर्गकामोऽपि निर्दिश्यते, यजेतेत्यपि । अत्र स्वर्गकामयागयो' सम्बन्धो गम्यते। तस्मिंश्च सम्बन्धे किं यागः साधनत्वेन सम्बद्ध्यते, उत साध्यत्वेनेति भवति विचारणा ॥

तत्र यदि स्वर्गकामस्य पुरुषस्य याग. कर्त्तव्यतया चोद्यते, स्वर्गकामेन यागः कर्त्तव्य इति, स्वर्गेच्छाविशिष्टस्य स सिद्ध्यतीति गम्यते । स्वर्गेच्छा तत्र पुरुषस्य यागं प्रत्युपादिश्यते । तेन तस्य स सिद्ध्यति, नान्यस्य इति । य. स्वर्गकामः, स शक्नोति पुरुषो यागं साधयितुम् ॥ अथ स्वर्गकामस्य कामः कर्त्तव्यतया चोद्यते, ततो यागविशिष्टा कर्त्तव्यतेति याग. साधकोऽभ्युपगम्यते । स चायमुभयोरप्यर्थ एतस्मादुच्चरिताद्वाक्याद् गम्यते । यागो वा कर्त्तव्य , कामो वेति । न चैतद् यौगपद्येन सम्भवति । यदा कामो, न तदा यागः । यदा यागो, न तदा कामः । वचनव्यक्तिभेदादुपपन्न संशयः ॥

तथेदमपरं सन्दिग्धम् । किं प्रीतिः स्वर्ग. ? उत द्रव्यमिति । यदि द्रव्यं स्वर्गस्ततः प्रधानं कर्म, द्रव्यं गुणभूतम् । अथ प्रीतिः स्वर्गस्ततो यागो गुणभूतः, स्वर्गः प्रधानम् ? इति । कुत. सशयः । नास्त्यत्र कामस्य गुणत्वेन प्राधान्येन वा श्रुतिः । सम्बन्धमात्रं त्वस्य

यागेन गम्यते । द्रव्यस्य तु कर्मार्थता स्वभावत । पुरुषप्रयत्नस्य च फलार्थता ॥ किं तावत् प्राप्तम् । स्वर्गो गुणतः, कर्म प्रधानत इति । तत्र तावद्वर्णयन्ति । द्रव्यं स्वर्ग इति । कथमवगम्यते । सर्वेषामेव शब्दानामर्थज्ञाने लौकिक प्रयोगोऽभ्युपायः । तस्मिंश्च लौकिके प्रयोगे द्रव्यवचन. स्वर्गशब्दो लक्ष्यते । कौशिकानि सूक्ष्माणि वासांसि स्वर्गः, चन्दनानि स्वर्गः, द्व्यष्टवर्षा स्त्रिय स्वर्ग इति । यद् यत् प्रीतिमद् द्रव्यं, तत्तत् स्वर्गशब्देनोच्यते । तेन सामानाधिकरण्यात् प्रीतिमद् द्रव्यं स्वर्ग इति मन्यामहे । उपमानाच्छब्दप्रवृत्तिरिति चेत् । न हि कस्मिँश्चिदनुपमिते लोके प्रसिद्ध', यस्यैतदुपमानं स्यात् । तस्मान्नोपमानम् । अतो द्रव्यं स्वर्ग इति ॥ नेत्याह । प्रीतिः स्वर्ग इति । न द्रव्यम् । व्यभिचारात् । तदेव हि द्रव्यं कस्याञ्चिदवस्थायां न स्वर्गशब्दोऽभिदधाति । प्रीतिं तु कस्याञ्चिदवस्थायां न नाऽभिदधाति । तस्मादन्वयव्यतिरेकाभ्यामेतदवगम्यते— प्रीतौ स्वर्गशब्दो वर्त्तते इति ॥ नैतदस्ति, प्रीतेरभिधायक स्वर्गशब्द इति। कुत । विशेषणत्वात् । यद् विशेषण, न तच्छब्देनोच्यते । तद् यथा, दण्डीति दण्डनिमित्तः पुरुषवचनः । दण्डोऽस्य निमित्तं, नाभिधेयः। एवमेष न प्रीतिवचनः । प्रीतिसाधनवचनस्त्वेष स्वर्गशब्द इति ॥ ननु स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे । यस्मिन्नोष्णं, न शीतं, न क्षुद्, न तृष्णा, न अरति, न ग्लानिः, पुण्यकृत एव प्रेत्य तत्र गच्छन्ति, नान्ये । अत्रोच्यते । यदि तत्र केचिदमृत्वा गच्छन्ति, तत आगच्छन्ति अजनित्वा, तर्हि स प्रत्यक्षो देश एवञ्जातीयको, न त्वनुमानाद् गम्यते ॥ ननु चान्ये सिद्धा. केचिद् दृष्टवन्तः, ते चाऽऽख्यातवन्त इति चेद् । न तत्र प्रमाणमस्ति, सिद्धा एवञ्जातीयकाः सन्ति, ते च दृष्ट्वाऽऽचक्षीरन्निति । तस्मादेवञ्जातीयको देश एव नास्ति ॥ ननु च लोकादाख्यानेभ्यो वेदाच्चावगम्यते, देश एवञ्जातीयक' स्वर्ग इति । तन्न । पुरुषाणामेवंविधेन देशेनाऽसम्बन्धादप्रमाणं वचः । आख्यानमपि पुरुषप्रणीतत्वादनादरणीयम् । वैदिकमपि स्वर्गाख्यानं विधिपर नास्त्येव । भवति तु विध्यन्तरेणैकवाक्यभूतं स्तुतिपरम् । यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्, तथाप्यस्मत्पक्षस्याविरोधः । प्रीतिसाधने स्वर्गशब्द इति । तेन देशेन व्यवहाराभावात् कुतस्तस्याभिधायकः स्वर्गशब्दो भविष्यती-

ति । यदा प्रीतिमद् द्रव्यं स्वर्गस्तदा ब्रूमः । द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध इति । यागोऽत्र कर्त्तव्य इति श्रूयते स्वर्गकामस्य । तत्रावश्यं स्वर्गस्य यागस्य च सम्बन्धः । तत्र भूतं द्रव्यम् । भव्यं कर्म । भूतस्य च भव्यार्थता न्याय्या । दृष्टार्थत्वात् । न तु भव्यस्य भूतार्थता । तत्र दृष्ट उपकारस्त्यज्येत ॥ कथं पुनरवगम्यते, यागः कर्त्तव्यतया चोद्यते इति । यदा कामस्यापि कर्त्तव्यताऽस्माद् वाक्याद् अवगम्यते, उच्यते, कामस्य कर्त्तव्यता वाक्यात् । यज्यर्थस्य कर्त्तव्यता श्रुते । श्रुतिश्च वाक्याद् बलीयसी । तस्मादयमर्थः । स्वर्गकामो यागं कुर्यादिति । स्वर्गकामस्य यागः कर्त्तव्य इति । कर्त्तव्यश्च सुखवान् । स्वकर्त्तव्यो दु खवान् । कर्त्तव्य इति चैनं ब्रूते । तस्मात् सुखफलो यागो भविष्यति, स तु यस्येच्छा तस्य सिद्ध्यति, नान्यस्येति गम्यते । तेन स्वर्गेच्छा यागस्य गुणभूता । स्वर्गस्यापि कर्मणो द्रव्येच्छा भवति गुणभूता । तया द्रव्यमानेतुं यतते दृष्टेनैव द्वारेण । इह तु स्वर्गसंज्ञकद्रव्येच्छैव नियम्यते । यथैव सा गुणभूना प्राप्ता । तथैव सती नियम्यते, दृष्टेनैव द्वारेण, नादृष्टेनोपकारेण । तेन स्वर्गेच्छया गुणभूतया स्वर्गद्रव्यं प्रति यतिष्यते यागं साधयितुम् । अथाप्यदृष्टेन तथापि न दोषः ॥ १ ॥ पूर्व० ॥

## असाधकं तु तादर्थ्यात् ॥ २ ॥

तुशब्देन पक्षो व्यावर्त्यते । तत एतावत् तावद् वर्णयन्ति, प्रीतिः स्वर्ग इति । कुतः । एवमुक्तं भवता । प्रीतिविशिष्टे द्रव्ये स्वर्गशब्दो वर्त्तते इति । यद्येवं, पूर्वं तर्हि प्रीतौ वर्त्तितुमर्हति । तां हि स न व्यभिचरति । व्यभिचरति पुनर्द्रव्यम् । यस्यैव प्रीतिसाधनस्य द्रव्यस्य वक्ता स्वर्गशब्दस्तदेवं यदा न प्रीतिसाधनं भवति, तदा न स्वर्गशब्देनाभिधीयते । तस्मात् प्रीतिवचनोऽयम् । यत्तूक्तं दण्डिशब्दवदिति । सोऽपि प्रतीते शब्दाद्दण्डे, दण्डिनि प्रत्ययमादधाति । अन्तर्गतस्तत्र दण्डशब्दः । स दण्डस्य वाचकः । इह पुन. स्वर्गशब्द एव प्रीतेरभिधाता ॥ प्रीतिवचनश्चेद् यागो गुणभूत , प्रीति' प्रधानम् । कुतः । तादर्थ्यात् पुरुषप्रयत्नस्य । प्रीत्यर्थं हि पुरुषो यतते । तेन न प्रीतिर्यागसाधनमिति विज्ञायते । द्रव्यं हि यागसाधनम् । न ऋते द्रव्याद् यागो भवति । यस्माद् द्रव्यदेवताक्रिये यजातिशब्दो वर्त्तत ।

असत्यामपि प्रीत्यां भवति याग । यदि च यागो न प्रीत्यर्थो भवेद् असाधकं कर्म भवेत्। साधयितारं नाधिगच्छेत्। यो हि प्रीत्यर्थं, स साध्यते, नान्यः॥ ननु कर्त्तव्यतया याग श्रूयते। उच्यते। सत्यं कर्त्तव्यतया श्रूयते, कामोऽपि कर्त्तव्यतयाऽवगम्यते । आह। श्रुत्या यागस्य, वाक्येन कामस्य। न चोभयो.। वाक्यभेदप्रसङ्गात्। उच्यते। यद्यपि याग कर्त्तव्य. श्रूयते, तथापि न कर्त्तव्यः । सुखद कर्त्तव्यो भवति। दु खदो याग। तस्मात् प्रत्यक्षेणाऽकर्त्तव्य। प्रत्यक्षेण च दु.खदः। कर्त्तव्यतावचनादनुमानेन सुखदो भवतीति । उच्यते। अनुमानं च प्रत्यक्षविरोधान्न प्रमाणम् । तस्मादकर्त्तव्यो यागः। यदि न प्रीत्यर्थ ॥

अथान्येन फलवचनेन सम्भन्त्स्यते इति । उच्यते । सम्बद्ध्यमानोऽप्यविधीयमानो न समीपवचनमात्रेण फलवान् विज्ञायते। तस्मादनर्थको मा भूदिति स्वर्गस्य कर्त्तव्यता गम्यते। पुरुषप्रयत्नश्च यागविशिष्ट इति यागस्तस्य करण स्यात् । तस्मात् सुष्ठूक्तं, यागो गुणभूत', स्वर्ग प्रधानभूत इति ॥ २ ॥ सि० ॥

## प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसम्बन्ध-स्तस्मात् कर्मोपदेशः स्यात् ॥ ३ ॥

न केवलमानर्थक्यभयाद् यागस्य गुणभावं ब्रूमः । किं तर्हि, स्वर्गसंज्ञकमर्थं प्रति करणत्वेन यागो विधीयते । ननु यागः कर्त्तव्यतया श्रुत्या विधीयते । सत्यमेवम्। आनर्थक्यं तु तथा भवति। स्वर्गं प्रत्यविहिते यागे, स्वर्गकामस्तस्मिन् निष्फले विधीयमानोऽपि निष्प्रयोजन. स्यात्। तत्रास्योपदेशवैयर्थ्यम् । द्वयोश्च विधीयमानयोः परस्परेणासम्बद्धयोर्वाक्यभेदप्रसङ्ग. । अतो न स्वर्गकामपदेन स्वार्थो विधीयते। कि तर्हि, उद्दिश्यते। तत्र वाक्याद् अवगतस्य कामस्य कर्त्तव्यताऽवगम्यते, यागस्य च करणता। एवञ्च यागकर्त्तव्यतायां न प्रत्यक्षविरोधो भविष्यति। तस्मात् कर्मोपदेश. स्यात्। कर्म स्वर्गं प्रत्युपदिश्यते, न स्वर्गः कर्म प्रति ॥ किमतो यदि स्वर्गो नोपदिश्यते?। एतदतो भवति । न ह्यनुपदिष्टोऽनर्थप्राप्तश्च गुणो भवति। तस्मात् स्वर्ग. प्रधानत, कर्म गुणत इति ॥ अपिच। यस्य स्वर्ग इष्ट. स्यात् स यागं निर्वर्त्तयेदित्यसम्बद्धमिव । अन्यदिच्छति,

अन्यत् करोतीति । अथ मतं, ततः स्वर्गो भवतीति सम्बन्धादिदं गम्यते इति । न शब्दप्रमाणकानामन्तरेण शब्दमवगतिर्न्याय्या । वाक्यादेवास्मादिमं सम्बन्धमवगच्छामः । यथा, काष्ठान्याहर्तुकामोऽरण्यं गच्छेदिति यदि ब्रूयाद्, ब्रूयादेतत्- दृष्टं तत्र प्रमाणान्तरेणाऽरण्यगमनस्य काष्ठाहरणसामर्थ्यमिति ॥ अथ मन्यते, उपदेशानर्थक्यं मा भूदित्यर्थापत्तिर्भविष्यतीति । उच्यते । नोपदेशानर्थक्यस्यैतत् सामर्थ्यं, यदन्तरेण फलवचनं यागस्य प्रीतिं फलमवगम्येत । काममस्यानर्थक्यं भवतु, न जातुचित् सामर्थ्यमस्य जायते । न हि दग्धुकामस्योदकोपादानमसति दाहेऽनर्थकमिति दहनशक्तिमस्य जनयेत् । अथ वा स्वर्गकामस्य यागो विधीयते इति पक्षान्तरावलम्बेन अस्यार्थवत्ता भविष्यति ॥

ननु इतरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते, न यागात् स्वर्गः । नैतदेवम् । तस्मिन् खलु पक्षे स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते इति न दोषः । तदनुष्ठानं स्वर्गं प्रतीति नास्ति वचनमिति चेत् । इष्टमर्थं प्रत्यनुष्ठानं भवति । स्वर्गकामस्य च स्वर्ग इष्टः । तदनुष्ठानविशेषग्रहणार्थमेव स्वर्गकामविशेषणग्रहणमिति निरवद्यम् । तस्मात्, स्वर्गकामस्य यागकर्मोपदेशः स्यात् । अतः स्वर्गः प्रधानतः कर्म गुणत इति स्वर्गकाममधिकृत्य, यजेतेति वचनमित्यधिकारलक्षणमिदं सिद्धं भवति ॥ ३ ॥ ॥ युक्ति ॥ यागादिकर्मणां स्वर्गादिफलसाधनताधिकरणम् ॥१॥ अधिकारन्याय ॥

## फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥४॥

इदमामनन्ति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादि । तत्र सन्देहः । किं यावत् किञ्चित् सत्त्वं तत् सर्वमधिकृत्य एतदुच्यते, उत समर्थमधिकृत्य ? इति । किं प्राप्तम् । सर्वाधिकारः । अविशेषात् । ननु वृक्षादयो न किञ्चित् कामयन्ते । कथं तेषामधिकारः स्यात् । उच्यते । मा भूदचेतनानाम् । तिरश्चस्त्वधिकृत्य यजेतेति ब्रूयात् । ननु तिर्यञ्चोऽपि न किञ्चित् कामयन्ते । नेति ब्रूमः । कामयन्ते सुखम् । एवं हि दृश्यते, घर्मोपतप्ताश्छायामुपसर्पन्ति, शीतेन पीडिता आतपम् ॥ आह । ननु तिर्यञ्च आसन्नं फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते । कालान्तर-

फलानि च वैदिकानि कर्माणि ।] उच्यते । कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते । शुनश्चतुर्दश्यामुपवसतः पश्याम । श्येनांश्चाऽष्टम्याम् । न चैषां व्याध्याशङ्का । नियतनिमित्तत्वात् । नानाऽऽहाराणामपि तस्मिन् काले दर्शनात् । समानाहाराणामप्यन्यस्मिन् काले अदर्शनात् । लिङ्गानि च वेदे भवन्ति । देवा वै सत्रमासतेत्येवमादीनि देवतानाम् ऋषीणां वनस्पतीनामधिकारं दर्शयन्ति ॥
ननु कात्स्न्र्येन विधिमुपसंहर्तुं न शक्नुवन्तीत्यनधिकृता । उच्यते । यागं कर्तुं शक्नुवन्ति केचित् । तस्माद् यजेतेत्येवमादीन्यधिकरिष्यन्ति शक्नुवत । विष्णुक्रमादिवचनानि त्वशक्तान्नाधिकरिष्यन्ति । तत्र योऽनुपदिष्टविष्णुक्रमादिक स केवलं यागं करिष्यति । कस्तस्य दोषः । द्रव्यपरिग्रहोऽपि, देवग्राम, हस्तिग्रामः, ऋषभस्य ग्राम इत्युपचारादस्त्येवेति । तस्मादमनुष्याणामपि शक्नुवतामधिकार इति ॥ ४ ॥ ॥ पूर्व० ॥

## कर्तुर्वा श्रुतिसंयोगाद्विधिः कात्स्न्र्येन गम्यते ॥ ५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, तिर्यगादीनामप्यधिकार इति । कस्य तर्हि । य समर्थः कृत्स्नं कर्माभिनिर्वर्त्तयितुम् । न चैते शक्नुवन्ति तिर्यगादयः कृत्स्नं कर्माभिनिर्वर्त्तयितुम् । तस्मादेषां न सुखस्याभ्युपाय. कर्म इति । कथं यो न शक्यते कर्तुं, सोऽभ्युपाय स्यादिति । न देवानाम् । देवतान्तराभावात् । न हि आत्मानमुद्दिश्य त्यागः सम्भवति । त्याग एवासौ न स्यात् । न ऋषीणम् । आर्षेयाभावात् । न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति । न चैषां सामर्थ्यं प्रत्यक्षम् । अपि च तिर्यञ्चो न कालाऽन्तरफलेनार्थिन । आसन्नं हि कामयन्ते ॥
ननु चाक्त, कालान्तरफलार्थिनस्तिरश्चः पश्याम', शुनः श्येनांश्चतुर्दश्यामष्टम्यां चापवसत इति । उच्यते । न जन्मान्तरफलार्थिन उपवसन्ति । कथमवगम्यते । वेदाध्ययनाभावात् । ये वेदमधीयते ते एतद्विदुः इद कर्म कृत्वा इद फलममुत्र प्राप्नोतीति । न चैते वेदमधीयते । नापि स्मृतिशास्त्राणि । नाप्यन्येभ्योऽवगच्छन्ति । तस्मान्न विदन्ति धर्मम् । अविद्वांसः कथमनुतिष्ठेयुः । तस्मान्न धर्मायोपवसन्तीति ॥

किमर्थं तर्ह्येषामुपवासः । उच्यते । रोगादरुचिरेषाम् । कथं पुनर्नियते काले रोगो भवति । उच्यते । नियतकाला अपि रोगा भवन्ति । यथा तृतीयकाश्चातुर्थकाश्चेति । तस्मान्मनुष्याणामधिकार इति । न च तिरश्चां द्रव्यपरिग्रह । न हि एते द्रव्यं स्वेच्छया उपयुञ्जाना दृश्यन्ते । तस्मादनीशाना धनस्य । यत्तु, देवग्रामो हस्तिग्राम इति । उपचारमात्रं तत् । तस्मादपि न तिरश्चामधिकार इति ॥ यानि पुनर्लिङ्गानि, देवा वै सत्रमासतेत्येवमादीनि अर्थवादास्ते विधिप्ररोचनार्था । विद्यते हि विधिरन्य स्तेषु सर्वेषु न च विधेर्विधिनैकवाक्यभावो भवति । वचनव्यक्तिभेदात् । स्तुतिस्तु सा । इत्थं नाम सत्राणि आसितव्यानि, यत् कृतकृत्या अपि आसते देवा, आसन्नचेतना अपि तिर्यञ्च, अचेतना अपि वनस्पतयः, किमङ्ग पुनर्विद्वांसो मनुष्या इति ॥

ननु विष्णुक्रमादिष्वनधिकृता केवलं यागं करिष्यन्ति । नैवम् । गुणा यागं प्रत्युपदिश्यन्ते, न कर्त्तारं प्रति । तेन यागमात्रे क्रियमाणे वैगुण्यमिति न फलसम्बन्ध स्यात् । कथं पुनर्यागं प्रत्युपदिश्यते ? इति चेद्, इतिकर्त्तव्यताकाङ्क्षस्य यागवचनस्यान्तिकादुपनिपतिताः शक्नुवन्ति तं निराकाङ्क्षीकर्तुम् । इतरथा हि कर्तॄनधिकुर्वत्सु गुणवचनेष्वनिवृत्ताकाङ्क्षं फलवचनमनर्थकमेव स्यात् । अनुषङ्गश्च फलवचनमभविष्यत् । तत्र साकाङ्क्षत्वाद् वाक्यमुपरोत्स्यते । अथैतदेव ···र्थं समर्थानां सगुणं कर्म विधास्यति, असमर्थानां विगुणमिति । तन्न । सकृदुच्चारणे उभयशक्तिविरोधाद् वाक्यम्भिद्येत । साकाङ्क्षं हि तदितिकर्त्तव्यतां प्रति । तस्मात् साङ्गयागोपदेश स इति निरङ्गयागोपदेशाभाव । तस्मान्मनुष्याणामेव अधिकार इति ॥ प्रयोजनं पक्षोक्तं केचिदाहु । सहस्रसंवत्सर न नियोगतो दिवसेषु कल्पयितव्यम् । पूर्वपक्षे तदायुषां देवतादीनां सम्भवतीति । सिद्धान्ते तत्र सम्भवदपि दिवसेष्ववावकल्पयितव्यमिति । तत्तूपरिष्टाद् व्याख्यास्याम ॥ ५ ॥ सि० ॥ यागादिषु मनुष्यस्यैवाधिकाराधिकरणम् ॥२॥

## लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ६ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमादि समाम्नायते । तत्र सन्देह । किं स्वर्गकामं पुमांसमधिकृत्य यजेतेत्येष शब्द उच्चरित । अथ वाऽनियम, स्त्रियं पुमांसं च ? इति । किं प्राप्तम् । पुंलिङ्गमधिकृतं

मेने ऐतिशायनः । कुत । लिङ्गविशेषनिर्देशात् । पुंलिङ्गेन विशेषण निर्देशो भवति, स्वर्गकामो यजेतेति । तस्मात् पुमानुक्तो यजेतेति, न स्त्री ॥ ६ ॥ पूर्व० ॥

## तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥ ७ ॥

अविज्ञाते गर्भे हते भ्रूणहत्यानुवादो भवति । तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवतीति । भ्रूणहा पापकृत्तमः । यश्चोभयोर्लोकयोरुपकरोति, तस्य हन्ता भ्रूणहा । यज्ञहन्ता भ्रूणहा । स यज्ञसाधनवधकारी । तस्माद् यज्ञं भ्रूणशब्देन अभिदधाति । स हि बिभर्त्ति वा सर्वं, भूति वा आनयति । अतो भ्रूणहा यज्ञवधकारी । स पुंयुक्तत्वादनुवादोऽवकल्पते । अविज्ञाते गर्भे हन्यमाने कदाचित् पुमान् हन्येत । तत्र यज्ञाधिकृतस्य हतत्वाद्यज्ञवधो भ्रूणहत्या स्यात् । इतरथा यद्युभयोरधिकारस्ततो विज्ञाते चाविज्ञाते च यज्ञवध. स्यात् । तत्राविज्ञातग्रहणमतन्त्रमिति कल्प्येत । तस्माद्विवक्षिता पुंलिङ्गस्य वाचिका विभक्तिरिति ॥ तथा, आत्रेयीं हत्वा भ्रूणहा भवति । आत्रेयीमापन्नगर्भामाहुः । अत्र = कुक्षौ अस्या विद्यते इत्यात्रेयी । त-स्मादपि पुंसोऽधिकारो गम्यते । यथा, पशुमालभेतेति पुंपशुरेवालभ्यते । लिङ्गविशेषनिर्देशात् । एवमिहापि द्रष्टव्यमिति ॥७॥ युक्ति. ॥

एवं प्राप्ते ब्रूम.—

## जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥

तुशब्द. पक्षं व्यावर्त्तयति । नैतदस्ति, पुंसोऽधिकार इति । जातिं तु बादरायणोऽधिकृतां मन्यते स्म । आह । किमयं स्वर्गकाम इति जातिशब्द. समधिगत । नेत्याह । कथं तर्हि । यौगिक , स्वर्गेच्छायोगेन वर्त्तते । केन तर्हि शब्देन जातिरुक्ता या अधिकृतेति गम्यते ? । नैव च वयं ब्रूमो, जातिवचन इह शब्दोऽधिकारक इति । किन्तर्हि । स्वर्गकामशब्देनाभावपि स्त्रीपुंसावधिक्रियेते इति । अतो न विवक्षितं पुंलिङ्गमिति । कुत । अविशेषात् । न हि शक्नोत्येषा विभक्ति स्वर्गकाम लिङ्गेन विशेष्टुम् । कथम् । लक्षणत्वेन श्रवणात् । स्वर्गे कामो यस्य, तमेष लक्षयति शब्द. । तेन लक्षणेनाधिकृतो यजेतेति शब्देन उच्यते । तत्र लक्षणमविशिष्टं स्त्रियां पुंसि च । तस्माच्छब्देनोभाव-

ऽपि स्त्रीपुंसावधिकृताविति गम्यते । तत्र केनाधिकारः स्त्रिया निव- र्त्यते । विभक्त्या इति चेत् । तन्न । कस्मात् । पुंवचनत्वात् । स्त्रीनि- वृत्तावशक्तिः । पुंसो विभक्त्या पुनर्वचनमनर्थकमिति चेद् न । आन- र्थक्येऽपि स्त्रीनिवृत्तेरभावः । परिसङ्ख्यायां स्वार्थहानि परार्थक- ल्पना प्राप्तबाधश्च । न चानर्थक्यम् । निर्देशार्थत्वात् । तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥ सि० ॥

## चोदितत्वाद् यथाश्रुति ॥ ९ ॥

अथ यदुक्तं, पशुमालभेतेति पुंपशुरालभ्यते । पुंलिङ्गवचनसाम- र्थ्यात् । एवमिहापि पुंलिङ्गवचनसामर्थ्यात् पुमानधिक्रियते यागव- चनेनेति । तत्परिहर्त्तव्यम् । अत्रोच्यते । नात्र जातिर्द्रव्यस्य लक्षण- त्वेन श्रूयते । यदि हि लक्षणत्वेन श्रूयेत, तत स्त्रिया अपि याग उक्तो न पुंवचनेन विवर्त्येत । इदं तु पशुत्वं यागस्य विशेषणत्वेन श्रूयते । तत्र पशुत्वस्य यागस्य च सम्बन्धो, न द्रव्ययागयोः । यथा पशुत्वं यागसम्बद्धमेवं पुंस्त्वमेकत्वं च । सोऽयम् अनेकविशेषणवि शिष्टो याग श्रूयते । स यथाश्रुति एव कर्त्तव्य । उपादेयत्वेन चोदि- तत्वात् ॥ यच्च दोषश्रुतिरविज्ञाते गर्भे हते आत्रेय्यां च पुंयुक्तत्वेनेति। तत् परिहर्त्तव्यम् । अत्रोच्यते । अविज्ञातेन गर्भेणेत्यनुवाद प्रशं- सार्थ. । आत्रेयी च न हन्तव्येति । इत्थं गर्भो न हन्तव्य. । यदऽव्य- क्तेनाप्येनस्वी भवति । पुंलिङ्गविभक्ति श्रूयमाणा न शक्नोति स्त्रियं निवर्त्तयितुम् । किमङ्ग पुनरविज्ञातगर्भवचनं लिङ्गम् । तथा गोत्र- प्रशंसार्थमात्रेय्या अवधसङ्कीर्त्तनम् । न चापन्नसत्त्वा आत्रेयी । गोत्रं हि एतत् । न हि अत्रशब्दाद यं तद्धित उत्पन्नः । समर्थानां हि त- द्धित उत्पद्यते । न च अत्र-शब्दस्य सामर्थ्यमस्ति ॥ ९ ॥ आ० नि० ॥

## द्रव्यत्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं क्रयविक्रयाभ्याम- द्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥ १० ॥

पुंसां तु स्यादधिकारः । द्रव्यवत्त्वात् । द्रव्यवन्तो हि पुमांसो न स्त्रिय । द्रव्यसंयुक्त चैतत् कर्म । व्रीहिभिर्यजेत, यवैर्यजेतेत्येव- मादि । कथम् अद्रव्यत्वं स्त्रीणाम् । क्रयविक्रयाभ्याम् । क्रयविक्रय- संयुक्ता हि स्त्रियः । पित्रा विक्रीयन्ते । भर्त्रा क्रीयन्ते । विक्रीत- त्वाच्च पितृधनानामनीशिन्यः । क्रीतत्वाच्च भर्तृधनानाम् । विक्रयो

हि श्रूयते। शतमधिरथं दुहितृमते दद्यात्, आर्षे गोमिथुनमिति। न चैतद् दृष्टार्थे सति आनमनेऽदृष्टार्थं भवितुमर्हति। एवं द्रव्यैः समानयोगित्व स्त्रीणाम् ॥ १० ॥ पूर्व० ॥

तथा चान्यार्थदर्शनम् ॥ ११ ॥

या पत्या क्रीता सत्यथान्यैश्चरतीति क्रीतता दर्शयति॥११॥उदाहरणम्॥

तादर्थ्यात् कर्मतादर्थ्यम् ॥ १२ ॥

आह। यदनया भक्तोपसर्पणेन वा कर्त्तनेन वा धनमुपार्जितं, तेन यक्ष्यते इति। उच्यते। तदप्यस्या न स्वम्। यदा हि साऽन्यस्य स्वभूता, तदा यत् तदीयं तदपि तस्यैव। अपिच, स्वामिनस्तया कर्म कर्त्तव्यम्। न तत् परित्यज्य स्वकर्मार्हति कर्तुम्। यत्तयाऽन्येन प्रकारेणोपार्ज्यते, तत् पत्युरेव स्व भवितुमर्हतीति। एवञ्च स्मरति—

भार्या दासश्च पुत्रश्च निर्द्धना सर्वे एव ते।
यत्ते समधिगच्छन्ति, यस्य ते तस्य तद्धनमिति॥ ॥१२॥ आ०नि०

फलोत्साहाविशेषात्तु ॥ १३ ॥

तुशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति। निर्द्धना स्त्रीति। द्रव्यवती हि सा। फलोत्साहाविशेषात्। स्मृतिप्रामाण्याद् अस्वया तया भवितव्यं, फलार्थिन्यापि। श्रुतिविशेषात् फलार्थिन्या यष्टव्यम्। यदि स्मृतिमनुरुद्ध्यमाना परवशा निर्द्धना च स्यात्, यजेतेत्युक्ते सति न यजेत। तत्र स्मृत्या श्रुतिर्बाध्येत। न चैतन्न्याय्यम्। तस्मात् फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयाद् यजेत चेति ॥ १३ ॥ उत्तरम् ॥

अर्थेन च समवेतत्वात् ॥ १४ ॥

अर्थेन चास्याः समवेतत्वं भवति। एवं दानकाले संवादः क्रियते— धर्मे च अर्थे च कामे च नातिचरितव्येति। यत्तूच्यते। भार्याऽऽद्यो निर्द्धना इति। स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव। श्रुतिविरोधात्। तस्मादस्वातन्त्र्यमनेन प्रकारेणोच्यते, सव्यवहारप्रसिद्ध्यर्थम् ॥ १४ ॥ युक्तः ॥

क्रयस्य धर्ममात्रत्वम् ॥ १५ ॥

यत्तु क्रयः श्रूयते। धर्ममात्रं तु तत्। नासौ क्रय इति। क्रयो हि

उच्चनीचपण्यपणो भवति । नियतं त्विदं दानम् । शतमधिरथं, शोभनामशोभनाञ्च कन्यां प्रति । स्मार्त्ते च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते । तस्माद् अविक्रयोऽयमिति ॥ १५ ॥ ॥ आ० नि० ॥

**स्ववत्तामपि दर्शयति ॥ १६ ॥**

पत्नी वै पारिणय्यस्य ईष्टे पत्यैव गतमनुमतं क्रियते । तथा भसदा पत्नीं संयाजयन्ति । भसद्वीर्या हि पत्नयः । भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धते इति ॥ १६ ॥ युक्ति. ॥ यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ॥ ३ ॥

**स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥**

स्ववन्तावुभावपि दम्पती इत्येवं तावत् स्थितम् । तत्र सन्देहः । किं पृथक् पत्नी यजेत, पृथग् यजमानः ? उत सम्भूय यजेयातामिति । किं प्राप्तम् । पृथक्त्वेन । कुतः । एकवचनस्य विवक्षितत्वात् । उपादेयत्वेन कर्त्ता यजेतेति श्रूयते । तस्मादेकवचनं विवक्ष्यते । यथा न द्वौ पुरुषौ सम्भूय यजेयातां, तथाऽत्रापि द्रष्टव्यम् ॥ एवं प्राप्ते ब्रूमः । स्ववतोस्तु वचनादैककर्म्यं स्यात् । वचनात्तयोः सहक्रिया । एवं हि स्मरन्ति, धर्मे चार्थे च कामे च नातिचरितव्येति । तथा सहधर्मश्चरितव्यः सहापत्यमुत्पादयितव्यमिति । उच्यते । स्मृतिवचनेन न श्रुतिवचनं युक्तं बाधितुम् । नेति ब्रूमः । इह किञ्चित् कर्म स्त्रीपुंसकर्तृकमेव । यथा दर्शपूर्णमासौ ज्योतिष्टोम इति । यत्र पत्न्यवेक्षितेन यजमानावेक्षितेन चाज्येन होम उच्यते, तत्रान्यतराऽभावे वैगुण्यम् ॥

ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यं, स्त्रिया यजमानायाः पत्न्यवेक्षितं भविष्यतीति । नेत्याह । न अयमीक्षितृसंस्कारः । ईक्षितुः संस्कारो यदि, तदैवं स्यात् । आज्यसंस्कारश्चायम् । गुणभूतौ ईक्षितारौ । तत्रान्यतरापाये नियतं वैगुण्यम् । सर्वाङ्गोपसंहारी च प्रयोगवचनः । तत्रैतत् स्यात् । स्त्री यजमाना पुमांसं परिक्रेष्यत्याज्यस्येक्षितारं, पुमांश्च स्त्रियन्त्ववेक्षित्रीमिति । तच्च न । पत्नीति हि यज्ञस्य स्वामिनीत्युच्यते, न क्रीता । पत्नीति सम्बन्धिशब्दोऽयम् । यजमान इति च स्वामी, न क्रीतः । तस्मात् स्त्रीपुंसयोरेकमेवजातीयकं कर्मेति ॥ तत्र श्रुतिसामर्थ्याद् यः कश्चिद् यथा कथा-

च्चित् सह सम्भूय यजेतेति प्राप्ते, इदमुच्यते– यस्त्वया कश्चिद् धर्मः कयाचित् सह कर्त्तव्यः, सोऽनया सहेति । तेन न श्रुतिविरोधः स्मृतेरिति गम्यते । अथ यदुक्तं, केवलस्य पुंसोऽधिकारः, केवलायाश्च स्त्रियाः । यजेतेत्येकवचनस्य विवक्षितत्वादिति । तत् परिहर्त्तव्यम् । इदं तावदयं प्रष्टव्यः । यजेतेत्येकवचने विवक्षिते, कथं षोडशभिर्ऋत्विग्भिः सह यागो भवतीति । एवमुच्यते, प्रतिकारकं क्रियाभेदः । याजमानानेव पदार्थान् परिक्रयादीन् कुर्वन्, यजते इत्युच्यते यजमानः । आध्वर्य्यवानेव कुर्वन् अध्वर्य्युर्यजतीत्येवमुच्यते । यथा सम्भरणमेव कुर्वती स्थाली पक्तिं करोतीत्युच्यते । यस्य च कारकस्य य आत्मीयो व्यापारः, स एकवचने विवक्षिते एकेन कर्त्तव्यो भवतीति । एवं चेद् यावान् व्यापारो यजमानस्य स तावान्, न सम्भूय कर्त्तव्यः । एकैकेनैको याजमानोऽपरेणापरः । द्वादशे वा शते एकेन षट्पञ्चाशत्, अपरेणापि षट्पञ्चाशदिति । इह तु पत्नीव्यापारोऽन्य एव । न तत्र पत्नी प्रवर्त्तमाना यजमानस्यैकत्वं विहन्ति । यथाऽध्वर्य्युराध्वर्य्यवेषु प्रवर्त्तमानोऽवश्यं च सह पत्न्या यष्टव्यम् । मध्यकं हि दम्पत्योर्धनम् । तत्र यागोऽवश्यं सह पत्न्या कर्त्तव्यः । इतरथाऽन्यतरानिच्छाया त्याग एव न संवर्त्तेत । तथा हि द्वितीयया पत्न्या विना त्यागो नैवावकल्पते । यस्य द्वितीया पत्न्यस्ति, तत्र क्रत्वर्थान् एका करिष्यति । कर्तृसंस्कारार्थेषु नैव दोषः । सम्भवन्ति हि तानि सर्वत्रेति ॥ १७ ॥ स्त्रि० ॥

लिङ्गदर्शनाच्च ॥ १८ ॥

लिङ्गं खल्वपि दृश्यते । योक्त्रेण पत्नीं सन्नह्यति मेखलया यजमानं मिथुनत्वायेति । यदि स्त्रीपुंसावेकत्र, योक्त्रस्य मेखलायाश्च विभागो वाक्याद् गम्यते । मिथुनत्वस्य च । तदेतत् स्त्रीपुंससाधनके कर्मण्युपपद्यते, नान्यथा ॥ १८ ॥ युक्ति' ॥

क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥

स्थितादुत्तरमुच्यते । तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । यदुक्तं स्ववती स्त्रीति । क्रीता हि सा । इष्टार्थत्वादधिरथशतदानस्य । अतो यदस्या स्वामित्वमुच्यते, तद् भक्त्या । यथा, पूर्णकोऽस्माकं बलीवर्दानामीष्टे इति । एवं पत्न्यपि पारिणाय्यस्य ईष्टे इति ॥ १९ ॥ पूर्व०

फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २० ॥

नैतदस्ति । कथं मुख्यो, गौणं स्वामित्वमिति । फलार्थिनी हि सा, स्मृतिर्नादरिष्यते । स्मृत्यनुरोधादस्वा स्यात् । स्ववती श्रुत्यनुरोधात् ॥ २० ॥

फलवत्तां च दर्शयति ॥ २१ ॥

सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य धुर्य्यौ युक्तावभूताम् । सञ्जानानौ विजहीताम् । अरातीर्दिवि ज्योतिरजरमारभतामिति दम्पत्योः फलं दर्शयति । तस्मादप्युभौ अधिकृताविति सिद्धम् ॥२१॥ उत्तरम् ॥ यागे दम्पत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

आधानं च द्वियज्ञवत् ॥ २२ ॥

अस्त्याधानं, य एवं विद्वानग्निमाधत्त इति । तत्रेदमामनन्ति, क्षौमे वसानावग्निमादधीयातामिति । तत्रैषोऽर्थः सांशयिकः । किं द्वौ पुरुषावादधीयाताम्, उतैकः पुरुष इति । कथं संशयः । उच्यते । इहैतच्छ्रूयते, वसानावादधीयातामिति । तत्र वचनमर्थप्राप्तं पुनः श्रूयते । तत् किं पुंलिङ्गसम्बन्धार्थमुत क्षौमविध्यर्थमिति । उभयोर्विद्यमानत्वाद् भवति संशयः। यदि लिङ्गसम्बन्धार्थमुभौ पुरुषावाधास्येते । अथ क्षौमसम्बन्धार्थं तत एकः । किं प्राप्तम् । आधानन्तु द्वियज्ञवत् स्यात् । यथा, एतेन द्वौ राजपुरोहितौ सायुज्यकामौ यजयातामिति द्वयोः पुरुषयोर्द्वियज्ञो भवति । एवं आधानं द्वयोः पुरुषयोः स्यात् । सतोऽविशेषाद्, वसानौ इति श्रवणादेव पुरुषौ गम्येते । न पदान्तरगतेन क्षौमेणास्य सम्बन्धः । श्रुत्यवगतं हि श्रवणाद् अवगतम् । पदान्तरसम्बन्धं वाक्याद् अवगतम् । श्रुतिश्च वाक्याद् बलीयसी । वसानशब्दगतश्चाऽर्थ आधानेन सम्बध्यते, न क्षौमशब्दगतः ॥ आह वसानौ इति नायं केवलं पुंलिङ्ग एव । स्त्रीपुंसयोरप्यभिधायको भवति । यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ । शूकरश्च शूकरी च शूकराविति । एवं वसानश्च वसाना च वसानौ स्यातामिति । अत्रोच्यते। यत्र न अर्थः प्रकरणं वा विशेषकं, विधायकश्च शब्दो, नास्त्यऽनुवादस्तत्र द्वौ पुमांसौ गम्येते । यथा द्वावानयेत्युक्तः पुमांसावानयति । द्वे आनयेति स्त्रियौ । तेन स्त्रियो वाचकमेकारान्तं द्विवचनमिति गम्यते । औकारान्तमपि द्वयोः पुंसोर्वाचकमिति । यत्रदानीं

स्त्रीपुंसयोः प्रयुज्यमानमौकारान्तं दृश्यते, तत्र किं पुमान् सद्वितीयस्तस्य निमित्तम् ? उत स्त्री सद्वितीयेति । उच्यते । पुंसि सद्वितीये दृष्ट । यथा ब्राह्मणावानयेति । इहापि पुमान् सद्वितीयोऽर्थः । तस्मात् पुंनिमित्तमिति गम्यते ॥ अत्राह । प्रयोगो यदि दृष्ट प्रमाणं, द्वयोः पुंसोर्दृष्टः, कथमेकस्मिन् स्यात् । अत्रोच्यते । पुंसि च द्वित्वे च दृष्ट इति शक्यते वदितुं, न द्वयोर्द्रव्ययोरिति । पुंभावं द्वित्वं चैष शब्दो न व्यभिचरति । द्रव्यं पुनर्व्यभिचरति । अपि च युगपदधिकरणवचनताया द्वन्द्वस्मृतेर्द्विवचनबहुवचनोपपत्तेश्च । प्रमित्रयोर्वरुणयोरिति च दर्शनात् इतरेतरयोगे चार्थे समासविधानाद् द्वंद्वाऽपवादत्वाच्चैकशेषस्य । यथैव खदिरौ च धवलौ चेति निदर्शनं क्रियते, एवमत्रापि द्रष्टव्यम् । तस्मात् पुंसि द्वित्वे च वर्त्तते इति गम्यते । न च स्त्रीद्वित्वे दृष्टः ॥ अत्राह । नन्वत्रैव दर्शनात्, स्त्रीपुंसयोर्वाचक इति गम्यते । अत्रोच्यते । उक्तमेतत् । अन्यायश्चानेकार्थत्वमिति पुमान् सद्वितीयोऽस्यार्थो भविष्यति । स्त्रीपुंसौ चेत्यन्याय्यम् । अथेदानीं सद्वितीयस्य पुंसो विधौ कोऽन्य. सहाय इति । स्त्रिया अनभिधेयत्वाद्, अवश्यम्भावित्वाच्च द्वितीयस्य । अपर' सद्वितीय पुमान्, एवमितरोऽपीतरेण सद्वितीय', इतरोऽपीतरेणेति द्वावेव पुमांसावुपादीयेते । तस्मादिह द्वौ पुमांसावाधाने विधीयेते इत्युच्यते ॥

ननु स्त्रीपुंसयोर्वाचकमौकारान्तं द्विवचनं स्मरन्ति । नैषा स्मृतिरस्तीति ब्रूम । आह । भगवतः पाणिनेर्वचनात् स्मृतिमनुमास्यामहे । पुमान् स्त्रिया इति । उच्यते । न पाणिनेर्वचन, कुक्कुटौ इति औकारः स्त्रीपुंसयोर्वाचक इति । कथन्तर्हि । यत्र स्त्रीपुंसयो सहवचनं, तत्र सद्वितीयो वा पुमानिति कृत्वा अकारान्तस्य औकारः प्राप्नोति । सद्वितीया वा स्त्रीति कृत्वा एकारः । पुंशब्दस्तत्र साधुर्न स्त्रीशब्द इति पाणिनेर्वचनम् । पुमान् शिष्यते इति च ब्रूते । तेन सुतरां गम्यते, पुंसोर्वाचक औकार इति । तस्माद् द्वयोः पुंसोरधिकार इति ॥

ननु क्षौमविधानपरमेतद् वाक्यम् । क्षौमसम्बन्धस्यार्थवत्त्वात् । इतरथा क्षौमवचनमनर्थकं स्यात् । अत्रोच्यते । वसानावादधीयातामित्यस्ति सम्बन्धः । न क्षौमे आदधीयातामिति । तस्मात् सन्निकृष्ट-

मपि न तत्सम्बद्धमधानेन । आह । वसानशब्देन सह सम्बद्ध्यमान-मर्थवद् भविष्यति । वसानसन्निकृष्टे अपि क्षौमे न विधीयेते, विधायकस्य शब्दस्याभावात् । न हि वसानशब्दो विधायको, न क्षौमशब्दो, नानयो· समुदाय । कस्तर्हि विधातुं शक्नोति ? । आदधीयाता-मित्यत्र या लिङ् ॥ आह । सा खलु विधास्यति ? । उच्यते । सा स्वशब्दगतमाधानं शक्नोति विधातुम् । श्रवणाद् विहितत्वादाधान-स्य । आनर्थक्ये, वसानौ इति शक्नोति वाक्येन विधातुम् । भवति हि वसानयोराधानसम्बन्ध । तत्र नात्यन्ताय स्वार्थ· परित्यक्तो भवति । क्षौमवसानसम्बन्धे तु विधातव्ये, आदधीयातामित्याधान-मुत्सृज्य विदधानोऽत्यन्ताय श्रुतिं जह्यात् । आधानसन्निकृष्टे च लिङ्गे विधातव्ये श्रुतिर्विप्रकृष्टं न क्षौमवसानसम्बन्धं विधातुमुत्सहते । अर्थविप्रकर्षात् । अपि चोत्सृज्य श्रुतिं, क्षौमवसानसम्बन्धे विधीयमाने क्षौमं वसानस्याङ्गं स्यान्नाधानस्य । तत्र क्षौमाभावेऽपि नाधानं विगुणमिति क्षौमाभावेऽप्याधान स्यात् ॥ आह । वसानगुण-तायां तर्हि कोऽर्थो विरुध्यते । उच्यते । न कश्चित् । अत एवास्य पक्षस्य परित्यागः । आह । क्षौमवसानश्रवणमिदानीं कथमिति । उच्यते । न शक्यते उभयं विधातुं, क्षौमं लिङ्गं च । भिद्येत हि तथा वाक्यम् । तस्मादक्षौमयोः क्षौमशब्दोऽनुवाद· । अर्थप्राप्ते च वसने वसानौ पुमांसावित्यर्थ । ते च प्रायेण विचेष्टमानस्य मलिने क्षौमसदृशे भवत· । विचेष्टमानस्य वा शब्दवती भवत इति । तस्माद् द्वयोः पुंसोरधिकार इति ॥ २२ ॥ पूर्व० ॥

## गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । यदुक्तं द्वौ पुरुषौ आदधीयातामिति । एक एवादधीत । वसन्ते ब्राह्मणोऽग्निमादधीतेति । एकवचनं हि विवक्षितम् । तस्मादेक एव आदधीत । नन्विदं वचनं द्वौ पुमांसावादधीयातामिति । नेत्याह । गुणस्य तु विधानत्वात् क्षौम-विधानमस्मिन् वाक्ये न्याय्यम् । तथा हि अपूर्वोऽर्थो विहितो भवति । गम्यते हि विशेषनियमः । इतरथा क्षौमवचनमनुवादमात्रं स्यात् । वादमात्रं चानर्थकम् । पक्षे चानुवादः । न चैकपक्षवचन

एष शब्दः । गौणत्वे च साधारणं सादृश्यम् । तस्मात् प्रमादाऽध्ययनमवगम्येत विनैव हेतुना॥ आह । ननु पुमांसौ विधेयौ । तद्विधाने च न क्षौमविधानम् । वाक्यभेदो हि तथा स्यात् । श्रुतिगम्यौ च पुमांसौ, वाक्यगम्यं च क्षौमं बाधेयातामिति । अत्रोच्यते । न पुमांसौ विधेयौ । प्राप्त एवात्र सद्वितीयः पुमान् । सोऽनूद्यते । कथम् । एकोऽत्र पुमान् श्रूयते । तस्य पत्न्या द्वितीयशब्दः स्यात् । न च यत् प्राग् वचनाद् गम्यते, तद् विधेयं भवति । तस्मात् क्षौमविधानं, न वाक्यभेदो भवति ॥ यदुच्यते, न क्षौमस्य विधायकोऽस्तीति । तदुच्यते । आदधीयातामिति तद्विधास्यति । नन्वेतदाधानं श्रुत्या विधातुं समर्थं, नान्यदिति । उच्यते । शब्दान्तरेण विहितत्वादाधानस्य न विधायकं, विहितत्वाच्च पुंसः सद्वितीयस्य तस्यापि न विधायकम् । अतस्तदसम्भवात् क्षौमस्य विधायिका लिङ् भविष्यति । वाक्यसामर्थ्यात् । यत्त्वस्मिन् पक्षेऽत्यन्ताय स्वार्थं जहातीति । नात्यन्ताय हास्यति । आधाने वासः क्षौमं कुर्यादिति । अस्मिन् पक्षे पुंशब्दः स्त्रीपुंसयोर्वृत्त इति गम्यते । अस्ति हि तत्र तस्य निमित्तं पुमान् सद्वितीयः । एवमादि च दृष्ट्वा भगवता पाणिनिना सूत्रं प्रणीतं, पुमान् स्त्रिया इति । तस्य विषये पुंशब्दः शिष्यमाणः साधुर्भवति, न स्त्रीशब्द इति । तस्मादेकः पुमानाधीत, न द्वाविति ॥ २३ ॥ सि० ॥ एकस्यैव पुंस आधानाधिकाराधिकरणम् ॥ ५ ॥

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यवमादिष्वेतदुक्तं स्त्रीपुंसयोः सहाधिकार इति । अथेदानीं सन्दिह्यते । किं सर्वं याजमानं पत्न्या कर्त्तव्यम्, उत यावदुक्तमाशीर्ब्रह्मचर्यं चेति । किं प्राप्तम् । सर्वं याजमानं पत्न्या स्यात् । सापि हि यजमाना । तुल्यत्वात् । तस्मात् सर्वं तस्या इति ॥ एवं प्राप्ते ब्रूमः । तस्या यावदुक्तं स्यात् । वचनप्रामाण्यात् । आशीः ब्रह्मचर्यं च स्यात् । कस्मात् । अतुल्यत्वात् । अतुल्या हि स्त्रीपुंमाः । यजमानः पुमान् विद्वांश्च, पत्नी स्त्री च अविद्या च ॥ किमतः ? यद्येवं हि एतदतुल्यत्वम् । एतदतो भवति । क्रत्वर्थेषु यानि याजमानानि श्रवणानि, तेषूपादेयत्वेन श्रवणाद् विवक्षितं लिङ्गम् । तेन तेषु पत्नी न स्यात् । यानि च क्रत्वर्थानि समन्त्रकाणि तेष्वविद्यत्वात् पत्नी न स्यात् ।

तत् पत्न्या अध्ययनस्य प्रयोजकं स्यादिति यद्युच्येत । तन्न । असत्यपि प्रयोजकत्वे तस्य निर्वृत्तिर्भविष्यति । अस्ति हि तस्य पुमान् निर्वर्त्तक । यच्च क्रत्वर्थं, तदेकेन येन केनचिन्निर्वर्त्तयितव्यम् । तस्मात् प्रतिषिद्धस्य पत्न्या अध्ययनस्य पुनः प्रसङ्गे, न किञ्चिदस्ति प्रमाणम् । अतस्तदपि पत्नी न कुर्यात् । यास्त्वाशिषो, यच्च ब्रह्मचर्यं, तत् पुरुषं प्रति गुणभूतम् । न तत्रान्यतरेण कृते सिद्ध्यति । अन्यतरस्य हि संस्कारो हीयेत । न च तत्रोपादेयत्वेन यजमानस्य श्रवणम् । तस्माल्लिङ्गमप्यविवक्षितम् । अत आशीर्ब्रह्मचर्यं चोभयोरपि स्यात् । यच्चाहत्य उच्यते । यथा, पत्न्या आज्यमवेक्षते इति । तस्मादतुल्यत्वादसमानविधाना पत्नी यजमानेन भवितुमर्हतीति ॥ ॥२४॥ पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकाराधिकरणम् ॥ ६ ॥

## चातुर्वर्ण्यमविशेषात् ॥ २५ ॥

अग्निहोत्रादीनि कर्माण्युदाहरणम् । तेषु सन्देह । किं चतुर्णां वर्णानां तानि भवेयु, उत अपशूद्राणां त्रयाणां वर्णानामिति । किं तावत् प्राप्तम् । चातुर्वर्ण्यमधिकृत्य, यजेत, जुहुयादित्येवमादि शब्दमुच्चरति वेदः । कुत. । अविशेषात् । न हि कश्चिद्विशेष उपादीयते । तस्माच्छूद्रो न निवर्त्तते ॥ २५ ॥ पूर्व० ॥

## निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । त्रयाणामधिकारः स्यात् । कुत. । अग्न्याधेये निर्देशात् । अग्न्याधेये त्रयाणां निर्देशो भवति । वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति । शूद्रस्याधाने श्रुतिर्नास्तीत्यनग्नि शूद्रोऽसमर्थोऽग्निहोत्रादि निर्वर्त्तयितुम् । तस्मादग्निहोत्रं जुहुयात् स्वर्गकाम इत्येवमादिषु शूद्रस्य प्रापिका श्रुतिर्नास्ति । ब्राह्मणादीनेवाधिकृत्य सा प्रवर्त्तते । ते हि समर्थाः । अग्निमत्त्वात् । आहवनीयादयो न शूद्रस्य । अविधानात् । संस्कारशब्दत्वाच्चाहवनीयादीनाम् । तस्मादनधिकृतोऽग्निहोत्रादिषु शूद्र इत्यात्रेयो मन्यते स्म ॥ २६ ॥ सि० ॥

## निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात् ॥ २७ ॥

यदुक्तम्। अनधिकारः शूद्रस्येति। तन्न। सर्वं हि अर्थिनमधिकृत्य यजेतेत्युच्यते। सोऽसति प्रतिषेधवचने शूद्रान्न व्यावर्त्तते। यत्त्वसमर्थोऽग्न्यभावादिति। स्यादेवास्याग्निरर्थप्राप्तः। कामश्रुतिपरिगृहीतत्वात्॥ अत्राह। नन्वग्न्याधेयचोदना ब्राह्मणादिसंयुक्ता, न शूद्रस्येति। उच्यते। निमित्तार्थेन ताः श्रुतयो न प्रापिकाः। कथम्। निमित्तस्वभावा एते शब्दाः। ब्राह्मण आदधानो वसन्ते, राजन्यो ग्रीष्मे, वैश्यः शरदीति ब्राह्मणादीनां वसन्तादिभिः सम्बन्धो गम्यते। तेन वसन्तादिसम्बन्धार्था ब्राह्मणादय इत्येव गम्यते। तथा च आदधातिर्न वाक्येन शूद्राद् व्यावर्त्तितो भविष्यति। तस्माद् बादरिः सर्वाधिकारं शास्त्रं मन्यते स्मेति गम्यते॥ २७॥ पूर्व०॥

## अपि वान्यार्थदर्शनाद् यथाश्रुति प्रतीयेत॥ २८॥

अपि वेति पक्षो व्यावर्त्यते। यथाश्रुत्येव प्रतीयेत। ब्राह्मणादयो हि आधाने श्रूयन्ते। तेन ब्राह्मणादिकर्तृकमाधानम्। वसन्तादिश्रवणाच्च वसन्तादिकालकम्। तथा च इदं शूद्रवर्जितानामेवानुक्रमणं भवति। बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्येति। शूद्रस्य साम नाऽऽमनन्ति। तथा, पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्येति। तथा आधाने अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्य इति। एवमब्रह्मसामकमव्रतकमप्रक्रमकं च शूद्रस्य प्रयुक्तमपि कर्म निष्फलं स्यात्। तस्मान्न शूद्रो जुहुयाद् यजेद् वा॥ २८॥ उत्तरम्॥

## निर्देशात्तु पक्षे स्यात्॥ २९॥

नैतदेवम्। शूद्रस्याग्न्यभावादनधिकारोऽग्निहोत्रादिष्विति। अस्ति हि शूद्रस्याधानम्। य एवं विद्वानग्निमाधत्त इति शास्त्रं सामान्येन। इदमपि निमित्तार्थं भविष्यति। तस्मात् सर्वाधिकारं शास्त्रं भवितुमर्हतीति॥ २९॥ पूर्व०॥

## वैगुण्यान्नेति चेत्॥ ३०॥

अथ यदुक्तं, अब्रह्मसामकमव्रतकमप्रक्रमकं च शूद्रस्य कर्म प्रयुक्तमपि फलं न साधयेद् विगुणमिति, तत् परिहर्त्तव्यम्॥३०॥आ०॥

## न काम्यत्वात्॥ ३१॥

नैष परिहारः। कामत्वात्। कामयिष्यते शूद्रः। अभीवर्त्तं नाम

ब्रह्मसाम । तद्धि अनारभ्य किञ्चिद् आम्नातमविशेषेण । चक्षुर्विमित आदध्यादिति अनियतप्रक्रमेषु शूद्रस्य नियम्यते । व्रतेऽपि, मस्तु शूद्रस्येति सम्बन्धदर्शनादध्यवसीयते । मस्तु एव शूद्रस्य । तस्माच्चातुर्वर्ण्यमधिक्रियेत ॥ ३१ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥

व्रते च विशेषोऽवगम्यते तत्प्राधान्यम् । पुरुषप्राधान्यं हि व्रते । किमतो, यत् पुरुषप्रधानता । एतदतो भवति । पुरुषप्रधान. संस्कारो न शक्नोत्यनुपसह्रियमाणस्तस्याधिकारं व्यावर्त्तयितुम् । तत् कथमिति । यजेतेति हि स्वर्गकामेऽभिधीयमाने तत्काम' शूद्रो, नाभिहिते इति कथं गम्यते । किं हि स यागस्य पुरुषनिर्वर्त्यं न निर्वर्त्तयति । व्रतमिति चेत् । न । सामर्थ्योपजननाय हि तद् यस्यैवोच्येत, तस्यैव तेन विना न सामर्थ्यं, नान्यस्य । एवमेव हि व्रतस्याङ्गभावो, यत् कर्त्तार समर्थं करोति । यस्य तु तेन न प्रयोजनं, स तदनपेक्ष्यैव यागमभिनिर्वर्त्तयति । तस्मादप्यशूद्रवर्जनम् ॥ ३२ ॥ युक्तिः ॥

## अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥३३॥

एवं न प्रापकाणि श्रवणानीत्युक्तम् । शक्यते तु वक्तुं प्रापकाणीति । न च सूत्रकारेण तद् व्यपदिष्टं, नैमित्तिकेष्वपि तेषु सत्सु शक्य एव शूद्रपर्युदासो वक्तुमिति, न तदादृतम् । हेत्वन्तरं व्यपदिष्टम् । अपि वेति पक्षव्यावर्त्तनम् । एवमपि सति नैमित्तिकेऽपि ब्राह्मणादिश्रवणे सति अपशूद्राणामेवाधिकारः । कुतः । वेदनिर्देशात् । वेदे हि त्रयाणां निर्देशो भवति । वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, वर्षासु वैश्यमिति । वेदाभावादसमर्थः शूद्रो यष्टुम् । तस्मान्नाधिक्रियेत ॥ ३३ ॥ उत्तरम् ॥

## गुणार्थित्वान्नेति चेत् ॥ ३४ ॥

गुणेनाध्ययनेन अर्थः । शूद्रोऽनुपनीतः स्वयमुपेत्याध्येष्यते । तथाऽस्य सामर्थ्यं जनिष्यते इति ॥ ३४ ॥ आ० ॥

## संस्कारस्य तदर्थत्वाद् विद्यायां पुरुषश्रुतिः ॥ ३५ ॥

उच्यते । विद्यायामेवैषा पुरुषश्रुतिः । उपनयनस्य संस्कारस्य तदर्थत्वात् । विद्यार्थमुपाध्यायस्य समीपमानीयते, नादृष्टार्थं, कुड्यं वा कर्त्तुम् । सैषा विद्यायां पुरुषश्रुतिः । कथमवगम्यते । आचार्य-

करणमेतदभिधीयते । कुत । आत्मनेपददर्शनात् । नयतिराचार्य्यकरणे वर्त्तते। तदर्थसम्बन्धादुपनयनमाचार्य्यकरणप्रयुक्तम् । वेदाध्यापनेन चाचार्य्यो भवति।तस्माद् वेदाध्ययने ब्राह्मणादय. श्रुता. । शूद्रस्य न श्रुतं वेदाध्ययनम् । अतोऽवेदत्वादसमर्थ. शूद्रो नाधिक्रियते इति ॥ ३५ ॥ आ० ॥

## विद्यानिर्देशान्नेतिचेत् ॥ ३६ ॥

इति चेत् पश्यसि, अवैद्यत्वादसामर्थ्यादनधिकृत शूद्र इति । नैष दोष. ।विद्यानिर्देशात्। विद्यां निर्देक्ष्यति। अनुक्तामप्यध्येष्यते इति शक्यते हि अनुक्तमप्यध्येतुम् । तस्माच्चातुर्वर्ण्यस्याप्यधिकार ॥३६॥

## अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥

न चैतदस्ति । शूद्रोऽध्येष्यते इति । प्रतिषिद्धमस्याध्ययनं, शूद्रेण नाध्येतव्यमिति । अधीयानस्याप्यध्ययनं सफलं न भवति, दोषश्च जायते । अतोऽवैद्यः शूद्र । अस्याभाव. कर्मणीति सिद्धम् ॥ अथापि वैद्यत्वेन सिद्ध्येत्, तथाप्यनग्नित्वादभाव. कर्मणि स्यात् । अथ कथमनग्निरिति । प्रापकाणि हि ब्राह्मणादीनामाधाने वाक्यानि । ननु य एवं विद्वानग्निमाधत्ते इत्याधानस्य विधायकम् । तत्र ब्राह्मणस्य, वसन्ते अग्निमादधीतेति निमित्तार्थानि वचनानीति गम्यते । अत्रोच्यते । ब्राह्मणोऽग्निमादधीतेति श्रुत्या विधान गम्यते । य एवं विद्वानग्निमाधत्ते इति स्तुत्या । तदानुमानिकं प्रत्यक्षश्रुताद् दुर्बलम् । तस्मात् प्रापकाणि वचनानि। अत. शूद्रस्यानधिकार. ॥३७॥ आ०नि० ॥

## तथा चान्यार्थदर्शनम् ॥ ३८ ॥

अन्यार्थदर्शनं च भवति। यथा शूद्रस्य नाध्ययनमिति। किं लिङ्गं भवति ॥ यद्यु वा एतत् श्मशानं यत् शूद्र । तस्मात् शूद्रसमीपे न अध्येयमित्यनध्ययनं शूद्रस्य दर्शयति । तस्मादपशूद्राणामधिकार । नन्वाहवनीयाद्विनापि, यागो वचनप्रामाण्याच्छूद्रस्य विधीयते । उच्यते।नाऽत्र यागसद्भावो विधीयते स्वर्गकामस्य, किं तर्हि स्वर्गफलता विशिष्टस्य यागस्य । तस्मादसम्भवः शूद्रस्याग्निहोत्रादिषु ॥ ३८ ॥ युक्तिः ॥ यागे शूद्रस्यानधिकाराधिकरणम् ॥ ७ ॥

## त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥

अग्निहोत्रादिष्वेव सन्देह' । किमद्रव्यस्याधिकारो न ? इत्युच्यते । त्रयाणां द्रव्यसम्पन्नोऽधिक्रियेत, नाऽद्रव्य । कुतः । न हि शक्नोत्यद्रव्यो द्रव्यसंयुक्तं कर्मानुष्ठातुम । तस्माददद्रव्यस्यानधिकार. ॥ ॥ ३९ ॥ ॥ पूर्व० ॥

## अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

नैवं स्यात् । यदुक्तमद्रव्यस्यानधिकार इति । कुतः । अनित्यत्वात् । अनित्यो द्रव्यसयोगः । न हि कश्चिज्जात्या अद्रव्य एवं पुरुष. । अस्त्युपायो येन द्रव्यवान् भवति । यः शक्नोति यष्टुं, तस्य यजेतेति वाचको भवति । यो न कथञ्चिदपि शक्नोति यागमभिनिर्वर्त्तयितुं, तं नाधिकरोति यजेत—शब्द । यस्तु केनचित् प्रकारेण शक्नोति, न तं वर्जयित्वा प्रवर्त्तते । अर्थाच्च द्रव्यसंयोगो भविष्यति। जीविष्यति विना धनेनेत्येतदनुपपन्नम् । तस्मादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥ सिद्धान्त ॥ यागे निर्धनस्याधिकाराधिकरणम् ॥ ८ ॥

## अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥

अग्निहोत्रादिष्वेवाङ्गहीनं प्रति सन्देह. । किमसावधिक्रियते, उत नेति । तत्राप्यधिकरणातिदेश । असमर्थ इति कृत्वा पूर्व पक्षः । शक्तेर्विद्यमानत्वादुत्तरः । तदिदमभिधीयते, अङ्गहीनश्च तद्धर्मा । किं धर्मा ? अद्रव्यधर्मा इति ॥ ४१ ॥ यागेऽङ्गहीनस्याप्यधिकाराऽधिकरणम् ॥ ९ ॥

## उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं त प्रति विचारः । किमधिक्रियते, न ? इति । पूर्वाधिकरणेन अधिक्रियते इति प्राप्ते ब्रूमः । नाधिक्रियते इति । कुत. । शक्त्यभावात् । नासौ केनचिदपि प्रकारेण शक्नोति यष्टुम् । तस्मात्तस्याऽधिकारो न गम्यते ॥ ननु यच्छक्नोति तत्राधिक्रियत इति चक्षुर्विकलो विना आज्यावेक्षणेन, विना विष्णुक्रमैः पङ्गु', विना प्रैषादिश्रवणेन च बधिरः । एतान् पदार्थान् प्रति चक्षुर्विकलादीनामनधिकार इति । नेत्युच्यते । न आज्यावेक्षणादि पुरुष प्रति निर्दिश्यते । यदि हि तं प्रति निर्दिश्येत ततो विकलोऽप्यधिक्रियेत । क्रतुं प्रति एषामुपदेशः, प्रकरणाविशेषात् । पुरुषस्य चाख्यातनानभिधानादिति । उक्तमेतद्, विधिर्वा संयोगान्तरादित्यत्र । तैश्च विना

विगुणं कर्म प्रयुक्तमपि न फलं साधयेत् । तस्मात्तस्यानधिकारः ॥ ४२ ॥ अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् ॥ १० ॥

अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

दर्शपूर्णमासयोः श्रूयते- आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते इति । तत्र सन्देहः । किम् अत्र्यार्षेयस्य अधिकार, उत नेति । किं प्राप्तम् । अत्र्यार्षेयोऽप्यधिक्रियते इति । कुतः । आर्षेयं वृणीते इति सामान्यवचनम् । तस्मादेकं वरिष्यति द्वौ वा । तच्च दर्शयति— एकं वृणीते द्वौ वृणीते इति । तथा प्रतिषेधति, न चतुरो वृणीते इति न पञ्चातिवृणीते इति । न हि अप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मादत्र्यार्षेयोऽप्यधिक्रियेत ॥ एवं प्राप्ते ब्रूमः । यो न त्र्यार्षेय स नाधिक्रियेत । कुतः ? । त्रीन् वृणीते इति विशेषवचनात् । विधिश्च अप्राप्तत्वात् । नन्वेकं वृणीते इत्यपि विशेषवचनमस्ति । नेत्युच्यते । विधायिकाया विभक्तेरभावात् । ननु स्तुत्या विधास्यन्ते । यथा, त्रीन्, वृणीते इति । उच्यते । त्रयाणामेव स्तुतिः । सा त्रित्वं विधास्यति । एकं वृणीते इत्यवयुत्यनुवादोऽयं त्रयाणामेव । तत्रापि त्रित्वमेव श्रूयते विधातुम् । एवमेकवाक्येन विधानं भविष्यतीति । न चतुरो वृणीते, न पञ्चातिवृणीत इति नित्यानुवादो भविष्यति । तस्मात् त्र्यार्षेयस्य अधिकारो, नान्यस्येति ॥४३॥ दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाऽधिकाराधिकरणम् ॥ ११ ॥

वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात् ॥ ४४ ॥

आधाने श्रूयते, वर्षासु रथकार आदधीतेति । तत्र सन्देहः । किं त्रैवर्णिकानामन्यतमो रथकार, आहोस्वित् अत्रैवर्णिक इति । किं प्राप्तम् । रथकारस्य अत्रैवर्णिकस्याधानमेतत् । कुतः । वचनात् । न हि वचनस्य किञ्चिदकृत्यमस्ति । सर्वशेषश्चात्रैवर्णिक आधाने । ब्राह्मणराजन्यविशामुक्तमाधानम् । परिशेषादत्रैवर्णिको रथकारः स्यात् ॥ ४४ ॥ सि० ॥

न्याय्यो वा कर्म्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥

न्याय्यो वा स्यात् त्रैवर्णिको रथकार, रथकर्मणा विशेषेणोच्यते । शूद्रो हि असमर्थत्वात् प्रतिषिद्धः । तस्मात् त्रैवर्णिको रथ-

कारः स्यात् ॥ ४५ ॥ पूर्व० ॥

अकर्म्मत्वात्तु नैवं स्यात् ॥ ४६ ॥

नास्ति त्रैवर्णिको रथकारः । प्रतिषिद्धं हि तस्य शिल्पोपजीवित्वम् । अत्रैवर्णिकस्त्वस्ति । तस्माद् वचनप्रामाण्यात् स आधास्यते ॥ ४६ ॥ उत्तरम् ॥

आनर्थक्यं च संयोगात् ॥ ४७ ॥

ब्राह्मणादिषु वसन्तादयो नियताः । तान् प्रति वर्षा उच्यमाना अप्यसम्बन्धादानर्थक्यं प्राप्नुयुः । तस्मादत्रैवर्णिको रथकार इति ॥ ४७ ॥ युक्ति० ॥

गुणार्थेनेति चेत् ॥ ४८ ॥

एवं चेत् पश्यसि, नास्ति त्रैवर्णिको रथकार । प्रतिषिद्धत्वाच्छिल्पोपजीवित्वस्येति गुणार्थेन कश्चिद्भविष्यति रथकारो वैतथ्येन। तस्येदमाधानं विज्ञायते ॥ ४८ ॥ आ० ॥

उक्तमनिमित्तत्वम् ॥ ४९ ॥

उक्तमेतदस्माभिः, न निमित्तार्थान्येतानि श्रवणानीति । किमतो यदि न निमित्तार्थानि ॥ एतदतो भवति, प्रापकाणीति । प्रापितत्वात् तेषामाधानस्य, पुनः प्रापकमनर्थकम् । तेन यस्याप्राप्तं, तस्य भविष्यतीति । अथोच्येत, एतदेकं निमित्तार्थं भविष्यतीति । नैतदेवमवकल्पते । वसन्तादिसंयुक्तं तत् कथमिव वर्षाभिः सम्बद्ध्येत । अपि च । प्रापकपक्षे आधानं विधीयते श्रुत्या । निमित्तपक्षे पुनर्वर्षा विधातव्याः, वाक्येन । श्रुतिश्च वाक्याद् बलीयसीति । तस्मादत्रैवर्णिकस्येदमाधानमिति ॥ ४९ ॥ आ० नि० ॥

सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् ॥५०॥

न तु सर्व एवाऽत्रैवर्णिको रथकारः । सौधन्वनाः इत्येष जातिवचनः शब्दः । सौधन्वना नाम जातिरभिधीयते । हीनास्तु किञ्चित् त्रैवर्णिकेभ्यः । जात्यन्तरं, न तु शूद्राः, न वैश्या, न क्षत्रियाः । तेषामिदमाधानम् । कथमवगम्यते । प्रसिद्धेर्मन्त्रवर्णाच्च । मन्त्रवर्णो हि भवति । सौधन्वना ऋभव शूरचक्षस इति । ऋभूणान्त्वेति रथकारस्याधानमन्त्रः । तस्मात् सौधन्वनां ऋभव इति । ऋभवश्च रथकाराः । अपिच, नेमि नयन्ति ऋभवो यथा इति ये नेमि नयन्ति ते

ऋभव इत्युच्यन्ते । रथकाराश्च नेमिं नयन्ति । तस्मात्त्रैवर्णिकाना-मशूद्राणामेतदाधानमिति ॥ ५० ॥ द्वितीयसिद्धान्तः ॥ चातुर्वर्णाति-रिक्तस्य रथकारस्याधानेऽधिकाराधिकरणम् ॥ १२ ॥ रथकारन्याय ॥

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥

वास्तुमध्ये रौद्रं चरुं निर्वपेद् यत्र रुद्रः प्रजाः शमयेदित्येता-मिष्टिं प्रकृत्य उच्यते । एतया निषादस्थपतिं याजयेदिति । निषाद-स्थपतिं प्रति सन्देहः । किमधिकृतानामन्यतमः, उतान्य एवेति । अन्यतम इति ब्रूमः । स हि समर्थः । विद्वत्त्वादग्निमत्त्वाच्च । अन्यो-ऽविद्वत्त्वादनग्नित्वादसमर्थ इति ॥

ननु निषादस्थपतिशब्दस्तत्र नोपपद्यते । उच्यते । न, नोपपद्य-ते । निषादानां स्थपतिरिति षष्ठीसमासो भविष्यति, श्रेष्ठो निषा-दानाम् । तस्मादधिकृताधिकारमेतच्छास्त्रमिति । एवं प्राप्ते ब्रूमः । स्थपतिर्निषादः स्यात् । शब्दसामर्थ्यान्निषाद एव स्थपतिर्भवितुमर्ह-ति ? । कस्मात् । शब्दसामर्थ्यात् । निषादं हि निषादशब्दः शक्नो-ति वदितुं श्रवणेनैव । निषादानां तु स्थपतिं लक्षणया ब्रूयात् । श्रुति-लक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा । अथोच्यते, नैष दोषः । निषादशब्दो निषादवचन एव । षष्ठी सम्बन्धस्य वाचिकेति । तन्न । षष्ठ्यश्रवणात् । नाऽत्र षष्ठीं शृणुमः । आह । लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते इति । सत्यमवगम्यते । न तु लोपेन । केन तर्हि । निषादशब्दलक्षणया । तस्याश्च दौर्बल्यमित्युक्तम् । समानाधिकरण-समासस्तु बलीयान् । तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः । द्विती-या च विभक्तिस्तन्त्रेणोभाभ्यां सम्बध्यते । तेन द्वितीयानिर्दिष्टो निषादो गम्यते । तत्र षष्ठ्यर्थं कल्पयन्नश्रुतं गृह्णीयात् । तस्मान्निषाद एव स्थपतिः स्यात् ॥ ५१ ॥

लिङ्गदर्शनाच्च ॥ ५२ ॥

लिङ्गं दृश्यते । कूटं दक्षिणा इति निषादस्य द्रव्यं दर्शयति । कूटं हि निषादानामेवोपकारकं, न आर्याणाम् । एवं स्वमेव तन्निषा-दानामिति ॥ ५२ ॥ त्रैवर्णिकभिन्नस्य निषादस्य रौद्रयागेऽधिका-राधिकरणम् ॥ १३ ॥ निषादस्थपतिन्यायः ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य प्रथमः पादः ॥ ६ ॥ १ ॥

## अथ षष्ठे अध्याये द्वितीयः पादः ॥ ६ ॥ २ ॥

### पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥

द्वादशाहेन प्रजाकामं याजयेद् ऋद्धिकामा उपेयुः । तथा तत्र तत्रैवङ्कामा सत्रमुपेयुः, सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति । तेषु सन्देहः । किं तस्य तस्य कृत्स्नेन फलेन अर्थिनः सत्रेऽधिकारः ? उत पर्षदोऽर्थिन्या अधिकार इति । आह । नन्वार्थिनो बहुसंख्याविशिष्टा निर्दिश्यन्ते, कथमेषामेकशोऽधिकारो भविष्यतीति । उच्यते । ऋद्धिकामा इत्येवमादि विधीयमानम् ऋद्धिलक्षितेषु समस्तेषु व्यस्तेषु च प्राप्तं न शक्यं बहुवचनेन विशेषेऽवस्थापयितुम् । तेन तं तमधिकुर्य्यात्, पर्षदं वेति भवति सन्देहः ॥

किं तावत् प्राप्तम् । एकैको न समर्थो बहुकर्तृकं सत्रं रचयितुम् । पर्षदं तु कर्त्रीमर्थिनीमवगच्छामः । न चाकर्तुः फलं भवति । न चैकः कर्त्ता उच्यते । तस्मात् समस्तानां फलम् । एकैकस्य फलाऽवयवः । मध्यकं स्यात् कृत्स्नं फलमिति ॥ एवं प्राप्ते ब्रूमः । तस्य तस्यार्थिनः कृत्स्नं फलं सत्रान्निवर्त्तते । कुतः । पुरुषार्थस्यैकैकस्य सिद्धिर्यतो भवति । सह क्रियमाणे सर्वे एकैकः पुरुषार्थं साधयन्ति तन्त्रेण । कर्तॄणां फलं च भवति । एकैकश्चात्र कर्त्ता ॥ आह । नन्वेतदुक्तमेकैको न शक्नोति बहुकर्तृकं कर्तुमिति । उच्यते । शक्नोत्येकैकस्य स्वातन्त्र्यविवक्षायाम् । यदा एकैकः स्वातन्त्र्येण प्रवर्त्तते, तदाऽन्यान् सङ्ख्यानिर्वृत्त्यर्थं सामादिभिः प्रयोक्ष्यते । एवमेकः पुरुषार्थं साधयति, इतर इतरश्चातेन सर्वे कर्त्तारः सव्यपेक्षा भविष्यन्ति । सर्वे चेत् कर्त्तारः, पृथक्पृथगेव फलेन सम्भन्त्स्यन्ते ॥ १ ॥ सि० ॥

### अपि चोत्पत्तिसंयोगो यथा स्यात् सत्त्वदर्शनं तथा भावो विभागे स्यात् ॥ २ ॥

अपि च, नैतदविरुद्धम् । यदेकं कर्म बहुभिः क्रियत इति । यद्युच्येत । विरुद्धम् । एकेन कर्मणि कृते द्वितीयः किं कुर्यादिति । अत्रोच्यते । पर्यायेण । क्रियायामेवं दोषः । तन्त्रेण तु क्रियायां भवति क्वचित् सम्भवः । यथा स्यात् सत्त्वदर्शनं तथा भावो विभागे स्यात् । यथा एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शनमेकैकेन कृत्स्नम-

ऽभिनिर्वर्त्यते । एवमेव सत्रे तन्त्रभावो भवेत्। सर्वेषां मध्यकं द्रव्यम्। मध्यकस्याऽऽहवनीयस्योपरि अध्वर्युरपविद्धयति । तत्र सर्वे कर्त्तारस्तन्त्रेण भवन्ति ॥ न चात्रोत्पन्नसंयोगः। उत्पत्त्यैव तु सङ्ख्यया कर्म सयुज्यते । यदि हि उत्पन्नं संयुज्येत, ततोऽनेकसम्बन्धार्थमिति वचनं गम्येत । उत्पत्तिसंयोगे त्वेतन्नास्ति। तस्मादेकैकस्य कृत्स्नेन फलेनाऽभिसम्बन्ध इति ॥ २ ॥ युक्तिः॥ सत्रे प्रत्येकस्य सत्रिणः फलसम्बन्धाधिकरणम् ॥ १ ॥

**प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥**

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रूयते। अत्र सन्देह । किमनियमेन एको द्वौ बहवो वा यजेरन्, अथवैक एव यजेतेति। ननु तृतीये उक्तं, शास्त्रफलं प्रयोक्तरीति । यदा प्रयोक्तरि, तदा विवक्षितमेकत्वं यथा, तथा वक्ष्यामः। इह तु तदेवाक्षिप्यते। पुनश्च निर्णेष्यते इति ॥

किं प्राप्तम् ? यथाकामी प्रयोगे स्यात्। कुत ?। पुरुषश्रुते'। पुरुषः श्रूयते। पुरुषे यागं श्रावयित्वा कृतार्थ' शब्द एकस्य द्वयोर्बहूनां वा यागं न वारयति। नाऽसौ पुरुषो यागे श्रूयते, यागमभिनिर्वर्त्तयेद्, यागेन वा फलमभिनिर्वर्त्तयेदिति । कथन्तर्हि। यागेन फलं प्राप्नुयादिति । यागस्य वा फलनिर्वृत्तेर्वा नाङ्गं पुरुष.। यदि हि अङ्गमभविष्यद् यागे फलनिर्वृत्तौ वा, तदा संख्या गुणभूता तदङ्गं पुरुषं परिच्छिन्द्यात्। अथ पुनरनङ्गीभूतं प्रकाशयल्लक्षणत्वेनैव पुरुषेऽभिसम्बद्ध्येन, न गुणवचनतया। तत्र चाविवक्षितं सङ्ख्यावचनम्। यावान् अर्थी समर्थश्च तावन्तं सर्वमधिकृत्य एतदुच्यमानं न शक्यते एकेन वचनेन विशेषयितुम् । कथञ्च पुरुषप्राधान्यम् । न फलोत्पत्त्या किञ्चित् प्रयोजनमस्ति, न यागोत्पत्त्या । आत्मा तु फलसम्बद्धः सर्वस्येष्ट । तदर्थं कर्म कर्त्तव्यम् । इतरथोच्यमानमपि न क्रियेत। तत्र वचनानर्थक्यं स्यात्। तस्माद् यथाकाम्यं स्यादेको द्वौ बहवो वा यजेरन्निति । तथाच दर्शयति, युवं हि स्थः स्वर्पती इति। द्वयोर्यजमानयो. प्रतिपदं कुर्यादिति। एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति द्वयोर्बहूनां च यागं प्रदर्शयति ॥३॥ पूर्व०॥

**प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥**

इति चेत् । इदं चेत् पश्यसि— प्रत्यर्थं श्रुतिभावः स्यात्, यागमभिर्निर्वर्त्तयेत् ततश्च फलं प्राप्नुयादिति । कुतः ? । एतदुभयं हि एतस्माद् अवगम्यते । कतरदत्र जहीम इति नाध्यवस्याम । तस्माद् उभयमपि प्रत्येतव्यम् । आह । नन्वनेकार्थवचनता न न्याय्येति । उच्यते । यद् अवगम्यते तन्न्याय्यम् । उभयं च प्रतीयते । तस्मादुभयार्थवचनतैव न्याय्या । यागं प्रति च गुणभावाद् विवक्षितमेकवचनम् ॥ ४ ॥ आ० ॥

## तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ॥ ५ ॥

नैतदेवं, तादर्थ्ये पुरुषे प्रधानभूते सति न अङ्गभूत पुरुषः प्रतीयते । अनुक्ते हि न्याये न प्रतीमोऽर्थान्तरम् । यतो गुणभावात् प्रधानभावः । प्रधानभूतश्चात्र कर्त्ता । वचनस्यार्थवत्त्वात् । अतो न गुणभावः कर्तुरवंकल्पते । चोदनैकत्वात् । एका हि विधायिका चोदना। सा यदि फलोत्पत्तिं वा यागोत्पत्तिं विधत्ते, तदा कर्त्ता न स्वार्थेन । यदा पुनः स्वार्थेन, तदा यागः फलं वा तादर्थ्येन । न चैतद् यौगपद्येन भवति, स्वार्थ एकस्तदर्थ इतरो वैपरीत्येन वेति । यथोभाभ्यां बाहुभ्यामिषूनस्यति देवदत्त इति । गम्यते, न च यौगपद्येन । यदा दक्षिणेनास्यति, तदा सव्येन धनुःपृष्ठं नमयति, न तेनाप्यस्यतीति गम्यते । तत्र व्यापृतत्वात् । एवं यदा पुरुषप्राधान्यं, तदा यागस्य फलस्य वा गुणभावो गम्यते । तत्र व्यापृतत्वान्न तयोः प्राधान्यमपि गम्यते । तस्मान्न यागे फले वा पुरुषस्य गुणभावः । अतो यथाकाम्यं स्याद्, एको द्वौ बहवो वा यजरेन्निति ॥ ५ ॥ आ०नि० ॥

## अपि वा कामसंयोगे सम्बन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥ ६ ॥

अपि वेति पक्षव्यावृत्तिः । प्रयोगायोपदिश्येत कर्त्ता, न स्वार्थेन। कथम् । यजेतेत्यस्यार्थः, यागं कुर्याद्, यागेन वा कुर्यादिति । सत्ताऽभिव्यक्तिमात्रं गम्यते, न फलस्य कर्त्ता धाता वा। स्वर्गकामशब्दश्च स्वर्गकाममात्रे वर्त्तते, न विशेषमवलम्बते, आत्मन परस्य वेति । शब्दप्रमाणकाश्च वयमीदृशेष्वर्थेषु । कथन्तर्हि कामस्यात्मसम्बन्धोऽवगम्यते । सम्बन्धात् । फलकामोऽनुक्तेऽपि शब्देन आत्मन एव

फलं कामयते, न परस्य । यत्र तूभावर्थौ वक्तव्यौ भवतः, प्रत्यर्थं तत्र विधिः श्रूयते । यथा कृष्णविषाणया कण्डूयति, चात्वाले कृष्णविषाणां प्रास्यतीति । यत्रैवं द्वे श्रुती विधात्र्यौ भवतस्तत्र गुणभावः प्राधान्यं च गम्यते । न त्वत्रैवं द्वे विधायिके श्रुती विद्येते । गुणभूतस्तु पुरुषः श्रूयते भावयेदिति । तत्र यज्यर्थः करणं कर्म वा । सम्बन्धात्तु पुरुषप्राधान्यं, न कस्यचित् सुखेन उत्पन्नेन प्रयोजनम् । सुखसम्बन्धेन आत्मनस्तु कृत्यम् । तस्मात् सम्बन्धात् पुरुषप्राधान्यं गम्यते, न श्रुते । अतो गुणभूतस्य पुरुषस्य सङ्ख्या विवक्षितेति ॥ ६ ॥ सि० ॥

अन्यस्य स्यादिति चेत् ॥ ७ ॥

इति चेद् भवान् पश्यति, एवं सति यदि स्वर्गकामोऽन्यस्यापि स्वर्गं कामयमानो भवति । अन्यस्य स्वर्गं कामयमानोऽपि अन्यो यजेत । तत्र पूर्वोक्तो न्यायः प्रत्युद्धृतो भवति, शास्त्रफलं प्रयोक्तरीति ॥ ७ ॥ आ० ॥

अन्यार्थेनाभिसम्बन्धः ॥ ८ ॥

न परस्य स्वर्गकाम इत्येवं न यजेत, न अन्यस्य स्वर्गकामशब्दो न वाचक इति । कथं तर्हि । फलमसौ न प्राप्नोतीति । कथं पुनः फलस्याप्राप्तिः । उपग्रहविशेषश्रवणात् । यजेतेति । यद्वा आधाने । ब्राह्मणो वसन्तेऽग्निमादधीतेति । तदा तु कामश्रुतावुपग्रहोऽनुवाद एव ॥ ८ ॥ आ० नि० ॥

फलकामो निमित्तमिति चेत् ॥ ९ ॥

एवञ्चेद् भवान् मन्यते, न स्वर्गकामशब्दो न वाचक इति । अन्यो न यजते फलाभावात् । नास्य याग इति । सूक्तवाकफलार्थिता तर्हि यजेत । आशास्तेऽयं यजमानः, आयुराशास्त इति प्रयोजयितारं निर्देक्ष्यति होता । फलविधिश्च सूक्तवाकेन प्रस्तरं प्रहरतीति विधानात् । यदि फलविधिरयं मान्त्रवर्णिकस्तर्हि सूक्तवाकेन प्रस्तरः प्रहृतो भवति । इतरथा अदृष्टं कल्प्येत । तस्माद् आनुषङ्गिकफलार्थमन्यस्य स्वर्गकामोऽन्यो यजेतेति ॥ ९ ॥ आ० ॥

न नित्यत्वात् ॥ १० ॥

नैतदस्ति । यस्यैव प्रधानकर्मफलं, तस्यैवानुषङ्गिकमपि भवितुमर्हति । एवं स्वार्थेन आधानं कृतं भवति । न हि आधानस्य

स्वार्थतायामस्ति विशेषः । प्रधानफलं वा आनुषङ्गिकं वा सर्वमेव आधातरि समवेतुमर्हति । नित्यकाम्यता च विरुद्ध्येत । यद्यायुरादिकामो यजेत, न तर्हि नित्यम् । यदि नित्यं न आयुरादिकामः । तस्मान्नावस्थितो न्याय प्रत्युद्ध्रियेत । न च पुरुष प्रधानभूतश्चोद्यते । गुणभावात्त्वस्य विवक्षितमेकत्वम् । तस्मादेक एव यजेत ॥ ॥ १० ॥ आ०नि० ॥

कर्म तथेति चेत् ॥ ११ ॥

अथ यदुक्तं, द्वयोर्बहूनाञ्च यागं दर्शयति । युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्य्यात् । एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य. प्रतिपदं कुर्य्यादिति । द्वियजमानके बहुयजमानके च कर्मणि प्रतिपद्विधानं कर्म तथा युक्तं स्यादिति । तत् परिहर्त्तव्यम् ॥ ११ ॥ आ० ॥

न समवायात् ॥ १२ ॥

नैतदेवम् । समवेतं हि कर्म विद्यते द्वाभ्यां यजमानाभ्यां बहुभिश्च यजमानैः । वचनेन । यथा अहीनाः । तेषु प्रतिपद्विधानमर्थवद्भविष्यति । तस्मादेको यजेतेति ॥ १२ ॥ ॥ आ० नि० ॥ दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात् ॥१३॥

प्रजाकामो यजेत, ग्रामकामो यजेतेत्येवमादि कर्म समाम्नायते । तत्र सन्देहः । किं प्रक्रान्तं नियोगतः समापनीयम्, उतेच्छया कार्य्यं हेयं वेति । किं प्राप्तम् । नियोगतः परिसमापयितव्यमिति । कुत. । एवं हि श्रूयते । इदङ्कामो यजेतेति । एवं तस्याऽऽख्यातस्यार्थमुपदिशन्ति । उपक्रमप्रभृति अपवर्गपर्यन्तमाहेति । उपक्रमाद्दारभ्य यावत् परिसमाप्तिरित्येतावान् व्यापारविशेषस्तस्यार्थो, न यथा पाकस्त्याग इति । तत्र हि पाकसत्तामात्रं निर्दिश्यते, न आरभ्य परिसमापयितव्यमिति । एवञ्चाऽऽख्यातार्थं लौकिका अपि प्रतिपद्यन्ते । तत्र न आरम्भे पुरुषप्रयत्नश्चोद्यते इति गम्यते । यतश्चोदितं न नियोगत आरभन्ते । नियोगतः पुनः परिसमापयन्ति । तेन नोभे आरम्भपरिसमाप्ती शब्दार्थः । किन्तर्हि । परिसमाप्ति. शब्दार्थः । परिसमाप्त्यामर्थप्राप्तत्वादारम्भस्य ।

तस्मात् परिसमाप्तिः शब्दार्थ इति गम्यते। सा चेच्छब्दार्थः, सा कर्त्तव्यतया चोद्यते। आरम्भे नास्ति कर्त्तव्यतावचनम्। तेन न नियोगत आरम्भः। नियोगतस्तु परिसमाप्तिः। तेनोपक्रान्ते कर्मणि यदि वीयात् फलेच्छा, अवाप्नोति वा फलं, तस्यामप्यवस्थायां कर्त्तव्यमेवोपक्रान्तस्य परिसमापनम्॥ नन्वर्थिनो योऽर्थः, सोऽत्र कर्त्तव्यतयोच्यते। नैतदेवम्। वाक्यार्थो हि स भवति। यागस्य तु कर्त्तव्यता श्रुत्या गम्यते। तस्माद् ग्रामकामेन याग आरब्धः परिसमापनीयः। ग्रामादिकामनावचनं निमित्तत्वेन तदा भवति। निमित्ते चोत्पन्ने यत् कर्त्तव्यमित्युच्यते तद् विनष्टेऽपि निमित्ते कर्त्तव्यमेव। उपक्रान्तस्य समापनं कर्त्तव्यमिति चोद्यते। तद् विनष्टेऽपि निमित्ते कर्त्तव्यम्। न हि तद्विनष्टमनुत्पन्नं भवति। उत्पत्तिश्च निमित्तं, न भावः। तस्माद् वीतायामपि फलेच्छायामुपक्रान्तं परिसमापयितव्यम्। क्रियाया हि निमित्तमारम्भः। सोऽपि परिसमाप्तेरिति॥१३॥ सि०॥

## फलार्थित्वाद्वाऽनियमो यथानुपक्रान्ते॥ १४॥

वाशब्दः पक्षं व्यावर्त्तयति। अनियमो वा। कस्मात्। फलार्थित्वात्। फलार्थिनः फलं चिकीर्षमाणस्योपायोऽयं विधीयते, न कर्त्तव्यता। सा हि विधीयमाना फलस्य वा यागस्य वा स्यात्। फलस्य न तावद् वक्तव्या। न हि यो यत् कामयते तस्य तत्कर्त्तव्यता उपदेष्टव्या। वेदैवासौ मयैवैतत् कर्त्तव्यमिति। उपायं तु न वेद, तमाकाङ्क्षते। इदमुपदिश्यते, याग उपाय इति यागेन क्रियते इति। न च यागस्य कर्त्तव्यता। प्रत्यक्षविरोधात्। प्रत्यक्षस्तु क्लेशो यागः। यदि यागेनान्यस्य कर्त्तव्यता, तदा न विरोधः। यागकर्त्तव्यतायां फलं कल्प्यम्। न च कल्प्यमानस्य प्रमाणमस्ति। कर्त्तव्योपदेशश्च शक्यादिष्वर्थेषु भवति। तस्माद् न यागः कर्त्तव्यः। फलकामस्य यदिष्टं तत् कर्त्तव्यमनूद्य यथाप्राप्तं यागस्य साधनता विधीयते। तेन नावश्यं समापनीयं भवति। यथाऽनुपक्रान्तं नावश्योपक्रमितव्यम् एवमुपक्रान्तं नावश्यं समापयितव्यम्। यत्तु वाक्यार्थः श्रुत्या बाध्यते इति। यत्र श्रुत्यर्थो न सम्भवति, तत्र वाक्यार्थो गृह्यते इत्युक्तमेव। तस्मादनियमः॥ १४॥ पूर्व०॥

## नियमो वा तन्निमित्तत्वात् कर्त्तुस्तत्कारणं स्यात्॥१५॥

आरम्भो हि निमित्तं समाप्ते । कथम् । तत् कर्तुं कारणं स्यात् । किं कारणम् । सत्यसङ्कल्पता । यो हि आरब्धमेवञ्जातीयकं समापयति, न तं शिष्टा विगर्हन्ते । प्राक्रमिकोऽयम् असंव्यवहार्य्य इति शिष्टविगर्हणा च दोषः । तस्माद् आरभ्य समपयितव्यम् । आह । शिष्टाः पुनः किमर्थं विगर्हन्ते इति । उच्यते । विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति ॥ १५ ॥ ॥ उत्तरम् ॥ आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम् ॥ ३ ॥

## लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥

केनचिद् गृहमुपक्रान्तं भवति, शकटं, रथो वा । वीता अस्य फलेच्छा, अवाप्नोति वा फलम् । तत्र सन्देह । किं तेन नियोगतः परिसमापयितव्यम्, उतेच्छयोत्स्रष्टव्यमपीति । किं प्राप्तम् ? । लोके कर्माण्येवञ्जातीयकान्युपक्रम्य परिसमापयितव्यानि । यथैव वैदिकानि तथैव तानि नियोगत परिसमापनीयानि । कुतः । ततोऽधिपुरुषज्ञानम् । ततस्तत्पुरुषज्ञानं भवितुमर्हति । कुत । शास्त्रात् । आम्नायते हि तक्ष्णां शास्त्रम् । तत्रापि देवताव्यापारोऽङ्गीक्रियते । पूर्वस्यां दिशि एता देवताः, इतरासु एता इति । यदि शास्त्रकृते देवताव्यापारे उपक्रम्यापरिसमाप्यमाने शिष्टविगर्हणम्, एवमिहापि भवितुमर्हति ॥ १६ ॥ पूर्व० ॥

## अपराधेऽपि च तैः शास्त्रम् ॥ १७ ॥

तेषां च लौकिकानामपराधे तैस्तक्षभि प्रायश्चित्तशास्त्रमाम्नायते । आरे भग्ने इन्द्रबाहुर्बद्धव्यः । पायसं च ब्राह्मणो भोजयितव्य इति । प्रायश्चित्तं च यददृष्टार्थं, न शास्त्रादृते । अथ प्रसङ्गपरिहारार्थं, ततोऽप्याहतमेव तदिति गम्यते ॥ १७ ॥ युक्तिः ॥

## अशास्त्रा तूपसम्प्राप्तिः शास्त्रं स्यान्न प्रकल्पकं तस्माद्र्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत् ॥ १८ ॥

तुशब्द पक्षं व्यावर्त्तयति । अशास्त्रा त्वेषामुपसम्प्राप्तिरिति ब्रूमः । स्मृतेरस्याः शास्त्र भवता अनुमीयते । न शास्त्रमन्तरेण स्मृति । न च स्मृति । न च स्मृतिमन्तरेण तक्ष्णां ग्रन्थ उपपद्यते इति । अत उच्यते, भवत्यत्र स्मृतिरेवमिदं गृहादि कर्म रमणीयं भवतीति । ना-

ऽस्मात् कर्मणोऽदृष्टं किञ्चिदिति । या चासौ रमणीयता साऽन्तरेणाऽपि शास्त्रं शक्या ज्ञातुम् । ज्ञात्वा च स्मर्यते । तस्मान्नास्याः स्मृतेः शास्त्रं प्रकल्प्यम् । यद्यन्तरेण शास्त्रं, न प्राप्येत, ततः शास्त्रमत्राऽर्थवदिति प्रकल्प्येत । तस्मान्नेदं शास्त्रोक्तम् । शास्त्रोक्ते च सामिकृते त्यक्तेऽत्यन्तं शिष्टा गर्हन्ते, देवताश्रये च । नन्वत्रापि देवताः परिगृहीताः, अस्यां दिशि इयं देवता यक्ष्यतेऽस्यामियमिति । उच्यते । पुरुषमनु देवता शिष्टाः स्मरन्ति, न गृहमनु । तस्माददोष इति ॥१८॥ सिद्धान्तः ॥ आरब्धलौकिककर्मणः समापनानियमाधिकरणम् ॥ ४ ॥

**प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥**

इदं हि उपदिशन्ति । न कलञ्जं भक्षयितव्यम्, न लशुनं न गृञ्जनं चेति । तत्र सन्देहः । किमेवञ्जातीयकं फलकामेन न भक्षयितव्यम्, निष्कामेण आद्यम्, अथवा नियोगतो वर्जयितव्यमेवेति । किं प्राप्तम् । फलार्थिना न भक्षयितव्यम् । अनर्थिनोऽनियम इति । कुतः । नियमो ह्ययमुच्यते, इदं न भक्षयितव्यमिति । एवमुक्ते द्वयमापतति । यदि वा अभक्षणं कर्त्तव्यमिति, यदि वा भक्षणं न कर्त्तव्यमिति । यदि नञ्विशिष्टं भक्षणं कर्त्तव्यमित्यभ्युपगम्यते, ततोऽभक्षणं श्रुत्या तव्यो विदधाति । नञ् भक्षयतिविशेषणम् । तद्व्यापाराश्च कर्त्तव्यतया नञ् न सम्बध्यते । अथ नञर्थः, ततो वाक्येन विधानम् । भक्षयतिश्च नञ्विशेषणम् । श्रुतिश्च वाक्याद् बलीयसी । तस्मादभक्षणं कर्तव्यमिति गम्यते ।

अभक्षणं च भक्षणाभावः । न तस्य कर्त्तव्यताऽस्ति । तस्माद् यस्तत्र मानसो व्यापारः, स इह उपदिश्यते । येनोपायेन नञ्विशिष्टं भक्षणं भवति । पूर्वं नञ्भक्षयत्योः सम्बन्धः । ततो विधानम् । यथा, नोद्यन्तमादित्यमीक्षेतेत्येवमादिषु प्रजापतिव्रतेषु कुर्वतः फलम्, अकुर्वतो न फलं न दोषः । एवमिहापि, विभक्तत्वादकर्म्मणाम् । नात्र कर्म्म प्रतिषिद्ध्यते । अकर्ममात्रमुपदिश्यते । अन्यद्धि कर्म भक्षणं प्रतिषिद्ध्यमानम्, अन्यदकर्म मानसः सङ्कल्प इति ॥ १९ ॥ पूर्व० ॥

**शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २० ॥**

उपवर्णनापरिहारस्तावदुच्यते । युक्तं यत् प्रजापतिव्रतेषु शास्त्राणामर्थवत्त्वेन पुरुषार्थो विधीयते । तत्र नियम कर्त्तव्यतयोपदिश्यते । यश्च कर्त्तव्यः, स कल्याणोदयः । यो न कर्त्तव्यः स पापोदयः । कथ पुनः प्रजापतिव्रतेषु नियम कर्त्तव्यतया चोद्यते ? इति । उच्यते । तस्य व्रतमिति प्रकृत्य प्रजापतिव्रतानि समाम्नातानि । व्रतमिति च मानसं कर्मोच्यते । इदं न करिष्यामीति यः सङ्कल्प । कतमत्तद् व्रतम् । नोद्यन्तमादित्यमीक्षेतेति, यथा तदीक्षणं न भवति, तथा मानसो व्यापार. कर्त्तव्य. । तस्य च पालनम् । तत्र तस्मात् पुरुषार्थोऽस्तीत्यवगन्तव्यम् । तत्र चैतान्येव प्रकृत्य उच्यते । एतावता हैनसाऽयुक्तो भवतीति । एतावता कृतेन अयुक्त एनसा भवतीति ॥ अथेह तयोरसमवायित्वम् । इह क्रिया प्रतिषिद्ध्यते, न अक्रियोपदिश्यते । न हि कलञ्जं भक्षयन् प्रतिषेधविधिं नातिक्रामति । इह पुनरादित्यं पश्यन् नातिक्रामति विधिम् । न हि तस्य दर्शनं प्रतिषिद्धम् । नियमस्तत्रोपादिष्ट । यस्तं नियमं करोति, स फलेन सम्बद्ध्यते । इह तु प्रतिषिद्ध्यते कलञ्जादि ।

कथमवगम्यते । नात्र तस्य, व्रतमिति प्रकृत्य वचनमस्ति । न च न भक्षयितव्यमित्यस्य मानसो व्यापारोऽर्थः । भक्षयितव्यमिति च भक्षणं कर्त्तव्यं शब्देनोच्यते । न इति तत् प्रतिषिद्ध्यते श्रुत्यैव । एवं प्रसिद्धोऽर्थोऽनुगृहीतो भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या न लक्षणा । तस्मादिह प्रतिषेधः ॥ उच्यते । अस्तु प्रतिषिद्धं नाम दोष. । अत्र न श्रूयते । तस्मात् प्रतिषिद्धमप्यनुष्ठातव्यमिति । कल्पयिष्यते इति चेन्न प्रमाणाभावात् । अर्थापत्ति प्रमाणम् । उपदेशवैयर्थ्यप्रसङ्गादिति यद्युच्येत । नैतदेवम् । व्यर्थोऽपि हि उपदेशोऽज्ञानात् सम्भवति । तस्मान्न कल्प्यो दोष इति । उच्यते । सत्यं न कल्पनीयः । किन्तु क्लृप्त एव । कथम् । अनन्तरमेवैनं शिष्टा वर्जयेयु', पतितः कर्मफलेभ्य इति वदन्तः । महाँश्चैष दोषो, यच्छिष्टा वर्जयन्ति । तस्मान्नियोगत कलञ्जादि न भक्षयितव्यमिति । यथा, न सर्पायाङ्गुलि दद्यात्, तत्र दोषदर्शनान्नियोगतो न सर्पायाङ्गुलिर्दीयते, कण्टको वा न पादेनाधिष्ठीयते । एवमिदमपीति ॥ २० ॥ सिद्धान्तः ॥ प्रतिषिद्धकर्मणामनुष्ठानेऽनिष्टापाताऽधिकरणम् ॥ ५ ॥ कलञ्जन्यायः ॥

## तस्मिँस्तु शिष्यमाणानि जननेन प्रवर्त्तेरन् ॥२१॥

इह स्मार्त्ता पदार्था उदाहरणम् । प्रत्युपस्थितनियमाश्चाचाराः । गुरुरनुगन्तव्योऽभिवादयितव्यश्च । वृद्धवयाः प्रत्युत्थेय सम्मन्तव्यश्चेति । तत्र सन्देहः । किं जातमात्राणामिमे पदार्था उतोपनीतानामिति । कि प्राप्तम् । अविशेषोपदेशाज्जातमात्राणाम् । कुतः ? पुरुषे ते शिष्यन्ते, जातमात्रश्च पुरुषो भवति । तस्माज्जातमात्राणामिमे पदार्था इति ॥ २१ ॥ पूर्व० ॥

एवं प्राप्ते ब्रूमः—

## अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन् ॥ २२ ॥

अपि वेति पक्षव्यावृत्तिः । उपायेन प्रवर्त्तेरन् । उपनयनेन सह प्रवर्त्तेरन् । वेदतुल्यत्वात् । वेदतुल्या हि स्मृति । वैदिका एव पदार्थाः स्मर्यन्ते इत्युक्तम् । वैदिकाश्च पदार्था उपनयनोत्तरकाले समाम्नाताः । स्मार्त्ताश्चैते वैदिका एव । तस्मादुपनयनोत्तरकाला एते इति ॥ २२ ॥ सिद्धान्तः ॥ गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥ ६ ॥

## अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २३ ॥

इदमामनन्ति, यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति पुरुषार्थोऽयं यागो विधीयते । नायमभ्यासः कर्मशेष इत्युक्तम् । इहेदानीं सन्दिह्यते । किं सातत्येन होतव्यम्, उत न सातत्येनेति । किं प्राप्तम् । पुरुषं प्रत्युपदिष्टत्वात् सातत्येन । अयं पुरुष इति सातत्येनानुष्ठातव्यम् । ननु प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातरिति श्रूयते । पौर्णमास्यां पौर्णमासेन यजेत, अमावास्यायामामावास्येन यजेतेति । नैष सर्वाङ्गोपसंहारेण प्रयोगः । अतः कालमात्रेण हीने दोषः ॥ २३ ॥

## तस्मिन्नसम्भवन्नर्थात् ॥ २४ ॥

नैतदस्ति, यत्, जुहुधि जुहुधीत्येव होतव्यमिति । यथा शक्नोति, तथा जुहुयादित्युच्यते । न च सातत्येन शक्यते । अवश्यमनेन आहारविहाराः कर्त्तव्याः । तस्मादर्थाविरुद्धेषु कालेषु होतव्यमिति ॥२४॥ पूर्व०

## न कालेभ्य उपदिश्यन्ते ॥ २५ ॥

न चैतदस्ति । यदुक्तम्, अर्थाविरुद्धेषु कालेषु सततं होतव्यमिति । काल एषः श्रूयते । प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातरिति । तथा, पौर्णमास्यां पौर्णमासेन यजेत, अमावास्यायाममावास्येन यजेतेति । तस्मान्न सातत्यमिति । आह । ननु विगुणस्यापि प्रयोगान्न काल आदरणीय इति । अत्रोच्यते । न कालो गुणः । निमित्तं ह्येतदित्युक्तम् । तस्मादन्येषु कालेष्वविहितत्वात् कृतमप्यकृतं स्यात् । तस्मादाश्रितकालस्य यावज्जीवं प्रयोग इति ॥ २५ ॥ सि० ॥

## दर्शनात् काललिङ्गानां कालविधानम् ॥ २६ ॥

लिङ्गं च भवति, अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पूर्णमासीममावस्यां वा अतिपातयेदिति । यदि सर्वस्मिन् काले होमस्तदा कस्यातिपत्तिः स्यात् । तस्मादपि न सततमभ्यासः ॥ २६ ॥ युक्ति ॥ अग्निहोत्रादियावज्जीवकर्मणां स्वकालमात्रकर्तव्यताधिकरणम् ॥ ७ ॥ अग्निहोत्रन्यायः ॥

## तेषामौत्पत्तिकत्वादागमेन प्रवर्त्तेत ॥ २७ ॥

प्रदोषे अग्निहोत्रं होतव्यम्, व्युष्टायां प्रातरिति । तथा पौर्णमास्यां पौर्णमासेन यजेतामावास्यायाममावास्येन यजतेति । तत्र सन्देहः । किं सकृत् प्रदोषे होतव्यम्, उत प्रदोषे प्रदोषे इति । तथा सकृद् व्युष्टायां प्रातः ? उत व्युष्टायां व्युष्टायामिति । तथा किं सकृत् पौर्णमास्याममावास्यायां वा, उत आगते आगते काले इति । किं प्राप्तम् । सकृत् कृत्वा कृतार्थः शब्दो, न नियमः पौनःपुन्ये ॥ इत्येवं प्राप्ते ब्रूमः । आगमेन प्रवर्त्तेत । आगते आगते काले प्रयोगः कर्त्तव्य इति । कुतः । तेषामौत्पत्तिकत्वात् । उत्पद्यमानं कर्म कालसंयुक्तमेवोत्पद्यते । तदुक्तं, निमित्तार्थाः कालश्रुतय इति । निमित्ते च संप्राप्ते नैमित्तिकोऽर्थः कर्त्तव्यो भवति । तस्माद् आगते आगते काले प्रयोगः कर्त्तव्य ॥ २७ ॥ सि० ॥

## तथा हि लिङ्गदर्शनम् ॥ २८ ॥

अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वा अतिपातयेदिति । आगते आगते काले प्रयोगं दर्शयति ॥ २८ ॥ युक्तिः ॥ अग्निहोत्रादीनां स्वकालावृत्त्या आवृत्त्यधिकरणम् ॥ ८ ॥

## तथान्तःक्रतुप्रयुक्तानि ॥ २९ ॥

भिन्ने जुहोति स्कन्ने जुहोति इति दर्शपूर्णमासयोः श्रूयते । तत्र सन्देहः । सकृद् भिन्ने स्कन्ने च हुत्वा कृतार्थ, उत भिन्ने भिन्ने स्कन्ने स्कन्ने चेति । तत्राऽधिकरणातिदेशः । यः पूर्वत्र पूर्वः पक्षः स इह पूर्वः, य उत्तरः स इहोत्तर इति । सकृत् कृत्वा कृतार्थ इति पूर्वः पक्षः । निमित्तत्वात् पुनः प्रयोग इत्युत्तरः ॥ २९ ॥ दर्शादौ भेदाद्यावृत्त्या होमावृत्त्यधिकरणम् ॥ ९ ॥

## आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ ३० ॥

गुरुरनुगन्तव्योऽभिवादयितव्यश्च, वृद्धवयाः प्रत्युत्थेयः सम्मन्तव्यश्चेति । तत्र सन्देहः । किमागते आगते गुरौ वृद्धवयसि च यदुक्तं तत् कर्त्तव्यम्, उत सकृत्कृते कृतार्थतेति । आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वादित्यधिकरणातिदेशः । तत्र यः पूर्वः पक्षः स इह पूर्वः, य उत्तरः स उत्तरः । सकृत्कृत्वा कृतार्थ इति पूर्वः पक्षः । निमित्तत्वात् पुनः प्रयोग इत्युत्तरः ॥ ३० ॥ गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम् ॥ १० ॥

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥

इदं श्रूयते । सोमेन यजेत, गर्भाष्टमेषु ब्राह्मणमुपनयीत, प्रजामुत्पादयेदिति । तत्र सन्देहः । किं नित्यान्येतानि, उतानित्यानीति । किं प्राप्तम् । कामसंयोगादनित्यानि ॥ इति प्राप्ते उच्यते । ब्राह्मणादीनां सोमादीनि नित्यानीति । कुतः । ऋणवाक्येन हि संयोगो भवति । जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते, यज्ञेन देवेभ्य, ब्रह्मचर्येण ऋषिभ्य, प्रजया पितृभ्य इति । स वै तर्ह्यनृणो यदा यज्वा ब्रह्मचारी प्रजावानिति । ऋणसंस्तवोऽवश्यकर्त्तव्यानां भवति । तस्मान्नित्यानीति ॥ ननु लिङ्गमसाधकं, न्याय उच्यतां, यस्यैतद् द्योतकमिति । उच्यते । अकामसंयुक्तानि एषां पृथग् वाक्यानि भवन्ति । वसन्ते वसन्ते ज्योतिषा यजेत, यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत । तथा विद्यामधीयीत । तथा प्रजा उत्पादयितव्या इति । एवं नित्यतायाः प्राप्ताया इदं लिङ्गं भवतीति ॥ अथवा अयमन्योऽर्थः । ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् । सोमादयो नियताः किं ब्राह्मणस्यैव, राजन्यवैश्य-

योरनियताः, उत सर्वेषां नियता इति । किं प्राप्तम् । ब्राह्मणस्यैव नियता नेतरयोरिति । कुतः । एवं श्रूयते । जायमानो ह वै ब्राह्मण इति । ब्राह्मणस्य नियमो दृश्यते, नेतरयोः । ब्राह्मणसङ्कीर्त्तनात् । एवं प्राप्ते ब्रूमः । सर्वेषां नियम । कुतः । अविशेषेण नियमविधानं यत्, तद्ऽकामसंयुक्तं वचनं नियामकम् । तद् अविशिष्टं सर्वेषाम् । तस्मात् सर्वेषां नियम इति ॥ ननु, जायमानो ह वै ब्राह्मण इति ब्राह्मणस्य सङ्कीर्त्तनम् । उच्यते । भवत्यस्मिन् वचने ब्राह्मणसङ्कीर्त्तनं, न त्वेतन्नियमस्य विधायकम् । एतैरकामसंयुक्तैर्वचनैर्विहितस्य नियमस्यानुवादोऽयमवदानस्तुत्यर्थः । तस्मान्नात्र ब्राह्मणसङ्कीर्त्तनेन राजन्यस्य वैश्यस्य वाऽनियमो विज्ञायते । ब्राह्मणग्रहणं तु प्रदर्शनार्थम् । जायमानो ब्राह्मणो राजन्यो वैश्यो वेति । तथा जायमानो जातश्चेति ॥ ॥ ३१ ॥ ऋणत्रयापाकरणस्य ब्राह्मणक्षत्रियवैश्यानां नित्यताधिकरणम् ॥ ११ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य द्वितीयः पादः ॥ ६ ॥ २ ॥

अथ षष्ठे अध्याये तृतीयः पादः ॥ ६ ॥ ३ ॥

## सर्वशक्तौ प्रवृत्तिः स्यात् तथाभूतोपदेशात् ॥ १ ॥

बह्वृचब्राह्मणे श्रूयते । यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । नित्यमग्निहोत्रं नित्यौ च दर्शपूर्णमासौ । तत्र यदेतत् कामश्रवणादन्यदकामश्रवणं द्वितीयं, तत्र सन्देहः ॥ किं यः कार्त्स्न्येन विधिमुपसंहर्त्तुं शक्नोति तस्यैवाऽधिकार ? उत विगुणमपि तत् प्रयोक्तव्यमिति । एकादशे कामसंयुक्ते प्रथमे श्रवणे चिन्तयिष्यते साङ्गे । इह नित्ये श्रवणे द्वितीये इति ॥ किं प्राप्तम् । सर्व शक्तौ प्रवृत्ति स्यात् । तथाभूतोपदेशात् । कार्त्स्न्येन विधिमुपसंहर्त्तुं शक्नोति, स एवानुतिष्ठेत् । तथाभूतोपदेशात् । यथाभूतं हि तत् कामसंयुक्तं श्रुतं, तथाभूतमेव नित्यमप्युपदिश्यते । तस्मात् सर्वाङ्गोपहारेण प्रयोगः कर्त्तव्यः । दर्शपूर्णमासशब्दश्च साङ्गस्यैव वाचकः । कथम् । पौर्णमास्याममावास्यायां च साङ्गं विधीयते । यच्च पौर्णमास्यां विहितं, सा च पौर्णमासी । यदमावास्यायां विहितं, सा चामावास्या इति । साङ्गममावास्यायां विहितं, पौर्णमास्यां च । तस्मात् साङ्गं दर्शपूर्णमासशब्देनोच्यते इति जैमिनिर्मन्यते स्म ॥ १ ॥ पूर्व०

**अपि वाऽप्येकदेशे स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुण-मात्रमितरत्तदर्थत्वात् ॥ २ ॥**

अपिवेति पक्षव्यावृत्तिः । अप्येकदेशेऽङ्गानां स्यादेव प्रयोगः । यतः साङ्गस्याप्यनङ्गस्यापि प्रयुज्यमानस्य प्रधानादेवायमर्थो निष्पद्यते । गुणमात्रं सर्वाङ्गप्रयोगेण भवति । को गुणः । साङ्गात् स्वर्गाऽभिनिर्वृत्ति, प्रधानमात्रादिदमन्यत् फलम् । तस्मात् स्वर्गप्राप्त्यर्थं संपूर्णाङ्गं करिष्यामीत्यारब्धम् । यदि कानिचिद् अङ्गानि न शक्नोति कर्तुं, तथाप्यस्मादेकदेशाङ्गगुणयुक्तात् प्रधानात् फलं भविष्यति । तस्मात् प्रधानमात्रस्य प्रयोगमाह, नाङ्गानाम् । दर्शपूर्णसशब्दकोऽग्निहोत्रशब्दकश्च प्रधानपदार्थोऽन्यान्यङ्गानि तदर्थानीति ॥ २ ॥ सि० ॥

**तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात् प्रधानेनाभिसम्बन्धात् ॥ ३ ॥**

प्रधानातिक्रमे दोषः श्रूयते, अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेदिति प्रधानातिक्रमे दोषं ब्रुवंस्तस्य नित्यतां दर्शयति ॥ ३ ॥ युक्ति. ॥

**कर्मभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यादिति ॥ ४ ॥**

यदुक्तं, नास्ति भेद. । इमान्यङ्गानि, इमानि प्रधानानीति । प्रयोगवचनैकत्वादिति जैमिनिराह स्म । सर्वेषामुपदेशकः । पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति ॥ ४ ॥ आ० ॥

**अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद् यथा क्रत्वन्तरेषु ॥ ५ ॥**

एकाङ्गप्रयोगेऽपि स्याद् विगुणादपि फलमित्यर्थः । कुतः । अर्थस्य व्यपवर्गित्वात् । व्यपवृक्तमङ्गेभ्य प्रधानम् । अग्निहोत्रसंज्ञकाद्दर्शपूर्णमाससंज्ञकाच्च फलमिह भवति । तद्धि कर्तव्यतयोपदिश्यते । यत् पौर्णमास्यामुपदिष्टं सा पौर्णमासी, यदमावास्यायां सा अमावास्या । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । तस्मादग्नये पुरोडाशोऽग्नीषोमाभ्यां च, आज्यं चाग्नीषोमाभ्यः पौर्णमास्याम्, आग्नेयसान्नाय्यादीनाममावास्यायाम् ॥ यदुक्तं,

पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति साङ्गस्य विधानात् साङ्गं दर्शपूर्णमासशब्देनाभिधीयते इति । नैतदेवम् । सिद्धे हि दर्शार्थे पौर्णमासार्थे च साङ्ग फले विधीयते । तस्मान्न साङ्गमग्निहोत्रपदवाच्यं दर्शपौर्णमासपदवाच्यञ्च । यच्चाऽग्निहोत्रं तदिह चोद्यते कर्त्तव्यतया, यौ च दर्शपूर्णमासौ । तस्माद् विगुणमपि कर्त्तव्यमेवाग्निहोत्रं दर्शपूर्णमासौ च । यथा क्रत्वन्तरेषु प्रकृतिविकृतिषु परस्य धर्मा परस्य न भवन्ति, एवं न कामसंयुक्तस्य धर्मा नित्यस्य भवितुमर्हन्ति ॥ ५ ॥ आ० नि० ॥

## विध्यपराधे च दर्शनात् समाप्तेः ॥ ६ ॥

विध्यपराधेषु च समाप्तिं दर्शयति । तदेव यादृक् तादृग् होतव्यमिति विगुणस्य समाप्तिं दर्शयति ॥ ६ ॥

## प्रायश्चित्तविधानाच्च ॥ ७ ॥

विध्यपराधे च प्रायश्चित्तानि विधीयन्ते निमित्ते कर्माङ्गभूतानि । यथा, भिन्ने जुहोतीति । विगुणे निष्फले सति कस्याङ्गभूतैः प्रयोजनं स्यात् । तस्माद् विगुणानामपि प्रयोगः कर्त्तव्य इति ॥ ७ ॥ युक्तिः ॥ नित्ये यथाशक्त्यङ्गानुष्ठानाधिकरणम् ॥ १ ॥

## काम्येषु चैवमर्थित्वात् ॥ ८ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम', सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम', वैश्वदेवीं सांग्रहायणीं निर्वपेद् ग्रामकाम इत्येवमादिषु सन्देहः । किं विगुणमपि फलवद्, उताविगुणमेव फलवदिति । किं प्राप्तम् । काम्येषु चैवं स्याद्, विगुणमपि फलवदिति । कुत । अर्थित्वात् । यदि विगुणमपि फलवदेवमर्थिमात्रमधिकृतं भविष्यति । अन्यथा सामान्यशब्दोऽन्तरेण विशेषं, विशेषेऽवस्थापितो भविष्यति । असमर्थत्वान्नाधिक्रियते इति चेत् । साङ्गं न समर्थः कर्त्तुम् । प्रधानमात्रं तु शक्नोति । प्रधानमात्रेऽधिकरिष्यति ॥८॥ पूर्व० ॥

## असंयोगात्तु नैवं स्याद् विधेः शब्दप्रमाणत्वात् ॥९॥

तुशब्दात् पक्षो विपरिवर्त्तते । नैवं स्यात् । यदुक्तं विगुणमपि फलवदिति । असंयोगात् प्रधानमात्रस्य फलेन । साङ्गाद्धि फलं श्रूयते प्रधानाद्, न केवलात् । तेन यद्यपि केवलमुच्यते, तथापि नैवञ्जातीयकं तत् कुर्य्यात् । न केवलस्य फलेन संयोग इति । शब्दप्रमाणक-

श्च अयमर्थो विधीयते । शब्दश्च साक्षात् फलमाहेति वक्ष्यामः । तस्मान्न विगुणं कर्म कर्त्तव्यमेवञ्जातीयकमिति ॥ ९ ॥ सि० ॥

अकर्मणि चाप्रत्यवायात् ॥ १० ॥

न चात्र प्रधानमात्रस्याकर्मणि प्रत्यवाय उच्यते, यथा दर्शपूर्णमासयो. । तस्मादपि न विगुणमेवॅल्लक्षणकं कर्म प्रयोक्तव्यमिति ॥ ॥ १० ॥ युक्तिः ॥ अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ॥ २ ॥

क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात्॥ ११ ॥

दर्शपूर्णमासयाग पुरोडाशेनोक्तः । स च पुरोडाशो व्रीहिमयः कर्त्तव्य इति श्रूयते । तत्रैतच्चिन्त्यते । यदि नीवारमयेन पुरोडाशेन यागः क्रियेत, किं स एव यागः स्यादुतान्य इति । किं प्राप्तम् ? । द्रव्यान्तरे विभाग. स्यात् । अन्यो याग । कुतः ? । आश्रितत्वात् । आश्रयभेदाद्धि गम्यते विशेषः । अयमन्यो नीवाराश्रयो व्रीह्याश्रयाद्विति । आश्रयभेदस्तावद् विस्पष्ट एव । तद्भेदाद् रूपमपि भिन्नं गम्यते । तस्मादन्यो यागो द्रव्यान्तर, इति ॥ ११ ॥ पूर्व० ॥

अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

अपि वेति पक्षव्यावृत्तिः । ऐककर्म्यं स्याद् द्रव्यान्तरेऽपि । यदा क्रिया भवति चलनं पतनं वा, तदापि तावानेव सोऽर्थो, न च काश्चित् तत्र व्यतिरिक्तो विशेषो हीनो वा । खल्वप्यन्यदेव रूपम् । न च शब्दान्तरं वाचकम् ॥ नन्वाश्रयभेदो विस्पष्टः । उच्यते । भिन्नमेव वयमाश्रयं प्रतिजानीमहे, न तु तद्भेदादाश्रितस्य भेदः । अन्यत्वात् । न हि, स्रजि वाससि वा भिन्ने तद्भेदात् पुरुषभेदो गम्यते । सोऽपि तस्यात्मा भिन्न इति चेत् । नैतदेवम् । विशेषमुपलभमानैरेवं शक्यं वक्तुम् । न चास्य विशेष उपलभ्यते ॥ नन्वयमेव विशेषो यद्, एकोऽपि विनष्टः, एकोऽपि वर्त्तते। न विनष्ट इति यदुच्यते । तन्न । प्रागस्योपलम्भनात् सत्त्वे प्रमाणं नास्ति । तस्माद् विनष्टः । न च प्रत्यभिज्ञायते, तद्द्रव्यातिरिक्तः । भेदानुपलम्भात् । कथं तर्हि चलतीति प्रत्यय इति चेत् । उच्यते । देशान्तरे सम्प्रतिपत्तिदर्शनात् । तद् देशान्तरं गच्छदागच्छच्च चलतीत्युच्यते । तत्र गन्तापि प्रत्यक्षो, देशान्तरमपि । तेन गत इति चोच्यते, आगत इति चोच्यते ।

सत्यं विनष्टादविनष्टोऽन्य । योऽपि त्वसावन्य', सोऽपि यजतिशब्द-वाच्य एव । यजतिसामान्यं न भिद्यते । न च शब्देन नोच्यते । तस्माद् योऽपि नीवारैर्यागं कुर्यात्, तेनापि चोदितमेव कृतम् । चोदितं च कुर्वत ईप्सितं भवति, नापूर्वकृतम् । नामधेयं च दर्शयाति, दर्श इति वा पूर्णमास इति वाऽस्यैव सामान्यस्य नामधेयं, न व्यक्तीनाम् । किं प्रयोजनं चिन्तायाः । उत्तरेणाधिकरणेनैतद् विचार्य्यते ॥ १२ ॥ सिद्धान्त ॥ द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

**श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥**

अग्निहोत्रादीनि नित्यानि कर्माण्युदाहरणम् । तेषु श्रुतद्रव्यापचारे भवति सन्देहः । किं प्रतिनिधिमुपादाय प्रयोग कर्त्तव्यः, उत तदन्तं कर्मोत्स्रष्टव्यमिति । किं प्राप्तम् । शिष्टस्याभावे न आगमोऽन्यस्य । तदन्तमेवोत्स्रष्टव्यम् । कुत. । अशिष्टत्वात् । यद् व्रीहियवगुणकं श्रुतं फलवत्, तद् नीवारगुणकं क्रियमाणमफलकं भवति । तस्मात् तदन्तमेवोत्स्रष्टव्यमिति ॥ १३ ॥ पूर्व० ॥

**क्वचिद्विधानाच्च ॥ १४ ॥**

क्वचिद् विधीयते।यदि सोमं न विन्देत् पूतीकानभिषुणुयादिति । यदि च प्रतिनिधिमुपादाय प्रयोग. कर्त्तव्य स्याद्, न विधीयेत । विधीयते तु । तस्माद् यत्र न विधीयते, न तत्र प्रतिनिधिरिति ॥१४॥ युक्तिः

**आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥**

आगमो वा प्रतिनिधेयस्य द्रव्यस्य । कुतः । चोदनार्थाविशेषात् । यजतिचोदनाचोदितो हि अर्थो, न विशिष्यते व्रीहिभिर्नीवारैर्वा क्रियमाणः । यागश्चावश्यकर्त्तव्यो नित्येष्वनित्येषु च प्रारब्धेषु ॥१५॥

**नियमार्थः क्वचिद्विधिः ॥ १६ ॥**

अथ यदुक्तं, क्वचिद् विधानादिति । उच्यते । नियमार्थः क्वचिद् विधिः । सोमाभावे बहुषु सदृशेषु प्राप्तेषु नियमः क्रियते । पूतीका एवाभिषोतव्या इति । तस्मात् प्रतिनिधिमुपादाय प्रयोग. कर्त्तव्य इति ॥ १६ ॥ युक्ति' ॥

**तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥**

कथं पुनरिदमवगम्यते, नियमार्थमेव तद्वचनमिति । उच्यते। यतः प्राप्ता पूतीकाः । कथं च ते प्राप्ताः । तच्चिकीर्षा हि । तत्र सादृश्यचिकीर्षेत्येतद् वक्ष्यामः । तच्चिकीर्षया च प्राप्ता पूतीकाः । तस्मात्तन्नित्यं, वचनमेतन्नियमाय नित्यमिति गम्यते ॥ १७ ॥ ॥ ॥ आ० नि० ॥ नित्यकर्मणोऽनित्यप्रारब्धकर्मणश्च द्रव्याऽपचारे प्रतिनिधिना समापनाधिकरणम् ॥ ४ ॥

## न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥

देवताः, आग्नेयोऽष्टाकपाल इत्येवमाद्याः । अग्नि', यद् आहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतो भवतीति । शब्दो मन्त्र , बर्हिर्देवसदनं दामीत्येवमादिः । क्रिया , समिधो यजति, तनूनपातं यजतीत्येवमाद्याः । तत्र सन्देह. । देवताग्निशब्दक्रियाणामपचारे प्रतिनिधिरुपादेय , उत नेति । किं प्राप्तम् । पूर्वाधिकरणन्यायेन प्रतिनिधायाऽन्यत् प्रयोगः कर्त्तव्य इति॥एवं प्राप्ते ब्रूमः।न देवताग्निशब्दक्रियाणामपचारे प्रतिनिधिना भवितव्यमिति । कुतः । अन्यार्थसंयोगात् । प्रतिनिधीयमानमन्यदेतेभ्यः । अन्यच्च तेषामर्थं न शक्नुयात् कर्तुम् । कश्च तेषामर्थः । देवता तावदुद्देशेन अर्थं साधयति । अग्निमुद्दिश्याऽष्टाकपाल पौर्णमास्याममावास्यायां च त्यज्यते । यच्चान्येषु हवि षु विहितं, न ततो दर्शपूर्णमासौ भवत । तत्रान्या उद्दिश्यमाना न श्रुताया उद्देश्याया अर्थं कुर्यात् । न हि अन्यस्यामुद्दिश्यमानायां दर्शपूर्णमासौ भवत । तस्मान्न देवता प्रतिनिधीयते ॥

तथा, यद् आहवनीये जुह्वतीत्याहवनीयापचारे नान्योऽग्नि. प्रतिनिधातव्योऽन्यद् वा द्रव्यमिति । कुतः । अन्यार्थसंयोगात् । प्रतिनिधीयमानमाहवनीयकार्ये न वर्त्तते । कथम् । अदृष्टमाहवनीयस्य कार्यम् । आहवनीयस्योपरि त्यज्यमाने यद् भवति, न तदन्यस्योपरि। न हि, यजतिशब्देन सामर्थ्यात् तद् गृह्यते, यस्योपरि त्यज्यते । न हि उपरि त्यज्यमानस्य देश किञ्चिदुपकरोतीति । तस्मान्नाग्नेः प्रतिनिधिः ॥

तथा मन्त्रापचारे नान्यो मन्त्रः प्रतिनिधीयते । मन्त्रस्य हि एतत् प्रयोजनं, यत् स्मारयति क्रियां साधनं वा असति स्मरणे न क्रिया संवर्त्तेत । तद् अपचरिते मन्त्रे यदि तस्यार्थेऽन्यं शब्दमुच्चारयति

पूर्वं प्रतीतेऽर्थे शब्दमुच्चारयन्न शब्देनार्थं प्रतीयात् । अथ प्रतीतमपि पुन प्रतिनिधिशब्दोच्चारणेन प्रतीयाच्छब्दात् प्रतीतिं कुर्यात् । एवञ्च प्रतिनिधिशब्दोच्चारणानुरोधोऽनर्थकः स्यात् । न हि शब्देन प्रत्यापयितव्यमिति किञ्चित् प्रमाणमस्ति । यदस्ति, तद् विशेषणैवाऽनेन शब्देन बर्हिरादिनेत्येवम् । तदभावे शब्दान्तरानुरोधोऽनर्थकः स्यात् । तस्मान्न शब्दस्य प्रतिनिधि ॥ क्रियापचारे न क्रियान्तरम् । अन्यार्थसंयोगात् । समिद्यजिमन्तौ दर्शपूर्णमासौ कर्त्तव्यौ । तौ अन्यस्यां क्रियमाणायां न तद्वन्तौ भवत. । तस्मात् क्रियायां न प्रतिनिधिरिति ॥ १८ ॥ सि० ॥

## देवतायां च तदर्थत्वात् ॥ १९ ॥

देवतायामपरो विशेषो येन न प्रतिनिधीयते । देवता नाम यदर्थं किञ्चिच्चोद्यते सा । अन्या तस्याः स्थाने प्रतिनिधीयमाना न देवता स्यात् । चोदिता हि देवता भवति, नाचोदिता । सम्बन्धिशब्दश्चैष । या यदर्थं चोद्यते, सा तस्यैव देवता, नाऽन्यस्य । देवता इति सम्बन्धिशब्दो, न जातिशब्द. । तस्मादपि न देवताया' प्रतिनिधिरिति ॥ १९ ॥ युक्ति ॥ देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावाऽधिकरणम् ॥ ५ ॥

## प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

अथ यत् प्रतिषिद्धम्, अयज्ञिया वै वरकाः कोद्रवाः, अयज्ञिया वै माषा इति । किं तच्छ्रुतद्रव्यापचारे प्रतिनिधातव्यम्, उत नेति । किं प्राप्तम् । प्रतिनिधेयमिति । आगमो वा चोदनार्थाविशेषादिति । एवं प्राप्ते ब्रूमः । प्रतिषिद्धं च न प्रतिनिधातव्यमिति । अविशेषेण हि एतदुच्यते, न यज्ञार्हा माषा वरकाः कोद्रवाश्चेति । यज्ञसम्बन्ध एषां प्रतिषिद्ध्यते । नैते यज्ञाङ्गभावं नेतव्या इति । प्रतिनिधीयमानाश्चाऽङ्गभावं नीता स्यु. । तस्मान्नैते प्रतिनिधातव्या इति ॥२०॥ प्रतिषिद्धद्रव्यस्य प्रतिनिधित्वाभावाधिकरणम् ॥ ६ ॥

## तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २१ ॥

अग्निहोत्रादीनि कर्माण्युदाहरणम् । तेषु स्वामिन्यपचरति सन्देहः । किमन्य. प्रतिनिधातव्यो, न ? इति । किं प्राप्तम् । प्रतिनिधात-

व्य इति। कुत। आगमो वा चोदनार्थाविशेषादिति। एवं प्राप्ते ब्रूमः। तथा स्वामिनः स्यात्। कोऽर्थः। न प्रतिनिधिः। कुतः। फलसमवायात्। योऽर्थी स्वत्यागेन ऋत्विज परिक्रीणीते, यश्च स्वं प्रदेयं त्यजति स स्वामी। यदि स प्रतिनिधीयते, स्वामिना यत् कर्त्तव्यं तत् सर्वं कुर्यात्। तत् सर्वं कुर्वन् स्वाम्येव स्याद्, न प्रतिनिधिः। स एव हि फलेन सम्बद्ध्यते। य उत्सर्गं करोति, स फलवान् भवति। तदुक्तं, शास्त्रफलं प्रयोक्तरीति। तस्मान्न स्वामिनः प्रतिनिधिरिति॥ २१॥ स्वामिनः प्रतिनिध्यभावाधिकरणम्॥ ७॥

## बहूनां तु प्रवृत्तेऽन्यमागमयेद्वैगुण्यात्॥ २२॥

सत्राण्युदाहरणम्। सप्तदशावराः सत्रमासीरन्निति। तेषु कस्मिंश्चित् स्वामिनि अपचरति सन्देह। किं तत्रान्यः प्रतिनिधातव्यः, उत नेति। किं प्राप्तम्। न स्वामिनः प्रतिनिधिरिति। एवं प्राप्ते ब्रूमः। बहूनां यजमानानां प्रवृत्ते कर्मणि, अपचरिते कस्मिंश्चित् स्वामिनि अन्यमागमयेत्। कुतः। एवमवैगुण्यं भवतीति। स्वामिगता सप्तदशादिसङ्ख्या तत्राङ्गम्। तया विना कर्म विगुणम्। तत्सम्पादनायान्य आगमयितव्यः॥ ननु स्वामिगता सङ्ख्या, न त्वागम्यमानः स्वामीति वक्ष्यामः। तेन अशक्यैव सा सङ्ख्या उपादातुमिति। उच्यते। स्वामिगता न हि भविष्यति। न हि सा शक्या कर्त्तुमिति। इदं तु शक्यं कर्त्तुम्। ये स्वामिनां पदार्थाः, ते इह सप्तदशावरैः कर्त्तव्या इत्येतदुपपादितं भविष्यति। तस्मात् प्रतिनिधातव्यं तत्रेति॥ २२॥ सत्रे कस्यचित् स्वामिनोऽपचारे प्रतिनिध्यादानाधिकरणम्॥ ८॥ सत्रन्याय॥

## स स्वामी स्यात् तत्संयोगात्॥ २३॥

तस्मिन् आगम्यमाने इदानीं सन्देहः। किमसौ स्वामी, उत कर्मकर इति। किं प्राप्तम्। स स्वामी स्यात्। कस्मात्। तत्संयोगात्। तेन स्वामित्वेन संयोग। यो हि असौ आनीयते, स स्वामी क्रियते। स्वामिनि अपचरितेऽन्यो यदि स्वामी क्रियते, ततः स प्रतिनिधि कृतो भवति। तस्मात् स्वामीति॥ २३॥ पूर्व०॥

## कर्मकरो वा भृतत्वात्॥ २४॥

कर्मकरो वा स स्यात्। कुतः। भृतत्वात्। भृतो हि असौ तैः

शिष्टैः स्वामिभिः प्रयुक्तः । परिक्रीयमाणो न स्वामी भवति । यः फलं प्राप्नोति, स स्वामी । यः परस्योपकारे वर्त्तते, स कर्मकरः । नैवासौ फलं प्राप्नोति । कुतः । यो हि आरभ्य परिसमापयति, स फलवान् । एष हि आख्यातार्थः । स हि उपक्रमप्रभृति अपवर्गपर्य्यन्तमाह । ननु तेऽपि तत्र विगुणं कुर्वन्ति । सप्तदशानां स्वामिनामऽभावात् । तस्मात्तेऽपि न स्वामिनः । नो चेत् स्वामिनः, न फलं प्राप्नुवन्ति । उच्यते । न सप्तदशावराः फलसमवाये भवेयुरिति श्रूयते। न सङ्ख्या फलपरिग्रहे गुणभूता । किन्तर्हि । पदार्थेषु । सप्तदशावरैर्यजमानाः पदार्थाः कर्त्तव्या इति । ते च प्रतिनिहितेन क्रियन्ते। अफलत्वेऽपि च सत्यं सङ्कल्पं कर्त्तुमन्यमानयन्ति । आनीयमानस्य च न तेन प्रयोजनम् ॥ २४ ॥ सि० ॥

## तस्मिंश्च फलदर्शनात् ॥ २५ ॥

तस्मिंश्च दिष्टां गतिं गते फलं दर्शयति, यो दीक्षितानां प्रमीयेत अपि तस्य फलमिति । तस्मात् कर्मकर इति ॥ २५ ॥ युक्तिः ॥ सत्रे प्रतिनिहितस्यास्वामित्वाधिकरणम् ॥ ९ ॥

## स तद्धर्मा स्यात् कर्मसंयोगात् ॥ २६ ॥

बहूनां कस्मिंश्चिदपचरिते प्रतिनिधेयोऽन्य इत्येतत् समाधिगतम् । इदमिदानीं तत्र सन्दिग्धम् । किमसौ स्वामिधर्मा स्यात्, उत ऋत्विग्धर्मा । किं प्राप्तम् । ऋत्विग्धर्मा । कुतः । परार्थं हि स यजति । यश्च परार्थं यजति, स ऋत्विगिति । एवं प्राप्ते ब्रूमः । स तद्धर्मा स्यात् । स्वामिधर्मा । तस्य हि कार्यं श्रूयते । यश्च यस्य कार्यमधितिष्ठति स तद्धर्मैः सम्बद्ध्यते। यथा स्रुग्धर्मैः स्वधितिरिति ॥ २६ ॥ सत्रे प्रतिनिहितस्य यजमानधर्मग्राहित्वाधिकरणम् ॥ १० ॥

## सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

श्रुते द्रव्ये अपचरति प्रतिनिधिमुपादाय प्रयोक्तव्यमिति स्थितम् । तत्र सन्देहः । किं यत्किञ्चिद् द्रव्यमुपादाय प्रयोगः कर्त्तव्यः, उत सदृशमिति । किं प्राप्तम् । यत्किञ्चिदुपादायेति । एवं प्राप्ते ब्रूम । सामान्यं यत्र गृह्यते, तदुपादातव्यं सदृशमिति । कुत ?। सर्वे हि आकृतिवचनाः शब्दाः । आकृतिश्च यद्यप्यङ्गभावेन श्रूयते, तथापि न साक्षात् तस्याः क्रियां प्रत्यङ्गभावः । यत्तु क्रियासाधनं द्रव्यमर्था-

दङ्गभूतं प्राप्तं तत् परिच्छिन्दती क्रियायामङ्गभावं याति। व्यक्तेश्च आकृत्या विशेषाः परिच्छिद्यन्ते । ते विशेषा अङ्गभूताः । अथ तस्यामाकृतावपचरितायामर्थप्राप्तं द्रव्य ग्रहीतव्यमेव । यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित् संगृहीता भवन्ति, स तत्र लाभो लभ्यते इति तत्सदृशं द्रव्यमुपादातव्यं भवति । तस्माद् व्रीहीणामपचारे नीवाराः प्रतिनिधेया इति ॥२७॥ श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ ११ ॥

## निर्देशात्तु विकल्पे यत् प्रवृत्तम् ॥ २८ ॥

अस्ति ज्योतिष्टोमे, पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र श्रूयते । खादिरे पशुं बध्नाति पालाशे बध्नाति रौहितके बध्नातीति । तत्र कदाचित् खदिरगुणके प्रयोगे आरब्धे खदिरो विनष्टः । तत्र सन्देहः । किं वैकल्पिकस्योपादानमुत खदिरसदृशस्येति । किं प्राप्तम् । वैकल्पिकस्येति । कुतः । स हि श्रुतः । खदिरसदृशो न श्रूयते । तस्माद् वैकल्पिकस्योपादानमिति ॥ एवं प्राप्ते ब्रूमः । विकल्पे यत् प्रवृत्तं, तत्सदृशमुपादेयम् । यत् प्रवृत्तं यस्मिन् प्रयोगे, तन्निर्दिष्टम् । तदङ्गभूतं, वैकल्पिकमनङ्गम् । आश्रितखदिरे प्रयोगे पलाशरौहितकावनङ्गभूतौ । तौ न शक्येते यदा खदिरस्तदैव कर्त्तुम् । अशक्यं चाश्रुतम् । तस्मादाश्रितखदिरे प्रयोगे इतरौ नोपादेयौ।अनङ्गभूतत्वात् खदिरस्य सदृशमन्वेषणीयमिति ॥२८॥ सि०

## अशब्दमिति चेत् ॥ २९ ॥

इति चेत् पश्यसि, खदिरसदृशमुपादेयमिति । अशब्दमेव कृतं भवति । तस्माच्छब्दवत्त्वाद् वैकल्पिकमुपादेयम् ॥ २९ ॥ आ० ॥

## नानङ्गत्वात् ॥ ३० ॥

नैतदेवम् । अनङ्गं तस्मिन् प्रयोगे वैकल्पिकम् । आश्रितखदिरो हि स प्रयोगो, यो निर्दिष्टः । तस्य निर्देशादितरावश्रुतौ। ननु निर्देशाभावेऽङ्गभावविरोधः । तेन श्रुताविति । किमतः । यद्येवं, यदोपात्तस्याभावस्तदा श्रवणम् । नैतदेवम् । नैमित्तिकं हि तथा प्रतिज्ञायेत । सति वचने निमित्ते, असति खदिरे इतरौ श्रुताविति । तत्र को दोषः । स एवापेक्षितोऽनपेक्षितश्चेति विरोधो भवेत् । संस्काराश्च खदिरे कर्त्तव्याः । खदिरसदृशे तद्बुद्ध्या गृह्यमाणे श्रुतबुद्ध्या कृता

भवन्ति । वैकल्पिकेन तु श्रुतेन असम्बद्धा । तस्मादुपात्तसदृशो ग्राह्य इति ॥३०॥ आ० नि० ॥ द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥ १२ ॥

**वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥**

इदमामनन्ति यदि न सोमं विन्देत् पूतीकानभिषुणुयादिति । तत्र सन्देहः । किमयमभावे निमित्ते विधिरुत प्रतिनिधिनियम इति । किं प्राप्तम् । अभावे विधिरिति । कुतः । विधानात् । न हि प्रतिनिधिर्विधीयते । साध्यसिद्ध्यै साधनं स्वयमेवोपादीयते । इदं तु विधीयते । तत् कल्पान्तरपक्षे अर्थवद् भवति । तस्मान्न प्रतिनिधिरित्येवं प्राप्ते ब्रूमः । प्रतिनिधिः स्यात् । कुतः । विनष्टे हि साधने साध्यसिद्ध्यर्थं साधनान्तरमुपादीयते । श्रुतस्याभावात् । नन्वन्याय्याः पूतीकाः । अन्यद्धि सदृशान्तरमस्तीति । तदुच्यते । वचनात् । सदृशे प्राप्ते, बहुषु वा असदृशेषु पूतीका अल्पसदृशा नियम्यन्ते । कथम् । तद्धि प्रक्रान्तं कर्म अवश्यं कर्त्तव्यम् । तस्यामवस्थायामन्तरेणैव वचनं प्रतिनिधेय द्रव्यान्तरं प्राप्तमेव । प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । किमर्थमनुवाद इति चेत् । उच्यते । अल्पसादृश्यमप्राप्तम् । तद्विधानार्थमनुवादः । प्रयोजनं पक्षोक्तम् । प्रतिनिधिपक्षे सोमसदृशस्योपादानं पूतीकविनाशे द्रव्यान्तरविधौ पूतीकसदृशमुपादेयम् ॥ ३१ ॥ पूतीकस्य सोमप्रतिनिधित्वाधिकरणम् ॥ १३ ॥

**न प्रतिनिधौ समत्वात् ॥ ३२ ॥**

इदं विचार्य्यते । श्रुते द्रव्ये उपात्ते अपचरिते प्रतिनिधिमुपादाय प्रयोगः प्राप्तः । यदा सोऽपि विनष्टः प्रतिनिहितस्तदा किं प्रतिनिधिसदृशमुपादेयम्, उत उपात्तस्य विनष्टस्येति । किं प्राप्तम् । प्रतिनिहिते विनष्टे तत्सदृशमुपादेयं पूर्वेण न्यायेन । एवं प्राप्ते ब्रूमः । प्रतिनिधौ न स्यात् प्रतिनिधिरिति । कुतः । समत्वात्, यथैवासौ पूर्वः प्रतिनिहितः श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । एवमयमपि श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । तस्मान्न प्रतिनिधिसदृशमुपादेयम् । उपात्तनष्टस्यैव सदृशोऽन्वेषितव्य इति ॥३२॥ प्रतिनिध्यपचारे

उपात्तद्रव्यसदृशस्य पुनः प्रतिनिधित्वाधिकरणम् ॥ १४ ॥

**स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥**

अथ श्रुतिलक्षणे कथम्। यथा, यदि सोमं न विन्देत् पूतीकानभिषुणुयादिति। पूतीकेषु विनष्टेषु पूतीकसदृशमुपादेयमुत सोमसदृशमिति। किं प्राप्तम्। स्याच्छ्रुतिलक्षणे प्रतिनिधौ प्रतिनिधिसदृशस्योपादानं कर्त्तव्यम्। सोमाभावे पूतीकव्यक्तयो विहिताः। स चायं श्रुतः सोमाभावः। तस्मात् पूतीकव्यक्तय उपादेया इति ॥ ॥ ३३ ॥ पूर्व० ॥

**न तदीप्सा हि ॥ ३४ ॥**

नैतदेवम्। न हि पूतीकव्यक्तीनामीप्सा। पूतीकेषु यत् सोमसादृश्यं, तन्निगम्यते। तथा हि पूतीकविधानं दृष्टार्थम्। असदृशविधाने अदृष्टं कल्प्येत। अतो यस्मिंस्तत्पूतीकसदृशोऽपि द्रव्ये भवति तद् ग्रहीतव्यं, न पूतीकसादृश्यमाद्रियेतेति ॥ ३४ ॥ सिद्धान्तः श्रुतस्यापि प्रतिनिधेरपचारे उपात्तसदृशस्य पुनः प्रतिनिधित्वाऽधिकरणम् ॥ १५ ॥

**मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३५ ॥**

अथ यत्र विनष्टे श्रुते प्रतिनिधिमुपादातुं प्रस्थितो मुख्यमेवोपलभेत, तत्र किं प्रतिनिधिमेवोपाददीत, उत तमेव मुख्यमिति। किं तावत् प्राप्तम्। प्रतिनिधिरुपादातव्य इति। एवं सङ्कल्पितवानसौ प्रतिनिधिमुपाददान एव सत्यसङ्कल्पो भवति। तस्मात् प्रतिनिधातव्यमिति। एवं प्राप्ते ब्रूमः। मुख्याधिगमे तमेवोपाददीत। अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः। श्रुते हि सकला व्यक्तयः। प्रतिनिधौ विकलाः। अथ यदुक्तं, सङ्कल्पभेददोष इति। श्रुतेष्वसौ शिष्टविगर्हणायां वा ॥३५॥ मुख्यापचारे तत्प्राप्तौ तस्यैवोपादानाधिकरणम्॥१६॥

**प्रवृत्तेऽपीति चेत् ॥ ३६ ॥**

अथाग्निहोत्रादिषु कर्मसु श्रुतद्रव्यापचारे प्रतिनिधौ उपात्ते कृतेषु केषुचित् संस्कारेषु यदि तदेव श्रुतमुपलभ्येत। किं श्रुतमुपादीयेत, उत तेनैव प्रतिनिहितेन समापयितव्यमिति। किं प्राप्तम्। श्रुतमुपादीयेत प्रवृत्तेऽपि। तदुक्तम्, आगमो हि तदभावादिति। तस्मान्न प्रतिनिधातव्यमिति ॥ ३६ ॥ पूर्व० ॥

नानर्थकत्वात् ॥ ३७ ॥

नैतदेवम् । येन हि खदिराभावे कदरे पशुर्नियुक्तो भवति, अथ खदिरमुपलभते, प्रवृत्तेऽर्थे किं खदिरेण कुर्यात् । अर्थार्थं हि खदिरोपादानं, न खदिरोपादानार्थमेव । तस्मान्न श्रुतमुपादीयेत ॥ ३७ ॥ सिद्धान्त ॥ प्रतिनिधिना प्रारब्धे कर्मणि श्रुतद्रव्यलाभेऽपि प्रतिनिधिनैव समापनाधिकरणम् ॥ १७ ॥

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३८ ॥

प्रवृत्ते पशुकर्मणि, यूपकाले अस्ति महत्कदरं द्रव्यं तक्षणादिसंस्कारक्षमम् । अस्ति खदिरद्रव्यमनेवञ्जातीयकम् । तत्र किमुपादेयमिति । संस्कारा न परिलोप्स्यन्ते इति कदर उपादीयेतेति ॥ एवं प्राप्ते ब्रूमः । द्रव्यसंस्कारविरोधे द्रव्यमित्याद्रियेरन्, न संस्कारान् । कुत. । तदर्थत्वात् । संस्कारा हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तत्र संस्कारपरिलोपे द्रव्यमपि तावद् गृह्यते । द्रव्याभावे न द्रव्यं, न संस्कारा' । द्रव्यं तेषां द्वारम् । वचनप्रामाण्यात् । तदभावे नष्टद्वारं नापूर्वं गच्छेयु. । तस्मात् खदिरमुपाददीरन्निति ॥ ३८ ॥ सत्यपि संस्कारयोग्ये अमुख्ये मुख्यस्यैवोपादानाधिकरणम् ॥ १८ ॥

अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तेर्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥

अस्ति यूपकाले खदिरलता पशोरप्रागल्भ्ये न समर्था । कदरद्रव्यं तु तत्समर्थम् । तत्र सन्देहः । किमुपादेयं खदिरद्रव्यम्, उत कदरद्रव्यमिति । खदिरद्रव्यमित्याह । तद्धि श्रुतम् । तदुपाददानः शास्त्रविहितं करोति । प्रतिनिधौ अश्रुतकारी स्यात् । तस्मान्न प्रतिनिधातव्यमिति । एवं प्राप्ते ब्रूमः । अर्थद्रव्यविरोधे अर्थं प्रति आदर्त्तव्यम् । तदर्थं हि द्रव्योपादानं नियोजनात् । अप्रागल्भ्यं पशोर्भविष्यतीति, न द्रव्यमेव उपादीयेतेति । कदरमुपाददानो द्रव्यश्रुतिं बाधते । अर्थं त्वनुगृह्णाति । खदिरलतामुपाददान उभयं बाधते । तस्मात् कदरद्रव्यमुपादेयम् । द्रव्याभावे हि तदुत्पत्ति प्रतिनिधेरुत्पत्तिरुक्ता । द्रव्याणि अर्थं प्रा त शेषभूतानि ॥ ३९ ॥ प्रयोजनायोग्यस्य मुख्यस्य सत्त्वेऽपि प्रतिनिध्यादानाधिकरणम् ॥ १९ ॥

विधिरप्येकदेशे स्यात् ॥ ४० ॥

सन्ति व्रीहय, यावन्तो ह्यवदानमात्रं निर्वर्त्तयन्ति । तथा सन्ति । नीवाराः शेषकार्याणामपि पर्याप्ताः । तत्र किमुपादेयमिति । किं प्राप्तम् । अपि एकदेशे ह्यवदानमात्रेऽपि निर्वर्त्यमाने प्रतिनिधिरुपादेय । किं कारणम् । शेषकार्याणां सम्पत्तिर्भविष्यतीति ४०॥ पूर्व०

**अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्त्तेतार्थानामविभक्तत्वाद्गुणमात्रमितरत्तदर्थत्वात् ॥ ४१ ॥**

अपि वेति पक्षव्यावृत्तिः । एकदेशेन व्रीहीणां प्रधानमात्रं निर्वर्त्तयितव्यम् । कुतः । अर्थस्य शक्यत्वात् । योऽत्रार्थो, येन कार्य्यं तत्तावन्निर्वर्त्यते । शेषकार्याणि यदि न शक्यानि, नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः । तद्ध्यङ्गं, यत् प्रधानस्योपकरोति, न यदुपकारे वर्त्तते । तत्र च शेषकार्याणि क्रियमाणानि प्रधाने व्रीहित्वं गुणं विहन्यु । व्रीहित्वं च प्रधाने साक्षादङ्गभूतं श्रूयते, व्रीहिभिर्यजेतेति । तस्मान्न तेष्वनुरोधः कार्य्यः । असति ह्यङ्गप्रधानविभागे एतदेवं स्यात् । अस्ति हि असौ । तस्मान्न प्रतिनिधिरिति । तथाचाऽन्यार्थदर्शनमपि भवति, तदेव यादृक् तादृग् होतव्यमिति ॥ ४१ ॥ सिद्धान्तः ॥ प्रधाननिर्वाहकत्वे अङ्गनिर्वाहापर्याप्तस्यापि मुख्यस्योपादानाधिकरणम् ॥ २० ॥ इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य तृतीयः पादः ॥ ६ ॥ ३ ॥

अथ षष्ठे अध्याये चतुर्थ पादः ॥ ६ ॥ ४ ॥

**शेषाद् ह्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥**

दर्शपूर्णमासयोः श्रूयते, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां वाऽच्युतो भवतीति । तत्र यदि ह्यवदानमात्रमुद्धृतं व्यापद्यते, किं शेषात् पुनरवदेयं, न ? इति भवति संशयः । किं प्राप्तम् । ह्यवदाननाशे शेषात् पुनरवदेयम् । कुतः । तदर्थत्वात् । अग्न्यर्थं हि तद्धविः । अग्नये यागो निर्वर्त्तयितव्य इति । तदवदाने विनष्टे यागः कर्त्तव्य एवावतिष्ठते । प्रयोजनं च यागेन । स च आग्नेयेन क्रियमाणः श्रुत एवाभिनिर्वर्त्तितो भवतीति किमिति न क्रियेत । तस्माच्छेषाद् अवदातव्यमिति ॥ १ ॥ पूर्व० ॥

**निर्देशाद्वान्यदागमयेत् ॥ २ ॥**

अथ वा अन्यद् हविरागमयेद्, न शेषाद् अवदातव्यम् । कुतः । निर्देशात् । निर्देशो हि भवति । मध्यात् पूर्वार्द्धाद् अवदेयमिति । अवदानं न होमसम्बद्धम् । अवदानं जुहोतीति । तत्राऽन्यच्छिष्टं मध्यस्य पूर्वार्द्धस्य विशेषणार्थम् । यच्च तद्धोमसंयुक्तं तद्विनष्टम् । तच्छेषेण क्रियमाणममध्येनापूर्वार्द्धेन च कृतं स्यात् । नन्ववत्ते यच्छिष्टं ततो मध्यात् पूर्वार्द्धाच्च ग्रहीष्यते । उच्यते । कृत्स्नस्य यन्मध्यं पूर्वार्द्धं च तच्चोदितं, नेतरस्य ॥

अथ वा निर्देशादिति. विनष्टे हि अन्यद् द्रव्यं निर्दिश्यते । यस्य सर्व्वाणि हवींषि नश्येयुर्दुष्येयुर्वा अपहरेयुर्वा आज्येन ता देवताः परिसङ्ख्याय यजेरन्निति हविषो नाशे आज्यं प्राप्तम् । तेन न शेषाद् अवदातव्यमिति ॥

अपर आह । शेषनिर्देशादिति । निर्दिश्यते हि तच्छिष्टमपरेभ्यः शेषकार्य्येभ्य इति । तन्नोपपद्यते । न हि तानि शेषकार्य्याणि हवींषि प्रयोजयन्ति । न च अनिवृत्तप्रयोजनं हविरन्यत्र प्रतिपाद्यम् । तस्मान्नायमर्थः ॥ २ ॥ सिद्धान्त ॥ अवत्तनाशे पुनरवदानार्थं प्रतिनिध्यादानाधिकरणम् ॥ १ ॥

**अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥**

अथ स्विष्टकृदर्थमवत्तं यदि विनश्यति, तत्र किं शेषाद् अवदेयम्, उत नेति । किं प्राप्तम् । पुनः शेषाद् अवदेयमिति । कुतः ? । नाऽत्र कृत्स्नस्योत्तरार्द्धादवदीयते । कस्य तर्हि । सन्निहितस्य । सति हि प्रयोजने सन्निहितस्य अवदेयमिति । तस्माद् अवदीयमाने श्रुतं कृतं भवति । तस्माच्छेषाद् अवदेयमिति ॥ एवं प्राप्ते ब्रूमः । शेषभाजां स्याल्लोप । कुतः । विशिष्टकारणत्वात् । विशिष्टं हि कारणं तस्यावदाने, कथं प्रतिपाद्येतेति । प्रतिपत्तिश्च विविक्तकरणेन उपकरोति । तस्य विविक्तकरणाय प्रतिपाद्यमानस्य नियमोऽस्य स्विष्टकृद्धोमेन प्रतिपादयितव्यः । तथा हि स प्रतिपादितो भवति । स यदि होमायोद्धृतो विपद्येत, कृते विवेके न पुनर्ग्रहणं प्रयोजयेत् । प्रतिपाद्यमानश्च स्विष्टकृद्धोमेन प्रतिपादयितव्य इति । प्रतिपाद्यमानाऽभावाल्लोप एव स्विष्टकृतः स्यात् । प्रधाने कृते शिष्टं सर्वशेषकार्यसाधारणम् । तत्रैकस्योद्धृतौ शिष्टमन्यत्र प्रतिपादनीयम् ॥ ३ ॥ स्विष्टकृदर्थस्यावत्तस्य नाशे अपुनरवदानाधिकरणम् ॥ २ ॥

## निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥

स्तो दर्शपूर्णमासौ । तत्र भक्षाः प्राशित्र–चतुर्द्धाकरण–शंयुवाककाला । तेषु सन्देह । किमन्ये एव तेषां भक्षयितार, उत प्रकरणगता इति । किं प्राप्तम् । शेषभक्षोऽन्यैरप्रकरणस्थै कर्त्तव्य । कुत । निर्देशात् । निर्दिश्यन्ते ह्यध्वर्य्वादय इडाभक्षे । यजमानपञ्चमा इडां भक्षयन्तीति सर्वेषु भक्षयितृषु प्राप्तेषु परिसङ्ख्यानार्थो निर्देशः क्रियते । इडामेवैते भक्षयेयुरिति । यथा आग्नेयोऽष्टाकपाल इति सर्वस्मिन्नवयविनि यागानियमे प्राप्ते द्व्यवदानमात्रं श्रूयते । विधिर्वा न, प्राप्तत्वात् । नानुवादोऽनर्थकत्वात् । परिसङ्ख्या त्वर्थवत्त्वाय । एवमेषां परिसङ्ख्येति । अपि च यदि प्रकृता एव भक्षयेयु , अश्वमेधे दोष स्यात् । बहुत्वाद् भक्षाणां, भक्षयन्तो म्रियेरन् ॥ ४ ॥ पूर्व० ॥

## सर्वैर्वा समवायात् स्यात् ॥ ५ ॥

सर्वैर्वा प्रकृतैरेव भक्ष्येत । तद्धि भक्षणं पुरुषसंस्कारार्थम् । पुरुषाः संस्कृताः प्रचरिष्यन्तीति । तेषु विनिगमनाया अभावाद् यावन्तः प्रकरणे समवेतास्ते सर्वे भक्षयेयुरिति ॥ ५ ॥ सि० ॥

## निर्देशस्य गुणार्थत्वम् ॥ ६ ॥

अथ यदुक्तं, निर्देशादिति । गुणार्थः स । । अन्ये कर्मकरत्वादेव प्राप्ता । तत्र यजमानस्तेषां पञ्चमो वचनान्निर्दिश्यते । तत्प्राप्त्यर्थं चेदं वचनम् । ततो न परिसङ्ख्या ॥ ६ ॥

## प्रधाने श्रुतिलक्षणम् ॥ ७ ॥

यत्तु द्व्यवदानमात्रं प्रधाने निर्दिश्यते, तद् वचनप्रामाण्यात् परिसङ्ख्यानार्थम् । न हि तत्र कस्यचिदपूर्वस्य विधि । इह यजमानो विधीयते । विधिपरिसङ्ख्यासंशये विधिर्ज्यायान् । तत्र स्वार्थे शब्द । परिसङ्ख्यायां त्रयो दोषा — स्वार्थहानमस्वार्थपरिग्रह , प्राप्तबाधश्चेति । तस्मात् प्राकृता एव भक्षयेयुरिति ॥ ७ ॥ ॥ आ० नि० ॥

## अर्थवदिति चेत् ॥ ८ ॥

अथ यदुक्तम्— अश्वमेधे विरोध स्याद्, बहुत्वाद्भक्षाणामिति । तत् परिहर्त्तव्यम् ॥ ८ ॥ आ० ॥

## न चोदनाविरोधात् ॥ ९ ॥

अश्वमेधे न सर्वं भक्षयिष्यन्ति । अर्थात् सर्वं भक्षयन्तोऽश्वमेधं न समापयेयु ।तत्राऽश्वमेधश्रुतिः प्रत्यक्षा । सा विरुध्यमाना चोदकप्राप्तं सर्वभक्षणं बाधते । प्रकृतौ तु न विरोध । तस्मात् सर्वं प्रकृता भक्षयेयुरिति ॥९॥ आ० नि० ॥ ऋत्विजामेव शेषभक्षणाधिकरणम्३ ॥

**अर्थसमवायात् प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥**

स्तो दर्शपूर्णमासौ । तत्राऽऽमनन्ति । भिन्ने जुहोति, स्कन्ने जुहोतीति । तत्र सन्देह । किं कृत्स्ने भिन्ने स्कन्ने च प्रायश्चित्तम्, उतैकदेशेऽपि भिन्ने स्कन्ने चेति । किं पुनः सर्वभिन्नं, किमेकदेशभिन्नमिति । चूर्णीकृतमयोग्यं प्रयोजनाय, कृत्स्नभिन्नम् । यच्छकले विगतेऽपि प्रयोजनसमर्थम्, तदेकदेशभिन्नमिति । किं प्राप्तम् । एकदेशभिन्नेऽपि प्रायश्चित्तम् । कस्मात् । अर्थसमवायात् । समवेतं तत्र भेदनम् । एकदेशभिन्नमपि भिन्नमिति । एवं प्राप्ते निमित्ते नैमित्तिकं कर्त्तव्यं भवति ॥ १० ॥ सि० ॥

**न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥**

तुशब्द पक्षं व्यावर्त्तयति । न अशेषे भिन्ने प्रायश्चित्तं स्यात् । विनष्टसंस्कारार्थं हि प्रायश्चित्तम् । कुतः । एतद्भेदनवता प्रयोजनमस्ति, न होमेन । तेन संस्कृतेन प्रयोगः करिष्यते इति प्रायश्चित्तं क्रियते । न च तेन चूर्णीकृतेन प्रयोगः शक्यते कर्त्तुम् । तस्मात् प्रायश्चित्तमनर्थकम् । एकदेशभिन्नेन तु संस्कृतेन शक्यते प्रयोगः । तस्माद् एकदेशभिन्ने प्रायश्चित्तं स्यादिति ॥ ११ ॥ पूर्व० ॥

**स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थेनानित्यत्वात् ॥ १२ ॥**

स्याद् वा प्रायश्चित्तं, कृत्स्नभिन्नेऽपि । कुतः । प्राप्तनिमित्तत्वात् । प्राप्तं हि निमित्तं भेदनम् । प्राप्ते च निमित्ते नैमित्तिकं कर्त्तव्यम् । यच्चोक्तम् । व्यापन्नसंस्कारार्थं प्रायश्चित्तमिति । नायं तस्य धर्म । कुत । नित्यसंयोगात् । नित्यवद् होमः । अनित्यं हि भेदनम् । न हि नित्यमनित्यस्योपकर्त्तुं चोद्यते । यदि नित्यं दर्शपूर्णमासयोरङ्गं नाऽनित्यस्योपकाराय । कुतः । कदाचिदनित्यं नैव स्यात् । तत्र कथं तस्योपकारकं भवेत् । तत्र को दोष । न शक्यं नित्येन उपकर्त्तुम् । तेन नित्यमुपकुर्यादिति वचनं प्रलाप एव । अथ नैमित्तिकं, न दोषो

भवति । तस्माद् अस्मत्पक्ष एव । अस्मिन् पक्षे यदा भिन्नं, तदा होमः । यदा न भिन्नं, तदा नैव होमो विधीयते । भवदीये पक्षे भवति दोष । नित्यानित्ययोर्नास्ति सम्बन्ध इति । तस्माद् भिन्नमात्रे प्रायश्चित्तमिति ॥ १२ ॥ उत्तरम् ॥

## गुणानाञ्च परार्थत्वाद्वचनाद् व्यपाश्रयः स्यात् ॥१३॥

असति वचने न गुणो गुणार्थो भवितुमर्हति । प्रकरणतः सर्वं प्रधानार्थम् । भिन्नमपि होमोऽपि । न च भिन्नमाधारभावेनोपदिश्यते । भिन्नस्याधारभावे हि न होमान्तरं विधीयेत । प्रधानस्यैव हि तदा भिन्नो गुण इति गम्यते । तत्र आहवनीयसंयोगो बाध्येत । वचनाद्विकल्प इति चेन्न । निमित्तत्वेन सम्भवात् । होमस्य च श्रुत्या विहितत्वात् । यदा होमो विधीयते, तदा श्रुत्या । यदा भिन्नो गुणस्तदा वाक्येन । तस्मान्नाधारो भिन्नः । यद्युच्येत, निमित्तपक्षेऽपि न होमान्तरं, प्रकृतस्यैव होमस्य निमित्तं विधीयेतेति । तन्न । अनुपादीयमानं हि निमित्तमित्युच्यते । यदि हि विधीयेत, निमित्तमेव तन्न स्यात् । यदि च यस्यापि निमित्तं सोऽप्युद्दिश्येत, तत्र द्वयोरुद्दिश्यमानयोः सम्बन्ध एव न स्यात् । न चात्र भेदनं कुर्यादिति विधीयते । भेदने निर्वृत्ते यदन्यच्छ्रूयते, तद् विधीयते ॥१३॥ युक्ति ॥

## भेदार्थमिति चेत् ॥ १४ ॥

अथोच्येत, एवमुपायं तत्कपालं सन्धीयते । गायत्र्या त्वा शताक्षरया सन्दधीतेति तत्कपालं संदध्यामिति । तत्र वक्ष्यामः ॥१४॥ आ० ॥

## शेषभूतत्वात् ॥ १५ ॥

न भेदनस्य शेषभूतं युज्यते, न तत् सन्धातुं शक्यते होमेन मन्त्रेण वा । मृदापि सन्धीयमानस्य भिन्नबुद्धिर्नैवापेयात् ॥१५॥ आ० नि० ॥

## अनर्थकश्च सर्वनाशे स्यात् ॥ १६ ॥

सर्वनाशे च श्रूयते, भिन्नं कपालमप्सु प्रवहन्तीति । तत्रानर्थकः संस्कार । ननु तदुद्धृत्योपधायिष्यते । नेति ब्रूमः । अन्यदुपदधातीति हि आमनन्ति । तस्माद् नैमित्तिकं कर्माङ्गं भिन्ने जुहोतीति ॥१६॥ युक्ति. ॥ कृत्स्नैकदेशभेदे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ४ ॥

## क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥१७॥

दर्शपूर्णमासयो' श्रूयते— अथ यस्य पुरोड़ाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति । यदा तद्धवि सन्तिष्ठेत अथ तदेव हविर्निर्वपेत् । यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति । तत्र सन्देह' । किं सर्वक्षामे प्रायश्चित्तम्, उतैकदेशे क्षामे इति । किं प्राप्तम् । प्राप्तनिमित्तत्वात् कृत्स्ने वा एकदेशे वा । एवं प्राप्ते ब्रूम । क्षामे तु सर्वदाहे स्यादिति । तुशब्द· पक्षं व्यावर्त्तयति, क्षामे सर्वदाहे प्रायश्चित्तं स्यात् । कुतः । एकदेशस्यावर्जनीयत्वात् । न शक्यते एकदेशक्षमता वर्जयितुम् । नियतमग्निसंयोगे दाह्यस्य सूक्ष्मा अवयवा क्षीयन्ते । तप्तेषु च कपालेष्वध' पाकार्थं पुरोड़ाशोऽधिश्रीयते, उपरि चाङ्गारा अभ्युह्यन्ते । तदवर्जनीयं, निमित्तत्वेनापि श्रूयमाणं नित्यमेव स्यात् । तत्र यस्येति निमित्तश्रवणं विवक्षितं स्यात् । तस्मात् सर्वक्षामे प्रायश्चित्तमिति ॥ १७ ॥ आ० ॥

दर्शनादेकदेशे स्यात् ॥ १८ ॥

न चैतदस्ति । सर्वदाहे प्रायश्चित्तमिति, एकदेशे क्षायति भवितुमर्हति । निमित्तं हि उपसम्प्राप्तं क्षाणं नाम । एकदेशक्षाणमपि क्षाणमेव । यदि तत्र न क्रियते, श्रुतं न क्रियेत । न चैतद् युक्तम् । अपि च दर्शयति । यदा तद्धवि सन्तिष्ठेत, अथैतदेव हविर्निर्वपेदिति, तेनैव हविषा संस्थानं दर्शयति । तत् सर्वक्षाणे नावकल्पते । तस्मादेकदेशे एव क्षायति प्रायश्चित्तमिति ॥ १८ ॥ आ० ॥

अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १९ ॥

वाशब्द· पक्षं व्यावर्त्तयति । न चैतदस्ति, यदुक्तम्, एकदेशेऽपि क्षायति प्रायश्चित्तमिति । किं तर्हि । कृत्स्नक्षामे एव प्रायश्चित्तम् । उपसम्प्राप्तं हि निमित्तं, यच्छास्त्रोक्तपुरोडाशौ क्षायत इति । कृत्स्नस्य क्षातिर्नावयवस्य । न चैकदेशक्षामे । तस्यावर्जनीयत्वात् । अथ यदुक्तं, क्षामेण हविषा समाप्तिर्दृश्यते, यदा तद्धविः सन्तिष्ठेतेति । उच्यते । संस्थाने निमित्ते प्रायश्चित्तम् । यदाप्यन्येनापि हविषा तत् संस्थाप्यते, तदापि प्रायश्चित्तमिति न दोषः ॥ १९ ॥ आ० नि० ॥

तद्धविःशब्दान्नेति चेत् ॥ २० ॥

एवं चेदुच्यते, अन्येन हविषा यदा संस्थाप्यते इति । नैवम् । तद्धवि·शब्दात् । तद्धविःशब्दोऽत्र भवति । यदा तद् हविः सन्तिष्ठे-

तेति । अत्रान्येन हविषा संस्थाप्यमाने तद्धवि.शब्दो नावकल्प्येतेति ॥ २० ॥ आ० ॥

## स्यादन्यायत्वादिज्यागामी हविःशब्दस्तल्लिङ्ग-संयोगात् ॥ २१ ॥

स्यादिज्यागामी हवि शब्दः । तद्धविः सन्तिष्ठेत तद्धविष्कं कर्म सन्तिष्ठेतेति । ननु मुख्याभावे गौणो गृह्यते, नान्यथेति । उच्यते । मुख्याभाव एवायम् । कथम् । यदा सन्तिष्ठेत, तत् कर्म्म तेन हविषेति वाक्यमभिद्येत । अवाचकं च स्यात् । कर्मैव हि सन्तिष्ठते, न हवि. । तेन निमित्तम् । तद् हविरित्यनुवादः । अनुवादश्चेदन्यहविष्केऽपि कर्म्मणि संस्थिते प्रायश्चित्तमिति गम्यते। कथं पुनर्हवि शब्द कर्म्मणि वर्त्तते इति । तल्लिङ्गसंयोगात् । हवि सम्बद्ध कर्म्म हवि.शब्देन हवि.सम्बन्धाद् अवगम्यते । यथा प्रसह्यकारितया देव-दत्तसम्बद्धया लक्ष्यते सिंहः । एवं हविषापि कर्म लक्ष्यते । तस्मात् कृत्स्नक्षामे प्रायश्चित्तमिति ॥ २१ ॥ आ० नि० ॥ क्षामे सर्वदाहे प्रायश्चित्तानुष्ठानाधिकरणम् ॥ ५ ॥ क्षामेष्टिन्याय ॥

## यथाश्रुतीतिचेत् ॥ २२ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रूयते । तत्रेदमस्ति वचनं, यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । तत्र सन्देह' । किमुभयस्मिन्नार्त्ते पञ्चशरावो निर्वप्तव्य, उत अन्यतरस्मिन्निति । किं प्राप्तम् । इति चेत् पश्यसि, एवञ्जातीयके एकस्मिन्निति ॥ तत्र ब्रूम. । उभयोरिति । कुतः । यथाश्रुति भवितुमर्हति । यद् यच्छ्रूयते, तद् अवगम्यते । उभयोश्चार्त्तौ श्रूयते । श्रूयमाणं च विवक्षितुं न्याय्यम् । इतरथा यावदेव हविरिति तावदेवोभयं हविरिति स्यात् । तस्मादुभयोरार्त्त्यां पञ्चशराव इति ॥ २२ ॥ पूर्व० ॥

## न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३

नैतदेवम् । उपपातो हि आर्त्तिसम्बद्धं द्रव्यं, तत् कारणम् । तस्य लक्षणं हविरार्त्ति । तद् व्यस्तं समस्तं च निमित्तम् । न हि उभयशब्देन शक्यं विशेष्टुम । विशिष्यमाणे हि वाक्यमभिद्येत । हविष आर्त्तौ पञ्चशरावः । स चोभयस्य हविष इति ॥ आह । यदि

विशेषणं न मृष्यते, हविषाऽपि ते विशेषणं न प्राप्नोति । तदभिधीयते । मृष्यामहे हविषा विशेषणम् । अविशेष्यमाणेऽनर्थकं स्यात् । यस्यार्त्तिमार्च्छेदित्यविशेषे यत्किञ्चिदिति गम्यते । तत्र सर्वस्यैव किञ्चिदार्त्तिमृच्छति । अन्ततश्चरितं निमिषित चिन्तितमिति । तत्र यस्येति निमित्तवचनं नित्यमनुपपन्नं गम्यते । तस्मादवश्यमार्त्तिर्विशेष्टव्या । सा च हविषा विशिष्यते। तथा हविरार्त्तिसम्बन्धनिर्वृत्तिर्निमित्त पञ्चशरावस्य । शक्नोति हि श्रुत्या तं सम्बन्धं वक्तुम् । हविरुभयसम्बन्धं नु वाक्येन ब्रूयात् । दुर्बलं च वाक्यं श्रुतेः ॥

ननु हविरार्त्तिसम्बन्धोऽपि वाक्येनैव । उच्यते । आर्त्तिनिर्वृत्तिरपि तत्र गम्यते । सा च श्रुत्या । हविरुभयसम्बन्धेऽत्यन्तं श्रुतिरवहीयते । तस्मान्न तत्सम्बन्धो निर्वर्त्यमानो निर्दिश्यते इति । कथं तर्हि उभयशब्द । उभयमिति नित्यानुवाद । एकस्मिन्नप्यार्त्तेऽपरस्मिन्नपि । तस्मादुक्तं, यस्योभयं हविरार्त्तिमार्च्छेदिति ॥

अथ कस्मान्न पदद्वयविशिष्टा आर्त्तिर्निमित्तं प्रतीयते इति, यस्योभयगुणविशिष्टं हविरार्त्तिमार्च्छेदिति । अत्रोच्यते । कथं तावद् भवान् मन्यते– विशिष्टेन अर्थेन विशिष्टा आर्त्तिर्निमित्तम् ? इति । आह । विशिष्टार्थस्य सन्निधानाद् विशिष्टोऽर्थ आर्त्तिसन्निहित । किं पुन स्याद्, यद्येवं भवेत् ? तत उभयविशिष्टा आर्त्तिर्निमित्तमिति गम्यते । अत्रोच्यते । इदं तावद्देवानाम्प्रियः प्रष्टव्य । यस्यापि हि विशिष्टार्थे आर्त्तिसन्निहितो भवति, किं तस्याविशिष्टो दण्डै पराणुद्यते । किमतो यद्न पराणुद्यते। एतदतो भवति । अविशिष्टगताप्यार्त्तिर्निमित्तं पञ्चशरावस्य भवति । ननूभयशब्दो हविर्विशेक्ष्यति । न । हवि:शब्देनासम्बद्ध्यमानस्तन्न शक्नोति विशेष्टुम् । आनन्तर्य्यात् सम्भन्त्स्यते तर्हि । तथापि न समर्थः । न हि असौ निवृत्तिं प्रयोजयति ॥ आह । विशेषवचनत्वात् तन्निवर्त्तको भविष्यति । यथा शुक्ला गौरानीयतामिति । न एवमभिहिते कृष्णामानयन्ति । शुक्लशब्दः एनां गां कृष्णादिभ्यो निवर्त्तयति । उच्यते । विषम उपन्यास । न तत्र गवाकृत्या द्रव्यं लक्षयित्वा तस्यानयनमुच्यते । तत्रापि चेदेवमभविष्यद्, नैवैनां शुक्लशब्दो व्यशेक्ष्यत । उभयविशेषणविशिष्टं तु तत्रानयनं प्रधानमुच्यते । इह पुनरार्त्तिर्हविष्ट्वलक्षिते द्रव्ये पञ्चशरावः । किं पुन कारणं, प्रधानभूते आख्यातार्थे संहत्य विशेषणं भव-

ति, परार्थे पुनर्वियुज्येति । उच्यते । प्रधानभूते आकृतिर्गुणो वा तत्सम्बन्धार्थमुच्यते, तत्रोभयविशेषणविशिष्ट एकस्माद् वाक्याद् अवगम्यते। तद्विशिष्टं च कृत्वा कृती भवति। अन्यतरविशिष्टं कुर्वन्नश्रुतं कुर्य्यात्। यत्र पुनराकृतिलक्षिते द्रव्यं आख्यातार्थं कीर्त्यते, तत्र सर्वेष्वेव तज्जातीयेषु उक्तो भवति । न तत्रैकस्मिन् निर्वृत्ते कृतं मन्येत। अपरस्मिन्नपि हि आकृतिलक्षिते तदुक्तमेव । तत्राकृतम्, अप्रतिषिद्धं च किमिति न क्रियेत ? । आख्यातार्थे पुनः प्रधाने न तस्य आकृतिलक्षितेन सम्बन्धः । तत्र तदाकृतिकान्तरेऽनुपसंह्रियमाणेऽपि कृतमेव प्रधानम्। सगुणं च प्रधानं भवति । न च किञ्चिच्छ्रुतं हीयेतेति। तस्मात् तत्र विशेषणं युक्तं, न त्विह तथा। इह हि हविराकृतिकस्य द्रव्यस्यार्त्तौ पञ्चशराव इत्युक्तम्। तन्न शक्यं विशेषवचनेन प्रतिषेधावाचकेन निवर्त्तयितुम् ॥

अपिचोभयशब्दे हविषा सम्बद्ध्यमानेऽपि नैवोभयविशिष्टा आर्तिः प्रतीयते। किं कारणम्। हविषोभयशब्दः सम्बद्ध्यते, न, आर्त्तिमाच्छेंदित्यनेन पदेन । तत्र सन्निहितेऽप्युभयशब्दे हविःशब्दस्य यावान् अर्थः, तावतैवार्त्तिः सम्बद्ध्यते । अविशिष्टश्च तत्रार्थ । तस्मान्नोभयविशिष्टा आर्त्तिर्निमित्तमिति ॥

अथार्त्त्याश्रयविभक्तियोगादुभयशब्दस्य, उभयविशिष्टा आर्त्तिरित्युच्यते। तन्न। विभक्तिसंयोगो हि हविर्विशेषणमुभयशब्दं शक्नुयात् कर्त्तुम्। समभिव्याहारान्नार्त्तिविशेषणम् । न हि अस्यार्त्त्या हविर्विशिष्टस्य समभिव्याहारोऽस्ति । अथोच्यते । असत्यपि समभिव्याहारे आर्त्तिशब्दसन्निधानात् तद्विशिष्टैवार्त्तिः प्रत्येष्यते इति। तन्न । असत्यां हि आकाङ्क्षायां सन्निधानमकारणं भवति। यथा, भार्य्या राज्ञः पुरुषो देवदत्तस्येति। एकवाक्यगतत्वात् तद्विशिष्टं गम्यते इतिचेत्। नैतदेवम्। एकस्मिन्नपि वाक्ये तदवयवभूतस्यानपेक्षितस्य नैव भवति सम्बन्धः। यथा, अश्वेन व्रजति श्वेतेन पटेन आवृत इति, नानपेक्षितस्याश्वस्य श्वैत्यं विशेषणं भवति॥ अथोच्यते, आर्त्तिविशिष्टेन हविषा उभयस्य सम्बन्ध इति । तदपि नोपपद्यते। न हि, आर्त्तिमार्च्छेदिति हविर्विशेषणत्वेनोपादीयते। किन्तर्हि? पञ्चशरावस्य निमित्तत्वेन। हविरार्त्तेरुभयपञ्चशरावसम्बन्धे यौगपद्येन अभ्युपगम्यमाने वाक्यम्भिद्येत॥ अथ हविराकृतिलक्षितेन सम्बद्ध-

मार्त्त्यैदिति पुनर्हविर्विशिष्टेनोभयशब्देन सम्बद्ध्येत । तथापि वाक्यं भिद्येत । तस्मान्नोभयविशिष्टा आर्त्तिर्निमित्तम् ॥ आह । यथैव आख्यातार्थप्राधान्ये उभयविशिष्टा उच्यते इति नान्यतरविशिष्टा निमित्तं गम्यते, एवम् इतरस्मिन्नपि पक्षे उभयविशेषणविशिष्टा सोऽच्यते इति । यद्यपि स्वेन आत्मनाऽविशिष्टा, तथाप्यन्यतरविशिष्टा भवन्ती न निमित्तं भवितुमर्हतीति, को विशेष ? इति । तदभिधीयते । मत्पक्षे उपादेयत्वेन विशेषणद्वयं, त्वत्पक्षे पुनर्लक्षणत्वेन । आह । किमतो यल्लक्षणत्वेन ? । उच्यते । एतदतो भवति । हविराकृत्या लक्ष्यते द्रव्यम् । तस्य किञ्चिद् वक्तव्यमिति तदलक्षितमुच्यमानं न विज्ञायेत कस्य स्यादिति । अथ वा सर्वस्यैव द्रव्यस्येति गम्येत । तस्मिन्नुभयास्मिन्नन्यविशिष्टे सति तस्याश्रयं लक्षयितुं हविराकृतिरुच्यते । तत्र द्वयमापतति । यद् हविराकृतिकं तदार्त्तमिति । यद्वा यद् हविराकृतिकं, तदुभयमिति । यदि तावद् यद् हविराकृतिकं तदार्त्तमित्यपेक्ष्यते, ततो हविराकृतिकमुभयमनुभयं वा आर्त्तं निमित्तं गम्यते । अथ यद् हविराकृतिकं तद् उभयमिति ततो न आर्त्तिर्हविषा विशेष्यते । हविषा अविशिष्यमाणायामार्त्तौ उभयशब्दो हविर्विशेक्ष्यतीति नैतदवकल्पते । कथमिति । एवं किल विशेष्येत, यद् हविराकृतिकमुभयमिति । तत्र पुनर्वक्तव्यं, यद् हविराकृतिकम् । उभयं, तच्चेदार्त्तमिति । कथं तेन विशिष्टेन आर्त्तिः सम्बद्ध्येतेति । न पुनरुभयहविःशब्दौ च आर्त्तिविशेषणार्थमुच्चार्य्येयाताम् । अथ पुनरुच्चारणं न क्रियते, तथा यद्यपि हविःशब्दस्तन्त्रेण आर्त्युभयाश्रयलक्षणार्थं नोच्चार्य्येत । अविशिष्टमार्त्तेर्लक्षणं स्याद्, अविशिष्टमुभयस्य । विशिष्टे इष्टे पुनरुच्चारणं कर्त्तव्यम् । तत्र वाक्यभेदः ॥ एवमुभयशब्दो यदि आर्त्त्यातिना सम्बद्ध्येत न हविर्विशिष्टं स्यात् । तत्राऽविशिष्टस्य हविष आर्त्तिर्निमित्तं स्यात् । अथ हविःशब्देन सम्बद्ध्येत, पुनरार्त्तिसम्बन्धार्थं हविःशब्दसहितमुच्चार्य्येत । तच्चैतदिति ॥

उपादेयत्वे पुनर्नान्योन्यविशेषणत्वेन प्रयोजनम् । द्वयमपि आर्त्तिं विशेष्टुमुच्चार्य्येत । तत्र नान्यतरविशिष्टा आर्त्तिं निमित्तं भविष्यति । लक्षणत्वे त्वन्यतरविशिष्टा भवतीत्येष विशेषः ।

अपि च, सर्वस्यैव पदस्य पदान्तरसम्बन्धे सति च, शब्दादृते तृतीयेन पदेन सत्यां गतौ सन्निहितेनापि सम्बन्धो न युक्तः । न हि भवति,

भार्य्या राज्ञः पुरुषो देवदत्तस्येत्यत्र राजा पुरुषविशेषणम् । असत्यान्तु गतावुपादेयस्यानेकस्यापि प्रधानेन सम्बन्धोऽवकल्पते व्यवहितेनापि। व्यवधानादर्थो बलीयानिति। लक्षणत्वे तु लक्षणद्वयसंनिपातेऽवश्यं हेयेऽन्यतमस्मिन् व्यवाहितो गुणो वा हातव्यो भवति ॥२३॥ सिद्धान्तः ॥ एकहविरार्तावपि पञ्चशरावनिर्वापाधिकरणम् ॥ ६ ॥

## होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥

ज्योतिष्टोमे श्रूयते, हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्तीति । तत्रान्येन वचनेनाभिषव उक्तो यजतिना होमः । तौ तावन्न विधीयेते । न च तयोः क्रमः । अर्थादेव हि स प्राप्तः । तस्माद् एककर्तृकं होमाभिषवाभ्यां भक्षणं विधीयते । अभिषवे कृते होमे च तत्कर्तृभिर्भक्षणं कर्त्तव्यमिति । तत्र एष सन्देह । किमुभयं यः कुर्य्यात् स एव भक्षयेत् ? उतान्यतरेणापि भक्षणमिति । किं प्राप्तम् । होमाभिषवभक्षणं च तद्वत् । तद्वदेव स्याद्, यद्वद्धविष आर्त्तिः । कथम् । नैतदेवं सम्बद्ध्यते । अभिषुत्य ततो हुत्वा ततो भक्षयेदिति । नानेन अभिषवस्य होमस्य च क्रम कीर्त्त्यते । अभिषुत्य ये जुह्वति, ते भक्षयन्तीति । वाक्यं हि एवमभिद्येत । अभिषुत्य भक्षयन्ति, हुत्वा भक्षयन्तीति । तस्माद्धोमाऽभिषवयोः परस्परेण सम्बन्धो नास्तीत्येकेनापि भक्षणं सम्बद्ध्येत। अपरेणापि, अभिषुत्य भक्षयन्तीति। तस्मादन्यतरेण निमित्तेन भक्षणं भवतीति ॥ २४ ॥ पूर्व० ॥

## उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५ ॥

उभाभ्यां बा निमित्ताभ्यां भक्षयेत् । न भक्षणं होमाभिषवयोर्धर्मो विधीयते।किं हि स्याद् यदि तयोर्धर्मो विधीयेत ? होमाभिषवौ प्रधानमिति भक्षणं गुणः प्रतिप्रधानं भिद्येत । अथ पुनरुभाभ्यां निमित्ताभ्यां भक्षणं विधीयते । तस्मिन् विहिते एकोऽर्थो विहितो भवति । तेनैकं वाक्यम् । तदेतावति पर्य्यवसितं भवति । अभिषुत्य हुत्वा भक्षयन्तीति । तत्रैतदवान्तरं वाक्यं, हुत्वा भक्षयन्तीति । न च महावाक्ये सति अवान्तरवाक्यं प्रमाणं भवति । पदाऽन्तरस्य बाधनात् । यथा, नोद्यन्तमादित्यमीक्षेतेति प्रतिषेधो गम्यते महावाक्याद्, अवान्तरवाक्यादीक्षणविधानम् । तस्मादन्यतरनिमित्तं भक्ष-

णमश्रुतम् । महावाक्यादिदमवगम्यते । द्वे निमित्ते भक्षणस्येति । भक्षणश्चान्यथा कुर्वञ्छ्रुतं परित्यजेत् । तस्मादुभाभ्यां भक्षणमिति ॥ २५ ॥ सिद्धान्त. ॥ होमाभिषवोभयकर्तुरेव भक्षणाधिकरणम् ॥७॥

पुनराधेयमोदनवत् ॥ २६ ॥

अग्निहोत्रे श्रूयते, यस्योभावनुगतावग्नी अभिनिम्लोचेत्, यस्य वाऽभ्युदियात् पुनराधेयमेव तस्य प्रायश्चित्तिरिति । तत्र सन्देह' । किमन्यतरानुगमने पुनराधेयम्, उतोभयानुगमने ? इति । किं प्राप्तम् । पुनराधेयमोदनवत् स्यात् । यथा पञ्चशरावोऽन्यतरस्य आर्त्तौ भवति । एवं पुनराधेयमन्यतरानुगमने भवितुमर्हति, वाक्यभेदप्रसङ्गादिति । यथा, इह यक्ष्ये, इह सुकृतं करिष्यामीत्येवमेवाभिसम्बन्ध इति ॥ २६ ॥ पूर्व० ॥

द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २७ ॥

द्रव्ये विनष्टे तस्यैव द्रव्यस्योत्पत्तिरत्र प्रायश्चित्तम् । तस्य दृष्टं प्रयोजनं, कथं द्रव्यं भवेदिति पुनराधानं क्रियते । तत्रैष धर्मो, द्वावग्नी सह उत्पद्येते, न पृथक्त्वेन । तत्रान्यतरानुगमने न शक्यते एक आधातुं विगुणं स्यात् । अथ द्वितीयमप्यादधीत । स यदि तावदाहवनीयः । तत्राहवनीयोऽन्यो होमार्थो विद्यते एवेति न स होमाय स्यात् । यश्च होमार्थमुत्पाद्यते स आहवनीय । यत एष संस्कारशब्दः । संस्कारशब्दश्चैकेनापि संस्कारेण विना न भवति । एषोऽपि च संस्कारः । यद् होमार्थता । यदाहवनीये जुहोतीति श्रूयते । तदेकस्मिन्ननुगते, एकस्मिन्नाधीयमाने वैगुण्यम् । द्वयोरपि हि वैगुण्यमेव । तस्मान्नैकस्मिन्ननुगते पुनराधेयमशक्यत्वादिति ॥ २७ ॥ सि० ॥ पुनराधानं प्रति वह्न्यनुगमद्वयस्य निमित्तताधिकरणम् ॥ ८ ॥

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥

दर्शपूर्णमासयोः श्रूयते, यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । तत्र सन्देहः । किं हविषि आर्त्ते पञ्चशरावः प्रतिनिधिः, उत निमित्ते कर्मान्तरमिति । कथं प्रतिनिधि , कथं कर्मान्तरमिति ? । यद्येवमभिसम्बन्धो भवति, पञ्चशराव निर्वपेत् कुर्य्यादिति, ततः सान्नाय्यस्य कार्य्ये पञ्चशरावः प्रतिनिधिरिति । अथ न पञ्चशरावो निर्वपतिना, किन्तु देवतया सम्बद्ध्यते पञ्चशराव-

मैन्द्रं कुर्य्यादिति, ततो निमित्ते यजतिर्विधीयते ॥ किं तावत् प्राप्तम् । पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् । पञ्चशराव सान्नाय्यस्य प्रतिनिधिः । कुतः । द्रव्यश्रुतेः । द्रव्यस्य निर्वापे श्रवणं, नैन्द्रसम्बन्धः । कुतः । एवं निर्वापविधिर्भविष्यति तत्र श्रुतिर्विधायिका । इतरथा द्रव्यदेवतासम्बन्धे वाक्यं स्यात् । तत्र दुर्बलं श्रुतेः । तस्मात् प्रतिनिधिरिति ॥ २८ ॥ पूर्व० ॥

## चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ २९ ॥

निमित्ते वा यजतिः कर्मान्तरं, द्रव्यदेवताविधिः । द्रव्यदेवतमिह श्रूयते, पञ्चशरावमैन्द्रं कुर्य्यादिति । इतरथा हि ऐन्द्रमिति प्रमादपाठोऽवगम्येत । ऐन्द्रमाहेन्द्रयोर्वा अयथार्थानुवादः । ऐन्द्रमिति स्यात् । अवाच्ये हि ते देवते । ऐन्द्रशब्देन इन्द्रो महेन्द्रश्च न शक्योऽनुवादितुम् । विशेषणत्वे वाक्यभेद । ननु श्रुतिर्बलीयसीत्युक्तम् । सत्यमेवम् । किन्त्वितरस्मिन् पक्षे बाध्यतेतरां श्रुतिः । ऐन्द्रशब्दस्यातन्त्रत्वात् ॥ २९ ॥ सिद्धान्त ॥ पञ्चशरावनिर्वापस्य कर्मान्तरताधिकरणम् ॥ ९ ॥

## स प्रत्यामनेत् स्थानात् ॥ ३० ॥

स एष नैमित्तिको यागः, किममावास्यां प्रति आमनेत्, न? इति । किं प्राप्तम् । स प्रत्यामनेत्, स्थानात् । स एष यागोऽमावास्यां प्रति आम्नातुमर्हति । कुतः? । स्थानात्, यागे विनष्टे याग एष श्रूयमाणो यदि न नष्टस्याङ्गं, ततोऽर्थवान् भवति । अथाङ्गं, निष्प्रयोजनस्याथ क्रियमाणं निष्प्रयोजनमेव भवितुमर्हति । विगुणं च निष्प्रयोजनमेव । विनष्टमामावास्यमिति प्रत्यक्षम् । इदमपि कर्त्तव्यमिति शाब्दम् । यद् विनष्टं, तन्निष्फलमिति न कर्त्तव्यम् । इदं च कर्त्तव्यमिति प्रत्याम्नायोऽवगम्यते ॥ ३० ॥

## अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥

अङ्गं वा एतद् विधीयते, हविष आर्त्तौ निमित्ते याग श्रूयते । तत्र त्रयमापतति । यद्वा निमित्ते स्वतन्त्रं कल्प्यं फलम् । यद्वा अमावास्याया यत् कार्य्यं तदस्य । यद्वा तस्याङ्गमिति । स्वप्रधानं तावन्न । कल्प्यत्वात् फलस्य । नामावास्यायाः कार्य्यं । किं कारणम् । अश्रवणात् । नैवं श्रूयते । तस्या कार्य्यं वर्त्तते इति कर्त्त-

व्योपदेशेनापि नान्यतमाध्यवसानं त्रिष्वेषु पक्षेषु। तेषु च पक्षेषु विवक्षितेषु कर्त्तव्योपदेशोऽवकल्प्यते ॥ नन्वेवमभिसम्बन्धो भविष्यति- यस्योभय हविरार्त्तिमार्च्छेत् स एतेन यागेन साधयेद्, यत् साधयितुकामः। किञ्चासौ साधयितुकामो, यदमावास्याया. फलमिति। अत्रोच्यते । फलपदेन सम्बन्धाभावात् सम्बन्धस्य विधायकं वाक्यम् । श्रुत्या च यागकर्त्तव्यता विधीयते । सा च वाक्याद् बलीयसी । तस्मान्न तत्कार्य्ये वर्त्तते इति । किं तर्हि प्रयोजनम् । तस्या अमावास्याया अङ्गम् । नन्वेतदपि नास्ति तस्या अङ्गमिति । तत्रोच्यते । तत्सम्बन्धेन समाम्नानात् तत्प्रयोगवचनेन गृह्यते । दर्शपूर्णमासाभ्यां फलं साधयेत् सर्वैरङ्गै. सह । अस्यां च आर्त्तौ एष याग इतिकर्त्तव्यता इति । तस्मादेवमवगम्यते- विनष्टे हाविषि आमावस्यं यन्न शक्नोति स्वकार्य्यं कर्त्तु, तदनया इतिकर्त्तव्यतया सहितं शक्नोतीति। तस्मान्निमित्ते कर्म्माङ्गमिति ॥ ३१ ॥ सिद्धान्त. ॥ पञ्चशरावयागस्य नैमित्तिकदर्शयागाङ्गताधिकरणम् ॥ १० ॥

## विश्वजित्त्वप्रवृत्ते भावः कर्माणि स्यात् ॥ ३२ ॥

एतदाम्नायते, सर्वाभ्यो वा एष देवताभ्य. सर्वेभ्य. पृष्ठेभ्य आत्मानमागुरते, यः सत्राय आगुरते, विश्वजिता अतिरात्रेण सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत, सर्वाभ्य एष देवताभ्य. सर्वेभ्य. पृष्ठेभ्य आत्मानं निष्क्रीणीते इति । सत्राय आगोरणे निमित्ते विश्वजित् श्रूयते । तत्र सन्देह । किं सत्राय आगूर्य्य यः सत्रं प्रयुङ्क्ते, तस्य विश्वजित्, उत यो न प्रयुङ्क्ते तस्येति । किं तावत् प्राप्तम् । यश्च प्रयुङ्क्ते, यश्च नेत्यविशेषात् । अथवा प्रयुञ्जानस्य । कुत. । निमित्ते कर्माङ्गमेवञ्जातीयकमित्युक्तम् । तदप्रयुज्यमानस्य कथमङ्गं स्यादिति ॥ एवं प्राप्ते ब्रूम' । विश्वजित्तु अप्रवृत्ते भवेत् । सत्रस्य क्रियाया अभावे विश्वजित् । कि कारणम् । एवं हि श्रूयते, य सत्राय आगुरते स विश्वजिता अतिरात्रेण यजेतेति । यः सत्रं करिष्यामीत्येवमागुरते स विश्वजिता यागेन साधयेदिति । यदर्थमसौ सत्रं कर्त्तुमिच्छति, तदर्थमिति गम्यते । कथम् । य आगुरते, स तेन यजेत । यागेन निर्वर्त्तयेदिति वाक्यार्थो गम्यते, न यागं निर्वर्त्तयेदिति। कुत' । यागस्य गुणत्वेन श्रवणात् । कथं तस्य गुणत्वम् । तृतीया-

निर्देशात् । प्राधान्ये हि फलं कल्प्येत । इतरस्मिँस्तु पक्षे प्रत्यक्षाद् वाक्यात् फलावगमः ॥ ३२ ॥ सि० ॥

## निष्क्रयवादाच्च ॥ ३३ ॥

एवं तत्र श्रूयते, सर्वाभ्यो वा एष देवताभ्य सर्वेभ्यः पृष्ठेभ्यो यदात्मानं निष्क्रीणीते इति । निष्क्रयद्वारेण च संस्तवः प्रवृत्ते न युज्यते । तस्मादप्रवृत्ते विश्वजिदिति । अथ कस्मान्नैवमभिसम्बन्धः क्रियते– आगूर्य्य सत्राय विश्वजिता यजेतेति । विश्वजितः सत्रस्य च सम्बन्धो विज्ञायेत । आगोरणवेलायामिति । नैवम् । आगोरणविशेषणं हि सत्रं सत्रविश्वजित्सम्बन्धे व्यवहितकल्पना स्यात् । श्रुतिश्च पुरुषेण विश्वजितं सम्बन्धयति, विश्वजिता यजेत पुरुष इति, न सत्रेण । सत्रस्य विश्वजिद् याग इति, आगूर्य्य इति च । एवं श्रवणमर्थवद् भवति । सत्राङ्गत्वे त्वर्थप्राप्तं न वक्तव्यम् । न च आगूर्य्य यजेतेत्यागोरणानन्तर्य्यं शक्यं विधातुम् । अशब्दार्थो हि तदा आश्रीयेत । समानकर्तृकता हि शब्दवती । पूर्वकालभावस्य चार्थप्राप्तत्वान्न वक्तव्यता । तस्माद् आगूर्य्य इत्यत्रैव विश्वजितः सम्बन्धः । स चेद्, आगूर्य्य, न सत्रेण यजेत यस्य विश्वजिदिति ॥ ३३ ॥ युक्तिः ॥ सत्रायागूर्याप्रवृत्तस्य विश्वजिदावश्यकताधिकरणम् ॥ ११ ॥

## वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥

दर्शपूर्णमासयोः श्रूयते, बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सेन अमावास्यायामिति । तत्र सन्देहः । किं वत्ससाधनकं व्रतं विधीयते, उत व्रतस्य काल इति । अथ वत्सो व्रताङ्गमिति । किं प्राप्तम् । वत्ससाधनकं व्रतं विधीयते ? इति । अमावास्यायां वत्सैर्व्रतं कुर्य्यादिति ? । वत्सव्रतसंयोगोऽपूर्वः, स विधीयते । तस्मिँश्च विधीयमाने उभयमपि विहितं भवति वत्सो व्रतञ्च ॥ ३४ ॥ पूर्व० ॥

## कालो वोत्पन्नसंयोगाद् यथोक्तस्य ॥ ३५ ॥

यथोक्तस्य वचनान्तरेण प्राप्तस्य कालोऽस्य विधीयते । कुतः । उत्पन्नसयोगात् । उत्पन्नसंयोगोऽयं व्रतस्य, नोत्पत्तिसंयोगः । कथम् । अमाषममांसं बहुसर्पिष्कं व्रतं व्रतयन्तीति विहितं पूर्वं व्रतम् । अप्रज्ञातश्च कालः । तस्मात् कालविधिरिति ॥ ३५ ॥ सि० ॥

## अर्थापरिमाणाच्च ॥ ३६ ॥

न च शक्योऽत्रार्थः परिमातुम् । वत्सेन व्रतमुपयन्तीति किं वत्सोऽत्र व्रतयितव्य ? एवं वत्सेन व्रतमुपगतं भवति । किं वत्सेन हस्तस्थानीयेन व्रतयितव्यमिति । एवं तदुपेतं भवति । उत वत्सं सन्निधाय तदुपेयादिति ? । नैव व्यवतिष्ठते शास्त्रार्थः । करणं हि एतन्निर्द्दिष्टम् । नेतिकर्त्तव्यता । एतावदुक्तम् । वत्ससाधनं व्रतं कुर्यात् । कथमित्येतदविशेषाकाङ्क्षमेवावतिष्ठेत । नैव अर्थः परिच्छिद्यते । व्रते किं वत्सेन क्रियते इति । अथवा यद्वा तदेति । तथा वत्सो व्रतेन सम्बद्ध्यमान इष्टः स्यात् । अपरार्थतामापद्येत । परार्थतां चास्य द्योतयति विभक्तिस्तृतीया । साधकतमे हि सा भवति । तस्मादपि कालार्थः संयोगः ॥ ३६ ॥ युक्तिः ॥

## वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३७ ॥

यदुक्तं, निहितत्वाद् व्रतस्यानुवाद इति । सत्यमेतत् । यत्तूक्तं, कालविधानार्थ इति । तन्न । वत्सस्तदङ्गत्वेन विधीयते । कुतः । श्रुतिसंयोगात् । वत्सेऽङ्गे विधीयमाने श्रुतिर्निमित्तं, काले लक्षणशब्दः स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादङ्गं वत्स इति ॥ ॥ ३७ ॥ पूर्व० ॥

## कालस्तु स्यादचोदना ॥ ३८ ॥

कालस्त्वेष निर्द्दिश्यते, न वत्सोऽङ्गं विधीयते । नैषा चोदना । बर्हिषा वै पौर्णमासे व्रतमुपयन्ति । वत्सेनामावास्यायामिति । कथमवगम्यते । विधिनैकवाक्यत्वात् । परस्ताच्च विधिः समाम्नायते । पुरा वत्सानामुपाकर्त्तोर्दम्पती अश्नीयतामिति । यदि एषोऽपि विधिः स्याद्, वाक्यं भिद्येत । अनुवादश्च तथाभूतस्यार्थस्य भवति । न च वत्साङ्गता अप्राप्ता । अप्राप्तस्तु कालः ॥ ३८ ॥ उत्तरम् ॥

## अनर्थकश्च कर्म्मसंयोगे ॥ ३९ ॥

न च शक्यो वत्सोऽत्र व्रतयितुम् । कर्मसंयोगे वत्सेन न अर्थः शक्यते कश्चित् कर्त्तुम् । तस्मादपि न वत्सोऽङ्गम् ॥ ३९ ॥

## अवचनाच्च स्वशब्दस्य ॥ ४० ॥

न च एतदुच्यते, विश्वस्य अर्पितं वत्सं व्रतयिष्यते इति । न चास्यार्थस्य स्वशब्दः श्रूयते । वत्स इत्याकृतिशब्दो मांसे न वर्त्तते । तस्माद् एष काल इति ॥ ४० ॥ युक्तिः ॥ बर्हिषेत्यादिश्रुतव्रतकाल-

विधानार्थताऽधिकरणम् ॥ १२ ॥

## कालश्चेत् सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४१ ॥

कालार्थः संयोग इत्येतत् समधिगतम् । इदानीं सन्देहः । किं सन्नयत्पक्षे एव कालः, उत असन्नयतोऽपीति । किं प्राप्तम् । सन्नयत्पक्षे। कुतः ? । एवं श्रूयते । पुरा वत्सानामपाकर्त्तोरिति । न चासन्नयतो वत्सापाकरणमस्ति । तस्मात् सयन्नत्पक्षे एष कालः । अपाकरणं लिङ्गमिति ॥ ४१ ॥ पूर्व० ॥

## कालार्थत्वाद्वोभयोः प्रतीयेत ॥ ४२ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न सन्नयत्पक्ष एव । असन्नयतोऽप्येष कालः स्यात् । कुतः । कालार्थत्वात् । न वत्सापाकरणेन व्रते किञ्चित् प्रयोजनमस्ति । कालेन तु प्रयोजनम् । येन च तत्र प्रयोजनं, स लक्ष्यते । कथं पुनर्वत्सापाकरणं कालार्थमिति । परार्थत्वात् । पयसे हि ते अपाक्रियन्ते । तथाहि दृष्टार्थता भवति । इतरथा अदृष्टार्थता स्यात् । तस्मान्नोपादेयत्वेन वत्सापाकरणं श्रूयते इति । यत्तूक्तं, तल्लिङ्गसंयोगात् सन्नयत्पक्षे एवेति । तन्न । असन्नयतोऽपि कालाहानात् । यस्यापि न साम्नाय्यं, तस्यापि वत्सापाकरणमेव न स्यात्, न तु वत्सापाकरणकालोऽपि । कालेन च नः प्रयोजनं, न वत्सापाकरणेन । यथा शङ्खवेलायामागन्तव्यमिति । यस्मिन्नपि ग्रामे शङ्खो न आध्मायते तस्मिन्नपि स तथा कालोऽस्तीति, न आगमनं परिहास्यते । एवमिहाप्यसत्यपि वत्सापाकरणे तत्काले भिद्यमाने व्रतं तस्मिन् काले न परिहास्यते इति ॥ ४२ ॥ सिद्धान्तः ॥ बर्हिषेत्याद्युक्तकालस्य सन्नयदसन्नयदुभयसाधारणताधिकरणम् ॥ १३ ॥

## प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र श्रूयते । सह शाखया प्रस्तरं प्रहरतीति । तत्र सन्देह । किं शाखा प्रस्तरस्याङ्गभूता, अङ्गप्रयोजनसम्बन्धस्तयोः । अथ कालार्थः संयोगः, प्रस्तरप्रहरणकाले शाखा प्रहर्त्तव्या ? इति । किं प्राप्तम् । प्रस्तरे शाखा श्रयणवत् । प्रस्तरस्याङ्गभूता शाखा । कुत । सह शाखया प्रस्तरं प्रहरतीति । सहयुक्तेऽप्रधाने तृतीया विभक्तिर्भवति । सा च शाखायां तृतीया । तस्मात् प्रस्तरस्य शाखा गुणभूता । प्रस्तरे च द्वितीया । सहयोगे च

तृतीया । तृतीया गुणतो, द्वितीया प्रधानतः । ननु न शाखया प्रस्तरस्य कश्चिदुपकारः क्रियते । सत्यं न दृष्टं क्रियते किन्तु अदृष्टं क्रियते। श्रयणवत् । यथा पयसा मैत्रावरुणं श्रीणातीति द्वितीयातृतीयासंयोगाददृष्टश्चोपकारो गम्यते । एवमिहापीति ॥ ४३ ॥ पूर्व०

कालविधिर्वोभयोर्विद्यमानत्वात् ॥ ४४ ॥

कालविधिर्वा स्यात् । कुतः । उभयोर्विद्यमानत्वात् । प्रस्तरस्तावत् स्रुग्धारणार्थः प्राप्तो विद्यते । तस्य प्रहरणमपि विशिष्टे काले वाक्यान्तरेण विहितम् । ततः शाखायाः प्रतिपादनार्थं, तस्यैतत् पुनर्वचनम् । उच्यते । भवतु प्रस्तरस्य पुनर्वचनम् । शाखा त्वत्र विधीयते इति । उच्यते । उभयोरपि विद्यमानत्वात् । शाखा पूर्वं विहिता वत्सापाकरणार्था । इदानीं पुनः किं गुणभूता चोद्यते, उत प्रतिपाद्यते इति । प्रतिपाद्यमानायां दृष्टं प्रयोजनम् । देशवियोगात् प्रचरितुमवकाशः स्यात् । या यावती च मात्रा, देशान्तरसंयोगस्य न दृष्टं किञ्चिदस्ति । तस्मात् प्रहरणं प्रतिपत्तिस्तस्याः । तस्मात् परतः प्रयोजनाभावात् कालनियम क्रियते । ननु तृतीया अप्रधाने भवति, सा च शाखायाम् । अत्रोच्यते । या असौ शाखायां तृतीया, सा द्वितीयार्थे । या च प्रस्तरे द्वितीया, सा तृतीयार्थे । कथमवगम्यते । सहयोगे एकस्मिन् काले उभयमपि प्रहर्त्तव्यमिति । अत्र यस्य निर्ज्ञातः कालस्तस्यानुवादः । यस्य त्वनिर्ज्ञातस्तस्य विधिः । शाखायाश्च अनिर्ज्ञातः, प्रस्तरस्य निर्ज्ञातः । तस्य पुनरुच्चारणमनिर्ज्ञातार्थम् । तदप्रधानम् । इतरस्योच्चारणं प्रधानम् । प्राधान्यं च द्वितीयार्थः। तत्र तृतीया । पारार्थ्यमपि तृतीयार्थः। तत्र द्वितीया । तस्माद्यथार्थं विभक्तिवचनम् ॥ ४४ ॥ सि० ॥

अतत्संस्कारार्थत्वाच्च ॥ ४५ ॥

न च शाखया प्रस्तरस्योपकारो दृष्टः क्रियते । काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्त्तते । तृणं तु काष्ठस्योपकुर्य्यात् । तस्मान्न शाखा प्रस्तरार्था ॥ ४५ ॥

तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥

किं भवति प्रयोजनम् । यदि प्रस्तरस्य गुणभूता, तथापि प्रस्तरप्रहारकाले शाखा प्रतिपाद्यते इति । उच्यते । यदि प्रस्तरस्य प्राद्वि-

यमाणस्याङ्गभूता शाखा, ततो विना प्रस्तरेण, न प्रहर्त्तव्या भवति । अथाङ्गभूता, विनापि प्रस्तरेण प्रहर्त्तव्या । अस्माभिरुक्तं प्रस्तरकाले प्रहर्त्तव्या इति । तस्माच्च विप्रयोगे स्यात् तस्मादेव कारणात् प्रस्तरविप्रयोगेऽपि शाखायाः प्रहरणं स्यादिति ॥ ४६ ॥ युक्तिः ॥

## उपवेषश्च पक्षे स्यात् ॥ ४७ ॥

यथा पूर्वः पक्षः । तथा सति, सान्नाय्ये सति असति च शाखा विद्यते इति उपवेषः सति च असति च स्यात् । यथा तु सिद्धान्तः, तथा सान्नाय्यपक्षे शाखा सती हि प्रतिपाद्यत इति । तत्रैवोपवेषो नान्यत्रेति ॥ ४७ ॥ ॥ पूर्व० ॥ सहशाखयेत्यस्य कालविधानार्थताऽधिकरणम् ॥ १४ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य चतुर्थः पादः ॥ ६ ॥ ४ ॥

अथ षष्ठे अध्याये पञ्चमः पादः ॥ ६ ॥ ५ ॥

## अभ्युदये कालापराधादिज्याचोदना स्याद् यथा पञ्चशरावे ॥ १ ॥

इदमामनन्ति, वि वा एवं प्रजया पशुभिरर्द्धयति, वर्द्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्, ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तान् इन्द्राय प्रदात्रे दधश्चरुं, ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति । तत्र सन्देहः । किं कालापराधे यागान्तरमिदं चोद्यते, उत तेष्वेव प्रकृतेषु कर्मसु निमित्ते देवतापनय इति ॥ किं प्राप्तम् । अभ्युदये यः कालापराधस्तत्रेज्याचोदना स्यात् । कथम् । पुरोडाशमग्नये दात्रे मध्यमान् कुर्व्वते, ये स्थविष्ठाः तान् इन्द्राय प्रदात्रे दधनि चरुं कुर्य्यात्, क्षोदिष्ठान् विष्णवे शिपिविष्टायेति । यजतिस्तु फलभोक्तृसंयोगादिति विधानं गम्यते । यथा पञ्चशरावे द्रव्यदेवतासम्बन्धेन कर्मान्तरं गम्यते । यथा पशुकामेष्ट्यां, यः पशुकामः स्यात् सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्य्यात्, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुमिति । एवमिहापीति । अपि च न प्रकृते द्रव्ये देवता श्रूयते । शृते चरुमिति हि तत्र भवति वचनम् । न च अभ्युदयकाले श्रपणं कृतमस्ति ।

तस्मात् कर्मान्तरम् ॥ १ ॥ पूर्व० ॥

## अपनयो वा विद्यमानत्वात् ॥ २ ॥

देवतापनयो वा । कुतः । विद्यमानत्वात् । विद्यन्ते हि कर्माणि प्रकृतानि । तेषु विद्यमानेषु पुनर्देवतासम्बन्धो हविषो नोपपद्यते । यस्यानुपपत्त्या यागः कल्प्येत । तस्मान्न यागान्तरम् । तेष्वेव हविःषु देवतान्तराणि विधीयन्ते ॥ २ ॥ सि० ॥

## तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

देवतापनयसरूपाश्चामी शब्दा भवन्ति । ये मध्यमास्तेषां देवतान्तरं विधीयते । तत्र द्रव्यं प्राप्तम् । अप्राप्ता देवता विधीयते । कथं पुनर्दैवताविधानार्थे नानेकगुणविधानदोषो जायेत ? इति । उच्यते । नैवात्रानेको गुणो विधीयते कस्मिँश्चिद् वाक्ये । तण्डुलान् विभजेदित्यत्र तावद् विभागमात्रं विधीयते । अन्यत् सर्वमनूद्यते । तस्माद् अदोषः । ये मध्यमास्तेषामग्निर्देवता विधीयते, अन्यत् पुरोडाशादि अनूद्यते । ये स्थविष्ठास्तेषां दधिसहितानामिन्द्रो देवताऽस्मिन् वाक्ये विधीयते । तत्रार्थप्राप्ते श्रपणे सति चरुता, सह सप्तम्यर्थेन अर्थप्राप्तेनैवास्मिन् वाक्येऽनूद्यते । ये क्षोदिष्ठास्तेषां शृतसहितानां विष्णुः शिपिविष्टो देवता विधीयते, अन्यत् सर्वमनूद्यते । तस्माद् अदोष ॥ ३ ॥

## आतञ्चनाभ्यासस्य दर्शनात् ॥ ४ ॥

आतञ्चनाभ्यासञ्च दर्शयति । कथम् । एवं श्रूयते—यदि बिभीयाद्दभिमोदेष्यतीति महारात्रे हवींषि निर्वपेत् । फलीकृतैस्तण्डुलैरुपासीत । अर्द्धं दधि हविरातञ्चनार्थं निदध्यात् । अर्द्धं न । यद्यभ्युदियात् अनेनातच्य प्रचरेत् । यद्यु न । ब्राह्मणं भोजयेदिति । यदि कर्म्मान्तरमुपादेयत्वेन तदा तण्डुला दधि शृतं च । तस्माल्लौकिकानि उपादेयानि । न ह्येष तदा प्रकृतानां व्यापारः । तत्राविनष्टे दधनि अपरेद्युरामावास्ये क्रियमाणे विद्यते दधीति न आतञ्चनमावर्त्तेत । तस्यामेवाभ्युदितेष्टौ दधि विद्यते इति नातञ्चनं स्यात् । अथ निमित्ते देवतापनयस्ततस्तस्मिन् दधनि चरुः कृत इति । पुनरामावास्ये दोहे आतञ्चनेन कार्य्यम् । एवमातञ्चनाभ्यासस्य दर्शन देवताविधाने युज्यते इति ॥ ४ ॥ युक्ति ॥

## अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥

अथ यदुक्तं, यथा पशुकामेष्ट्यां कर्म्मान्तरं, यः पशुकामः स्यात्; सोऽमावास्यामिष्ट्वा वत्सानपाकुर्य्यादिति । तत् परिहर्त्तव्यम् । तत्रोच्यते । युक्तं, यत् तत्र कर्म्मान्तरविधानम् । कुत । अपूर्वत्वान्न तत्र कश्चित् पूर्वप्राप्तो यागो विद्यते । सोऽमावास्यामिष्ट्वेति हि परिसमाप्ते तस्मिन्निदमारभ्यते तत्र द्रव्यदेवतासंयुक्तो निर्वपतिशब्दो नान्तरेणोत्सर्गं, द्रव्यदेवतयोः सम्बन्धो विद्यते इति यजातिं गमयति । न त्विह एवम् । इह हि याग प्रकृतो गम्यते । तस्मिन्नेव विद्यमानस्य द्रव्यस्य देवतासम्बन्धमात्रं विधीयते इति न दोषो भवति ॥ ५ ॥

## पयोदोषात् पञ्चशरावेऽदुष्टं हीतरत् ॥ ६ ॥

अथ यदुपवर्णित, यथा पञ्चशरावे कर्म्मान्तरं विधीयते, एवमिहापीति । तत् परिहर्त्तव्यमिति । अत्रोच्यते । युक्त पञ्चशरावे कर्म्मान्तरम् । दुष्ट हि तत्र द्रव्यम् । यस्य देवता विधीयते तत्रावश्य द्रव्यमुपादेयत्वेन चोदयितव्यम् । तस्मिन्नुपादीयमाने देवतान्तरे चापूर्वः सम्बन्धो विधीयते, तद् यागान्तरं भवतीति । इतरदिह द्रव्यमदुष्टम् । तदनूद्य प्रकृते यागे देवता विधीयते इत्युक्तम् । तस्माद् अदोष इति ॥ ६ ॥ आ० नि० ॥

## सान्नाय्येऽपि तथेतिचेत् ॥ ७ ॥

एवं चेत् पश्यसि, सान्नाय्येऽपि दोष. । तदपि हि अभ्युदये तत्कालापभ्रंशाद् दुष्टमिति ॥ ७ ॥ आ० ॥

## न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥

नैतदेवम् । पञ्चशरावे हि दुष्टं द्रव्यम् । इह तादृशमेवावतिष्ठते । ननु कालापभ्रंशेन दुष्टम् । न दुष्यति । अविशिष्टं हि कारणम् । अभ्युदये प्रायश्चित्तविधानं दुष्टेऽप्युपपद्यते । कालापराधे अदुष्टेऽपि तत् । अकाले हि अभिप्रवृत्तस्य शक्यते देवताविधानं, न तु विनष्टस्य ॥ ८

## लक्षणार्था शृतश्रुतिः ॥ ९ ॥

अथ यदुक्तं, न प्रकृते द्रव्ये देवता श्रूयते, शृते चरुमिति । तत्र भवति वचनम् । न चाभ्युदयकाले श्रपणं कृतमस्तीति । तत् परिहर्त्तव्यम् । अत्रोच्यते । लक्षणार्था इयं शृतश्रुति । धर्मलक्षणार्था शृते ।

श्रुतसहचरितधर्मक इति ॥ ९ ॥ आ० नि० ॥ दर्शेऽभ्युदयेष्टौ नैमि-त्तिकदेवताऽपनयाधिकरणम् ॥ १ ॥

उपांशुयाजेऽवचनात् यथाप्रकृति ॥ १० ॥

तस्मिन्नेवाभ्युदये संशय । किमुपांशुयागेऽपि देवतापनयो भवेत्, न ? इति । किं प्राप्तम् । उपांशुयाजी यथाप्रकृति स्यात् । कस्मात्। अवचनात् । यथा अमीषु वचनं, मध्यमानामग्नये दात्रे पुरोडाशाः, स्थविष्ठानाम् इन्द्राय प्रदात्रे दधनि चरुः, क्षोदिष्ठानां विष्णवे शिपिविष्टाय श्रृते चरुरिति । नैतदुपांशुयाजेऽस्ति । तस्मात् स यथादेवतं स्यात् ॥ १० ॥ पूर्व० ॥

अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥

वाशब्दः पक्षं व्यावर्त्तयति । उपांशुयाजस्यापनयः।केन कारणेन। प्रवृत्त्या। अकाले तन्त्रप्रवृत्तिर्देवतापनयस्य कारणम् । कुतः । न हि अत्र अभ्युदये सति तण्डुला विभागार्थमुपादीयन्ते । किं तर्हि । अभ्युदितस्य हविषो विभाग उच्यते । अभ्युदयेनापराद्धस्येति । कथमवगम्यते । यस्य अभ्युदियादितिविशेषश्रवणात् । सर्वस्यैव हि अपराधेन अभ्युदेति, अपराधश्च अकाले तन्त्रप्रवृत्ति । एवञ्च सति न तद्धविस्तण्डुलैः शक्यं विशेष्टुम् । तस्मादुपांशुयागस्यापि विभागः। त्रेधा तण्डुलान् विभजेदिति हि अनेन वाक्येन देवतापनयः क्रियते । विधिर्हि अत्र, विभजेदिति । विभागं कुर्यादित्यर्थ । कथमिति । विभागे विशेषपराण्युत्तराणि वाक्यानि । इदमिदं च द्रव्यमस्यै देवतायै, इदमिदं चास्यै इति । यस्य द्रव्यस्य विशेषविभागो नास्ति, तस्यापि विभजेदिति सामान्यविभागः । तस्माद् यथैवेतरेषां विभाग, एवमुपांशुयाजस्यापीति । अथवा उपांशुयाजद्रव्यात् पूर्वेण वाक्येन अपनीता, न देवता । तदपरेण वाक्येन देवतान्तरे संयोजितम् । तस्मात् प्रहीणमेव तत् ॥ ११ ॥ सिद्धान्तः ॥ उपांशुयागेऽपि देवतापनयाधिकरणम् ॥ २ ॥

निरुप्ते स्यात् तत्संयोगात् ॥ १२ ॥

अस्मिन्नेवोदाहरणे संशयः । किं यदि निरुप्तेऽभ्युदयोऽवगम्यते, तदाऽभ्युदितेष्टिः ? उत अनिरुप्तेऽपीति । किं प्राप्तम् । निरुप्तेऽवगते अभ्युदितेष्टिः स्यात् । कुतः ।तत्संयोगात् । निर्वापसयोगो हि भवति।

यस्य हविर्निरुप्तमिति । तस्मादनिरुप्ते नैतद्विधानमिति ॥१२॥ पूर्व० ॥

**प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥**

वा-शब्दः पक्षं व्यावर्त्तयति । अकाले तन्त्रप्रवृत्तिमात्रे स्यादेतद्विधानम् । प्राप्तं हि तावत्येव निमित्तं, यस्य हविरभ्युदेतीति हविर्ग्रहणं लक्षणत्वेन । यस्य हविरभ्युदेतीति हविर्लक्षित उदयो निमित्तं प्रवृत्तं हविर्लक्षयति, नोदासीनम् । तस्माद् हविरभ्युदेतीत्युच्यमाने प्रवृत्त हविरभ्युदेतीति गम्यते । न हि तद् निरुप्तमित्येतेन शक्यं विशेषयितुम् । भिद्येत हि तदा वाक्यम् । यस्य हविर्निरुप्तं, न अनिरुप्तमित्येवमपेक्ष्यमाणे हविरभ्युदेतीति न शक्यते विधातुम् । तस्मादनिरुप्तेऽपीष्टिरिति ॥ १३ ॥ सि० ॥

**लक्षणमात्रमितरत् ॥ १४ ॥**

अथ यदुक्तं, निरुप्तसंयोगो भवति । यस्य हविर्निरुप्तमिति । लक्षणमात्रमेतद् निरुप्तमिति । कस्मिंश्चित् पदार्थे तस्य प्रवृत्ते इत्यर्थः ॥ ॥ १४ ॥ आ० नि० ॥

**तथा चान्यार्थदर्शनम् ॥ १५ ॥**

अन्यार्थोऽपि चैतमर्थं दर्शयति, स यद्यगृहीतं हविरभ्युदियात्, प्रज्ञातमेव । तदेषा व्रतचर्य्या । यत् पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत् कुर्वन्ति, प्रतिमुञ्चन्ति वत्सान्, तानेव तत् पुनरपाकुर्वन्ति, तानऽपराह्णे पर्णशाखया अपाकरोति । तद् यथैवाद प्रज्ञातमामावास्यं हविरेवमेव तद् यद्यु व्रतचर्य्यां वा नोदाशंसेत, गृहीतं वा हविरभ्युदियादितरथा तर्हि कुर्य्यात्, एतानेव तण्डुलान् सक्तुफलीकृतानिति, अगृहीते हविषि अन्यं विधिं ब्रुवन् गृहीतेऽप्यनिरुप्ते वाऽभ्युदये प्रायश्चित्तं दर्शयति ॥१५॥ युक्ति ॥अनिरुप्तेऽप्यभ्युदयेष्ट्यधिकरणम्॥३॥

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥**

प्रवृत्तमात्र निमित्तमिति स्थितम । नैमित्तिकस्तु देवतापनयो देवतान्तरसयोगश्च । किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्त्तव्यो निर्वापस्तु प्राकृतीभ्य एव स्यात्, ज्ञातेऽभ्युदये ? उत वैकृतीभ्य एवेति संशयः । किं तावत् प्राप्तम् । अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्य आचार्य्यो मन्यते स्म । कुतः । तण्डुलभूतेषु

अपनयात् । तण्डुलभूतेषु अपनयः श्रूयते । यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेदित्यभ्युदयावगमादनन्तरं तण्डुलविभागमाह । सोऽतण्डुलभूतेषु नावकल्पते । तस्माद्ऽनिरुप्ते तण्डुलाभावादनपनीता देवता· प्राकृत्य इति प्राकृतीभ्य एव निर्वपेदिति ॥ १६ ॥

**व्यूर्ध्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य॥१७॥**

तुशब्दः पक्षं व्यावर्त्तयति । व्यूर्ध्वं या भजन्ते कर्म्म, ताभ्यो निर्वपेदिति आलेखन –आचार्य्यो मन्यते स्म । कुत । तत्कारित्वाद् देवतापनयस्य । यस्मादकाले तन्त्रप्रवृत्तिकारितो देवतापनयस्तस्मादपनीता देवतेति व्यूर्ध्वभाग्भ्यो निर्वप्तव्या ॥ १७ ॥ सिद्धान्तः ॥

अनिरुप्तेऽभ्युदये वैकृतीभ्यो निर्वापाधिकरणम् ॥ ४ ॥

**विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥**

अथ प्रारब्धे चतुर्मुष्टिनिर्वापे अपरिसमाप्ते भवति संशयः–यन्निरुप्तं तन्निरुप्तमेव, अवशिष्टं किं प्राकृतीभ्यो निर्वप्तव्यं, किं वैकृतीभ्यः, उत तूष्णीमेवेति । किं प्राप्तम् । विनिरुप्ते सामिनिरुप्ते इत्यर्थ । न तत्र देवतापनयः स्यात् । कुत । तद्गुणत्वात् । निर्वापस्य गुणो देवता, न मुष्टीनाम् । स च निर्वापस्तद्देवताकः । कुतः । चतुःसङ्ख्यापूरणार्थत्वाद् अभ्यासमात्रं कर्त्तव्यम् । तच्चाभ्यासमात्रं पुन क्रियते, पूर्वमेव कृते तस्मिन्निर्वापे न देवता अपनीता । स एवायं पुन क्रियते । पुनरपि क्रियमाणस्य अनपनीतैव देवता भवितुमर्हतीति प्राकृतीभ्य एव निर्वप्तव्यम् । न चोत्तरो मुष्टिः पृथक् पदार्थो, येन देवताऽपनयो भवेत् । कृतस्य निर्वापस्य सङ्ख्यापूरणमेतत् क्रियते । तस्मादनपनय इति ॥ १८ ॥

**अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १९ ॥**

न प्राकृतीभ्यो निर्वप्तव्यम् । काभ्यस्तर्हि । वैकृतीभ्यः । कुतः । अप्राकृतेन देवताविशेषेण संयोगः श्रूयते, नाऽधिकृतेन । त्रेधा तण्डुलान् विभजेदिति प्राकृतीभ्य आच्छिद्य वैकृतीभ्यो निर्वप्तव्यो विधीयते । ता इदानीं तत्स्थानीयाः । तस्माद् विनिरुप्ते निवृत्ता देवता अन्याः, अन्याश्चोपजाता । तस्माद् वैकृतीनां संयोगेन निर्वापशेषः कर्त्तव्य इति ॥ १९ ॥ पूर्व० ॥

## अभावाच्चेतरस्य स्यात् ॥ २० ॥

अभावादितरस्यार्द्धस्य देवतासंयुक्तस्य, न निर्वापो भवति देवतासंयुक्तः । यदि निर्वापोऽर्द्धम् अन्यदेवत्योऽर्द्धोऽप्यन्यस्यै देवतायै, नैव निर्वाप इतरदेवताको वा इतरदेवताको वा । तस्मात् तूष्णीमेव निर्वप्तव्यम् । अवश्यमन्यतरत्र सङ्कल्पभेदो भवति ॥ २० ॥ सिद्धान्तः ॥ किञ्चिन्निरुप्तेऽभ्युदयेऽवशिष्टस्य तूष्णीं निर्वापाधिकरणम् ॥ ५॥

## सान्नाय्यसंयोगान्नासन्नयतः स्यात् ॥ २१ ॥

अभ्युदितेष्टिरेवोदाहरणम् । तत्र श्रूयते, दधनि चरुम्, शृते चरुमिति । तत्र सन्देहः । किं सन्नयतो भवति अभ्युदये प्रायश्चित्तम्, उत अविशेषेणेति । किं प्राप्तम् । सन्नयत अभ्युदये प्रायश्चित्तम् । कुतः । सान्नाय्यसंयोगात् । सान्नाय्यसंयोगो हि भवति । शृते चरुम्, दधनि चरुमिति । शृताद्यभावान्नासन्नयतो भवितुमर्हति । वैगुण्यं हि तथा स्यात् ॥ २१ ॥ पूर्व० ॥

## औषधसंयोगाद्वोभयोः ॥ २२ ॥

वाशब्दः पक्षं व्यावर्त्तयति । उभयोरपि स्यात् । न केवलस्य सन्नयत । औषधसंयोगात् । ये मध्यमा ये स्थविष्ठा ये क्षोदिष्ठा इति भवति औषधसंयोगः । स च शक्योऽसन्नयताऽपीति । तस्मान्नासति कारणेऽसन्नयतो निवर्त्तेत । उभयोरपि पक्षयो. प्रायश्चितमिति ॥२२॥

## वैगुण्यान्नेति चेत् ॥ २३ ॥

इति यदुक्तम्, असन्नयतो दध्नः शृतस्य चाभावात्तदधिकरणता नास्ति।तस्माद्वैगुण्यं तस्मिन् पक्षे इति।तत् परिहर्त्तव्यमिति ॥ २३ ॥ आ०

## नातत्संस्कारत्वात् ॥ २४ ॥

नैतदेवम् । न हि दधि अधिकरणञ्चरोः श्रपणे श्रूयते । किन्तु यथा स्थविष्ठा इन्द्राय प्रदात्रे, एवं दध्यपि देवतासम्बन्धार्थं विधीयते, न चरुसम्बन्धार्थमिति । भिद्येत हि तथा वाक्यं, स्थविष्ठा देवतायै, दधनि च ते कर्त्तव्या इति । सप्तमीसंयोगस्तु प्राप्तेऽर्थेऽनुवाद । तस्मादविवक्षितं तेषां साहित्यम् । लक्षणत्वेन हि ते श्रूयन्ते इति । न हि पयो दधि च नास्तीति स्थविष्ठानां न देवतापनयो भवति । असन्नयतोऽप्यर्थाद् आप्सु श्रपयिष्यते इति ॥ २४ ॥ आ० नि० ॥ सन्न-

यद्सत्रयकुभयस्यैवाभ्युदये प्रायश्चित्ताधिकरणम् ॥ ६ ॥

## साभ्युत्थाने विश्वजित् क्रीते विभागसंयोगात् ॥ २५ ॥

इदमामनन्ति, यदि सत्राय दीक्षिता अथ साभ्युत्तिष्ठेरन्, सोमममपभज्य विश्वजिता अतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्निति । तत्र सन्देह । किं क्रीतराजकस्योत्थाने विश्वजिद्, उत प्रवृत्तमात्रस्येति । किं प्राप्तम् । साभ्युत्थाने विश्वजित् क्रीते स्यात् । कुत । विभागसंयोगात् । सोममपभज्य विश्वजिता यजेरन्निति । ये हि अक्रीते राजनि उत्तिष्ठन्ति, तेषां सोमविभागाभावाद् वैगुण्यं स्यात् । तस्मात् क्रीतराजका उत्तिष्ठन्तो विश्वजितं कुर्युः ॥ २५ ॥ पूर्व० ॥

## प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । प्रवृत्तमात्रस्योत्थाने स्यात् । कुतः । प्रापणान्निमित्तस्य । साभ्युत्थानं निमित्तं विश्वजितः । तच्च प्राप्तम् । न च तच्छक्यं विशेषयितुम् । क्रीते सोमे साभ्युत्थानमिति ॥२६॥सि०

## आदेशार्थेतरा श्रुतिः ॥ २७ ॥

अथ यदुक्तम्, अक्रीते राजन्युत्तिष्ठन्तो विभागाभावाद् विगुणं कुर्युरिति । तत् परिहर्त्तव्यम् । अत्रोच्यते । न विभागो विधीयते । भिद्येत हि तथा वाक्यम् । साभ्युत्थाने विश्वजिता यजेरन्, सोमस्य तु अपभागं कृत्वेति । तेन अपभज्य इति अनुवादः । कथं प्राप्तिरिति चेत् । अर्थादुत्तिष्ठतां विभागो भवति धनस्य । सोऽयं सर्वद्रव्याणां विभाग. सोमविभागेन लक्ष्यते । सोमं विभज्यान्यानि च द्रव्याणीति आदेशार्था इतरा श्रुतिर्भवति । तस्मात् क्रीते च अक्रीते च राजनि उत्तिष्ठतां विश्वजिदिति ॥ २७ ॥ आ०नि० ॥ सत्राय प्रवृत्तमात्रस्य विश्वजिदधिकरणम् ॥ ७ ॥

## दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥

ज्योतिष्टोमं प्रकृत्य श्रूयते, एका दीक्षा तिस्र उपसदः पञ्चमीं प्रसुत इति । तिस्रो दीक्षाः, द्वादश दीक्षा इति बहूनि दीक्षापरिमाणानि आम्नातानि । तेषु सन्देहः । किमनियमो, यद्वा तद्वा परिमाणमुपादेयम् ? उत द्वादशदीक्षा इति । किं प्राप्तम् । दीक्षापरिमाणे यथाकामी स्यात् । नास्ति नियम. । कुतः । अविशेषात् । न कश्चन

विशेष उपादीयते । तस्माद् यत्किञ्चित् परिमाणमुपादेयमिति ॥ ॥ २८ ॥ पूर्व० ॥

### द्वादशाहस्तु लिङ्गात् स्यात् ॥ २९ ॥

द्वादशाह एव परिमाणमुपादीयेत । कुतः । लिङ्गात् सामर्थ्यादित्यर्थः । किं सामर्थ्यम् । द्वादशरात्रीर्दीक्षितो भूतिं वन्वीतेति नित्यवदाम्नायते, न पाक्षिकम् । तदेव नित्यं कुर्वन्न शक्नोत्यन्यत्परिमाणमुपादातुम् । तस्माद् द्वादशाह एव परिमाणं नियम्येत । अन्यानि परिमाणानि विकृतौ भविष्यन्तीति नैषामानर्थक्यमिति ॥ २९ ॥ ॥ सिद्धान्तः ॥ दीक्षापरिमाणस्य द्वादशाहत्वनियमाधिकरणम् ॥ ८ ॥

### पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥

गवामयने श्रूयते, पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन्निति । तत्र सन्देहः । कस्याः पौर्णमास्या इति । किं प्राप्तम् । पौर्णमास्यामनियम इति । कुतः । अविशेषात् । नात्र कश्चिद् विशेषवचनः शब्द उपादीयते ॥ ३० ॥

### आनन्तर्य्यात्तु चैत्री स्यात् ॥ ३१ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतद्, अनियम इति । चैत्री, पौर्णमासी तु भवेत् । कुतः । आनन्तर्य्यात् । पौर्णमासीमुक्त्वाऽनन्तरं वाक्यशेषे चैत्री सङ्कीर्त्यते । पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन् । ऋतुमुखं वा एषा पौर्णमासी संवत्सरस्य, या चैत्री पौर्णमासीति । अत्र, सन्दिग्धेषु वाक्यशेषाद् इति चैत्री नियम्येत ॥ ३१ ॥

### माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति चैत्री इति । किं तर्हि माघी इति । कुतः । एकाष्टकाश्रुतेः । क्रये हि एकाष्टकाश्रुतिर्भवति । तेषामेकाष्टकायां क्रय सम्पद्यते इति । तस्मान्माघ्याः पुरस्ताच्चतुरहे दीक्षितस्यैकाष्टकायां क्रयः शक्यते कर्त्तुं, न चैत्र्याः । तदेतत् सामर्थ्यं नाम लिङ्गम् । तद् वाक्यस्य बाधकं भवति । तस्मान्माघी पौर्णमासीति ॥ ३२ ॥ सि० ॥

### अन्या अपीति चेत् ॥ ३३ ॥

इतिचेत् पश्यसि, माघी पौर्णमासी, एवमेकाष्टकायां क्रयः सम्पत्स्यते इति । तद् न । असर्वा अष्टस्य एकाष्टका, द्वादश एकाष्टका

इति । तेन न दोषः ॥ ३३ ॥ आ० ॥

न भक्तित्वादेषा हि लोके ॥ ३४ ॥

नैतदेवं, भाक्तो हि अन्यासु अष्टमीषु एकाष्टकाशब्दः ? एषा हि मुख्या । या माघ्यां वृत्तायाम् ? मुख्यगौणयोश्च मुख्ये सम्प्रत्ययः ? तस्मान्माघ्येव पौर्णमासीति ॥ ३४ ॥ आ० नि० ॥

दीक्षापराधे चानुग्रहात् ॥ ३५ ॥

एकाष्टकायां दीक्षेरन् । एषा वै संवत्सरस्य पत्नी, यदेकाष्टका इत्युक्त्वा पुनः, चतुरहे पुरस्तात् पौर्णमास्या दीक्षां विधाय तेषामेकाऽष्टकायां क्रयः सम्पद्यते । तेनैकाष्टकां नच्छवट् कुर्वन्तीति, दीक्षातः प्रच्युतामेकाष्टकां क्रयेण तु गृह्णन् माघ्या. पौर्णमास्या अधिकारं दर्शयति । अस्याश्च माघ्यामष्टम्यामभीज्यमानायां भवति मन्त्र । यां जना' प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् * संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली इति । अष्टकायै सुराधसे स्वाहा इति । याऽसौ माघ्यष्टमी, तामेकाष्टकां दर्शयति ॥ ३५ ॥ पूर्व० ॥

उत्थाने चानुप्ररोहात् ॥ ३६ ॥

उत्थाने चानुप्ररोहं दर्शयति । तानुत्तिष्ठत औषधयो वनस्पतयोऽनूत्तिष्ठन्तीति वसन्ते उत्थानं दर्शयति । तास्मिन् औषधयो वनस्पतयश्चोत्तिष्ठन्ति । तस्मादपि सा नियम्यते ॥ ३६ ॥

अस्यां च सर्वलिङ्गानि ॥ ३७ ॥

आर्त्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते इति । आर्त्ता यस्मिन् काले भवन्ति, स आर्त्तः काल. । शीतेन च आर्त्ता भवन्ति । तस्मान्माघ्यष्टमी एकाष्टका इति । तथा, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते इति । अयनपरिवृत्तिर्व्यस्तशब्देनोच्यते । तथा अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति इति चैत्र्यां दीक्षिता अभिनन्दन्तोऽभ्यवेयु. । तस्मादपि माघी पौर्णमासीति ॥ ३७ ॥ युक्तिः ॥ गवामयने माघपौर्णमास्या पुरस्ताद्दीक्षाऽधिकरणम् ॥ ९ ॥

दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥

इदं श्रूयते, तस्माद्दीक्षितो न ददाति न पचति न जुहोतीति ज्योतिष्टोमे समामनन्ति । यदि तु दैवान्मानुषाद् वा प्रतिबलाद्दीक्षाकाल उत्कृष्यते, तत्र सन्देहः । किं दानहोमपाकानामुत्कर्षः ? उत नेति । किं प्राप्तम् । अनुत्कर्षः । नियता हि दान-होम-पाकाः । यावज्जीवमग्निहोत्रं जुहोतीत्येवमादिभि श्रुतिभिस्तेषाम् अपवादो, येषु अहःसु साङ्गा ज्योतिष्टोमो विहितस्तावन्ति अहानि मुक्त्वा अन्येषु अहस्सु कर्त्तव्याः, ज्योतिष्टोमविधानकालात् परतोऽप्रतिषिद्धा । तस्मात् कर्त्तव्याः । प्राप्तो हि तेषां काल इति ॥ ३८ ॥

**उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥**

वा शब्दात् पक्षो विपरिवर्त्तते । यदुक्तम्, नैषामुत्कर्ष इति । नैतदेवम् । उत्कृष्टव्याः । कुतः । दीक्षितत्वात् । दीक्षितस्य ते प्रतिषिद्धाः, न दीक्षितो यस्मिन् काले । लक्षणा हि एवं स्यात् । यथा तु वयं ब्रूमस्तथा श्रुतिः कारणम् । प्राक् चावभृथाद् अयं दीक्षित एव । अविशिष्टं हि कारणम् । यदेव ज्योतिष्टोमविधानकाले, तदेव अतिक्रान्तेऽपि । उभयत्र हि दीक्षितत्वं हि कारणम् । तस्मात् तेषामुत्कर्ष इति ॥३९॥ सिद्धान्तः ॥ दीक्षोत्कर्षे तन्नियमानामप्युत्कर्षाधिकरणम् ॥१०॥

**तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥**

तत्रोत्कृष्यमाणे ज्योतिष्टोमे, अकृतेषु होमेषु किं परिसङ्ख्याय होमाः कर्त्तव्याः, उत नेति । किं प्राप्तम् । परिसङ्ख्याय होमाः क्रियेरन् । किं कारणम् । अवश्यकर्त्तव्यतया हि ते विहिता होमाः । अतिपन्ना अपि कर्त्तव्या एव । तथाहि एषामवश्यकर्त्तव्यताऽनुगृहीता भविष्यति । प्रधानमात्रं तु नियतं, नात्र कालानुरोधः कर्त्तव्यः । नदीवेगस्थानीयत्वात् । यद्यपि अतिक्रान्ता कालाः । अतिक्रान्तानां परिसङ्ख्याय प्रधानमात्राणि कर्त्तव्यानि । यथा अवश्यकर्त्तव्यं भुक्तिभृतकदानादि, यदतिक्रान्तं भवति, तत् परिसङ्ख्याय क्रियते, एवमिदमपीति ॥ एवं प्राप्ते ब्रूमः । तत्र प्रतिहोमो न विद्यते । यथा पूर्वेषाम् । कर्त्तव्यमकृत्वा कुर्य्याद्, नाऽकर्त्तव्यम् । अकर्त्तव्याश्चैते । प्रतिषिद्धत्वात् । यथा पूर्वेषामसति कालातिक्रमे अकृतानां न प्रतिहोमः । एवमेषामपीति ॥ ४० ॥

**कालप्राधान्याच्च ॥ ४१ ॥**

कालप्राधान्यं च भवति । निमित्तत्वेन तस्य श्रुतत्वात् । तदभावे विहितमेव न भवति । प्रधानमात्रं यद्यपि नियम्येत, तथापि निमित्ते काले । स च नदीवेगस्थानीयः कालोऽतिक्रान्त. । अतो न प्रतिहोमः कर्त्तव्य इति ॥ ४१ ॥ युक्ति ॥ ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठाना-ऽधिकरणम् ॥ ११ ॥

**प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥**

ऊर्ध्वमवभृथाद् आ उदवसानीयाया इष्टेर्ये होमास्तेष्वतिपन्नेषु दैवेन मानुषेण वा प्रतिबलेन भवति संशयः। किं प्रतिहोमः कर्त्तव्य.? उत नेति । किं प्राप्तम् । कर्त्तव्य इति । उन्मुक्तदीक्षो हि स तदा भवति । दीक्षाणामुन्मोचनार्थो हि अवभृथ । तस्मात् कर्त्तव्यास्ते न कृता इति ॥ एवं प्राप्ते ब्रूम. । ऊर्ध्वमवभृथात्, आ उदवसानीयाया इष्टे., अतिपन्नानां न प्रतिहोमः स्यात् । कुत । प्रतिषेधात् । प्रतिषेधो हि भवति । एतया पुनराधेयसम्मितया इष्ट्वा अग्निहोत्रं होतव्यमिति । प्रागुदवसानीयायाः, होमस्य प्रतिषेध. । यावदुदवसानीयोत्कृष्यते, तावत् प्रतिषेध । एवं श्रुतिः । इतरथा लक्षणा स्यात् । तस्मादकर्त्तव्याः । ते न कृता इति, न स्यात् प्रतिहोम इति ॥ ४२ ॥ ॥ उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् ॥ १२ ॥

**प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ ४३ ॥**

एतेषु एवोदाहरणेषु भवति संशय. । किं प्रतिहोमे सायमग्निहोत्रप्रभृतीनि आरभ्येरन्, उत प्रातरग्निहोत्रप्रभृतीनीति । ननु नास्त्येव प्रतिहोम इति स्थितम् । उच्यते । अस्तीति कृत्वा चिन्तयामः । कृत्वा चिन्तेयम् । अन्येषु सदृशन्यायेषूदाहरणेषु अस्याः प्रयोजनमस्तीति चिन्त्यते । किं प्राप्तम् । अनियमः । अर्थकृतत्वात् । एवं प्राप्ते ब्रूमः । यदि प्रतिहोमः क्रियते, सायमग्निहोत्रादारभ्य अतिपन्नानि, तेनैवानुपूर्व्येण प्रतिहोतव्यानीति ॥४३॥ प्रतिहोमे सायमग्निहोत्रप्रभृत्यारभ्याऽधिकरणम् ॥ १३ ॥

**प्रातस्तु षोडशिनि ॥ ४४ ॥**

षोडशिसंस्थे सोमेऽतिपन्नेषु होमेषु. सन्देहः । किं सायमग्निहोत्रेणेति, उत प्रातरिति । किं प्राप्तम् । सायमग्निहोत्रेणेति पूर्वस्मिन्

अधिकरणे उक्तम् । उत्सर्गेण सर्वत्रैवमिति प्राप्तम् । तथा प्राप्ते उच्यते । प्रातस्तु षोडशिनि, षोडशिसंस्थे प्रातरग्निहोत्रादीनि अतिपन्नानीति प्रातरग्निहोत्रादेव समारभ्याणीति ॥ ४४ ॥ षोडशिसंस्थे प्रातरग्निहोत्रप्रभृत्यनुष्ठानाऽधिकरणम् ॥ १४ ॥

**प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥**

दर्शपूर्णमासयोः श्रूयते, भिन्ने जुहोति स्कन्ने जुहोतीति । तत्र किं दर्शपूर्णमासयोरेवैतद् भिन्ने स्कन्ने च प्रायश्चित्तम्, उत यत्र भिद्यते स्कन्दति चेति । किं प्राप्तम् । प्रकरणे यत् प्रायश्चित्तमेवञ्जातीयकं किञ्चिदुत्पन्नं, तत् सर्वत्र यत्र यत्र भिद्यते स्कन्दति वा, तत्र तत्र स्यात् । कस्मात् । दोषसामान्यात् । समानं निमित्तं स्कन्दनं भेदनं वा । स एवात्र दोष इत्यभिप्रेतम् । प्रकरणाद्दर्शपूर्णमासयोः प्रायश्चित्तम् । वाक्यादन्यत्रापि । प्रकरणाच्च वाक्यं बलीयः । तस्मात् सर्वत्र स्कन्ने भिन्ने च प्रायश्चित्तमिति ॥ ४५ ॥ पूर्व० ॥

**प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥**

प्रकरणे एव भिन्ने स्कन्ने वा प्रायश्चित्तम् । कुतः । शब्दहेतुत्वात् । तेन प्राकृतेन अर्थेन सहैकवाक्यता एषां होमानाम् । ततो होमवतो यागस्य प्रत्यायने प्रकृतो यजेतेति शब्दो हेतुः । एवञ्चेत् नदुपकारेण अर्थवान् भविष्यतीति । इतरथा विना वाक्येन, फलं कल्पयितव्यं स्यात् । तस्माद् वाक्यं फलाभावेनैव बाधितमिति कृत्वा प्रकरणमनुग्रहीतव्यमिति ॥ ४६ ॥

**अतद्विकारश्च ॥ ४७ ॥**

न च तद्विकारोऽग्निहोत्रं, ज्योतिष्टोमो वा । न दर्शपूर्णमासविकारः । यदि तद्विकारो भवेत्, तत्रापि स्कन्ने भिन्ने वा प्रायश्चित्तं स्यादिति ॥ ४७ ॥ ॥ सिद्धान्तः ॥ भेदनादिनिमित्तकहोमस्य दर्शपूर्णमासाङ्गताधिकरणम् ॥ १५ ॥

**व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत् प्रतीयेत ॥ ४८ ॥**

व्यापन्नमप्सु प्रहरतीति श्रूयते । किं व्यापन्नमित्युच्यते ? इति । तदभिधीयते । व्यापन्नं, दूषितं येन कार्य्येण क्रियते । किं तत् ।

यद्भोज्यमार्य्याणां केशकीटावपन्नमन्येन वोपघातेनोपहतं, तद्‌ व्यापन्नमिति ॥ ४८ ॥ व्यापन्नशब्दार्थनिर्णयाधिकरणम् ॥ १६ ॥

**विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥**

प्रस्तोत्रुद्गात्रोरुद्गातृप्रतिहर्त्रोर्वा यत्रापच्छेदः, किं तत्र प्रायश्चित्तं स्याद्‌, न ? इति भवति संशयः । किं तावत् प्राप्तम् । प्रायश्चित्तं यौगपद्ये न विद्यते । कुतः । विभागश्रुतेः । विभक्तेऽपच्छेदे प्रायश्चित्तमामनन्ति । अपच्छेदश्चायं विभागः । स उभाभ्यां साध्यते । इह चैकेन साध्यमाने श्रूयते प्रायश्चित्तमुद्गात्रा प्रतिहर्त्रा वा । न च यदऽपरेण सह क्रियते, तत् केवलेन कृतं भवति । यदि हि केवलेन कृतं स्यात् तेन कृतं स्यात्, तेन कृतम् । अपरः किं कुर्य्यात् । तस्मान्न युगपदपच्छिन्नयोः प्रायश्चित्तमिति ॥ ४९ ॥ पूर्व० ॥

**स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकम् ॥ ५० ॥**

स्याद्‌ वा प्रायश्चित्त यौगपद्येऽपि । प्राप्तं हि निमित्तमपच्छेद उद्गातु प्रतिहर्त्तुश्च । यत्र हि द्वयोरपच्छेदः । तत्र द्वावप्यपच्छिन्नौ, एकोऽप्यपरोऽपि । संयुक्तस्य हि पृथग्भावोऽपच्छेदः । स चोभयस्योऽपि । एकेनापि तत्रापच्छेद क्रियतेऽनपेक्ष्य अपरम्, अपरेणापि । कालमात्रन्तु तत्रैकम् । न च कालैक्यादपच्छेदयोरैक्यं भवति । तस्मात् प्रायश्चित्तं युगपदपच्छेदेऽपि ॥ ५० ॥ सिद्धान्त ॥ अपच्छेदयौगपद्येऽपि प्रायश्चित्ताधिकरणम् ॥ १७ ॥

**तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥ ५१ ॥**

यद्युद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति, तत्र सन्देह । किम् अदाक्षिण्यं, सर्वस्वं वा विकल्प ? उत समुच्चय इति । किं प्राप्तम् । तत्र विप्रतिषेधाद्विकल्प. स्यात् । विरुद्धौ हि एतौ कल्पौ । सर्वस्वमदाक्षिण्यं च । तस्माद्‌ विकल्पो भवितुमर्हति ॥ ५१ ॥ सि० ॥

**प्रयोगान्तरे वोभयानुग्रहः स्यात् ॥ ५२ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, विकल्प इति । उभयोर्विधानात् । सर्वाङ्गोपसंहारी प्रयोगवचन एवमुपपद्यते । विकल्पे हि पक्षे बाधः । तस्मात् समुच्चयः । अथ यदुक्तं, विरोधाद्‌ विकल्प इति । उच्यते । प्रयोगान्तरे वा उभयानुग्रह. स्यात् । तेन पुनः, यजेतेत्युच्यते । द्विस्तस्य प्रयोग. । तत्रैकस्मिन् प्रयोगे एकः कल्प । अ-

न्यस्मिन्नपरो भविष्यति । एवमविरोधः । तस्मादुभयं प्रायश्चित्तमिति ॥ ५२ ॥ पूर्व० ॥

**न चैकसंयोगात् ॥ ५३ ॥**

न चैतदेवम् । कुतः । एकसंयोगात् । स एव याग पुनः क्रियेत, यदि अन्यतरेण विना वैगुण्यमित्यऽवधार्य्येत । सर्वस्वे क्रियमाणे अदाक्षिण्याभावाद् विगुणः स्यात् । नान्यस्मिन् प्रयोगे क्रियमाणेऽन्यप्रयोगोऽनुगृह्यते । न चादाक्षिण्यस्य सर्वस्वदानस्य च प्राधान्यं गुणवता प्रयोगेण कर्म सम्बन्धयितव्यम् । तस्माद् विकल्पः ॥ ५३ ॥ उत्तरम् ॥ यौगपद्येऽदाक्षिण्ये सर्वस्वदाक्षिण्यविकल्पाधिकरणम्॥१८॥

**पौर्वापर्य्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥**

यत्र आनुपूर्वेण भवत्यपच्छेदस्तत्र किं पूर्वनिमित्तं प्रायश्चित्तम् उत उत्तरनिमित्तमिति भवति संशयः । किं प्राप्तम्, पूर्वस्य बलीयस्त्वम् । पूर्वापच्छेदे यन्नैमित्तिकं प्राप्तम्, तस्मिन् सति तद्विरुद्धं न शक्यं कर्त्तुम् । न चाशक्यमुपदेशार्हं भवति । पूर्वविज्ञानं प्राप्तमिति न संशय । तस्मात् तदविरोधेनान्यत् कार्य्यं न विरुद्धम् । क तर्हि तत् स्यात् । यत्र केवलं निमित्तम । तस्मात् पूर्वविज्ञानं बलवत् ॥ एवं प्राप्ते ब्रूमः । पौर्वापर्य्ये पूर्वदौर्बल्यं स्यात् । कुतः ? । आख्यातेन हि योऽर्थः कर्त्तव्य इत्युच्यते, तत्रैतदनुबद्धं, यथा शक्येत तथेति । तत् पूर्वविज्ञानबाधेन शक्यते, नान्यथा । तेन पूर्वविज्ञान बाधित्वा इदं कर्त्तव्यमिति भवति शब्दार्थः । ननु पूर्वविज्ञाने इदमुपपद्यते । यदन्यद् विरोधकं विज्ञानं भविष्यति, तन्मिथ्येति । अभूतं हि तन्न शक्यमाश्रयितुम् । इदं नाम तदिति । न चाप्रतिषिद्धे तास्मिन् न पूर्वविज्ञानं सम्भवति । तस्मादप्रतिषिद्धं भविष्यद्, यदा तु तद् भवति, तदा पूर्वविज्ञानं बाधमानमेवोत्पद्यते । तदिदानीं बाधितं न शक्नोत्युत्तरं बाधितुमिति । प्रकृतिवत् । यद् हि प्राकृतं वैकृतेन बाध्यते, तत्राऽप्येतदेव कारणम् । न अबाधित्वा पूर्वविज्ञानं वैकृतं सम्भवतीति । प्राकृतं च पूर्वम् । यतो विकृतौ तदपेक्षा ॥

प्रत्यक्षत्वाद् वैकृतमानुमानिकं प्राकृतं बाधते इति चेत् । प्रत्यक्षत्वेऽपि सति नैव बाधेत । यदि यथावर्णितोऽयमाख्यातार्थो न भवेत् । सति पूर्वविज्ञाने अशक्यत्वात् प्राकृतं बाधेतैव । तस्मात् परबलीय-

स्त्वं न्याय्यमेवेति ॥ ५४ ॥ आनुपूर्व्येणापच्छेदे उत्तरापच्छेदनिमित्त-प्रायश्चित्तानुष्ठानाधिकरणम् ॥ १९ ॥

**यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद् यथेतरस्मिन् ॥ ५५ ॥**

यदा प्रतिहर्त्तुः पूर्वमपच्छेदस्ततः उद्गातुस्तत्र अदक्षिणेन इष्ट्वा पुनर्यष्टव्यम् । तत्र सन्देहः । पुनर्यागे किं द्वादशशतं दातव्यमुत सर्वस्वमिति । किं प्राप्तम् । द्वादशशतम् । कुतः । एवं हि आम्नायते । तत्र तद् दद्यात्, यत् पूर्वस्मिन् दास्यन् स्यात् । पूर्वस्मिंश्च प्रयोगे ज्योतिष्टोमदक्षिणैव प्राप्ता । तस्माद् द्वादशशतमिति ॥ एवं प्राप्ते ब्रूमः । तत्र पुनर्यज्ञे सर्वं दद्यात् । यथा इतरस्मिन् पूर्वस्मिन्नहनि सर्वस्वम् । कथं तत्र सर्वस्वमिति चेत् । प्रतिहर्त्तुरपच्छेदात्, प्रतिहर्त्तरि अपच्छिन्ने द्वादशशतं बाधित्वा सर्वस्वं दास्यन् भवति । ननु पूर्वस्मिन् अहनि द्वादशशतमप्यसौ दास्यन्नासीत् । सत्यं, सर्वस्वदानेन तु उभयं प्रदत्तं भवति । तस्मात्तद्देयम् । ननु अर्वागपि द्वादशशतात् सर्वस्वम् । नैतदेवम् । अधिकृते द्वादशशते सर्वस्वमप्यऽधिकं भवति । अपि च पूर्वस्मिन्नहनि नैव द्वादशशतं दास्यन् भवतीति । एतावद् दास्यन्निति । उच्यते । यस्योत्तरकाले तावद्दानं भवति । न च पूर्वस्मिन्नहनि द्वादशशतं दीयते । तस्मान्न तद्दास्यन्नित्यवगम्यते । मिथ्याबुद्धिः सा, तत्त्वेन व्यवहारः ॥

ननु च सर्वस्वमपि प्रतिषिद्धं भवति । तदप्यसौ न दास्यन्निति । साऽप्यस्य मिथ्याबुद्धिः । नेत्याह । साभ्यासस्य ज्योतिष्टोमस्य प्रयोगः । तत्र प्रथमप्रयोगे अदाक्षिण्यविरोधात् सर्वस्वं बाध्यते । द्वितीयप्रयोगे तद्दानं चोद्यते । तत्र विरोधो नास्ति । तस्यैव यज्ञस्य स एव प्रयोगः, प्रतिहर्त्ता च तस्मिन्नपच्छिन्न इति द्वादशशतं बाधित्वा सर्वस्वमेव दास्यन् भवति । तस्मात् सर्वस्वं तत्र देयमिति ॥ ५५ ॥

उद्गातुरुत्तरापच्छेदेऽपि सर्वस्वदक्षिणादानाधिकरणम् ॥ २० ॥

**अहर्गणे यस्मिन्नपच्छेदस्तदावर्त्तेत कर्मपृथक्त्वात् ॥५६॥**

अहर्गणे यदा भवति कस्मिँश्चिदहनि उद्गातुरपच्छेदस्तदा सन्देहः । किं कृत्स्नोऽहर्गण आवर्त्तते, उत तदेवाऽहरिति । किं प्राप्तम् । कृत्स्नोऽहर्गणः । कुतः । अपरैरहोभिर्विना, तदा विगुणं भवति ।

तस्माद् गण एवावर्त्तेतेति । एवं प्राप्ते ब्रूमः । यस्मिन्नपच्छेदस्तदेव आवर्त्तेत । कुत. । कर्म्मपृथक्त्वात् । पृथगेतानि कर्माणि, नान्यदहः अन्यस्य गुणभूतम् । इष्ट्वा इति च याग परिसमाप्येति गम्यते, न साऽङ्गमिति । यान्यहरन्तराणि साहाय्येनोपकरिष्यन्ति, विद्यन्त एव तानि । अत साहाय्यं करिष्यन्तीति । तस्मात् तदेवावर्त्तेत ॥ ५६ ॥ अहर्गणेऽपच्छेदे न सर्वेषामावर्तनाधिकरणम् ॥ २१ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य पञ्चमः पाद. ॥६॥५॥

अथ षष्ठे अध्याये षष्ठ· पादः ॥ ६ ॥ ६ ॥

## सन्निपातेऽवैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

सत्राण्युदाहरणम् । सप्तदशावराः सत्रमासीरन् य एवं विद्वांसः सत्रमासते य एवं विद्वांसः सत्रमुपयन्तीति । तत्र सन्देहः । किं समानकल्पानां भिन्नकल्पानां च सहाधिकार, उत समानकल्पानामेवेति । के पुन. समानकल्पाः । राजन्यात्रिवध्र्यश्ववसिष्ठवन्यशुनकानां कण्वकश्यपसङ्कृतीनां नाराशंसो द्वितीयः प्रयाजः । तनूनपादितरेषाम् । एवं केचिन्नाराशंसकल्पा, केचित् तनूनपात्कल्पाः । तत्र किं तावत् प्राप्तम् । सन्निपाते बहूनां यजमानानां ये एव तुल्यास्त एव सह सत्रमासीरन् । कुतः । अवैगुण्यात् । इतरथा यस्य कल्पो नोपसंह्रियेत, तस्य वैगुण्यं स्यात् । यथा प्रकृतावेव विना साद्गुण्येन फलाभावः, एवमिहापीति ॥ १ ॥ सि० ॥

## वचनाद्वा शिरोवत् स्यात् ॥ २ ॥

वाशब्दात् पक्षो विपरिवर्त्तते । न चैतदस्ति, भिन्नकल्पानामऽधिकार इति तेऽप्यधिक्रियेरन् । कुत. । अविशेषेण सर्वेषां यजमानानां प्राप्तिः । न च भिन्नकल्पानां प्रतिषेधः । ननु वैगुण्यं भिन्नकल्पानाम् । अत्रोच्यते । वचनात् । सामान्यवचनेन भिन्नकल्पा अपि गृहीताः । तत्र शिरोवद् बाध. स्यात् । यथा, पुरुषशीर्षमुपदधातीतिवचनसामर्थ्याच्छवशिरसां स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते, एवमिहापि । अथ वा आशिरवत् । यथा क्रतपेये घृतव्रतो भवतीतिवचनाद् व्रतदुहि निवृत्तायामन्यामाशिरे गां कल्पयन्ति । एवमेतदपि वचनाद् भविष्यति ॥ २ ॥ पूर्व० ॥

## न वाऽनारभ्यवादत्वात् ॥ ३ ॥

नैतदस्ति, यदुक्तं– भिन्नकल्पानामप्यधिकार इति । समानकल्पा एव अधिक्रियेरन् । कुत । अवैगुण्यात् । अथ यदुक्तं, वचनाद् वैगुण्येनापि सेत्स्यतीति । तन्न । अनारभ्यवादत्वात् । तद्धि वचनात् प्रकल्प्यते । यस्मिन् अकल्प्यमाने वचनमनर्थकं भवति । यदि हि आरभ्य भिन्नकल्पान् एतदुच्येत, ततो वचनमनर्थकं भवतीति भिन्नकल्पानामपि सत्रमभ्युपगम्येत, न त्वारभ्य भिन्नकल्पान् एतदुच्यते । समानकल्पेष्वर्थवत्ताऽस्य वचनस्य भविष्यति । तस्मान्नभिन्नकल्पानामधिकार इति ॥ ३ ॥ उत्तरम् ॥

## स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥

स्याद् वा भिन्नकल्पानामधिकारः । कुत. । यज्ञार्थत्वात् कल्पस्य । वसिष्ठादीनां नाराशंसकल्पो यज्ञस्य साधकः । स च यज्ञ सर्वेषां साधारणः । परकल्पेनापि सिद्ध सिद्धो भवति । यथा, यजमानेन सम्मायौदुम्बरीं परिवासयन्तीति यस्य कस्यचित् परिमाणेन सिद्धो यज्ञोऽन्येषामपि सिद्धो भवति । उच्यते । ननु प्रयाजस्य वाक्येन पुरुषसम्बन्धः । स च प्रकरणप्राप्तां यागार्थतां बाधिष्यते इति । नेति ब्रूम । फलं हि तदा कल्पयितव्यम् । नन्वितरथाप्यदृष्टमवश्यं कल्पनीयम् । तत्रोच्यते । सत्यं कल्पनीयम् । प्रमाणेन तु प्रयोगवचनैकवाक्येन । द्वितीये तु पक्षे कल्पयित्वा शब्दं, तेनैकवाक्यता स्यात् । अथोच्यते । क्वचित् समाम्नातेन सहैकवाक्यता भविष्यति । तथाप्यप्रकृतेन व्यवहितेन च कल्प्यमाना प्रकृतकल्पनाया गुरुतरा स्यात् ॥ ४ ॥ आ० ॥

## न तत्प्रधानत्वात् ॥ ५ ॥

नैतदेवम् । तत्प्रधानत्वात् । पुरुषार्थो हि एव कल्पः । कथम् । वसिष्ठादीनां नाराशंसो यज्ञाङ्गमिति । यच्च यस्य यज्ञाङ्गं, तेन सह फलदं कर्म तस्य भवति । तत्नैवमभिसम्बन्धः क्रियते । वसिष्ठानां नाराशंसेन सहितं कर्म्म फलदं भवतीति ॥ ५ ॥

## औदुम्बर्य्याः परार्थत्वात् कपालवत् ॥ ६ ॥

अथ यदुपवर्णितं, तथा औदुम्बरी तथेह इति । पारार्थ्यमौदुम्बर्य्याः । यजमानो गुणत्वेन श्रूयते । ननु तत्रापि प्रयोगवचनः पुरुषप्राधान्यं कुर्य्यात् । नैष दोष । एकेनापि यजमानेन सम्मिता चेयं

सर्वेषां यजमानसम्मिता भवति । न त्विह एकस्य संगृहीते सर्वेषां संगृहीत । तस्मादौदुम्बर्य्या. पारार्थ्यं, कपालवत् । यथा, पुरोडाशकपालेन तुषा उपवपन्तीति परार्थकपालेन तुषा उपवप्तव्या इत्युपादीयते । एवमेतदपीति ॥ ६ ॥ आ० नि० ॥

अन्येनापीति चेत् ॥ ७ ॥

एवं चेद् भवान् पश्यति, यजमानेन सम्मानं, तत् प्रयोजनं स्वेन अन्येन वा यजमानेनेति । तथा प्रयोगान्तरे यो यजमानस्तेनापि संमानं प्राप्नोति ॥ ७ ॥ आ० ॥

नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥

अत्रोच्यते । न प्रयोगान्तरस्य यजमान. प्रसज्ज्यते । न तु यजमानशब्दे कश्चिद्विशेषो, यतो यजमानशब्दाद् व्यवस्था स्यात् । किं तर्हि, एकत्वस्य विवक्षितत्वान्न द्वाभ्यां याजमानानि कर्त्तव्यानीति, नान्य आनीयते । आह । अन्य एव तर्हि सर्वयाजमानेषु भवतु । नैवम् । कामिनं हि अधिकृत्य साङ्गस्य यागस्य वचनम् । यजमानशब्दश्चाऽविभक्त इह औदुम्बर्य्या सम्माने । तस्मान्नान्यो भविष्यति ॥८॥ आ० नि०

सन्निपातात्तु निमित्तविघातः स्याद् बृहद्रथन्तरवद्विभक्तशिष्टत्वाद् वसिष्ठनिर्वर्त्त्ये ॥ ९ ॥

तुशब्दः पक्षं व्यावर्त्तयति । बहुषु यजमानेषु सन्निपातान्निमित्तविघात. स्यात् । कुतः । विभक्तशिष्टत्वात् । वसिष्ठनिर्वर्त्त्ये प्रयोगे नाराशंसो नैमित्तिक । अन्यस्मिंस्तनूनपान्नैमित्तिकः । यत्रेदानीमुभये कर्त्तार ससहायेन, तत्र निर्वृत्तिर्न केवलेन । तस्मान्न केवल. कर्त्ता । न चेद् वासिष्ठ केवल कर्त्ता, तस्मात् तन्निमित्तं तत्र न कर्त्तव्यम् । न चेतरनिमित्तमुभयोरप्यन्योन्येन विघात । बृहद्रथन्तरवत् । तद् यथा, बृहद्रथन्तरं पृष्ठं भवतीति न बृहत्साधनकं न रथन्तरसाधनकमिति । नैव तत्र बृहन्निमित्तं भवति, न रथन्तरं वा । एवमिहापीति ॥९॥ आ०

अपि वा कृत्स्नसंयोगादविघातः प्रतीयते स्वामित्वेनाभिसम्बन्धात् ॥ १० ॥

अपि वेति पक्षं व्यावर्त्तयति । कृत्स्नं प्रति केवलस्य कर्तृत्वेन

संयोगो भवति । तस्माद् अविघातो नैमित्तिकानाम् । कथं पुनः कात्स्न्र्येन कर्त्तव्यत्वम् । स्वामित्वेनाभिसम्बन्धात् । कर्म्म प्रति स्वामित्वेन केवलानां वसिष्ठादीनामभिसम्बन्धो भवति । कर्म्म पुरुषाणामुपकारकम् । तद्धि एकैकस्य शक्नोति फलं निर्वर्त्तयितुम् । तस्मादेकैकः कृत्स्नस्य कर्त्तेति तन्नैमित्तिकं सर्वे प्राप्नोति । यथा, तुण्डमात्रे दीयतामिति । यद्यपि सा तुण्ड-डपित्थयोर्माता, तथापि तस्यै दीयते। कात्स्न्र्येन हि तस्य सा माता भवति। न हि व्यासज्ज्यते मातृत्वम् । तद्वदिहापि द्रष्टव्यम् । तस्मादसमानकल्पानामनधिकार. ॥ १० ॥

**साम्नोः कर्म्मवृद्ध्येकदेशेन संयोगे गुणत्वेनाभिसम्बन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥**

अथ यदुक्त, बृहद्रथन्तरवदिति तत् परिहरणीयम्। बृहद्रथन्तरयोः साम्नोर्नैमित्तिककर्म्मवृद्ध्यैकदेशेन संयोगो भवति । तत्र हि उभयोः साधकत्वं, नैकस्य । स्तोत्रैकदेशेन तु तत्र साम्नोः सम्बन्धो, न कृत्स्नेन स्तोत्रेण । गुणत्वेन हि तत्र साम श्रूयते । स्तोत्रं प्राधान्येन । तस्मात् तत्र विघातः स्यात् ॥ ११ ॥ आ०नि० ॥ सत्रे समानकल्पानां सहाधिकाराधिकरणम् ॥ १ ॥

**वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥**

इदं समामनन्ति, एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति । तत्र सन्देहः । किं राज्ञो द्वौ पुरोहितौ यजेयाताम्, उत राजा च पुरोहितश्चेति । किं प्राप्तम् । राज्ञो द्वौ पुरोहिताविति । कुतः । पुरोहितशब्दात् परं द्विवचनं श्रूयते, तच्छब्दवाच्यस्य द्वित्वं शक्नोति वदितुम् । पुरोहितश्च तच्छब्दवाच्य. श्रुत्या, न राजा । पुरोहितवचनः पुरोहितशब्द । लक्षणया युगपदधिकरणवचनतायां हि तद् भवति । नन्वेकस्य द्वौ पुरोहितौ न स्तः । पुरोहितं वृणीत इति हि उपादीयमानस्य विवक्षितमेकत्वमिति । उच्यते । वचनादेतद् भविष्यति । किं हि वचनं न कल्पयेत् । एतेनैव कारणेन द्वौ भविष्यतः । यथा वचनेन अञ्जलिना जुहोतीत्येकस्यैव द्वौ पाणी भवतो, यद्यपि सव्योऽप्राप्तस्तथापीति ॥ १२ ॥ पूर्व० ॥

**अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥**

तुशब्दात् पक्षो विपरिवर्त्तते । नैवं स्यात् । द्वौ पुरोहिताविति । कुतः । अर्थाभावात् । नैवायम् अर्थोऽस्ति । द्वौ पुरोहितौ इति । एकस्य राज्ञ एक एव पुरोहित उपादेयत्वेन हि श्रूयते । पुरोहितं करोतीति, एकत्वं विवक्षितम् । ननु वचनादित्युक्तम् । उच्यते । न तु वचनादेतच्छक्यम् । संस्कारनिमित्तत्वात् पुरोहितशब्दस्य । क्रियमाणोऽपि न पुरोहित स्यात् ॥ १३ ॥ उत्तरम् ॥

**अर्थानाञ्च विभक्तत्वान्न तच्छ्रुतेन सम्बन्धः ॥ १४ ॥**

अर्थानाञ्च विभक्तत्वं श्रूयते । तेज संस्तवो ब्राह्मणस्य, वीर्य्यसंस्तवो राजन्यस्य । ताभ्यां वर्णाभ्यां तेन तेन फलेन सम्बन्धोऽनूद्यते। तस्मादपि न द्वौ पुरोहिताविति ॥ १४ ॥ युक्ति. ॥

**पाणेः प्रत्यङ्गभावादसम्बन्धः प्रतीयेत ॥ १५ ॥**

अथ यदुक्तम्, एतस्मादेव कारणादेकस्यैव पुरुषस्य द्वौ पाणी भवत इति । युक्तं तत्र । पाणे प्रत्यङ्गभूतत्वात् । अञ्जलिं प्रत्यङ्गभूतो दक्षिणस्य पाणे. सव्य पाणिः । तेन विना अञ्जलिरेव न भवति । न हि द्वाभ्यां दक्षिणाभ्यामञ्जलिरित्युच्यते । तस्माद् राजा च पुरोहितश्च स्यात् । ननु तत्र राजपुरोहितश्च राजपुरोहितश्च राजपुरोहितौ यजेयातामिति। उच्यते। न तौ सायुज्यकामौ भवतः । स राजा पुरोहितेन सहैककार्यो भवति, न तु पुरोहितः पुरोहितेन । उभावपि तौ हि राजानमभिचरन्तौ पुरोहितावित्युच्येते । न हि ताविच्छन्तौ । संस्कारशब्दो हि पुरोहित इति । ननु लक्षणा भवति भवत्पक्षे । उच्यते । श्रुत्यभावे लक्षणयापि व्यवहारो भवति । यथा, अग्नौ तिष्ठत्यवटे तिष्ठतीति । तस्माद् राजा च पुरोहितश्च राजपुरोहिताविति ॥ १५ ॥ आ०नि० ॥ भिन्नकल्पयोरपि राजपुरोहितयो कुलाययज्ञेऽधिकाराधिकरणम् ॥२॥

**सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥**

इह सत्राण्युदाहरणम् । य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः समुपयन्तीति । तत्र सन्देह. । किं सत्राणि त्रयाणामपि वर्णानाम्, उत ब्राह्मणानामेवेति । किं प्राप्तम् । सत्राणि सर्ववर्णानां भवेयुरिति । कस्मात् । अविशेषात् । न हि कश्चिद्विशेष आश्रीयते । अमीषां वर्णानां सत्राणि भवन्ति, अमीषां नेति। तस्मात् त्रयाणामपि वर्णानामधिकार इति ॥ १६ ॥ पूर्व० ॥

लिङ्गदर्शनाच्च ॥ १७ ॥

इतश्च पश्यामः, त्रयाणां मन्त्राणीति । कुतः । लिङ्गदर्शनात् । किं लिङ्गं भवति । एवमाह । बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्य्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्येति द्वादशाहे भवति वचनं ब्रह्मसमविधानपरम् । तस्मिन् राजन्यवैश्यानां दर्शनं भवति । तस्मादपि सर्ववर्णानामधिकार इति ॥ १७ ॥ युक्ति ॥

ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, त्रयाणामपि वर्णानामिति । किं तर्हि ब्राह्मणानामेव स्यात् । कुतः । इतरयोरार्त्विज्याभावात् । इतरयोर्हि वर्णयो राजन्यवैश्ययोरार्त्विज्यं प्रतिषिद्धम् । स्वयमेव आर्त्विज्येन विना विगुणत्वम् । तस्माद् ब्राह्मणानामेव स्यात् ॥ १८॥ सि०

वचनादिति चेत् ॥ १९ ॥

इति चेत् पश्यसि, राजन्यवैश्ययोर्वैगुण्यमापद्यते इति । वचनाद् यजमानाः सन्त ऋत्विजो भविष्यन्ति । ये यजमानास्ते ऋत्विज इति । के पुनर्यजमानाः । ये तत्र फलं कामयमानाः सत्रकर्मणि प्रवृत्तास्ते राजन्या अपि वैश्या अपि । तेषाम् ऋत्विक्कर्म्म विधीयते । तत्रैतत् स्याद्, येषामार्त्विज्यं शक्यं कर्त्तुं तेषामेव तद् ब्राह्मणानाम् । प्रतिषिद्धं हि राजन्यवैश्यानां, न तेषामिदमार्त्विज्यविधानमिति । नैतदेवम् । यथैव ब्राह्मणानां यजमानानामप्राप्तं वचनविधानाद् भवति, एवमब्राह्मणानामपि यजमानानां वचनप्रामाण्यादेव भवितुमर्हतीति । तस्मादार्त्विज्यसंस्कृता राजन्यवैश्या अपि सत्रमासीरन्निति ॥ १९ ॥ आ० ॥

न स्वामित्वं हि विधीयते ॥ २० ॥

नैतदेवम् । स्वामित्वमनेन वचनेन विधीयते । एवङ्कामाः सत्रमासीरन्निति विधीयते, न आर्त्विज्यम् । अथ ये यजमानास्ते ऋत्विज इत्यनेन वचनेन विहितमार्त्विज्यमिति । उच्यते । तदपि न । कथम् । नात्रैषा वचनव्यक्तिः । ये यजमाना इत्युद्देशपदम्, ऋत्विजः इति विधेयपदम् । तथा हि सति आर्त्विज्यमङ्गं यजमानसंस्कारकं विधीयेत, न यजमाना आर्त्विज्यस्याङ्गम् । तत्र प्राकृतार्थता नैषामार्त्विज्यानां स्यात् । संस्कारश्चादृष्टः कल्प्येत । स च यजमान-

विषय इति पुनरदृष्टम् । तस्मान्न यजमानानां सतामार्त्विज्याः पदार्था विधीयन्ते । किन्तर्हि । आर्त्विजानां पदार्थानामनन्यकर्तृकता । एषा च वचनव्यक्तिः । ऋत्विज इत्युद्देशपदम् । ते इति विधीयते । ये यजमानास्त एव ऋत्विजो भवन्ति, नान्ये इत्यार्त्विजेषु पदार्थेषु यजमानाः कर्त्तारो विधीयन्ते । प्रत्याम्नानात् । अन्ये निवर्त्तन्ते । एवं सति प्राकृतप्रयोजना एव आर्त्विजाः पदार्था । न यजमानसंस्कार अदृष्टो विधीयते इति । यजमानकर्तृकल्पनायामप्येषामदृष्टमिति यदि कल्प्येत तत्र ब्रूमः । इतरस्मिन्नपि पक्षे यजमानविषय. सोऽदृष्ट संस्कार इति अवश्यं कल्पनीयम् । यश्चोभयोः पक्षयोर्दोषो, न तमेकश्चोद्यो भवति ॥ २० ॥ आ० नि० ॥

## गार्हपते वा स्यातामविप्रतिषेधात् ॥ २१ ॥

गार्हपते पदार्थे राजन्यवैश्यौ भविष्यत. । न च तत्रार्त्विजप्रयोजनम् । तस्मादविप्रतिषेधस्तेषामिति ॥ २१ ॥ आ० ॥

## न वा कल्पविरोधात् ॥ २२ ॥

न चैतदस्ति, गार्हपते वा पदार्थे राजन्यवैश्यौ इति । कल्पविरोधो हि स्यात् । यजमानचमस सोममय एकेषां, फलमयचमस एकेषाम् । तथा, ब्रह्मसाम बार्हद्गिरं ब्राह्मणानां, पार्थुरश्मं राजन्यानां रायोवाजीयं वैश्यानाम् । तस्माद् गार्हपते निवेश इत्येतदपि नास्ति॥२२॥

## सामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

अथ यदुक्तं, लिङ्गदर्शनादिति । तत् परिहर्त्तव्यम् । अत्रोच्यते । अहीनमेव सत्रशब्देन वक्ष्यति । यतः स्वामित्वम् ऋत्विजां विधीयते । अत ऋत्विजां स्वामित्वाद् राजन्यवैश्यानां सत्रं नावकल्पते इति । तस्माद् अहीने लिङ्गदर्शनम् ॥ २३ ॥ आ० नि० ॥ सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ॥ ३ ॥

## वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥

एतत् समधिगतं– ब्राह्मणानामेव सत्रं, न राजन्यवैश्यानामिति । अथेदानीमिदं सन्दिग्धं, किं सर्वेषां ब्राह्मणानामुत वासिष्ठानां सः, उत भृगुशुनकवासिष्ठान् वर्जयित्वा अन्येषामिति । किं प्राप्तम् । सर्वेषामविशेषात् । न हि कश्चिद्विशेष आश्रीयते, अमीषां ब्राह्मणानां सत्रममीषां नेति । तस्मात् सर्वेषामिति ॥ एवं प्राप्ते ब्रूमः । वासिष्ठानां

ब्रह्मत्वस्य नियमाद् । वासिष्ठानां सत्रं स्यान्नान्येषाम् । कुत । ब्रह्म-त्वस्य नियमो भवति । वासिष्ठो ब्रह्मा भवतीत्यतो वासिष्ठानां, तत्स-मानकल्पानाञ्च सत्रं स्यादिति ॥ २४ ॥

## सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥

सर्वेषां वा सत्रं स्यात् । अविशेषात् । ननु वासिष्ठो ब्रह्मेत्युच्यते । नेत्याह । पुन. प्रतिसूयते । य एव कश्चन स्तोमभागमधीयीत स एव ब्रह्मा भवेदिति । वासिष्ठोपदेश इदानीं किमर्थं इति चेत् । स्तोम-भागप्रशंसार्थ. । स्तोमभागानधीयानोऽवासिष्ठोऽपि वासिष्ठकार्य्यं क्षमर्थः कर्त्तुमिति ॥ २५ ॥ पूर्व० ॥

## विश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठाना-मनधिकारः ॥ २६ ॥

भृग्वादीनामनधिकारः स्यात् । कुत. । वैश्वामित्रस्य हौत्रं निय-म्यते । विश्वामित्रो होता भवतीति । तस्माद् वैश्वामित्राणां, तैश्च समानकल्पानामधिकार इति ॥ २६ ॥ सिद्धान्त ॥ सत्रे विश्वामित्र-तत्समानकल्पानामेवाधिकाराधिकरणम् ॥ ४ ॥

## विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥

सत्राण्येवोदाहरणम् । य एवं विद्वांस. सत्रमासते, य एवं विद्वांस. सत्रमुपयन्तीति । तेषु सन्देह । किं साग्नीनामनग्नीनाञ्च तानि भवन्ति, उत साग्नीनामेवेति । किं प्राप्तम् । साग्नीनामनग्नी-नाञ्च । कुतः । विहारस्य प्रभुत्वात् । प्रभवति हि परकीयोऽपि विहारः सर्वेषामुपकर्त्तुम् । कर्त्तव्यो हि तेन सिद्ध्यतीति स यदीयेन तदी-येन वा सिद्धिमुपैति । तस्मादनग्नीनामपि भवितुमर्हतीति॥२७॥ पूर्व०॥

## सारस्वते च दर्शनात् ॥ २८ ॥

सारस्वते च सत्रे भवति दर्शनम् । परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नय. सत्रमासते इति । अनाहिताग्नीनां सत्रं दर्श-यति । तस्मादपि सर्वेषाम् ॥ २८ ॥

## प्रायश्चित्तविधानाच्च ॥ २९ ॥

प्रायश्चित्तं विधीयते, अत्र ये विविच्येयऽष्टाकपालं पुरोडाशं निर्व-पेद् यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्निति । संसर्गेऽग्नीनां

प्रायश्चित्तं दर्शयति । स एवं स्यादनाहितैः, नान्यथा । तस्मादप्यनग्नीनां सत्राणीति ॥ २९ ॥ युक्तिः ॥

### साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥

साग्नीनां वा सत्राणि, नानग्नीनाम् । कस्मात् । इष्टिपूर्वत्वात् । इष्टिपूर्वत्वं सोमानामाम्नातम् । दर्शपूर्णमासौ इष्ट्वा सोमेन यजेतेति ज्योतिष्टोमस्येष्टिपूर्वत्वम् । तच्चोदकपरम्परया सत्राणि प्रति प्राप्तम् । तस्मादनग्नीनां तानि भवेयुरिति ॥ ३० ॥ सि० ॥

### स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥

स्वार्थेन चाग्नयः प्रयुक्ताः । कथम् । उपग्रहविशेषात् । उपग्रहविशेषो हि भवति, अग्नीनादधीतेति । तस्मादन्यस्याग्निभिरन्यस्य न सिद्धिः । यद्यपि क्रत्वर्था अग्नय इति ॥ ३१ ॥

### सन्निवापं च दर्शयति ॥ ३२ ॥

सावित्राणि होष्यन्तः, सन्निवपेरन्निति । तेनापि साग्नयः सत्राण्युपासते इति गम्यते । एवं लिङ्गपरिहारौ अशिष्टेऽधिकरणेऽन्यच्चिन्त्यते ॥ ३२ ॥ युक्ति ॥ सत्रे आहिताग्नेरेवाधिकाराधिकरणम् ॥ ५ ॥

### जुह्वादीनामप्रयुक्तत्वात् सन्देहे यथाकामी प्रतीयेत ॥ ३३ ॥

किं जुह्वादीनि पात्राणि कस्यचिदेव यजमानस्य, उपादाय प्रयोग कर्त्तव्य, उत अन्यानि साधारणानि कर्त्तव्यानि ? । किं प्राप्तम् । यस्य कस्यचिदेव यजमानस्य उपादाय प्रयोगः कर्त्तव्य । कुतः । न हि स्वं पात्रं यजमान प्रयुङ्क्ते । स्वेन पात्रेण प्रयोगः कर्त्तव्य इति । तस्मात् परकीयपात्रैरन्ये यजेरन्निति ॥ ३३ ॥ पूर्व० ॥

### अपि वान्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥

अपि वेति पक्षव्यावृत्तिः । नैतदेवम् । अन्यानि हि पात्राणि साधारणानि कर्त्तव्यानि । कस्मात् । विप्रतिषेधात् । विप्रतिषेधो भवति । कदाचित्तानि पात्राण्युपात्तानि भवेयु । अथ मरणं कस्यचिद् यजमानस्यापद्येत, तत्र विप्रतिषेधः स्यात् । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति । यदि तं तैर्दहेयु, इतरेषां यज्ञो विरुध्येत । अथ तैर्यज्ञं समापयेयु-

रितरस्य शरीरसंस्काराः परिलुप्येरन् । अन्येषु पुनः साधारणेषूपादीयमानेषु न किञ्चिदपि विरुध्येत । तस्मात् तथा कार्य्यमिति ॥ ॥ ३४ ॥ सि० ॥

प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

अथेदानीं पूर्वोक्तस्य लिङ्गस्य परिहार उच्यते । प्रायश्चित्तमस्मत्पक्षे परिकल्पिष्यते । कथम् । अरण्ये कान्तारे गच्छतां स्थितानां वा दस्युभयात्, श्वापदभयाद् वा त्रासे जाते दावाग्निना वा संसृज्येरन् मिथो वा स विषयः प्रायश्चित्तस्य भविष्यतीति ॥ ३५ ॥ आ० नि० ॥

जुह्वादीनां साधारण्याधिकरणम् ॥ ६ ॥

पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकास्मिन्नधिकारः स्यात् ॥ ३६ ॥

अध्वरकल्पा उदाहरणम् । आग्रयणेष्टिः पशुरित्येवंलक्षणकानि कर्माणि । येषु सप्तदश सामिधेन्यस्तेषु सन्देहः । किं त्रयाणामपि वर्णानामेभिः कर्मभिरधिकार, उत वैश्यस्यैवेति । किं प्राप्तम् । एतस्यां विकृतौ पुरुषकल्पेन कर्त्ता नियम्येत । कुतः । यज्ञोऽयमध्वरकल्पादिरेतत्सङ्ख्यागुणकः । इयं च सङ्ख्या वैश्यस्योक्ता । तेन वैश्य एव एतत् कर्म कृत्स्नं कर्त्तुं समर्थः । सप्तदशगुणकमेतत् कर्म । तच्च साप्तदश्यमवैश्येन क्रियमाणमसाधु । इतरान् प्रति हि तन्न चोद्यते । तेन यजेतत्यसामर्थ्याद् ब्राह्मणक्षत्रियान्नाधिकरिष्यतीति ॥ ३६ ॥ पूर्व० ॥

लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥

लिङ्गं च भवति यथा वैश्यस्य साप्तदश्यमिति, सप्तदशो वैश्य इति । तेन वैश्यस्य साप्तदश्यमतो वैश्यस्यैवञ्जातीयकानि कर्माणि । यथा इज्याविशेषा वैश्यस्य भवति । वैश्यो वैश्यस्तोमेन यजेतेति । वैश्यसम्बन्धात् । एवं साप्तदश्यं तस्यैवेति ॥ ३७ ॥ युक्ति० ॥

न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥

न चैतदस्ति । पृथगेतौ संयोगौ । एकं वाक्यं सप्तदश वैश्यस्यानुब्रूयादिति वाक्यान्तरम् । अध्वरकल्पादिषु सप्तदशानुब्रूयादिति ।

स च गुण इज्याप्रधानो भवति, न इज्या गुणार्था । किमतः ? । यद्येवं यत्रेज्या, तत्र तद्गुणेन भवितव्यम् । न यत्र गुणस्तत्र इज्या । वैश्यस्य गुणानुरोधेन इज्यापि । त्रयाणां वर्णानामिज्या । सा तत्र गुणमाकाङ्क्षतीति । अपिचेज्या गुणभूतस्यापरा चोदना । न सा वैश्यसंयुक्ता । सा त्ववैश्यकं गुणं प्रत्याययति । प्रथमं सवैश्यकमिति चेन्न । वैश्यस्य प्रधानत्वात् । प्रधानभूतस्तत्र वैश्यः श्रूयते । तस्मात् सर्वाधिकारः ॥ ३८ ॥

**इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥**

अथ यदुक्तं, वैश्यस्तोमे यथा तथेहापीति । युक्तं तत्र । इज्या वैश्यस्य श्रूयते । तत्र वाचनिकेनैव विशेषेण नियम्येत । तस्मात् तत्रादोष इति ॥ ३९ ॥ युक्तिः ॥ विकृतसप्तदशसामिधेनीषु वर्णत्रयाऽधिकाराधिकरणम् ॥७॥ इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य षष्ठ. पादः ॥ ६ ॥ ६ ॥

अथ षष्ठे अध्याये सप्तमः पादः ॥ ६ ॥ ७ ॥

**स्वदाने सर्वमविशेषात् ॥ १ ॥**

इदमामनन्ति विश्वजिति, सर्वस्वं ददातीति । तत्र सन्देहः । किं यावत् किञ्चित् स्वशब्देनोच्यते, यथा माता पिता इत्येवमाद्यपि सर्वं देयम् ? उत यत्र प्रभुत्वयोगेन स्वशब्दस्तदेव देयमिति । किं प्राप्तम् । अविशेषात् ।माता पिता इत्येवमाद्यपि दातव्यम् । ननु दानमित्युच्यते स्वत्वनिवृत्तिः, परस्वत्वापादनं च । तत्र पित्रादीनामशक्यं स्वत्वं निवर्त्तयितुम् । न हि कथञ्चित् पिता न पिता भवति । उच्यते । सत्यं न असौ न पिता भवति । शक्यते तु परविधेयः कर्त्तुम् । परस्वत्वापादनं च दानम् । अर्थाच्च स्वत्वत्यागः । तस्मात् सर्वं देयमिति ॥ १ ॥ पूर्व० ॥

**यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥ २ ॥**

वाशब्देन पक्षो विपरिवर्त्तते । यस्य प्रभुत्वयोगेन स्वत्वं तदेव देयं नेतरत् । कस्मात् । प्रभुत्वयोगिनः शक्यत्वात् । इतरस्य चाशक्यत्वात् । न हि पित्रादीनां शक्यते स्वत्वं परित्यक्तुम् ॥ ननु चोक्तं, परविधेयीकरणं तस्य शक्यमिति । उच्यते । प्रभुत्वयोगिनः स्वस्या-

ऽत्र दीयमानस्य सर्वत्वमुच्यते। नाऽप्रभुत्वयोगिनः स्वस्य दानम्। न चैतन्न्याय्यं, यत् पित्रादीनां परिचारकत्वम्। यस्य चैतन्न्याय्यमपि भवेत्, स दद्यादपि। अत्राह। ननु यत्र स्वशब्दो वर्त्तते, तद्देयमित्युक्ते पित्रादयो दातव्या गम्यन्ते। तस्मात् तान् प्रति प्रभुत्वाय स्मृति बाधित्वापि यतितव्यमिति। अत्रोच्यते। स्वशब्दोऽयमात्मीयधन-ज्ञातीनां प्रत्येकं वाचको, न समुदायस्य। तत्रात्मीये सर्वतायां कृतायां कृते शास्त्रार्थे न अशक्येषु ज्ञातिषु सर्वता कल्पनीया, नापि स्मृतिर्बाधितव्या। अपि च गवादीनामात्मीयानां चोदकेन प्राप्तौ सत्यामवश्यमात्मीयगता सर्वता उपादेया। तस्याश्चोपात्तायां कृतः शास्त्रार्थ इति ज्ञातीनामुपादाने न किञ्चित् कारणमस्ति। तस्मान्न पित्रादयो देयाः। तस्माद्यत्रैव प्रभुत्वयोगेन स्वत्वं, तदेव देयमिति ॥ २ ॥ सिद्धान्तः ॥ विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

## न भूमिः स्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥ ३ ॥

अत्रैव सर्वदाने संशयः। किं भूमिर्देया? नेति। का पुनर्भूमिरत्राभिप्रेता। यदेतन्मृदारब्धं द्रव्यान्तरं पृथिवीगोलकं, न क्षेत्रमात्रं मृत्तिका वा। तत्र किं प्राप्तम्। अविशेषाद्देया। प्रभुत्वसम्बन्धेन हि तत्र स्वशब्दो वर्त्तते। शक्यते च मानसेन व्यापारेण स्वस्य स्वता निवर्त्तयितुमिति। एवं प्राप्ते ब्रूमः। न भूमिर्देया इति। कुतः। क्षेत्राणामीशितारो मनुष्या दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्येति॥ आह। य इदानीं सार्वभौमः, स तर्हि दास्यति। सोऽपि नेति ब्रूमः। कुतः। यावता भोगेन सार्वभौमो भूमेरीष्टे, तावता अन्योऽपि। न तत्र कश्चिद्विशेषः। सार्वभौमत्वेऽस्य त्वेतदधिकं, यदसौ पृथिव्यां सम्भूतानां व्रीह्यादीनां रक्षणेन निर्विष्टस्य कस्यचिद् भागस्य ईष्टे, न भूमेः। तन्निर्विष्टाश्च ये मनुष्यास्तैरन्यत् सर्वप्राणिनां धारणविक्रमणादि यद् भूमिकृतं, तत्रेशित्वं प्रति न कश्चिद्विशेषः। तस्मान्न भूमिर्देया ॥ ३ ॥ विश्वजिति पृथिव्या अदेयत्वाधिकरणम् ॥ २ ॥

## अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥

विश्वजित्येव सन्देहः। किमश्वादयो देयाः, न? इति। किं प्राप्तम्। सर्वस्य विहितत्वाद्, देया अश्वा इति। एवं प्राप्ते ब्रूमः। यस्य च दानमकार्य्यं, तच्च न देयम्। यथा अश्वानाम्। तेषां हि दान-

सकार्य्यम् । एष हि विशेषोऽश्वानामन्येभ्यो द्रव्येभ्यो, यदेषां दानं प्रतिषिद्ध्यते, न केसरिणो ददाति, न उभयतोदतः प्रतिगृह्णातीति विश्वजिति एव समाम्नायते । तस्मान्न अश्वा देया इति ॥ ४ ॥ ॥
विश्वजिति अश्वादीनामदेयताधिकरणम् ॥ ३ ॥

## नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

विश्वजित्येव सन्देह । सर्वस्वं ददाति इति । किमर्ज्जयित्वोपकरणानि यावन्ति मनुष्यस्य, यावन्ति च शक्नोत्युपार्जयितुं, सर्वाणि तानि दद्यात् कृतभाण्डादीनि, उत यान्येवास्य विद्यन्ते, तानि सर्वाणि देयानि, न अविद्यमानानि कर्त्तव्यानि ? इति । कुतः संशय. । उभयथा वचनव्यक्तेः सम्भवात् । यदि वा एवं वचनं व्यज्ज्यते, यानि सर्वाणि स्वानि । कानि तानि । यानि पुरुषस्योपकारकाणि शयनादीनि । तानि सर्वाणि दद्यादिति विधीयते । यद्वा यानि स्वानि पुरुषस्य दाने शक्यानि, तानि सर्वाणीति सर्वत्वं विधीयते । यदि दानं विधीयते, ततोऽप्राप्तदानानां कृतभाण्डकानामपि दानम् । अथ सर्वता विधीयते, ततो विद्यमानानामेव ॥ किं तावत् प्राप्तम् । कृतभाण्डकानि देयानीति । तथा दानविधाने श्रुतिरनुगृह्यते, इतरथा वाक्यम् । तयोश्च श्रुतिर्बलीयसी । तस्मात् कृतभाण्डकानि देयानीति ॥ एवं प्राप्ते ब्रूम. । नित्यत्वाच्च अनित्यैर्नास्ति सम्बन्ध. । चशब्दोऽन्वादेशे, न अश्वा दातव्या इत्युक्तम् । कृतभाण्डकानि च न देयानीति । नित्यं हि विश्वजिति दानं चोदकेन प्राप्तमनूद्यते । अनित्यानि च कृतभाण्डकानि न शक्यानि सर्वाणि विश्वजिति क्रियमाणे उपसंहर्तुम् । तत्र कृतभाण्डकानां केषाञ्चिदुत्पत्ति विश्वजिति दानं प्रतीक्षेत । नैमित्तिक तत् स्याद्, न नित्यम् । नित्यवच्च तत्, चोदकेन विधीयते, न निमित्तसंयोगेन । तस्मादवश्यमेतदभ्युपगन्तव्यम् । साकल्यं देयानां प्राप्तानां विधीयते इति श्रुत्यसम्भवे च वाक्यार्थो ग्रहीतव्य एव भवति । तस्मान्न कृतभाण्डकानि दातव्यानि ॥ ५ ॥
विश्वजिति विद्यमानानामेव सर्वस्वानां दानाधिकरणम् ॥ ४ ॥

## शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

विश्वजित्येव सन्दिह्यते । किं परिचारकः शूद्रो देयः, न ? इति। किं प्राप्तम् । सर्वस्य स्वस्य विहितत्वाद्देय इति । एवं प्राप्ते ब्रूमः ।

शूद्रश्च न देय इत्यन्वादेशः । कुतः । धर्म्मशास्त्रत्वात् । धर्म्मशासनोपनतत्वात् तस्य । एवमसौ तस्मै त्रैवर्णिकायोपनत इमं शुश्रूषमाणो धर्मेण सम्भन्त्स्यते इति । सोऽन्यस्मै दीयमानो नेच्छेदपि । न चानिच्छतस्तस्य स प्रभवति । न च बलात् स्वीकर्त्तव्य । यस्त्वन्यायेन स्वीकुर्य्यात्, स दद्यादपि । धर्म्मोपनतमात्रेण तु न शक्यो दातुम् ॥६॥ विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणम् ॥ ५ ॥

## दक्षिणाकाले यत् स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥७॥

विश्वजित्येव सन्देहः । किं प्राग्दक्षिणाकालाद् विद्यमानं नियोगतो दक्षिणाकाले निधातव्यम्, ऊर्ध्वं च दक्षिणाकालाद् भविष्यदनागतमपि दक्षिणाकाले देयम् ? उत यदेव दक्षिणाकाले विद्यते तदेव देयमिति । किं प्राप्तम् । यस्यापि प्रागूर्ध्वं च स्वता, तदपि देयम् । स्वमात्रस्य दानविधानात् । एवं प्राप्ते ब्रूमः । दक्षिणाकाले यत् स्वं विद्यते तदेव देयं, न यत् प्रागूर्ध्वं च । कुतः । स्वस्यात्र दानमनूद्य साकल्यं विधीयते । तच्च दानं दक्षिणाकाले प्राप्तत्वात् तस्मिन्नेव कालेऽनूद्यते । तस्माद्दक्षिणाकाल एव विद्यमानं देयमिति ॥ ७ ॥ विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयताधिकरणम् ॥ ६ ॥

## अशेषत्वात्तदन्तः स्यात् कर्म्मणो द्रव्यसिद्धित्वात् ॥८॥

तस्मिन्नेव विश्वजिति सन्देहः । किं दक्षिणाकाले एव विश्वजिदुत्स्रष्टव्यः, उत न सर्वं दातव्यं, परिसमापनीयः ? इति । किं प्राप्तम् । उत्स्रष्टव्य इति । कुतः । अशेषत्वात् । कथमशेषता । विश्वजिति सर्वस्वं ददातीति । न च शक्यमन्तरेण द्रव्यं, परिसमापयितुम् । तस्मात्तदन्तः स्यात् ॥ ८ ॥

## अपि वा शेषकर्म स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥९॥

अपि वेति पक्षव्यावृत्तिः । शेषकर्म्म स्यात् । न सर्वस्वं दक्षिणाकाले देयं, यावता तत् कर्म परिसमाप्यते, तावच्छेषयितव्यम् । कुत । क्रतोः प्रत्यक्षशिष्टत्वात् । क्रतो परिसमाप्तिः प्रत्यक्षशिष्टा । विश्वजिता यजेतेति विश्वजितमुपक्रम्य, परिसमापयेदित्यर्थः । परिसमापयता यच्छक्यते दातुं, तावत् सर्वमित्यर्थः । तस्मान्न तदन्तमुत्स्रष्टव्यमिति ॥ ९ ॥ पूर्व० ॥

**तथा चान्यार्थदर्शनम् ॥ १० ॥**

एवञ्च कृत्वाऽन्यार्थदर्शनमुपपद्यते । अवभृथादुदेत्य वत्सत्वच-माच्छादयतीति शेषे सति अवकल्पते ॥ १० ॥ युक्तिः ॥

**अशेषं तु समञ्जसादानेन शेषकर्म स्यात् ॥ ११ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । एतत् समञ्जसाभूतं, यद् अशेषं प्रदीयते इति। एवं सर्वस्वं ददातीति शब्द उपपन्नो भवतीति। यत्तु प्रत्यक्षा समाप्तिरिति। तत्र ब्रूमः।आदानेन शेषकर्म्म भविष्यतीति॥११॥

उच्यते—

**नादानस्य नित्यत्वात् ॥ १२ ॥**

आदानं त्वनित्यम् । नित्यं च शेषकर्म । न हि तयोः सम्बन्धोऽवकल्पते। तस्माच्छेषयितव्यं किञ्चिदिति ॥ १२ ॥ आ० नि० ॥

**दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्माद् अविरोधः स्यात् ॥ १३ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति किञ्चिच्छेषयितव्यमिति। दीक्षासु तु विनिर्देशो भवति, प्रकृतौ एव ज्योतिष्टोमे । स इह चोदकेन प्राप्तः। इदं क्रत्वर्थमिदं भक्ष्यार्थमिदम् आनमनायेति । तदिह यद् आनमनाय दातव्यं, तस्यायं विकारः सर्वता नाम। कुत एतत्। यतः स्वं ददातीत्यनूद्यते, सर्वतैव विधीयते। तेन, न अदातव्यस्य दानं विधीयते। न च भक्ष्यार्थं क्रत्वर्थं च दातव्यम्। तस्मादविरोधो भविष्यतीति ॥ १३ ॥ सिद्धान्तः ॥ विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधिकरणम् ॥ ७ ॥

**अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात् ॥ १४ ॥**

अस्त्यहर्गणोऽष्टरात्रः । अथैतस्याष्टरात्रस्य विश्वजिदभिजितौ एकाहावभितः, उभयतो ज्योतिर्मध्ये षडहः, पशुकामो हि एतेन यजेतेति । तत्र सन्देहः ! किमहर्गणस्थस्यापि सर्वस्वमेव दक्षिणा स्याद् ? आहो द्वादशं शतमिति । किं प्राप्तम्। सर्वस्वम् । कुतः। सर्वेषां विश्वजितामविशेषाद् य एव प्रकृतौ विश्वजितो धर्म्मः, स एव चास्य चोदकेन भविष्यति। तस्मात् सर्वस्वं देयमिति॥१४॥ सि०

**द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥**

द्वादशशतं वा देयमिति । प्रकृतिवत् कर्त्तव्यम् । ज्योतिष्टोमश्च प्रकृति । तत्र धर्मा विहिता., न विश्वजिति कृत्स्ना प्रतीयन्ते । तस्माद् द्वादशशतमत्र देयमिति ॥ १५ ॥ पूर्व० ॥

अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैवं भवितुमर्हति । कुत । नैव यतो विश्वजितो गुणो द्वादशशतम् । नामधेयेन हि अत्र धर्म्मग्रहणम् । तस्माद् विश्वजितो भविष्यति, न ज्योतिष्टोमादिति ॥ १६ ॥

लिङ्गदर्शनाच्च ॥ १७ ॥

लिङ्गं खल्वपि दर्शयति । किं लिङ्गं भवतीति । एवमाह । हीयते वा एष पशुभिर्यो विश्वजिति सर्वं न ददातीति नियतं सर्वस्वदानं दर्शयत्यहर्गणे ॥ १७ ॥ ॥ युक्तिः ॥ अहगर्णस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥

विश्वजिति सर्वस्वं ददातीति । तत्रैषोऽर्थः सांशयिकः । किं यस्य द्वादशशतम् अधिकम्, ऊनं वा विद्यते तस्यापि विश्वजिता अधिकारः ? उत यस्य सकलमधिकं वा तस्यैवेति । किं प्राप्तम् । विकारः सन्नुभयतोऽविशेषात् । न विशेष कश्चिदाश्रीयते । यस्य द्वादशशतमधिकम्, ऊनं वाऽस्तीति । तस्मात् सर्वस्य विश्वजिता अधिकार इति ॥ १८ ॥ पूर्व० ॥

अधिकं वा प्रतिप्रसवात् ॥ १९ ॥

न चैतदस्ति, सर्वस्य विश्वजिता अधिकार इति । कस्य तर्हि । यस्य द्वादशशतमस्ति, अधिकं वेति । कुतः । प्रतिप्रसवात् । प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्योच्यते । द्वादशशतं विधाय आह, एतावता वा व ऋत्विज आनेया अपि वा सर्वस्वेनेति । यद्येतावता नेच्छेयु', सर्वस्वेनाप्यानमयितव्या इति । तद्यदि द्वादशेन शतेन नेच्छन्ति नेच्छान्तितरां ततो न्यूनेन । तस्माद् द्वादशशतं ज्योतिष्टोमे । यद्वा सर्वस्वम् । तदिहोभयमपि प्राप्तम् । तत्रैकः पक्षो नियम्यते, सर्वस्वं देयामिति । स एप न विधि । प्राप्तत्वात् । अनियतप्राप्तस्तु नियम्यते। स चेन्नियम्यते, यादृशस्तत्र, तादृश एवेह । तत्र च द्वादशशतमाधिकं वा सर्वस्वम् । इहापि तद्वदेव । तस्मान्न न्यूनधनस्य अधिकार

इति ॥ १९ ॥ सि० ॥

## अनुग्रहाच्च पादवत् ॥ २० ॥

चशब्देन अन्वाचयः । इतश्च अधिकं सर्वस्वम् । अधिके हि दीयमाने तदन्तर्गतत्वाद् द्वादशशतमपि दत्तं भवति । पादवत् । यथा, कार्षापणे दीयमाने पादोऽपि दत्तो भवति । एवमिहापीति ॥ ॥ २० ॥ युक्तिः ॥ विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराऽधिकरणम् ॥ ९ ॥

## अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेध-स्तच्छ्रुतित्वात्॥२१॥

आधाने श्रूयते— एका देया, षड् देया, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयम्, अपरिमितं देयमिति । तत्र सन्देहः। किं यत् परिमितमेका देयेत्येवमादि, तन्न दातव्यमिति प्रतिषेधो विधीयते ? उत अपरिमितं नाम किञ्चित् तस्य दानं विधीयते इति । किं प्राप्तम् । अपरिमिते श्रूयमाणे ब्रूमः । शिष्टस्यैकादेः सङ्ख्येयस्य या सङ्ख्या, सा प्रतिषिध्यते । कुतः । तच्छ्रुतित्वात् परिमितशब्दश्रवणाद् गणितमवगम्यते । तच्चैकादिकम् । तस्य नशब्देन प्रतिषेधः क्रियते । तत्र श्रुतोऽर्थः कृतो भवति । इतरथा अपरिमितशब्दे प्रसिद्धिस्त्यज्येत । लक्षणया बहुत्वमस्यार्थः कल्प्येत । तस्मात् परिमितस्य प्रतिषेध इति ॥ २१ ॥ पूर्व० ॥

## कल्पान्तरं वा तुल्यवत् प्रसङ्ख्यानात् ॥ २२ ॥

कल्पान्तरं वा स्यात् । अपरो दानकल्पो विधीयते । यथा एका देयेति दानविधिकल्प । एवम् एषोऽपि दानविधिकल्प एव स्यात् । तेन हि पूर्वेण, तुल्यमेव इदं प्रसङ्ख्यायते । का अस्य पूर्वेण तुल्यता । प्रतिज्ञातस्यार्थस्यावगमिका श्रुतिरस्तीति । पूर्वत्र हि देयशब्दश्रुत्या दानं विधीयते इति । इहापि देयशब्दश्रुतिः । सा श्रूयमाणा शक्नोति दानं विधातुम् । प्रतिषेधे हि विधीयमाने वाक्यस्य व्यापारः । तच्च दुर्बलं श्रुतिं प्रति । तस्मात् कल्पान्तरम् । यच्चापरिमितशब्दे प्रसिद्धिर्बाध्यते इति, समुदायप्रसिद्धिरवयवप्रसिद्धेर्बाधिकैव समधिगता ॥ ननु नात्र प्रसिद्धिः । लक्षणेयम् । यद् बहु, तद् न शक्यं परिमातुम् । तस्मादपरिमितत्वेन लक्ष्यते बहुत्वमिति । तच्च नानेकस्मिन्नशक्य-

परिमाणे सति बहुषु रूढः । अपरिमितमस्य धनम् । बहु इति गम्यते । यथा, कुशल, प्रवीण इति बहुषु कुशानां लातुर्गुणेषु सत्सु निपुणतायामेव कुशलशब्दो रोहाद्रूढ़िशब्द एव भवति । बहुषु च वीणावादस्य गुणेषु सत्सु निपुण एव प्रवीणशब्दो वर्त्तमानो रूढ इत्युच्यते । तस्मात् सत्यपि लक्षणात्वे श्रुतिसामर्थ्याद् रोहति शब्दः। तस्मात् समुदायप्रसिद्ध्या अपरिमितशब्देऽवयवप्रसिद्धिर्बाध्यते । अश्वकर्णशब्दवत् । अतः कल्पान्तरमिति ॥ २२ ॥ सिद्धान्त ॥ आधानेऽपरिमितं देयमित्यनेन सङ्ख्यान्तरविधानाधिकरणम् ॥ १० ॥

## अनियमोऽविशेषात् ॥ २३ ॥

अपरिमिते कल्पान्तरमिति समधिगतम् । अथेदानीं सन्दिह्यते । किं सहस्रादूनमपरिमितम्, उत सहस्रादधिकमिति । किं तावत् प्राप्तम् । अनियमोऽविशेषात् । न कश्चिदिह बहुत्वे विशेषमाश्रीयते, सहस्रादूनमधिकं वेति । अनाश्रीयमाणे यथा कृतं तथा साधु । तस्मादनियम ॥ २३ ॥ पूर्व० ॥

## अधिकं वा स्याद् बह्वर्थत्वादितरेषां सन्निधानात् ॥२४॥

वा इति पक्षव्यावृत्तिः । नैतदस्ति । अधिकम् ऊनं वा सहस्रादिति । किं तर्हि । अधिकमेवेति । कुत । बह्वर्थत्वादपरिमितशब्दस्य । बहुषु हीनशब्दमुपचरन्तीत्येतदुक्तम् । बहुत्वं चाऽऽपेक्षिकं, किञ्चिदपेक्ष्य ततोऽधिकं बहु इत्युच्यते । असत्यामपेक्षायामपरिपूर्णमेतत् ।यथा पुत्र इति किञ्चिदपेक्ष्य भवति, नान्यथा । तत्र प्रकृतं सन्निहितं चापेक्ष्य निर्णय. । सहस्रं च सन्निहितम् । तस्मात् ततोऽधिकमपरिमितमिति ॥ २४ ॥

## अर्थवादश्च तद्वत् ॥ २५ ॥

कथमेवम् । तत्रोत्कृष्टं वै अपरिमितमिति तदूनतां सहस्रस्य दर्शयति ॥ २५ ॥ युक्तिः ॥ अपरिमितशब्देन सहस्राऽधिकस्य ग्रहणाऽधिकरणम् ॥ ११ ॥

## परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्त्तनम् ॥ २६ ॥

इह परकृतयः पुराकल्पाश्चोदाहरणम् । यथा, इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत न वा एतेषां हविर्गृह्णन्तीति । पुराकल्पः,

उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तान् ह असुरा रक्षांसि निर्जघ्नुरित्येवमादयः । तेषु सन्देहः । किमेते मनुष्यधर्मा विधयः, उत तद्गोत्राणाम् । अथ वा अर्थवादा इति । किं तावत् प्राप्तम् । मनुष्यधर्मा विधय इति । कुतः । अर्थाय प्रयोजनाय अनुकीर्त्तनमेतद् भवति । कर्तृमनुष्यसम्बन्धकीर्त्तनेन क्रिया प्रशस्ता भवति । प्रशस्तं च प्रतिपाद्यम् । स एष विधिरेव, अनेन प्रकारेण । अतः परैरपि मनुष्यैः कर्त्तव्य इति गम्यते ॥ २६ ॥

## तद्युक्ते च प्रतिषेधात् ॥ २७ ॥

एवञ्जातीयकस्य विधेः प्रतिषेधो भवति । तदु तथा न कुर्य्यादिति । प्रसक्तस्य च प्रतिषेधो न्याय्यः । तस्मादपि विधय इति ॥ २७ ॥

## निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् ॥ २८ ॥

मनुष्यधर्मोऽयं विधिरेवञ्जातीयक इति गृह्यते । तत्र तु विशिष्टगोत्राणां निर्देशात् तेषामेव धर्म्म इति गम्यते । स्तुत्या हि अयं कर्त्तव्य इति ज्ञायते । स च विशिष्टगोत्राणां श्रूयते । तस्मात् तद्गोत्राणामेव कर्त्तव्यः । पञ्चावत्तवत् । यथा, पञ्चावत्तं जमदग्नीनामिति तद्गोत्राणामेव भवति, एवमिहाऽपीति ॥ २८ ॥

## विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥

तुशब्दादेषोऽपि पक्षो व्यावर्त्तते । विधौ एतेषामुपदेश स्यात् । विधौ वेदेन स्तुतिनिर्देशः कृत । न विध्याश्रये पुरुषे । पुरुषग्रहणं विधिप्रशंसार्थम् । विधिरिति क्रियामाह । एतस्या क्रियाया भावो यस्मादनेन पुरुषेण क्रियते तस्मात् साधुरिति । न त्वत्र पुरुष क्रियासम्बन्धेन निर्दिश्यते, किन्तु स्तोतव्यत्वेन । कुत एतत् । स्तुतिपदस्यान्यस्याभावात् । अपि च क्रियानिर्देशे श्रुत्या विधानम् । क्रियापुरुषसम्बन्धनिर्देशे वाक्येन । अतश्च दुर्बलम् । तस्मात् पुरुषमात्रस्य विधानं प्राप्नोति, न तद्गोत्राणामिति ॥ २९ ॥ पूर्व० ॥

## अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥ ३० ॥

एषोऽपि पक्षो वाशब्दाद् विनिवृत्तः । नायं तद्गोत्राणां विधिः, न मनुष्यमात्रस्य वा विधिः, विधिरेव वेति । अयमर्थवादस्तु । कुत ।

विधिशेषत्वात् । अन्यं त्वत्र विधिमामनन्ति । परकृत्युदाहरणे तावत्, तस्मादारण्यमेवाश्रीयादिति । पुराकल्पोदाहरणे, गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्निति । न च द्वयोर्विध्योरेकवाक्यभावोऽस्ति । विधिना हि सम्बद्ध्यमानयोः परकृतिपुराकल्पवचनयोरन्या वचनव्यक्तिः । अन्या तु स्तुत्यर्थप्रवृत्तयो । न चोभयं यौगपद्येन सम्भवति । तस्मादर्थवाद इति ॥ ३० ॥ सिद्धान्तः ॥ इति ह स्मेत्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम् ॥ १२ ॥

**सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु ॥ ३१ ॥**

अस्ति सहस्रसंवत्सरं, पञ्चपञ्चाशतस्त्रिवृत. संवत्सराः, पञ्चपञ्चाशत. पञ्चदशा, पञ्चपञ्चाशतः सप्तदशा., पञ्चपञ्चाशत एकविंशा विश्वसृजामयनं सहस्रसंवत्सरमिति । तत्र सन्देह । किं ये सहस्राऽऽयुषस्तेषामनेन अधिकार', उत मनुष्याणामिति । यद्यपि मनुष्याणां तद्यपि बहवो विकल्पाः वक्ष्यमाणा', अथवा दिवसेषु संवत्सरशब्दः? इति । किं प्राप्तम् । सहस्रायुषां भवितुमर्हति । कुत । असम्भवान्मनुष्येषु । न मनुष्याणामेतावदायुर्विद्यते । गन्धर्वादयस्त्वेतावदायुष इति भवति स्मृति । उपचारोऽन्यार्थदर्शनं च । प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान, स तपोऽतप्यत, सहस्रसंवत्सरान् पाप्मानं विजिहासन्निति । विस्पष्टं चेदं सहस्रसंवत्सरम् । तस्मान्न मनुष्याणामिति ॥ ३१ ॥

**अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥ ३२ ॥**

अपि वेति पक्षव्यावृत्ति । न गन्धर्वादीनाम् । मनुष्याणामेव अधिकार इति । कुत । तदधिकारात् । मनुष्याधिकारं शास्त्रं समधिगतमिति । ते हि शक्नुवन्ति कार्त्स्न्येन यथोदितं विधिमुपसंहर्तुमिति । आह । ननु नैतावदायुषो मनुष्याः । उच्यते । रसायनैरायुर्दीर्घं प्राप्स्यन्तीति ॥ ३२ ॥ पूर्व० ॥

**नासामर्थ्यात् ॥ ३३ ॥**

न रसायनानामेतत् सामर्थ्यं दृष्टं, येन सहस्रसंवत्सरं जीवेयु । एतानि हि अग्नेर्वर्द्धकानि, वलीपलितस्य नाशकानि स्वरवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातॄणि दृश्यन्ते । ननु स्वरवर्णप्रसादादिदर्शनादेव ज्योग्जीवनमप्यनुमास्यते । नेति ब्रूमः । शतायुर्वै

पुरुष इत्यनुवादः । स एवं ज्योग्जीवे न अवकल्पते । अत्रोच्यते । शतान्यायुरस्येति विग्रहीष्याम. । नैवं सङ्ख्याशब्दानां समास इष्यते । न च गमकानि भवन्ति । द्विवचनबहुवचनान्तानामसमास इति चाभियुक्तवचनात् ॥ ३३ ॥

सम्बन्धादर्शनात् ॥ ३४ ॥

न हि एतावदायुषा रसायनानां सम्बन्धो दृष्टपूर्वः । न च सम्बन्धादर्शनेऽनुमानमस्ति । ननु सामान्यतो दृष्टं भविष्यति । दृश्यन्ते तावद् अल्पस्य स्थिरभावस्य कारकाणि । एवमभ्यस्यमानानि वीर्यवत्तमानि स्थिरशरीरतामुत्पादयिष्यन्ति । शतायु पुरुष इति सत्यपि वचने, अधिकं जीवनं दृश्यते एवेति । अत्रोच्यते । न अयमेकान्तः । कदाचिद् याश्च यावन्तीश्च शरीरस्थिरतामुत्पादयेयु', न प्रागप्यदृष्टकालाम् । यथा प्रक्रामन्तोऽभ्यासात् प्रक्रमाणां वृद्धेर्याश्च यावन्तीश्च मात्रां प्राप्नुवन्ति, न त्वभ्यस्यन्त पुरुषायुषेणापि योजनमात्रं प्रक्रमेयुः । एवमिहापि सम्बन्धाभावात् सहस्रायुष्ट्वं प्राप्नुयुर्न वेति सन्दिग्धम् । सन्दिग्धं चेत्, सामान्यतो दृष्टं न प्रमाणम् । न चादृष्टोऽर्थ प्रमाणमन्तरेण, शक्योऽभ्युपगन्तुम् । तस्मादसंशयं, नैतावदायुष सन्तीति पुरुषवचनेनोक्तम् । कथं तर्हि ? इति ॥ ३४ ॥

पूर्वपक्षनिरासः ॥

स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकास्मिन्नसम्भवात् ॥ ३५ ॥

स मनुष्याधिकारपक्षे कुलकल्पो भविष्यतीत्येवं कार्ष्णाजिनिराचार्यो मन्यते स्म । कुत. । एकस्मिन्नसम्भवात् । पुरुषाणामिदमनुशासनम् । न चैतदेक शक्नोति पारयितुम् । यथा शक्यते, तथा पारयितव्यमिति गम्यमाने, बहवः शक्नुवन्त. प्रवर्त्तेरन् । अन्येऽपि तत्कुलीना अन्येनारब्धं समापयेयुरिति ॥ ३५ ॥ पूर्व० ॥

अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥ ३६ ॥

शास्त्रफलं हि प्रयोक्तरि समधिगतम् । यश्च कार्त्स्न्येन विधिमुपसंहर्त्तुं समर्थः स एव अधिक्रियते इति । तस्मान्न कुलकल्पोऽवकल्पते । कथं तर्हि । सम्प्रदायमात्रेण धर्म्म इत्यध्यवसीयते । एवं श्रूयते । स्वाध्यायोऽध्येतव्य इति । एवं तर्हि एतदध्यवसेयम् । वचन-

प्रामाण्यादेतत् कर्म्म कुर्वताम् आयुर्वर्द्धते इति । तच्च न । प्रमाणाभावात् । न हि एतस्मिन् अर्थे वाक्यमन्यद्वा प्रमाणमस्ति । नन्वर्थापत्तिः, अन्यथा आनर्थक्यं भविष्यतीति । उच्यते । न आनर्थक्यम् । अध्ययनादेव हि अदृष्टं भविष्यति । तथा हि सामान्येन अदृष्टं कल्पयितुं लघीयो, न तु कर्म्मणा आयुर्वर्द्धते इति विशेषाद्दृष्टकल्पना । अथ वा आनर्थक्यमेव अभ्युपगम्येत, न अयुक्ति फलं कल्प्यम् । अथोच्येत— अर्द्धतृतीयानि दीक्षिष्यन्ते, चतुर्भिर्वर्षैः समाप्स्यन्ते इति । एवमपि नियतपरिमाणं हीयते, चतुर्विंशतिपरमाः सप्तदशावरा सत्रमासीरन्निति । वचनस्य तु आनर्थक्यपरिहाराय परिमाणं हापयिष्यते इति चेत् । तदयुक्तम् । अध्ययनात् फलमस्ति । तस्मान्नैषा कल्पनेति ॥ ३६ ॥ पूर्वपक्षनिरासः ॥

कथं तर्हि ? । एवम्—

## विप्रतिषेधात्तु गुणान्यतरः स्यादिति लावुकायनः ॥ ३७ ॥

अन्यतरोऽत्र गौणः शब्दः स्यात् । यदि वा असंवत्सरे संवत्सरशब्दः । यदि वा पञ्चपञ्चाशत-इति शब्दो गौण इति । कुत एतत् । विप्रतिषेधात् । विप्रतिषेधो हि भवति, उभयस्मिन् विहिते । कथम् । वाक्यं हि भिद्येत । यदि पञ्चपञ्चाशतस्त्रिवृत, न संवत्सराः । अथ संवत्सरास्त्रिवृतः, न पञ्चपञ्चाशतः । तस्माद् विरोधादन्यतरद् वचनं गौणमिति लावुकायन आचार्य्यो मन्यते स्म । आचार्य्यग्रहणं पूजार्थं, नात्मनः प्रतिषेधार्थम् ॥ ३७ ॥

## संवत्सरो विचालित्वात् ॥ ३८ ॥

एतदुक्तम्, अन्यतरद् गौणमिति । तदवधारयितव्यम् । तदुच्यते, संवत्सरवचनं गौणम् इति । कुतः ? । विचालित्वात् । विचाली हि संवत्सरशब्दः सावनोऽपि गणितदिवसकः, शीतोष्णवर्षालक्षणोऽपि, चान्द्रमसोऽपि । स एवंलक्षणकोऽनुवादः शक्यते कल्पयितुम् । पञ्चपञ्चाशत इत्ययन्तु व्यक्तपरिमाणस्यार्थस्य वाचकः, एकेनाऽप्यूने न भवति ॥ ३८ ॥ सिद्धान्ते उपक्रमः ॥

## सा प्रकृतिः स्यादधिकारात् ॥ ३९ ॥

गवामयने मासाः प्रकृताः, मासेषु च संवत्सरशब्द उक्तः । यो वै मासः संवत्सर इति । तस्मात् पञ्चपञ्चाशतो मासा इति । ननु

एतस्मिन् पक्षे सहस्रसंवत्सरशब्दो न अवकल्पते। उच्यते। नामधेय-मेतत् सहस्रसंवत्सरशब्द इति, न गुणविधिः। नामधेयं च न विधीयते। अविधीयमानश्च येन केनचिद् अवकल्प्यते ॥

नैषोऽपि पक्षो युज्यते। अत्रापि हि स एव दोषः। न तावज्जीवनमस्ति, यावतैतद् अवकल्प्येत, दाराग्निकालसोमपूर्वत्वापेक्षयेति। तेनैतास्मिंश्च क्रियमाणेऽपरिसमाप्त एवायु पर्य्युपयुक्तं स्यात्। तथाच अध्ययनादेव अदृष्टं कल्प्येत। एवं तर्हि, द्वादशाहः प्रकृतिरिति पञ्चपञ्चाशतो द्वादशाहा भविष्यन्ति इति। तथाच दृश्यते, द्वादश वै रात्रयः संवत्सरस्य प्रतिमा इति। तत्र स दोषो न भविष्यति। नैवम्। तत्र संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात्। अपि च, पञ्चपञ्चाशतस्त्रिवृत इत्युक्तम्। त्रिवृच्छन्दश्च द्वादशाहे दिवसे दृष्टः, न द्वादशरात्रे। तस्माद् नैवम् ॥ ३९ ॥ पूर्व० ॥

## अहानि वाभिसङ्ख्यत्वात् ॥ ४० ॥

वाशब्दः पक्षं व्यावर्त्तयति। न चैतदस्ति। पञ्चपञ्चाशतो द्वादशरात्रा इति। अहान्येव त्रिवृच्छन्देनाख्यायन्ते। तस्मादहःसु संवत्सरशब्द इति। अथवा, वाशब्दः पक्षान्तरं व्यावर्त्तयति। न पञ्चपञ्चाशतो मासाः, किन्तर्हि दिवसा। द्वादशाहे त्रिवृद् अहः प्रकृतम्। तत्र संवत्सरशब्दो दृश्यते। आदित्यो वा सर्व ऋतवः, स यदैवोदेत्यथ वसन्तो, यदा सङ्गवोऽथ ग्रीष्मो, यदा मध्यन्दिनोऽथ वर्षा, यदाऽपराह्णोऽथ शरत्, यदाऽस्तमेत्ययं हेमन्तशिशिरौ इति सर्वान् ऋतून् अहनि सम्पादयति। सर्वे च ऋतवः संवत्सरः। तस्माद् अहः संवत्सरशब्देनोच्यते। अपिच पञ्चपञ्चाशास्त्रिवृत इति त्रिवृतां पञ्चपञ्चाशत्त्वम्। न च द्वादशरात्रस्त्रिवृत्। एकं हि द्वादशाहे त्रिवृद् अहः। न तत्र त्रिवृत्सङ्ख्याया द्वादशरात्रेण मुख्यया वृत्त्या सामानाधिकरण्यम्। त्रिवृदहःसम्बन्धलक्षणया स्याद् अभिसङ्ख्यं त्रिवृदहः। तेन श्रुत्यैव सामानाधिकरण्यम्। श्रुतिश्च लक्षणाया ज्यायसी। तस्मात् पञ्चपञ्चाशदहानि संवत्सरः स्यादिति ॥ ४० ॥ सिद्धान्तः ॥ सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताऽधिकरणम् ॥ १३ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्य अध्यायस्य सप्तमः पादः संपूर्णः ॥ ६ ॥ ७ ॥

अथ षष्ठे अध्याये अष्टम पादः ॥ ६ ॥ ८ ॥

**इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥**

इह चतुर्होतृष्वाम्नायते, प्रजाकामं चतुर्होत्रा याजयेच्चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत पूर्वेण ग्रहेणार्द्धं जुहुयात्, तदुत्तरेणार्द्धम् इति । तत्र संदेहः । किं पवमानेष्टिसंस्कृतेषु अग्निषु एवमादयः, उत असंस्कृतेष्वपि ? । तथा पक्षान्तराश्रयणमपि वक्ष्यमाणं विचारयिष्यते । किं तावत् प्राप्तम् ? संस्कृतेषु अग्निषु एवञ्जातीयकोऽक्रतुशेषोऽपि होम स्यात् । यद्यप्यपूर्वा दर्विहोमा न कुतश्चिद्धर्मान् आकाङ्क्षन्ति, तथाप्याहवनीयादयो होमादीन् आकाङ्क्षन्ति, यदाहवनीये जुहोति, तेन सोऽस्याभीष्ट प्रीतो भवति इत्येवमादिभिः श्रुतिभिः । एवमिष्टिपूर्वत्वात् सर्वहोमानां, संस्कृताग्निवृत्तित्वम् एवञ्जातीयकानाम् इति ॥ १ ॥ पूर्व० ॥

**इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥२॥**

तुशब्दात् पक्षो विपरिवर्त्तते । चतुर्होतृहोमा असंस्कृतेषु अग्निषु भवेयु । तथा हि दर्शयति । एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतार इति । अनाहिताग्नेरिष्टयो न विद्यन्ते । ये त्वेते चतुर्होतारस्तस्यैषैव इष्टिरिति । अनाहिताग्नेरेवञ्जातीयकान् दर्शयति । तस्माद् असंस्कृतेषु भवेयुः ॥ २ ॥ उत्तरम् ॥

ननु लिङ्गमसाधकं, प्राप्तिर्वक्तव्येति । तदुच्यते—

**उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥**

एवं तर्हि, अक्रतुशेषाणां विधिरेषा भविष्यति । एषा अनाहिताऽग्नेः क्रिया इति । एवमर्थवद्वचनं भविष्यति । वादमात्रमनर्थकं भवति । अस्य चास्ति विधिसामर्थ्यम् । तस्माद् विधिरसंस्कृतेष्विति ॥ ॥ ३ ॥ युक्ति० ॥

**स सर्वेषामविशेषात् ॥ ४ ॥**

आह । एतद् गृह्यते विधिरिति । यत्तु, अक्रतुशेषाणामिति । तन्न । सर्वेषां क्रतुशेषाणामक्रतुशेषाणां च चतुर्होतृहोमानाम् । कुतः । अविशेषात् । न क्रतुशेषाणामेवायं धर्म उच्यते । न अक्रतुशेषाणामिति । तस्मात् सर्वेषाम् ॥ ४ ॥ पूर्व० ॥

**अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥५॥**

अपि वेति पक्षव्यावृत्तिः । अक्रतुशेषाणामेवायं धर्मो, न क्रतुशेषाणाम् । कुतः । अनाहिताग्नेः क्रत्वभावात् । न हि अनाहिताग्नेः क्रतवः सन्ति । न च क्रत्वङ्गं केवलं प्रयुज्यमानं कस्मैचित् प्रयोजनाय स्यात् । न च अस्य अन्यत् फलं प्रकल्प्येत । प्रमाणाभावात् । वचनस्य हि अन्यदपि प्रयोजनमस्ति । न च, अनेन वचनेन शक्यतेऽनाहिताग्नेः क्रतु कल्पयितुम् । तस्माद् अक्रतुशेषाणाम् अयं धर्म इति ॥ ५ ॥ सि० ॥

**जपो वानग्निसंयोगात् ॥ ६ ॥**

वाशब्दात् पक्षो विपरिवर्त्तते । न असंस्कृतेषु अग्निषु एवञ्जातीयका होमाः स्युः । कुतः ? । आधानस्य सर्वशेषत्वात् । ननु वचनमिदम्, एषा अनाहिताग्नेरिष्टिरिति । न इति ब्रूमः । जपार्थवाद एष भविष्यति । ये जपरूपास्तेषाम् अर्थवादो न सर्वेषां चतुर्होतॄणाम् । एवं यदाहवनीये जुहोति इत्येवमादीनां वचनानाम् अर्थवत्ता भविष्यति ॥ ६ ॥ आ० ॥

**इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥**

यदुक्तम् एषा वा अनाहिताग्नेः क्रिया इष्टितुल्या इति जपानाम् एष वाद इति । तन्न । नैषा वचनव्यक्तिः । यैषा अनाहिताग्ने क्रिया, सा इष्टितुल्या इति । किङ्कारणम् ? । सादृश्यमात्रानुवादोऽनर्थकः स्यात् । इतरस्मिन् पक्षे विधिरर्थवान् । येयम् इष्टिः, एषा अनाहिताग्नेरिति, तदिष्टिसंस्तवाद्धोमानामेव वाद । कथम् ? । इष्टिर्यागः, स एवासेचनाधिको होम । यदुक्तं, सर्वहोमार्थ आहवनीय इति । तन्न चतुर्होतॄनेवाधिकृत्य उच्यते, किन्त्वविशेषेण होमान् । स चतुर्होतृष्वसम्भवादन्येषु भविष्यति । चतुर्होतृषु चानाहिताग्नेरुच्यमानेष्वाहवनीयो नाङ्गमिति ॥ ७ ॥ उत्तरम् ॥

**उभयोः पितृयज्ञवत् ॥ ८ ॥**

नैतदस्ति, अनाहिताग्नेरेव चतुर्होतार इति । उभयो स्युः । पितृयज्ञवत् । यथा पितृयज्ञ आहिताग्नेरनाहिताग्नेश्च । एवं चतुर्होतारोऽपि । कथमवगम्यते । वर्णितमेतत् । यदा अनुवादपक्षस्तदा आहि-

ताग्नेः । यदा विधिपक्षः, तदा अनाहिताग्नेः । उभयथा वचनव्यक्तिः प्रतीयते । न च प्रतीयमानोऽर्थ शक्यतेऽपह्नोतुम् । तस्मादुभयोश्चतुर्होतार इति ॥ ८ ॥ आ० ॥

## निर्देशो वानाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥

न चैतदस्ति, उभयोश्चतुर्होतारो भवेयुरिति । कथम् । एष ह्यनाहिताग्निनिर्देश । एषा वा इष्टिरनाहिताग्नेरिति वचनेन अधिकृतः, न आहिताग्निः । निर्देशसामर्थ्यात् । अर्थवादे चोपक्षीणं तत्रैव न विरुद्ध्यते इति । यदाहवनीये जुहोतीति वचनं न चतुर्होतॄनेव अधिकृत्य उच्यते इत्युक्तम् । तस्मादनाहिताग्नेरेवञ्जातीयका होमाः ॥ ॥ ९ ॥ उत्तरम् ॥

## पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

अथ यदुक्तं, पितृयज्ञवदिति । युक्तं पितृयज्ञे । तत्र आहिताग्निसंयुक्तस्य पुनरेतद्वचनं भवति । अप्यनाहिताग्निना कार्य्य इति । एतद्वचनमनाहिताग्नेरपीति । अनाहिताग्नौ अन्वाहार्य्यकं करोति । इह तथा नास्ति वचनम् । नियोगत एको निर्देश । एषा वा अनाहिताग्नेरिति । नात्र अपिशब्दोऽस्ति । तस्मात् पितृयज्ञेन अतुल्यमेतत् ॥ १० ॥ आ० नि० ॥ अनाहिताग्नेरेव चतुर्होतृहोमाधिकाराधिकरणम् ॥ १ ॥

## उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥

इदमामनन्ति, उपनयँस्तिसृभिर्जुहुयादिति । तत्र सन्देहः । किमयं होम आधानसंस्कृतेष्वग्निषु, उतासंस्कृतेषु ? । इति । किं प्राप्तम् । उपनयन्नादधीतेति । कुतः । होमसंयोगाद् आहवनीयस्य । यदाहवनीये जुहोति, तेन सोऽस्याभीष्ट प्रीतो भवतीति । तस्माद् आधानोत्तरकाला एते होमा इति स्थिति. ॥ १ ॥ पूर्व० ॥

## स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥

न चैतदस्ति, आधायैवञ्जातीयकं होतव्यमिति । किं तर्हि । लौकिके एव प्रवर्त्तेतेति । कुतः । विद्याकर्मानुपूर्वत्वात् । विद्याग्रहणार्था इमे होमाः । विद्यावतश्च आधानेन अधिकार. । सामर्थ्यात् । अत आधानोत्तरकालता नैषामवकल्पते । यथा स्थपतीष्टयाम् ॥ १२ ॥ सि० ॥

## आधानञ्च भार्य्यासंयुक्तम् ॥ १३ ॥

आधानं च भार्य्यासंयुक्तं श्रूयते । विद्याग्रहणोत्तरकालश्च दार-

संग्रह । तस्मादपि नावकल्पते पूर्वकालता आधानस्य ॥१३॥ युक्ति. ॥

## अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः॥१४॥

अत्राह । या पूर्वमाधानाद् दारक्रिया. सा कर्मार्था भविष्यति । वचनाच्चोर्ध्वमाधानादपत्यार्था । द्वयोरपि कालयो', पिण्डपितृयज्ञव-न्नैष दोषो भविष्यतीति । अत्रोच्यते । अकर्म्म च दारक्रिया, या आधानोत्तरकाले। कुत ।आहवनीयादिसमवायो हि कर्म्मभिर्भवति । स्वार्थं चाग्नय आधातव्या इति नियमः । तस्मादुभयस्मिन्नपि काले दारसंग्रह इत्येतन्नास्ति ॥ १४ ॥ आ० नि० ॥

## श्राद्धवदितिचेत् ॥ १५ ॥

अत्राह । यथा पिण्डपितृयज्ञ आहिताग्नेरनाहिताग्नेश्च भवति, एवं दारसंग्रहोऽपीति यदुक्तं, तत् परिहर्त्तव्यम् ॥ १५ ॥ आ० ॥

## न श्रुतिविप्रतिषेधात् ॥ १६ ॥

नैवम् । श्रुतिविप्रतिषेधो हि भवति । एवं क्रियमाणे दारकर्मणि विद्याग्रहणोत्तरकालं श्रूयमाणं पूर्वं क्रियत इति विप्रतिषिद्धम् । अर्था-दन्यदेवेदमितिचेत् । न अर्थप्राप्तस्यैव कालनियम एव । उपनयनं च कर्मार्थम् । तद् द्वितीयस्यां विप्रतिषिद्ध्येत ॥ १६ ॥ आ० नि० ॥

## सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥

अथोच्येत, प्रागाधानाच्च कर्मार्था एव, ऊर्ध्वं च अपत्यार्था एवा-स्य भविष्यति । तेनैवं सति अस्य न किञ्चिद् विरोत्स्यते इति । उ-च्यते । नैतदेवम् । सर्वार्था हि सा न केवलमपत्यार्थतामेष्यति । तदुक्तम् । फलोत्साहाविशेषादिति । तस्मादपि न द्विर्दारसंग्रह । अपि चैवं स्मर्य्यते । धर्मे चार्थे च कामे च नातिचरितव्येति । एवं सति अतिचरिता स्यात् । अतो न द्विर्दारसंग्रह' । एकैव भार्य्या कर्मार्था अपत्यार्था च । तस्याश्च विद्याग्रहणोत्तरकालता । अतो न आधानसंस्कृतेष्वेते होमा इति ॥ १७ ॥ आ० नि० ॥ तथा, पूर्व० ॥

## सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥१८॥

गृह्यते एतत् । प्रागुपनयनाद् नास्ति पत्नीति । यदुक्तम्- एकैव पत्नीति । तन्न मृष्यते । यथैव स्मृतिः, धर्मे च अर्थे च कामे च ना-तिचरितव्येति । कर्म्मप्रजासम्पन्ने दारे नान्यां कुर्वीतेति च । एव-

मिदमपि स्मर्य्यते एव । अन्यतरापाये अन्यां कुर्वीतेति । तस्माद् यस्य न धर्मसम्पन्ना, न प्रजासम्पन्ना वा पत्नी, सोऽन्यां कुर्वीतेति । सोमपानादिति चार्थवादं व्यपदिशति स्म। सोमपो न द्वितीयां जायामभ्यसूयते इति द्वितीयामपि जायां दर्शयति ॥१८॥ पूर्वपक्षनिरासः ॥

**पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत ॥ १९ ॥**

अथ कथं पितृयज्ञस्य द्वौ कालौ ? इति । उच्यते । वचनं हि तत्र दृश्यते । अप्यनाहिताग्निना कार्य्य इति । तस्मात् प्रागाधानात् पितृयज्ञ इति ॥१९॥ आ० नि० ॥अनाहिताग्निषूपनयनहोमाधिकरणम्॥२॥

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्ज्येत ॥ २० ॥**

अस्ति स्थपतीष्टिः । एतया निषादस्थपतिं याजयेदिति । तत्र सन्देहः । किमाधानसंस्कृतेष्वग्निषु स्याद्, उत लौकिकेष्विति । किं प्राप्तम् । संस्कृतेष्विति । कथम् । यदाहवनीये जुहोतीत्येवमादिवचनात् । ननु शूद्रस्य आहवनीयाभावान्नास्ति तस्य श्रुतिरिति । उच्यते । सा हि आहवनीयं प्रयोजयेत् । यथा प्रयाजान् अश्रुतान् प्रयोजयति । एवं चोदकसामर्थ्यादिति । तादर्थ्याच्चापवृज्ज्येत । स्थपतीष्ट्यर्थं च आहिता अग्नयः । तस्यामपवृक्तायामपवृज्ज्येरन् । धारणं हि तेषां दृष्टकार्य्यमाम्नातम् । अतिक्रान्ते कार्य्ये न स्यादिति ॥ २० ॥ पूर्व०

**अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥**

अपि वेति पक्षव्यावृत्तिः । लौकिकेष्वग्निषु स्याद्, न संस्कृतेषु । कुतः । आधानस्यासर्वशेषत्वात् । सर्वकर्मशेषभूता अग्नयः । तदङ्गमाधानं, न कर्माङ्गम् । श्रुत्यादीनामभावान्न कर्मप्रयुक्तता आधानस्य वाक्यसामर्थ्याच्च अग्निप्रयुक्तत्वम् । यच्च दर्शपूर्णमासप्रयुक्तं, तच्चोदकेन प्राप्यते, न द्रव्यप्रयुक्तम् । तस्माल्लौकिकेष्वग्निषु स्थपतीष्टिरिति ॥ २१ ॥ सिद्धान्तः ॥ अनाहितेऽग्नौ स्थपतीष्ट्यधिकरणम् ॥ ३ ॥

**अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥२२॥**

अस्त्यवकीर्णिपशुः । ब्रह्मचार्य्यवकीर्णी नैर्ऋतं गर्दभमालभेत-

ति । तत्र सन्देहः । किं तदर्थमाधानं कर्त्तव्यम्, उत लौकिकेष्वग्निषु तद्वर्त्तेतेति । अवकीर्णि-पशुश्च तद्वदित्यधिकरणातिदेशः । पूर्वस्य अधिकरणस्य यः पूर्वः पक्षः, सोऽत्र पूर्वः पक्षः । यः सिद्धान्त, स सिद्धान्तः । सर्वार्थम् आधानम् । तस्माद् आहिताग्निष्विति पूर्वः पक्षः । आधानस्याप्राप्तकालत्वादिति सिद्धान्तः । अप्राप्तोऽयम् आधानस्य काल इत्येतदुक्तम् । तस्मादिदमपि कर्मलौकिकेष्विति ॥२२॥ अनाहितेऽग्नाववकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

## उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥

दैवानि कर्माणि उदाहरणमुपनयनप्रभृतीनि । तत्र सन्देह । किमनियते काले दैवानि कर्त्तव्यानि, उत उदगयन-पूर्वपक्षाहः-पुण्याहेष्विति । अनियते इति प्राप्ते उदगयनादिष्वित्युच्यते । कुत. । एवं स्मरन्ति, तेषु कालेषु दैवानीति । रूपार्थवादश्च । एतद्वै देवानां रूपं, यदुदगयनं, पूर्वपक्षोऽहरिति । न च वयं देवादीनां रूपं विद्मः । अथ त्वेषु कालेषु दैवानि क्रियन्ते, तत एतेन सम्बन्धेन रूपवचनमवकल्पते । अन्यार्थं च वाक्यमेतद् दर्शयति । पूर्वाह्णो वै देवानां, मध्यन्दिनो मनुष्याणाम्, अपराह्ण. पितॄणामिति । तस्माद् एतेषु कालेषु दैवानि स्युरिति ॥ २३ ॥ सि० ॥

## अहनि च कर्म्मसाकल्यम् ॥ २४ ॥

अहनि च विशेषः । सकलं कर्म अहन्येव शक्यते कर्त्तुमिति, न रात्रौ करिष्यति ॥ २४ ॥ युक्ति· ॥ दैवकर्मणामुदगयनादिकालताऽधिकरणम् ॥ ५ ॥

## इतरेषु तु पित्र्याणि ॥ २५ ॥

श्राद्धादीनि अपरपक्षे अपराह्णे च । स्मृतिरूपान्यार्थदर्शनात् ॥ ॥ २५ ॥ पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ॥ ६ ॥

## याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥

इदं समाम्नायते ज्योतिष्टोमे, द्वादश रात्रीर्दीक्षितो भृतिं वन्वीतेति । तथा, सोमं क्रीणातीति । तत्र सन्देह. । किं यस्य न विद्यते भृति·, तेन वनितव्या ? यस्य च न विद्यते सोमः, तेन क्रेतव्य. ?

उत उभयथापि सति चासति च। किं प्राप्तम्। याच्ञाक्रयणमविद्यमाने भृतिधने सोमे च स्यात्। कस्मात्। द्रव्यसद्भावार्थं याच्ञाक्रयणम्। तद् विद्यमानेऽनर्थकम्। अनर्थकं चोक्तमपि न कर्त्तव्यम्। तस्माद्-ऽविद्यमाने भवेत्। लोकवत्। यथा यस्य लोके नास्ति द्रव्यं, स याचते क्रीणाति च। एवमिहापि द्रष्टव्यम् ॥ २६ ॥ पूर्व० ॥

## नियतं वार्थवत्त्वात् स्यात् ॥ २७ ॥

नियतं वा याच्ञाक्रयणं, तद्विद्यमाने अविद्यमाने च द्रव्ये स्यात्। एवं याच्ञाक्रयणमर्थवद् भवति। ज्योतिष्टोमप्रयुक्तं हि तच्छ्रूयते। न द्रव्यप्रयुक्तम्। तच्च नित्यं ज्योतिष्टोमस्य। नैवं वचनं भवति, यदा द्रव्यं नास्ति तदा कर्त्तव्यमिति। ज्योतिष्टोमस्य च नित्यमङ्गमुक्तं, द्रव्याभावो निमित्तमुक्तमिति परिकल्प्येत। कल्पनायां शब्दो बाध्येत। अतो याच्ञाक्रयणसंस्कृतं द्रव्यमिहोपयोक्तव्यम्। अन्यथा वैगुण्यं भवति। तस्मात् सति चासति च द्रव्ये याच्ञाक्रयणमनुष्ठातव्यमिति। अथ यदुक्तं, लोकवदिति। लोके कर्म्म अर्थलक्षणं भवति, न शब्दलक्षणम्। यथा अर्थस्तथा क्रियते, न यथा शब्दः। वेदे तु शब्देनैव अर्थोऽवगम्यते, तथैव अनुष्ठेयमिति। तस्माद् विद्यमाने-ऽपि कर्त्तव्यम् ॥ २७ ॥ सिद्धान्तः ॥ ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणम् ॥ ७ ॥

## तथा भक्तप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥

ज्योतिष्टोमे श्रूयते, पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य आमिक्षा वैश्यस्येति। तथा दर्शपूर्णमासयोः प्रैष प्रोक्षणीरासादय इध्मं बर्हिरुपसादय स्रुच संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि इति। तथा वाजपेये श्रूयते। दर्भमयं वासो भवतीति। पशौ संज्ञप्त-होमः। यत् पशुर्मायुमकृतोरो वा पद्भिराहत अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति। तथा, योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति वचनम्। एतानि उदाहरणवचनानि ॥ तेषु सन्देह। किं यस्यापरं भोजनं न विद्यते, स पयो व्रतयेत्, यवागूमामिक्षां वा उत विद्यमानेऽपीति। तथा यो प्रेषित प्रैषार्थं न प्रतिपद्यते, स प्रेषितव्यः? उत प्रतिपद्यमानोऽपीति। तथा, यस्य सूत्रमयं वासो नास्ति, स दर्भमयं परिदधीत, उत विद्यमानेऽपीति। तथा यस्य पशुर्मायुं

कुर्य्यात्, उरो वा पादौ वा हन्यात्, स एतेन मन्त्रेण जुहुयात् ? उताऽन्योऽपीति । तथा, यो द्वेष्टि कश्चिद् अन्येन च द्विष्यते स एव मन्त्रं ब्रूयात्, योऽस्मान् द्वेष्टीति? उत अद्विषन् अद्विष्यमाणश्चापीति॥

तत्र अधिकरणातिदेशोऽयम् । तत्र यः पूर्वस्मिन्नधिकरणे पूर्वः पक्ष., स इह पूर्वः पक्ष. । यस्तत्र सिद्धान्तः स इह सिद्धान्त. । अविद्यमाने कुर्य्यादिति पूर्व. पक्षः । नियतं वार्थवत्त्वादित्युत्तर. । स एवात्र न्यायो, यः पूर्वत्र ॥ २८ ॥ ॥ ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ॥ ८ ॥

## अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

ज्योतिष्टोमे श्रूयते, मध्यन्दिनेऽपररात्रे वा व्रतं व्रतयतीति । तत्र संदेह. । किं नियतमपररात्रे व्रतम्, उतानियतमिति । किं प्राप्तम् । नियतं चार्थवत्त्वात् स्यादिति । तत्रैवं प्राप्ते ब्रूमः । अनर्थकं त्वनित्यं स्यात् । यदैवं मन्येत, अस्मिन् काले व्रतं मे जरिष्यतीति, तदा व्रतयेत् । यदा तु खलु मन्येत, न सम्यग् जरिष्यतीति, तदा तद् व्रतं क्रियमाणमनर्थकं स्यात् । यदि ह्यजीर्णेन यजमानो म्रियेत, तदा तन्त्रलोपः । तन्त्रलोपे च सर्वलोपः । तस्मादनियतं तस्मिन् काले व्रतं व्रतयितव्यमिति ॥ २९ ॥ अपररात्रे व्रतस्यानियमाधिकरणम् ॥ ९ ॥

## पशुचोदनायामनियमोऽविशेषात् ॥ ३०

ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र सन्देह. । किं यः कश्चित् पशुरालम्भनीय, उत छाग इति । वक्ष्यमाणेन अभिप्रायेण भवति संशयः । नन्वेकेषामाम्नायते, अजोऽग्नीषोमीय इति । सर्वशाखाप्रत्ययं चैकं कर्मेति । अत्रोच्यते । प्रतिशाखं भिन्नानि कर्माणीति कृत्वा चिन्ता । किं तावत् प्राप्तम् । पशुचोदनायामनियमः । उत्सर्गे कर्त्तव्ये द्रव्यं शक्यते उत्स्रष्टुं, न पशुत्वम् । द्रव्यं हि साधकम् । अतोऽत्र द्रव्यमन्तरेण, उत्सर्गो न सम्भवतीति द्रव्यमुपादीयते । तस्मिन्नुपादीयमाने अनियमः । यत्किञ्चिदुत्स्रष्टव्यमिति । कुत एतत् । अविशेषात् । न हि पशुत्वसम्बद्धेषु कश्चिद्विशेष उपलभ्यते । तस्माद् यः कश्चित् पशुरिति ॥ ३० ॥ पूर्व० ॥

## छागो वा मन्त्रवर्णात् ॥ ३१ ॥

वाशब्द पक्षं व्यावर्त्तयति । नैतदस्ति । यत्र कचन द्रव्ये पशुत्वमुपादेयमिति । अस्ति उत्सृष्टव्यस्य नियमकारणं मन्त्रवर्णः । अग्नये छागस्य वपाया मेदसोऽनुब्रूहीति । छागप्रकाशनसमर्थो मन्त्रवर्णः समाम्नायते । यदि छागो नोपादेयस्ततस्तत्प्रकाशनसमर्थस्योपादानमनर्थवत् । तेनावगम्यते, छागमधिकृत्य उत्सर्गं विदधातीति । मान्त्रवर्णिको द्रव्यनियमविधिरिति ॥ ३१ ॥ सि० ॥

## न चोदनाविरोधात् ॥ ३२ ॥

नैतदेवम् । न शक्नोति मन्त्रवर्णश्चोदनायां प्रत्यर्थिन्यां द्रव्यं नियन्तुम् । यत्र हि द्रव्यस्य प्रकाशकं न श्रूयते, तत्राप्रकाशितमेव तत् कर्त्तव्यमिति । तस्मान्न मन्त्रवर्णात् प्रकाश्यनियमविधिः कल्प्यते । एवमत्र प्रकाश्यं प्रकाशयितव्यमिति । अत्र पुनः शब्देन अवगम्यते, पशुत्वेन प्रकाशयितव्यमिति । तस्मान्न मन्त्रवर्णस्तत्सद्भावे समर्थः । मन्त्रवर्णाद्धि कल्प्या प्रयोगवचनश्रुतिः । इह क्लृप्ता प्रयोगवचनेन उपसंहर्त्तव्या । अन्य एव पशुशब्दस्यार्थः पशुत्वम् । अन्यो मन्त्रवर्णेन नियम्यते छाग । तस्मान्न मन्त्रवर्णश्चोदनाविरोधेन नियन्तुमर्हतीति ॥ ३२ ॥ आ० ॥

## आर्षेयवदिति चेत् ॥ ३३ ॥

इति चेत् पश्यसि, न पशुत्वमन्येभ्यः पशुभ्य आच्छेतव्यमिति । यथा, आर्षेयं वृणीते, त्रीन् वृणीते इति । सामान्यश्रुतिस्त्रिष्वेवावतिष्ठते इति, त्रित्वं विशेषो विवक्षितो, नान्ये विवक्षिता इति । एवमिहापि पशुत्वं छागं प्रकल्पयितुं विवक्षितं, नाऽन्यान् विशेषानिति ॥ ३३ ॥ आ० नि० ॥

## न तत्र ह्यचोदितत्वात् ॥ ३४ ॥

नैतदेवम् । तत्र हि अचोदितं द्रव्यमुत्स्रष्टव्यं मन्त्रवर्णे । वरणे पुनश्चोदितम् । तत्र त्रित्वसङ्ख्यासम्बन्धस्य वरणे चोदितत्वान्नान्या सङ्ख्या क्रियते । आर्षेयशब्दादपि नाऽनार्षेयम् । त्रिशब्दस्य हि तत् सामर्थ्यं, येन आर्षेयशब्दो विशिष्टसङ्ख्याविषयो नियम्यते । इह न मन्त्रस्य सामर्थ्यम् । तस्मादनियम इति ॥ ३४ ॥ आ० ॥

## नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाऽभिधानात् ॥ ३५ ॥

नियमो वा। ऐकार्थ्यं हि पशुच्छागशब्दयोः सामान्यं पशुरिति। छागादयो विशेषा उच्यन्ते। कथम्। तैः सामानाधिकरण्यात्। पशुश्छागः, पशुरुष्ट्रः, पशुर्मेष, पशुरुस्र इति। एवं सति न मन्त्रवर्ण पशुशब्देन विरुध्यते। तेन छागोऽप्यालब्धव्यश्चोदितः। मन्त्रवर्णे उपादीयमाने इदमवगम्यते। छागं विवक्षित्वाऽयं पशुशब्द उच्चरित इति,नान्यान् विशेषानिति। छागोपकरणमस्योपदंशितम्। यदुपदंशने पशुशब्दश्छागाभिप्राय इति गम्यते। यथा युगवरत्रे उपदंशिते, ईषाचक्रादिसन्निधानेचेद् अक्षमानयत्युच्यते, तदा यानाऽक्षमधिकृत्य ब्रूते इति गम्यते, न तु विदेवनाक्षमिति। यदि हि अर्थभेदो भवेत् पशुच्छागशब्दयोः पृथक्त्वेनाभिधानं, ततो भेद. स्याद्, न छाग एव नियम्येत। अविहितश्छागार्थ इत्यश्वोपादानम्। अपि च, छागपक्षे तं मन्त्रवर्णः प्रकाशयेत्। छागार्थाऽभिधाने पुन. पशुशब्दस्य,छागप्राप्तावन्येषामप्राप्तिरित्यन्यस्मिन् प्राप्ते लिङ्गेन नियमः क्रियते इति ॥ ३५ ॥ आ० नि० ॥

## अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३६ ॥

अनियमो वा। यः कश्चित् पशुरुपादेयः। अर्थान्तरत्वात्। अर्थान्तरं पशुत्वम्। अर्थान्तरं छागत्वम्। अर्थयोरत्र सामानाधिकरण्यं, न शब्दयो.। कथं पुनरर्थान्तरं गम्यते। व्यतिरेकाच्छब्दभेदाच्च। व्यतिरेको हि भवति। कश्चित् पशुर्न छागः। तथा, छागः पशुरिति शब्दभेद। शब्दभेदादेवार्थभेदो न्याय्यः। एकस्मिन् वाक्ये समवायात्, पशुं छागमानयेति। इतरथा, अन्यतरेण कृतार्थत्वादन्यतरो वाक्ये न समवेयात्। समवैति च। तस्मादन्यत् पशुत्वम्, अन्यच्छागत्वम्। तस्मादनियम। य. कश्चित् पशुरुपादेय इति ॥

तत्रोत्सूत्रिका पक्षव्यावृत्ति। अन्यत्वेऽपि सति नियम एव। कुत.। मन्त्रस्य प्रयोगवचनेन गृहीतत्वात्। मन्त्रसाधनं हि कर्म्म इति गम्यते। यदि छागमुपादास्यामहे, सगुणं कर्म शक्ष्याम कर्त्तुं मन्त्रमुपाददानाः। मन्त्रस्य अपाक्षिकत्वात्। अथान्यम् उपादास्यामहे।

मन्त्रस्य विषयाभावान्मन्त्रमपजहतो न सगुणं कर्म निर्वर्त्तयेम । अतो न च श्रुतिं बाधामहे । अन्यस्मिन् पशुशब्दो वर्त्तते इति । न चान्यमुपादास्यामहे वैगुण्याद्बिभ्यतः । तस्माच्छाग एवोपादातव्य इति ॥ अनु अश्वमुपाददाना नैव मन्त्रवर्णमपहास्यामः । स एवाश्वश्छागो भविष्यति । यश्छिन्नगमनोऽश्वः स छागः । छिदेर्गमेश्च छागशब्दः प्रसिद्धः ॥ ३६ ॥

**रूपाल्लिङ्गाच्च ॥ ३७ ॥**

क्वचिन्मुष्करा भविष्यन्तीति श्रूयते । यद्यन्तरेण वचनममुष्करास्तदेदमुपपद्यते । तस्माच्छिन्नगमनोऽश्वोऽपि छाग इति कर्माख्या भविष्यति ॥ ३७ ॥ आ० ॥

अत्रोच्यते—

**छागे न कर्म्माख्या रूपलिङ्गाभ्याम् ॥ ३८ ॥**

छागे कर्माख्या रूपलिङ्गाभ्यां नावकल्पते । न हि छागशब्दश्छिन्नगमनवचनः । समुदायो हि असौ पृथगर्थान्तरे प्रसिद्धो, नाऽसौ अवयवप्रसिद्ध्या बाधितव्यः । तस्मान्नाश्वश्छागः ॥ ३८ ॥

**रूपान्यत्वान्न जातिशब्दः स्यात् ॥ ३९ ॥**

इदमन्यपदोत्तरं सूत्रम् । अथ कस्मान्न वयोवचनो भवति । वयोवचना ह्येते शब्दाः– छागश्छागलो बस्त इति । तेनाश्वोऽपि वयोवचनो भविष्यतीति । उच्यते । नैतदेवम् । सत्यं वयोवचन । अजापतिगतं तु वयो वदितुं शक्नोति । यथा, शोण इति वर्णवचनोऽश्वजातिगतं वर्णं वदति, न अन्यम् । तस्माद् रूपान्यत्वान्नवयोमात्रवचन , किन्तु जातिशब्दः स्यात् । जात्याश्रयं वयो वदेत् । अतश्छाग एव नियम्यते ॥ ३९ ॥

**विकारो नौत्पत्तिकत्वात् ॥ ४० ॥**

इदमपि पदोत्तरम् । इह अश्वादीनां विकारश्छागशब्द । किञ्चिदन्नाश्वादीनामुच्चार्य्यते, न किञ्चिद् अन्यदेव । तस्माद् अश्वोऽपि छाग इति । न औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः सम्बन्ध इत्युक्तम् । न आख्याविकारः सम्भवतीति । तस्मान्नाश्वश्छागः । अतश्छाग एवोपादातव्य इति ॥ ४० ॥

**स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४१ ॥**

पदोत्तरमेवेदं सूत्रम् । अथ कस्मान्न छिद्रनिमित्तश्छागशब्दो भवति । एवं श्रूयते । शुषिरो वा एतर्हि पशुः । यर्हि वपामुत्खिदन्तीति । नेत्युच्यते । छिद्रत्वस्य गुणस्य पशोरचोदितत्वात् । अव्यङ्गं पशुमालभेतेति हि चोद्यते । तस्मादच्छिद्रः पशुः । न च अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्बाध्यत इत्युक्तमेव । तस्माच्छाग एवोपादेयो नाश्वादय इति ॥ ४१ ॥ ॥ आ० नि० ॥

## जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४२ ॥

वाशब्दः अवधारणायाम् । यस्माद् अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्न बाध्यते । तस्माज्जातेरेव छागशब्दो वाचकः । एवं समुदायस्यार्थवत्ता अनुगृहीता भविष्यतीति तत्प्रायवचनमुपपद्यते । विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहीति जातिप्राये वचनमुपपद्यते । प्रायेणापि हि नियमः क्रियते । यथा अन्यप्राये लिखितं दृष्ट्वा अन्योऽयमिति बुद्धिर्भवति । तस्माच्छाग एवोपादातव्य इति । कृत्वा चिन्तायां प्रयोजनं न वक्तव्यम् ॥ ४२ ॥ सिद्धान्त ॥ छागस्यैवाग्नीषोमीयपशुताधिकरणम् ॥ १० ॥ कृत्वाचिन्तारूपमिदम् ॥

इति श्रीशबरस्वामिन कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य
अष्टमः पादः ॥ ६ ॥ ८ ॥ अध्यायश्च समाप्तः ॥ ६ ॥
संपूर्णोऽयं पूर्वः षट्कः ॥

श्रीहरिः ।

# मीमांसादर्शनम् ।

श्रीशबरस्वामिविरचितभाष्यसहितम् ।

सप्तमप्रभृति–नवमाध्यायपर्यन्तम् । ७–९ ।

पं० रत्नगोपालभट्टेन संशोधितम् ।

चौखम्भासंस्कृतपुस्तकालयाऽध्यक्ष-
हरिदासात्मजहरिकृष्णदासगुप्तेन
स्वकीये विद्याविलास यन्त्रे
संमुद्रितम् ।

—:o:—

# MÎMÂNSÂDARŜANA,

With the commentary of Sabara swami,

SEVEN TO NINE CHAPTERS.

Edited by

Paṇḍita Ratna Gopâla Bhaṭṭa.

PRINTED AT THE VIDYÂ VILÂSA PRÉSS,

BY HARIKRISHNA DÂSA GUPTA.

BENARES CITY.

1910.

श्रीहरिः ।

# मीमांसादर्शनाधिकरणसूची ॥ अ० ७ । ८ । ९ ॥

अधिकरणसंख्या । पृष्ठसंख्या ।

अ० ७ । पा० ४ ॥



अ० ८ पा० १ ॥

## अथोत्तरषट्के मीमांसादर्शने शाबरभाष्ये

### सप्तमस्य अध्यायस्य प्रथम पाद ॥ ७ ॥ १ ॥

---

### श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥

पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्म्माणां कर्म्मणां दर्शपूर्णमासादीनाम् इतिकर्त्तव्यता चिन्तिता। उत्तरेणेदानीम् अविहितेतिकर्त्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यते। तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्म्मास्ते सर्वकर्म्मसु विहिता भवन्ति। ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्म्मवन्त उक्तास्तथा कर्त्तव्याश्चेति, न अर्थ उत्तरेण षट्केन। अथ ये यस्य प्रकरणे उच्यन्ते, ते तत्रैव उक्ता भवन्ति। ततोऽधर्म्मकाणि ऐन्द्राग्नादीनि। तेषु चिन्ता भवति। किमेषां धर्मा सन्ति, उत नेति। यदा च सन्ति, तदा, के? कियन्तो वा? कथ चानुष्ठातव्या? इति। तदर्थमुत्तर षट्क. प्रवर्त्तनीय॥

तत्र सप्तमेन तावत् सन्ति धर्म्मा इत्युच्यते। अष्टमेन च इमे अस्येति। इत्थ प्रयोक्तव्या इति नवमेन। दशमैकादशद्वादशैरेतावन्त प्रयोक्तव्या, न अतोऽधिका इति॥

तत्रेदं विचार्य्यते, किं यजिप्रयुक्ता एते धर्म्मा। कथं यजिर्गुणवान् स्यादित्येवमर्थमाम्नायन्ते? आहोस्विद् अपूर्वप्रयुक्ता। कथमपूर्वं स्यादिति। यदि यजिप्रयुक्तास्तत सर्वार्था। अथ अपूर्वप्रयुक्तास्ततो यथाप्रकरणं व्यवतिष्ठन्ते। किं पुनरत्र युक्तम्। अपूर्वप्रयुक्ता इति। अपूर्वं हि फलवत्। अफलो यजि। फलवति च प्रयासा विधीयमानोऽर्थवान् भवति। तस्मादपूर्वप्रयुक्ता धर्म्मा। अत परमाचार्य्यस्य सूत्रोपन्यास॥ श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकार भाव. स्यादिति। मुख्यानि अपूर्वाणि। तानि हि फलवत्त्वात् प्रधानानि। प्रधाने च मुख्यशब्द। तेषां भेद उक्त शब्दान्तरादिभिर्हेतुभि। तस्मिन् मुख्यभेदे सति यथाधिकार भाव स्याच्छेषाणाम्। ये यस्य अपूर्वस्य अधिकारे प्रकरणे शिष्यन्ते, ते तस्यैव

भवेयुः । श्रुतिप्रमाणत्वात् । अयमस्यापूर्वस्य शेषः । अयमस्येत्यत्र श्रुतिरेव प्रमाणं क्रमते । न प्रत्यक्षादीनामन्यतमत् । श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते, ते तस्यैव भवितुमर्हन्ति । न चान्यस्योक्तोऽर्थोऽन्यस्य भवति । न हि यद्देवदत्तस्य ग्रामाच्छादनादिकं, तद्यज्ञदत्तस्य भवति । तस्माद् यथाप्रकरणं व्यवस्था धर्माणाम् ॥ १ ॥ सिद्धान्तः ॥

## उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥

अथ वा, नैतदेवं, यथाप्रकरणं धर्माणां व्यवस्था इति । कथं तर्हि । ऐकधर्म्यं स्यादिति । समानधर्मता । सर्वे धर्माः सर्वार्थाः । कुतः । उत्पत्त्यर्थाविभागात् । उत्पत्तिरिति यजिं ब्रूमः । अपूर्वस्योत्पादनात् । अर्थ इति अपूर्वं ब्रूम । यजिप्रयोजनत्वात् । तयोरविभागः । सर्वाण्यपूर्वाणि यजिमन्ति । यजिसंयोगेन धर्माः शिष्यन्ते । यजेतेत्युक्ता उक्ताः । ते यजौ न सम्भवन्ति । तस्य अफलत्वात् । तत्र असम्भवन्तस्तत्सम्बद्धेषु अपूर्वेषु विज्ञायन्ते । स च यजिसम्बन्धः सर्वेषामपूर्वाणां तुल्यः । तस्मात् सर्वार्था भवन्ति । सत्त्वधर्मवत् । यथा सत्त्वधर्माः, गौर्न पदा स्प्रष्टव्य इति गोत्वसम्बन्धेन श्रूयमाणास्तत्रासम्भवन्तस्तत्सम्बद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसम्बन्धस्याविशेषात् सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । एवमिहापि ॥

उच्यते । विषम उपन्यासः । तत्र गोसामान्यसम्बन्धेन धर्मा विधीयन्ते । गौर्न पदा स्प्रष्टव्य इति । इह पुनर्यजिविशेषसम्बन्धेन धर्मा विधीयन्ते । दर्शपूर्णमासाभ्यां यजेतेति, ज्योतिष्टोमेन यजेतेति । विशिष्टयजिसम्बद्धे एव अपूर्वे भवितुमर्हन्ति, न सर्वत्रेति । तत्र ब्रूमः दर्शपूर्णमासाभ्यां यजेतेत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम् । किं कारणम् । यदा यजौ धर्मा विधीयन्ते, तदा यजिरनूद्यते । यजेतेत्थमिति । यदि यजिर्विधीयेत, न धर्मैः सम्बद्ध्येत । न हि द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवति । अनुवादश्च सन् अविशेषात् सर्वयागानुवादः । तस्मात् सर्वार्था धर्मा ॥ ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति । न दर्शपूर्णमासशब्दः शक्नोति यागं विशेष्टुम् । अयं हि विधिर्वा स्याद्, अनुवादो वा । यदानुवादस्तदा धर्मसम्बन्धार्थः । स च धर्मसम्बन्धो यागानुवादेनैव तयोः सिद्धः ॥

ननु निवृत्तिकरो भविष्यति । दर्शपूर्णमासौ एवेत्थं कुर्याद्, नान्यान् इति । नैवं शक्यम् । यत् कारणं, न तस्यान्यनिवृत्तिरर्थः । ननु परिसङ्ख्यया करिष्यति । नात्र परिसङ्ख्या युज्यते । यदि अन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्, तत एतत् पुनर्वचनं परिसङ्ख्यां कुर्यात् । अथ पुनरसति प्रसङ्गे अनेनैव प्रसङ्गोऽनेनैव निवृत्तिरित्यतिभार एकस्यैव वाक्यस्य भवति ॥

एवं तर्हि, न अत्र यजेतेति शब्दो धर्मविधिभिः सम्बद्ध्यते, यजेत इत्थमिति । केन तर्हि ? दर्शपूर्णमासशब्देन । प्रत्यक्षो हि तेनास्य संयोग । दर्शपूर्णमासाभ्यां यजेतेति । परोक्षो धर्मविधिभिः । कस्तदा वाक्यार्थ. । दर्शपूर्णमासौ कुर्यादिति । नैवं शक्यम् । एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति । कथं कृत्वा । येयमाख्यातिकी विभक्ति – यजेतेति । सा दर्शपूर्णमासयोः कर्त्तव्यतां विदधाति । तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्ध. स्यात् । विधायिका विभक्तिर्नास्तीत्यसम्बद्धा धर्मा भवन्ति ॥ नैष दोष. । न वयं वाक्येन धर्माणां सम्बन्धं करिष्याम' । केन तर्हि । प्रकरणेन । कथम् । कर्त्तव्यतायां चोदितायामितिकर्त्तव्यताकाङ्क्षा भवति । कथं कुर्यादिति । प्रकरणेन धर्मा. सम्बद्ध्यन्ते, इत्थं कुर्यादिति नैवं शक्यम् । यदा हि दर्शपूर्णमासौ कर्त्तव्यतया चोद्येते, तदा इतिकर्त्तव्यताकाङ्क्षा एव नास्ति । प्रज्ञातेतिकर्त्तव्यतात्वात्तयो. । असत्याञ्चेतिकर्त्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति । एवं हि उक्तम् । असंयुक्तं प्रकरणादितिकर्त्तव्यतार्थित्वादिति ॥ एवं तर्हि, नैवात्र यागे धर्मा विधीयन्ते । नापि दर्शपूर्णमासयोः कर्त्तव्यतोच्यते । किन्तर्हि ? दर्शपूर्णमासाभ्यां यजेतेति पदद्वयेन विशिष्टं यागमनूद्यात्र धर्मा विधीयन्ते । दर्शपूर्णमासाभ्यां यजेतेत्थमिति । एवमपि दर्शपूर्णमासाभ्यामित्यनुवादो न युज्यते । तृतीयार्थस्यासिद्धत्वात् । पूर्ववान् अनुवादो भवति । अपूर्वश्च तृतीयार्थः । सोऽवश्यं विधातव्य. । तस्मिंश्च विधीयमानेऽन्यदेवासम्बद्धमापद्यते । दर्शपूर्णमासौ यजे' करणमिति । तस्मात् स एव प्रथमः पक्षोऽस्तु । यागानुवादेन धर्माणां विधिरिति ॥

ननु तत्रापि दर्शपूर्णमासाभ्यामित्येतन्न सम्बद्ध्यते । ननु सम्भन्त्स्यते । कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति । प्रायेण यागानां दर्शपूर्णमासकालत्वात् । तृतीया च कालस्य अर्थकृतं गुण-

भावमालोच्योपपद्यते । तथा चेत् सर्वे धर्माः सर्वार्था भवन्ति ॥ २ ॥ पूर्वपक्षः ॥

## चोदनाशेषभावाद्वा तद्भेदाद् व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥

कर्मचोदनायाः शेषभूतो धर्मसमाम्नाय, एकदेशभूत इत्यर्थः। दर्शपूर्णमासाभ्यां यजेत, अनया अग्न्यन्वाधानादिकया इतिकर्त्तव्यतयेति । तस्यां चोदनायां यजेर्गुणभावः श्रूयते । दर्शपूर्णमासशब्दो यजिवचनः । करणभावोऽत्र यजे श्रूयते । दर्शपूर्णमासाख्येन यागसमुदायेनान्यत् कुर्य्यादिति । यत् ततोऽन्यत् तत् कर्त्तव्यतया चोद्यते, न यजि । अपूर्वं च तत् । ननु फलमत्र वाक्ये श्रूयते । स्वर्गकामो यजेतेति । तत् कर्त्तव्यं स्यात् । सत्यं श्रूयते, न तु तद् यजिना क्रियते । विनष्टे यजौ तद्भवति । अपूर्वं तु तेन क्रियते । तस्मात् तस्य कर्त्तव्यतोच्यते । यस्य कर्त्तव्यता तद् इतिकर्त्तव्यतया सम्बद्ध्यते । तस्मादपूर्वार्था धर्माः । तेषां चापूर्वाणां भेदः । अतस्तद्भेदाद् यथाप्रकरणं व्यवतिष्ठन्ते धर्मा इति ॥

अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते ?। उच्यते। नैवात्र यागो विशेष्यते। किं तर्हि। अपूर्वभावनैव उभयपदविशिष्टोच्यते । यथा अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणातीति । विषम उपन्यासः । तत्र ह्यन्यद् द्रव्यम्, अन्यो गुणः । तेन तत्रोभयविशेषणत्वं युज्यते । इह पुनर्याग एव तौ दर्शपूर्णमासौ । तेनेहोभयविशेषणत्वं न युज्यते । उच्यते । इहापि यजेतेति सामान्यं, दर्शपूर्णमासौ इति विशेष । अन्यच्च सामान्यमन्यो विशेषः ॥ एवमपि श्रुत्या सामान्येन भावना, वाक्याद् विशेषेण । न चैतद् युगपद्भवतीति । एवं तर्हि, नैवात्र श्रुत्यर्थः परिगृह्यते । किन्तर्हि ? वाक्यार्थः । किङ्कारणम् । श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति । यजातिश्चानुवादः । यजत्यात्मकत्वाद्दर्शपूर्णमासयोः । यजातिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य ॥ ३ ॥ उत्तरम् ॥

## सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥ ४ ॥

यत्तु सत्त्ववदिति । अत्र गवाकृतौ धर्म्मः श्रूयते । आकृतेः पदार्थत्वात् । न च तत्र सम्भवति । अतोऽसौ आकृतिः सहचारि-

पिण्डलक्षणार्था विज्ञायते। यथा गङ्गायां गाव इति । तच्च साहचर्य्यं सर्वपिण्डानामविशिष्टमिति, सर्वपिण्डेषु विहितं भवति। तस्मात् तत् सार्वत्रिकं प्रतीयेत । इह तु यजेर्गुणभावेन श्रवणाद् नैव यजौ धर्म्माः श्रूयन्ते । किं तर्हि ? अपूर्व इत्येवमपदिष्टो हेतु । तस्मादनुपन्यासः सत्त्ववदिति ॥ ४ ॥ आशङ्कानिरास ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

अथ तु-शब्दः पक्षव्यावृत्तौ। नैतदेवम्— अपूर्वप्रयुक्ता धर्म्मा इति। यजिप्रयुक्ता एव । कुतः । अविभागात् । यजिना अविभागो धर्माणाम्। प्रत्यक्षं केचिद् द्रव्ये श्रूयन्ते, केचिद् देवतायां, केचिन्मन्त्रेषु। एष च यजिः । यद् द्रव्यं देवतामुद्दिश्य मन्त्रेण त्यज्यते, स एष प्रत्यक्षो यजिना सम्बन्धो धर्माणाम् । अपूर्वेण त्वानुमानिकः। फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः स्वर्गकामो यजेतेति । आनुमानिकोऽपूर्वेण। अनुमानाच्च प्रत्यक्षं बलीयः। तस्माद् यज्यर्था धर्माः। ननु यजिर्भङ्गित्वात् कालान्तरे फलं दातुमसमर्थः । तत्र कृता धर्मा असमर्था एव भवन्तीत्युक्तम्। अत्र स्थितस्य न्यायस्य आक्षेपेण प्रत्यवस्थानं क्रियते। तैलपानवदेतद्भविष्यति। यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति । एवं याजिरपि करिष्यति, किं नोऽदृष्टाश्रुतेनापूर्वेण कल्पितेनेति ॥ ५ ॥ आ० ॥

## द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥

एवञ्च सति सर्वे धर्माः सर्वार्था भवन्ति । तथाचैन्द्राग्नादिषु प्रयाजादय सन्ति । तत्र सौर्य्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते। प्रयाजे कृष्णलं जुहोतीति। इतरथा प्रयाजाश्च विधातव्याः। प्रयाजेषु च कृष्णलहोमः । तथा च द्व्यर्थे तत् स्यात् । द्व्यर्थत्वं च विप्रतिषिद्धम्। तस्माद् याजिप्रयुक्ता धर्मा इति ॥ ६ ॥ युक्ति ॥

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्म्मभेदः स्यात् ॥ ७ ॥

नैतदेवं, यजिप्रयुक्ता धर्मा इति । चोदनायां प्रवृत्तिः स्यात् । चोदनेत्यपूर्वं ब्रूमः। चोदनार्थत्वाद् अपूर्वार्थत्वात् अपूर्वप्रयुक्ता धर्माः फलवत्त्वादित्युक्तो हेतुः। यत्तु, प्रत्यक्षो यजिसम्बन्धो धर्माणामिति।

अत्र ब्रूम । उत्पत्तौ विध्यभावात् । उत्पत्तिरिति यजिं ब्रूमः । उत्पत्तौ यजौ नास्ति विधिः । यज्यर्था धर्मा इति । केवलं यजौ श्रूयन्ते, क्रियन्ते च । नैतावता तदर्था भवन्ति । यथा, वाससि रागः श्रूयते । वासो रञ्जयतीति, वाससि च क्रियते । न चाऽसौ तदर्थ । स्त्र्यर्थः पुरुषार्थो वा भवति । एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्च अपूर्वार्था भवेयुरर्थवत्त्वाय । ततश्च कर्मभेदः स्यात् । यतोऽपूर्वाऽर्था इति । यत्तु, यजे प्रत्यक्षं, फले गुणभाव इति । न कृत्वा अपूर्वं भवतीति, प्राणालिको विज्ञायते । प्रणाड्यापि च येन क्रियते तत् कारणं भवति । यथा, गोमयैः पचति, तुषपक्वा भवन्तीति । यत्तु तैलपानवद् यजित. फलं भवतीति । अत्र ब्रूम । तैलपानस्यापि न कालान्तरे फलं भवति । धातुसाम्यं तस्य फलम् । तच्च तत्कालमेव । यच्च फलं बलपुष्ट्यादि, तत् सम्यगाहारपरिणामाद्भवति । तस्माद्विषम उपन्यास. ॥ ७ ॥ आ० नि० ॥

**यदि वाऽप्यभिधानवत् सामान्यात् सर्वधर्मः स्यात्॥८॥**

यद्यप्यपूर्वं प्रयोजकं धर्माणां, तथापि सर्वधर्म. स्यात् स स पदार्थः । अभिधानवत् सामान्यात् । अभिधानं तावदेतेषां समानम्। अपूर्वमित्यभिधानवद् धर्मेणापि अस्य समानेन भवितव्यम्। वाहीकवत् । यथा, वाहीकोऽतिथिरागतः, यवान्नमस्मै प्रक्रियतामित्युक्ते, यो यो वाहीकस्तस्य तस्य यवान्नं क्रियते । यथा वा, अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यमिति । सर्वत्र च हि अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पय. पीयते । एवमिहापि एकस्य अपूर्वस्य ये धर्मा श्रुतास्ते सर्वापूर्वाणां भवितुमर्हन्ति । अपि च, अरुणपराशरा नाम शाखिनः । तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति । ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य च इत्यारभ्य, यावत्सर्वा प्रकृतिविकृतयोऽनुक्रान्ता इति । तच्चानुक्रमणमेतमेव न्यायं सूचयति । तस्मादपूर्वप्रयुक्तत्वेऽपि सर्वे धर्माः सर्वार्था इति ॥ ८ ॥ आ० ॥

**अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात् प्रयोगस्य कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥**

उपवर्णनापरिहारस्तावदुच्यते । यदुक्तं, वाहीकवदिति । अत्र ब्रूमः । अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु । अर्थो वाहीकत्वम् । तद्देशसम्बन्धः, सोऽविभक्तः । सर्ववाहीकेष्वनुगत इत्यर्थः । तन्निमित्तश्च प्रीतिविशेषो, न पुरुषनिमित्तः । कथं ज्ञायते । पूर्ववत्त्वात् प्रयोगस्य । पूर्ववान् अत्र प्रयोगः । बहुशो वाहीकाश्च अवाहीकाश्च भोजिताः तत्र अन्वयव्यतिरेकाभ्यां ज्ञातमेतत् । देशनिमित्तेयं यवान्नप्रियता, न पुरुषनिमित्ता । तस्मात्तथा स्याद् वाहीकादिष्वभिधानेषु । अथेह कर्मणः शब्दभाव्यत्वम् । नान्यत शक्यमेतज्ज्ञातुं, कस्यापूर्वस्य धर्मा इति । शब्देन च व्यवस्थिता विज्ञाता धर्मा । अपूर्वाणां च विभागः अतः शेषाणामन्यत्र विहितानामन्यत्राप्रवृत्तिः स्यात् ॥९॥ आ०नि०॥

## स्मृतिरिति चेत् ॥ १० ॥

अथ यदुक्तं, स्मृतिरिति । तस्य कः परिहारः ? ॥ १० ॥ आ० ॥

## न पूर्ववत्त्वात् ॥ ११ ॥

पूर्ववती हीयं स्मृतिः । चोदकं धर्मग्राहकं वक्ष्यति । विध्यन्तो वा प्रकृतिवदिति । तेन प्रापितानां धर्माणामयमनुवादः । एतन्न्यायपूर्विका, नाप्राप्तानां विधायिका । यत् कारण, व्यवस्था धर्माणामेतन न्यायेन भवति ॥ ११ ॥ आ० नि० ॥

## अर्थस्य शब्दभाव्यत्वात् प्रकरणनिबन्धना-च्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥

इदं निगमनसूत्रम् । निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् । तदिदमुच्यते । यस्मादेवं, तस्मादर्थस्य अग्न्यन्वाधानादेः शब्दभाव्यत्वात्, प्रतिप्रकरणं च निबन्धनाच्छब्दादेव अन्यत्र भावः स्यात् । यथा, गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येता वै गन्धर्वाऽप्सरसो यद्राष्ट्रभृतम् । तस्मै स्वाहा ताभ्यः स्वाहेति जुहोतीत्यग्निप्रकरणे उत्पन्नानां राष्ट्रभृतामुद्धाहे उपदेशः । एतेषां राष्ट्रभृतो जुहोत्यभ्यातानां जुहोतीति । असत्येतस्मिन् वचने यथाधिकारं व्यवतिष्ठेरन् धर्मा इति । एवञ्च सति अधर्मकाणि ऐन्द्राग्नादीनि । तदर्थमुत्तरोऽध्यायषट्कः प्रारब्धव्य इति ॥

तत्र सप्तमेन तावदैन्द्राग्नादीनां कर्मणां धर्मा सन्तीत्युच्यते । ते चातिदेशेनेति । अतिदेशो नाम ये परत्र विहिता धर्मास्तमतीत्यान्यत्र

तेषां देश । यथा, देवदत्तस्य भोजनविधिं कृत्वा शालिसूपमांसापूपै-र्देवदत्तो भोजयितव्य इति। तमेव विधिं यज्ञदत्तेऽतिदिशति, देवदत्तवद् यज्ञदत्तो भोजयितव्य इति। श्लोकमपि उदाहरन्ति—

प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु।

धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः, इति ॥ स च नाम्ना वचनेन वा। तत्र नाम त्रिविधमातिदेशकं, कर्मनाम, संस्कारनाम, यौगिकमिति। वचनं पुनर्द्विविधं, प्रत्यक्षश्रुतमानुमानिकं च। तयोरानुमानिकमुपरिष्टाद् वक्ष्यते। प्रत्यक्षश्रुतं त्विदानीमेव चिन्त्यते ॥ १२ ॥ उपसंहारः ॥ प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकरणम् ॥१॥

अस्तीषुनामैकाहः। अपरः श्येन। तौ द्वावप्याभिचारिकौ। तत्र इषौ कांश्चिद्धर्मान् विधाय आह, समानमितरच्छ्येनेनेति। एतच्चिन्त्यते। किमयमनुवादः, विधिः ? इति। यदि विधिस्ततोऽतिदेश। श्येनधर्मान् इषौ अतिदिशति। अथानुवादस्ततो नेति। तत्र किं प्राप्तम् ?। तत् सूत्रेणैवोपक्रम्यते—

## समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥

समानमितरच्छ्येनेनेति। अत्रोत्पन्नाधिकारः स्यात्। अनुवाद इत्यर्थः। कुत ?। पूर्ववत्त्वात्। अयमिषु पूर्ववान्, ज्योतिष्टोमपूर्वक। ज्यौतिष्टोमिकोऽत्र विध्यन्त इत्यर्थः। अत्र चोदकेनोत्पन्ना ज्यौतिष्टोमिका धर्माः सन्ति। श्येनोऽपि ज्योतिष्टोमपूर्वक। तत्रापि ते सन्ति। ये इषौ श्येने च समाना भवन्ति, तानधिकृत्य अयं वादो युज्यते। तस्मादुत्पन्नाधिकारत्वादनुवादः ॥

किञ्च। इतरदिति चाभावे नोपपद्यते। इतरशब्दश्चासन्निहितेऽनुपपन्नः सन्निहित एव भवति। यथा, इतर आधारो दीयताम्। इतरः कम्बलो दीयतामिति सन्निहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा। ज्यौतिष्टोमिकाश्च सन्निहिताः। तस्मात् तेषां वादः। तेषां चेदमनुवादः। विहिता हि ते चोदकेनेति ॥ १३ ॥ पूर्व० ॥

## श्येनस्येति चेत् ॥ १४ ॥

इतिचेत् पश्यसि, ज्यौतिष्टोमिकानामनुवाद इति। नैवम्। श्येनस्य वैशेषिकाणां लोहितोष्णीषादीनां धर्माणां विधिः। कुत। श्येनग्रहणसामर्थ्यात्। एवं श्येनग्रहणमर्थवद् भविष्यति, धर्मान् विशे-

षयत् । इतरथा अनर्थकं स्यात् । सर्वेषां हि एकाहाहीनसत्राणां ते समानाः । तत्र यावदुक्तं स्यात्, समानमितरदिति, तावदेव, समानमितरच्छ्येनेनेति ॥ १४ ॥ पूर्वपक्षे आशङ्का ॥

नासन्निधानात् ॥ १५ ॥

नायं श्येनवैशेषिकाणां वादो युज्यते । कस्मात् । असन्निधानात् । अयमितरशब्दः सन्निहिते भवति । न च श्येनशब्देन वैशेषिका इषौ सन्निहिताः । यत्तु, श्येनशब्दो वैशेषिको भवतीति । विधिपक्षे अवैशेषिकत्वं दोष स्यात् । अनुवादपक्षे तु नैव कश्चिद् विधीयते, किं विशेषयिष्यति ? । ज्यौतिष्टोमिकास्तु सर्वसाधारणाः सन्तः श्येनस्यापि भवन्तीत्यनुवादो युज्यते । तस्माज्ज्यौतिष्टोमिकानामेवाऽनुवादः ॥ १५ ॥ पूर्वपक्षे आशङ्कानिरासः ॥

अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद् विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥

अपि वेति पक्षान्तरपरिग्रहे । विधिरयं श्येनवैशेषिकाणां, ज्यौतिष्टोमिकानामनुवादः । कुतः । अपूर्वत्वात् । एवमपूर्वमर्थं विधास्यति । तथा प्रवृत्तिविशेषकरो भविष्यति । अनुवाद सन् अप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । नन्वितरशब्दोऽयं सन्निहिते भवति । उच्यते । इतरदधिकार्थे, समानमितरत्, समानमधिकमित्यर्थः ॥ ननु सन्निहितवचनोऽयं न अधिकार्थ इति । उच्यते । न केवलमयं सन्निहितवचन एव । पूर्वोक्तसदृशमसन्निहितमपि ब्रूते । अवशिष्टं च । यदा हि वस्त्राण्यनुक्रम्य इतरशब्दः प्रयुज्यते, देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमम्, इतरच्चैत्रायेति । तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा । इह ज्यौतिष्टोमिकेभ्योऽधिकान् धर्माननुक्रम्य इतरशब्दः प्रयुक्तः । तेन अत्राप्यधिकानेव वक्तुमर्हति । तथा अधिकवचनो भवति ॥ अथ ज्यौतिष्टोमिकान् ब्रूते । तथा सन्निहितवचनः । तत्रावश्यमन्यतरद्धेयम् । यदि अधिकार्थतां हित्वा सन्निहितार्थता आश्रीयते, अनुवादमात्रमनर्थकं भवति । श्येनशब्दश्चाविवक्षितार्थः । अथ सन्निहितार्थतां हित्वा अधिकाऽर्थता गृह्यते, न कश्चिद्दोषो भवति । तस्मात् सूत्रकार आह । इतरदधिकार्थे इति । अतो ज्यौतिष्टोमिकाद्विधेरधिकाः श्येनवैशेषि-

का ये, ते इह अतिदिश्यन्ते । तद्वाचकं समानं स्यात् । समानशब्दः स्यादित्यर्थ । भवति श्येनशब्दश्च विवक्षित. ॥ १६ ॥ ॥ सिद्धान्तः ॥ समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ॥ २ ॥

चातुर्मास्यानां वैश्वदेवे आग्नेयादीनि हवींषि सार्थवादवाक्यैर्विहितानि । धर्माश्च तेषामुक्ता । वरुणप्रघासेषु केवलानि हवींषि आम्नाय, यद्वैश्वदेविकानां ब्राह्मणं, तत्तेषामतिदिश्यते । एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणीति । तत्र किमर्थवादमात्रस्यायमतिदेशः, उत साऽर्थवादकस्य सविधिकस्य काण्डस्येति। कथं पुनरर्थवादमात्रस्याऽतिदेशो भवति ? । यथा, पम्पाकुलायप्रतिमाश्च वृक्षा इति। के पुनर्विधय', के अर्थवादाः ?। त्रेधा सन्नद्धं बर्हिर्भवति, त्रेधा सन्नद्ध इध्म. । नव प्रयाजा नवानुयाजा इत्येवमादयो विधयः । वार्त्रघ्नानि वा एतानि हवींषीत्यर्थवादा ॥ तत्रेदमुच्यते—

## पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ १७ ॥

पञ्च तानि हवींषि सर्वपर्वसु सञ्चरन्तीति पञ्चसञ्चराणीत्युच्यन्ते। तेषु पञ्चसञ्चरेष्वर्थवादमात्रस्यातिदेश इति।कुतः।सन्निधानात् । हविषां सन्निहिता अर्थवादा' । विधिभिरेकवाक्यसम्बद्धत्वाच्च धर्मविधयः । किमत । अत एतद्भवति, यत् पूर्वेषां ब्राह्मणमिति व्यपदेशो युज्यते। तद्धि तेषां ब्राह्मणं, येन विधीयन्ते । कोऽन्यो हविषां ब्राह्मणस्य च सम्बन्धोऽन्यत्र विधेयविधायकभावात् । अर्थवादैश्चैतानि विधीयन्ते, न धर्मविधिभि । धर्मविधिभिस्तु यानि विधीयन्ते, न तानि हवींषि । तस्मादर्थवादानामतिदेशो, न धर्मविधीनाम् । अपिच वरुणप्रघासेष्वपि केचिद् वैश्वदेविका धर्मा विधीयन्ते । यथा अग्निं मथ्नन्ति प्रसुवो भवन्तीति । तेषामतिदेशेन विहितानां पुनराम्नानमनर्थकं स्यात् । यदि विधयोऽतिदिश्येरन् । तस्मादर्थवादातिदेश इति ॥ १७ ॥ पूर्व० ॥

## सर्वस्य वैकशब्द्यात् ॥ १८ ॥

नैतदेवम्, अर्थवादमात्रस्यातिदेश इति, सविधिकस्य सार्थवादकस्य काण्डस्यातिदेश इति । कुतः । ऐकशब्द्यात् । समानशब्दत्वादित्यर्थः । समानोऽयं ब्राह्मणमिति शब्दो विधीनामर्थवादानां च । स

यथाऽर्थवादान् गृह्णात्येवं विधीनपि गृह्णातिचेत्, तानप्यतिदिशति । यत्तु विधीनां हविर्भिः सम्बन्धो नास्तीति । विधेयविधायकसम्बन्धो नास्ति, उपकारलक्षणः सम्बन्धो भविष्यति । क उपकारः । यद्देषामङ्गानि विदधाति । अस्तिचेत् सम्बन्धो, ब्राह्मणशब्दश्रुत्या सर्वातिदेशो न्याय्य इति ॥ १८ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ १९ ॥

लिङ्गं च विधीनामतिदेशं दर्शयति । किं लिङ्गम् । वरुणप्रघासेषु त्रिंशदाहुतयो वाजिनो यजन्त्याहुतीनां सम्पत्त्यै त्रिंशत्त्वायेति वरुणप्रघासे त्रिंशतमाहुतीर्दर्शयति । यदि विधयो नातिदिश्येरन्, ता न स्यु । तस्मादतिदिश्यन्ते ॥ १९ ॥ युक्तिः ॥

## विहिताम्नानान्नेति चेत् ॥ २० ॥

विहिताम्नानादिति यदुक्तं, तस्य कः परिहार । आभाषान्तं सूत्रम् ॥ २० ॥ आ० ॥

## नेतरार्थत्वात् ॥ २१ ॥

अत्रोच्यते, विध्यतिदेशेऽपि सति नाग्निमन्थनादीनामाम्नानमनर्थकम् । इतरस्य हविषोऽर्थेन भविष्यति दक्षिणवैहारिकस्य मारुत्याः । तस्मान्नैतज्ज्ञापकं विधीनामनतिदेशस्य भविष्यति ॥ २१ ॥ आ० नि० ॥ एतद्ब्राह्मणानीत्यादीनां पञ्चहविःषु सार्थवादविध्यतिदेशाधिकरणम् ॥ ३

## एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

वैश्वदेवे एककपाल आम्नातः, द्यावापृथिवीय एककपाल इति । वरुणप्रघासेष्वपि, काय एककपाल इति । तत्रापर , ऐन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा इति । तथा साकमेधेष्वप्येककपालैन्द्राग्नावाम्नातौ । ऐन्द्राग्न एकादशकपाल इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपाल इति । तत्रेदम् आम्नातम् । एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतर इतरश्चेति । तत्रेदमुच्यते । एककपालैन्द्राग्नौ च तद्वत् । यद्वत् पञ्चसञ्चराणि । अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्यातिदेश । तेनैव न्यायेनेति । प्राप्तिसूत्रमेतदुत्तराचिन्तार्थम् ॥ २२ ॥ एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाऽधिकरणम् ॥ ४ ॥

## एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्व-

## होमापरिवृत्तिदर्शनादवभृथे च सकृद्-द्व्यवदानस्य वचनात् ॥ २३ ॥

साकमेधे श्रूयते, एतद्ब्राह्मण एककपाल इति । तत्र चिन्त्यते । वैश्वदेविकस्यैककपालस्येदं ग्रहणम्, उत वारुणप्राघासिकस्येति । किं प्राप्तम् । वैश्वदेविकस्येति ब्रूमः । किं कारणम् । तस्य विहिता धर्माः अलङ्कृत्यअभिपूर्य्य उपांशु यष्टव्य', आवि पृष्ठः कार्य्य इत्येवमादयः । वारुणप्राघासिकस्त्वधर्मकः । यस्य विहिता धर्मास्तत्रैतद् युज्यते वक्तुं, तद्वदिदं कर्त्तव्यमिति । तस्माद् वैश्वदेविकस्य ग्रहणम् ॥ नन्वैन्द्राग्नसमुच्चारणादेककपालोऽपि वारुणप्राघासिक एव स्यात् । नावश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणमविरुद्धम् । तस्माद् वैश्वदेविकस्य ग्रहणम् । इति प्राप्ते उच्यते । वारुणप्राघासिकस्यैककपालस्य ग्रहणमिति । कुतः । तत एककपालानां वैश्वदेविकः प्रकृतिः । कथं ज्ञायते । आग्रयणे सर्वहोमापरिवृत्तिदर्शनात् । आग्रयणे द्यावापृथिवीयस्यैककपालस्य सर्वहोममपर्य्यावृत्तिं च दर्शयति । यत् सर्वहुतं करोति सा त्वेका परिचक्षा, हुतो हुत पर्य्यावर्त्तते सा द्वितीया । आज्यस्यैव द्यावापृथिव्यौ यजेतेति आज्ययागविधिपरे वाक्ये एककपालस्य सर्वहोममपर्य्यावृत्तिं च प्राप्तां दर्शयति । एतस्माद्दर्शनाद् अवभृथे च सकृद्द्व्यवदानस्य वचनाद्, अवभृथे च अवधारणं भवति । इदमवैककपालस्य द्विरवद्यतीति । तेन ज्ञायते, नूनमन्यत्र न द्विरवदानमिति । तच्चैतत् सर्वं वैश्वदेविके एककपाले विहितम् । तस्मादेककपालानां वैश्वदेविकः प्रकृतिः । किमतः ? । साकमेधिकेऽप्येककपाले वैश्वदेविका धर्माः प्राप्तास्तेषामतिदेशोऽनर्थकः । वारुणप्राघासिकस्य ये धर्मा वैशेषिका अप्राप्तास्तेषामतिदेशोऽर्थवान् । तस्माद् वारुणप्राघासिकस्य एककपालस्येदं ग्रहणमिति । उच्यते । लिङ्गमेतत् । कुत. प्राप्तिरिति । प्राप्तिमुत्तरत्र वक्ष्याम । स्वरसामैककपालामिक्षं चेत्यत्र । के पुनस्ते धर्माः । हिरण्यमय्यः स्रुचः शमीमय्यो वेत्येवमादयः ॥ २३ ॥ साकमेधे वारुणप्राघासिकैककपालातिदेशाऽधिकरणम् ॥ ५ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याऽध्यायस्य प्रथमः पादः ॥ ७ ॥ १ ॥

अथ सप्तमस्याध्यायस्य द्वितीयः पादः ॥ ७ ॥ २ ॥

**साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम्॥१॥**

इदं श्रूयते- रथन्तरमुत्तरयोर्गायति, कवतीषु रथन्तरं गायतीत्येवमादीनि समाम्नायन्ते । तत्र चिन्ता। किमिह अतिदिश्यते इति । ननु यद् रथन्तरादिभिः शब्दैरुच्यते, तदतिदिश्यते । बाढम् । तदेव तु न ज्ञायते, किमेभिः शब्दैरुच्यते इति । ननु सिद्धमेतद् गीतिषु सामाख्या इति । तथा सिद्धस्य आक्षेपः करिष्यते । स एव तु निर्णयो भविष्यति । यदि स एव निर्णय , किमर्थ आक्षेप. ? । दार्ढ्यार्थः। स्थूणानिखननवत् । तत्र किं प्राप्तम् । तदुच्यते । सस्तोभस्वरकालाभ्यासविकारायां हिङ्कारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यामृचि गीतौ सामशब्दोऽभियुक्तैरुपचर्य्यते। तस्मात् संशय.। उच्यते । ननु गीतौ सत्यां भावाद् गानाख्यस्य संस्कारकर्मणो वाचका एते शब्दा इत्युक्तम् । तदेवेदमुक्तमाक्षिप्यते । नेमे संस्कारस्य वाचका । किं कारणम् । अकर्मकाले प्रयोगात् । अकर्मकाले साम प्रयुज्यते । न च संस्कारकर्माणि प्रोक्षणावक्षेपणपर्य्यग्निकरणादीन्यकर्मकाले प्रयुज्यन्ते । प्रयोजनाभावात्। अथ नु मन्त्रा एते, ततोऽन्वहं स्वाध्यायोऽध्येतव्य इति नियमादकर्मकाले प्रयोगो युज्यते । तस्माद् ऋचां नामानि ॥ किञ्च, संज्ञाभेदात् । संज्ञाभेदश्च भवति, रथन्तरं बृहदित्येवमादि· । स एकत्वात् संस्कारकर्मणोऽनर्थक । एकेनैव हि तदा पर्य्याप्तम् । यथा गीतिरिति । अथ ऋचां नामानि । ततस्तासां भेदात् संज्ञापृथक्त्वं युक्तम् ॥ अपिच । यदि गानं रथन्तरं गानं च बृहत् । इदं रथन्तरमिदं बृहदिति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते । ऋङ्नामत्वे तूपपद्यते ॥

किञ्च, विकारपृथक्त्वात्तु । प्रतिसाम च विकारपृथक्त्वात् । प्रतिसाम च विकारपृथक्त्वं दृश्यते । तद् एकत्वाद् गानस्यानुपपन्नम् । संस्कारभेदे हि विकारपृथक्त्वं दृष्टम् । तद् यथा, अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णनम् । न तु एकस्य तण्डुलीभावश्चूर्णनं च । अथ ऋङ्नामानि एतानि । तत ऋचां भेदाद्विकारपृथक्त्वं युज्यते । तस्माद् ऋङ्नामानीति । तत उत्तरं पठति । साम्नोऽभिधानशब्देन प्रवृत्ति· स्याद्यथाशिष्टमिति। साम्नोऽभिधानशब्देन यथाशिष्टं प्रवृत्ति

स्यात् । यच्छिष्टं प्रवक्तृभिः शिष्येभ्यः । किञ्च शिष्टम् ? स्तोभादिविशिष्टा ऋक् साम । सा प्रवर्त्तेत । किं कारणम् । तस्या रथन्तरादि नामधेयमिति ॥ १ ॥ पूर्व० ॥

**शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसम्बन्धः ॥ २ ॥**

तुशब्दः पक्षनिवृत्तौ । न त्वेवं स्याद्, ऋचः प्रवृत्तिरिति । कथम् । इह कवतीषु रथन्तरं गायतीति कवतीनां वा कार्य्ये अभिवत्योऽतिदिश्येरन्, कवतीनां वा उपरि आधार्य्याधेयभावेन ? । तत्र कार्य्ये तावदतिदेशो न घटते । कुतः ? । शब्दैरर्थविधित्वात् । शब्दानामर्थविधानं कार्य्यम् । न च, कवतीषु रथन्तरं गायतीति कवतीभिर्योऽर्थोऽभिधीयते, तमभिवत्यः शक्नुवन्ति वक्तुम् । तस्मान्न कार्य्यातिदेशः । आधेयत्वेऽपि न सम्भवति । पृथग्भावात् । न हि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते । अभि त्वा, कया न इति । क्रियाया हि गानक्रियायाः शब्देन अभिसम्बन्धो भवेद् न शब्दस्य । तस्मादाधेयत्वेनापि नातिदेशः । अतो नायमृचः प्रदेश इति ॥२॥ पूर्वपक्षनिरासः ॥

**स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥**

स्वार्थे वा प्रवर्त्तमाना अभिवत्यः कवतीनामङ्गभावेनोपदिश्येरन् । कथं पुनः कवतीषु गायतीत्यङ्गभाव शक्य उपदेष्टुम् ? । शक्यो यथा, येन कर्मणेर्त्सेत्तत्र जयान् जुहुयादिति । किं पुनः प्रयोजनं कवतीनामभिवत्यो निर्वपन्तीति ? । उच्यते । प्रयोजनमदृष्टं कल्प्यम् । कुतः ? । क्रियायाः । यस्मात् क्रिया श्रूयते । कवतीषु रथन्तरं गायतीति । यथा प्रयाजादीनां प्रयोजनं क्रियाया ॥ उच्यते । अयमेवाऽस्मिन् पक्षे दोषो, यत् प्रयोजनं क्रियायाः कल्पयितव्यम् । तस्मादयमपि पक्षो दुःश्लिष्टः ॥ ३ ॥

**शब्दमात्रमितिचेत् ॥ ४ ॥**

इति चेत् पश्यसि, कवत्यङ्गभावेन अभिवतीनामुपदेशो दुःश्लिष्ट इति । तेन तर्हि शब्दमात्रं प्रदिश्यताम् । रथन्तरशब्दं कवतीषु प्रयुञ्जीत । कवती रथन्तरशब्देन अभिलपेदिति । किं कारणम् ? शब्दे

उच्चरिते, तत्र तावन्मुख्या प्रतिपत्तिः। शब्दे कार्य्यस्य असम्भवात्, अर्थे कार्य्यं विज्ञायते। यथा गामानयेति। इह तु शब्दे एव कार्य्यं सम्भवति, न अर्थे। अतोऽत्र शब्दं विज्ञास्यामः॥ ४॥ पूर्व०॥

नौत्पत्तिकत्वात्॥ ५॥

पूर्वस्मादेष वादः पापीयान्। कस्मात्। औत्पत्तिकत्वात्। औत्पत्तिको हि नामिनाम्नोः सम्बन्धः। यः शब्दो यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धो, न स ततोऽन्यं प्रत्याययितुं शक्नोति। न हि गोशब्देन अश्वोऽभिधातुं शक्यते॥ ५॥ पूर्व० नि०॥

शास्त्रञ्चैवमनर्थकं स्यात्॥ ६॥

एवञ्च सति अतिदेशशास्त्रमनर्थकं स्यात्। अशक्यार्थत्वात्। तस्मान्न शब्दस्यापि प्रदेशो युक्तः। वृत्तिकारस्तु मेने, गानशास्त्रमौक्थिक्यमनर्थकं स्यादिति। तस्याभिप्रायः, सत्याङ्गतौ नैतावान् प्रयासः शिष्टानामफलोऽभ्युपगन्तुं न्याय्य इति॥ ६॥ युक्तिः॥

स्वरस्येति चेत्॥ ७॥

इति चेत् पश्यसि, नाम्नोऽतिदेशोऽयुक्त इति। तेन तर्हि, स्वरस्यातिदेशो भवतु। स्वरः सामशब्देन लोकेऽभिधीयते। सुसामा देवदत्त इति। सुस्वरो देवदत्त इति। स्वरो घोषो नाद इति समानार्थाः। स सामशब्देनोच्यते। साम च रथन्तरम्। तस्मात् तस्याऽतिदेशः॥ ७॥ पूर्व०॥

नार्थाभावाच्छ्रुतेरसम्बन्धः॥ ८॥

नैतदेवं, स्वरस्यातिदेश इति। कुतः। अर्थाभावात्। अर्थस्याऽभावात्। अर्थस्य अभिवतीस्वरस्य कवतीष्वभावात्। नन्वसन्नेव असौ अतिदेशेन भाव्यते। उच्यते। भावयितुमपि न शक्यते। न हि अभिवत्यक्षराणामभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः। यदि भाव्येत, न कवत्यो भवेयुः। न चेद् भाव्यते, न भूतः। कवतीषु रथन्तरं गायतीत्येतस्याः श्रुतेः, पदान्तरेणाभिसम्बन्धो न स्यात्। तस्मान्न स्वरस्यातिदेशः॥ ८॥ पूर्व० नि०॥

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात्॥ ९॥

तुशब्दः पक्षान्तरपरिग्रहे। यद्यभिवतीस्वरस्य कवतीषु प्रदेशो

नोपपद्यते, अनुवादो भवतु । कवतीषु रथन्तरं गायतीति । कथम् । तदुच्यते । इह कवतीषु रथन्तरं गायतीत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवत । कवतीषु यद् रथन्तरं, तद् गायतीत्येका । रथन्तरं यत्, तत् कवतीषु गायतीत्यपरा । तयोर्यैषा द्वितीया, रथन्तरं यत्तत् कवतीषु गायतीति । सा स्वरस्य सामत्वे न सम्भवतीत्युक्तम् । न हि अभिवतीस्वरः कवतीषु समावेशयितुं शक्य इति । पूर्वा तु सम्भवति । कवतीषु यद् रथन्तरं, तद् गायतीति ॥ ननु साऽपि न सम्भवति । न हि कवतीषु रथन्तरमस्ति । अतः परमुच्यते । स्वरस्तूत्पत्तिषु स्यात् । स्वरस्त्वभिवतीस्वरः, कवतीनाम् उत्पत्तिषु उच्चारणेषु स्यात् । कथम् । मात्रावर्णाविभक्तत्वात् । बहवो मात्रावर्णाश्चाभिवतीनां कवतीनां च अविभक्ता अभिवतीष्वपि विद्यन्ते, कवतीष्वपि। सोऽसावभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते । तस्यानुवादोऽयं घटते । कवतीषु रथन्तरं गायतीति । तस्मात् स्वरस्यानुवादः ॥ ९ ॥ पूर्व० ॥

## लिङ्गदर्शनाच्च ॥ १० ॥

लिङ्गं च दृश्यते, एतस्मिन् अर्थे । अस्ति रथन्तरमुत्तरयोरिति । किं तल्लिङ्गं भवति । एवमाह । रथन्तरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठ इति । यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्न. क्रियते । यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति । तस्मादस्त्युत्तरयो रथन्तरं बृहच्च । तयोरनुवाद इति ॥ १० ॥ युक्ति ॥

## अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥

तुशब्द पक्षं व्यावर्त्तयति । नैतदेवम् । स्वरस्यानुवाद इति । कुतः। एवं सति उत्तरासु विकारो न कश्चिच्छ्रुतो भवति । तदा उत्तरा यथाश्रुता प्रयोक्तव्याः । यथा स्वाध्यायकाले श्रुता । तत्र रथन्तरमुत्तरयोर्गायतीत्येतदनुवादमात्रमप्रवृत्तिविशेषकरमनर्थकमेवापद्यत । अतो न स्वरस्यानुवादो युक्तः ॥ ११ ॥ पूर्व० नि० ॥

## शब्दानाञ्चासामञ्जस्यम् ॥ १२ ॥

रथन्तरादीनां च सामशब्दानामसामञ्जस्यं स्यात् । रथन्तरमुत्तरयोः, बृहदुत्तरयोरिति । कथम् । तदुच्यते । अयं रथन्तरशब्दो बृह-

च्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या व्यवस्थिते स्वरविशेषे प्रयुक्तः । स एकदेशे भिन्नानुपूर्वे वा असमञ्जसो भवति। तस्मान्नैतद् युक्तम् । स्वरस्य सामशब्दः । तस्य चानुवाद इति ॥ अत्राह। एवं भवता सर्वे पक्षा निरुद्धाः। ततः किमप्रवृत्तिरेव ?इति। उच्यते। ऋच एव प्रदेशो भवतु। ननूक्तं, न शक्या ऋच ऋगन्तरे प्रदेष्टुमिति। बाढं, देशलक्षणा भविष्यति। कवतीषु रथन्तरं गायतीत्युच्यते। न च शक्यते कवतीषु रथन्तरं गातुम्। तत्र देशलक्षणा भवति। कवतीदेशे इति । यथा, अग्नौ तिष्ठति, कूपे तिष्ठति इति। धर्म्मलक्षणा वा स्यात् । रथन्तरधर्मा वा कवतीषु रथन्तरशब्देनातिदिश्यन्ते। यथा रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेदित्येवमादयः। यथा आचार्य्ये प्रोषिते, आचार्य्यानी भवतामाचार्य्य इत्याचार्य्यशुश्रूषा आचार्य्यान्यामतिदिश्यते॥१२॥ युक्ति ॥ तथा,पूर्व०

अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥

अपि तु नैवं स्याद् ऋच सामशब्दः । तस्याश्च प्रदेश इति। तथा देशलक्षणा धर्मलक्षणा वाऽऽश्रयणीया। अगतिश्चैषा यल्लक्षणापरिग्रहः। किन्तर्हि ? कर्मशब्दः स्यात् । रथन्तरादिर्गानाख्यस्य संस्कारकर्म्मणो वाचकः। कुतः । उक्तो न्यायो, गीतिषु सामाख्या इत्यत्र। तत्र गीतिविशिष्टायाम् ऋचि एष शब्दो दृष्टः। न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । तस्माद् विशेषणं तावदभिधीयते। विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः । अतो नास्ति ऋचः शब्देन संस्पर्श इति। तेनैव न्यायेन गीतिनामधेयमिति ब्रूमः॥ किञ्च, प्रसिद्धग्रहणत्वात्। अयं च गायतीति शब्दो गानक्रियायां प्रसिद्धः। का पुनरसौ । शब्दस्योच्चारणविशेषः। गायति गानं करोतीति। तद्ग्रहणश्च रथन्तरादिशब्दः । तद्वचन इत्यर्थः । तेन समुच्चारणाद् द्वितीयासामर्थ्याच्च । यथा, आसारितकं गायतीति, वर्द्धमानकं गायतीति ॥ ननु शब्दवचनेनापि समुच्चारणं भवति, गाथां गायति, ऋचं गायतीति। सत्यम्। विपरिणम्य तु शब्दं, गानेन ऋचं संस्करोतीति । यथानिपतितेन अर्थेन न सम्बद्ध्यते गानं करोति ऋचमिति । तस्माद् गीतिवचनः ॥ इतश्च गीतिवचनः।

कुतः । विकारो हि अविशिष्टोऽन्यैः । विकारश्चात्र ऋग्द्रव्यस्य दृश्यते । ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम् । विवृतानां संवृतत्वं, संवृतानां विवृतत्वम् । सोऽविशिष्टोऽन्यैः संस्कारकर्मभिः । यथा अवहन्तिना व्रीहीणां तण्डुलीभाव , पिषिणा तण्डुलानां पिष्टीभावः । तस्माच्छब्दानां संस्कारो गानाख्यो रथन्तरादिभि शब्दैरुच्यते । तस्यायं प्रदेशो, रथन्तरमुत्तरयोर्गायतीत्येवमादिः ॥१३॥सि०॥

**अद्रव्यश्चापि दृश्यते ॥ १४ ॥**

अपि च अद्रव्यं साम दृश्यते । द्रव्यशब्दश्छन्दोगैर्ऋक्षु आचरितः । अद्रव्यम् अनृचमित्यर्थः । अनृचं साम दृश्यते, प्रजापतेर्हृदयमनृचं गायतीति । प्रजापतिहृदयं नाम साम । तद् अनृचि उत्पन्नम् । यदि ऋचि सामशब्द , कथं प्रजापतिहृदयमनृचं स्यात् । अथ गीतेः सामशब्दस्ततो विनापि ऋचा गीतिर्भवति । तत्रैतदुपपद्यते । प्रजापतेर्हृदयमनृचं गायतीति । तस्मादपि गीतिः साम ॥१४॥युक्तिः॥

ननूक्तं, संस्कारकर्मत्वेऽनर्थकोऽकर्मकाले प्रयोग इति । तत्र ब्रूम —

**तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥**

तस्य क्रिया अकर्मकाले ग्रहणार्था शिक्षितुमभ्यासितुं च । नानाऽर्थेषु नानाभूतेषु अर्थेषु भिन्नेष्वित्यर्थः । विरूपित्वात् । आश्रयभेदाद् विविधरूपं यद् गानं भवति । तत् प्रत्यृचं शिक्षितव्यमभ्यसितव्यं च प्रयोगप्राशुभावाय । भूमिरथिकवत् । तद् यथा, भूमिरथिको भूमौ रथमालिख्य योग्यां करोति । सा तस्य योग्या प्रयोगकाले सौकर्य्यमुत्पादयति । अर्थो ह्यासां रथन्तरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः । यथा अवहन्त्यादीनाम् । कुतः । विधानात् । विधीयते ह्यसौ शिष्योपाध्यायसम्बन्धेन । एवं रूपं रथन्तरं भवतीति । न लौकिको विज्ञायते । तस्मान्नपरिचोदनैषा । अकर्मकाले प्रयोगादिति ॥ १५ ॥

अथ यदुक्तं, संज्ञापृथक्त्वादिति । तत्रोच्यते—

**तस्मिन् संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥**

तस्मिन्नेकस्मिन्नपि गानाख्ये संस्कारे संज्ञाविशेषा भवेयुः । कुतः विकारपृथक्त्वात् । तुल्येऽपि गाने विशेषो भवति । गानविशेषाच्च संज्ञापृथक्त्वम् । यथा, आसारितकं, वर्द्धमानकमिति । अन्यथा-

लक्षणा आसारितकगीतिः, अन्यथालक्षणा वर्द्धमानकगीतिः । एव-मिहापि अन्यथालक्षणा रथन्तरगीतिः, अन्यथालक्षणा बृहद्गीतिः । तस्मात् संज्ञापृथक्त्वम् ॥ १६ ॥ आ० नि० ॥

**योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥**

योनिश्चासौ शस्या च योनिशस्या । योनिशस्याश्च ऋचः, तुल्य-वद् इतराभिरयोनिशस्याभिर्विधीयन्ते । याम्याः शंसति, शिपिविष्ट-वन्ती शंसति, रथन्तरस्य योनिमनुशंसति, बृहतो योनिमनुशंसतीति । का तत्र तुल्यता । शंसतिशब्देनाभिधानात् । इह एतौ स्तौति-शंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ । प्रगीतेषु मन्त्र-वाक्येषु स्तौतिशब्द, अप्रगीतेषु शंसतिशब्द । यथा प्र उ गं शंसति, निष्केवल्यं शंसतीति । आज्यैः स्तुवते, पृष्ठैः स्तुवते इति । अतः शंसतिशब्देन विधानादप्रगीताम् ऋचं रथन्तरस्य योनिं दर्शयति । यदि च गीति. रथन्तरं, ततस्तस्य अप्रगीता ऋग् योनि । अन्यथाऽयं व्यपदेशो नोपपद्यते । रथन्तरस्य योनिमिति । तस्माद् गीतिषु सामाख्या ॥ १७ ॥

**अयोनौ चापि दृश्यते अतथायोनि ॥ १८ ॥**

अयोनौ च साम दृश्यते । स्थाल्यां सक्तवधीयते इत्याहुर्यद् बृहद् गायत्रीषु क्रियतेऽपि चैनां रुजाति । न चास्यां सम्भवतीति । बृहतो बृहती योनि । तस्य गायत्रीषु प्राप्तिर्नास्ति । यदि ऋचः साम-शब्द । अथ नु गीतेः । तत सा बृहद्गीतिर्गायत्रीषु वचनात् प्राप्ता । तस्या अयमनुवादो घटते, यद् बृहद् गायत्रीषु क्रियते इति । अतथा-योनि च साम दर्शयति । यादृशी यस्य योनिस्ततोऽन्यादृशे यो वै विच्छन्दसि सामोहति स ऋचं संशृणाति, साम वा विलिशति, साम संशृणाति, ऋचं विलिशतीति । यतरद् वर्षीयस्तस्य विलेशः । यतरद् वर्षीयस्तस्य संशय । तत्र गीतौ एव साम्नि युज्यते, न ऋचि । ऊहतिशब्दश्च गीतावेव समर्थो, न ऋचि । ऋक् चेत्, सैव यथाम्नायं पठ्यते । तत्र नास्त्यूहप्रसङ्गः । तस्मादपि गीतौ सामशब्दः ॥ १८ ॥ युक्तिः ॥

**ऐकार्थ्ये नास्ति वैरूप्यमितिचेत् ॥ १९ ॥**

यदुक्त, तस्य क्रिया ग्रहणार्था इति । तत्र परिचोद्यते । ऐकार्थ्ये

नास्ति वैरूप्यमिति । रथन्तरगीतेर्बृहद्गीतिरर्थान्तरम् । तेन रथन्तरगीतौ गृहीतायां बृहद्गीतिरगृहीता भवतीति युक्तो रथन्तरे गृहीते बृहतः शिक्षार्थमकर्मकाले प्रयोगः । रथन्तरगीतेस्त्वेक एवार्थः । तस्य योन्यां प्रयोगे शिक्षिते पुनरुत्तरासु न शिक्षितव्यम् । तासु अकर्मकाले प्रयोगः संस्कारकर्मत्वे न युक्तो भवति । तस्मान्न संस्कारस्य सामशब्द इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥१९॥ आ० ॥

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥ २० ॥

स्याद् वैरूप्यम् । कुत एतत् । अर्थान्तरेषु अनिष्पत्तेः । ऋगन्तरेषु आश्रयभेदात् । यथा पाके । यथा एक एव अयमर्थः पाको नाम । तस्यार्थान्तरे वैरूप्यं भवति । अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य । येन ओदनपाको गृहीतो, न असौ अशिक्षित्वा गुडं पक्तुं जानाति । तस्मात् तस्याप्यकर्मकाले प्रयोग उपपद्यते ॥ २० ॥ आ० नि० ॥

शब्दानाञ्च सामञ्जस्यम् ॥ २१ ॥

एवञ्च सामशब्दानाम् ऋक्शब्दानां च सामञ्जस्यं भवति । कवतीषु रथन्तरं गायतीति कवतीशब्दः, ऋच एव वक्ष्यति, रथन्तरशब्दश्च साम । इतरथा कवतीशब्दे वा देशलक्षणा स्यात् । रथन्तरशब्दे वा धर्मलक्षणा । तस्माद् गीतौ सामशब्द इति ॥२१॥ युक्ति ॥ रथन्तरादिशब्दस्य गानविशेषार्थताधिकरणम् ॥ १ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य द्वितीयः पादः ॥७॥२॥

अथ सप्तमस्य अध्यायस्य तृतीयः पादः ॥ ७ ॥ ३ ॥

उक्तं क्रियाभिधानंतच्छ्रुतावन्यत्र विधिप्रदेशःस्यात्॥१॥

नाम्ना धर्म्मप्रदेशं वक्ष्याम इत्यादौ प्रतिज्ञातं सोऽयमुच्यते । कुण्डपायिनामयने श्रूयते, मासमग्निहोत्रं जुह्वतीति । तत्रैतत् समधिगतं, नैयमिकादग्निहोत्रात् कर्म्मान्तरमेतदिति। अधुना अग्निहोत्रशब्दश्चिन्त्यते । कथमयं प्रयुक्त इति, तदर्थमारभ्यते । उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यादिति । उक्तमादौ, क्रियाभिधानं कर्म्मनामधेयम्, अग्निहोत्रशब्द इति– तत्प्रख्यं चान्यशास्त्रमित्यत्र। तस्यान्यत्र श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशः स्याद् धर्म्मप्रदेशः । नैयमिकस्याग्निहोत्रस्य ये धर्म्मास्तेऽस्मिन्ननेन

नाम्नाऽतिदिश्येरन् । किङ्कारणम् । उच्यते । परशब्दोऽयं परत्र वृत्तः । परशब्दस्य परत्र वृत्तौ तद्भावो गम्यते । स यत्र विज्ञातो भवति तत्रानूद्यते । यथा, सिंहो देवदत्त इति । यत्राविज्ञातस्तत्र विधीयते । यथा, अमी पिष्टपिण्डा सिंहाः क्रियन्तामिति । इह चाविज्ञातोऽस्य जुहोतेरग्निहोत्रवद्भावः । तस्मात् स विधीयते । मासमग्निहोत्रं जुहोतीति, अग्निहोत्रवज्जुहोतीति । कथं पुनरसति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुमिति । उच्यते । साहचर्य्यात् । अग्निहोत्रशब्दोऽयं कर्मणा सम्बद्धस्तत्सहचरितदोहनादिधर्मवत्तां लक्षणया शक्नोति गमयितुम् । शक्नोति चेद् गमयितुम्, प्रदेष्टुमपि शक्नोति । एवमन्तरेणापि वतिं, वत्यर्थः शक्योऽवगन्तुमिति ॥ १ ॥ सि० ॥

## अपूर्वे वापि भागित्वात् ॥ २ ॥

वा अपि इति विपर्य्यासेन प्रयुक्ते । अपि वा इत्यर्थः । अपि वा अपूर्वे एते उभे कर्मणी स्याताम् । न कौण्डपायिनामयनीयो जुहोतिनैयमिकपूर्वः । साधारणं च नामधेयमुभयोः । कुतः । भागित्वात् । अयमपि जुहोतिर्भागी एतस्य नामधेयस्य । यथैव तत्राग्निहोत्रं जुहोतीति समुच्चारणम्, एवमिहापि । तत्र तुल्ये समुच्चारणे तस्यैवैतन्नामधेयम् । नास्येत्यत्र विशेषहेतुर्नास्ति । तस्मादुभयोः साधारणं नामेति नास्ति धर्मप्रदेशः ॥ २ ॥ पूर्व० ॥

नैतद् युक्तम् । कुतः ?

## नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥

औत्पत्तिको हि नामिनाम्नोः सम्बन्धः । यन्नाम यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धं, तस्मिन्नेव सदा विज्ञेयं, नान्यत्र च । तथा अव्यवस्थायां शब्दार्थे विश्वासो न स्यात् । उक्तम् । अन्यायश्चानेकार्थत्वमिति । यदा च नोभयार्थस्तदा नैयमिकं तावद् आह । तत्सादृश्यविधानार्थे चेतरत्रापि प्रयोग उपपद्यते इति नास्तीतराभिधानत्वे हेतुः । तस्माद् विधिप्रदेशः स्यात् ॥ ३ ॥ उत्तरम् ॥

अत्राह । कस्मात् पुनस्तन्नामधेयमिदमिह प्रयुक्तमित्युच्यते, न पुनरेतन्नामधेयं तत्रेति । तत आह—

## प्रत्यक्षाद् गुणसंयोगात् क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः । प्रत्यक्षविहिता धर्म्माः सन्ति । इत्थं दोग्धि, इत्थं अपयाति, चतुरुन्नयति, खादिरी अग्निहोत्र-समिद्भवति, इत्थं जुहोति। एवं प्रत्यक्षाद् गुणसंयोगान्नैयमिकस्य तद् नामधेयमिह प्रयुज्यमानं दोहनादि क्रियाभिधानं स्यात् । धर्मप्रदेशकमित्यर्थः । अस्य पुनर्जुहोतेर्न केचिद् धर्माः सन्ति । तदभावे तेषां धर्माणामभावे अप्रसिद्धं स्यात् । न प्रज्ञायेत, किमर्थमयमग्निहोत्र-शब्द इह प्रयुक्त इति ॥

एवं वा । प्रत्यक्षो गुणसंयोगो, नैयमिकस्य द्रव्यदेवतासंयोगः । दध्ना जुहोति, पयसा जुहोति, अग्नये च प्रजापतये च सायं जुहोतीति । एतस्मात् प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात् । कर्म-नामधेयम् । इत्थंरूपो जुहोतिरग्निहोत्राख्य इति । अथेतरज्जुहोते रूपं नास्ति । तदभावेऽप्रसिद्धं स्याद्, न ज्ञायेत कीदृशं तदग्निहोत्र-मिति ॥ ननु मासोऽस्य रूपं भविष्यति । न मासः कर्म्माङ्गं, कर्तृ-धर्मः सः । अपि च । अग्निहोत्रं तु मासे विधीयते, न मासेन अग्नि-होत्रं रूप्यते । तस्मान्नैयमिकस्यैतन्नामधेयमितरत्र तद्वदतिदेश इति ॥ ४ ॥ आ०नि० ॥ अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम् ॥ १ ॥

किमेष एवोत्सर्गः । सर्वं कर्मनाम, अन्यत्र श्रूयमाणं धर्माणां ग्राहकमिति । एवं खलु प्राप्तम् । एवं प्राप्ते इदम् आरभ्यते—

**अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥**

गवामयने श्रूयते, वैश्वानरो ज्योतिष्टोमः प्रायणीयम् अहर्भवतीति । अस्ति तु द्वादशाहे प्रथमम् अहः प्रायणीयं नाम । प्रायणीयोऽतिरात्रे इति । तयोर्नानात्वं तेनैव न्यायेन सिद्धम् । प्रकरणान्तरे प्रयोजनान्यत्वमिति । तत्रायं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः । किन्तर्हि ? गुणार्थैषा श्रुतिः । कथम् । लक्षणया नामधेयं धर्माणां ग्राहकमुक्तम् । असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः। इह तु श्रुत्यर्थ एव सम्भवति । गुणार्थ एष शब्दः । गुणेन क्रिया-योगेन।तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते । प्रयन्ति अनेनेति प्रायणीयं, प्रवर्त्ततेऽनेन सत्रमिति । वाक्यशेषश्चास्यैतमेवार्थमाह । ज्योतिरेव पुरस्ताद्दधातीति । येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियते इत्यर्थो, ज्योतिरेव पुरस्ताद् दधातीति । तस्मान्नाय-

मातिदेशः ॥ ५ ॥ प्रायणीयेति नाम्ना धर्मानतिदेशाधिकरणम् ॥ २ ॥

## विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ६ ॥

विश्वजित् सर्वपृष्ठो भवतीति श्रूयते । तत्र विचार्य्यते । किमयमनुवादः, विधिः ? इति । किं प्राप्तम् । अनुवाद इति । कुतः । यो हि असर्वपृष्ठस्तस्य सर्वपृष्ठता विधेया । यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया । अयं च सर्वपृष्ठ एव । कथम् । तत्पूर्वकत्वात् । ज्योतिष्टोमपूर्वकत्वात् । ज्यौतिष्टोमिकानि स्तोत्राणि अत्र प्राप्यन्ते । तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति । तानि सर्वाणि अस्य । तैरयं सर्वपृष्ठो भवति । ननु न तानि पृष्ठानि । उच्यते । अस्ति च पृष्ठशब्द । तेषु अस्ति पृष्ठशब्दः । सप्तदशानि पृष्ठानीति । तस्मादनुवादः ॥ ६ ॥ पूर्व० ॥

## षड़हाद्वा तत्र हि चोदनाः ॥ ७ ॥

नायमनुवाद', किन्तर्हि । विधिः। अनुवादोऽप्रवृत्तिविशेपकरोऽनर्थकः स्यात् । अपि च ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति, यस्यायमनुवादः स्यात् । षडहे तु तदस्ति । तत्र हि चोदना , पृष्ठानां रथन्तरं पृष्ठं भवतीत्येवमाद्या. । तस्मात् षाड़हिकानामतिदेशको विधिरिति ॥७॥ सि०

## लिङ्गाच्च ॥ ८ ॥

लिङ्गं चैतमर्थं दर्शयति । पवमाने रथन्तरं करोत्यार्भवे बृहत् । मध्ये इतराणि । वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाकरमच्छावाकस्येति विनिवेशपरे वाक्ये षाड़हिकानि पृष्ठानि दर्शयति ॥ ८ ॥ युक्तिः ॥

## उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥

अथ यदुक्तम्, अस्ति च पृष्ठशब्द इति । तत्र ब्रूम । न त्वेष औत्पत्तिकः पृष्ठशब्द. । उत्पन्नानां स्तोत्राणामसौ अधिकार. । यान्येतानि पृष्ठानीति । ज्ञाते च तेषां पृष्ठत्वे, तदुपपद्यते न च तत्र ज्ञातम् । कथं तर्हि अयमनुवाद. । लिङ्गसमवायात् । एकं तत्र माहेन्द्रस्तोत्रमिति । षाड़हिकानां पुनः पृष्ठत्वं ज्ञातम् । कथम् । तत्र हि चोदनेत्युक्तम् । तेषां वादे, श्रौत पृष्ठशब्दस्यार्थ. परिगृहीतो भवति।

इतरथा लाक्षणिकः । तस्मात् षाड़हिकानां प्रदेश इति ॥९॥आ०नि०॥

द्वयोर्विधिरिति चेत् ॥ १० ॥

इति चेत् पश्यसि, षाड़हिकानां पृष्ठानां विधिरिति। नैतद् युक्तम् । किं कारणम् । द्विकर एवं सर्वपृष्ठशब्दोऽभ्युपगम्यते । पृष्ठानि च विदधाति । तेषां च सर्वत्वम् । अस्तु । को दोष । असम्भव इत्याह । यदि पृष्ठशब्दः पृष्ठानि विदधाति, सर्वशब्देन न शक्यते विशेषयितुम् । अथानुवदति, तथा शक्यते । पृष्ठानि त्वविहितानि भवन्ति । तेषु असत्सु कस्येदं सर्वत्वं विधीयते । उभयक्रियायाश्च असम्भव. ॥ अथात्र बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते, सर्वपृष्ठो भवतीति । उभे अपि बृहद्रथन्तरे भवतो, नैकमिति । ततोऽयं दोषो न भवति। तस्माद् द्वयोरधिकार ॥१०॥आ०

न व्यर्थत्वात् सर्वशब्दस्य ॥ ११ ॥

नैवमेतत् । कुतः । व्यर्थत्वात् सर्वशब्दस्य । एवं सति सर्वशब्दो व्यर्थो भवति अर्थशून्यः । अयं हि बहुविषयो द्वयोर्न युज्यते । षाड़हिकानां तु विधाने नैष दोषः । ननु च तत्रापि द्विकर शब्दो भविष्यति । उच्यते। न भविष्यति। सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि । ननूक्तं, पृष्ठेष्वसत्सु कस्येदं सर्वत्वं विधीयते ? इति । उच्यते । पृष्ठानां सर्वत्वं हि विहितम्। तत् सम्पादयितव्यम् । न च पृष्ठान्यऽकुर्वता तत् सम्पादयितुं शक्यते । तत्रार्थात् पृष्ठानि करिष्यति । एवं न व्यर्थः शब्दो भविष्यति । सर्वशब्दश्च समर्थितः । तस्मात् षाड़हिकानामतिदेश इति ॥ ११ ॥ आ० नि० ॥ सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम् ॥ ३ ॥

तथावभृथः सोमात् ॥ १२ ॥

वरुणप्रघासेषु श्रूयते । वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीति । तत्र सन्देहः । किं दार्शपूर्णमासिके अपां व्युत्सेके तुषनिष्कासं विधीयते, उत सौमिकादवभृथाद्धर्मातिदेश इति । किं युक्तम् । दार्शपूर्णमासिके गुणविधिः । एवं सन्निहितप्रत्ययोऽनुगृह्यते । सन्निहितो हि असौ चोदकेन प्रापितः । ननु नासौ अवभृथः । उच्यते । अस्ति तत्रावभृथशब्द इति । एष वै दर्शपूर्णमासयोरवभृथ इति । एवं प्राप्ते इदमाह ॥ तथाऽवभृथ. सोमात् ॥ यथा षड़हात् पृष्ठानाम्

अतिदेश' । एवं सौमिकाद् अवभृथादिह धर्मातिदेशः । कुतः । अभिहितो 'यायः । उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेश स्यादिति ॥ १२ ॥ सि० ॥

## प्रकृतेरिति चेत् ॥ १३ ॥

अथ यदुक्तं, दार्शपौर्णमासिके अवभृथे गुणविधिर्भवात्विति । तस्य कः परिहारः ? इत्याभाषान्तं सूत्रम् ॥ १३ ॥ आ० ॥

## न भक्तित्वात् ॥ १४ ॥

नैतद् युक्तम् । कुत । यतो नास्ति दर्शपूर्णमासयोरवभृथः । नन्वेष एव दर्शपूर्णमासयोरवभृथ इति श्रूयते । सत्यं श्रूयते, न त्वेवमवभृथत्वमस्य भवति । कथम् । उच्यते । एष वै दर्शपूर्णमासयोरवभृथ इत्येतस्य वाक्यस्य द्वयी वचनव्यक्ति· । निर्ज्ञातावभृथत्वस्य पदार्थस्य वा दर्शपूर्णमाससम्बन्ध उच्यते । यथा देवदत्तो यज्ञदत्तस्य पुत्र इति निर्ज्ञातपुत्रत्वस्य देवदत्तस्य यज्ञदत्तसम्बन्ध उच्यते । निर्ज्ञातसम्बन्धस्य वा अनिर्ज्ञातावभृथत्वस्य अवभृथत्वम् । यथा, अयमाम्रो यज्ञदत्तस्य पुत्र इति । निर्ज्ञातयज्ञदत्तसम्बन्धस्याम्रपुत्रत्वमुच्यते । तदस्यापां व्युत्सेकस्य दर्शपूर्णमाससम्बन्धः प्रकरणान्निर्ज्ञातो, न अवभृथत्वम् । अतोऽस्यावभृथत्वमुच्यते । न चायमवभृथ' ॥ नन्वयमप्यवभृथो भवतु । नैतद् युक्तम् । अन्यायो हि अनेकार्थत्वम् । कथं तर्हि शब्दप्रयोगः । सादृश्यात् । किं सादृश्यम् । अप्सु सम्बन्धः । स एष भक्त्या प्रशंसावादोऽपां व्युत्सेकस्य, अवभृथ इवायमिति । यथा आम्रे पुत्रवाद । तस्मान्नास्ति दर्शपूर्णमासयोरवभृथः । अतो नात्र गुणविधि ॥ १४ ॥ आ० नि० ॥

## लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गं चैतमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह । नायुर्दो जुहोति, न साम गायति, न वा गमनमन्त्रं जपतीति । सौमिकावभृथधर्माणां प्रतिषेधं ब्रुवन् तद्धर्मप्राप्तिं दर्शयति । तस्मात् सौमिकाद् अवभृथाद्धर्मप्रदेश इति ॥ १५ ॥ ॥ युक्तिः ॥ अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

## द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

वारुणप्राघासिकोऽवभृथः सौमिकाद् अवभृथाद्धर्माणां ग्राहक इत्युक्तम् । तत्रेदं चिन्त्यते । किं पुरोडाशद्रव्यकोऽसौ, उत तुषनिष्कासद्रव्यक इति । कुतः । नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतं, न तु शक्यते विधातुम् । अवभृथोऽत्र विधीयते । अवभृथं यन्तीति । यदि तुषनिष्कासमपरं विधीयते, ततो वाक्यं भिद्येत । अवभृथं यन्ति । तच्च तुषनिष्कासेनेति । तुषनिष्कासश्रवणमिदानीं किमर्थम् । अनर्थकम् । सम्बन्धाभावात् ॥ एवं प्राप्ते ब्रूम । द्रव्यादेशे तद्द्रव्यः । द्रव्यादेश एतस्मिंस्तुषनिष्कासेन अवभृथं यन्तीति । तद्द्रव्यः स्यात्, तुषनिष्कासद्रव्यः । कुतः । श्रुतिसंयोगात् । तुषनिष्कासम्प्रत्यक्षश्रुतं, पुरोडाशस्त्वानुमानिकोऽतिदेशेन प्राप्यते ॥

ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुतः, सामान्येन तु प्राप्यते । तुषनिष्कासं तु विशेषेण । बाध्यते च सामान्यं विशेषेण । अपिच लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासम् । श्रुतिलक्षणयोश्च श्रुतिर्न्याय्या । तस्मात् तुषनिष्कासद्रव्यक इति । अथ यदुक्तं, न सम्बद्ध्यतेऽवभृथेन तुषनिष्कासम् । वाक्यभेदप्रसङ्गादिति । तत्र ब्रूमः । यद्यवभृथं विहाय तुषनिष्कासं विधीयते, ततो वाक्यभेदः स्यात् । तुषनिष्कासद्रव्यकोऽपूर्वोऽवभृथश्चोद्यते । तथा, सगुणकर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्ग्रहणमनर्थकमेव स्यात् । तस्मात्तुषनिष्कासद्रव्यकः । पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । यद्यत्र प्रत्यक्षश्रुतं न द्रव्यं स्यात्, ततः पुरोडाशस्तुषप्रकृतित्वात् स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम् । तस्मान्न पुरोडाशः ॥ १९ ॥ वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

आतिथ्ये श्रूयते, वैष्णवो नवकपालो भवतीति । तथा राजसूये, पूर्वस्मिंस्त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति । तत्र विचारः । योऽयं त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति वैष्णवशब्दः, अयम् आतिथ्यधर्माणां ग्राहको, न ? इति । किं युक्तम् । ग्राहक इति । कुतः । विहितधर्मके कर्मणि दृष्टः शब्दोऽन्यस्मिन् अविहिते श्रूयमाणो ग्राहकः इत्युक्तम् । उक्तं क्रियाभिधानम् इति । तत्रायमपि विहितधर्मकः आतिथ्ये दृष्टः । इदानीमविहितधर्मके त्रिसंयुक्ते दृश्यते । तस्माद्

धर्म्माणां ग्राहक इति । एवं प्राप्ते ब्रूमः—

## गुणविधिस्तु न गृह्णीयात् समत्वात् ॥ १७ ॥

गुणविधिरयम्, आतिथ्यस्य गुणं विष्णुदेवतासंयोगं विदधाति । स एष धर्म्मान् ग्रहीतुं न शक्नोति । कुतः । समत्वात् । समो हि अयमातिथ्ये त्रिसंयुक्ते च । यथा तत्र विष्णुदेवतां विदधाति । एवमत्रापि । श्रुत्यर्थासम्भवाच्च लक्षणया धर्म्माणां ग्राहक कल्प्यते । इह च प्रत्यक्षश्रुत्यर्थ एव सम्भवति देवताविधिः । तस्मान्नायं ग्राहक इति ॥ १७ ॥ वैष्णवशब्दादातिथ्ये धर्मानतिदेशाधिकरणम् ॥ ६ ॥

## निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

पशौ अग्नीषोमीये धर्म्मवान् निर्म्मन्थ्योऽग्निराम्नातः । साध्या वै देवा इत्यारभ्य अग्नौ श्रूयते, निर्मन्थ्येनेष्टकाः पचन्तीति । तथा, दर्शपूर्णमासयोर्बर्हिराज्ये धर्मवती । पशौ श्रूयते, बर्हिषा यूपावटमवस्तृणातीति, आज्येन यूपमनक्तीति । तत्र सन्देह । किं निर्मन्थ्यादयः शब्दा धर्माणां ग्राहकाः, न ? इति । तत्र अधिकरणातिदेशः क्रियते । निर्मन्थ्यादिषु चैवम् । यथा वैष्णवशब्दे । अत्राप्ययं यौगिको निर्मन्थ्यशब्दः, सद्योनिर्मथितमग्निमाह । तथा बर्हिराज्यमिति द्रव्यशब्दौ । ते त्रयोऽपि स्वार्थं विधाय कृतार्था भवन्ति, धर्मान् ग्रहीतुं न शक्नुवन्ति । तस्मान्न ग्राहकाः ॥ १८ ॥ निर्मन्थ्यादिशब्दैर्धर्मानतिदेशाधिकरणम् ॥ ७ ॥

चातुर्मास्येषु श्रूयते- द्वयोः प्रणयन्ति, तस्माद् द्वाभ्यामेतीति । अस्ति तु सोमे प्रणयनं धर्म्मवत् । तथा दर्शपूर्णमासयोरधर्म्मकम् । तत्र सन्देहः । किं सौमिकमेतत् प्रणयनम्, उत दार्शपौर्णमासिकमिति । तत्र सूत्रेणैवोपक्रमः—

## प्रणयनन्तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥

सौमिकमेतत् प्रणयनम् । किं कारणम् । अवाच्यं हीतरद् दार्शपौर्णमासिकम् । चोदकेन प्राप्तत्वात् । कथं पुनरयं प्रणयतिशब्द, प्रणयनमात्रवचन सन् सौमिकं प्रणयनविशेषं शक्नोति वक्तुम् । लक्षणयेति ब्रूमः । तीर्थशब्दवत् । तद् यथा तीर्थशब्दस्तीर्थमात्रवचनः सँस्तीर्थविशेषं धर्म्मसाधनं कदाचिद् ब्रूते, तीर्थयात्रां गत इति ॥ १९ ॥ पूर्व० ॥

## उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥

न वैश्वदेवे उत्तरवेदिमुपवपन्ति न सुनासीरीये इति । प्राप्तिपूर्वो हि प्रतिषेधो भवति, सौमिके च प्रणयने उत्तरवेदिर्न दार्शपौर्णमासिके ॥ २० ॥ युक्तिः ॥

## प्राकृतं वाऽनामत्वात् ॥ २१ ॥

प्राकृतं वा एतत् प्रणयनं, दार्शपौर्णमासिकम् । कुतः । अनामत्वात् । प्रणयनशब्दः सौमिकस्य प्रणयनस्य न नामधेयम् । नैतत् तस्य वाचकमित्यर्थः । यद्ययं तस्य वाचकः स्यात्, ततस्तदिह ब्रूयात् । इदं तु पदार्थनामधेयं, पदार्थस्य प्राङ्नयनस्य वाचकम् । तदिह शक्नोत्यग्नेः प्राचीनं नयनं वक्तुम् । तच्चेह अस्त्येव । तस्मात् तस्य वाचकः । एवं सन्निहितप्रत्ययो न बाधितो भवति ॥

अथ यदुक्तं, तीर्थशब्दवद् भविष्यतीति । अत्र ब्रूमः । तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते । तीर्थयात्रां गत इति तु उक्त्वा कानिचित्तीर्थानि अनुक्रान्तानि । यतोऽसौ तद्विशिष्टार्थो विज्ञायते । यत्र तु केवलः प्रयुज्यते, तत्र तीर्थमात्रमेव ब्रूते । यथा, तीर्थे स्नाति तीर्थमेव हि समानानां भवतीति । अपि च सम्भवति श्रुत्यर्थे, लक्षणाऽर्थोऽग्राह्य । सम्भवति चात्र श्रुत्यर्थः । तस्मान्न लक्षणार्थो ग्राह्य इति ॥ २१ ॥ सि० ॥

## परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥

तत्राह । यदुक्तम्– अवाच्यं हीतरदिति । तस्य कः परिहारः । उच्यते । परिसङ्ख्यार्थं वा स्यात् । द्वयोः प्रणयन्ति, न चतुर्ष्विति । गुणार्थम् । अर्थवादार्थं वा । तस्माद् द्वाभ्यामेतीति । तत्र परिसङ्ख्यायां तावत् त्रयो दोषाः । गुणोऽपि न कश्चिद् विधीयते । परिशेषादर्थवादार्थम् । नन्वर्थवादोऽपि निष्प्रयोजन । प्रणयनस्य प्राप्तत्वात् । अर्थवादस्य प्रयोजनमुत्तरस्मिन्नधिकरणे वक्ष्याम । मध्यमयोर्वा गत्यर्थवादादिति ॥ २२ ॥ आ० नि० ॥ द्वयोः प्रणयन्तीत्यनेन सौमिकधर्मानातिदेशाधिकरणम् ॥ ८ ॥

## प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥

द्वयोः प्रणयन्तीति श्रूयते । तत्र सन्देह । कतरयोर्द्वयोरिति । अनियमे प्राप्ते, उच्यते । प्रथमोत्तमयोः प्रणयनम् । कुतः । उत्तर-

वेदिप्रतिषेधात् । तत्रोत्तरवेदिं प्रतिषिद्ध्यते । न वैश्वदेवे उत्तरवेदिमुपवपन्तीति, न सुनासीरीये इति । अस्मिन् प्रणयने उत्तरवेद्यामग्निनिधानं विहितम् । अतो यत्र प्रणयनं, तत्रोत्तरवेदिप्राप्तिः । प्राप्तौ च सत्यां प्रतिषेधः । प्रथमोत्तरयोश्चासौ । तस्मात् तयोः प्रणयनमिति ॥ २३ ॥ पूर्व० ॥

## मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥

मध्यमयोर्वा पर्वणोः प्रणयनम् । कुतः । गत्यर्थवादात् । गत्यर्थवादेनैतद् द्वयोः प्रणयनमुच्यते । तस्माद् द्वाभ्यामेतीति । ऊरू संस्तुते वा एते पर्वणोः, ऊरू वा एतौ यज्ञस्य, यद् वरुणप्रघासाश्च साकमेधाश्चेति । ऊरू च गमनसाधने तत्रैवं स्तुतिसम्बन्धो विज्ञायते । ऊरू यज्ञस्य, वरुणप्रघासाश्च साकमेधाश्चेति, तयोर्द्वयोः प्रणयन्ति । तस्माद् द्वाभ्यामूरुभ्यां यज्ञः समाप्तिं याति । प्रणयनेन हि तौ बलवन्तौ भवतः । अङ्गभूयस्त्वादिति । एतत् तदर्थवादस्य प्रयोजनम् ॥ २४ ॥ सि० ॥

अथ यदुक्तम्, उत्तरवेदिप्रतिषेधादिति । तत्र ब्रूमः—

## औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

अनारभ्य कञ्चित् पर्वविशेषं चातुर्मास्येषूत्तरवेदिराम्नाता—उपात्र वपन्तीति । तस्यानारभ्य विधेरयं प्रतिषेधः । ननु वरुणप्राघासानां गुणवाक्यप्राप्तौ एव अयं तेषामेव अत्र इति वादः स्यात् । नैतदेवम् । प्रकरणाच्चातुर्मास्यानामेव । यदि वरुणप्रघासानां वादः स्यात्, तत्र प्रतिषेधे त्रीण्यपि पर्वाणि उत्कीर्त्तयेत् । अथोच्येत, द्वयोः पर्वणोर्वादो भवत्विति । अत्र ब्रूमः । न द्वयोः पर्वणोः प्रकरणं, चातुर्मास्यानां वा प्रकरणं, वरुणप्रघासानां वा । वरुणप्रघासानां द्वयोः प्रकरणे पर्वणोरुत्कीर्त्तनं प्रतिषेधे न स्यात् । तस्माच्चातुर्मास्यानामेव वादः । नन्वेवमपि अर्थवादेनैतज्ज्ञातं, मध्यमयोः प्रणयनमिति । किमर्थं प्राप्तस्य प्रणयनस्य पुनःश्रवणमिति । अत्र प्रयोजनं नोक्तम् । असति प्रयोजनेऽन्यस्मिन् परिसङ्ख्यार्थमेव भवति । तत्र दोषा उक्ताः । तस्माद् गुणार्थमेवैतच्छ्रवणम् । ननु नास्ति कश्चिद् गुणः ? । उच्यते । गुणः श्रूयते, उत्तरवेद्यामग्निनिधानम् । तस्मात् तदर्थो

पुनः श्रुतिः ॥ २५ ॥ आ० नि० ॥ द्वयो प्रणयन्तीत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम् ॥ ९ ॥

स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात् ॥ २६ ॥

गवामयने श्रूयते, अभितो दिवाकीर्त्यमहस्त्रयः स्वरसामानो भवन्तीति । तेषां विशेषधर्मा आम्नाताः । यथा, सप्तदशा भवन्ति, सन्ततयाऽतिग्राह्या गृह्यन्ते इत्येवमादय । पुनरन्यत्र श्रूयते, पृष्ठ्यः षडहो द्वौ स्वरसामानौ इति । तथा वैश्वदेवे श्रूयते, द्यावापृथिव्य एककपाल इति । तत्र आम्नाता विशेषधर्माः, सर्वहुतं जुहोत्यपर्य्यावर्त्तयञ्जुहोतीति । पुनरपरत्र, काय एककपाल इति । तत्रैव श्रूयते । वैश्वदेव्यामिक्षा इति । तत्रापि विशेषधर्माः केचिद् आम्नाताः । पुनरन्यत्र, मैत्रावरुणी आमिक्षा इति । तत्र सन्देह । किं स्वरसामशब्दोऽन्यत्र श्रूयमाणो गवामयनिकेभ्यः स्वरसामभ्यो धर्माणां ग्राहकः ? उत नेति । एवमेककपाल मिक्षाशब्दावपि ॥

तत्र गुणविधिस्तु न गृह्णीयात् । समत्वादित्यग्रहणे प्राप्ते, इदमुच्यते । स्वरसामैककपालामिक्षञ्च धर्माणां ग्राहकम् । किं कारणम् । लिङ्गदर्शनात् । लिङ्ग तत्र तादृशं दृश्यते । येन ज्ञायते, सर्वे एते धर्माणां ग्राहका इति । स्वरसामसु तावत् पृष्ठ्य षडहो द्वौ स्वरसामानौ इत्युक्त्वा आह । तत्र यत्तृतीयं सप्तदशमहस्तत् त्रयस्त्रिंशस्य स्थानमभिपर्य्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय त्रयाणां च सप्तदशानाम् अनूचीनताया इति । यद्येतौ स्वरसामानौ, गवामायनिकानां धर्माणां ग्राहकौ,तत्रैतावपि सप्तदशौ। तथाऽत्र त्रयः सप्तदशा अनूचीना भवन्ति। तत्रैतद्वचनं युज्यते। त्रयाणां सप्तदशानामनूचीनताया इति ॥ तथा आग्रयणे, द्यावापृथिव्यमेककपालं विधाय आह, यत् सर्वहुतं करोति, सा त्वेका परिचक्षा, हुतो हुतः पर्य्यावर्त्तते सा द्वितीया । आज्यस्यैव द्यावापृथिव्यौ यजेतेति आज्यविधिपरे वाक्ये सर्वहोममपर्य्यावृत्तिञ्च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति ॥ तथा मैत्रावरुण्यामामिक्षायां न वाजिनेन प्रचरन्तीति वाजिनेज्यां वैश्वदेविकं धर्मं प्रतिषेधँस्ततो धर्मप्राप्तिं दर्शयति । एतेभ्यो लिङ्गेभ्य एतज्ज्ञायते, यथास्वं धर्माणां ग्राहका इति । प्रतिपत्त्यर्थकर्म वाजिनेज्यां स्विष्टकृत्तुल्यां मत्वा एतदुक्तम् । आह । लिङ्ग-

मपदिष्टम् । कुत· प्राप्तिरिति ? । उच्यते । लक्षणया प्राप्तिर्लिङ्गात्तु लक्षणापरिग्रहः ॥ २६ ॥ सि० ॥

## चोदनासामान्याद्वा ॥ २७ ॥

स्वरसामत्वसामान्याद्, एककपालत्वसामान्याद्, आमिक्षासामान्याद्वा यस्य लिङ्गम्, अर्थसंयोगादित्यनेन प्राप्तिरिति ॥ २७ ॥ हेतुः ॥ स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् ॥ १० ॥

क्वचिच्छ्रूयते— वासो ददाति, अनो ददातीति । तत्र विचार्य्यते । किं वाससोऽनसश्च क्रिया प्राप्यते, उत नेति । तत्राह । एवं तावद् नः परीक्ष्यम् । किं कर्मनिमित्तावेतौ शब्दौ, उत आकृतिनिमित्ताविति । यदि कर्मनिमित्तौ, तत प्राप्यते । अथाकृतिनिमित्तौ, ततो न? इति । किं तावत् प्राप्तम् । कर्म्मनिमित्ताविति । कुतः । कर्मागमे तद्दर्शनात् । यदा तस्मिन् द्रव्ये दारुणि सूत्रे वा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति, तदैतौ शब्दौ प्रवर्त्तेते, न प्राक् । अतो विज्ञायते, कर्मनिमित्ताविति । यदा कर्मनिमित्तौ, तदेतदारभ्यते—

## कर्मजे कर्म यूपवत् ॥ २८ ॥

कर्मजे एतस्मिन् वासआदौ द्रव्ये श्रूयमाणे, कर्म प्राप्यते । कथम् । यूपवत् । यथा यूपशब्दो जोषणादिक्रियानिमित्त । स यत्र श्रूयते, तत्र जोषणाद्या क्रियाः प्राप्यन्ते । एवमिहापीति ॥२८॥ पूर्व० ॥

## रूपं वाऽशेषभूतत्वात् ॥ २९ ॥

अत्रोच्यते, नैतौ कर्मनिमित्तौ । किं कारणम् । ये नैमित्तिकाः शब्दा', ते निमित्तमुपलभ्य प्रयुज्यन्ते । यथा दण्डी छत्रीति । इमौ त्वनुपलभ्य क्रियाम्, आकृतिमात्रे प्रयुज्येते । तस्मान्नैतौ क्रियानिमित्ताविति । अत्रोच्यते । आकृत्या क्रियामनुमाय ततः शब्दं प्रयुङ्क्ते इति । अत्र ब्रूमः । प्रत्यक्षां निमित्ततां गम्यमानामुत्सृज्य, अदृष्टायां क्रियायां निमित्तत्वकल्पनायां हेतुर्नास्तीति । यत्तूक्तं, क्रियोत्तरकालं प्रवृत्तिदर्शनादिति । अत्र ब्रूम । प्राक् क्रियाया आकृतिरनभिव्यक्ता । सा क्रियया अभिव्यज्यते । यतः क्रियोत्तरकालं शब्दप्रयोगः । तस्मादाकृतिनिमित्तौ । यद्येवं, तदा सिद्धं रूपं देयम् । कुतः । अशेषभूतत्वात् । नात्र क्रिया शेषभूता । क्रियावाचिनः शब्दस्याभावात् । यूपे तु प्रत्यक्षविहिता जोषणाद्याः क्रिया· । यूपवदिति । अतुल्योप-

न्यासः ॥२९॥ सिद्धान्तः ॥ वासो ददातीत्यादौ वासआदिशब्दाना-माकृतिनिमित्तताधिकरणम् ॥ ११ ॥

विशये लौकिकः स्यात् सर्वार्थत्वात् ॥ ३० ॥

गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य श्रूयते, अग्निमुपनिधाय स्तुवते इति । अत्र विशयः । किं लौकिकोऽग्निरुपनिधेयः, उत वैदिक इति । किं प्राप्तम् । वैदिक इति । कुतः । सर्वकर्मार्थ उत्पन्नोऽसौ । यानि अहं कर्माणि करिष्ये येष्वास्मि अधिकृत इति । अतो वैदिक उपनिधेय इति । एवं प्राप्ते उच्यते । विशये लौकिकः स्यात् । सर्वार्थत्वात् । एतस्मिन् विशये, लौकिकं वैदिकम् ? इति, लौकिकः स्यात् ॥ ३० ॥ सि० ॥

अथ यदुक्तं, वैदिकं सर्वकर्मार्थमुत्पन्नम् । तस्मात् तदुपनिधेय-मिति । अत्र ब्रूमः—

न वैदिकमर्थनिर्देशात् ॥ ३१ ॥

न वैदिकमग्निद्रव्यं शास्त्रेणोत्पादितम् । तस्य शास्त्रेणैव कार्य्यं निर्दिष्टम् । यदाहवनीये जुहोतीत्यारभ्य तस्मिन् सर्वार्थे कल्प्यमाने निर्देशोऽनर्थकः स्यात् । तस्माल्लौकिकोऽग्निरुपनिधेयः । सर्वार्थत्व-ञ्चैषां स्वे स्वे कार्य्ये वर्त्तमानानां भविष्यति । एवमुभयमविरुद्धम् । सर्वार्थत्वं निर्देशश्चेति ॥ ३१ ॥ पूर्वपक्षनिरासः ॥

अथ धिष्ण्या अग्नयः कस्मान्नोपनिधीयन्ते ? । अत्रोच्यते—

तथोत्पत्तिरितरेषां समत्वात् ॥ ३२ ॥

इतरेषामप्यग्नीनां धिष्ण्यानां तथोत्पत्तिः, न सर्वार्थ इत्यर्थः । कुतः । समत्वात् । एतेऽपि इतरैरग्निभिः समाः । एतेषामपि निर्दिष्टं कार्य्यं, प्रागासीनो धिष्ण्यान् आघारयतीति । अतस्ते नोपनिधेया इति ॥ ३२ ॥ ॥ आ० नि० ॥ गर्गत्रिरात्रे लौकिकेऽग्नौ उपनिधाना-ऽधिकरणम् ॥ १२ ॥

संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥

एकादशिन्यां श्रूयते, उपशयो यूपो भवतीति । तत्र सन्देहः । किमेतदुपशयद्रव्यं संस्कृतं, जोषणादयः संस्कारा अत्र कर्त्तव्या ? उत नेति । किं युक्तम् । संस्कृतं स्यात् । कर्त्तव्या अत्र जोषणादयः संस्काराः । कुतः । तच्छब्दत्वात् । अयं यूपशब्दः संस्कारनिमित्तः ।

स एषोऽसत्सु संस्कारेषु नोपपद्यते । तस्मात्ते कार्य्या इति ॥३३॥पूर्व०॥

**भक्त्या वाऽयज्ञशेषत्वाद् गुणानामभिधानत्वात् ॥३४॥**

न वा कर्त्तव्याः । कुतः । अयज्ञशेषत्वात् । एते संस्कारा अस्मिन् काष्ठे क्रियन्ते । एतेन द्वारेण, यजतिना सम्भत्स्यन्ते । इत्थं संस्कृते काष्ठे नियुक्तेन पशुना यजिः क्रियमाणोऽपूर्वं निर्वर्त्तयति । अस्मिंश्चोपशये न पशुर्नियुज्यते, तत्र कृताः संस्कारा अनर्थकाः स्युः । ननु वचनसामर्थ्याददृष्टार्था भविष्यन्ति । उच्यते । नात्र वचनं, यूपः कर्त्तव्य इति । वर्त्तमानापदेशोऽयम् । ननु वर्त्तमानापदेशोऽपि न घटते संस्काराणामभावे । उच्यते । भक्त्या भविष्यति । यथा, यजमानो वै यूप इति । आह । तत्र सादृश्यात् । इह पुनः कथमिति । उच्यते । गुणानामभिधानत्वात् । यूपगुणानां यूपसंस्काराणामभिधानत्वाद् यूपसंस्काराः । तत्र केचिदर्थप्राप्ताश्छेदनादयस्तूष्णीङ्कृताः सन्ति । तैरयमभिधीयते, यूप इति, अयूपः सन् । यथा स्नाता कन्या अनलङ्कृता मालागुणेनापि अलङ्कृता इति । एवमेकदेशेनापि संस्काराणां, संस्कृत इति स्तुत्याऽभिधीयते ॥ ३४ ॥ उपशयो यूपो भवतीत्यादौ यूपशब्दस्य संस्काराप्रयोजकताधिकरणम् ॥ १३ ॥

अग्नौ श्रूयते, पृष्ठैरुपतिष्ठन्ते इति । तत्र चिन्त्यते । किं पृष्ठधर्म्माः कर्त्तव्याः, उत नेति । के पुनस्ते । सामान्यधर्म्मा – हिङ्कारादयः, विशेषधर्म्मा – रथन्तरे प्रस्तूयमाने, पृथिवीं मनसा ध्यायेद् बृहति समुद्रमित्येवमादयः । किं तावत् प्राप्तम् । तत आह । एतत् तावद् नः परीक्ष्यम् । किमयं पृष्ठशब्दः कर्म्मणो वाचकः, उत द्रव्यस्येति । ननु सिद्धमेतत् कर्म्मनामधेयं पृष्ठशब्द इति, यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्ध इत्यत्र । तास्वेव चोदनास्वेतदुक्तम्– सप्तदशानि पृष्ठानि, वैरूपं पृष्ठं, वैराजं पृष्ठमिति । इदानीं, पृष्ठैरुपतिष्ठन्ते इत्यस्यां चिन्त्यते । किं पुनरत्र युक्तम् । तत आह—

**कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् ॥ ३५ ॥**

कर्म्मणः पृष्ठशब्दः स्यात् । कुतः । तथाभूतोपदेशात् । तथाभूतः सन्नुपदेशः । यत्रायं पृष्ठशब्दः कर्म्मनाम अधिगतस्तथाभूतोऽयमपि । किमस्य तथात्वम् । पृष्ठशब्दसामान्यम् । पृष्ठशब्दस्तत्र कर्मवचनोऽधिगतः । स एवायम् । तस्मादिहापि तद्वचन एवावगन्तव्यः । विशे-

षाभावात्। यद्यन्यार्थः कल्प्येत, एकः शब्दोऽनेकार्थः स्यात्। तत्र को दोषः। शब्दे उच्चरिते संशयः स्याद्, न अर्थप्रत्यय। तत्र व्यवहारो न सिद्ध्येत्। व्यवहारार्थश्च शब्दप्रयोगः। कारणान्तरंच प्रकरणाद्यपेक्ष्यम्। एकार्थत्वे तु निरपेक्षोऽर्थप्रत्ययः। तस्मादनेकार्थत्वमन्याय्यम्। तस्मात् कर्मनाम पृष्ठशब्दः। यदा कर्मनाम, तदा यदि तावत् तानि कर्माणीहोपदिश्यन्ते, तत्र उत्पत्तिरेषामनर्थिका। अथ मा भूदेष दोष इत्येतदुपस्थानं, तत्र विज्ञायते। तत इदं प्रकरणं बाध्येत। तस्मात् सादृश्यविधिरयम्। पृष्ठैरुपतिष्ठन्ते। पृष्ठसदृशै· कर्मभिरुपतिष्ठन्ते इति। तत्सादृश्यं च धर्मैर्भवति। तस्मात् कर्त्तव्या धर्मा इति॥३५॥ पूर्व०॥

## अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात्॥ ३६॥

न चैतदेवं, कर्मणः पृष्ठशब्द इति। किन्तर्हि। द्रव्येषु पृष्ठशब्दः स्यात्। ऋग्द्रव्येषु अभित्वा शूर नो नुम इत्येवमादीनाम् ऋचां वाचकः। कुतः। अभिधानोपदेशात्। अभिधानोपदेशोऽयं पृष्ठैरुपतिष्ठन्ते इति। पृष्ठैरभिदधातीत्यर्थ। कथं पुनरयमुपस्थानवचनोऽभिधानार्थः शक्यो विज्ञातुम्। उच्यते। उपग्रहविशेषान्मन्त्रकरणे उपतिष्ठतेरात्मनेपदं भवति। मन्त्रस्त्वभिधानस्य करणं, नोपस्थानस्य। उपस्थानं शरीरेण क्रियते, मनसा वा। तस्मादभिधानार्थं। स एष विप्रतिषेध·। यदि पृष्ठशब्दः कर्मसु कल्प्यते, आत्मनेपदं बाध्यते। न हि तदा मन्त्रः करणं भवति। अथ आत्मनेपदमनुरुद्ध्यते, उपस्थानविप्रतिषेधस्तदा अभिधानार्थता आपतति। तत्र आत्मनेपदानुरोधो न्याय्य·। पृष्ठशब्दो हि लक्षणया पृष्ठसाधनं मन्त्रं ब्रुवन् अर्थवान्। आत्मनेपदं तु मन्त्रकरणेनैवोपपद्यते। अत पृष्ठसाधनेषु मन्त्रेषु पृष्ठशब्दः॥ आह। नैतद् युक्तम्। उपस्थानार्थता हि श्रुत्या उपतिष्ठतेः। आत्मनेपदाल्लिङ्गादभिधानार्थता। न च लिङ्गेन श्रुतिर्बाधितव्या। उच्यते। नैवात्र श्रुतिर्बाध्यते। स्वार्थमेवोपतिष्ठतिराह समीपस्थानम्। तत्त्वभिधानाय। अभिधानं निर्वर्त्तयितुम्। अग्निसमीपे तिष्ठादिति तिष्ठातिराह आत्मनेपदात्। ततोऽविरोधः॥ आह। एवमप्यभिधानस्य मन्त्रः करणं, नोपतिष्ठतेः। तत्रासम्बन्ध एवोपस्थानस्य मन्त्रेण। तथा, पृष्ठैरुपतिष्ठन्ते इतिसमुच्चारणमनर्थकं स्यात्। उच्य-

ते । अभिधानमभिनिर्वर्त्तयन् मन्त्र उपस्थानस्य करणं भवति । यतोऽस्य प्रयोजनं निर्वर्त्तयति । न हि निष्प्रयोजनमनुष्ठीयते । तस्माद् मन्त्रेष्वेव पृष्ठशब्दः । मन्त्रेषु चेद्, नास्ति धर्माणां प्राप्तिः । न हि मन्त्राणां प्राप्तिर्न हि मन्त्राणां धर्माः । अधर्मकास्त इति ॥ ३६ ॥ ॥ सिद्धान्तः ॥ पृष्ठैरुपतिष्ठन्ते इत्यादौ पृष्ठशब्दस्य ऋग्द्रव्यवाचिताधिकरणम् ॥ १४ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य तृतीयः पादः ॥ ७ ॥ ३ ॥

अथ सप्तमस्य अध्यायस्य चतुर्थः पादः ॥ ७ ॥ ४ ॥

## इतिकर्त्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

अनारभ्य किञ्चिच्छ्रूयते, सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति । तत्रैषोऽर्थः समधिगत । यागोऽयं चोद्यते इति । यजतिस्तु द्रव्यफलभोक्तृसंयोगादेषां कर्मसम्बन्धाद् इति । तथेदमप्युक्तं, कर्मफलयो सम्बन्धे कर्म गुणत फलं प्रधानत इति । प्रत्यर्थं चाभिसंयोगात् । कर्मतो हि अभिसम्बन्धः । तस्मात् कर्मोपदेशः स्याद्— इति । इदमपि चोक्तं, यजिरपूर्वं साधयति । ततश्चापूर्वात् कालान्तरे फलं भवतीति, चोदना पुनरारम्भः — इत्यत्र । एवमेतस्मिन् सति, सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्यत्र सौर्य्ययागेन अपूर्वं कृत्वा ब्रह्मवर्चसं साधयेद् ब्रह्मवर्चसकाम इत्येवं विज्ञायते ॥ आह । यत्र तृतीयायुक्तो यजिस्तत्र युक्तो गुणभावाऽभ्युपगमः । यथा, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । इह त्वसत्यां तृतीयायां कथं तृतीयार्थो गम्यते इति । उच्यते । किमत्र तृतीयानिर्दिष्टेन यजिना कार्य्यम् ? यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभावः । यत्राप्यसौ श्रुतस्तत्राप्यकिञ्चित्कर एव । गतार्थत्वात् । तथा, यत्रापि द्वितीया श्रुतिः । यथाऽग्निहोत्रं जुहुयादिति । तत्रापि विभक्तिव्यत्ययो वा ईप्सितत्वस्य वाऽविवक्षा कामं वा आनर्थक्यं स्याद्, न तु कथञ्चिदपि कर्मणः प्रति गुणभावः शक्योऽपह्नोतुम् । तस्माद् यागेनापूर्वसाधनमत्रोच्यते । तत्र यागो विज्ञायते । लौकिकोऽसौ पदार्थः । तेन तु कथमपूर्वं साध्यते इत्येतद् न विज्ञायते । इह तु यागेन अपूर्वं साधयेदित्येतावदेवोक्तम् । कथं साधयेदितीतिकर्त्तव्यता नोक्ता । येषां चार्थानां ज्ञायत एवेतिकर्त्तव्यता, तेषां कर्त्तव्यत्वमात्रमुपदिश्य-

ते । यथा ओदनं पचेदिति । येषां तु न ज्ञायते, ते सह इतिकर्त्तव्यतया एवोपदिश्यन्ते। यथा दर्शपूर्णमासौ । एवं चेद् नूनं ज्ञायते, यागेन अपूर्वनिर्वृत्तौ इतिकर्त्तव्यता यस्मादुक्ता, तस्मान्न्यूनमसावस्तीति ॥ आह । यद्यस्ति लोके, ततो ज्ञायेतैव । अथ नास्त्येव, कथं शक्या ज्ञातुमिति । उच्यते । बाढमस्ति लौकिकी वैदिकी च । लौकिकी तावत् पार्वणस्थालीपाकादिषु, वैदिकी दर्शपूर्णमासादिषु । यदि तत्पूर्वा एताश्चोदनास्तदपेक्षाः सौर्य्ययागेनापूर्वं साधयेद् यथाज्ञातया इतिकर्त्तव्यतयेति । ततो युक्त इतिकर्त्तव्यताया अविधिः । न च विधीयते । अत इतिकर्त्तव्यताया अविधेर्यजतेः पूर्ववत्त्वं, विहितेतिकर्त्तव्यताकत्वमिति ॥

अथ ये आहुः— यजेत यागं कुर्य्यादिति । जुहुयाद् होमं कुर्य्यादिति । तेषां, किं नैव धर्माकाङ्क्षा भवति ? । भवतीति ब्रूमः । यद्यपि, प्रज्ञातेतिकर्त्तव्यतो यजिर्द्रव्यं देवतां प्रत्युत्सृज्यते इति । तथापि यदा फलार्थः क्रियते, तदा धर्मान् आकाङ्क्षति । न हि अधर्मकात् फलं भवति । कथं ज्ञायते । यो हि अमेध्यं द्रव्यमुच्छिष्टः शयानो वा प्रौढपादो वामेन हस्तेन वा, पादेन, यथाकथञ्चिद्देवतायै उत्सृजति, तस्य फलं न भवतीति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमना मन्त्रवन्नियमवत् देवतायै उत्सृजति, तस्य फलं भवतीति स्मरन्ति । तस्माद् यावान् यजतिः फलायाम्नायते, स सर्वो धर्मान् आकाङ्क्षति । अतस्तेषामप्यस्ति धर्माकाङ्क्षा । सत्यामाकाङ्क्षायां सन्निहितैर्धर्मैरविप्रतिषिद्धः सम्बन्धः प्रकृतौ त्वानुमानिकैः ॥ १ ॥ सौर्ये चरौ इतिकर्तव्यतावत्त्वाऽधिकरणम् ॥ १ ॥

स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् ॥ २ ॥

अधुनैवं चिन्त्यते । किमनियमः । लौकिकी वैदिकी वा इति कर्त्तव्यता, उत लौकिकी एव, आहोस्विद् वैदिकीति । अत्र विशेषाभावादनियमे प्राप्ते, उच्यते । स लौकिकः स्यात् । स खलु कर्त्तव्यतोपायो लौकिकः स्यात् । कुत ? । दृष्टप्रवृत्तित्वात् । दृष्टा हि अस्य तत्र तत्र प्रवृत्तिः । यथा पार्वणस्थालीपाके अष्टकाचरौ आग्रहायणीयकर्मणि, इत्येव यत्र यागेन अपूर्वं साध्यते, तत्र तत्रास्य प्रवृत्ति-

इष्टा । अतोऽन्वयाद् विज्ञायते, यागस्यापूर्वं साधयतोऽयमुपाय इति । अयञ्चापि याग. । तस्मादस्यापि स एवाभ्युपायः ॥ २ ॥ पूर्व० ॥

## वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥

आह, किमेष एवोत्सर्गः । सर्वत्र लौकिकीतिकर्त्तव्यतेति । एवं खलु प्राप्तम् । एवं प्राप्ते ब्रूमः, वचनात्तु ततोऽन्यत्वमिति । यत्र प्रत्यक्षं वचनं वैदिक्या , तत्र न लौकिकी स्यात् । वचनसामर्थ्याद् वैदिकी एव स्यात् । यथोपसत्सु गृहमेधीये च ॥ ३ ॥ आ० नि० ॥

## लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥

लिङ्गेन वा इतिकर्त्तव्यता नियम्येत । कतरा । यस्या लिङ्गम् । वैदिक्याश्च लिङ्गम् । तस्माद् वैदिकी । किं पुनर्लिङ्गम् । सौर्य्ये तावच्चरौ श्रूयते, प्रयाजे कृष्णलं जुहोतीति । तथा ऐन्द्रबार्हस्पते, अर्द्धं बर्हिषो लुनाति, अर्द्धं न, स्वयन्दितमर्द्धं वेद्याङ्कुरोत्यर्द्धं न इति । तथा पितृयज्ञे न होतारं वृणीते न आर्षेयमिति । एतैर्लिङ्गैर्ज्ञायते वैदिकी इतिकर्त्तव्यतेति । कथम् । तद्गुणत्वात् । एते हि प्रयाजादयो वैदिकस्य अपूर्वस्य गुणाः । यदि च तदीयेतिकर्त्तव्यता प्रवर्त्तिता, तत एतेषु कर्मसु एते सन्ति । तत्रैतानि वचनान्युपपद्यन्ते, प्रयाजे प्रयाजे कृष्णलं जुहोतीत्येवमादीनि । तस्माद्वैदिकीइतिकर्त्तव्यता नियम्येत ॥ ४ ॥ सि० ॥

## अपिवाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः॥५॥

अपिवा नैवं स्याद्, वैदिकी इतिकर्त्तव्यतेति । यत्कारणम् एतैर्लिङ्गैर्न शक्यते वैदिकी नियन्तुम् । कुतः । अन्यायपूर्वत्वात् । न्यायपूर्वकं हि वचनं तत्साधकं भवति । न चैतानि न्यायपूर्वाणि । न हि वैदिक्याः प्रवृत्तिर्युक्ता । निबद्धा हि सा प्रकरणादिभि कारणैर्दर्शपूर्णमासादिषु । कथं तर्हि एतानि लिङ्गानि । उच्यते । यत्र नित्याऽनुवादवचनानि स्यु । इह तावद्, अर्द्धं बर्हिषो लुनाति अर्द्धं न इति, बर्हिर्यत्रैव भविष्यति । यत्कारणं, सतो बर्हिष उच्यते । न चेहास्ति बर्हिः । न होतारं वृणीते न आर्षेयमिति नित्यानुवादो भविष्यति ॥ ननु नित्यानुवादः सन् अनर्थको भवति । किं क्रियतां, यस्यार्थो नास्ति । प्रयाजे प्रयाजे कृष्णलं जुहोतीतिवचनं प्रयाजानां भविष्यति। कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च शक्यो वक्तुम् । भिद्यते हि

तथा वाक्यम् । एवं तर्हि न प्रयाजान् वक्ष्यति । प्रयाजे कृष्णलहोमं विधास्यति । न चासत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्त्तुमित्यर्थात् प्रायाजान् करिष्यति । तस्मान्न लिङ्गेन वैदिक्या नियमः । यथोक्तेन न्यायेन लौकिकीतिकर्त्तव्यतेति ॥ ५ ॥

## मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥६॥

तत्राह । अथ कस्मान्नोभे अपि इतिकर्त्तव्यते सह प्रवर्त्तेते इति । किमेवं भविष्यति । एवं तुल्यापेक्षा कर्मणामन्यतरतो न बाधिता भवति । उच्यते । सह प्रवृत्तौ एकया चेत् कर्मनिरपेक्षं कृतं, द्वितीयस्याः प्रवृत्तिर्विप्रतिषिद्धा । अतो मिथः प्रवृत्तेर्विप्रतिषेधाद् यथार्थकल्पना स्यात् । एकस्याः प्रवृत्तिः स्यादित्यर्थः । कथमेकस्याः प्रवृत्तेर्धर्माणां यथार्थकल्पना भवति। ये धर्मा येषु कार्य्येषु प्रकृतौ उत्पन्नास्ते इहापि तेष्वेव भवन्ति । इतरथा द्वितीयस्या धर्मा अयथार्थाः भवेयुः पूर्वैर्धर्मैः । तेषां कार्य्याणां निर्वर्त्तितत्वात् । एवमेकस्याः प्रवृत्तेर्यथार्थकल्पना भवति । अतो यथार्थकल्पना स्यादित्यनेन एकस्याः प्रवृत्तिरित्युक्तं भवेत् । एकस्याः प्रवृत्तौ यथोक्तेनैव न्यायेन लौकिक्या प्रवृत्तिरिति ॥ ६ ॥ आ० ॥

## भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवद् यथा धेनुः किशोरेण ॥ ७ ॥

तुशब्दः पक्षनिवृत्तौ । न त्वेवं स्यात्, लौकिकी इतिकर्त्तव्यतेति । किन्तर्हि वैदिकी नियम्येत । कुतः । भागित्वात् । वैदिकी अपि भागिनी प्रवृत्तिः । साऽपि हि अपूर्वस्य इतिकर्त्तव्यता । समाने च भागित्वे उभयोर्वैदिकी एव स्यात् । गुणानामभिधानत्वात् । गुणा एते प्रयाजादयः सौर्य्यादिषु दृश्यमाना अभिधायका भवन्त्येतस्यार्थस्य। यथा वैदिकी अत्रेतिकर्त्तव्यतेति बोधका भवन्तीत्यर्थ ॥

कस्मात् ? । सम्बन्धात् । एते हि तयेतिकर्त्तव्यतया सम्बद्धाः । अतः साहचर्य्यात् तां गमयन्ति । अभिधानवत् । यथा कौण्डपायिनामयने अग्निहोत्रमित्यभिधानं कर्मणो वाचकम् । तत् कर्म सहचरितान् धर्मानानयति । तेष्वसत्सु एतदभिधानमिह न युज्यते इति तेषां धर्माणां तत्र भावो विज्ञायते । एवम् इहाऽपि प्रयाजादीनां

दर्शनमसत्यां वैदिक्यां न युज्यते इति, तस्या अपीह भावो विज्ञास्यते । नन्वसति न्याये लिङ्गमकारणम् । सत्यमेवम् । उक्तस्तु न्यायो भागित्वादिति । यत्तु दृष्टप्रवृत्तिर्लौकिकीति । तत्र ब्रूमः । यद्यपि दृष्टप्रवृत्तिः स्यात्, तथापि वैदिकी एव नियम्येत । कथम् । यथा धेनुः किशोरेण । तद् यथा, कृष्णकिशोरा धेनुरिति । यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिस्तथाप्यभिधानसामान्यादश्वधेन्वामपि भागीति किशोरेण लिङ्गेन अश्वधेन्वां विज्ञायते । एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्ति , तथापि इतिकर्त्तव्यतासामान्येन भागित्वाल्लिङ्गेन वैदिकी विज्ञेया ॥ ७ ॥ आ० नि० ॥

**उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥८॥**

अथ वा नैव लिङ्गेन नियम इति । कुतः । उत्पत्तीनां समत्वात् । धर्म्माणां प्रयाजादीनामुत्पत्तयः समाः, सर्वेषामाग्नेयाद्यङ्गभावेन, न परस्पराङ्गत्वेन । किमतः । यदि प्रयाजादीनामनुयाजादयोऽङ्गानि स्युस्ततो यत्र प्रधानं, तत्र अङ्गानीति प्रयाजदर्शनेन अनुयाजादयोऽनुमीयेरन् । यदा तु समप्रधाना एते, तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन्, प्रयाजधर्म्मा वा । न त्वनुयाजादयः । तस्माल्लिङ्गमनियामकम् । यत्तु, अभिधानवदिति । अत्र ब्रूमः । युक्तं तत्र । तत्र हि परशब्दः परत्र प्रयुक्तः सन् धर्म्मानतिदिशतीत्युक्तम् ॥ अपि च, विधिरसौ । अग्निहोत्रवद्धोतव्यमिति । अयं पुनरनुवाद । तेनात्र प्रयाजादीनामेव नास्ति प्राप्तिः, कुतोऽनुयाजादीनाम् । तस्माद् विषम उपन्यासः, अभिधानवदिति । अतो यथाधिकारं भाव स्यात् । ये धर्म्मा यस्यापूर्वस्याधिकारे आम्नातास्ते तत्रैव भवेयु ॥ ८ ॥

एवं तर्हि, सौर्य्यं चरुं निर्वपेदित्यनेनाख्यातेन प्रधानस्य विधानोत्पत्तिः, शेषाणां च वचनं भवतु । कथं कृत्वा । न अनङ्गं प्रधानमुच्यमानं कस्मैचित् प्रयोजनाय कल्पते इति । तेन च प्रापितानामङ्गानामेतेभ्यो लिङ्गेभ्यो विशेषावधारणं भविष्यति । तत्रेदमुच्यते—

**उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥**

एकस्मिन् शब्दे प्रधानस्योत्पत्तिरङ्गानां च वचन न सम्भवति । किङ्कारणम् । उत्पन्नं हि प्रधानमङ्गान्यपेक्षते । अपेक्षया च तानि गृह्यन्ते । तस्मान्नैतदपि युक्तम् । यदि च निर्वपेदित्यनेन शब्देन

अङ्गान्यपि विधीयेरँस्ततस्तेषामपि फलसम्बन्धः स्यात् । तथा अङ्गत्वमेव व्याहन्येत । ततोऽयमपि वादो न घटते । तस्माद् यथोक्तो लौकिक एवाभ्युपायः ॥ ९ ॥ आ० ॥

## विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥

विध्यन्तो वा सौर्य्यादिकायां चोदनायां प्रवर्त्तेत, न धर्मा लौकिकाः । कः पुनरयं विध्यन्तो नाम । विधेरन्तो विध्यन्तः । अथ विधिः कः । यद् वाक्यमुपलभ्य, पुरुषः कस्मिँश्चिदर्थे प्रवर्त्तते, कुतश्चिद् वा निवर्त्तते स विधिः । विधीयते ह्यनेनार्थः । यथा लोके, देवदत्त गामभ्याज शुक्लामिति । तस्य अभ्याजेत्यादिः । इतरोऽन्तः । वेदेऽपि दर्शपूर्णमासाभ्यां यजेतेति विध्यादिः । विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोड़ाशिकं ब्राह्मणम् । तेन समेतोऽयं विध्यादिर्विशिष्टापूर्वनिर्वृत्तिं प्रति पुरुषं प्रवर्त्तयति । तस्मात् सोऽस्यान्तः । तथा, सोमेन यजेतेति विध्यादिः । सौमिकमपि ब्राह्मणं विध्यन्तः । एष विध्यन्तो नाम । एतेषु च सौर्य्यादिषु विध्यादिरस्ति, विध्यन्तो नास्ति । एतेष्वपि स विध्यन्तः कल्प्येत । कथं कृत्वा । अपरिपूर्णं यद् वाक्यं, तदध्याहारेण वा पूर्य्येत, व्यवहितकल्पनया वा । तत्राध्याहाराद् व्यवहितकल्पना ज्यायसी । अध्याहारे हि अश्रुतः कल्प्येत । इतरत्र श्रुतेन सम्बन्धः । तस्माद् व्यवहितो ब्राह्मणावयवोऽस्य परिपूरकः कल्प्यते । यथा, वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कानालभते इति । तेन वैदिकी इतिकर्त्तव्यता प्राप्यते ॥ यदि तद् ब्राह्मणमस्यान्तः कल्प्यते, तत्र न भवति । तदेतन्मयूरनृत्यमापद्यते । तद् यथा मयूरस्य नृत्यतोऽन्यदपाव्रियतेऽन्यत् संव्रियते । एवमिहापीदं संव्रियते तदपाव्रियते । नैष दोषः । प्रत्यक्षस्तस्य तत्र भावः । इह पुनरानुमानिकः । न चानुमानिकं प्रत्यक्षं बाधते । इह तर्हि न प्राप्नोति । प्रत्यक्षविरोधात् । स्यादेवं, यदि विरोधः स्यात् । न त्वस्ति विरोधः । तथापि भविष्यति, इहापि तदेतदुक्तं, विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेतेति ॥ उच्यते । प्रकृतिवदिति किम् । आह । अष्टमे प्रकृतिनियमं करिष्यति । इमनस्य प्रकृतिरिति । तदुच्यते, विध्यन्तो वा प्रकृतेरिव प्रवर्त्तेत । या या तस्य कर्मणः प्रकृतिरिति

यस्याग्नेयः प्रकृतिस्तस्याग्नेयादेव । यस्याग्नीषोमीयस्तस्याग्नीषोमीयादित्येवं सर्वत्र ॥

अथ कस्मान्न लौकिको विध्यन्तः कल्प्यते । उच्यते । लौकिकस्य विधेरभावाद् विध्यन्त एव नास्ति । कुतस्तत्कल्पनेति । आह । लौकिकी इतिकर्त्तव्यता प्राप्यतां, किं विध्यन्तकल्पनयेति । उच्यते । वैदिकी हि अत्रेतिकर्त्तव्यता, न लौकिकी । कस्मात् । तथा हि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति ॥ १० ॥ आ० नि० ॥

**लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥**

यदि लिङ्गाद् वैदिकोऽभ्युपायो भवति, तेन तर्हि अलिङ्गे लौकिकं स्यात् । यत्र कर्मणि किञ्चिल्लिङ्गं नास्ति, तत्र लौकिकं स्याद् विधानम् । यथा, ऐन्द्राग्नमेकादशकपालं निर्वपेद् यस्य सजातावीयुरिति ॥ ११ ॥ आ० ॥

**लिङ्गस्य पूर्ववत्त्वाचोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥**

अत्रोच्यते । स्यादेवं, यदि लिङ्गहेतुको वैदिक उपायः स्यात् । न त्वसौ लिङ्गहेतुकः । किंहेतुकस्तु । विध्यन्तहेतुकः । विध्यन्तोऽपि न्यायपूर्वं । स च न्यायस्तुल्य सर्वेषां कर्मणां वैकृतानां लिङ्गवतां च । कुतः । चोदनाशब्दसामान्यात् । कर्मचोदनायां शब्द. समान. । सर्वत्र विध्यादिरस्ति, न विध्यन्त । तुल्यश्च अपेक्षया अन्यत्र श्रुतेन विध्यन्तेन सम्बन्धः । तदेतद् न्यायपूर्वकं लिङ्गमेकत्रापि दृश्यमानं, तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति । यथा स्थाल्यां तुल्यपाकानां पुलाकानामेकमुपमृद्यान्येषामपि सिद्धतां जानाति । तुल्यो हेतुरस्य चान्येषां च सिद्धत्वस्येति । तस्मात् सर्वत्र वैदिकी इतिकर्त्तव्यता ॥ अथ यदुक्तं, दृष्टप्रवृत्तिर्लौकिकी इतिकर्त्तव्यतेति । अत्र ब्रूमः । सामान्यतो दृष्टमेतदुपदिश्यते । सामान्यतो दृष्टं च यदव्यभिचारि, तत् प्रमाणम् । सव्यभिचारं चैतत् । दृष्टा हि गणयागादयोऽनेवमितिकर्त्तव्यताकाः । तस्माद् दृष्टप्रवृत्तित्वादित्यहेतु ॥ यत्तु वैदिक्या भागित्वात् तत्पूर्वकाणि लिङ्गानि भविष्यन्तीति । अत्र ब्रूम । भागित्वस्यापूर्वेतिकर्त्तव्यताकत्वं किल हेतु. । तद्भावश्च तस्याः शब्दपूर्वः । शब्देन च दर्शपूर्णमासयोरसौ विज्ञायते,

न सर्वत्रेति । तस्मान्न भागित्वम् । अतो विध्यन्तेनैवेतिकर्त्तव्यता प्राप्यते, नान्यथा । अथ कस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव नानुमन्यन्ते, किमेभिः पूरितैः ? । न्यूनानि अनर्थकानि भवन्ति । भवन्तु, को दोषः । शिष्टैरेषां सम्परिग्रहो न युज्यते । प्रमादाद् भविष्यतीति । नास्त्यऽक्षरे मात्रायां वा प्रमादः । कुत एतावति ग्रन्थे भविष्यति । कथम् । तुल्यं च साम्प्रदायिकम्– इत्युक्तम् । व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि नानुवर्त्तेत । युज्यते चैषामपेक्षया पूरणम् । तस्मादूनानि नानुमन्यन्ते । अतो वैदिकी इतिकर्त्तव्यतेति सिद्धम् ॥ १२ ॥ आ० नि० ॥ सौर्ये चरौ वैदिकेतिकर्तव्यताधिकरणम् ॥ २ ॥

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकाऽऽगमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥**

प्रजाकामा गवामयनम् उपेयुरिति सत्रं विधाय आम्नायते । ज्योतिर्गौरायुरिति । गवामयने द्वादशाहिको विध्यन्त इति वक्ष्यति । गणेषु द्वादशाहस्येति । तत्र चोदकेन द्वादशाहिका धर्म्माः प्राप्यन्ते । एकाहानामपि यथास्वं नामभिः प्रातिस्विकाः । ये तत्र द्वादशाहिका ऐकाहिकैरविरुद्धा, ते यथाप्राप्तं क्रियन्ते । विरुद्धेषु संशयः । किं द्वादशाहिको धर्म्मः कर्त्तव्य, उत ऐकाहिक इति । किं प्राप्तम् । तत्र सूत्रेणैवोपक्रमः । द्वादशाहिकमहर्गणे तत्प्रकृतित्वात् । द्वादशाहप्रकृतित्वाद् विध्यन्तेनैव प्राप्यन्ते ॥ नन्वेवं नामधेयं बाध्यते । न बाधिष्यते नामधेयं ज्योतिरादि । अधिकागमाद् भविष्यति । ये ज्यौतिष्टौमिकेभ्योऽधिका. स्तोत्रशस्त्रविकारास्तदागमात् । एकाहवत् । यथा तस्मिन्नेव ज्योतिषि एकाहे ज्योतिःशब्दोऽधिकागमाद् भवति । सत्सु ज्यौतिष्टौमिकेषु ज्योतिष्टोमेऽभावात् । अधिकधर्म्मार्थोऽयं शब्दः । न चाधिकानां द्वादशाहिकैर्विरोधोऽस्ति । तस्माद् द्वादशाहिकं धर्म्मजातं विरुद्धं कर्त्तव्यमिति ॥

अधिकागमात्तदाख्यं स्यादेकाहवदित्येतस्यापरा व्याख्या । ये द्वादशाहे अधिका ऐकाहिकेभ्य. केचिद् धर्म्मा उच्यन्ते । अभिप्लवोऽन्वहं भवति, गोरिवीतमन्वहं भवतीति । तेषामधिकानामागमात् तदाख्यं स्यात् । एतद् द्वादशाहिकमहर्ज्योतिराख्यमायुराख्यं वा ।

कथम् । एकाहवत् । यथा तस्मिन्नेवैकाहेऽयं ज्योतिरादिशब्दो ज्यौतिष्टौमिकेभ्योऽधिकेषु वैशेषिकेषु धर्मेषु आगतेषु भवति, एवमिहाऽप्यधिकागमसामान्याद् गौणो भविष्यति। यथा षाड़हिकानां पृष्ठानां भावादेकाहो विश्वजित् षड़ह इत्युक्तम्। तमेकाहं षड़ह इत्याचक्षते इति। एवमिहापि। गौणश्चेद् न प्रापक॰ । तस्मान्नास्ति नामधेयाद्धर्मप्राप्तिरिति ॥ १३ ॥ पूर्व० ॥

## लिङ्गाच्च ॥ १४ ॥

लिङ्गाच्चैतज्ज्ञायते, यथा द्वादशाहिकं कर्त्तव्यमिति। किं लिङ्गं भवति। द्वाभ्यां लोमावद्यति द्वाभ्यां त्वच द्वाभ्यामसृग् द्वाभ्यां मांसमिति। एवं षड् द्विकाननुक्रम्याह । यद् द्वादशोपसदो भवन्ति, आत्मानमेतन्निरवदयते इति द्वादशाहिकं धर्मं द्वादशोपसत्त्वं दर्शयति । तदुपपद्यते। द्वादशाहिकं धर्मजातं विरोधि कर्त्तव्यम्। इतरथा च ऐकाहिकं षडुपसत्त्वं स्यात् । तस्मात् पश्यामो, द्वादशाहिकं कर्त्तव्यमिति । तथेदमपरं लिङ्गम् । यस्यातिरिक्तमेकादशिन्यामालभेरन् न प्रियं भ्रातृव्यमतिरिच्येत । अथ यद् द्वौ द्वौ पशू समस्येयु , कनीय आयु' कुर्वीरन्। यद्येते ब्राह्मणवन्तः पशव आलभन्ते न अप्रियं भ्रातृव्यमत्यतिरिच्येत न कनीय आयुः कुर्वीतेति, एकादशिन्यां विहार द्वादशाहिकं धर्मं दर्शयति । कथम् । विहारे सति अतिरेक॰ पशूनामापद्यते। अतिरेकभयाच्च द्वयोर्द्वयो समास । एकाहधर्मप्राप्तौ विहारो न स्यात् । तत्रैतद्दर्शनं न युज्यते। तस्माद् द्वादशाहिकं कार्य्यम् ॥ १४ ॥ युक्तिः ॥

## न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥

न वा द्वादशाहिकं कार्य्यम्। किं तर्हि। ऐकाहिकम्। किं कारणम् । चोदकेन द्वादशाहिकं प्राप्नोति, नामधेयेन ऐकाहिकम् । नामधेयं च चोदकाद् बलीयः। कुत । प्रत्यक्षत्वात्। प्रत्यक्षं नामधेयं, चोदकं त्वानुमानिकम् । ननु विध्यन्तोऽपि प्रत्यक्ष॰। सत्यं प्रकृतौ प्रत्यक्षो विध्यन्तो, विकृतौ त्वानुमानिकः । नामधेयं पुनर्विकृतावपि प्रत्यक्षम्। प्रत्यक्षं चानुमानाद् बलीयः। तस्मादैकाहिकं कार्य्यम् ॥ नन्वधिकार्थे नामधेयमित्युक्तम् । अत्रोच्यते,-अधिकानामशब्दत्वम् । अधिकानां शब्दो नास्ति । इमे ज्योतिरादय॰ शब्दाः

कर्मनामधेयानीत्युक्तम् । अपि वा नामधेयं स्याद्, यदुत्पत्तावपूर्वम-ऽविधायकत्वादिति । यत्तु,अधिकागमात्तदाख्यं स्यादिति । तत्र ब्रूमः। वचनादधिकागमो, न नामधेयेन । यत्तु, तेष्वसत्सु शब्दस्याभावादिति । नैते कदाचिदायुरादिषु न सन्ति । कथं तेषामभावे शब्दस्याभावो दृष्टः । यत्तु, ज्योतिष्टोमे नास्ति ज्योतिरादि शब्द इति । कर्मान्तरत्वात् । ज्योतिष्टोमे आयुरादिः शब्दो नास्ति, न धर्माभावात्। तस्मादैकाहिकं विरुद्धं धर्मजातं कर्त्तव्यमिति । अधिकागमात् तदाख्यं स्यात् । एकाहवदित्येतस्य द्वितीयव्याख्यापरिहारः । गौणः सन्ननुवादमात्रमनर्थकं स्यात् । तस्मात् पूर्वोक्तेन न्यायेन नामधेयं धर्माणां प्रापकमिति ॥ १५ ॥ सि७ ॥

## लिङ्गं सङ्घातधर्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥

अथ यल्लिङ्गमुपदिष्टं, द्वादशोपसत्त्वदर्शनं, तस्य परिहार उच्यते । लिङ्गं सङ्घातधर्मः स्यात् । लिङ्गमेतत् सङ्घातधर्मः स्यात् । द्वादशाहोऽहःसङ्घातः । स फलाय चोद्यते । द्वादशाहमृद्धिकामा उपेयुरिति । गवामयनमपि अहःसङ्घातान्तरम् । तस्मिन्नेव कार्य्ये फलसिद्धौ विधीयते । तस्य तत्कार्य्यापत्त्या द्वादशाहधर्मान् गृह्णाति, न चोदकेन । द्रव्यवत् । यथा द्रव्ये व्रीहौ धर्माः श्रुतास्ते तत्कार्य्यापन्नेषु प्रतिनिधिभूतेषु प्राप्यन्ते, न चोदकेन । तद्वत् ॥ १६ ॥ पूर्वपक्षलिङ्गनिरासे पूर्वपक्ष ॥

## न वार्थधर्मत्वात् सङ्घातस्य गुणत्वात् ॥ १७ ॥

नैतद् युक्तम् । कुतः । अर्थधर्मत्वात् । अपूर्वधर्मत्वादित्यर्थः । अपूर्वधर्मो द्वादशोपसत्त्वं, न सङ्घातधर्मः । कस्मात् । सङ्घातस्य गुणत्वात् । अहानि अत्र प्रधानानि । द्वादशाहेनेति द्वादशत्वं तेषां गुणः । विशेषणमित्यर्थः । विशेष्ये एव कार्य्यं प्रतीयते, न विशेषणे । यथा राजपुरुष आनीयतामित्युक्ते पुरुष आनीयते, न राजा । यथा च, मृष्टं भुङ्क्ते देवदत्त इत्युक्ते, न शाकं सूपो वा प्रतीयते । यदेव प्रधानं तत् प्रतीयते । किमतः । अतोऽहानि फलवन्ति, न सङ्घातः । फलवतश्च धर्माः । तस्मान्न द्वादशोपसत्त्वं सङ्घातधर्मः । एवञ्चेद् न गवामयने कार्य्यापत्तितो धर्माः प्राप्यन्ते । अतोऽपरिहारोऽयम् ॥ १७ ॥ पूर्वपक्षलिङ्गनिरासे उत्तरपक्षः ॥

**अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥**

यदुक्तं, द्रव्यवदिति । युक्तं द्रव्येषु । तत्र हि व्रीहिकार्य्यापन्ना नीवाराः कार्य्यापत्तितस्तद्धर्माँल्लभन्ते । इह पुनर्द्वादशोपसत्त्वं नैव सङ्घातधर्म इत्यपदिष्टो हेतु । तस्माददृष्टान्तो द्रव्यवदिति ॥ १८ ॥

आह । कथन्तर्हीदं लिङ्गदर्शनम् ? । अत्रोच्यते,

**प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥**

गवामयने द्वादशाहिकं प्रथममहः । प्रायणीयोऽतिरात्रः । तस्य धर्मो द्वादशोपसत्त्वम् । तदुपादाने मुख्यस्यानुग्रह । षडुपसत्त्वोपादाने जघन्यानां ज्योतिरादीनां, मुख्यस्य प्राप्तकालमनुग्रहमतिक्रमितुं किञ्चित् कार्य्यं नास्ति । अतस्तदनुग्रहार्थं द्वादशोपसत्त्वं भवति । तथा मुख्यया प्रवृत्त्या नियतस्यैतद्दर्शनं, न चोदकप्राप्त्या । यस्माच्चोदको नामधेयादबलः । वक्ष्यति च, विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । मुख्यं वाऽपूर्वचोदनाल्लोकवदिति ॥ १९ ॥

अथ यद् द्वितीयं लिङ्गदर्शनमुक्तम्, एकादशिन्यां विहारदर्शनम् । तत्रोच्यते—

**विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥**

अनारभ्यैकादशिन्यां विहार शिष्टः । तदादिप्रभवाः पशवः स्युः । तथा तानेवानूचीनान् अहरहरालभेरन्, आग्नेयमेव प्रथमेऽहनि आलभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्तत । अथ पुन पर्य्यावर्त्तेष्वाग्नेयमेव प्रथमेऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्तत इति । तद् अनारभ्यवादानां प्रकृत्यर्थत्वाज्ज्योतिष्टोमं प्रविष्टम् । तत्राह्नां बहुत्वस्याभावादसम्भवादपरां प्रकृतिं द्वादशाहमागतम् । तत्रापि पुनर्ज्योतिरादीनां पर्य्यावर्त्तेषु इत्येतद् न युज्यते इति तृतीयां प्रकृतिं गवामयने प्रविष्टम् । एवमागतस्य एतद्दर्शनमिति ॥२०॥ पूर्वपक्षलिङ्गनिरासः ॥ गवामयने ऐकाहिकेतिकर्त्तव्यतानुष्ठानाधिकरणम् ॥ ३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य चतुर्थः पादः ॥ ७ ॥ ४ ॥ सम्पूर्णोऽयं सप्तमोऽध्याय. ॥ ७ ॥

अथ अष्टमस्य अध्यायस्य प्रथमः पादः ॥ ८ ॥ १ ॥

## अथ विशेषलक्षणम् ॥ १ ॥

एवं तावत् सप्तमेन अध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम् । अविहितधर्मकेष्वैन्द्राग्न्यादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्ते इति । तत्र चिन्ता भवति । किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः, उतैकस्मादिति । अविशेषात् सर्वेभ्य इति प्राप्तम् । एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ किञ्चित् कारणं नास्ति । सत्यम् । तदेव तु न ज्ञायते । कस्मिन् कस्येति । तदर्थं विशेषलक्षणं वक्तव्यमस्मिन्नस्येति । तदिदमध्यायादौ प्रतिज्ञायते । अथ विशेषलक्षणमिति । अथेदानीं वृत्तात् सामान्यातिदेशलक्षणादनन्तरं, विशेषलक्षणं वक्ष्यामः । तदुच्यमानं यथाकालं बोद्धव्यमिति ॥ १ ॥ प्रतिज्ञाधिकरणम् ॥ १ ॥

तदेतत् सङ्क्षेपेणैवोच्यते—

## यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किञ्चित्, शब्दगतम् अर्थगतं वा वैकृत्यां कर्मचोदनायां, तद्गुणवाक्ये वा दृश्यते । तत्र स विध्यन्तः स्यात् । कुतः । अर्थसंयोगात् । तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषणेन संयोगोऽनुभूतपूर्वः । संयोगिनोश्चान्यतरो दृश्यमान उत्तरमदृश्यमानमप्यनुमानाद् बुद्धौ सन्निधापयति । अभिधानवत् । यथाऽग्निहोत्रमित्यभिधानं कौण्डपायिने श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ सन्निधापयति । किमतोऽत्र । एतदतो भवति । अपूर्वं यद् वाक्यं, तत् पूरणसमर्थेन अवयवेन बुद्धौ सन्निहितेनैकवाक्यतां याति । यथा दर्शपूर्णमासाभ्यां यजेतेति विध्यादिः, कथमिति विध्यन्तापेक्षः । अग्न्यन्वाधानादिविधानकाण्डेन, पाठाद् बुद्धौ सन्निहितेन एकवाक्यतां याति । दर्शपूर्णमासाभ्यां यजेतेत्थमिति । एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः, सोऽपि वैदिकेन विध्यन्तेनानुमानाद्बुद्धौ सन्निहितेनैकवाक्यतां यास्यति । यथा सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति । तत्र कथमितिविध्यन्तापेक्षायामनेकविध्यन्तसन्निपाते असाधारणेन निर्वपति-शब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते । तत्रापि

आग्नेयाद्यनेकापूर्वविध्यन्तप्रसङ्गे, एकदेवतात्वेन वा ओषधिना वा असाधारणेन लिङ्गेनाग्नेयविध्यन्तो नियम्यते। तदेतदेवं विज्ञायते। सौर्य्यं चरुं निर्वपेद् आग्नेयवत्। आग्नावैष्णवमेकादशकपालं निर्वपेदग्नीषोमीयवत्। सर्वत्रैवम्। प्रतिपदाख्याने तु गौरवं परिहरद्भिर्वृत्तिकारैः सर्वसामान्यः शब्दः परिगृहीतः प्रकृतिवदिति। एवं यत्र सूक्ष्ममपि किञ्चित् सामान्यं, शब्दो वा अर्थो वा हविर्देवतादि तद्गुणा वा रूपादय उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत् संक्षेपेणात्रैव सर्वमुक्तम्। शिष्यहितार्थमुत्तरः प्रपञ्चः। श्लोकमप्युदाहरन्ति—

विस्तीर्य हि महज्ज्ञालमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समासव्यासधारणम्, इति ॥ ॥ २ ॥ ॥

सिद्धान्त ॥ विशेषकर्मणो धर्मातिदेशाधिकरणम् ॥ २ ॥

## प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥ ३ ॥

ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रूयते। तत्र विध्यन्तं प्रति चिन्ता। कुतोऽस्मिन् विध्यन्तः स्यादिति। तदुच्यते। प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात्। दार्शपौर्णमासिको विध्यन्तः सोमे स्यात्। कुतः। प्रवृत्तित्वात्। दीक्षणीयादिषु इष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। दीक्षणीयायाम् आतिथ्यायां प्रायणीयायां पशौ च। तदनन्तरं सोमः। तत्रापि स एव प्रवृत्त्या विज्ञायते। यथा, देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः कौण्डिन्यो भारद्वाज इत्युत्तरेष्वपि भोजयितव्य इति प्रवृत्त्या अनुबध्यते। तस्मादैष्टिकः सोमे विध्यन्तः ॥ ३ ॥ पूर्व० ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

तस्यैकशतं प्रयाजानुयाजा इति च ऐष्टिका धर्म्माः सोमे दृश्यन्ते। तस्माच्चास्मिन् ऐष्टिको विध्यन्तः ॥ ४ ॥ युक्तिः ॥

## कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥ ५ ॥

अपूर्वत्वमेव हि सोमे। स न कुतश्चिद् धर्मान् गृह्णाति। कुतः। कृत्स्नविधानात्। इतिकर्त्तव्यताविधेर्यजतेः पूर्ववत्त्वम् उक्तम्। विहितेतिकर्त्तव्यतश्चायम्। तस्मादपूर्वः ॥ ५ ॥ सि० ॥

## स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥

स्रुगभिघारणस्य चाभावानुवादः सोमे भवति । घृतं वै देवावज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू । तस्मात् स्रुचि सोमहविर्नासाद्यते । न सोममाज्येनाभिघारयन्तीति । तदुपपद्यते । यद्यपूर्वं सोमः, अथ दर्शपूर्णमासप्रकृति स्यात् । आद्येनाभिघार्य स्रुग्भ्यां हूयेत । तत्रैनद्दर्शनं नोपपद्यते तस्मादपूर्वः ॥ ६ ॥ युक्ति. ॥

## विधिरितिचेत् ॥ ७ ॥

इतिचेत् पश्यसि, स्रुगभिघारणाभावानुवाददर्शनादपूर्वः सोम इति । अथ कस्माद्दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिर्न भवति ? इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ ७ ॥ आ० ॥

## न वाक्यशेषत्वात् ॥ ८ ॥

नायं विधि । कस्मात् । वाक्यशेषत्वात् । अन्योऽत्र विधिराम्नातः । तदाह । अंशुरंशुस्ते देव सोमाप्यायतामिति । तस्य वाक्यशेषोऽयम् । कथं ज्ञायते । तेन आकाङ्क्षितत्वात् । अवधिषुर्वा एतत् सोमं यदभिषुण्वन्ति । यदस्य स्रुचौ बाहू कुर्वन्ति । यच्चाज्यमन्तिकमकार्षुः । यदाह, अंशुरंशुस्ते देव समाप्यायतामिति । यदेवास्यादातु' क्षुरमक्षुरस्तदाप्याययन्तीति । यद्ययमपि विधिः स्याद् वाक्यंभिद्येत । तस्मान्न विधि. ॥ ८ ॥ आ० नि० ॥

## शङ्कते चानुपोषणात् ॥ ९ ॥

सोमे शङ्कते, यदनुपोष्य प्रयायाद् ग्रीवबद्धमेनममुष्मिँल्लोके नेनीयेरन्निति । दार्शपौर्णमासिके विध्यन्ते सति, नियतमुपोषणं स्यात् । तदाऽनुपोषणाशङ्का न युज्यते । तस्मादपूर्वः ॥ ९ ॥

## दर्शनमैष्टिकानां स्यात् ॥ १० ॥

यच्च प्रयाजानुयाजानां दर्शनं, लिङ्गत्वेनोपदिष्टं, तस्यैकशतं प्रयाजानुयाजा इति । तद् दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानुयाजास्तेषां समुच्चयवचनम् । किं कारणम् । सोमस्याऽपूर्वत्वात् । तेषां च तावतां, तत्र भावात् । अङ्गाङ्गमपि च तस्येति शक्यते वक्तुम् । यथा वाजपेयस्य यूप इति । तस्मादपूर्वः सोम ॥ १० ॥ आ० नि० ॥ सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

## इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

इष्टय उदाहरणम्, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इत्येवमाद्याः । तत्र सन्देहः । किं दार्शपौर्णमासिको वा, सौमिको वा विध्यन्तः ? उत दार्शपौर्णमासिक एवेति । किं प्राप्तम् । अनियमः । दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति सोमेऽपि । इमाश्चेष्टयो विध्यन्ताऽपेक्षाः । एकेन च विध्यन्तेन भवितव्यमित्युक्तम् । न च गृह्यतेऽन्यतरनियमे विशेष । तस्मादनियमः ॥

एवं प्राप्ते उच्यते । इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः । हेतुर्नोक्तः प्रज्ञात इति । क. पुनरसौ । चोदनायां प्रकृतिलिङ्गसंयोगः । किं पुनस्तत् प्रकृतिलिङ्गम् । तद्धितेन देवतोपदेश. कपालवत्ता निर्वपतिशब्दाश्च, ऐन्द्राग्नमेकादशकपालं निर्वपेदिति । इतरत्रापि तथैव ऐन्द्राग्नो द्वादशकपाल इति । निर्वपतिरप्यग्निहोत्रहवण्या हवींषि निर्वपतीति । प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्त.— यस्य लिङ्गमर्थसंयोगाद् इति । तस्माद् दार्शपौर्णमासिकस्तासु विध्यन्त. । तच्च दर्शयति प्रयाजे प्रयाजे कृष्णलं जुहोतीति । अलिङ्गास्वपि स्थालीपुलाकवत् सिद्धि ॥ ११ ॥ ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाऽधिकरणम् ॥ ४ ॥

## पशौ च लिङ्गदर्शनात् ॥ १२ ॥

पशौ अग्नीषोमीये चिन्त्यते । किं दार्शपौर्णमासिको विध्यन्तः ? उत सौमिक इति । किं प्राप्तम् । तथैव पूर्वपक्ष । तत्रोत्तरमभिधीयते । पशौ च लिङ्गदर्शनात् । पशौ च दार्शपौर्णमासिक एव विध्यन्त. । कुतः । लिङ्गदर्शनात् । एकादश प्रयाजान् एकादशानुयाजानिति । तथा स्रौवमाघार्य्य जुह्वा पशुमनक्तीति । ननु लिङ्गमपदिष्टं, कुत. प्राप्ति । चोदनासामान्यात् । किं सामान्यम् । व्यक्तचोदनत्वम् । का व्यक्ति. । द्रव्यदेवतावत्ता, अग्नीषोमीयं पशुमिति । इतरद् ऐन्द्रं पय इति । अव्यक्तचोदनस्तु सोम. ॥ १२ ॥ अग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम् ॥ ५ ॥

## दैक्षस्य चेतरेषु ॥ १३ ॥

इह पशुबन्धा उदाहरणम् । सवनीयो निरूढ पशु', सौम्यादयश्च । तेषु किं दार्शपौर्णमासको विध्यन्त, उत दैक्षस्येति । दैक्ष इत्यग्नीषोमीय उच्यते । दीक्षासम्बन्धात् । किं प्राप्तम् । यथोक्तेन

न्यायेन दार्शपौर्णमासिक इति । तथा प्राप्ते उच्यते । दैक्षस्य चेतरेषु पशुषु सवनीयादिष्वग्नीषोमीयस्य विध्यन्त' । आलभतिचोदनासामान्यात्, पशुत्वचोदनासामान्याच्च । तच्च दर्शयति— वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यन्दिनेऽङ्गैस्तृतीयसवने इति वपापुरोडाशाङ्गप्रचारं दर्शयति । भेदेन च तथा क्वचिद्, औदुम्बरो यूपो भवतीति यूपं दर्शयति । तस्मादग्नीषोमीयः पशूनां प्रकृतिः ॥ १३ ॥ सवनीयादिपशौ अग्नीषोमीयधर्मातिदेशाधिकरणम् ॥ ६ ॥

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥**

ऐकादशिनाः पशव उदाहरणम् । कृष्णशीर्षा आग्नेय इत्यारभ्य आम्नाताः । अन्येषां च आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येनेति । तेषु सन्देह. । किमग्नीषोमीयविध्यन्त, उत सवनीयविध्यन्त इति । किं प्राप्तम् । पूर्वोक्तेन न्यायेनाऽग्नीषोमीयस्य ॥

इति प्राप्ते उच्यते । ऐकादशिनेषु सौत्यस्य । सौत्य इति सुत्याकालत्वात् सवनीयमाहु । तदीयो विध्यन्त ऐकादशिनेषु । कुतः । द्वैरशन्यस्य दर्शनात् । अग्निष्ठा द्वे द्वे रशने आदाय द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययतीति । अग्नीषोमीयप्रकृतित्वे ऐकैकरशन्यं स्यात् ॥ अथ वचनमिदं कस्मान्न भवति। अग्निष्ठा द्वे द्वे रशने आदायेत्येतदत्र विधीयते । यदि रशनाद्वित्वमपि विधीयते, तदा वाक्यं भिद्यते । तस्मात् तदनूद्यते । ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः । उच्यते । समाने पशुत्वे सुत्याकालता वैशेषिकं लिङ्गम् । ततः प्राप्तिः ॥ ॥ १४ ॥ ऐकादशिनपशौ सवनधर्मातिदेशाधिकरणम् ॥ ७ ॥

**तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु यूपदर्शनात् ॥ १५ ॥**

इह पशुगणा उदाहरणम् । वसन्ते ललामांस्त्रीन् वृषभानालभते । तथा, मैत्रं श्वेतमालभेत, वारुणं कृष्णमपां च ओषधीनां च सन्धौ अन्नकाम इति । तत्र विचार्य्यते । किमग्नीषोमीयस्य विध्यन्तः, उत ऐकादशिनानामिति । यथोक्तेन न्यायेनाग्नीषोमीयस्य ॥

एवं प्राप्ते उच्यते । तत्प्रवृत्तिर्गणेषु स्यात् । तेषामैकादशिनानां प्रवृत्तिः पशुगणेषु स्यात् । कुतः । प्रतिपशु यूपदर्शनात् । यत् त्रिषु यूपेषु आलभेत बहिर्द्धाऽस्मादिन्द्रियं वीर्य्यं दध्यात्, भ्रातृव्यमस्य

जनयेदेकयूप आलभेतेति यूपत्रित्वं प्रतिषिद्ध्यैकं यूपं सौत्रामण्यां विदधाति। तदुपपद्यते, यदि ऐकादशिनविध्यन्तः। तत्र हि प्रतिपशु यूपाः। अग्नीषोमीयप्रकृतित्वे एक एव यूपः स्यात्। तत्रैतन्नोपपद्यते। तस्मादैकादशिनानां विध्यन्तः पशुगणेषु ॥ १५ ॥ पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

## अव्यक्तासु तु सोमस्य ॥ १६ ॥

इदं श्रूयते, अभिजिता यजेतेति। एवञ्जातीयका यजतयः। तेषु विध्यन्तचिन्ता। किमेषु सौमिको विध्यन्तः, उत दार्शपौर्णमासिक इति। अविशेषादनियमे प्राप्ते। उच्यते। अव्यक्तासु तु सोमस्य। का अव्यक्तता। द्रव्यदेवतस्याभावः। द्रव्यदेवतेन हि यागोऽभिव्यज्यते। एताश्चाद्रव्यदेवताश्चोदनाः। अभिजिता यजेतेति। एतासु अव्यक्तासु सौमिको विध्यन्तः स्यात्। कुतः। अव्यक्तसामान्यात्। सोमोऽप्यव्यक्तचोदनः। ज्योतिष्टोमेन यजेतेति। ननु सोमेन यजेतेत्येषा व्यक्तचोदना। तथापि देवताया अभावादव्यक्तता। तथा च, दूणाशेन यजेतेत्यव्यक्तचोदिते, दीक्षणीयादीनि सोमाङ्गानि दर्शयति दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा। चतुर्विंशतिमानं प्रायणीयायामिति। तस्मात् तासु सौमिको विध्यन्तः ॥ १६ ॥ अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

## गणेषु द्वादशाहस्य ॥ १७ ॥

इह अहर्गणा उदाहरणम्, द्विरात्रादयः शतरात्रपर्य्यन्ताः। तेषु सन्देहः। किं ज्योतिष्टोमिको विध्यन्तः, उत द्वादशाहिक इति। पूर्वेण न्यायेन सौमिके प्राप्ते, उच्यते। गणेषु द्वादशाहिको विध्यन्त इति। कुतः। चोदनासामान्यात्। द्वादशाहेन यजेत, द्विरात्रेण यजेतेति। अहःशब्दोऽप्यहोरात्रवचनः। रात्रिशब्दोऽपि। एतच्छब्दगतं लिङ्गम्। अर्थगतमपि गणत्वम्। गण एव सङ्घातधर्मैर्गणमनुग्रहीतुं समर्थो, नैकाहः। द्वाभ्यां लोमावद्यति द्वाभ्यां मांसमिति च। एतदारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्म्मं गवामयने दर्शयति। तस्मादहर्गणानां द्वादशाहः प्रकृतिः ॥ १७ ॥ अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

## गव्यस्य च तदादिषु ॥ १८ ॥

इह संवत्सरसत्राण्युदाहरणम्, आदित्यानामयनप्रभृतीनि । तेषु चिन्ता, किं द्वादशाहिको विध्यन्तः, उत गवामयनिक इति । पूर्वोक्तेन न्यायेन द्वादशाहिके प्राप्तेऽभिधीयते । गव्यस्य च तदादिषु । गव्यमिति, गवामयनं ब्रूमः । गोसम्बन्धात् । गावो वा एतत् सत्रमासत इति । तस्य विध्यन्तस्तदादिषु संवत्सरसत्रेषु स्यात् । कुतः । संवत्सरसामान्यात् । पत्नय उपगायन्तीति च महाव्रतिकं धर्म्मं संवत्सरसत्रे दर्शयति । ऋत्विज उपगायन्तीति च सहस्रसंवत्सरे ॥१८॥ संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

## निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १९ ॥

निकाय- इति सङ्घात औत्तराधर्य्येणावस्थित उच्यते । स एषां, ते निकायिनः । यथा साहस्राः साद्यस्काः । तेषां पूर्वस्य केचिद् धर्म्मा आम्नाताः । उत्तरे त्वधर्म्मकाः । तत्र चिन्त्यते । किं ज्योतिष्टोमस्य विध्यन्तः, उत प्रथमस्य निकायिन इति । अव्यक्तचोदनत्वाज्ज्योतिष्टोमस्य ॥ इति प्राप्ते, उच्यते । निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् । कुतः । निकायित्वसामान्यात् । साहस्राणां साहस्रसामान्यात् । साद्यस्काणां साद्यस्कधर्म्मसामान्यात् । एवं सर्वत्र पूर्वस्मिँश्च साहस्रे सहस्रं दक्षिणामाम्नायोत्तरस्मिन् दर्शयति । यावदस्य साहस्रस्योत्तरा गौः समाहिता भवति, तावदस्माल्लोकादसौ लोक इति । तथा पूर्वस्मिन् साद्यस्के साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्द्धमानानामित्याम्नाये उत्तरस्मिन्नपि तमेव दर्शयति । स्त्री गौः सोमक्रयणी व्यावृत्ता हि एषां स्पर्द्धिता इति । तस्मात् पूर्वस्योत्तरेषु धर्म्माः ॥ १९ ॥ निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

## कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥

इह फलनियमकर्तृसमुदाया उदाहरणम् । फलं स्वर्गः, नियमो यावज्जीविकोऽभ्यासः, कर्त्ता स्वर्गकामः, समुदायो दर्शपूर्णमासाविति । तत्र चिन्त्यते । किं फलनियमकर्तृसमुदायानां सौर्यादिषु प्रवृत्तिः, न? इति । किं प्राप्तम् । इष्टिषु दर्शपूर्णमासयोः स्याद्-इत्यनेन न्यायेन प्रवृत्तिरिति प्राप्तम् । तथा प्राप्ते उच्यते । फलनियमकर्तृसमुदायस्याप्रवृत्तिः । कुतः । कर्मणोऽप्रवृत्तित्वात् तद्बन्धनत्वाच्च फलादीनां

कर्म्म तावन्न प्रवर्त्तते। किङ्कारणम्। विध्यन्तेन धर्म्माः प्रवर्त्तन्ते। न च कर्म्म विध्यन्तविहितं, विध्यादिविहितं तत्। तस्मान्न प्रवर्त्तते। तस्याऽप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयोऽप्रवृत्तिरित्यर्थः। कुतः?। तद्बन्धनत्वात्। फलं तावत्। दर्शपूर्णमासाभ्यां यजेतेति। दर्शपूर्णमाससंयुक्तं श्रुतम्। तद् यत्र दर्शपूर्णमासौ, तत्र भवितुमर्हति। न च सौर्य्यादिषु तौ स्त। अतः स्वर्गस्यापि तत्राभावः। एवं नियमोऽपि कर्मबन्धन.। यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति। स दर्शपूर्णमासाभावे कथं स्यात्। तथा कर्त्ता कर्मबन्धनः। दर्शपूर्णमासाभ्यां स्वर्गकाम इति। सोऽपि कथं तयोरसतो स्यात्। समुदायोऽप्याग्नेयादीनाम्। तानि सौर्य्यादिषु न सन्तीति तत्समुदाय कथं तत्र भवेत्। तस्मात् तेषामप्रवृत्ति ॥२०॥ सि०

## प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥

अपि च धर्माणां प्रवृत्ति. कर्मार्था, कर्मण उपकर्त्तुम्। न च फलादीनि कर्मण उपकुर्वन्ति। फलं तावत् पुरुषस्योपकरोति, न कर्मण.। उक्तं हि, फलं च पुरुषार्थत्वादिति। नियमोऽपिनकर्मधर्मः। कर्तृधर्मोऽसावित्युक्तम्। कर्त्तुर्वा श्रुतिसंयोगाद् इति। तथा कर्त्ता स्वर्गकामो, न कर्मार्थ.। कर्म स्वर्गकामार्थम्, न हि स्वर्गकाम' कर्मण उपदिश्यते। स्वर्गकामो यजेतेति। किं तर्हि। कर्म स्वर्गकामस्योपदिश्यते। स्वर्गकामो यजेत, नान्यत् कुर्य्यादिति। तथा समुदायो न कर्मार्थं। फलार्थोऽसौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। एवमेतेषां कर्मणोऽनुपकारकत्वात्, प्रवृत्तिरनर्थिका स्यात्। तस्मान्न प्रवर्त्तेरन् ॥ २१ ॥ युक्तिः ॥

## अश्रुतित्वाच्च ॥ २२ ॥

अत्राह। यदि दर्शपूर्णमाससंयोगात् फलादीनामप्रवृत्ति, प्रयाजादीनामपि तत्सम्बन्धादप्रवृत्तिः प्राप्ता। तान्यपि हि तत्सयुक्तानीनि। उच्यते। यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि, विध्यन्तेन तु सौर्य्यादिष्वप्यतिदिष्टानि। फलादीनि तु न विध्यन्तेनातिदिश्यन्ते। तेषां यदि प्रत्यक्षा प्रवर्त्तिका श्रुतिः स्यात्, तत प्रवर्त्तेरन्। न चासावस्ति। तस्मादश्रुतित्वान्न प्रवर्त्तन्ते ॥ २२ ॥ आ० नि० ॥ फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

## गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात् ॥ २३ ॥

इह गुणकामा उदाहरणं— गोदोहनेन प्रणयेत् पशुकामस्य, उपास्मै गायता नर इति, ग्रामकामाय प्रतिपदं कुर्य्यादित्येवमादय.। तत्र विचार्य्यते । किं गुणकामानां वैकृतेषु प्रवृत्तिः, उत नेति । ततः सूत्रेणैवोपक्रमः। गुणकामेष्वाश्रितत्वात् प्रवृत्ति.स्यात्। प्रवृत्तिर्गुणकामानाम्। कुतः। आश्रितत्वात्। गोदोहनं प्रणयनाश्रितं गोदोहनेन प्रणयेदिति । तच्च प्रणयनं प्रवर्त्तते।आश्रये च प्रवर्त्तमाने तदाश्रितमपि प्रवर्त्तते। यथापटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते।यथा च चमसः प्रवर्त्तते । यथा च, खादिरं वीर्य्यकामाय यूपं कुर्य्यादिति । एवं गोदोहनमपि प्रवर्त्तेत । गोदोहने च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तितुमर्हति । तस्माद् गुणकामानां प्रवृत्तिः ॥ २३ ॥ पूर्व० ॥

## निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥

निवृत्तिर्वा गुणकामानामप्रवृत्तिः । कुतः । कर्मभेदात् । कार्य्यभेदादित्यर्थ. । अन्यत् कार्य्यं गोदोहनस्य, अन्यच्चमसस्य । चमसः क्रत्वर्थो, गोदोहनं तु पुरुषार्थः । तदुक्तं— यस्मिन् प्रीति. पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वादित्यत्र । अक्रत्वर्थ. किमर्थं प्रवर्त्तेत । क्रतूपकाराय हि तस्य प्रवृत्ति । एवं प्रतिपद' । तस्मान्न प्रवर्त्तेरन् गुणकामा. ॥ २४ ॥ सि० ॥

यत्तूपन्यस्तं, यथा खादिरं वीर्य्यकामाय यूपं कुर्य्यादित्यत्र प्रवृत्तिरेवमत्रापीति । तत्र ब्रूम —

## अपि वाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिः स्यात् ॥ २५ ॥

अपि वा, एवंविधेषु प्रवृत्ति स्यात् । कुत । अतद्विकारत्वात् । न खादिर. क्रत्वर्थविकारः । अयमपि क्रत्वर्थ एव । तदुक्तम्— एकस्य तूभयत्वे संयोगपृथक्त्वमिति । क्रत्वर्थश्चेत् पलाशवत् प्रवर्त्तेत । तस्मिँश्च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तते । खादिरेण हि स सिद्ध्यति । स च खादिरोऽस्ति । तस्मात् कामं साधयिष्यति ॥ २५ ॥ पूर्वपक्षयुक्तिनिरासः ॥ ॥ गुणकामानां गोदोहनादीनामनतिदेशाऽधिकरणम् ॥ १४ ॥

## एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥२६॥

सौर्य्ये चरुं निर्वपेद् ब्रह्मवर्चसकाम इति श्रूयते । अस्ति तु प्रकृतावभिमर्शनद्वयं, चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्यामिति । तदिह चोदकेन प्राप्यते । तत्र संशयः । किं सौर्य्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्राऽभिमष्टव्यः, यदाऽमावास्यायां तदा पञ्चहोत्रा ? उतोभयत्र विकल्पः । चतुर्होत्रा वा पञ्चहोत्रा वा ? इति । किं प्राप्तम् । व्यवस्थेति । कुतः । चोदकानुग्रहात् प्रकृतौ व्यवस्था कृता । इहापि चोदको व्यवस्थां प्रापयति ॥

एवं प्राप्ते उच्यते । एकस्मिन् कर्मण्यत्र सौर्य्यविकल्पः । कुत । अविभागो हि चोदनैकत्वात् एकैषा चोदना । सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्च्चसकाम इति । तत्राविभागो भवतु । उभावप्यभिमर्शने प्राप्येते । तयोरेकार्थत्वात् समुच्चयो न सम्भवति । तस्माद् विकल्पः । यत्तु, प्रकृतौ व्यवस्थेति । नासौ कालकृता । किं तर्हि ? समुदायकृता । न च सौर्य्ये तौ समुदायौ स्त ॥ यद्येवमभिमर्शनमेव तर्हि न प्राप्नोति । तयो. समुदाययोरभावादिति । अत्रोच्यते । न प्राप्नोति । यदि समुदाययोरभिमर्शनमुच्येत । तयोस्त्वनभिमष्टव्यत्वात् समुदायिनां तदुच्यते लक्षणया । समुदायिविकारश्च सौर्य्यः । तस्मात् तत्रापि चोदकः प्रापयति तत् ॥ २६ ॥ ॥ सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ॥ १९ ॥

## लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥

सौर्य्ये कर्मणि दार्शपौर्णमासिको विध्यन्त इत्युक्तम्— इष्टिषु दर्शपूर्णमासयो प्रवृत्तिरिति । सन्ति तु तत्र कर्माणि आग्नेयादीनि । तत्र विचार । किं यस्य कस्यचिद् दार्शपौर्णमासिकस्य कर्मणः सौर्य्ये विध्यन्त, उताग्नेयस्येति । किं प्राप्तम् । विकल्पः । कुत । लिङ्गसाधारण्यात् । सौर्य्ये दार्शपौर्णमासिकविध्यन्तप्राप्तौ यल्लिङ्गमुपदिष्टं, प्रयाजे प्रयाजे कृष्णलं जुहोतीति तत् साधारणं सर्वेषां विध्यन्ते सम्भवति । न च समुच्चय. तस्माद् विकल्प. ॥ २७ ॥ पूर्व० ॥

## ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद् विकारो हि ॥२८॥

आग्नेयस्य विध्यन्तो नियम्येत । कुतः । ऐकार्थ्यात् । एकदेवतत्वादित्यर्थः । आग्नेय एकदेवत्य. । सौर्य्योऽपि । तेनैकदेवतत्वेन लिङ्गेन आग्नेयविध्यन्तो नियम्येत । पूर्ववत्त्वात् । पूर्ववानयं सौर्य्यः ।

पूर्वत्राभिहितं विध्यन्तमपेक्षते । विकारो हि । विकृतिरेषा । सर्वाश्च विकृतयः पूर्ववत्यः । चोदनावाक्यानामसमाप्तत्वात् । तत्र लिङ्गेन विध्यन्तनियमो भवतीत्युक्तम् । अस्तिचैकदेवतत्वं लिङ्गम् । तेनाग्नेयविध्यन्त. ॥ २८ ॥ सि० ॥

## अश्रुतित्वान्नेतिचेत् ॥ २९ ॥

अत्राह । स्यादेतदेवं, यद्यत्रैकत्वं श्रूयते । न तु श्रूयते । कथम् । तद्धितेनायं निर्देशः । सौर्य्यमिति, तथा आग्नेयमिति । तत्र वचनव्यक्तिर्न ज्ञायते, किं सूर्य्यो देवता अस्य, उत सूर्य्यौ च सूर्य्याश्चेति । तथा आग्नेयेऽपि ॥ २९ ॥ आ० ॥

## स्याल्लिङ्गभावात् ॥ ३० ॥

स्याद् व्यवस्थितिरेकत्वस्य । कुत । लिङ्गभावात् । लिङ्गमत्रास्ति । किम् । वाक्यशेषे एकत्वं श्रूयते, सौर्य्यं तावदमुमेव आदित्यं स्वेन भागधेयेनोपधावति, स एवैनं ब्रह्मवर्च्चसङ्गमयतीति । आग्नेयेऽपि, अङ्गिरसो वा इत उत्तमाः स्वर्गमायंस्ते यज्ञवास्त्वभ्यायँस्ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यँस्तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति । स तानाह न ध्रिये । तमब्रुवन् अग्नये ध्रियस्वेति । सोऽब्रवीत्, ध्रियेऽहम् । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति । अग्निमेव स्वेन भागधेयेन समर्द्धयतीति ॥ ३० ॥

## तथा चान्यार्थदर्शनम् ॥ ३१ ॥

अनुवाक्यायामेकत्वश्रवणम्, अग्निर्हं मूर्द्धा दिव इत्याग्नेये, उदु-त्यञ्जातवेदसमिति सौर्य्ये । ननु पुनरुक्तमेतल्लिङ्गद्वयोपदर्शनमिति । तदुच्यते । नैतत् पुनरुक्तम् । एकमत्र चोदनागतम्, एकं मन्त्रगतम् । चोदनागतं प्रापकं, मन्त्रगतं प्राप्तस्य द्योतकमिति ॥ ३१ ॥ आ० नि०॥

सौर्ये चरावाग्नेयधर्मातिदेशाधिकरणम् ॥ १६ ॥

## विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ ३२ ॥

इदं श्रूयते, ऐन्द्रमेकादशकपालं निर्वपेदिति, आग्नेयं पय इति । तत्र सन्देह । किं देवतासामान्यादैन्द्रपुरोडाशसान्नाय्यस्य विध्यन्तः, आग्नेये च पयसि औषधस्य, देवतासामान्य बलवत्तरम् ? अथ हविः-

सामान्यादुत्तरत्र सान्नाय्यस्य, पूर्वत्र औषधस्य, हविःसामान्यं बलीय ? इति ॥ किं प्राप्तम् । उच्यते । देवतासामान्यं बलीय इति । कुतः । मुख्यत्वात् । मुख्यनियन्त्रिता देवता । ऐन्द्रमाग्नेयमिति । जघन्यनियन्त्रितं हविः । तयोर्विरोधे मुख्याऽनुग्रहो न्याय्यः । मुख्यस्य अविरुद्धप्रवृत्तित्वात् । जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः । तस्माद्देवतासामान्यं बलीय इति प्राप्ते ब्रूमः । विप्रतिपत्तौ हविषा नियम्येत । विप्रतिपत्तौ एतस्यां हविर्देवतयोः, हविषा विध्यन्तो नियम्येत । कुतः । कर्मणस्तदुपाख्यत्वात् । कर्म देवतां प्रति द्रव्यस्योत्सर्गः । स च हवि षूपाख्यायते, उपलभ्यते इत्यर्थः । हविस्त्यज्यमानं दृश्यते । किमतः । अतो हवि कर्मणः प्रत्यासन्नम् । प्रत्यासत्तिश्च लिङ्गम् । ननु देवताऽपि यागेन सम्बद्धा । न तया विना यागो भवति । उच्यते । सत्यं सम्बद्धा । आरादुपकारिणी तु सा । नाऽसौ त्यज्यते । तस्माद् बहिरङ्गम् । अतो हविःसामान्यं बलीयः ॥ ३२ ॥ सि० ॥

## तेन च कर्मसंयोगात् ॥ ३३ ॥

तेन च हविषा संयुज्य कर्म चोद्यते । ऐन्द्रम्, आग्नेयमिति हविःप्रधानः शब्दः । किमत । अतो हविरत्र बुद्धौ सन्निहितं, तल्लिङ्गं भवति । यथा धूमो बुद्धिविषयतामापन्नोऽग्नेर्लिङ्गं, न विद्यमानः ॥ ॥ ३३ ॥ युक्तिः ॥

ननु देवताऽप्यत्र श्रूयते, ऐन्द्रमाग्नेयमिति । उच्यते—

## गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

विशेषणत्वेन देवता श्रूयते, हविर्विशेष्यत्वेन । विशेष्यं च बुद्धौ सन्निहितं भवति, न विशेषणम् । तद्विशेष्यं विशेष्य निवर्त्तते । कथं ज्ञायते । विशेष्यानुबन्धसंयोगात् । यथा राजपुरुषः पूज्य इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा । एवमिहापि । ऐन्द्रं पय इत्युक्ते हविर्बुद्धौ सन्निधीयते, न देवता । यच्च बुद्धौ सन्निहितं, तल्लिङ्गमित्युक्तम् । तस्माद् हविःसामान्यं बलीयः । अत ऐन्द्रे पुरोडाशे आग्नेयस्य विध्यन्तः । आग्नेये च पयसि सान्नाय्यस्येति ॥

गुणत्वेन देवताश्रुतिरित्येतस्य सूत्रस्यापरा व्याख्या । इदं पदोत्तरं सूत्रम् । यदुक्तं हविःसामान्यं बलीय इति । नैतद् युक्तम्, देवतासामान्यं बलीय इति । कुत । सर्वोऽयं प्रयासो देवताराधनार्थ एव ।

साऽस्य प्रसन्ना फलं ददाति । एवं श्रूयते । तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति । यश्चेन्द्रस्य प्रसादनोपाय इति ज्ञातः, पुनरपि इन्द्रे प्रसादयितव्ये स एवास्थेयो भवति । तस्माद्देवतासामान्यं बलीय इति ॥ अत्र ब्रूमः । स्यादेतदेवं, यदि देवतातः फलं स्यात् । यागात्तु फलं, स्वर्गकामो यजेतेति श्रूयते । यत्तु, तृप्त एवैनमिन्द्र इति । तत्रेदमुच्यते । गुणत्वेन देवताश्रुतिः । यागे गुणभूता देवता । तस्या दातृत्वं स्तुत्योच्यते । यथा, अमात्येन मे ग्रामो दत्तः, सेनापतिना मे ग्रामो दत्त इति । न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति । राजैव प्रभवति । इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः । तस्माद् यथोक्तेनैव न्यायेन हविःसामान्यमेव बलीय इति ॥ ३४ ॥ आ० नि० ॥ हविर्देवतयोः संनिपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥१७॥

## हिरण्यमाज्यधर्म तेजस्त्वात् ॥ ३५ ॥

प्राजापत्यं घृते चरुं निर्वपेत्, शतकृष्णलमायुष्काम इति श्रूयते । तद् हिरण्यमाज्यधर्म्म । स्यात् । उपांशुयाजविध्यन्तस्तत्र भवेत् । कुतः । तेजस्त्वसामान्यात् । तेजस्त्वं सामान्यम् । हिरण्यमश्मनां तेजः । आज्यमपि गवां सार इत्यर्थः । अथवा हिरण्यमपि तेजस्वित्वादुज्ज्वलम् । आज्यमपि स्निग्धत्वादुज्ज्वलमेव । तस्मात् सामान्यादुपांशुयाजधर्मा शतकृष्णलश्चरुः ॥ ३५ ॥ पूर्व० ॥

## धर्मानुग्रहाच्च ॥ ३६ ॥

हिरण्ये च बहव आज्यधर्मा अनुगृह्यन्ते अवेक्षणादयः । ओषधधर्म्मास्तु हीयेरन् अवहन्त्यादयः । तस्मादपि आज्यधर्म्माः ॥ ३६ ॥

## औषधं वा विशदत्वात् ॥ ३७ ॥

अथवा औषधस्य हिरण्ये विध्यन्तः । कुतः ? । विशदत्वात् । हिरण्यमपि विशदम्, औषधमपि विशदम् । कः पुनरनयोः सामान्ययोर्विशेषः । न खलु कश्चित् । किन्तु विशदत्वस्य कारणद्वयमुपोद्बलकं, तेजस्वितायास्तद्धर्म्मानुग्रह एकः ॥ ३७ ॥ सि० ॥

## चरुशब्दाच्च ॥ ३८ ॥

चरुशब्दश्चात्र भवति, प्राजापत्यं चरुमिति । चरुशब्दश्च औषधस्य वक्ता, तद् बलवद् औषधस्य लिङ्गम् ॥ ३८ ॥

## तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

तस्मिँश्चाज्ये श्रपणं श्रूयते, घृते श्रपयतीति । किमतः । अत एतद्भवति । औषधविध्यन्तेन श्रपणं प्राप्यते । तत्र केवलमाज्यं विधायिष्यते । आज्यविध्यन्ते तु श्रपणमाज्यं च विधीयेयाताम् । तथा वाक्यम्भिद्येत ॥

तस्मिंश्च श्रपणश्रुतेरित्येतस्यापरा व्याख्या । आह । साक्षादेव इहाज्यं श्रूयते । तस्मात् तस्य विध्यन्त इति । तत उत्तरमिदम् । तस्मिँश्च श्रपणश्रुते. । दार्शपौर्णमासिकं श्रपणं तस्मिँश्च आज्ये श्रूयते। गुणगतं तत्सामान्यम् । हविर्गतं तु वैशद्यं, चरुशब्दश्च । तस्मात् ते बलवती ॥ ३९ ॥ युक्तिः ॥ शतकृष्णलाख्यहिरण्ये औषधधर्मातिदेशाधिकरणम् ॥ १८ ॥

**मधूदके द्रवसामान्यात् पयोविकारः स्यात् ॥ ४० ॥**

चित्रायामिष्टौ श्रूयते, दधि मधु घृतं धाना उदकं तण्डुला, तत्संसृष्टं प्राजापत्यं भवतीति । तत्र, मधूदके पयोविकार. स्यात् । कुत । द्रवसामान्यात् । द्रवे च मधूदके पयोऽद्रवम् ॥ ४० ॥ पूर्व० ॥

**आज्यं वा वर्णसामान्यात् ॥ ४१ ॥**

आज्यं वा इमे विकुर्य्यातात्म्, उपांशुयाजस्य तयोर्विध्यन्तः स्यात्। कुत. । वर्णसामान्यात् । समानवर्णे मधूदके आज्येन ॥ ४१ ॥ सि० ॥

**धर्मानुग्रहाच्च ॥ ४२ ॥**

आज्यधर्म्मांश्च बहवो मधूदकयोः शक्याः कर्त्तुमुत्पवनादयो, न तु पयोधर्म्मा दोहनादयः ॥ ४२ ॥ युक्ति ॥

**पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥**

यत्तु पूर्वं कारणमुक्तम् । द्रवत्वसामान्यं तदविशिष्टम् । आज्यमपि अग्निसंयोगाद् द्रवीभवति तस्मादुपांशुयाजविध्यन्तो मधूदकयोरिति ॥४३॥ मधूदके उपांशुयाजीयाऽऽज्यधर्मातिदेशाधिकरणम् ॥ ॥१९॥ इति श्रीभट्टशबरस्वामिन कृतौ मीमांसाभाष्येऽष्टमस्याध्यायस्य प्रथमः पादः ॥ ८ ॥ १ ॥

अथ अष्टमस्य अध्यायस्य द्वितीयः पादः ॥ ८ ॥ २ ॥

**वाजिने सोमपूर्वत्वं सौत्रामण्याश्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥**

चातुर्मास्येषु वाजिनेज्या श्रुता । वाजिभ्यो वाजिनमिति । सौत्रामण्यां च सुरा ग्रहाः । आश्विनं ग्रहं गृह्णाति, सारस्वतमैन्द्रमिति । तत्र संशयः । किमुभयो सौमिको विध्यन्तः, उत दार्शपौर्णमासिक इति । तदुच्यते । वाजिने सौत्रामण्यां च ग्रहेषु सोमपूर्वत्वम् । सौमिको विध्यन्तः । कुतः । ताच्छब्द्यात् सोमशब्दत्वात् । सोमशब्दस्त्वत्र श्रूयते, सोमो वै वाजिनं सुरा सोम इति । न तावद्वाजिनं सोमो, न सुरा । न च तयोः सोमेन सादृश्यमस्ति । सादृश्याच्च परशब्दः परत्र प्रवर्त्तते । तस्मात् सादृश्यमत्र विधीयते । सादृश्यं चात्र सोमधर्मत्वकृतं शक्यं विधातुं, नान्यत् । स एष नाम्ना धर्म्मातिदेशो, न विध्यन्तेन । यथा, कौण्डपायिनामयने अग्निहोत्रे ॥ १ ॥ पूर्व० ॥

## अनुवषट्काराच्च ॥ २ ॥

अनुवषट्कारं च सोमधर्मं दर्शयति, वाजिनस्याग्ने वीहीत्यनुवषट्करोति, सुराया वीहीत्यनुवषट्करोतीति ॥ २ ॥ युक्तिः ॥

## समुपहूय भक्षणाच्च ॥ ३ ॥

समुपहूय भक्षणं च सोमधर्मः । तत्र दृश्यते । शेषं समं वा विभज्य समुपहूय भक्षयन्तीति ॥ ३ ॥ युक्ति ॥

## क्रयणश्रयणपुरोरुगुपयामग्रहणासादनवासोपनहनञ्च तद्वत् ॥ ४ ॥

क्रयणादींश्च सोमधर्मान् सुरायां दर्शयति, सीसेन क्लीबात्, क्रय्या कुवलसक्तुभिराश्विनं क्रीणातीति । एका पुरोरुक्, एका याज्या । उपयामगृहीतोऽस्यच्छिद्राय त्वाऽच्छिद्रेणाश्विनं ग्रहं गृह्णाति । गृहीत्वा आसादयति । त्रिरात्रं संहता वसन्ति । क्षौमे वाससी उपनद्धानि तोकमानि शष्पाणि भवन्तीति । विधौ सति अनेकार्थानि वाक्यानि स्युः । क्रयादीन् सीसकादींश्च विदधाति । तस्मादुभयोः सौमिको विध्यन्तः ॥ ४ ॥ युक्तिः ॥

## हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥

हविःसामान्येन वा, अत्र दार्शपौर्णमासिको विध्यन्तो नियम्येत । कुतः । तद्विकारत्वात् । दार्शपौर्णमासिकस्य हविषो विकार सुरावाजिने । औषधविकृतिः सुरा, सान्नाय्यविकृतं वाजिनम् ॥ ५ ॥ सि० ॥

**प्रशंसा सोमशब्दः ॥ ६ ॥**

अथ यदुक्तं, ताच्छब्द्यादिति । तत्र ब्रूमः । प्रशंसार्थोऽयं सोमशब्दो, न विध्यर्थ । विधायकस्याभावात् । सोमो वै वाजिनं, सुरा सोम इति । प्रकृष्टफलवत्त्वात् सोमस्य । तद्भावेन सुरावाजिनयोः प्रशंसा । यथा, सिंहो देवदत्त इति पुरुषस्य । तस्मान्नायं नाम्ना धर्मोऽतिदेशः ॥ ६ ॥ पूर्वपक्षयुक्तिनिरासः ॥

**वचनानीतराणि ॥ ७ ॥**

इतराणि तु सीसक्रयादीनि वाचनिकानि । प्राप्तेरभावात् । अगत्या च वाक्यानामनेकार्थता, सगुणकर्मविधानेन ॥ ७ ॥ पूर्व७ ॥

**व्यपदेशश्च तद्वत् ॥ ८ ॥**

शष्पैरेव दीक्षणीयामप्नोति । तोक्मभिः प्रायणीयां, सिंहलोमभिरातिथ्यामिति । सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः । प्राप्तानां शष्पादिभिस्तदातिवचनं नोपपद्यते ॥ ८ ॥ युक्ति ॥

**पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥**

पशुपुरोडाशता च ग्रहाणां श्रूयते, नैतेषां पशूनां पुरोडाशा विद्यन्ते । ग्रहपुरोडाशा ह्येते पशव इति । तत्र तावदत्र ग्रहाः पुरोडाशाः । ग्रहा एव ते । यदि तु पुरोडाशधर्मकास्तत एतदुपपद्यते । तस्मात् पौरोडाशिकस्तेषु विध्यन्त. ॥ ९ ॥ लिङ्गम् ॥ ॥ ऐष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥

**पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । यो दीक्षितो, यदग्नीषोमीयं पशुमालभते इति । तत्र सन्देहः । किं पशु पुरोडाशविकारः, उत सान्नाय्यविकार इति । किं प्राप्तम् । पशुः पुरोडाशविकार स्यात् । कुतः । देवतासामान्यात् । अग्नीषोमीयः पशु । पुरोडाशोऽपि तद्देवत्य एव ॥ १० ॥ पूर्व० ॥

**प्रोक्षणाच्च ॥ ११ ॥**

प्रोक्षणं पुरोडाशधर्म पशौ दर्शयति । अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति ॥ ११ ॥

**पर्यग्निकरणाच्च ॥ १२ ॥**

पर्य्यग्निकरणमपि पुरोडाशधर्म्मः । तदपि पशौ दृश्यते । आहवनीयादुल्मुकेन पशुं पर्य्यग्निकरोतीति । तस्मात् पुरोडाशविकारः ॥ ॥ १२ ॥ हेतु० ॥

## साम्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥

साम्नाय्यं वा पशुर्विकुर्य्यान्नपुरोडाशम् । कुतः । तत्प्रभवत्वात् । पशुतः साम्नाय्यं प्रभवति, पशुश्च । तन्मिथः प्रत्यासन्नम् । प्रत्यासत्तिश्च लिङ्गम् । हविःसामान्यं च देवतासामान्याद् बलीय इत्युक्तम् ॥ १३ ॥ सि० ॥

## तस्य च पात्रदर्शनात् ॥ १४ ॥

तस्य च साम्नाय्यस्य यत् पात्रम् उखा, सा पशौ दृश्यते । यदि पशुरुखायां पचेदिति ॥ १४ ॥ युक्ति ॥ पशौ साम्नाय्यधर्मातिदेशाऽधिकरणम् ॥ २ ॥

## दध्नः स्यान्मूर्त्तिसामान्यात् ॥ १५ ॥

साम्नाय्यविकारोऽपि दध्नो विकार स्यात् पशुः, न पयसः । कुतः । मूर्त्तिसामान्यात् । घनत्वं मूर्त्ति ॥ १५ ॥ पूर्व० ॥

## पयो वा कालसामान्यात् ॥ १६ ॥

पयो वा पशुर्विकुर्य्याद् न दधि । सद्यःकाल पशु, पयोऽपि सद्यःकालम् । दधि तु द्व्यहकालम् । पयोऽन्तरितं, तद् बहिरङ्गम् ॥१६॥ सि०

## पश्वानन्तर्य्यात् ॥ १७ ॥

पशोश्च पयोऽनन्तरं, तत् प्रत्यासन्नं, न दधि ॥ १७ ॥

## द्रवत्वं चाविशिष्टम् ॥ १८ ॥

द्रवत्वं पशुपयसोः समानम् । पशुरपि द्रवति, पयोऽपि । तस्मात् पयोविकारः पशु ॥ १८ ॥ युक्तिः ॥ पशौ पयोधर्मातिदेशाऽधिकरणम् ॥ ३ ॥

## आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९॥

वैश्वदेवी आमिक्षा उभयोर्दधिपयसोर्विकारः स्यात् । उभयभाव्यत्वात् । उभाभ्यां हि सा भाव्यते । तन्न युज्यते, विशेषोऽस्यैव, नेतरस्येति । तस्मादुभयोः ॥ १९ ॥ पूर्व० ॥

## एकं वा चोदनैकत्वात् ॥ २० ॥

एकं वा विकुर्य्याद् दधि पयो वा, नोभे । चोदनैकत्वात् । एकैषा चोदना, वैश्वदेव्यामिक्षा इति । सा एकेन विध्यन्तेन निराकाङ्क्षीक्रियते । तस्मादेकं विकुर्य्यात् ॥ २० ॥ सि० ॥

यत्तु, न युज्यते विशेष इति । तत्रोच्यते—

**दधिसङ्घातसामान्यात् ॥ २१ ॥**

संहतं दधि, आमिक्षाऽपि संहता । पयो द्रवम् । एष विशेषः । तस्माद्दध्नो विकार इति ॥ २१ ॥ पूर्व० ॥

**पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २२॥**

पयो वा आमिक्षया विक्रियते, न दधि । पयःप्रधानत्वाद् । अस्य च संसर्गस्य । किं प्राधान्यं पयसः । भूयस्त्वम् । प्रभूतं तत्र पयः, अल्पं दधि । दध्नश्च तदर्थत्वात् । दधि च तत्र पयो घनीभावयितुमुपादीयते । लोकवत् । लोकेऽपि पय एव घनीभावयितुं दधि उपादीयते । कथम् । दध्यऽभावेऽन्येनाम्लेनापि काञ्जिकादिना क्रियते । तत्रापि चामिक्षाशब्दो भवति । दधिनियमोऽम्ले हि अदृष्टार्थः । तस्मात् पय एवाम्लसंयोगेन घनीभूतमामिक्षा इत्युच्यते । पयश्चेद् आमिक्षा, पयस एव विकारो न्याय्यः ॥ २२ ॥ सि० ॥

**धर्म्मानुग्रहाच्च ॥ २३ ॥**

सद्यःकालता धर्म्मः पयोविकारत्वेनानुग्रहीष्यते । वैश्वदेवस्य सद्यःकालत्वात् । दधिविकारत्वे बाध्येत । वैश्वदेवोऽपि द्व्यहकालः क्रियेत । तथा तस्य धर्मो बाध्येत । सद्योभावं च दर्शयति । जुषन्तं युज्यं पय इति । यदि दध्नो विकारः स्यात् । तथा द्व्यहकालभावे दातव्यं, न कथञ्चन पयः स्यात् । तत्रैतद्दर्शनं नोपपद्यते । तस्मात् पयोविकारश्चामिक्षा, दध्नश्चाधर्मकत्वम् ॥ २३ ॥ युक्तिः ॥ आमिक्षायां पयोधर्मातिदेशाधिकरणम् ॥ ४ ॥

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥**

द्वादशाहोऽहर्गण , प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः । त्रयश्छन्दोमा अविवाक्यमह , उदयनीयोऽतिरात्र इति । स उभयसंज्ञकः, सत्रमहीनश्च । कथं ज्ञायते । अभियुक्तानामुपदेशात् । एवं ह्युपदिशन्ति । सत्रमहीनश्च द्वादशाह इति । शब्दार्थाधिगमे चाभियुक्तोप-

देश प्रमाणम् । संज्ञाऽव्यवस्थया च तस्य धर्मा आम्नाताः । एको द्वौ बहवोऽपि वा अहीनेन यजेरन् । तान् दीक्षिता याजयेयुः । गृहपति-सप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुरित्येवमादयः । धर्मभेदाच्च संज्ञाव्यवस्था । यथा, ब्राह्मण, परिव्राट्, वानप्रस्थ इति । ननु दशमेऽध्याये वक्ष्यते– द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वे सत्रशब्दाभिसंयोगात् ॥ यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वाद्, इति ॥ स द्विरात्रादिष्वहर्गणेषु प्रवर्त्तते इत्युक्तं-गणेषु द्वादशाहस्य इति । तत्र सन्दिह्यते । किमुभयप्रकारोऽसौ विकृतौ प्रवर्त्तते, उत व्यवस्थया, क्वचिदहीनभूतः, क्वचित् सत्रभूतः ? इति । किं प्राप्तम् । तस्योभयथा प्रवृत्तिः स्यात् । ऐककर्म्यात् । उभयविधस्तत्र प्रवर्त्तेत । कुतः । ऐककर्म्यात् । एकमिदं कर्म्म उभयविधमित्युक्तम् । न तस्य प्रवृत्तौ विशेषो गृह्यते, इहैवंविधः, इह नेति । तस्मादुभयविधः प्रवर्त्तेत । नन्वेकाचेद् विधा प्रवृत्ता, द्वितीयया कार्य्यं नास्ति । ऐककर्म्याद् विकल्पो भविष्यति । यथा आग्नेयविकारेष्वभिमर्शनस्य ॥ २४ ॥ पूर्व० ॥

**अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥**

अपि वा नैतदेवम् । सर्वत्रोभयथा प्रवृत्तिरिति । यत्र यजति श्रूयते, तत्राहीनभूतस्य प्रवृत्तिः । पारिशेष्यात् । यत्रासनोपायिचोदना, तत्र सत्रभूतस्य । कस्मात् । प्रकृत्या तुल्यशब्दत्वात् । प्रकृत्या हि विकृतिस्तुल्यशब्दा भवति । तस्माच्चोदनासामान्यात् प्रकृतिनियमः । अहीनभूतश्च यजतिचोदनः । द्वादशाहेन प्रजाकामो यजेतेति । सत्रभूत आसनोपायिचोदनः । द्वादशाहम् ऋद्धिकामा उपेयुः, द्वादशाहम् ऋद्धिकामा उपासीरन्निति ॥ २५ ॥ सि० ॥

**द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥**

अत्राह । के पुनस्तेऽहर्गणा यजतिचोदनाः, येषु अहीनभूतः प्रवर्त्तते ? के वा आसनोपायिचोदनाः, येषु सत्रभूत इति । तदुच्यते । द्विरात्रादीनामैकादशरात्रादहीनत्वम् । तत्राऽहीनभूतः प्रवर्त्तते । तेषां यजतिशब्देन चोदनात् । द्विरात्रेण यजेत इति ॥ २६ ॥

## त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायि- चोदनात् ॥ २७ ॥

त्रयोदशरात्रम् ऋद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्निति सुहृद्भूत्वा आचष्टे ॥

एवं वा। यस्माद् यजतिचोदनोऽहीनस्तस्माद्द्विरात्रादीनामपि अहीनत्वम्। तेऽपि हि यजतिचोदनाः। यस्मादासनोपायिचोदनं सत्रं, तस्मात्त्रयोदशरात्रादीनि सत्राणि। तान्यपि तच्चोदनानीति ॥२७॥ आ०नि०॥

## लिङ्गाच्च ॥ २८ ॥

अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत । तमेतं द्विरात्रादयोऽहर्गणा ऊचुस्त्वमस्मान् मा हासीरिति । तदेषामहीनत्वमिति द्विरात्रादीनामहीनत्वं दर्शयति ॥ २८ ॥ युक्तिः ॥ द्वादशाहे सत्राऽहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

## अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥

पञ्चदशरात्रं, कुण्डपायिनामयनं च उभावपि अहीनौ। कस्मात्। अन्यतरतोऽतिरात्रत्वात्। उभावपि एतौ अन्यतरतोऽतिरात्रौ तेन अहीनौ इति । पञ्चदशरात्रस्तावत्, त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्र उदनीयोऽतिरात्र इति। कुण्डपायिनामयनमपि, मासमग्निहोत्रं जुह्वतीत्यारभ्य, यावद् दशरात्रो महाव्रतमुदयनीयोऽतिरात्र इति। यश्चान्यतरतोऽतिरात्रः, सः अहीनः। कथं ज्ञायते ?। तद्भूतेषु अहीनत्वस्य दर्शनात् । तद्भूतेषु अन्यतरतोऽतिरात्रभूतेष्वहीनत्वं श्रूयते। यदन्यतरतोऽतिरात्रस्तेन अहीन इति ॥ २९ ॥ पूर्व० ॥

## अहीनवचनाच्च ॥ ३० ॥

अहीन इति चायं पञ्चदशरात्रः प्रत्यक्षमुक्तः । यदन्यतरतोऽतिरात्रस्तेनाहीन इति। तस्मादपि अहीन इति ॥ ३० ॥ युक्तिः ॥

## सत्रे वोपायिचोदनात् ॥ ३१ ॥

सत्रे वा एते, न अहीनौ। कुतः। उपायिचोदनात्। ये एव भूतिकार्य्यमिच्छन्तस्त एतं पञ्चदशरात्रमुपेयुः । कुण्डपायिनामयनेऽपि,

भूतिकामा उपेयुरिति । क पुनरेतयोर्लिङ्गयोर्विशेषः । चोदनागतमेकं, वाक्यान्तरगतमन्यच्च । चोदनागतं यत् तदन्तरङ्गं भवति, बहिरङ्गमितरत् । अयं चापरो विशेषः । अहीनलिङ्गेन च नित्येन अहीनस्य संस्तुतिर्नोपपद्यते । उपपत्त्यैतदहीनत्वमुच्यते । यदन्यतरतोऽतिरात्रस्तेनाहीन इति । सा यदि तावदुपपत्ति साधिका, ततोऽन्तरेणापि वचनं, सिद्धमहीनत्वम् । अथ न साधिका, उच्यमानमपि न सिद्ध्यति । तस्मान्नैतद् वचनम् । किन्तर्हि अनुवादोऽयं स्तुत्यर्थः । स्तुतिश्च, नित्येनाहीनलिङ्गेनान्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते । यत्कारणं, सर्व एवाहीनोऽन्यतरतोऽतिरात्र । सत्रस्य तूपपद्यते येन तावदयमन्यतरतोऽतिरात्र । तेनाऽहीनः । आत्मना च सत्रम् । अत उभयात्मा विशिष्टोऽयमन्येभ्यः सत्रेभ्य इति ॥३१॥ सि०॥

सत्रलिङ्गञ्च दर्शयति ॥ ३२ ॥

सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति । गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इति । गृहपतिर्हि सत्रे आम्नातः । गृहपतिसप्तदशाः सत्रमुपेयुरिति । सत्रे च तेनार्थः क्रत्वर्थान् याजमानान् कर्त्तुम् । अन्येषां यजमानानां व्यावृतत्वात् । तस्मात् सत्रे एवैते इति ॥ ३२ ॥ युक्तिः ॥ पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥ इति श्रीभट्टशबरस्वामिन कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य द्वितीयः पादः ॥ ८ ॥ २ ॥

अथ अष्टमस्य अध्यायस्य तृतीय पाद ॥ ८ ॥ ३ ॥

हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥

इह हविर्गणा उदाहरणम् । आग्नावैष्णवमेकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय अग्नये शुचये इत्येवमादयः । तत्र चिन्त्यते । किं शुचिदेवतस्याग्नीषोमीयविध्यन्तः, आग्नावैष्णवस्यापि आग्नेयविध्यन्तः ? उत विपर्य्यय इति । किं प्राप्तम् । हविर्गणे परं शुचिदेवतम् उत्तरस्याग्नीषोमीयस्य विकारः । पूर्वमप्याग्नावैष्णवं, पूर्वस्याग्नेयस्य विकारः । कुतः । देशसामान्यात् । क्रमसामान्यादित्यर्थः । इह शुचिदेवतो द्वितीयः । प्रकृतावप्यग्नीषोमीयो द्वितीयः । इतरत्रापि आग्नावैष्णवः प्रथमः ।

प्रकृतावपि आग्नेयः प्रथमः । देशसामान्येन लिङ्गेन परमुत्तरस्य, पूर्वं पूर्वस्य विकारः॥ १ ॥ पूर्व० ॥

**देवतया वा नियम्येत शब्दवत्त्वादितरस्याऽश्रुतित्वात् ॥ २ ॥**

न वा देशनियमः स्यात्। किन्तर्हि । देवतया । देवतासामान्यात्। कुतः । शब्दवती देवता। आग्नावैष्णवमग्नये शुचये इति। इतरस्य देशस्य अश्रुतित्वात्। देशो न श्रूयते। किन्तर्हि । प्रचयाद् गम्यते। किमतः ?। एतदतो भवति। देवताप्रत्यये कर्म्मचोदनायामनन्तरत्वान्मुख्यः । इतरस्तु पौर्वापर्य्यापेक्षया उत्पद्यते । तस्माज्जघन्यः। मुख्यानुग्रहश्च न्याय्यः । अतः शुचिदेवत्ये आग्नेयस्य विध्यन्तः । आग्नावैष्णवे च अग्नीषोमीयस्य ॥ २ ॥ सिद्धान्तः ॥ शुचिदेवते आग्नेयस्याग्नावैष्णवे च अग्नीषोमीयस्य धर्मातिदेशाऽधिकरणम् ॥ १ ॥

**गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥**

जनकसप्तरात्रे श्रूयते, चत्वारि त्रिवृन्ति अहानि भवन्तीति। तथान्यत्र श्रूयते, नव त्रिवृन्त्यहानि भवन्तीति। तत्र सन्देहः। किं पार्ष्ठिकस्य प्रथमस्यायमभ्यासः, उत नानाह्नां द्वादशाहिकानां स्तोमविधिरिति ?। किं प्राप्तम्। गणचोदनायां यस्य लिङ्गं, तदावृत्तिः प्रतीयेताग्नेयवत् । गणचोदनायामेवंविधायां यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्याह्नस्त्रिवृत्त्वं, तस्यैवाऽऽवृत्तिः प्रतीयेत। चोदनासामान्यात्। आग्नेयवत्। तद् यथा, अग्नये पावकाय, अग्नये शुचये इति देवतैक्याच्चोदनासामान्यादाग्नेयस्य विध्यन्ताभ्यासः । एवमिहापि॥ ३ ॥ पूर्व० ॥

**नानाहानि वा सङ्घातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥**

नानाहानि वा द्वादशाहिकानि प्रवर्त्तेरन्, न पार्ष्ठिकं प्रथममहः । कस्मात् । सङ्घातत्वात् । सङ्घात एष उच्यते, चत्वारि त्रिवृन्ति अहानीति। पृथक्त्वनिवेशिनी हि चत्वारि इति सङ्ख्या, पृथक्त्वेन अह्नां भवतीति। सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि। तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते, न तु

त्रिवृन्ति बहून्यहान्यनूद्य तत्र चतुःसंख्या विधीयते ॥ ४ ॥ सि० ॥

तथा चान्यार्थदर्शनम् ॥ ५ ॥

चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुख्यानीति । येषामग्निष्टोमः प्रथम, इतरेऽनग्निष्टोमाः, त एवमुक्ते प्रतीयन्ते, न ये सर्वे अग्निष्टोमा. । यथा, अयोमुख्यं पिण्डच्छेदनमित्युक्ते न सर्वायसं प्रतीयते। यदि च त्रिवृतोऽभ्यासः स्यात्, सर्वे अग्निष्टोमा भवेयुः । अग्निष्टोमो हि असौ । तस्माद् द्वादशाहिकानां चोदकप्राप्तानामह्नां त्रिवृत्ता विधीयते । एवं नव त्रिवृन्ति अहानि भवन्तीति ॥ ५ ॥ युक्तिः ॥ जनकसप्तरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥

क्वचित् कर्म्मविशेषे श्रूयते । षडहा भवन्ति, चत्वारो भवन्ति, पञ्चहा भवन्ति । तत्र सन्देहः । किं द्वादशाहिकानामह्नां प्रवृत्तिः, उत षडहस्येति । किं प्राप्तम् । कालाभ्यासेऽपि बादरिः । षडहकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे बादरिराचार्य्यो द्वादशाहिकानामह्नां प्रवृत्तिं मन्यते स्म । कुतः । कर्म्मभेदात् । षडहशब्देनात्र अहर्मितानि षट्सौत्यानि कर्म्माण्युच्यन्ते । तेषां च षट्कानां भेदो गम्यते । चत्वारः षडहा इति पृथक्त्वनिवेशात् सङ्ख्यायाः । यद्येकस्यैव कर्मषट्कस्य पार्ष्ठिकस्याभिप्लविकस्य वा अभ्यासः कल्प्येत, ततश्चतुःषडहा इति स्यात् । अथ पुनश्चत्वार षडहा इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते,सा अहःसङ्घातचोदना प्रकृतिलिङ्गत्वाद् द्वादशाहिकीमहःप्रवृत्तिं गृह्णाति । तस्मान्नानाह्नां द्वादशाहिकानां प्रवृत्ति ॥६॥ पूर्व० ॥

तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥

तदावृत्तिं, पार्ष्ठिकस्यैव प्रज्ञातस्य षडहस्यावृत्तिं जैमिनिराचार्य्यो मेने । कुत । अह्नामप्रत्यक्षसङ्ख्यत्वात् । चतुर्विंशतिरह्नाम. प्रत्यक्षा सङ्ख्या अनुमानाद् गम्यते । तस्याश्च षडहचतुष्टयेनैव अनुमानम् । तेन पूर्वं तावत् षडहचतुष्टयमेव प्रत्येति । तत् समाहृत्य चतुर्विंशतिसङ्ख्याम् । यथा, पूर्वं धूमं प्रतिपद्यते, पश्चादग्निम् । यश्च धूमप्रत्ययेनैव कृतार्थो भवति नासौ अग्निप्रत्ययमाद्रियते । इहाऽपि षड्हप्रत्ययादेव तत्प्रवृत्तिः प्रसज्ज्यते । तया च कृतार्थः, किं चतुर्विंशतिसङ्ख्यया प्रतीतया करिष्यति । तस्मात् षडहाभ्यासः ॥

अथ यदुक्तं, पृथक्त्वनिवेशिनी सङ्ख्या आवृत्तौ बाध्येतेति । तत्र ब्रूमः । षडह इति प्रज्ञातः षडहः सन्निहितो गृह्यते । तस्य चतुःसङ्ख्यासम्बन्धः साक्षान्नास्तीत्यावृत्त्या भविष्यति । यथा, उपसदां प्रयाजानुयाजानां च । यस्यापि चतुर्विंशतिरात्रश्चत्वारः षडह इत्येवं चोद्यते, तस्यापि दशरात्रे प्रवर्त्तमाने आवृत्त्यैव सङ्ख्यापूरणम् । भिन्नानां षडहानामभावात् । यश्चोभयोर्दोषो नासावेकं पक्षं निवर्त्तयति ॥ ७ ॥ सिद्धान्तः ॥ षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥३॥

## संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षण-ग्रहणात् ॥ ८ ॥

इह संस्थागणा उदाहरणम् । अग्निष्टोम पञ्चोक्थ्य, शताग्निष्टोमं भवति, शतातिरात्रं भवतीत्येवमाद्य । अत्र चिन्त्यते । किं ज्योतिष्टोमस्यायमभ्यासः, उतैवंसङ्ख्यानां संस्थाविशिष्टानामह्नां वाद इति । किं प्राप्तम् । संस्थागणेषु तदभ्यास प्रतीयेत । तस्यैव प्राकृतस्य ज्योतिष्टोमस्यायमभ्यास । कुतः । कृतलक्षणग्रहणात् । तस्यैतत् कृतं लक्षणम् । अग्निष्टोम, उक्थ्यः, षोडशी, अतिरात्र इति तत्संयोगेनैता संस्था उत्पन्ना । स ताभि शक्यते लक्षयितुम् । तञ्च लक्षयित्वा सङ्ख्यां केवलां विधास्यति । नानाह्नां तु वादे संस्था सङ्ख्या चोभयं विधीयते । उक्थ्या संस्था भवन्तीति । ते च पञ्च भवन्तीति । तथा वाक्यमभिद्यते । तस्माज्ज्योतिष्टोमाभ्यास ॥८॥पूर्व०॥

## अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥

नैतदेवं ज्योतिष्टोमाभ्यास इति । कथं तर्हि । प्रकृतिस्तद्विशिष्टा स्यात् । द्वादशाहिकानि अहानि संस्थाविशिष्टानि स्युः । कस्मात् । अधिकारात् । तान्यत्र चोदकेन अधिकृतानि । एवं चोदकानुग्रहो भविष्यति ॥ ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिभिः शब्दैः । नेत्याह । कथम् ? । अभिधानस्य तन्निमित्तत्वात् । अग्निष्टोमाभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकम् । तत्संस्थं क्रतुं वदितुं शक्नोति, न ज्योतिष्टोममेव । यत्तु अनेकार्थमिति । नानेकार्थं भविष्यति। गणचोदनया प्राप्तानामह्नां पञ्चानां संस्थामात्रं विधायिष्यते। शताग्निष्टोममित्यपि समास उभयविशेषणविशिष्टं गणमाह ।

स एक एवार्थ । यथा, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति । पृथक्क- निवेशिनी चैवं सङ्ख्या अनुगृहीता भविष्यति । तस्माद् द्वादशा- हिकानां नानाह्नां वाद ॥ ९ ॥ सिद्धान्त ॥ संस्थागणेषु द्वादशाहिक- धर्मातिदेशाधिकरणम् ॥ ४ ॥

## गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥

शतोक्थ्यं भवति शतातिरात्रं भवतीति श्रूयते । तत्र द्वादशाहिकानि अहानि प्रवर्तन्ते । तानि च प्रायेणोक्थ्यसंस्थानि । द्वौ अग्निष्टोमौ शतोक्थ्यं भवतीत्युक्तेरग्निष्टोमयोरुक्थ्यस्तोत्रोपचय. प्राप्त । शताति- रात्रं भवतीति सर्वेषु रात्रिपर्य्यायोपचयः । तत्र चिन्त्यते । किं द्वादशाहादुपचय कर्त्तव्यः, उत ज्योतिष्टोमादिति । किं प्राप्तम् । गणादुपचय. । कुत । तत्प्रकृतित्वात् । द्वादशाहप्रकृतय एतेऽहर्गणा- स्तेषु द्वादशाहिको विध्यन्त प्राप्यते । यदि द्वादशाहादुपचयः, एवं चोदकानुग्रहो भविष्यति । तस्माद् गणादुपचय. ॥ १० ॥ पूर्व० ॥

## एकाहाद्वा तेषां समत्वात् स्यात् ॥ ११ ॥

एकाहाद्वा ज्योतिष्टोमादुपचयो, न द्वादशाहात् । कस्मात् । तेषां समत्वात् । द्वादशाहिकानामह्नामितरैर्वैकृतैः समत्वं भवति । तान्य- प्यन्यतः संस्थामकाङ्क्षन्ति, इमान्यपि । न च भिक्षुका भिक्षुकादा- काङ्क्षन्ति सत्यन्यस्मिन् प्रसवसमर्थेऽभिक्षुके । किमेतदुक्तं भवति । द्वादशाहे संस्थास्तोत्राण्यनाम्नातानीत्यतो यत्राम्नातानि तत आ- काङ्क्षन्ति । वैकृतेष्वह सु तानि नाम्नातानीति । तस्माद् वैकृतान्यपि अहानि यत्र विहितानि तत एवाकाङ्क्षितुमर्हन्ति । ज्योतिष्टोमे च तान्याम्नातानि । तस्माज्ज्योतिष्टोमादुपचयः ॥ ११ ॥ सिद्धान्तः ॥ शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ॥ ५ ॥

## गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात् सङ्ख्या- त्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥

उपचयश्चिन्तितः । अपचय इदानीं चिन्त्यते । इदं श्रूयते । वाज- पेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति । तत्रेदं समाम्नातं, गायत्रमेतदह- र्भवतीति । अत्र विचार्य्यते । किं प्राकृतीनां त्रिष्टुब्जगतीनामक्षराव- लोपं कृत्वा गायत्रं तदहः कर्त्तव्यम् ? उतोत्पत्तिगायत्रीणां दाशत- यीभ्य आगमं कृत्वेति । अत्र सूत्रेणैवोपक्रमः । गायत्रीषु प्राकृतीना-

भवच्छेदः । गायत्रीषु श्रूयमाणासु गायत्रमेतदहर्भवतीति, प्राकृतीनां त्रिष्टुब्जगतीनामवच्छेदोऽक्षरावलोप कर्त्तव्यः । कुत । प्रकृत्य-ऽधिकारात् । चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्यः प्राप्ता अधिकृता विद्यन्ते। यद्यन्यासामृचामागम क्रियेत, प्राकृतः प्रत्ययो बाध्येत ॥ ननु प्रत्यक्षश्रुता गायत्र्यः । ताभिश्चोदकप्राप्ता इतरा बाधितव्याः । ने-त्याह । कस्मात् । सङ्ख्यात्वात् । अयं गायत्रीशब्द. संख्यावाचकः । कथं ज्ञायते । अव्यतिरेकाच्चतुर्विंशतिसंख्यामेष न व्यभिचरति । न क्वचिच्चतुर्विंशतिसख्यया विना दृष्टश्चतुर्विंशतिसंख्याहीनासु त्रिष्टु-ब्जगतीषु न कदाचिद् भवति । तस्मात् संख्याशब्दोऽयम् । संख्या-शब्दश्चेदक्षरावलोपः कर्त्तव्यः । अग्निष्टोमवत् । यथा, शताग्निष्टोमं भवतीत्युक्तं द्वादशाहिकानामहामुक्थ्यावलोप. क्रियते । एवमिहापि ॥ १२ ॥ पूर्व० ॥

## तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥

तन्नित्यवत् सङ्ख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यो जगतीषु अगायत्रीषु तद्वचनं भवति गायत्री-वचनं भवति । ये हि द्वे गायत्र्यौ, सा एका जगतीति । यदि सं-ख्यायां गायत्रीशब्दस्ततो जगत्यां द्वे चतुर्विंशतिसङ्ख्ये इत्येतद्वचन-मुपपद्यते । अथ ऋचः, ततो द्वे ऋचौ जगत्यां न स्त इति एतद्वचन-मनुपपन्नं स्यात् । तस्मादपि सङ्ख्यायां गायत्रीशब्दः । तथेदम-परं च दर्शनम् । तिस्रोऽनुष्टुभश्चतस्रो गायत्री करोतीति ॥ १३ ॥

## न विंशतौ दशेतिचेत् ॥ १४ ॥

अथ कश्चिद् ब्रूयाद्, न विंशतौ दशसङ्ख्याऽस्ति । न सङ्ख्या सङ्ख्यान्तरं वर्त्तते । गुणो हि सङ्ख्या । न च गुणा गुणेषु वर्त्तन्ते। एवमष्टाचत्वारिंशत्सङ्ख्यायां चतुर्विंशतिसङ्ख्या नास्ति । तस्मात् सङ्ख्यार्थेऽपि गायत्रीशब्दे एका जगती द्वे गायत्र्यौ इत्येतदनुपपन्न-मेव । यश्चोभयोर्दोषो नासावेकस्य वाच्यः ॥ १४ ॥ आ० ॥

## ऐकसङ्ख्यमेव स्यात् ॥ १५ ॥

अत्रोच्यते । न ब्रूमः, सङ्ख्यायां सङ्ख्या वर्त्तते इति । किं तर्हि । अष्टाचत्वारिंशत्सङ्ख्यापरिच्छिन्नेष्वक्षरेषु अवयवभूते द्वे चतुर्विंशतिसङ्ख्ये, न तु द्वे ऋचौ इति । न च सङ्ख्या सङ्ख्या-

न्तरं निवर्त्तयति । यदि निवर्त्तयेद् एकसङ्ख्यमेव स्यात् । यस्य दश गावस्तस्य द्वौ पञ्चकौ गवामित्येतद्वचनं न स्यात् । भवति च तत् । तस्माद् न संख्या संख्यान्तरं निवर्त्तयति ॥

एवं वा । न विंशतौ दशेति चेत् । यद्यपि संख्यायां गायत्रीशब्द', एवमपि नाक्षरावलोपः कर्त्तव्यः । किं कारणम् । विंशतौ दश विद्यन्ते । किमत । इदं तावदत' । येन विंशतिरुपात्ता, उपात्तास्तेन दश भवन्ति । एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्तास्तेन तदन्तर्गता गायत्र्यो भवन्ति । तस्मादविकारेण प्रयोगः । एवं चोदकाऽनुग्रहश्च भवति । गायत्रं चाहः कृत भवति । एकसंख्यमेव स्यात् । अत्राह, जगत्यां त्रिष्टुभि चोपात्तायां न गायत्र्य उपात्ता भवन्ति । कथम् । साधनं परिच्छिन्दती संख्या कर्मणि अङ्गीभवति । न जगत्या', त्रिष्टुभो वा अवयवः साधनम् । किं तर्हि । त्रिष्टुब्जगत्यः ॥ अथोच्येत, गायत्रमेतदहर्भवतीतिवचनादवयव एवात्र साधनमिति । तथा सति अक्षरावलोप एव प्राप्नोति । उत्तरस्यावयवस्यानङ्गत्वात् । न च अनङ्गेऽनुपादीयमाने चोदको बाध्यते । तस्माद् यदुक्तं, यद्यपि संख्यायां गायत्रीशब्द , एवमपि अविकारेण प्रयोग इति । एतदयुक्तम् । दर्शयति । न चोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति । यदयमेका च दश च शतं च सहस्रं च परार्द्धं चेति सर्वसंख्या अनुक्रामति । यदि चोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्ति एकसंख्यमेव स्यात् । एकैवापरार्द्धसंख्या भवेत् । सा हि सर्वाभ्य उत्तरा । यतस्तु एकाद्या अपि अनुक्रान्ताः । अतो विज्ञायते, न उत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति ॥ १५ ॥ आ० नि० ॥

गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १६ ॥

नैतदेवं, संख्यायां गायत्रीशब्द इति । कथं तर्हि । गुणाद् द्रव्यशब्द- स्यात् । चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः । कस्मात् । असर्वविषयत्वात् । यदि संख्याशब्दः स्यात् सर्वस्मिंश्चतुर्विंशतिसंख्यासंख्येये वर्त्तेत गोयूथादौ । न च वर्त्तते । तस्मान्न संख्याशब्दः ॥ १६ ॥ सि० ॥

गोत्ववच्च समन्वयः ॥ १७ ॥

यथा, गौरिति सत्यपि गमननिमित्ते सामान्यद्रव्याऽभिधाने सास्नादिमत्येव समन्वयो,नान्यत्रेति तद्वचन एव गोशब्दो विज्ञायते। एवमयमपि ऋग्वचन एव विज्ञातुं न्याय्य. ॥ १७ ॥

## संख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥

चतुर्विंशतिसंख्यावाचकः शब्दोऽस्ति, चतुर्विंशतिरिति । न अस्यापरेण गायत्रीशब्देन अर्थः । संज्ञाया व्यवहारार्थत्वादेकेन व्यवहारसिद्धेः ॥ १८ ॥

## इतरस्याश्रुतित्वाच्च ॥ १९ ॥

इतरस्य ऋग्द्रव्यस्याश्रुतित्वाद् । अशब्दत्वादित्यर्थ' । तस्याऽपि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनम् । तत्रायं गायत्रीशब्दोऽर्थवान् भवति। संख्यायां निष्प्रयोजनः। तस्मादपि ऋक्शब्दो न्याय्यः अतो गायत्रीणाम् ऋचामागमः कर्त्तव्य इति ॥ १९ ॥ युक्तिः ॥

## द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात्॥ २० ॥

यदुपवर्णितम्, अग्निष्टोमवदिति । तत्र ब्रूम. । अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चिन्निवेशो नास्ति । यथा गायत्रीशब्द ऋग्द्रव्ये । अयं हि केवलाग्निष्टोमान्ततां ब्रूते । न चोक्थ्यलोपमन्तरेण, द्वादशाहिकानामह्नामग्निष्टोमान्तता भवतीति अवश्यकार्य्य उक्थ्यलोप । अयं पुनर्गायत्रीशब्द ऋग्द्रव्यस्य वाचक इत्युक्तम् । न च अक्षरावलोपेन तद् ऋग्द्रव्यं प्राप्यते । तस्माद्विषमोऽयमुपन्यास इति ॥ २० ॥ पूर्वपक्षयुक्तिनिरास. ॥

## अशास्त्रलक्षणत्वाच्च ॥ २१ ॥

अशास्त्रलक्षणानि चोक्थस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणया अग्निष्टोमान्ततया बाध्यन्ते । इह पुनर्विपरीतं, शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यस्त्रिष्टुब्जगत्य । ता न शक्नुवन्ति गायत्रीं बाधितुम् ॥ २१ ॥ युक्ति. ॥

## उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥२२॥

अथ यदुक्तं, संख्यायां गायत्रीशब्दो दृष्टः । ये हि द्वे गायत्र्यौ, सैका जगतीति । तस्य कः परिहार । उच्यते । औत्पत्तिकमेतद् ऋचो नामधेयमित्युक्तम् । अत उत्पत्तिनामधेयत्वाद् योऽयं जगत्यवयवे चतुर्विंशत्यऽक्षरे पदसञ्चये प्रयोगः, स भक्त्या विज्ञेयः । न

हि एकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या । कथा पुनर्भक्त्या ? परिमाणसामान्यात् । यत् परिमाणं द्वयोर्गायत्र्योः तदेकस्या जगत्याः । अत एतदुक्तम् । ये हि द्वे गायत्र्यौ, सा एका जगतीति । यथा, यौ द्वौ कौरवौ स एको वाहीक इति । एतच्च गायत्रीद्वयप्रशंसार्थं वचनम् । कथम् । इदं श्रूयते, द्वाभ्यां गायत्रीभ्यां वैश्यस्येति । तदेतदयुक्तमिवोच्यते । जगत्या वैश्यस्य कार्य्यम् । जागतो हि वैश्यः । तदेतद् द्वाभ्यां गायत्रीभ्यां क्रियते । जगत्यैव तत् कृतं भवति । ये हि द्वे गायत्र्यौ सा एका जगतीति । तस्मादहेतुरयं सङ्ख्यार्थत्वे गायत्रीशब्दस्य ॥ २२ ॥ पूर्वपक्षयुक्तिनिरासः ॥

## वचनमितिचेत् ॥ २३ ॥

शक्यं तावत् तत्रैतद् वक्तुं, यत्रानुवादो गायत्रीशब्दः । यत्र तु विधिस्तत्र कथम् । यथा, तिस्रोऽनुष्टुभ , चतस्रो गायत्रीः करोति इति । कः पुनर्विधौ विशेषः । विधौ शब्दार्थेन व्यवहारो भवति । तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो न शक्याः कर्त्तुम् । शक्यास्तु चतस्रश्चतुर्विंशतयः । तस्मात् तत्र संख्यायां गायत्रीशब्द इति ॥२३॥ आ०

अथ ब्रूमः—

## यावदुक्तम् ॥ २४ ॥

इहैवैकत्र संख्यार्थो, नान्यत्र । क्वचिद्दर्शनात् । आह । यद्येवं न सङ्ख्यावचन , कथमिह सङ्ख्यार्थो जातः ? इति । उच्यते । लक्षणयाऽपि विधानं भवति । यथा लोके, अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति । वेदेऽपि, पृष्ठैरुपतिष्ठन्ते इति । न च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्ट इति । अन्यत्रापि प्रतिकृतिवचनो विज्ञायते । पृष्ठशब्दो वा मन्त्रवचनः । न च लक्षणया प्रयोगे अशब्दार्थः परिच्छिद्यते । यत् कारणं, स्वार्थे एव वर्त्तमानोऽर्थान्तरं लक्षयति । स्वार्थं जहद् नैव लक्षयेत् । तस्मादयमपि अहेतुः ॥ २४ ॥ आ० नि० ॥

## अपूर्वे च विकल्पः स्याद्यदि संख्याविधानम् ॥ २५ ॥

अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पः स्याद्, यदि संख्यायां गायत्रीशब्द । तत्र हि श्रूयते, गायत्र्या परिदध्यादिति । एवं श्रुते आज्ञुहोतायाश्चतुर्विंशत्यक्षरस्य पदसञ्चयस्य च विकल्पः स्यात् । विकल्पे पक्षे आज्ञुहोताया बाधः । स चायुक्तः सत्यां गतौ ।

तस्मादपि नैतत् संख्याविधानम् ॥ २५ ॥ युक्तिः ॥

ऋग्गुणत्वान्नेतिचेत् ॥ २६ ॥

अत्रोच्यते । न प्रकृतौ विकल्पो भविष्यति । कुतः । ऋग्गुणत्वात् । ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः । ऋचस्तस्य सामिधेन्य आम्नाताः । यदि अनूचा परिदधीत, ऋग्गुणत्वं बाध्येत । तस्मात् तत्र आजुहोतयैव परिधास्यति । तथा सति गायत्र्या परिहितं भविष्यति । ऋग्गुणत्वं चोपगृहीतम् ॥ २६ ॥ आ० ॥

तथा पूर्ववति स्यात् ॥ २७ ॥

पूर्ववति अपि बृहस्पतिसवे तथा स्याद् यथा अपूर्वे । अत्रापि ऋग्गुणक प्रयोगोऽङ्गीकृतश्चोदकेन । तत्रापि ऋक्षु उपादीयमानासु गायत्रं चैव अहः कृतं भवति । ऋग्गुणकत्वं च न बाधितम् । तस्मान्नाक्षरावलोप ॥ २७ ॥ आ० नि० ॥

गुणावेशश्च सर्वत्र ॥ २८ ॥

तुशब्दस्य स्थाने चशब्द । दृष्टश्च तुशब्दस्यार्थे चशब्दः । यथा, किञ्चेह भवतीति । गुणस्य चतुर्विंशतिसंख्यायाः सर्वत्रावेश कृत्स्नायामाजुहोतायां, नावयवे । अतस्तस्यामुपादीयमानायाम् ऋग्गुणत्व चोपगृहीतं भवति, संख्या च । बृहस्पतिसवे पुनर्या ऋचश्चोदकेन अङ्गीकृताः, तासामवयवे चतुर्विंशतिसंख्या निविष्टा । तस्मिन्नुपादीयमाने ऋग्गुणत्वमनुपात्तं भवति । प्रकृतिगायत्रीषु तूपात्तं भवति । तस्मान्न संख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणामागम प्राप्नोति ॥

अपर आह । इदं तावदयं संख्यावादी प्रष्टव्य । कस्मादक्षरगतायामेव संख्यायां भवानवस्थितो, न पुनरन्यसंख्येयगतायामपि । ग्रहगतायां चमसगतायां वा ? । यावताऽविशेषेण श्रुतं, गायत्रमेतदहर्भवतीति । एवं सति सर्वत्र गुणावेशः प्राप्नोति ॥ २८ ॥ युक्ति० ॥

निष्पन्नग्रहणान्नेतिचेत् ॥ २९ ॥

स चेद् ब्रूयाद्, यत्रायं निष्पन्नो, गायत्रीशब्दः प्रसिद्ध इत्यर्थः । तस्य ग्रहणं न्याय्यम् । अयं च अक्षरगतायामेव संख्यायां प्रसिद्धो न सर्वत्र । तस्मान्न सर्वसंख्येयगतो गृह्यते इति ॥ २९ ॥ आ० ॥

स वक्तव्यः—

**तथेहापि स्यात् ॥ ३० ॥**

यथा अक्षरगतायामेव संख्यायां दृष्टो, नान्यत्र । एवम् ऋक्षु एव दृष्टो, नान्यस्मिँश्चतुर्विंशत्यक्षरे गद्ये वा । यथा चाऽक्षरेष्वेव दृष्ट इति नानक्षरे विज्ञायते । एवम् ऋक्षु दृष्ट इति नानृक्षु विज्ञातुं न्याय्यः ॥ अत्राह । यद्यप्ययम् ऋक्षु गायत्रीशब्दः, एवमप्यक्षरावलोपः कार्य्यः । किङ्कारणम् । प्रकृत्युपबन्धनात् । चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्य प्रापिताः । ता इमा नोज्झिता भविष्यन्ति । गायत्रीशब्दश्च सङ्ख्यासामान्यात् शक्नोति तदवयवान् वक्तुम् । एवमुभौ विधी अनुगृहीतौ भविष्यतः— प्राकृतो वैकृतश्चेति ॥ ३० ॥

अत उत्तरं पठति—

**यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥**

यदि अविशये अशसयेऽपि गायत्रीषु विहितासु प्रकृत्युपबन्धनादगायत्र्यां गायत्रीशब्दः कल्प्यते, शरेष्वपि, शरमयं बर्हिर्भवतीति कुशेषु शरशब्दः कल्पयितव्यः । कौशमेव बर्हिः कार्य्यम् । वक्तव्यो वा विशेषः ॥ ३१ ॥ आ०नि० ॥

**दृष्टः प्रयोग इतिचेत् ॥ ३२ ॥**

अयं विशेषो दृष्टः । चतुर्विंशतिसंख्यायामक्षरगतायां गायत्रीशब्दस्य प्रयोगः । ये द्वे गायत्र्यौ सैका जगतीति । तेन शक्यते कल्पयितुम् ॥ ३२ ॥ आ० ॥

**तथा शरेष्वपि ॥ ३३ ॥**

शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते, शरवणमेवेदं कुशवनमिति ॥ ३३ ॥ आ० नि० ॥

**भक्त्येति चेत् ॥ ३४ ॥**

अत्रोच्यते । स तत्र शरशब्दो भाक्तः प्रयुज्यते । दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ, शरवणमेवेदं कुशवनमिति स्वार्थे वर्त्तमानः सादृश्यं गमयति । स्वार्थं जहत् कथं गमयेत् । तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो, न कुशेष्विति ॥ ३४ ॥ आ० ॥

**तथेतरस्मिन् ॥ ३५ ॥**

तथेतरस्मिन्नपि ये द्वे गायत्र्यौ सैका जगतीति भाक्तएव गायत्रीशब्द इत्युक्तम् । सोऽपि स्वार्थे एव वर्त्तमानस्तत्सदृशं गमयतीति ऋक्ष्वेव प्रयुक्तो, न संख्यायाम् । तस्मान्न संख्यायां गायत्रीशब्दः । अतो नाक्षरावलोप कर्त्तव्य ॥ ३५ ॥ आ० नि० ॥

**अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् ॥ ३६ ॥**

अपि च त्रिष्टुब्जगतीनामेकदेशे वाक्यमपरिसमाप्तं भवति । न चापरिसमाप्तेन वाक्येन अर्थ कश्चिदभिधीयते । अर्थाभिधानार्थश्च मन्त्रप्रयोगः । तत्र मन्त्रप्रयोग एव अनर्थकः स्यात् । तस्मान्न तासां त्रिष्टुब्जगतीनामेकदेशे गायत्रीशब्द. स्यात् । तस्मादुत्पत्तिगायत्रीणामेव दाशतयीभ्य आगम. कर्त्तव्य इति ॥ ३६ ॥ युक्तिः ॥ गायत्रमेतदहर्भवतीत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम् ॥ ५ ॥ इति श्रीभट्टशबरस्वामिन. कृतौ मीमांसाभाष्येऽष्टमस्य अध्यायस्य तृतीयः पाद. समाप्त ॥ ८ ॥ ३ ॥

अथ अष्टमस्य अध्यायस्य चतुर्थ. पाद. ॥ ८ ॥ ४ ॥

**दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥**

यदेकया जुहुयात्, दर्विहोमं कुर्य्यादिति श्रूयते । अस्मिन् दर्विहोमशब्दे भवति संशय । किं गुणविधिः, उत कर्म्मनामधेयम् ? इति । किं प्राप्तम् । दर्विहोमो यज्ञाभिधानं, कर्म्मनामधेयमित्यर्थ. । कुतः । होमसंयोगात् । होमशब्दोऽत्र श्रूयते । तत्प्रधानश्चायं समासः । दर्विशब्द उपसर्जनं, होमश्च कर्म्म । अथवा जुहुयादिति कर्मोच्यते । तेन समुच्चितो यदेकया जुहुयादिति । तस्मात् कर्मनामधेयं स्थितं तावत् । ततोऽर्थान्तरं प्रक्रियते ॥ १ ॥ दर्विहोमशब्दस्य कर्मनामधेयताधिकरणम् ॥ १ ॥

**स लौकिकानां स्यात् कर्त्तुस्तदाख्यत्वात् ॥ २ ॥**

यदा कर्मनामधेयं, तदा चिन्त्यते, किं लौकिकानां स्मार्त्तानां कर्मणामष्टकादीनां नामधेयं दर्विहोमशब्दः?उत सर्वेषामेव लौकिकानां वैदिकानाञ्चेति । किं प्राप्तम् । स लौकिकानां स्यात् । स खलु दर्विहोमशब्दो लौकिकानां कर्मणां नामधेयं स्यात् । कुत । कर्त्तुस्तदाख्यत्वात् । तेषां कर्त्ता, तेन दर्विहोमशब्देन समाख्यायते ।

शिनीनां दार्विहोमिको ब्राह्मणः,अम्बष्ठानां दार्विहोमिको ब्राह्मण इति। यश्च यत् करोति स तेन आख्यायते । यथा, लावकः, पावक इति । यदि चाष्टकादीनां नामधेयमेतत्, ततस्तेषां कर्मणां कर्त्ता दार्विहोमिकसमाख्यामर्हतीति । तस्माल्लौकिकानां नामधेयम् ॥२॥ पूर्व० ॥

## सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

सर्वेषां लौकिकानां वैदिकानाञ्च नामधेयमेतत् । न लौकिकानामेव । कस्मात्। दर्शनाद् वास्तुहोमे।वास्तुहोमे हि वैदिके दर्विहोमत्वं दर्शयति । यदेकया जुहुयाद् दर्विहोमं कुर्य्यात् । पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवतत्वायेति ॥ ननु विपरीतमेतद्दर्शनं, यदेकया जुहुयाद् दर्विहोमं कुर्य्यात् । अदर्विहोमं सन्तमित्यापद्यते । यदि दर्विहोम एवासौ, तत एकया द्वाभ्यां च हूयमानो दर्विहोम एव भवति । तत्रैतद्दर्शनं नोपपद्यते । यदेकया जुहुयाद् दर्विहोमं कुर्य्यादिति ॥ अत्रोच्यते । यदि लौकिकानामेव नामधेयं, न वैदिकानाम् । तत एकयापि हूयमानोऽसौ नैव दर्विहोमो भवति । अलौकिकत्वात् तत्रैतद्वचनं नोपपद्यते । यदेकया जुहुयाद् दर्विहोमं कुर्य्यादिति । तस्माज्ज्ञापकमिदं वैदिकानां दर्विहोमत्वे । एवमपि ज्ञापकमुक्तम् । कुतः प्राप्तिः । उच्यते । होमशब्दस्य सामान्याभिधायित्वात् प्राप्तिः।तस्माल्लौकिकवैदिकानां नामधेयमेतत्॥३॥ सिद्धान्त ॥ दर्विहोमशब्दस्य लौकिकवैदिकोभयकर्मनामधेयताधिकरणम् ॥ २ ॥

## जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥

लौकिकानां वैदिकानाञ्च नामधेयं दर्विहोमशब्द इति स्थितम् । इदानीं चिन्त्यते । किं यजतिचोदनानां जुहोतिचोदनानाञ्च सर्वेषां नामधेयम्, उत जुहोतिचोदनानामेवेति । अविशेषात् सर्वेषामिति प्राप्ते, उच्यते । जुहोतीनां नामधेयं, न यजतीनाम् । कुतः । तत्संयोगात् । होमशब्दसंयोगात् । अयं होमशब्दो जुहोतेर्वाचको, न यजतेः । यजतौ लक्षणया स्यात् । तस्माज्जुहोतिनामधेयम् ॥ ४ ॥ दर्विहोमशब्दस्य होमनामधेयताधिकरणम् ॥ ३ ॥

## द्रव्योपदेशाद्वा गुणाभिधानं स्यात् ॥ ५ ॥

स्थितादुत्तरमुच्यते, यदुक्तं कर्मनामधेयं दर्विहोम इति । तन्न । किं तर्हि । गुणाभिधानं स्यात् । गुणविधिरित्यर्थः । कुतः । द्रव्योप-

देशात् । द्रव्योपदेशोऽवगम्यते, दर्व्यां होमो दर्विहोम इति । एवमेतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यत । तस्माद् गुणविधिः ॥ ५ ॥ पूर्व० ॥

न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थविधानात् ॥ ६ ॥

नायं गुणविधिर्युज्यते । किं कारणम् । लौकिकानां तावदाचार-गृहीता दर्विः । त्वग्बिलया मूलदण्डया दर्व्या जुहोतीति । सा न विधातव्या । श्रौतानामप्यन्यानि होमार्थानि पात्राण्याम्नातानि । स्रुवेण जुहोति, चमसेन जुहोतीति । तै सह दर्वेर्विकल्पः स्यात् । स चान्याय्य । यत्कारणं स्रुवादीनां विधायकः शब्दोऽस्ति । स्रुवेण जुहोतीति । न तु दर्वे । तत्र हि आनुमानिको विधिशब्द ॥६॥ सि०॥

दर्शनाच्चान्यपात्रस्य ॥ ७ ॥

अन्यच्च पात्रं दर्विहोमे दृश्यते । भूतेभ्यस्त्वेत्यपूर्वां स्रुवमुद्-गृह्णातीति । तस्मान्न गुणविधिः ॥ ७ ॥ युक्ति० ॥

तथाग्निहविषोः ॥ ८ ॥

अथोच्येत, अग्निहविषो कार्य्ये दर्विर्भविष्यति । दर्वौ होमो दर्विहोमो, दर्वेर्वा होमो दर्विहोम इति । तत्र ब्रूम । तथाग्निहविषोर-पि । यथा पात्रकार्य्ये दर्विर्न युज्यते, तथाग्निहविषोः कार्य्येऽपि । तत्राप्याहवनीय आधारत्वेन विहित । यद् आहवनीये जुहोतीति । अन्यच्च प्रदेयत्वेन पुरोडाशादि । तस्मादग्निहविषोरपि कार्य्ये न दर्वेर्निवेशः ॥ ८ ॥ आ० नि० ॥

उक्तश्चार्थसम्बन्धः ॥ ९ ॥

उक्तं चास्माभिरग्ने कार्य्येऽन्यद् द्रव्यमसमर्थम् । दहनपठनप्र-काशनकर्म अग्नेः । न चैतत् कार्य्यमन्यद् द्रव्यं शक्नोति कर्तुमिति । तस्मान्नाग्निकार्य्ये दर्वेरुपदेशः । अतो न गुणविधि । कर्मनामधेय-मेव दर्विहोमशब्द इति ॥ ९ ॥ युक्ति ॥ दर्विहोमशब्दस्य गुणविधि-परत्वनिराकरणाधिकरणम् ॥ ४ ॥

दर्विहोमशब्दः कर्मनामधेयमित्युक्तम् । तत्र चिन्त्यते । किम-पूर्वा दर्विहोमाः, उत कुतश्चिद्धर्मग्राहिण इति । किं प्राप्तम् । नापूर्वा इति । कुतः । इतिकर्त्तव्यताऽविधे । अविहितेतिकर्त्तव्यताकं कर्म

विहितेतिकर्त्तव्यताकाद् धर्मान् गृह्णातीत्युक्तम्। अविहितेतिकर्त्तव्यताकाश्चामी । तस्मात् पूर्ववन्त इति । यदैतदेवं, तदैतदापतति । किं पूर्वाः ? इति । अत्रोच्यते—

तस्मिन् सोमः प्रवर्त्तेताव्यक्तत्वात् ॥ १० ॥

तस्मिन् खलु दर्विहोमे सोमः प्रवर्त्तेत । सौमिको विध्यन्तः स्यात् । कुत । अव्यक्तत्वात् । अव्यक्तचोदनः सोम । अमी अपिच अव्यक्तचोदनाः । भिन्ने जुहोतीति । अतश्चोदनासामान्यात् सौमिको विध्यन्त इति ॥ १० ॥ पूर्व० ॥

न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्देशात्तन्त्रे तेन विप्रतिषेधात् ॥११॥

वाशब्दः पक्षं व्यावर्त्तयति । नात्र सौमिको विध्यन्तो न्याय्य । किं कारणम् । स्वाहाकारेण संयोगात् । स्वाहाकारेण संयुक्ता दर्विहोमाः । पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहेति । किमत । वषट्कारस्य निर्देशात्तन्त्रे तेन च विप्रतिषेधः । तन्त्रे च सौमिके वषट्कारो निर्दिष्टः । तेनास्य विप्रतिषेधः । उभयो प्रदानार्थत्वात् । यदि सौमिको विध्यन्त, ततो वषट्कारेण भवितव्यम् । तत्रैतत् स्वाहाकाराम्नानमनर्थकं स्यात् । अथ विकल्प क्रियते, तथाप्युभयोः पक्षे बाधः । अथ त्वपूर्वा दर्विहोमाः, नैषविरोधो भविष्यति।तस्मादपूर्वा ॥११॥ सि०

शब्दान्तरत्वात् ॥ १२ ॥

शब्दान्तरं च यजतिशब्दाज्जुहोतिशब्दः।यजतिचोदनश्च सोम । दर्विहोमाः पुनर्जुहोतिचोदनाः । चोदनासामान्येन च धर्मप्राप्तिरिष्यते । तस्मादप्ययुक्ता सौमिकी धर्मप्राप्तिः । नन्वव्यक्तत्वाच्चोदनासामान्यमुक्तम् । अत्रोच्यते । सामान्येऽव्यक्तत्वे, यजतिशब्दो विशेषलिङ्गम् । तेन यजिमतीष्वव्यक्तासु धर्मनियमः । यथा समाने औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्य्यकर्मणि आग्नेयविध्यन्त इति ॥ १२ ॥

लिङ्गदर्शनाच्च ॥ १३ ॥

लिङ्गदर्शनाच्चैतद्विज्ञायते, नात्र सौमिको विध्यन्त इति । औदुम्बरीहोमे हि स्वाहाकारं विधाय आज्यविधिपरे वाक्ये दर्शयति । घृतेन द्यावापृथिवी आपृणेत्यन्तरा कणा जुहोति।आ मूलाद् अवस्रा-

ययाति । भूमिगते स्वाहा करोतीति । यद्यत्र सौमिको विध्यन्त स्याद् वषट्कारस्ततो भवेद्, न स्वाहाकार. ॥ १३ ॥ हेतुः ॥

**उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्गदर्शनात् पशुवत् ॥१४॥**

लिङ्गदर्शनस्य परिहार उच्यते।यदुक्तम्। औदुम्बरीहोमे सिद्धवत् स्वाहाकारस्य दर्शनान्न सौमिको विध्यन्त इति । अत्र ब्रूम. । उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यम् । तद् यथा, साप्तदश्यमनारभ्याधीतं सप्तदश सामिधेनीरन्वाहाति । अनारभ्यवादानां प्रकृत्यर्थत्वाद्दर्शपूर्णमासावगतम् । ततः प्राकरणिकेन पाञ्चदश्येन बाधितंसद् विकृत्यर्थं जानमेवमयं स्वाहाकारोऽनारभ्याधीत । स्वाहाकारेण वषट्कारेण वा देवेभ्यो हवि प्रदीयते इति । तेनैव न्यायेन प्रकृतिं निविविक्षु' सोमं दर्शपूर्णमासौ च । ततस्तथैव वषट्कारेणोपरुद्धः । तद्वर्जमन्यानि प्रदानान्युपसंक्रामति । तत्र अविप्रतिषिद्धा सोमधर्म्मप्रवृत्तिः । पशुवत् । तद्यथा पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिपिद्धयते । वाचनिकत्वात् साप्तदशस्य । एवमिहापि वाचनिकत्वात्, स्वाहाकारं प्रति लिङ्गदर्शनान्न सौमिकधर्म्मप्रवृत्तिर्विप्रतिपिद्धयते । पुन.शब्दश्चानर्थक. । यथा किं पुनरिदमिति ॥ १४ ॥ आ० ॥

**अनुत्तरार्थो वाऽर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥**

यदुक्तम्, उत्तरार्थः स्वाहाकार इति । तन्न। कुतः। अनुत्तरार्थः। अर्थवत्त्वात् । प्रकृतौ एवास्यार्थवत्त्वं नारिष्टहोमेषु । पार्वणहोमयोश्च पूर्णमासाय सुराधसे स्वाहा इति । अनर्थकत्वाद्धि प्राकृतस्योपरोधः स्यात् । यदि प्रकृतौ अनर्थकः स्यात् स्वाहाकारः, तत. प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्यानारभ्यवादेन स्यादुपरोध , वषट्कारबाध इत्यर्थः । न त्वस्यानर्थक्यम् । तस्मान्नोत्तरार्थ. । न चेदुत्तरार्थ', लिङ्गमेवैतद् भवति । असोमपूर्वत्वे दर्विहोमानां, भूमिगते स्वाहा करोतीति ॥ १५ ॥ आ० नि० ॥

**न प्रकृतावपीतिचेत् ॥ १६ ॥**

एवं चेत् पश्यसि, नारिष्टहोमेषु पार्वणहोमयोश्च स्वाहाकारस्य

निवेश इति । प्रकृतौ अपि नारिष्टहोमादौ नास्य निवेशो घटते । तत्रापि वषट्कार एव प्राप्नोति । स हि अविशेषेण दर्शपूर्णमासयोर्विहितः । द्व्यक्षरो वषट्कार एष वै प्रजापतिः सप्तदशो यज्ञे अन्वायत्त इति । ननु स्वाहाकारोऽपि प्रत्यक्षं पठितः । सत्यं पठितः । वषट्कारस्तु विहितः । अतश्चोदना इति । नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठतीति स्वाहाकारं पाठेन प्राप्तं बाधते । पाठे हि आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते । न चेत् तत्रापि निवेश, उत्तरार्थ एव स्वाहाकारो भवति विकृत्यर्थः ॥ १६ ॥ आ० ॥

## उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥

अत्राह । नैतद् युक्तं, वषट्कारेण स्वाहाकारो बाध्यते इति । कुत. । यत उक्तं श्रुत्यादीनां समवाये परस्य दुर्बलत्वम् । इह च वाक्यप्रकरणयोः सन्निपातः । प्रकरणेन वषट्कार प्राप्नोति । नारिष्टहोमेषु तन्मन्त्रपदैरेकवाक्यत्वात् स्वाहाकारः । वाक्यं च प्रकरणाद् बलीयः । ननु स्वाहाकारस्योपरिष्टात् प्रदानार्थो वषट्कारः प्रयोक्ष्यते । न खलु स्वाहाकारेणैव प्रदानं निर्वर्त्तितम् । कथमविहितः प्रदानार्थं स्वाहाकारः प्रदानार्थं निर्वर्त्तयिष्यति ? विहितश्च कथं स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते ? इति ॥ ननूभयोः स्वाहाकारवषट्कारयोःप्रकृतावाम्नानादनारभ्य वादस्यानर्थक्यम् । अत उच्यते, प्रदानार्थतामनयोर्विधास्यति । तस्मान्न सोमप्रकृतयो दर्विहोमाः ॥ १७ ॥ आ० नि० ॥

## तच्चोदना वेष्टेः प्रवृत्तित्वाद्विधिः स्यात् ॥ १८ ॥

वाशब्द. पक्षान्तरपरिग्रहे । तच्चोदना वा । तदित्यनेन दर्विहोमाः प्रतिनिर्द्दिश्यन्ते । जुहोतिचोदना ये दर्शपूर्णमासयोरङ्गकर्म्मविशेषास्ते दर्विहोमेषु प्रवर्त्तेरन् । के पुनस्ते । नारिष्टहोमाः । कस्मात् कारणात् । ते हि प्रवृत्तधर्माणः, सर्वेष्टिषु सर्वपशुबन्धेषु प्रवर्त्तमाना दृष्टाः । यस्य च यो धर्मं प्रायेण दृष्ट, स तस्यादृश्यमानोऽप्यनुमीयते । यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन्नपि परार्थकरणे स एव सम्भाव्यते । तस्मात् तेषां प्रवृत्तिः ॥ १८ ॥ पूर्व० ॥

## शब्दसामर्थ्याच्च ॥ १९ ॥

शब्दसामर्थ्यं च । चोदनासामान्यं; दर्विहोमानां, नारिष्टहोमेऽपि

हि जुहोतिचोदना । नारिष्टाञ्जुहोति, भिन्ने जुहोतीति । चोदनासामान्याद्धर्मप्राप्तिः ॥ १९ ॥

लिङ्गदर्शनाच्च ॥ २० ॥

लिङ्गं चैतमर्थं दर्शयति । यथा नारिष्टहोमपूर्वत्वं दर्विहोमानामिति । किं लिङ्गं भवति । अग्निहोत्रे श्रूयते, यदि कीटोऽवपद्येतान्तःपरिधि निनयेदिति । तथा अग्नौ श्रूयते,अन्तर्वेदि तिष्ठन् सावित्राणि जुहोतीति । परिधयो वेदिश्चाङ्गप्रधानार्थत्वान्नारिष्टहोमाङ्गम् । यदि तेषां धर्मा प्रवर्त्तेरन्, तत एतद्दर्शनमुपपद्यते । तस्मात् तेषां प्रवृत्तिः ॥ २० ॥ हेतुः ॥

तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् ॥ २१ ॥

यदेतद् गुणार्थे नारिष्टहोमार्थे दर्शनमुपदिष्टं, नारिष्टहोमानां प्रवृत्तावित्यर्थः । अदर्शनं तद्, असाधकमित्यर्थः । कुतः । तत्राभावस्य हेतुत्वात् । त्र्यम्बकेषु अप्रतिष्ठिता वै त्र्यम्बका इत्याहु । नेध्मा बर्हिः संनह्यते,न प्रयाजा इज्यन्ते,नानुयाजा इज्यन्ते,न सामिधेनीरन्वाहेति अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थमिध्मादीनामभावो हेतुत्वेनोपदिश्यते । यदि च नारिष्टहोमाः प्रवर्त्तेरन्, ततोऽङ्गप्रधानाऽर्थत्वादिध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भाव एव स्यात् । तत्रायं तदभावोऽसत्त्वाद् हेतुत्वेन न युज्यते । तस्मान्नारिष्टहोमानामप्रवृत्तिः ॥ २१ ॥ उत्तरम् ॥

विधिरितिचेत् ॥ २२ ॥

इति चेत् पश्यसि, दर्शनमेतादिति । अथ कस्माद् विधिर्न भवति नारिष्टहोमप्रकृतित्वात् । प्राप्तानामिध्मादीनां प्रतिषेधको विधिः सन् अपूर्वमर्थं विधास्यति । अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ २२ ॥ आ० ॥

न वाक्यशेषत्वाद् गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥

नायं विधिर्युज्यते । किं कारणम् । अन्योऽत्र विधिराम्नात । आदित्यं घृते चरुं निर्वपेत्, पुनरेत्य गृहेष्विति । तस्य वाक्यशेषोऽयम् । कथं ज्ञायते । तेन आकाङ्क्षितत्वात् । अप्रतिष्ठिता वै त्र्यम्बका इति दोषमनुकीर्त्य इदं श्रयते- आदित्यं घृते चरुं निर्वपेत्

पुनरेत्य गृहेष्विति । इयं वा अदितिरियं प्रतिष्ठा यद् आदित्योऽस्यामेव प्रतितिष्ठतीति । तदेतत् तस्य दोषस्य परिहारार्थमिति विज्ञायते । अतस्तेन सहैकवाक्यतां याति । तन्मध्ये च ये इध्माद्यभाववचनास्तेऽपि तच्छेषा एव समुच्चारणान्न्याय्याः । ते यदि विधय कल्पेरन् पृथग्वाक्यानि भवेयु ,तत्रैकवाक्यरूपं बाध्येत । व्यवहितकल्पना च स्यात् । नचैषां विधायकत्वम् । अनुवादस्वरूपत्वात् । तस्मान्न विधयः । अथ कोऽत्र विशेषो, यत् समाने लिङ्गत्वे अन्तःपरिधि दर्शनमसाधकमितरत् साधकम् ? इति । विशेषमुपरिष्टाद् वक्ष्यामः ॥ २३ ॥ आ० नि० ॥

**येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात् ॥ २४ ॥**

येषां वा यागानामपरयो अग्न्योर्होमः, तेषां प्रवृत्तिः स्यात् । पत्नीसंयाजानामित्यर्थः । कुतः । अविरोधात् । तत्र विरोधो नास्ति, यो नारिष्टहोमानां प्रवृत्तावुक्तः । तत्राभावस्य हेतुत्वादिति । तेषां हि इध्मा बर्हिः सामिधेन्यश्च नैवाङ्गम् । तदभावदर्शनं तत्र न विरुद्ध्यते । प्रवृत्तिधर्म्माणस्तेऽपि जुहोतिचोदनाश्च । सह पत्न्या जुहोतीति । तस्मात् तेषां प्रवृत्तिः ॥ २४ ॥ पूर्व० ॥

**तत्रौषधानि चोद्यन्ते तानि स्थानेन गम्येरन् ॥ २५ ॥**

नैतद् युक्तम् । किं कारणम् । यतस्तत्रौषधानि चोद्यन्ते दर्विहोमे । यथा त्र्यम्बकेषु पुरोडाश करम्भपात्राणि तण्डुला इत्येवमादीनि । तानि स्थानेन गम्येरन् । आज्यस्थानापत्त्या आज्यधर्म्माः प्राप्येरन् । ते न शक्यास्तत्रानुष्ठातुम् । अनुष्ठीयमाना वा अकृतकार्य्याः स्यु । तत्र चोदको बाध्येत । तस्मान्न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति । याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्त्येते, वषट्कारः स्वाहाकारेण ॥ २५ ॥ उत्तरम् ॥

**लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥**

पिष्टलेप-फलीकरणहोमयोर्वा प्रवृत्तिः स्यात् । कुतः । लिङ्गात् । औषधसामान्यात् । यश्च पत्नीसंयाजानां प्रवृत्तौ दोष उक्तो धर्म्माणामानर्थक्यं, तदत्र नास्ति । तत्र औषधधर्म्मा निर्वपणादय शक्याः कर्त्तुम् । तस्मात्तयोः प्रवृत्तिरिति ॥ २६ ॥ पूर्व० ॥

**प्रतिपत्ती तु ते भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥**

न त्वेतदेवम् । कुतः । यतः प्रतिपत्तिकर्म्मणी एतौ होमौ । दर्विहोमाश्च प्रधानकर्माणि । तेषां दूरतो भेदः । सामान्यतश्च धर्मप्राप्तिरिष्यते । यच्चोक्तम्, औषधधर्माः शक्यास्तत्र कर्त्तुमिति । प्रतिपत्तित्वादप्रयोजकौ एव निर्वपणादीनां धर्माणाम् । अतस्तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नम् । नापि प्रयोजनवत् । तस्मादेतदप्ययुक्तम् । एवं न कुतश्चिदपि दर्विहोमानां धर्मप्राप्तिर्युज्यते । तस्मादपूर्व० ॥ ॥ २७ ॥ उत्तरम्

**सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद् वचनादतिदेशः स्यात् ॥ २८ ॥**

अथ कस्मादुभयपक्षसाधनानामपि लिङ्गानामभावे अप्रवृत्तिरेव प्रतीयते, न पुनः प्रवृत्तिः ? इति । उच्यते । सन्निपाते विरोधिनामेतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुं न न्याय्या । कुतः । विध्युत्पत्तिव्यवस्थानात् । विधीनामुत्पत्तिः पाठः । स च व्यवस्थितः । केचिद्दर्शपूर्णमासयोः पठ्यन्ते, केचित् सोमे । तेषामर्थस्यापरिणेयत्वम् । यत्र पठितास्ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते । तस्मादप्रवृत्तिः प्रतीयेत ॥ तत्राह । किमेष एवोत्सर्गः सर्वत्राप्राप्तिः ? इति । एवं खलु प्राप्ते, उच्यते । वचनादतिदेशः स्यात् । यथा राष्ट्रभृतामुद्ग्राहकर्म्मसु । असति एवंविधे वचने अपूर्वा इति । अथ ये लिङ्गे अपदिष्टे, यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्, अन्तर्वेदि तिष्ठन् सावित्राणि जुहोतीति । तयोः कः समाधिः । उच्यते । अन्यायपूर्वत्वाल्लक्षणया वादः स विज्ञायते । अन्तःपरिधिदेशो अन्तर्वेदिदेशो इति । परिधीनां वेदेश्च तत्राभावात् । यथा रजनी मे कण्डूयति, तिलको मे स्पन्दते इति । रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तार इति ॥ २८ ॥ आ० नि० ॥ दर्विहोमशब्दस्यापूर्वताधिकरणम् ॥ ५ ॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये
अष्टमस्याध्यायस्य चतुर्थः पादः
सम्पूर्णः ॥ ८ ॥ ४ ॥
समाप्तश्चायमष्टमोऽध्यायः ॥ ८ ॥

अथ नवमस्याध्यायस्य प्रथमः पादः ॥ ९ ॥ १ ॥

## यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम् । इदानीमूहलक्षणं वर्णयिष्यामः । त्रिविधश्च ऊहः । मन्त्रसाम. संस्कारविषयः । स इह प्राधान्येन वक्ष्यते । अन्यदपि किञ्चिदुपोद्घातेन प्रसङ्गेन च । आदितस्त्वयमर्थश्चिन्त्यते लक्षणसिद्ध्यर्थम् । अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमश्चोदाहरणम्। तत्र पृथग्धर्माः समाम्नाताः । तेषु संशय । किं ते अपूर्वप्रयुक्ता ? उत यजिप्रयुक्ता इति । अपूर्वप्रयुक्तेषु सत्सु ऊहः सिद्ध्यति । यजिप्रयुक्तेषु तु सङ्करो धर्माणाम् । कथमिव । सर्वे हि ते यजतयः । यजतिसामान्ये यजतिशब्दवाच्ये धर्मा विधीयमानाः सर्वत्र भवितुमर्हन्ति । अपूर्वप्रयुक्तत्वे तु, तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति । तस्मात् तत्र ऊह सिद्धो भवति ॥ नन्वेतत् सर्वं सप्तमे विचारितं, निर्णीतं च । उच्यते । पुनस्तदेव स्मार्य्यते, उत्तरचिन्ताविवक्षया । अथवा तत्र योऽर्थो नोक्त, तद्विवक्षयेदमुच्यते । कश्चासौ । तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वादिति । एतेन चेह प्रयोजनमूहं विवक्षितः । एवं हि स सिद्ध्यति । तत्रैतन्नोक्तम् । नैतेन तत्र प्रयोजनमिति । तत्रत्या एतावती चिन्ता । किं प्रतिप्रकरणं नियता धर्माः ? उत सर्वे सर्वत्रेति । तद् अपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिद्ध्यति, न द्रव्यसंस्कारस्यापूर्वार्थत्वे । तत्त्विह सिद्धम् । तत्रापूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थमसूत्रितमुपादीयते । तस्मादपुनरुक्तम् ॥ ॥ प्रथमवर्णकम् ॥ १ ॥

अथवा, अन्यामेव चिन्तामिह वक्ष्यामः । किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः ? उत अपूर्वनिमित्ता अपूर्वप्रयुक्ताश्चेति । इदानीं तु, यजिप्रयुक्ताः ? अपूर्वप्रयुक्ता वा इति चिन्त्यते । किं तावत् प्राप्तम् । यजिप्रयुक्ता इति । कुतः । यजिशब्देनेतिकर्त्तव्यताया अभिसम्बन्धात् । एवं यागं कुर्य्यात् । एवं यागेन कुर्य्यादिति ॥

एवं प्राप्ते ब्रूमः । यजत्यर्थस्य यत् कार्य्यं, तत् प्रधानम् । तद्धि कर्त्तव्यतया चोद्यते । यत्र कर्त्तव्यता, तत्रैवेतिकर्त्तव्यता । अथ यदुक्तं, यजतिशब्देनाभिसंयोगो धर्माणामिति । तदुच्यते । तस्य द्रव्येषु

यजतौ च यः संस्कारः, स तत्प्रयुक्तः अपूर्वप्रयुक्तः। तदर्थत्वात्। यजतेर्द्रव्याणां च तदीयत्वेन धर्मैरभिसम्बन्धो, न स्वेनात्मना। न हि धात्वर्थस्य च धर्माणां च परस्परेण आकाङ्क्षा विद्यते। प्रत्ययार्थेन हि इतिकर्त्तव्यता आकाङ्क्ष्यते। कर्त्तव्यं कथमिति, न यजिः कीदृश ? इति। तस्माद् यत् कर्त्तव्यं, तस्यैवेतिकर्त्तव्यतया सम्बन्धः। अपूर्वं च तत्। तस्मादपूर्वप्रयुक्ता इति॥ ॥ द्वितीयवर्णकम् ॥२॥

एवं वा। एतेष्वेवोदाहरणेष्विति चिन्त्यते। किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ता ? उत अपूर्वं प्रयोजकं निमित्तं चेति। किं प्राप्तम्। यजिर्निमित्तम्, अपूर्वं प्रयोजकमिति। कुतः। नैकस्य प्रयोजकत्वं निमित्तभावश्चोपपद्यते। यदर्थं हि क्रियन्ते धर्मास्तत् प्रयोजकम्। यस्मिन् सति क्रियन्ते, तन्निमित्तम्। न चैकस्मिन् शब्द अपूर्वायैते, अपूर्वे च भवन्तीति शक्यं वदितुम्। अन्या हि वचनव्यक्तिरपूर्वार्थेषु, अन्या चापूर्वे सतीति। यजिनिमित्तत्वे तु शब्दोऽवकल्पते। एवं यागेन कुर्य्यादिति। यागे सति अपूर्वस्योपकारकाणि, असति अनुपकारकाणि अङ्गानीति। तस्माद् यजिर्निमित्तम्, अपूर्वं तु प्रयोजकमिति॥ एवं प्राप्ते ब्रूमः। यज्ञकर्म प्रधानं, यजतेः कार्य्यम्। तद्धि फलवच्चोद्यते। तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्वप्रयुक्तः। तदर्थास्ते इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषामभिसम्बन्ध। प्रयोगवचनेनैते प्रत्ययार्थेन सम्बध्यन्ते। स हि साकाङ्क्षो, न धात्वर्थः। तस्मादपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च। यदुक्तम्। अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते। वचनव्यक्तिभेदादिति। तत्रोच्यते। प्रयोजकत्वं वाचनिकम्। निमित्तभावश्च नैव वचनाद्भविष्यतीति। यद्धि येन प्रयुज्यते, भवति तत् तस्य निमित्तम्। यथा, आरामपोषकस्यारामो वेतनदाने प्रयोजको निमित्तं च। आरामे सति तस्मै वेतनं दीयते। वेतनसम्बन्धो भवति आरामं रक्षितुम्। तस्माद् धर्माणामपूर्वमेव प्रयोजकं निमित्तं चेति॥ १॥ तृतीयवर्णकम्॥ ३॥ अग्निहोत्रादिषु उक्तानां धर्माणामपूर्वप्रयुक्तत्वाधिकरणम्॥ वर्णकान्तरद्वयसहितम्॥ १॥

**संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात्॥ २॥**

दर्शपूर्णमासौ प्रति समामनन्ति, प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति। प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टीति। तत्रायमर्थ

सांशयिक । किं प्रोक्षणं हन्तिपिषिप्रयुक्तम्, उतापूर्वप्रयुक्तमिति । किं प्राप्तम् । संस्कारे हन्तिपिष्याख्ये प्रयुज्यमानस्य प्रोक्षणस्य तत्प्रयुक्तता स्यात् । संस्कारप्रयुक्तता । संस्कारौ हि हन्तिपिषी । कुत एतत्प्रयुक्ततेति । तादर्थ्यात् । यद्धि येन कर्त्तव्यं भवति, तत् तस्य प्रयोजकम् । यदि अपूर्वमनेन क्रियते, ततोऽस्यापूर्वं प्रयोजकम् । यदि हन्तिपिषी, ततस्तौ प्रयोजकौ । प्रकरणाच्चापूर्वं कर्त्तव्यं गम्यते । वाक्याद् हन्तिपिषी । वाक्यं च प्रकरणाद् बलीय इति ॥

ननु हन्तिपिष्यो' क्रियमाणमपूर्वार्थं भविष्यति । तत्र प्रकरणं च वाक्यं चोभयमप्यनुग्रहीष्यते । उच्यते । न शक्यमुभयमनुग्रहीतुम् । न प्रकरणसमाम्नायमात्रेण प्रकरणवतोऽर्थेन समाम्नातमिति गम्यते । प्रकरणसमाम्नानात् प्रकृतेनैकवाक्यता भवति । ततस्तादर्थ्यमवगम्यते । इह तु प्रत्यक्षाभ्यां हन्तिपिषिभ्यां प्रोक्षणस्यैकवाक्यता । सा प्रकृतेनैकवाक्यतां परोक्षां बाधेत । न च द्वाभ्यामपि सहैकवाक्यता स्यात् । यदा एकेनैकवाक्यता, तदा तेन निराकाङ्क्षस्य नान्येनाप्येकवाक्यता कल्प्यते । तस्मात् प्रकृतेन एकवाक्यत्वाभावान्नापूर्वार्थं प्रोक्षणम् ॥ आह । ननु हन्तिपिषी अपूर्वार्थौ । तदर्थं प्रोक्षणम् । तस्मादपूर्वस्योपकारकमिति । उच्यते । भवति प्रणाड्या उपकारकम् । न त्वपूर्वप्रयुक्तम् । द्विविधं हि अङ्गम् अङ्गस्योपकारकं भवति । किञ्चिद् अपूर्वस्यैतदङ्गं विशिष्टमित्यनेन कारणेनाङ्गेन सम्बद्ध्यते, किञ्चिदनपेक्ष्यैवापूर्वसम्बन्धं, स्वरूपेणैव कारणेन सम्बद्ध्यते । यद् अपूर्वसम्बन्धं कारणत्वेनोपादाय धर्मजातमङ्गविशेषेण सम्बद्ध्यते, तद् अपूर्वप्रयुक्तं भवति । तादृशं च विकृतौ अर्थान्तरे तत्कार्य्यापन्नं ऊहितव्यं भवति । तत्र पुन स्वरूपमङ्गस्य धर्मसम्बन्धे कारणं भवति । तत् स्वरूपप्रयुक्तम् । तत्र यद्यपि तेन धर्मवता अपूर्वं साध्यते । तत्र साध्यमानमपूर्वं न धर्मस्य प्रयोगहेतुभूतं भवति, न तत् प्रयोजकं, तस्य स्वरूपं विद्यते इति न धर्मः प्रयुज्यते । तत्र विकृतौ अर्थान्तरे तद्रूपाभावाद् ऊहो नावकल्पते । एवं सति वाक्यान्निर्णयः। यदि वाक्यमपूर्वस्य कारणतां वदति, ततोऽपूर्वप्रयुक्तम् । अथाङ्गस्य, ततोऽङ्गप्रयुक्तम् । तच्चोक्तप्रकरणादपूर्वप्रयुक्तं स्यात् । वाक्यात्तु अङ्गप्रयुक्तता इति । तस्माद् हन्तिपिषिप्रयुक्तं प्रोक्षणमिति । यत्र यत्र हन्तिपिषी प्रयुज्यन्ते, तत्र तत्रैवन्धर्मकौ भवत इति ॥ २ ॥ पूर्व० ॥

**तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । न त्वेतदस्ति, हन्तिपिषिप्रयुक्तं प्रोक्षणमिति । तेन तु अर्थेन हन्तिना पिषिणा वा । यस्मादपूर्वस्य संयोगः, तस्मात् तस्य प्रोक्षणसम्बन्धः । अपूर्वसाधनविशेषकारितः प्रोक्षणसंस्कारेण सम्बन्धो, न हन्तिपिषिकारितः । कथम् । निष्प्रयोजनौ हन्तिपिषी । यदि तत्प्रयुक्तं प्रोक्षणम् । तदपि निष्प्रयोजनम् । अतो न तत्प्रयुक्तम् ॥ आह । अपूर्वस्योपकारकौ हन्तिपिषी न निष्प्रयोजनाविति । उच्यते । न प्रोक्षणस्यापूर्वस्य कश्चिदस्ति सम्बन्धः । यदि प्रोक्षणं न क्रियते, न हन्तिपिषी अपूर्वस्य साधनभावं न गच्छेतः । तस्माद् यद्यपि हन्तिपिषी अपूर्वस्य उपकारकौ, तथापि ताभ्यां सम्बद्ध्यमानं प्रोक्षणमनर्थकमेव ॥

अथोच्यते, यदर्थं हन्तिपिषी उपादीयेते, तत् प्रोक्षणसम्बद्धौ शक्नुतः कर्त्तुं, नान्यथेति । उच्यते । नैवञ्जातीयकः शब्दोऽस्तीति । तत्राह । अयमेव शब्द एतमर्थमभिवदतीति । कथम् । प्रोक्षिताभ्यामवहन्ति, प्रोक्षिताभ्यां पिनष्टीति यद् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणसम्बद्धाभ्यामिति हन्तिपिषिकार्य्येण प्रोक्षणं सम्बद्ध्यते, न ताभ्यामिति । उच्यते । नैतदेवम् । यदि यद्हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणेन अभिसम्बद्ध्यते, सम्बन्ध एव प्रोक्षणस्य न स्यात् । तद् हि ताभ्यामभिनिर्वर्त्त्यते । किमपरं, तत् प्रोक्षणमभिनिर्वर्त्तयेत् । अथ प्रोक्षिताभ्यामपूर्वं क्रियते इति सम्बन्धः । न तर्हि हन्तिना पिषिणा वा । अथ तत्सम्बन्धोऽप्युच्यते इति । अनेकसम्बन्धे वाक्यम्भिद्येत । तस्माद् हन्तिपिषिभ्यां प्रोक्षणं सम्बध्यमानमप्रयोजनमिति प्रकरणादपूर्वेण सम्बद्ध्यते ॥

नन्वेवं हन्तिपिषिसम्बन्धो नावकल्प्येत । अवकल्पिष्यते इति ब्रूमः । कथम् । इह अवघातं प्रति यतमानस्य द्वयं निष्पद्यते । अवहन्तिरूपं, तण्डुलनिर्वृत्तिश्च । प्रणाड्या चापूर्वभावनाविशेषः । तण्डुलनिर्वृत्तिर्हि अपूर्वोपकारः । सोऽवहन्तिक्रियया चिकीर्षितः । तेन प्रोक्षणस्य सम्बन्धः । यद्यपि अवहन्तिरूपेण सम्बद्ध्यमाने प्रोक्षणे

श्रुत्या सम्बन्धो भवति । तथापि तत्र निष्प्रयोजनत्वाल्लक्षणैव आश्रीयते । लक्षणा हि प्रत्यक्षा । सा अदृष्टकल्पनाया ज्यायसी । न च अवहन्तिराराडुपकारकोऽपूर्वं निष्पादयति । दृष्टमुपकारं कुर्वन्नदृष्टेन सामर्थ्येन समीचीनं करोतीतिगम्यते । यद्यपि च निष्पादयेत्, तथाऽप्युपकारेण असम्बध्यमानं प्रोक्षणं केवलावहन्तिसम्बन्धेन अनर्थकमेव स्यात् । अतोऽवहन्तिलक्षितेनोपकारविशेषेणास्य सम्बन्धः । तस्मादनवहन्तिरपि यस्तत्कार्य्यापन्नस्तत्र प्रोक्षणं भवत्येव । यथा-नखनिर्भिन्ने चरणौ नखेषु । तस्मादपूर्वप्रयुक्त एवञ्जातीयको धर्म्म इति ॥ ३ ॥ सिद्धान्तः ॥ प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम् ॥ २ ॥

एवं वा । अस्ति ज्योतिष्टोमः । तत्रेदं समाम्नायते । यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायाम्, उपांशु उपसत्सु इति । तत्रायमर्थ सांशयिक । किं परमापूर्वप्रयुक्ता एते धर्म्मा, उत दीक्षणीयाद्यपूर्वप्रयुक्ता इति । किं प्राप्तम् । परमापूर्वसंस्कारे दीक्षणीयाद्यपूर्वे युज्यमानस्य अस्य धर्मस्य परमापूर्वार्थत्वाद्दीक्षणीयादीनां परमापूर्वार्थतैव स्यात् । परमापूर्वं हि फलवत् । यत् कर्त्तव्यतयाऽभिसम्बद्ध्यते, तदेव धर्म्मैरभिसम्बद्ध्यते, नाङ्गापूर्वम् । निष्प्रयोजनं हि तदिति ॥

**तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञ-प्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥**

तेन त्वर्थेन दीक्षणीयादिना, यस्मात् परमापूर्वस्य सम्बन्ध, तस्मात् परमापूर्वमेवञ्जातीयकेन धर्मेण धर्मवत् । तस्मादङ्गयज्ञप्रयुक्तमेवञ्जातीयकं धर्मजातम् । तथा श्रुतिः शब्दो भवति । इतरस्मिन् पक्षे लक्षणा स्यात् । न च प्रायणीयाद्यपूर्वं निष्प्रयोजनम् । ज्योतिष्टोमस्य हि तदुपकारकम् । न च तद् विना एवञ्जातीयकेन धर्मेण प्रायणीयाद्यपूर्वं सिद्धम् । अवहन्तिपिषिवत् ॥ यदुच्यते, विनैव धर्मेण तद् अपूर्वं भविष्यतीति । तन्न । कुतः । तदपि ह्यपूर्वं शब्दादेवावगम्यते । अस्तीति प्राक् शब्दादन्येन प्रमाणेनोपसङ्ख्यायते । एवञ्जातीयके च शब्दप्रमाणके यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्च प्रायणीयाद्यपूर्वस्योपकारकमिमं धर्ममाह, न परमापूर्वस्य । वचनप्रामाण्यात् ॥ एवञ्चापरमापूर्वनिष्पत्तेरजरम् अविनाशि चात्र

धर्म' प्रतिष्ठितो न परमापूर्वं संक्रमिष्यति । एवमपि प्रयोजनसमर्थः । तस्मादेवञ्जातीयकं धर्मजातमङ्गापूर्वप्रयुक्तमेवेति ॥

किं भवति प्रयोजनमितरस्मिन्नितरस्मिन् वा पक्षे ? इति । उच्यते । अश्वमेधे समाम्नायते, त्रैधातवीया दीक्षणीया भवतीति । यदि परमापूर्वप्रयुक्त एवञ्जातीयको धर्मः, ततस्तस्योपकारविशेषे निबद्ध इति । तत्कार्य्यापन्नायां त्रैधातव्यायां भविष्यति । अथ आग्नावैष्णवापूर्वप्रयुक्तस्ततो नेदमाग्नावैष्णवापूर्वमिति तत्र त्रैधातव्यापूर्वं न तेन धर्मेण सम्भन्त्स्यते इति ॥ ३ ॥ सिद्धान्तः ॥ उच्चावचध्वनेः परमापूर्वप्रयुक्तताधिकरणम् ॥ २ ॥ वर्णकान्तरम् ॥

## फलदेवतयोश्च ॥ ४ ॥

दर्शपूर्णमासौ स्त , दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र फलसम्बद्धो धर्मो देवतासम्बद्धश्च श्रूयते । फलसम्बद्धस्तावत्, अगन्म स्व' सं ज्योतिषा भूमा इति । देवतासम्बद्धोऽपि, अग्नेरुज्जितिमनूज्जेषं सोमस्य उज्जितिमनूज्जेषमित्यादि । तत्र संशयः । किं स्वर्गसम्बद्धस्य कर्मण. स्वर्ग एव प्रयोजकः, अग्न्यादिसम्बद्धस्य अग्न्यादय एव ? उतोभयत्रापि अपूर्वं प्रयोजकमिति । यद्येवमभिसम्बन्धः क्रियते, गताः स्म. स्वर्गम् अग्न्यादीनां च उज्जितिमनूज्जेषमिति । तत. स्वर्गाग्न्यादिप्रयुक्त । अथैवं क्रियते, आगता दर्शपूर्णमासफलं, दर्शपूर्णमासदेवताश्च उज्जितिमनूज्जेषमिति । ततोऽपूर्वप्रयुक्त. । किं प्राप्तम् । स्वर्गाग्न्यादिप्रयुक्त इति । कुतः । मन्त्राम्नानसामर्थ्यात् । यस्य मन्त्रो वाचक , स इह वदितव्य इति गम्यते । श्रुत्या च स्वर्गाग्न्यादीनां वाचको मन्त्रः । लक्षणया दर्शपूर्णमासफलदेवतयोः । तस्माद् यत् फलदेवतमिति समधिगतं स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्मः स्यादिति ॥ ४ ॥ पूर्व० ॥

## न चोदनातो हि तादूगुण्यम् ॥ ५ ॥

नैतदस्ति, स्वर्गाग्न्यादिप्रयुक्त इति । चोदनातस्तादूगुण्यं स्यात् । यत् फलवच्चोद्यते, तदितिकर्त्तव्यतया अनुबध्यते । अपूर्वं च फलवत्, न स्वर्गाग्न्यादि । तदर्थं वचनं सदद्दष्टार्थं कल्प्येत । लक्षणया चापूर्वफलदेवतावचनेऽद्दष्टोऽर्थं स्यात् । प्रोत्साहनात् । एतस्मिन् पक्षान्तरे द्दष्टे सति न स्वर्गाग्न्यादिवचनस्यापूर्वस्य कल्पना न्याय्या ।

शब्दार्थस्य च फलदेवतात्वेन सम्प्रतिपन्नत्वाल्लक्षणा अदृष्टा । तस्मादपूर्वप्रयुक्त एवञ्जातीयको धर्म इति ॥ किं भवति विचारस्य प्रयोजनम् । यथा पूर्वः पक्षः । सौर्य्ये कर्मणि अविकारेण मन्त्रः प्रयोक्तव्य । यथा तर्हि सिद्धान्तः । ऊहेन अगन्म ब्रह्मवर्चसं सूर्य्यस्य उज्जितिमनूज्जेषमिति फले पर्य्यवसितम् । देवतायामुत्तरा चिन्ता वर्त्तिष्यते ॥५॥ उत्तरम् ॥ फलदेवतासम्बद्धधर्माणामप्यपूर्वप्रयुक्तताधिकरणम् ॥३॥

## देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥६॥

नैतदस्ति, अग्न्यादयोऽप्रयोजका इति । सर्वा देवता सर्वेषां धर्माणां प्रयोजिका भवितुमर्हन्ति । कुतः । भोजनस्य तदर्थत्वात् । भोजनं हीदं देवताया, यागो नाम । भोज्यं द्रव्यं देवतायै प्रदीयते । सा भोक्ष्यते इति । देवतासम्प्रदानको हि अयं यागः श्रूयते । सम्प्रदानं च नाम कर्मणोऽपि ईप्सिततमादभिप्रेततरम् । तस्मान्नगुणभूता देवता,देवतां प्रति गुणभूते द्रव्यकर्मणी। अपि च यागो नाम देवतापूजा।पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते । तदेतदतिथिवद् द्रष्टव्यम् । यथा यावत्किञ्चिदतिथेः परिचरणं, सर्वं तदतिथिप्रयुक्तम् । एवमिदमपीति ॥

आह । नन्वेवं ब्रुवता, विग्रहवती देवता भुङ्क्ते चेत्यभ्युपगतं भवति । उच्यते । बाढम् । विग्रहवती देवता भुङ्क्ते च । कुतः । स्मृतेः, उपचाराद्, अन्यार्थदर्शनाच्च । एवं हि स्मरन्ति, विग्रहवती देवता इति । स्मृतिश्च नः प्रमाणम् । तथा विग्रहवतीं देवतामुपचरन्ति । यमं दण्डहस्तमालिखन्ति, कथयन्ति च । तथा वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तम् । उपचारादपि स्मृतेर्द्रढिमानं कल्पयामः । तथाऽन्यार्थवचनं, विग्रहवतीं देवतां दर्शयति । जगृम्भा ते दक्षिणमिन्द्र हस्तमिति । पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति । तथा, इमे चिदिन्द्र रोदसी अपारे यत् संगृम्भा मघवन् काशिरित्ते इति । काशिर्मुष्टिः । सोऽपि पुरुषविग्रहस्यैवोपपद्यते । तथा, तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते इति, ग्रीवा उदरं बाहू इति पुरुषविग्रहदर्शनं भवति । तस्माद् विग्रहवती देवता इति भुङ्क्ते च । कथमवगम्यते । स्मृतेः,उपचाराद्, अन्यार्थदर्शनाच्च । एवं स्मरन्ति, भुङ्क्ते देवता इति । तथा चैनां भुञ्जाना-

मिवोपचरन्ति यदस्यै विविधानुपचारानुपहरन्ति । तथाचान्यार्थ-वचनं भुञ्जानां देवतां गमयति । अद्धीन्द्र पिब च प्रस्थितस्येति । तथा च, विश्वासनानि जठरेषु धत्ते इति, एकया प्रति घा पिबत्साकं सरांसि त्रिंशतमिति ॥ आह । न देवता भुङ्क्ते । यदि च भुञ्जीत देवतायै हविः प्रत्तं क्षीयेत । उच्यते । अन्नरसभोजिनी देवता मधु-करीवद् अवगम्यते । कथम् । देवतायै हविः प्रत्तं नीरसं भवति । तस्मादन्नरसं भुङ्क्ते देवतेति गम्यते ॥ ६ ॥ पूर्व० ॥

## आर्थपत्याच्च ॥ ७ ॥

यदि कस्यचिदर्थस्य ईशाना देवता उपचर्य्यमाणा च प्रसीदेत्, ततस्तदाराधनार्थमियं देवतापूजा अभिनिर्वर्त्येत । न चैतदुभयमपि अस्तीति । तदुच्यते । अर्थपतिर्देवतेति । कथमवगम्यते । स्मृतेः, उप-चाराद्, अन्यार्थदर्शनाच्च । हि स्मरन्ति । अर्थानामीष्टे देवतेति । तथा, देवग्रामो देवक्षेत्रमित्युपचारस्तामेव स्मृतिं द्रढयति । तथा अन्यार्थवचनमीशानां देवतां दर्शयति । इन्द्रो दिव इन्द्र ईशे पृथि-व्याम् इन्द्रो अपामिन्द्र इत् पर्वतानाम् । इन्द्रो वृधामिन्द्र इन्मेधि-राणामिन्द्र· क्षेमे योगे हव्ये इन्द्र इति । तथा, ईशानमस्य जगतः स्वम् ईशमीशानमिन्द्र तस्थुषे इति ॥

तथा, स्मृत्युपचाराभ्यां प्रसीदतीत्युपगच्छामः । एवं हि स्मर-न्ति, प्रसीदति देवतेति । तथोपचरन्ति— प्रसन्नोऽस्य पशुपतिः, पु-त्रोऽस्य जातः । प्रसन्नोऽस्य वैश्रवणो, धनमनेन लब्धमिति । तथा-ऽन्यार्थदर्शनं भवति । आहुतिभिरिव हुतादो देवान् प्रीणातीति । तस्मै प्रीता इषमूर्जं नियच्छन्तीति ॥ ७ ॥

## ततश्च तेन सम्बन्धः ॥ ८ ॥

ततो देवतायास्तेन फलेन सम्बन्धः परिचरितुर्भवति । यो दे-वतामिज्यया परिचरति, तं सा फलेन सम्बध्नाति । कथमेतद् अवग-म्यते । स्मृत्युपचाराभ्याम् । स्मरन्ति हि । देवता यष्टुः फलं ददा-तीति । तामेवोपचारेण स्मृतिं द्रढयति । पशुपतिरनेनोपचरितः, पुत्रोऽनेन लब्ध इति । तथा, अन्यार्थदर्शनमिममेवार्थं दर्शयति । स इत् जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः । देवानां यः पितरमा विवासति श्रद्धामना हविषा ब्रह्मणस्पतिमिति ।

तथा, तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीति । तस्माद् हविर्दानेन गुणवचनैश्च देवता आराध्यते, सा प्रीता सती फलं प्रयच्छति। येन कर्मणा अग्निराराधितस्तस्य फलस्य ईष्टे, तत् कर्त्रे प्रयच्छति, न तत् सूर्य्यः प्रदातुमर्हति । वचनादेतद् अवगम्यते, कः किं प्रयच्छतीति । यथा अग्नौ वचनं, न तत् सूर्य्ये ॥ ८ ॥ युक्तिः ॥

## अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः ॥ ९ ॥

अपि वेति पक्षो व्यावर्त्तते । न चैतदस्ति, यदुक्तं देवता प्रयोजिकेति । यज्ञकर्म प्रधानं स्यात् । यजतेर्जातमपूर्वम् । कुतः । शब्दपूर्वत्वात् । यद्धि फलं ददाति, तत् प्रयोजकमिदं फलं ददातीत्येतज्ज्ञानं शब्दपूर्वकं न प्रत्यक्षादिभिरवगम्यते । शब्दश्च यजतिवाच्यात् फलमाह, न देवतायाः । कथमवगम्यते ? । दर्शपूर्णमासयोः करणत्वेन निर्द्देशः, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तथा, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः ॥ ननु द्रव्यदेवताक्रियं यजत्यर्थः । सत्यमेवम् । किन्तु गुणत्वे देवताश्रुतिः । द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः । भूतभव्यसमुच्चारणे च भूतं भव्यायोपदिश्यते, तस्मान्न देवता प्रयोजिका ॥

अथ यदुक्तं, कर्मण ईप्सितादभिप्रेततरमिति । नास्याभिप्रेततामपह्नुमहे । ताद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतताऽवगम्यते । फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य । तस्य च श्रुत्या करणताऽवगम्यते, न देवताया । तत्र यद्यपि देवतार्थता यागस्य गम्यते, फलार्थताऽपि तेन न प्रतिषिद्ध्यते । फलं च पुरुषार्थः । पुरुषार्था च नः प्रवृत्तिः । न चासौ देवतायाः । तस्मान्न देवताप्रयुक्ता प्रवर्त्तिष्यामहे । या तु सम्प्रदानस्याभिप्रेतता सा फलवतो यजेः साधनत्वे सत्युपपद्यते ॥

यच्च, यजिर्देवतापूजा सा पूज्यमानप्रधाना लोके लक्ष्यते इति । न लोकवदिह भवितव्यम् । इह पूज्यमानपूजा प्रधानम् । यद्धि फलवत्, तत् प्रयोजकम् । तस्माद् यज्ञकर्म्म प्रयोजकम् । अपिचैतस्मिन् पक्षे विग्रहवती देवता, भुङ्क्ते चेत्यध्यवसनीयं भवति । न हि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा सम्भवतीति ॥

यच्चोक्तं– स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती, भुङ्क्ते चेति । तन्न । स्मृतेर्मन्त्रार्थवादमूलत्वात् । मन्त्रेभ्यश्चार्थवादेभ्यश्च स्मृतिमूलं विज्ञानमुत्पद्यते इति प्रत्यक्षमवगम्यते । ते च मन्त्रार्थवादा नैवम्परा इत्येतद् वक्ष्याम. ॥ आह । यदि नैवम्परा, न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानमिति । उच्यते । ये आलोचनामात्रेण मन्त्रार्थवादान् पश्यन्ति, तेषां तत् स्मृतिमूलम् । ये पुनर्निपुणत पश्यन्ति, तेषां तद् बाधितमपिच कस्यचित् स्मृतिमूलं भवति । तस्मात् तत एव स्मृति., उपचारोऽपि स्मृतिमूल एव । यत्त्वन्यार्थदर्शनमुक्तं– जगृभ्मा ते दक्षिणमिन्द्र हस्तमिति । नैतदेवम्परम्, इन्द्रस्य हस्तो विद्यते इति । यस्तस्य दक्षिणो हस्तस्तं वयं गृहीतवन्त इति । तस्माद् वाक्यादिन्द्रस्य हस्तसत्ता न प्रतीयते ॥ आह । यदि त्वसौ नास्ति, वयं ते हस्तं गृहीतवन्त इत्येवं नावकल्पते इति हस्तसत्ताऽध्यवसीयते । अस्त्यसौ हस्तो, वयं यं गृहीतवन्त इति । तन्नोपपद्यते । यद्यप्यस्य हस्तो भवेत्, तथापि न तमुपगृहीतवन्त इति प्रत्यक्षमेतत् । तथाऽप्येतन्नावकल्पत एव । तत्रैतदसम्बद्धं वाऽवकल्पयितव्यं, स्तुतिर्वा । तच्च मत्पक्षेऽपि तुल्यम् ॥

अथैवमुच्यते, तस्यैतद्वचनं यो गृहीतवाँस्तस्य हस्तमिति । उच्यते । नैतदध्यवसेयम् । आदिमत्तादोषो वेदस्य प्रसज्ज्येत । न च गृहीतवान् आसीदित्युच्यते । प्रमाणाभावात् । एतस्मादेव वचनादर्थात् कल्प्यते हस्तग्रहीतेति चेत् । तन्न । अयथार्थस्याप्युच्चारणं सम्भवत्येव यतः । यथा, दश दाडिमानि षडपूपा इति । यस्यापि च एष पक्षो, विग्रहवान् इन्द्र इति । तस्यापि इन्द्रशब्देन आमन्त्रणं सम्बोधनार्थं, सम्बोधनमनुवचनाय । तत्र सम्बद्ध इत्यवगते अनुवचनं न्याय्यम् । न चासौ केनचित् प्रकारेण सम्बद्ध इत्यवगम्यते । अनवगते सम्बोधनं व्यर्थम् । वचनप्रामाण्यात् सम्बुध्यते इत्येवं गम्यते इतिचेत् । उक्तम् । अदृष्टकल्पनायां हस्तादिकल्पनानुपपत्तिरिति । न चासौ सम्बुद्ध इत्यवधार्य्यते । प्रमाणाभावात् । तस्मात् सम्बोधनवचनं न सम्बोधनाय, निर्देशार्थमेव । अविग्रहपक्षेऽपि तन्निर्देशार्थमेव भविष्यति । तत्रामन्त्रितविभक्तिवचनं स्तुतये । एवमिदं देवताख्यं साधयितृतमं, यच्चेतनादिवत् सम्बुध्य साधयतीति चेतनवदिवोपचर्य्यमाणः सम्बुद्धिशब्देनामन्त्र्यते । तथा सम्बो-

धनशब्देन निर्दिश्योच्यते, गृहीतवन्तो वयं तव हस्तम् । त्वदाश्रया वयमित्यर्थः । अस्माभिरिन्द्रकर्म्म कर्त्तव्यमित्येतदनेन स्मार्य्यते ॥

तथा इमे द्यावापृथिव्यौ दूरे अपारे यत् संगृह्णासि मघवन्नहो ते पूजितो मुष्टिरिति सन्तमिव मुष्टिं स्तुत्यर्थेन वदति । तस्यापि भावे न प्रमाणमस्ति । नेदं वचनम्, इत् महान् काशिरस्ति । किन्तर्हि, यस्तव काशिः, स महानिति । अन्यार्थस्तव काशिरस्तीति, अन्यस्तव काशिर्महानिति । सता हि स्तुतिरुपपद्यते इतिचेत् । नैतत् । नियोगतो यस्यापि पौरुषविधिकैरङ्गैर्नास्ति संयोगः, पौरुषविधिकैरङ्गैस्तस्यापि स्तुतिर्भवति । यथा, एते वदन्ति शतवत् सहस्रवदभिक्रन्दन्ति हरितेभिरासभि. । विष्ट्वी ग्रावाण. सुकृत सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत इति । तथा, सुखं रथं युयुजे सिन्धुरश्विनमिति। तस्मान्न श्रुतिवचनादर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः । तथा, तुविग्रीव इन्द्र इति नैतद् युक्तं भवति, ग्रीवावान् इन्द्र इति । किन्तर्हि, याऽस्य ग्रीवा सा महती । ग्रीवासत्त्वे नास्ति प्रमाणम् । न च ग्रीवास्तुतिरर्थापत्ति. । अपुरुषविधेऽपि स्तुत्युपपत्तेः ॥

अपि च, इन्द्रो वृत्राणि जिघ्नते इत्येताभ्यां पदाभ्यामिन्द्रशब्दः सम्बद्धो न शक्नोति तुविग्रीवादिभिः सम्बन्धं यातुम् । द्विरुच्चारणमस्य प्रसज्ज्यते । तुविग्रीवावान् इन्द्रो वेदितव्य, वृत्राणि च इन्द्रो हन्तीति । तथा हि सति भिद्येत । अभिन्नं च वाक्यमुपलभ्यते । तदेवमवकल्पते । यदि तुविग्रीवादयोऽस्य नोपदिश्यन्ते इति स्तुत्यर्थे सङ्कीर्त्यते तुविग्रीवादि· । अन्धसो मदे ईदृशो वृत्राणि हन्ति इति । एषा तु वचनव्यक्तिः । वृत्रवधोपदेशपरमिदं वचनमिति । यदपि वचनं– बाहू ते इन्द्र रोमशौ, अक्षी ते इन्द्र पिङ्गले इति । तदपि बाह्वो रोमशत्वमक्ष्णोश्च पैङ्गल्यमाह, न बाहुसत्तामक्षिसत्तां च । यदपि अक्षिसत्तां वदतीति गम्यते । चक्षुष्मते शृण्वते ते ब्रवीमीति । तदपि न चक्षुः सम्बन्धार्थं, चक्षुष्मते ब्रवीमीति वचनसम्बन्धार्थम् । तत् सतीमिव चक्षुष्मत्तां स्तुत्यर्थमुच्चारयति । कुत । एतद् अवगम्यते । चतुर्थीनिर्देशात् । यदि प्रातिपदिकार्थोऽध्यवसीयते, तथा वाक्यम्भिद्येत । चक्षुष्मानित्येवं च उद्दिश्येत । चक्षुष्मते ते ब्रवीमीति च । तस्मान्न किञ्चिदन्यार्थदर्शनं पुरुषविधतां देवतायामिदं ख्यापयतीति । न च इदं भोजनम् । न हि देवता भुङ्क्ते । तस्माद्

भोजनस्य तदर्थत्वादिति तद् असद्वचनम् ॥

यदपि स्मृत्युपचारान्यार्थदर्शनैर्भुङ्क्ते इति । तद् अविग्रहत्वेन प्रत्युक्तम् । अपि च, भुञ्जानायै देवतायै प्रत्त हवि. क्षीयेत । न च मधुकरीवदन्नरसभोजिन्यो देवता इति प्रमाणमस्ति । मधुकरीषु प्रत्यक्षम् । न च तद्वद् देवतायाम् । तस्मान्न भुङ्क्ते देवतेति । यदुक्तं, देवतायै हवि प्रत्त नीरसं भवतीति । नैष दोष. । वातोपहतं नीरसम्भवतीति, शीतीभूतं च । न चासौ कस्यचिदर्थस्य ईष्टे । अनीशा कथं दास्यति ? इति ॥

यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैरीशाना देवतेत्यवगम्यते इति । तन्न । स्मृतेर्मन्त्रार्थवादमूलत्वादित्युक्तम् । उपचारोऽपि देवग्रामो देवक्षेत्रमिति । उपचारमात्रम् । यो यदभिप्रेतं विनियोक्तुमर्हति, तत्तस्य स्वम् । न च ग्रामं क्षेत्रं वा यथाभिप्रायं विनियुङ्क्ते देवता । तस्मान्न सम्प्रयच्छतीति । देवपरिचारकाणान्तु ततो भूतिर्भवति, देवतामुद्दिश्य यत् त्यक्तम् ॥

यदुक्तम्, अन्यार्थदर्शनमीशानां देवतां ख्यापयति, इन्द्रो दिव इन्द्र ईशे इत्येवमादीति । तत् प्रत्यक्षामनीशानां देवतामुपलभ्य अध्यवस्याम , भाक्त एष शब्द इति । तत्राह, वचनप्रामाण्याद्देवास्येशानताऽवगम्यते, यद्देवलोका अर्थान् विनियुञ्जते, तद्देवताभिप्रायादेव इत्यध्यवस्याम इति । तन्न । प्रत्यक्षात् प्रमाणाद्देवतापरिचारकाणामभिप्राय इत्यवगम्यते । स न शक्यो बाधितुम् । येऽपि देवतामीशानां वर्णयन्ति, तेऽपि नापह्नुवते परिचारकाणामभिप्रायम् । किं चाहुः, तथा देवता करोति, यथा परिचारकाणामभिप्रायो भवतीति । न च स ईशानो भवति य पराभिप्रायमनुरुध्यते, यस्य न स्वाभिप्रायाद् विनियोगो भवति ॥ अपि च, न चैतद्वचनम् । वर्त्तमानकालोपदेशत्वात्, प्रत्यक्षविरोधात् स्तुतिवादोऽवधार्य्यते । स्तुतिवादे च सम्भवति, न वचनप्रामाण्यादीशिष्यते इति गम्यते । न च देवता फलेन सम्बध्नाति, या तदर्थं परिचर्य्येत ॥ यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैर्ददाति प्रसीदति चेति । तत्र स्मृत्युपचारयोरुक्तं, यदन्यार्थदर्शनं तस्मै प्रीता इषमूर्जं प्रयच्छतीति । तन्न । अन्यस्य विधेराम्नानात् । दक्षिणत सम्परिहर्त्तव्या इत्याहेति । तथा तृप्त एवैनमिन्द्र. प्रजया पशुभिस्तर्पयतीति । अत्रैन्द्रस्य हविषो विधा-

नम् । तस्माद्देवता न प्रयोजिकेति ॥ ९ ॥ सि० ॥

**अतिथौ तत्प्रधानत्वमभावः कर्म्मणि स्यात्तस्य प्रीतिप्रधानत्वात् ॥ १० ॥**

यदुक्तम्, अतिथिवदिति । तत् परिहर्त्तव्यम् । आतिथ्यमतिथिप्रयुक्तं स्यात् । आतिथ्ये हि तत्प्रीतिर्विधीयते । अतिथिः परिचरितव्यः । यथा प्रीयते तथा कर्त्तव्यमिति । दानं भोजनं वा कार्य्यमिति । यद्यदतिथये रोचते, तत् कर्त्तव्यम् । यत् तस्मै न रोचते, न तद् बलात्कारयितव्यमिति । इह तु कर्म्मणि अभाव प्रीतिविधानस्य । तस्माद् विषममतिथिनेति ॥ १० ॥ युक्तिनिरासः ॥ धर्म्माणामदेवताप्रयुक्तत्वाधिकरणम् ॥ ४ ॥

**द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ११ ॥**

दर्शपूर्णमासयोरामनन्ति, व्रीहीन् प्रोक्षतीति । तत्रैव त्रीन् परिधीन् तिस्रः समिध इति मन्त्रम् । चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्यामिति चतुर्मास्यानां द्वितीये पर्वणि वरुणप्रघासेष्वाम्नायते । शूर्पेण जुहोति तेन हि अन्नं क्रियते इति । तत्र संशय । किंद्रव्यसंख्याहेतुसमुदायप्रयुक्ताः प्रोक्षणादयो धर्म्माः, उतापूर्वप्रयुक्ता इति । किंतावत् प्राप्तम् । द्रव्यादिप्रयुक्ताइति । इह व्रीहीन् प्रोक्षतीति प्रकरणेनापूर्वप्रयुक्तता स्याद्वाक्येन द्रव्यप्रयुक्तता। द्रव्येण हि प्रोक्षणस्य समभिव्याहारः । तस्मिन्नपि समभिव्याहारे द्रव्यगता द्वितीया विभक्तिः प्रोक्षणस्य द्रव्यप्रयुक्ततां वदति ॥ तथा, त्रीन् परिधीनिति यत् त्रिशब्दस्याभिधेयं, तदिह मन्त्राम्नानसामर्थ्याद् वदितव्यमिति गम्यते । सङ्ख्या स त्रिशब्दस्यार्थः । तस्याः श्रुतिर्वाचिका । तत्सम्बद्धे अपूर्वे लक्षणा स्यात्। यावन्तः परिधयस्तावन्तो वक्तव्या इति॥ तथा हेतुना धर्म्मः सयुज्यते वाक्येन, शूर्पेण जुहोतीति । किं कारणम् । यतः, तेन अन्नं क्रियते । तद्धोमेन सम्बद्धव्यमन्नकरणद्रव्यं होमे विधीयते । प्रकरणादपूर्वप्रयुक्तता स्यात् । यस्मादनेन होमेन अपूर्वं क्रियते, तस्माद् एतत् शूर्पेण निर्वर्त्तयितव्यमिति । प्रकरणाद् वाक्यं बलीयः । अतः प्रकरणं बाध्येत । येन येन द्रव्येण दर्विपिठरादिनाप्यन्नं क्रियते, तेन तेन होमः कर्त्तव्य इत्येवमन्नकरणं सगुणं भवतीति ॥

ननु प्रथमे अध्याये प्रतिषिद्धा हेत्वर्थता । शूर्पस्यार्थवादोऽयमित्युक्तम् । सत्यमुक्तम् । अपूर्वप्रयुक्ततायां हि सिद्धायां नैकस्मिन् वाक्ये होमे शूर्पविधानं, हेतुविधानं चावकल्पते इत्यर्थवादः प्रकल्पते, नान्यथा । चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्यामिति समुदायसमभिव्याहाराद् वाक्येन तत्प्रयुक्तता, प्रकरणसामर्थ्याल्लक्षणया अपूर्वसमभिव्याहाराद् अवगतामपूर्वप्रयुक्ततां बाधते । तस्माद् द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्म्माः ॥ ११ ॥ पूर्व० ॥

**अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १२ ॥**

अपूर्वप्रयुक्ते एवञ्जातीयके धर्मे सति द्रव्येण च धर्मव्यवस्था न स्यात् । पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मेथितं धानाभिर्हारियोजनं हिरण्येन शुक्रमाज्येन पात्नीवतमिति । यस्मान्मैत्रावरुणोऽपूर्वस्य, तस्मात् पयसा श्रयितव्य इति । ऐन्द्रवायवोऽप्यपूर्वस्य । सोऽपि पयसा श्रयितव्यः प्राप्नोति । एवं सर्वाणि श्रयणादीनि सर्वेषां ग्रहाणाम् । तत्र मैत्रावरुणादिग्रहणमविवक्षितं स्यात् । तस्मादपि द्रव्यादिप्रयुक्ताः प्रोक्षणादय इति ॥ १२ ॥ युक्तिः ॥

**अर्थो वा स्यात् प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । न द्रव्यादिप्रयुक्ता भवेयुः । किन्तर्हि । अर्थ एषां प्रयोजनम् । अर्थ इति अपूर्वं ब्रूम । तदर्थास्ते । तद्धि कर्त्तव्यतया श्रूयते । तदितिकर्त्तव्यतया अनुबध्यते । इतरेषां द्रव्यादीनां कर्त्तव्यतया न चोदना । किन्तर्हि । अर्थस्य गुणभूतत्वेन । अर्थं प्रति अपूर्वं प्रति गुणभूतानामेषां श्रवणम् । किमतः । यद्येवम्, अकर्त्तव्यानामितिकर्त्तव्यतया नास्ति सम्बन्ध इति ॥

ननु व्रीह्यादिसमभिव्याहारात् तर्हि सम्बन्धः । तत्र द्वितीयया व्रीहिसमुदायप्रयुक्तता गम्यते । लिङ्गवाक्याभ्यां सङ्ख्याहेतुप्रयुक्तता नेत्याह । एवं सति फलं कल्पनीयं स्यात् । तस्मादपूर्वप्रयुक्तता ॥

नन्वेवमपि सति अपूर्वोपकारः कल्पयितव्यः । सत्यं कल्पयितव्यः । प्रकृतेन तु एकवाक्यतां नीत्वा । त्वत्पक्षे त्वप्रकृतेन फलवचनेनैकवाक्यता स्यात् ॥

ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम् । सत्यमबाधकम् ।

फलाभावात्तु भवदीयः पक्षो मुच्यते । तस्मिन्नानर्थक्येन अविवक्षिते प्रकरणवता प्रयोगवचनेन अपरिपन्थि प्रोक्षाणादि विधायिष्यते । आह । अपूर्वसम्बन्धेऽपि तदीयैर्व्रीह्यादिभिरेष धर्म्मः प्रयुज्यते । किमेतत् । किमेवं भविष्यति ? । द्रव्यादिसम्बन्धश्चैवं हि नावज्ञातो भविष्यति । फलं च न कल्पयितव्यम् । उच्यते । नैवं शक्यम् । व्रीहीन् प्रोक्षतीति हि व्रीहिजातिर्निर्दिश्यते । व्रीहिद्रव्यलक्षणार्था वा, अपूर्वसाधनविशेपलक्षणार्था वा । अन्यतरलक्षणया कृतार्था इति, नोभयलक्षणार्था स्यात् । द्रव्यलक्षणे वा । तत्र च लक्षणैव दोषः। फलकल्पना इति कृत्वा साधनविशेपलक्षणार्था जातिरवसीयते । व्रीहिजातिलक्षितं यत् साधनं, किं तत् । यतस्तण्डुला भवन्ति, तत् प्रोक्षितव्यमिति तण्डुलनिर्वृत्तिकरता हि तत्र साधनत्वं, न द्रव्यता । एवं सङ्ग्यादिष्वपि योजयितव्यम् । तस्मादपूर्वप्रयुक्तता प्रोक्षणादीनामिति ॥ १३ ॥ सि० ॥

## अपूर्वत्वाद् व्यवस्था स्यात् ॥ १४ ॥

अथ यदुक्तम्, अर्थकारिते च द्रव्येण न व्यवस्था स्यादिति । साधनविशेषलक्षणार्था जातिरित्येवं सति व्यवस्था भविष्यति । मैत्रावरुणेन यत् क्रियते, तत्र पयःश्रयणं, न तद् ऐन्द्रवायवेन । अतो न मैत्रावरुणापूर्वाद् ऐन्द्रवायवस्य धर्माः । अपूर्वो हि ऐन्द्रवायव. । तस्माद् अपूर्वत्वाद् व्यवस्था स्यादिति ॥ १४ ॥ पूर्वपक्षनिरासः ॥

## तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥

यश्च मन्यते, द्रव्यादिप्रयुक्ता प्रोक्षणादयो धर्मा इति । तस्य सर्वविपयता धर्मस्य प्राप्नोति । येऽपि भक्तार्था व्रीहयस्तेऽप्येवं प्रोक्षितव्याः प्राप्नुवन्ति । न चैतत् त्वयापीष्यते । तस्मादयमस्मिन् पक्षे दोष इति ॥ १५ ॥ पूर्वपक्षयुक्तिनिरासः ॥

## तद्युक्तस्येतिचेत् ॥ १६ ॥

इतिचेत् पश्यसि, सर्वविषयता धर्मस्य भाविष्यतीति । तद्युक्तस्य प्रकरणयुक्तस्य भविष्यति । एवं प्रकरणमनुगृह्यते । न च सर्वविषयता धर्मस्येति ॥ १६ ॥ आ० ॥

## नाश्रुतित्वात् ॥ १७ ॥

नैतदेवम् । न हि श्रूयते, करणयुक्ता व्रीहयो निर्वप्तव्या. प्रोक्षित-

व्याश्चेति। ननु प्रकरणानुग्रहार्थैतदध्यवसानम्। नेत्याह। न हि वाक्येन बाधितं प्रकरणम् उत्सहते धर्मान् नियन्तुम्। अथापि न बाध्यते, तथापि न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति। कर्त्तव्यतया हि तत् क्रियमाणं चोद्यते इति न प्रसिद्धसम्बन्धमिव विशेषणत्वेन। तस्मान्न प्रकृतयागविशेषितानां व्रीहीणां निर्वाप प्रोक्षणं वा चोद्यते इति ॥ १७ ॥ आ० नि० ॥

अधिकारादिति चेत् ॥ १८ ॥

इति चेत् पश्यसि, न प्रकरणं विशेषकं व्रीहीणामिति। बाढम्। अधिकाराज्ज्ञास्यत्यध्वर्य्युः। इमे भक्तार्थाः, इमे कार्य्यार्थाः। तत्र कार्य्यार्थान् प्रोक्षिष्यतीति ॥ १८ ॥ आ० ॥

तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद् यज्ञप्रयोजनम् ॥ १९ ॥

तुल्या एते व्रीहयः। ये एव भक्तार्थास्ते एव कर्मार्थाः, न पृथक् केचित् कर्मार्था नाम। ननु ये निरुप्तास्ते कर्मार्थाः। सत्यं भवेदेतत्। प्रोक्षणादिषु दोषो न स्यात्। निर्वापे तु दोषः। न तत्र केचन प्रकृता विद्यन्ते, पृथक्सतां यज्ञार्थेन निर्वापः श्रूयते। कथम्। अपरेण गार्हपत्यं प्रागीषम् अनोऽवस्थितं भवति। तस्य दक्षिणं चक्रमारुह्यानसोऽधि निर्वपतीति। तस्माद्धर्मस्य सर्वविषयत्वं प्राप्नोत्येव। पूर्वेण हेतुना अपूर्वप्रयुक्तत्वं प्रोक्षणादीनामिति ॥ १९ ॥ सिद्धान्तः ॥ प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ॥ ५ ॥

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥

ज्योतिष्टोमे समाम्नायते— त्सरा वा एषा यज्ञस्य, तस्माद् यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेन उपांशु चरन्तीति। तदत्रैषोऽर्थः सांशयिकः। किं प्राग् अग्नीषोमीयाद् यानि कर्माणि, तत्प्रयुक्तमुपांशुत्वम्, उत परमापूर्वप्रयुक्तमिति। किं प्राप्तम्। प्रागग्नीषोमीयाद् यानि अङ्गापूर्वाणि आरादुपकारकाणि, यच्च प्रधानद्रव्यसंस्कारकं, तत्प्रयुक्तोऽयं धर्मः। योऽयं देशसम्बद्धः। कुत एतत्। श्रुतिनिर्देशा-

त् । मर्य्यादया देशलक्षिता ये पदार्थाः, ते श्रुत्या एतेन धर्मेण सम्बद्धाः । ये एतस्मिन् देशे पदार्थास्तैरुपांशु चरन्तीति ॥ ननु वाक्येनैष धर्मो विनियुक्तो, न श्रुत्या । न ब्रूमो, न वाक्येनेति । किन्तर्हि । श्रुतेनाऽस्यैकवाक्यता, न प्रकृतेन, लक्षितेन, कल्पितेन वेति । उच्यते । गृह्णीम एतदङ्गापूर्वाणामयं धर्म इति, न तु प्रधानद्रव्यस्य संस्कारकं यदपूर्वं तस्यापीति । कतमं तत् । यत् प्रधानद्रव्यसंस्कारकं पूर्वस्मिन् देशे अस्तीति । उच्यते । तस्य च तत्र भावात् । तस्यैवञ्जातीयकस्य पूर्वस्मिन् देशे भावात् । अस्ति हि सोमपरिवहणीयं नाम सूक्तम् । तस्माद् देशधर्मो भविष्यतीति । यथा प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सह विष्कृता विसृजतीति । अस्मिन् देशे ये पदार्थास्तेषां धर्मो वाग्यमो, न प्रधानापूर्वस्य । एवमिदमप्युपांशुमिति ॥ २० ॥ सि० ॥

## यज्ञस्य वा तत्संयोगात् ॥ २१ ॥

वाशब्दात् पक्षो विपरिवर्त्तते । नैतदस्ति । तद्देशानां धर्म्म इति । कस्य तर्हि । परमापूर्वस्येति । कुतः । तत्संयोगात् । तत्संयोगो भवति । यज्ञस्य संयोगः । त्सरा वा एषा यज्ञस्य यत् प्राचीनमग्नीषोमीयादिति, यज्ञस्य यत् प्राचीनमिति सम्बन्धो, न त्सरा वा यज्ञस्येति । कुतः । प्राचीनं विशिंषन् यज्ञस्येति शब्दो विधिपदशेषो भवति । ततः प्रवृत्तिविशेषकरो भविष्यति । इतरथा अर्थवादशेषः सन्ननर्थकः स्यात् । वादमात्रं ह्यनर्थकम् इति । प्राचीनमिति च यज्ञभागं श्रुत्या वदति । लक्षयति च तद्गतान् पदार्थान् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या स्यात् । तस्मात् प्राग्देशस्यैष धर्म्मः । तेनास्य श्रुत्या संयोग । न प्राग्देशगतानां पदार्थानां तैरस्य लक्षणया सम्बन्धः स्यात् ॥ अथाप्यर्थवादपदशेषो यज्ञस्येति स्यात्, तथापि प्राग्देश श्रुत्या धर्मेण सम्बद्ध्यते । प्राग्देशगता पदार्था लक्षणयेति यज्ञप्रयुक्ततैव न्याय्या ॥ अपिच प्रत्यक्ष उपकारः परमापूर्वस्य लक्ष्यते । यत् प्राचीनमग्नीषोमीयात्, तदुपांशुत्वेन शिथिलप्रयत्न प्रचरन्नखिन्न सुखं बहुवृत्तान्तं सौत्यमहर्निर्वर्त्स्यतीति । तस्मात् परमापूर्वप्रयुक्तमुपांशुत्वमिति ॥ २१ ॥ पूर्व० ॥

## अनुवादश्च तदर्थवत् ॥ २२ ॥

अनुवादश्च तद्देशपदार्थस्यैव भवति । त्सरा वा एषा यज्ञस्य यत्प्राचीनमग्नीषोमीयादिति । त्सरा नाम छद्मगतिः । यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतश्छद्मना गतिर्भवति । शनैः पदन्यासो, दृष्टिप्रणिधानम्, अशब्दकरणञ्च । कथमनवबुद्ध शकुनिर्गृह्येतेति । एवमिहापि अनवबुद्धमिव ग्रहीतुं यज्ञं प्रच्छन्नगतिरुपांशुत्वं नाम । यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासो न स तद्देशार्थः । अपितु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते । एवमिहाऽपि उपांशुत्वं न तद्देशानां पदार्थानामर्थेन क्रियते, तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते । यस्तु त्सराशब्दं यज्ञविशेष्यं मन्यते, तस्य सुतरामर्थवादः परमापूर्वप्रयुक्ततां दर्शयति । यज्ञस्यैषा त्सरेति । यथा शकुनेः त्सरा, एवं यज्ञस्येति ॥ २२ ॥ पूर्वपक्षे युक्ति. ॥

प्रणीतादि तथेतिचेत् ॥ २३ ॥

इति यदुक्तं तत्परिहर्त्तव्यम् ॥ २३ ॥ आ० ॥

न यज्ञस्याश्रुतित्वात् ॥ २४ ॥

नैतदेवं, तद्देशपदार्थप्रयुक्तैव स्यादू, न परमापूर्वप्रयुक्ततेति । नात्र पदार्थानां यज्ञभागविशेष्यता वाग्यमसम्बन्धेनावगम्यते । यज्ञस्याश्रुतित्वात् । नात्र सम्बन्धो यज्ञशब्दः श्रूयते । नन्विदानीमेवोक्तं, यज्ञं तनिष्यन्तौ अध्वर्य्युयजमानौ वाचं यच्छत इति । उच्यते । तद्देशपदार्थप्रयुक्ततायामप्येतदवकल्पते । कथम् । यज्ञं विस्तारयितुं वाचं यच्छतः । तौ वाचंयमौ सन्तौ अविक्षिप्यमाणचेतस्कौ, पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्येते, यथा, न कश्चित् पदार्थः पदार्थावयवो वा हीयते । अध्वर्य्युर्वाग्यमेन अनन्यचेतस्को न पदार्थान् प्रमादयिष्यति । यजमानश्चैवं वाग्यमेन अनन्यचेतस्कः प्रमादयिष्यन्तं तं बोधयिष्यति । अङ्गैरप्यनन्तरीयमाणैर्यज्ञो विस्तार्य्यते, न केवलैः स्वैरवयवैरङ्गैश्च विस्तारयितुं वाग्यम शक्नोति । अस्मिन् काले क्रियमाणो न स्वेनात्मना । यज्ञसंयोगश्चात्र विस्तारसम्बद्धः । तस्मादङ्गप्रयुक्ततायामप्युपपद्यते, यदध्वर्य्युयजमानौ वाचं यच्छतः, तत् प्रजापतिभूयङ्गतौ यज्ञं तन्वाते इति दृष्टेन कारणेन, न अदृष्टेनेति वर्त्तमानकालापदेशादवगम्यते । यथा वयं वाग्यमेन तायमानं यज्ञं विद्मस्तथेति ॥ २४ ॥ आ० नि० ॥

## तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २५ ॥

स्थितादुत्तरम् । वाशब्दात् पक्षं विपरिवर्त्तयेत् । नैतदस्ति, परमापूर्वप्रयुक्तमुपांशुत्वमिति । कथन्तर्हि । प्राचीनमग्नीषोमीयाद् ये पदार्थास्तत्प्रयुक्तम् । कुतः । सङ्घातस्याचोदितत्वात् । सङ्घात इति ग्रहयज्यभ्याससङ्घातं ब्रूमः । न तस्यायं भाग उपांशुत्वेन सम्बद्ध इति चोदना । नैवं सम्बन्धः क्रियते, यज्ञस्य यत् प्राचीनमिति । कथं तर्हि। त्सरा वा एषा यज्ञस्येति । कुतः । तस्मादितिपदेन व्यवधानात् ॥ अथापि प्राचीनेन सम्बन्धः । एवमपि न परमापूर्वप्रयुक्तम् । न हि यदित्यनेन देशोऽभिसम्बद्ध्यते । किन्तर्हि । देशगताः पदार्थाः । यदि देशोऽभिसम्बद्ध्यत, यत् प्राचीनमग्नीषोमीयादिति भवेद्, न यत्किञ्चिदिति । वीप्सायां हि एतद्भवति । वीप्सा च बहुषु भवति, नैकस्मिन् । एकश्च देशो, बहवस्तत्र पदार्थाः । तस्मात् पदार्थानामुपांशुत्वेन सम्बन्धो न तद्देशस्येति । कथं पुनर्वीप्साऽवगम्यते इति । यदित्यनेन लक्ष्यते । किमित्यज्ञानवचनम् । विशेषाश्चाज्ञाता ज्ञातुमिष्टाः प्रतीयन्ते । बहुषु च सामान्यं विशेषाश्च भवन्ति । तस्मात्तद्देशाः पदार्था वीप्सया लक्ष्यन्ते, ते च उपांशुत्वेन सम्बध्यन्ते इति ॥ ननु दीक्षणीयादिष्वन्यो धर्म उक्तः । यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्स्विति । कथं तत्रोपांशुत्वं कर्त्तुं शक्यमिति । उच्यते । स धर्मः प्रधानेषु भविष्यति । दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात् । उपांशुत्वं प्रधानवर्जितेष्वङ्गेषु निवेक्ष्यते । सामान्योपदेशात् ॥

प्रयोजनं, कुण्डपायिनामयने मासमग्निहोत्रं जुह्वतीत्येवमादीनि प्रागग्नीषोमीयाद्, एषूपांशुत्वसम्बन्धो भवति । यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, न सम्बन्धः ॥ २५ ॥ उत्तरम् ॥ अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ॥ ६ ॥

## अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवत् ॥ २६ ॥

अस्ति अग्निः, य एवं विद्वान् अग्निं चिनुते इति । तत्रैव समाम्नायते । हिरण्यशकलसहस्रेणाग्निं प्रोक्षति, दध्ना मधुमिश्रेणाग्निं प्रोक्षति, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति, मण्डूकेनाग्निं विकर्षति । तत्रायमर्थः सांशयिकः । प्रतीष्टकं किं विकर्षणं प्रोक्षणं च

कर्त्तव्यम् ? अथ सकृदेव कर्त्तव्यमिति । तत्रैवं तावद्विचार्य्यते। किमिष्टकासमुदायेऽग्निशब्दः, उत तद्व्यतिरिक्ते द्रव्यान्तरे इति। यदि समुदाये, ततस्तल्लक्षितानामिष्टकानामगम्यमाने विशेषे सर्वासां प्रोक्षणं विकर्षणञ्च। यदा च द्रव्यान्तरे, तत. सकृदेवेति। किं प्राप्तम् । प्रतीष्टकमिति । कुत । समुदाये हि अग्निशब्दो वर्त्तते। कथमवगम्यते। द्रव्यान्तरस्याभावात् । द्रव्यान्तरमेवान्यद् नास्ति, कोऽग्निशब्देनाभिधीयेत ? कस्मिन्नग्निर्निधीयेतेति । कथं पुनर्नास्तीति गम्यते । द्रव्यान्तरवैलक्षण्यात्। तत्र हि द्रव्यान्तरमस्तीति गम्यते, यत्रैकस्मिन्नवयवे गृहीत्वा कृष्यमाणे कृत्स्न कृष्यते । कोऽभिप्राय. । यद्येकोऽवयवो हस्तेन संयुक्त कृष्यते, न द्रव्यान्तरम्। कः प्रसङ्गः। यत्तत्र द्वितीयोऽप्यवयवः कृष्येतेति। अथ द्रव्यान्तरमपि तत्र कृष्यते, तत्र द्रव्यान्तरस्य समवायिनामवयवानामपि निर्भागात् कर्षणमुपपन्नम्। न च संयुक्तसंयोगस्य द्रव्यान्तराद्दते धर्म एषोऽवकल्पते । न हि अबद्धे काष्ठपूलके काष्ठे एकस्मिन्नाकृष्यमाणे काष्ठान्तराणि कृष्यन्ते। यत्र हि परस्परव्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचिदनुमानेन अनुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते । इह तु या एवेष्टका गृहीत्वा कृष्यते, सैवागच्छति, नेष्टकान्तराणि । सन्धिश्च लक्ष्यते । तेन नावयवसंस्यूतिरस्तीति गम्यते । तस्मान्नास्ति द्रव्यान्तरम्। तत्रेष्टकाभिरग्निं चिनुते इति चयनमात्रमिष्टकाभि. कर्त्तव्यम्। न चयनमात्रेण कृतेन किञ्चिद् दृष्टमस्ति । तस्मादग्निनिधानार्थानामिष्टकानां चयनसमुदायोपलक्षितानामगम्यमाने विशेषे सर्वासामेव प्रोक्षणं विकर्षणं च कर्त्तव्यम्। पौर्णमासीवत् । यथा, य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इति आग्नेयादय एव क्रियन्ते, नार्थान्तरं किञ्चित्। एवमिहापीति ॥ २६ ॥ पूर्व० ॥

## अग्नेर्वा स्याद् द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥

वाशब्दात् पक्षो विपरिवर्त्तते। नैतदस्ति, प्रतीष्टकं कर्त्तव्यमिति। कथन्तर्हि। सकृदेवेति। तत एतद् वर्ण्यते, द्रव्यान्तरमिष्टकाभिः क्रियते। तत्राग्निर्निधातव्य ।तत्र चाग्निशब्दो वर्त्तते इति।कथम्। परार्थेनेष्टकानां निर्देशात्। इष्टकाभिरग्निं चिनुते इति तृतीयया विभक्त्या

पारार्थ्यमिष्टकानामवगम्यते । यदि चयनमात्रमत्रोच्यते, तदिष्टका-संस्कारार्थमवगम्यते । तत्र द्वितीयया विभक्त्या संयोगः स्यात् । तृतीयया संयोगो बाध्येत । तस्मादिष्टकाभिरन्यत् क्रियते । तत्राग्नि-र्निधातव्यः । तदर्था इष्टकाश्चयनं वेति ॥ आह । नन्वेतदुक्तं, तस्या-भावादयमन्य. पक्षः परिगृह्यते इति । अत्रोच्यते । नाभाव. । प्रत्यक्षा तत्रैकबुद्धि. । सा बह्वीष्विष्टकासु नावकल्पते । न चावयवसन्धि-र्दृश्यते पुरीषच्छन्नानाम् । तस्मात् पक्वानामसंयोगेऽप्येकबुद्धेरुत्पादा-देकमिष्टकाभ्यो व्यतिरिक्तं द्रव्यमग्निनिधानार्थमस्ति । यदि वा इष्ट-कासंस्यूतिरप्येकबुद्धेरेवावगम्यते । यत्तु एकाकर्षणेन कृत्स्नाकर्ष-णमिति । सत्यं, संस्यूतौ तत्र विच्छेदः क्रियते । द्विविधानि हि द्रव्या-णि, स्थावराणि जङ्गमानि च । तत्र स्थावरेषु विच्छेदो भवति । य-था,वनस्पतौ पर्णे गृहीत्वा कृष्यमाणे न कृत्स्नः कृष्यते, स्थावर-त्वात् । एवमिदमपि स्थावरं हीदमग्निद्रव्यम् । तस्मात् सकृदेव प्रो-क्षणं विकर्षणञ्च कर्त्तव्यमिति ॥ २७ ॥ सि० ॥

## चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात् ॥ २८॥

अथ यदुक्तं, य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमा-वास्यां यजते इति । नात्र आग्नेयादिभ्यः किञ्चिदर्थान्तरम् । तथेहा-ऽपीति । उच्यते । युक्तं पौर्णमास्यां तथाभावः । चोदनासमुदायो हि तत्र कर्म । न च कर्मसाध्यं विद्यते । इह तु द्रव्यान्तरमस्तीत्युक्तम् । तस्माद्वैषम्यं पौर्णमास्येति ॥ २८ ॥ आ० नि० ॥ इष्टकासु सकृद्वि-कर्षणाद्यनुष्ठानाधिकरणम् ॥ ७ ॥

## पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥

अस्ति अहर्गणः, द्वादशाहेन प्रजाकामं याजयेदिति । तत्र श्रूय-ते । पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति । तत्रायमर्थः सांश-यिकः । किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम् ? उत प्रागुत्तमादिति । दशमं वर्जयित्वा सन्देहः क्रियते । तस्य हि मानसान्तता वचनेनो-क्ता । किं तावत् प्राप्तम् । सर्वेषामह्नामिति । कुत. ? । अविशेषात् । अविशेषेणोच्यते, पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति । न च कश्चिद्विशेष आश्रीयते । तस्मात् सर्वेषामिति ॥ २९ ॥ पूर्व० ॥

## लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥

वाशब्दः पक्षव्यावृत्तौ । प्रागुत्तमादह्नः पत्नीसंयाजान्तता स्यात् । कुतः । लिङ्गात् । लिङ्गं भवति । पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते, न बर्हिरनुप्रहरति, असंस्थितो हि तर्हि यज्ञ इति । यस्मिन्नहन्यसंस्थितो यज्ञस्तस्मिन् पत्नीसंयाजान्ततां दर्शयति । कथम् । हेत्वर्थेन असंस्था निर्दिश्यते । यस्मादिमानि असंस्थितानि अहानि, तस्मादेषु पत्नीसंयाजान्ततेति । संस्थितिश्चान्त्येऽहनि । अपिच, येषु अहःसु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते कीर्त्यमाना । तस्मादसंस्थायाः पत्नीसंयाजान्ततायाश्च सामानाधिकरण्यम् । असंस्थाञ्च प्रागुत्तमाद् दृष्ट्वा, प्रागुत्तमादेव पत्नीसंयाजान्ततामध्यवस्यामः ॥ ३० ॥ सि० ॥

## अनुवादो वा दीक्षा यथा नक्तसंस्थापनस्य ॥ ३१ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, प्रागुत्तमात् पत्नीसंयाजान्तता स्यादिति । किन्तर्हि । सर्वेषामविशेषात् । यदुक्तं, येषु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते । तस्मादसंस्थायाः प्रागुत्तमादह्नः पत्नीसंयाजान्ततां नियच्छाम इति । नैतदेवम् । न हीदं विधिमूलं दर्शनम् । नान्यप्रमाणमूलम् । अतो मृगतृष्णारूपमेतद्दर्शनम् ॥ यदप्यसंस्था हेतुरिति, तदपि न स्यात् । उक्तं हि— स्तुतिस्तु शब्दपूर्वत्वाद् इति । न च सामानाधिकरण्यमसंस्थापत्नीसंयाजान्ततयोः । पत्नीसंयाजान्तता सर्वेषामह्नां शब्देन गम्यते । असंस्था पुनर्न्यायेन प्रागुत्तमादह्नः । यदेतदसंस्थितो हि तर्हि यज्ञ इति । अर्थवाद एष पत्नीसंयाजान्ततास्तुत्यर्थः । तथाहि । असंस्थितो यज्ञश्चिरेण संस्थास्यते इत्यालोच्यते । यस्माच्चिरेण संस्थास्यते तस्मादवलुप्यतां, पत्नीसंयाजान्तानि अहानि भवन्त्विति । सन्तिष्ठमानेष्वेवाऽहःसु असंस्थावचनं पत्नीसंयाजान्तताप्रशंसार्थम् । संस्थावन्ति हि तानि अहानि । अवभृथादय एषां शेषाः पदार्थाः करिष्यन्ते । यथा दीक्षोन्मोचनवचनं नक्तसंस्थापनस्यार्थवादः । एवमेतद् द्रष्टव्यम् । वरुणपाशाभ्यां वा एषो निधीयते यो दीक्षितोऽहोरात्रे वै वरुणपाशौ यद्दिवा संस्थापयेद् अनुन्मुक्तो वरुणपाशाभ्यां स्यात् । नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते आत्मनो हिंसाया इति । अनुन्मुक्तः स वरुणपाशाभ्यां, न तावद्दीक्षया मुच्यते । अवभृथो हि

दीक्षोन्मोचनार्थं । अथवा । उच्यते । वरुणपाशाभ्यामिव निर्मुच्यत इति बहवो नियमास्तदानीं विसृज्यन्ते, यानालोच्य एष वादो भवति । एवमिहापि चिरेण संस्थामालोच्य असंस्थितवचनं भवतीति ॥ ३१ ॥ आ० ॥

**स्याद्वाऽनारभ्यविधानादन्ते लिङ्गविरोधात् ॥ ३२॥**

वाशब्दात् पक्षो विपरिवर्त्तते । भवेद्वा प्रागुत्तमात् पत्नीसंयाजान्तता । न हि आरभ्य उत्तममह, एष विधीयते । कथन्तर्हि । सामान्येन पत्नीसंयाजान्तानि अहानि भवन्तीति । तत्रान्ते लिङ्गविरोधो भवति । का पुनर्न्यायेन प्राप्तिरिति । पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति । तेनैतदुक्तं भवति, शिष्टमवलुप्यते इति । सन्तिष्ठन्ते नानुष्ठीयन्त इति । कर्त्तुर्व्यापार एषु उपरमतीति । तेषु सहक्रियमाणेषु अहःसु अवश्यं कस्मिंश्चित् पदार्थे अवस्थाय अवश्यमपरस्य अहः पदार्था अनुष्ठातव्याः । तद्वानियमे प्राप्ते पत्नीसंयाजान्ते संस्थातव्यमिति नियम्यते । तस्यावस्थानस्यैतत् प्रयोजनम् कथमहरन्तरस्य पदार्थानुष्ठानेन यौगपद्यमनुगृह्येतेति । एतद्धि दृष्टमवस्थानकार्य्यम् । यस्मिन्नैतद् दृष्टं, न शक्यं कल्पयितुं तत्रादृष्टम् । तत्र न पत्नीसंयाजान्तता । तच्चान्त्यस्य प्रयोजनं न विद्यते । तस्मात् प्रागन्त्यात् पत्नीसंयाजान्ततेति न्यायेन प्राप्ते लिङ्गदर्शनम्, असंस्थितो हि तर्हि यज्ञ इति ॥ ३२ ॥ आ० नि० ॥ उत्तमान्यानामह्नां पत्नीसंयाजासंस्थाधिकरणम् ॥ ८ ॥

**अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात् ॥ ३३ ॥**

स्तो दर्शपूर्णमासौ । तत्र सामिधेनीः प्रकृत्य उच्यते, त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेति । तत्रैषोऽर्थं सांशयिक । किम् ऋग्धर्म एषः, यत्र तत्रस्था प्र वो वाजा त्रिरभ्यसितव्या ? उत स्थानधर्मः, या अन्याऽपि प्रथममुच्यते सा त्रिरभ्यसितव्या ? इति । कुत संशय. । उभयथोपपत्तेः । यद्येवमभिसम्बन्धः क्रियते, या असौ उच्चारितानां सामिधेनीनां प्रथममुच्चारिता, सा त्रिरभ्यसितव्येति । ततः प्र वो वाजाया ऋचो धर्मः । अथैवं विज्ञायते, प्राथम्यसंयुक्तं त्रिर्ब्रूयादिति, ततो वचनस्य स्थानधर्मता ॥

किं तावत् प्राप्तम् । ऋचो धर्म इति । कुतः । प्राथम्यस्य व्यक्त्या सम्बन्धात् । व्यक्तेरभ्यासेन । कथमवगम्यते । स्त्रीलिङ्गनिर्देशात् । व्यक्तिविशेषो हि स्त्री नाम । यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेषनिर्देशोऽवकल्पते । साऽपि स्त्री अभ्यासेन सम्भन्त्स्यते । अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति ततो व्यक्तिविशेषो न विवक्ष्येत । तत्र स्त्रीलिङ्गविशेषनिर्देशो नोपपद्यते । अपि च वाक्यभेदः प्रसज्ज्येत । प्रथममुक्तं त्रिरभ्यसितव्यं, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति । मत्पक्षे पुन प्राथम्यलक्षिताया ऋचो धर्म उच्यते । तत्रैकार्थविधाने न भवेद्वाक्यभेदः । अपिच श्रुत्या प्राथम्येन स्त्री सम्बद्ध्यते । वाक्येनाभ्यास । तस्माद् ऋग्धर्मो यत्र तत्रस्था प्र वो वाजा त्रिरभ्यसितव्येति ॥ एवं प्राप्ते ब्रूम । योऽयं सामिधेनीनां प्रथमायास्त्रिरभ्यास उच्यते स प्रथमस्थाननिमित्तो धर्मो, न ऋच कस्याश्चिज्जातिनिमित्तः । कुतः ? । न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचिद् ऋग् विद्यते, या त्रिरभ्यस्येत । तत्र प्राथम्यम् ऋग्लक्षणार्थं स्यात् । इतरस्मिन् पक्षे श्रुतिर्न लक्षणा । श्रुतिश्च ज्यायसी लक्षणायाः । तस्मादस्मत्पक्षः ॥ अथ यदुक्तं, स्त्रीलिङ्गसम्बन्धादस्मत्पक्ष एव श्रुतिः, वाक्यं च न भिद्यते । स्त्रीलिङ्गोपपत्तेश्चेति ॥

अत्रोच्यते । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीत्यविशेष्यमाणायामपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गं, तद् आश्रयभूतं गुणस्य भवति । अविधित्सितेऽपि तस्मिँल्लिङ्गविशेषनिर्देशोऽनुवादभूतो भवत्येव । यथा, शुक्ल पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम् । शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति । शुक्लां शाटीमानयेति । यद्यपि शाट्याद्यानयनं न विधीयते, शुक्लसम्बन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते । तथापि अनुवादभूतः स्त्रीलिङ्गनिर्देशो भवत्येव । शुक्लामानयेति । अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति । एवञ्च सति, यद्यपि प्राथम्यस्य स्त्रीलिङ्गसम्बन्धः श्रौतस्तथापि प्राथम्यस्यैवाभ्यासेन सम्बन्धो न लिङ्गस्य । यदि लिङ्गस्यैतेन सम्बन्धोऽभिधीयते, प्राथम्यस्यानुवादता कल्प्येत । प्राथम्यसम्बन्धेऽप्यभिधीयमाने वाक्यं भिद्येत । अपि च, नैवात्र विवदितव्यम् । प्रातिपदिकविशेषणं हि स्त्रीशब्दः । स्त्रियां यत् प्रातिपदिकं वर्त्तते, ततष्टाबादय इति । न विशेषणस्य पदान्तरेण सम्बन्धो

भवति । यथा राजपुरुषो गच्छतीति । यदा तु प्राथम्यस्याभ्यासेन सम्बन्ध , तत्र प्राप्तमनूद्यते स्त्रीत्वम् । यानि सामिधेनीषु वचनानि, ऋचस्ताः । स्त्रीलिङ्गश्च ऋक्शब्दः । तत्र यत् प्रथमं वचनं, तस्याश्च ऋक् । गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीत्यविशेषितायामप्यृचि स्त्रीलिङ्गं भविष्यतीति । यत् प्रथमवचनं, तत् त्रिराहेति । स्त्री च सा ऋक् सामिधेनी । तस्मात् त्रिः प्रथमामन्वाहेति प्राप्तस्य लिङ्गस्यानुवादः । त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते इति पञ्चदशानां सामिधेनीनां सम्पत्तये त्रिर्वचनमुच्यमानं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य । परिपूर्णा च समिन्धनवती न ऋगवयव । तस्मात् प्राप्तानुवादो लिङ्गस्येति प्राथम्यस्य धर्मो न ऋच ॥ ३३ ॥ सिद्धान्त ॥ त्रि. प्रथमामन्वाहेत्यादिषु स्थानधर्मताधिकरणम् ॥ ९ ॥

## इष्टयावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया ॥ ३४ ॥

स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्रारम्भणीया इष्टिः समाम्नाता । आग्नावैष्णवमेकादशकपालं निर्वपेत् सरस्वत्यै चरुं सरस्वते द्वादशकपालमग्नये भगिनेऽष्टाकपालं निर्वपेद् यः कामयेतान्नाद्यः स्यामिति नित्यवदेके भगिनमामनन्ति । आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तत्रेष्टयावृत्तौ सन्देहः । किमारम्भणीयाऽप्यावर्त्तते, न ? इति । किं प्राप्तम् । आवर्त्तेतेति । असकृदेव कर्त्तव्येति । कुतः । एवं प्रयोगवचनोऽगृहीतो भविष्यति । प्रयाजवत् । यथाऽङ्गभूताः प्रयाजा आवर्त्तन्ते, एवमङ्गभूता आरम्भणीयाऽप्यावर्त्तेत ॥ ३४ ॥ पूर्व० ॥

## सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, यदुक्तमारम्भणीया आवर्त्तेतेति । सकृदेव कर्त्तव्या । कुतः । आरम्भसंयोगात् । दर्शपूर्णमासयोरारम्भेण संयुज्यते । साधारणश्च सर्वेषां प्रयोगाणामारम्भ. । कथम् । अग्नीनाधाय सर्वं. सङ्कल्पयति । पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्त्तव्याविति । एवञ्च अध्यवसाय दर्शपूर्णमासौ कर्त्तव्याविति, आरम्भणीया क्रियते । एष एवास्य आरम्भो यदध्यवसानं

नाम । तच्च साधारणं सर्वेषां प्रयोगाणाम् । यावज्जीवप्रयोगात् । अथापि प्रथमं प्रवर्त्तनमारम्भस्तथापि प्रथमप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्ति । तस्मात् सकृदारम्भणीया कर्त्तव्येति ॥ ३५ ॥ ॥ ॥ सिद्धान्त. ॥ यावज्जीवदर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम् ॥ १० ॥

एवं वा —

## इष्ट्यावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया ॥ ३४ ॥

यस्तु प्रथम. पदार्थ आरम्भ इति, तत्रैष संशयः । किं दर्शपूर्णमासयोरारभ्यमाणयोरारम्भणीया प्रथमं पदार्थं सम्यञ्चं करोति, उत पुरुषस्यारभमाणस्य प्रथमं दर्शपूर्णमासयो' प्रवर्त्तमानस्यारम्भणीया कर्त्तारमारम्भणयोग्यं करोति ? । किं प्राप्तम् । दर्शपूर्णमासयो· प्रकरणात् तयोरारम्भे स्यात् । पुरुषसम्बन्धे फलं कल्पयितव्यम् । तस्माद्दर्शपूर्णमासारम्भे । एवञ्चेद् आरम्भभेदादिष्ट्यावृत्तौ प्रत्यारम्भं स्यात् । यथा प्रयोगावृत्तौ प्रयाजाः ॥ ३४ ॥ पूर्व० ॥

## सकृद्वाऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

सकृद्वा भवितुमर्हति । कुतः । पुरुषारम्भसंयोगात् । पुरुषे दर्शपूर्णमासावारभमाणे विधीयते । कुतः । निर्वपेदिति हि श्रुत्या कर्त्तृसम्बन्ध. क्रियते, तत्र पुरुषप्रयत्नवचनं विवक्षितस्वार्थं भवति । इतरथा पदार्थमात्रे विधित्सितं कर्त्तुः प्रयत्नवचनमविक्षितं स्यात् । प्रयोगवचनप्राप्तमेवानूद्यते । यत्तु, कर्त्तृसम्बन्धे फलं कल्पयितव्यम्। तन्न कल्पयिष्यते । कृतारम्भणीयाकः पुरुष प्रयोगवचनेन ग्रहीष्यते । एवञ्चेदेकस्मिन्नेव आरम्भे कृतारम्भणीयाके कृते पुरुषे तत्र प्रयोगाद् यावज्जीवं प्रयोगे कृतारम्भणीयाक· पुरुषो भवति । प्रथमं दर्शपूर्णमासौ आरभमाण· कृतारम्भणीयाको जात. । द्वितीयादिष्वपि प्रयोगेषु दर्शपूर्णमासौ आरप्स्यमानः कृतारम्भणीयाको जात इति योग्य एव भविष्यति ॥ अथोच्यते, समानेऽहनि आरप्स्यमान इति भवति । न च द्वितीयादिषु प्रयोगेषु समानेऽहनि कृतारम्भणीयाकोऽसाविति । अत्रोच्यते । द्वितीयादिष्वपि प्रयोगेषु समाने एव अहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतारम्भणीयाको जात

इति योग्य एव भविष्यति ॥ ३५ ॥ सिद्धान्तः ॥ आरम्भणीयेष्टेः पुरुषसंस्कारताधिकरणम् ॥ १० ॥

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राऽचोदितप्राप्तश्चोदिताभिधानात् ॥ ३६ ॥**

स्तो दर्शपूर्णमासौ। तत्र निर्वापमन्त्रः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति । तत्रैषोऽर्थः सांशयिकः । किं सवित्रश्विपूषशब्दानां विकृतौ ऊहः, उत अनूह इति । तत एतत्तावत् परीक्ष्यते । कर्मणि समवेतमर्थमेते शब्दा अभिदधति, उतासमवेतमिति । यदि समवेतमूहिष्यन्ते । अथासमवेतम् । अविकृताः प्रयोक्ष्यन्ते । तदुभयमपि सह परीक्ष्यते । किं तावन्नः प्रतिभाति। तत्र समवेतमभिवदन्तीति । कुतः । एतद्धि मन्त्रपदानां दृष्टं प्रयोजनं, यत् समवेतमर्थं प्रकाशयन्तीति । तत्रासमवेतार्थप्रकाशने न किञ्चिदपि दृष्टं प्रयोजनम् । समवेतानान्तु प्रकाशने दृष्टमस्ति। तद्यदि समवेताभिधायिन एते शब्दास्ततः प्रयोजवन्तः। कथं पुनः समवेताभिधायिनः । यदि नाम सवित्रादयः शब्दा अग्न्यादीनां वाचका भवेयुः, यदि वा सवित्रादयो देवताविशेषा दर्शपूर्णमासयोः स्युः, तन्मन्त्रपदानामदृष्टार्थता मा भूदित्यन्यतरदध्यवसीयते। मान्त्रवर्णिको वा देवताविधिः । सवित्रादयो वा शब्दा अग्न्यादीनां वाचका भवेयुः । तस्मादर्थवत्त्वादन्यतरदध्यवसेयम् ॥ अत्राह। ननु अग्नये जुष्टमित्यत्रावयवभूताः सवित्रादयोऽग्न्यादीनां वचना अपि सन्तोऽग्न्यादिभिः प्रकाशिताया देवताया न किञ्चिदप्यधिकं कुर्य्युः । नो खल्वपि सवित्रादिवचना एव मान्त्रवर्णिकाः शक्नुवन्त्युपकर्त्तुम् । अत्रोच्यते । पृथग्वाक्यानि एतानि भविष्यन्ति। तेषां, जुष्टन्निर्वपामीति साधारणोऽनुषङ्गः । तानि वाक्यानि दर्शपूर्णमासयोर्गुणभूतानि । यद्येतद्दैवत्यानि अत्र हवींषि विद्यन्ते, ततोऽवकल्पन्ते, इत्यर्थापत्त्या मान्त्रवर्णिक्यो देवता विधीयन्ते । अग्न्यादिवचनं तावत् सवित्रादीनाम् । पृथग्वाक्यानि वा अग्निवाक्येन वैकल्पिकानीति ॥ एवं प्राप्ते ब्रूमः । नैवमादीनि ऊहितव्यानीति । अचोदित ऊहो न प्राप्नोति । चोदिताभिधानान्मन्त्रस्येति । तत एतद्वर्ण्यते । असमवेताभिधायिनः सवित्रादय इति कथम् । न ह्यत्र

सवित्रादिदेवत्यं कर्म्म चोद्यते। न च अग्न्यादीनामर्थेषु सवित्रादयः शब्दा प्रसिद्धा ॥ अत्राह । नन्वर्थापत्त्या अन्यतरदध्यवसीयेतेत्युक्तम् । सति एतद्देवत्ये कर्म्मणि सवित्रादिवाक्यानि उपपद्यन्ते। अग्निवचनत्वे वा सति, या हविषो देवता, सा मन्त्रवचनेन प्रकाशयितव्या । सवित्रादयश्च शब्दा निर्वापवाक्ये प्रकाशनार्थाः । ते हविर्द्देवतां प्रकाशयन्त उपपद्यन्ते, नान्यथेति । अग्न्यादयश्च हविर्देवता इति तद्वचना इत्यध्यवसीयते। अत्रोच्यते । यदि अकल्प्यमाने आनर्थक्यमेषां स्यात्ततोऽन्यतरत् कल्प्येत । अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावो भवतीति। न त्वेवमकल्प्यमानेऽप्यानर्थक्यम्। तस्माद्म अन्यतरस्यापि कल्पने किञ्चिदस्ति प्रमाणम् । न च चोद्यन्ते एतच्छब्दिका देवता । तत्राचोदितमप्राप्तमूहं चोदिताभिधानात् ॥ ३६ ॥ सि० ॥

अथ यदुक्तं, प्रत्यायकेन शब्देन प्रकाश्यन्तेऽत्र देवताः। तत्राऽप्यश्रुतानां प्रकाशने न किञ्चिदस्ति प्रयोजनमिति । तत् परिहर्त्तव्यम् । अत्रोच्यते—

## ततश्चावचनं तेषामितरार्थं प्रयुज्यते ॥ ३७ ॥

ततश्च तेन कारणेन अश्रुतानां वचनं न क्रियते, सवित्रादिभिः शब्दैः। केन तर्हि कारणेन क्रियते । इतरार्थं प्रयुज्यते । निर्वापस्तुत्यर्थम् । देवस्य सवितुः प्रसवे देवेन सवित्रा यजमानेन प्रसूते, उदिते वा सवितरि, अश्विनोर्बाहुभ्यां परिक्रयमभिप्रेत्य यजमानयोर्दम्पत्योर्बाहुभ्याम्, अश्विनौ हि तौ अग्न्याधेये अश्वदानेन आशितवन्तौ वा तद्यज्ञफलमश्नुवाते । तद्बाहू इति स्वौ बाहू व्यपदिशति। देवताध्वर्य्वोर्वा अश्विनोरेतौ बाहू इति। पूषणन्तु यजमानमेव मन्यते पुष्णाति । एवं सर्वे निर्वापविशेषप्रकाशनार्थाः ॥ अत्राह। कस्माद् न उत्कृष्टाः सवित्रादयः शब्दा प्रकरणान्तरे सवितारमश्विनौ पूषणञ्चाभिवदन्ति ? । लिङ्गेन तत उत्कृष्यमाणाः प्रकरणं बाधितुमर्हन्ति। अत्रोच्यते। सवित्रादयः परविशेषणं विभक्तिश्रुत्या क्रियन्ते। प्रातिपदिकार्थस्तु अव्यतिरिक्त इति गम्यते। तत्र लिङ्गं श्रुत्या बाध्यते। लिङ्गं हि प्रातिपदिकार्थप्रकाशनं देवतार्थमिति कृत्वा इह देवताभावाद् यत्र देवता तत्रोत्कर्षति । विभक्तिश्रुतिस्तु प्राति-

पदिकाऽर्थे पदार्थान्तरविशेषणं ज्ञापयति । तच्चेहास्ति पदान्तरम् । श्रुतिश्च लिङ्गाद् बलीयसी । तस्मान्नोत्कर्षः ॥ आह । यदा सवित्रादयो यजमानपराः, तदा सत्रे कथमनूह इति । उच्यते । जोषणार्थमिदं वाक्यं, नानुज्ञापनार्थम् । अजोषितस्य जोषणं कर्त्तव्यम् । तत्र दृष्टोऽर्थः । अनुज्ञापनं पूर्वं वृणानेन कृतं, तददृष्टार्थमापद्येत । अपि च । जुष्टं निर्वपामीति जोषणकरणं निर्वपामीति भावशब्देनोच्यते । सवितुः प्रसवे इत्यनुज्ञानिर्वृत्तापरविशेषणार्थं कीर्त्यते । अननुज्ञातमपि निर्वपणं शब्दार्थं कुर्य्यादेव, न त्वजोषितेन यागः श्रूयते । तस्माज्जोषणार्थत्वात् परार्थाः सवित्रादयः शब्दा नोहिष्यन्ते इति ॥ ॥३७॥आ०नि०॥ निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम्॥११॥

## गुणशब्दस्तथेतिचेत् ॥ ३८ ॥

तस्मिन्नेव वाक्ये दर्शपूर्णमासयोः, अग्नये जुष्टं निर्वपामीति समाम्नायते । तत्रायमर्थः सांशयिकः । किमग्निशब्दोऽपि विकृतौ नोह्यते, सोऽपि न समवेतवचनः । उत ऊहितव्यः, समवेतवचनो हि सः ? इति । किं प्राप्तम् । एवं चेत्तत्र संशयः, सोऽपि गुणशब्दस्तथैवासमवेतवचनः कुतः । सवित्रादयोऽस्मिन् वाक्येऽसमवेतवचनाः । यद्यग्निशब्दोऽपि असमवेतवचन, एवमवैलक्षण्यं भविष्यति । अवैलक्षण्यञ्च न्याय्यम् । यदि समानं कारणं, तेन न्यायेन अवैलक्षण्यमुच्यते । समानञ्च इह कारणं, य एषां शब्दानामर्थः, स इह प्रयोगे नास्तीति । अग्नये जुष्टं निर्वपामीत्यस्यापि योऽर्थः, स इह नास्ति । अग्नये जुष्टं निर्वपामीत्यनेन जुष्टस्य निर्वाप उच्यते । न चेह जुष्टस्य निर्वापोऽस्ति । अजुष्टं चेह निर्वप्तव्यम् । निर्वापेणैव तज्जोष्यते । तस्मान्न समवेतवचनः । तस्याप्यश्रुतार्थस्य वचनमुत्तरार्थं प्रयुज्येत निर्वापस्तुत्यर्थेनेति । तस्मादेतदपि विकृतौ नोहितव्यमिति ॥ ३८ ॥ पूर्व० ॥

## न समवायात् ॥ ३९ ॥

नैतदेवम्, समवेतवचनो हि अग्नये जुष्टं निर्वपामीति । नन्वेतदुक्तं, जुष्टस्यात्र निर्वाप उच्यते । नच जुष्टं निर्वप्तव्यमिति । अत्रोच्यते । नैव जुष्टस्य निर्वाप एतेन वाक्येनोच्यते । किन्तर्हि । निर्वापेण जुष्टकरणम् । अग्नये जुष्टं करोमीति । एवं हि दृष्टार्थं भवतीति । अतोऽतुल्यकारणत्वाद् वैलक्षण्यमेव न्याय्यम् । तस्मात् समवेत-

वचनोऽग्निशब्द ऊहितव्यश्च विकृताविति ॥ ३९ ॥ सिद्धान्तः ॥ अग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम् ॥ १२ ॥

एवं वा—

## गुणशब्दस्तथेति चेत् ॥ ३८ ॥

दर्शपूर्णमासयोरामनन्ति, धान्यमसि धिनुहि देवानिति दृषदि आवपतीति ॥ तत्र धान्यशब्दं प्रति संशयः किं समवेतवचनः, न वा ? इति । किं प्राप्तम् । योऽयं गुणवचनशब्द इव लक्ष्यते धान्यशब्दः, नासौ समवेतवचनः स्यात् । धान्यशब्दो हि धान्यमभिवदति, न तु धान्यमोप्यते । सतुषे हि धान्यशब्दो वर्त्तते । तण्डुलेष्वेव ओप्यमानेषु धान्यप्रकाशनं क्रियते । तद् असमवेतस्य प्रकाशने अदृष्टं यथा स्यादिति । तस्मादविकृतिषु नोहितव्यमिति ॥ ३८ ॥ पूर्व० ॥

## न समवायात् ॥ ३९ ॥

नैतदेवम् । समवेतो हि धान्यशब्दार्थः । स हि तण्डुलेषु वर्त्तते । तद्विकारत्वाल्लक्षणया । यथा काशिकेषु शालयो भुज्यन्ते, गाव. पीयन्ते इति श्रुत्युपादानेऽदृष्ट कल्पयितव्यमिति लक्षणाशब्दः परिकल्प्यते । तस्मात् समवेतवचनः । विकारे च ऊहितव्य इति ॥ प्रयोजनमस्ति। शाक्यानामयनं षट्त्रिंशत्संवत्सरम् । तत्रेद समाम्नायते। संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीया पुरोडाशा भवन्तीति। तत्राविकारेण धान्यमसि धिनुहि देवानिति प्रयोग. कर्त्तव्य. । यथा पूर्वः पक्षः । यथा सिद्धान्तः । ऊहः कर्त्तव्य । मांसमसि धिनुहि देवानिति ॥ ३९॥ सिद्धान्तः॥ तण्डुलावापमन्त्रे धान्यशब्दस्योहाधिकरणम्॥१२॥

## चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ४० ॥

स्तो दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र इडानिगद, इडोपहूता इत्येवमादिः । तत्रेदमाम्नायते । दैव्या अध्वर्य्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्द्धानिति । तत्रायमर्थः सांशयिकः । किं बहुयजमानके यज्ञपतिशब्द ऊहितव्यः ? उताविकारेण प्रयोक्तव्य इति ॥ तत्रेदं तावत् परीक्ष्यते । किं समवेतवचनो यज्ञपतिशब्द, उतासमवेतवचन इति । कथं समवेतवचनः । यदि यज्ञपतिवृद्धिवचनं यज्ञपतेरुपकारकं,तत सम-

वेताभिधायी । अथैतत् स्तुत्यर्थं, ततो न समवेताभिधायी ॥ किं प्राप्तम् । ऊहितव्यः, समवेताभिधायी । कथम् । यज्ञपतिवृद्धिवचनाद् यज्ञपतयः प्रोत्सहन्ते । इडापदानपेक्षैश्च पदैर्यज्ञपतिवृद्धिरभिधीयते । तस्मान्मुख्यः प्रत्ययः । इडास्तुतौ जघन्यः । तस्मादर्थविप्रकर्षाच्च इडास्तुतिः । अतो यज्ञपतिशब्द ऊहितव्यः । यस्यैव वृद्धिर्नोच्यते, स एवोत्साहसंस्कारेण संस्कृतो न स्यात् । तस्मात् सर्वे वृद्धिसंस्कारार्थं वदितव्याः । सर्वेषु वदितव्येषु बहुवचनम् ॥ एवं प्राप्ते ब्रूमः । चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् । चोदितमपि यत् समवेतं परार्थं चिकीर्ष्यते न स्वसंस्कारार्थं, तदप्यविकारेण प्रयुज्यते । तद् नोहितव्यं स्यात् । परार्थत्वात् । अत्र हि यज्ञपतिवचनं वृद्धिविशेषणार्थं, वृद्धिवचनञ्च इडास्तुत्यर्थम् । कथमवगम्यते । इडोपह्वानेनैकवाक्यत्वात् । इडाप्रकरणाच्च ।

अथ यदुक्तं— गम्यते, इडापदानपेक्षं यज्ञपतिवृद्धिवचनं तेषामुत्साहकम् । उपहूता मनुष्या ये यज्ञपतिं वर्द्धयेयुरिति । अत्रोच्यते । स यो हैवं विद्वानिडया चरतीत्यभिधाय, अथ प्रतिपद्यते इडोपहूतोपहूतेडोपास्मा इडा ह्वयामि इडोपहूता इत्याह । तेनावगम्यते, यस्यैष आरम्भ स इडाया मन्त्र इति । तन्मध्यपतितश्च उपहूता मनुष्या इत्येवमादि', यज्ञपतिं वर्द्धान् इत्यन्तः । तस्मादिडामुपह्वातुं वदितव्य इति वाक्यादवगम्यते । समर्थश्च इडोपह्वाने । यजमानन्तु प्रोत्साहयितुं वदितव्य इति नास्ति वाक्यम् । केवलं वदितुं सामर्थ्यमस्ति । न च सामर्थ्यमात्रेण वाक्यादृते विनियोगा भवन्ति । इडाप्रकरणं चैवमनुगृहीतं भविष्यतीति । इडया च सहैकवाक्यता । तस्मादियं वचनव्यक्तिः, उपहूता मनुष्या ये यज्ञपतिं वर्द्धयितुं समर्था इति । तत्र यज्ञपतिविशिष्टा वृद्धिर्वक्तव्येति । एकस्मिन्नपि यजमाने कीर्त्तिते भवति विशेषणकार्य्यम् । तस्माद् अविकारः स्याद् विधिवत् । यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येनकेनचिद् यजमानेन स विधिः सिद्ध्यति । यथा, यजमानसम्मितौदुम्बरी भवति । शुक्रं यजमानोऽन्वारभते इति ॥ ४० ॥ इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम् ॥ १३ ॥

## विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

अस्ति दर्शपूर्णमासयोः सूक्तवाकः । सूक्तवाकेन प्रस्तरं प्रहरतीति । तत्रेदं समाम्नायते । अयं यजमान आयुराशास्ते इति । तत्रायमर्थः सांशयिकः । किं बहुकर्तृके विकारे यजमानशब्द ऊहितव्यः, उत नेति । किं प्राप्तम् । अविकारेण प्रयोक्तव्यः । तथा सामर्थ्यमनुगृह्यते । न चायं समवेतवचनः । परार्थेन हि अत्र यजमान आयुराशास्ते इति आयुराशासनेन यजमानस्य न कश्चिद् दृष्टोऽर्थः सञ्जन्यते। तस्माद् आयुराशासनमदृष्टार्थम् । यजमानविशिष्टा आशीरेकेनापि यजमानेन कीर्त्तितेन यथा श्रुता, तथा कृता भवति । यथा यजमानेन सम्मितौदुम्बरी भवतीति । तथैतत् । तस्मादविकारेण प्रयोक्तव्यमिति ॥ एवं प्राप्ते ब्रूमः । विकारे स्यादूहः । तत्प्रधाने यजमानप्रधाने। कथं यजमानप्राधान्यम् । एवं श्रूयते । सूक्तवाकेन प्रस्तरं प्रहरतीति। यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं तत्फलं वा प्रकाशयति। ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति । प्रहरणफलमायुराशासनं कल्पितम् । यजमान आयुराशास्ते, एतेन कर्मणेति यजमानेन प्रस्तरः प्रहृतो भवति । तत्र य एव यजमानः फलं प्रति प्रधानभूतो न सङ्कीर्त्येत, तेन न प्रहृतं स्यात् । तस्मात् सर्वे समवेताः सङ्कीर्त्तयितव्याः । सर्वेषु च कीर्त्यमानेषु बहुवचनं भवति । तस्मादूहो यजमानस्येति ॥ ॥ ४१ ॥ प्रहरणकरणसूक्तवाके यजमानशब्दस्यऊहाधिकरणम् ॥१४॥

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥

अस्ति ज्योतिष्टोमः । तत्र सुब्रह्मण्यानिगदः समाम्नातः । इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष इत्येवमादि । अग्निष्टुति च श्रूयते । आग्नेयी सुब्रह्मण्या भवतीति । तत्रेन्द्रशब्दस्य स्थाने ऊहः क्रियते । अथेदानीं हरिव आगच्छ इत्येवमादिषु संशयः । ऊहितव्यं, न ? इति । किं प्राप्तम् । तद्विशिष्टं प्रतीयेत । तेन विशिष्टम् । इन्द्रपदस्थाने ऊहः । एतेन विशेषेण विशिष्टमविकृतमेव वचनं प्रतीयेत । कुतः । असंयोगात् तदर्थेषु । नैषां शब्दानां तेष्वर्थेषु संयोगः, हरिवत्त्वादिषु, न हरिवदादयः समवेता इन्द्रे विद्यन्ते गुणाः । प्रमाणाभावात् । अविद्यमानास्तस्योच्यन्ते । एवं श्रुत्या अर्थः प्रतिज्ञातो भवति । इतरथा लक्षणा स्यात् । न हरिवत्त्वादय उच्येरन् । हरिवत्त्वादिभिः सोऽस्य गुणो लक्ष्यते । अथाऽसमवेतवचना मुख्यार्था एव भवि-

ष्यन्ति, आत्मीयं गुणं न लक्षयिष्यन्तीत्युच्येत । तथा अस्मत्पक्ष एव। तस्माददृष्टार्थं गुण उच्यत इति अविकारेण प्रयोगः स्यात् । तत्रैवं वचनव्यक्तिर्भवति । इन्द्र आगच्छ हरिव आगच्छ इति हरिवदादीन् अस्य गुणानारोपयति । हरिवदादिभिः सम्बद्ध्यमान इन्द्रोऽभ्युदयकारी भवति । शक्यते चाग्निरपि तैः सम्बन्धयितुम् । तस्मादविकारेण गुणानां प्रयोग ॥ अथोच्यते, अस्मादेव सामानाधिकरण्यवचनादिन्द्रे एते गुणा विद्यन्ते इति । तन्न । अविद्यमानेष्वपि स्तुत्याऽस्य सामानाधिकरण्यवचनमुपपद्येतैव । यथा इन्द्रो बृहस्पतिर्देवदत्त इति ॥ ४२ ॥ सि० ॥

## कर्माभावादेवमितिचेत् ॥ ४३ ॥

इति चेद् भवान् पश्यति, अविकारेण हरिवदादीनां वचनमिति । कर्माभावादेवं स्यात् । यद्येते गुणा इन्द्रे न भवेयुः । कर्मजास्तु एते गुणा इन्द्रस्य विद्यन्ते । हरिव आगच्छेति । पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां ह्येष सर्वं हरतीति । मेधातिथेर्मेष इति मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार । वृषणश्वस्य मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे । गौरावस्कन्दन् इति, गौरमृगो भूत्वा अरण्याद्राजानं सोमं पिबतीति वचनैरिमे गुणा इन्द्रस्याख्यायन्ते । तस्मात् समवेतवचना हरिवदादय शब्दा । तथासतीन्द्रप्रत्ययायोच्चार्य्यन्ते इति नादृष्टकल्पना भविष्यति । तत्रैवं वचनव्यक्तिः । इन्द्र आगच्छ, हरिव आगच्छ इति । हरिवत्तादिगुण एव यस्त्वं स आगच्छेति । लक्षणा च अदृष्टकल्पनाया ज्यायसी । तस्माद्गुहितव्या हरिवदादयः शब्दा इति ॥ ४३ ॥ आ० ॥

## न परार्थत्वात् ॥ ४४ ॥

नैतदेवम् । परार्था हि हरिवदादय शब्दा इन्द्रस्तुत्यर्थाः । स्तुतये हरिवदादिसम्बन्धोऽस्य क्रियते । तत् पुरस्तादेवोपवर्णितम् । स्तुत्यर्थश्चाग्नेरप्येतैरभिसम्बन्धः शक्यते कर्त्तुम् । यत्तूक्तं, समवेता गुणा इन्द्रस्य विद्यन्ते, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी इत्येवमादिभिर्वचनैरवगता इति । तन्न । न हीमानि वचनानीन्द्रस्य सम्बन्धिनौ हरी विदधति । न ह्येवमभिसम्बन्धः क्रियते, यावेतौ पूर्वपक्षापरपक्षौ ताविन्द्रस्य हरी इति । तत्र हि हेतुरुपदिश्यते । ताभ्यां ह्येष सर्वं

हरतीति। न हीदं प्रसिद्धं, ताभ्यामिन्द्रः सर्वं हरतीति। सिद्धो हि हेतुर्भवति, न प्रसाध्य। यथा तु इमौ हर्त्तारौ प्रसिद्धौ, कालेन सर्वमपक्षीयते इति, तथा नेन्द्रस्याग्नेश्च कश्चिद्विशेषः। तत्र एभिरभिधानमग्नेः प्राप्नोत्येव॥ अथ इन्द्रस्य हर्त्तृत्वं विधीयत इत्युच्यते। तथा च वाक्यं भिद्येत। इन्द्रस्यैतौ हरी इत्येतदपि विधातव्यम्। अथैतन्न विधीयते, तथा स एव दोषः। नास्त्यग्नेरिन्द्रस्य वा विशेष इति। अथ पूर्वपक्षापरपक्षाविन्द्रस्येति विधीयते, तौ च हरी। तस्मादिन्द्रो हरिवानिति। तथा हेत्वप्रसिद्ध्यादिः स एव दोषः। न च विधीयमाने वैशब्दो भवति। प्रसिद्धवचनो ह्येष दृष्टः। न वै स्तैणानि सख्यानि सन्तीति यथा॥

तथा मेधातिथेर्मेष इत्येवमादि इतिहासवचनमिव प्रतिभाति। इतिहासे च विधौ सति आदिमत्तादोषो वेदस्य प्रसज्येत। अस्त्विति चेत्। तथा सति तस्याप्रामाण्यान्मेधातिथेर्हि काण्वायनस्य मेष इत्यप्रसिद्धि। सर्वत्र च निगदविधानम्। तत्रापरस्मिन् विधीयमाने वाक्यभेदप्रसङ्ग। तस्मान्नैते गुणा इन्द्रे विद्यन्ते इति असमवेतवचनत्वादविकारेण प्रयोग इति॥ तदेतद् न रोचयन्ते याज्ञिका। ऊहं कुर्वन्ति। अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षण इति॥ ४४॥ आ० नि०॥ सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम्॥ १९॥

अथेदमन्यदुदाह्रियते—

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत॥ ४२॥

अस्ति साद्यस्क्र.। तत्रेदं समामनन्ति। साण्डास्त्रिवत्सः सोमक्रयण इति। अस्ति तु प्रकृतावेकहायनी क्रयार्था। तत्रेदमाम्नायते। इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै शर. तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति। तदिह चोदकेन प्राप्तम्। तत्र सन्देह। किं गोशब्दस्थाने ऊहं कृत्वाऽवशिष्टानां पदानामविकारः? उत सर्वेषामूह इति। किं प्राप्तम्। गोपदार्थविशिष्टमेवोहवचनं स्यात्। तस्यै शृतमित्येवमादीनामविकारः, असंयोगाच्छृतादिभिरर्थै। तेषामेकहायन्याम्, एकहायनीत्वादेव। न हि एकहायनी दुग्धं, तस्यामसमवेतं वदन्ति एते। तस्मात् साण्डेऽपि अविकारेण प्रयोक्तव्या इति॥ ४२॥ सि०॥

**कर्माभावादेवमिति चेत् ॥ ४३ ॥**

इति चेद् एवं भवान्मन्यते, नैकहायन्यामेते समवेतान् अर्थान् अभिवदन्तीति । भवेदेतदेवं, यद्येकहायन्या इमे गुणा न भवेयुः, कालान्तरे तु तस्या उपपद्यन्ते, न तु साण्डस्य । भविष्यत्कालवचना अप्येते प्ररोचनार्था भवन्ति । तस्यै शृतं भविष्यति । तस्मादविकारेण प्रयोक्तव्या इति ॥ ४३ ॥ आ० ॥

**न परार्थत्वात् ॥ ४४ ॥**

नैतदेवम् । अविकारेण प्रयोक्तव्या इति । असमवेतवचना ह्येते नैकहायन्यां भवन्ति । एकहायनीत्वादेव । अथोच्यते, कालान्तरे भविष्यन्तीति । साण्डेऽपि कालान्तरे भवितुमर्हन्ति । साण्डादपि हि या धेनुर्जनिष्यते, सा धोक्ष्यते इति । तस्मादविकारेण प्रयोक्तव्या इति ॥ ४४ ॥ आ०नि० ॥ तस्यै शृतमिति मन्त्रेऽनूहाधिकरणम् ॥१५॥

**लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥**

अस्ति ज्योतिष्टोमः । तत्र पशवः समाम्नाताः । आग्नेयः पशुरग्निष्टोमे आलब्धव्य ऐन्द्राग्नः पशुरुक्थ्ये ऐन्द्रावृष्णिः षोडशिनि सारस्वती मेषी अतिरात्रे इति । अस्ति तु अग्नीषोमीयेऽध्रिगुप्रैषः । उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधं इति । तत्र सन्देहः । किं सारस्वत्यां मेष्यामध्रिगुवचनं कर्त्तव्यं, न ? इति । नन्वग्नीषोमीयार्थं तत्, चोदकेनेह प्राप्तमिति । अत्रोच्यते । सर्वेषां समानो विधिरिति कृत्वा चिन्ता ॥ किं तावत् प्राप्तम् । समानविधानेष्वेषु पशुषु अप्राप्ता सारस्वती मेषी अध्रिगुवचनम् । कुतः । लिङ्गविशेषनिर्देशात् । विशिष्टलिङ्गो हि अध्रिगुवचनेन निर्दिष्टः । प्रास्मा अग्निं भरत इति पुंशब्दः । स्त्रीत्वं चास्याः । न च पुंवचनं स्त्रियमभिवदितुमलं भवति शब्दः । तस्मादध्रिगुवचनम् । अप्राप्ता सारस्वती मेषीति ॥ ४५ ॥ सि० ॥

**पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । अप्राप्ता सारस्वती, अध्रिगुवचनमिति । तस्यामप्यध्रिगुवचनं स्यात् । कुतः । प्रकरणात् ।

समानं प्रकरणं सर्वेषां पशूनामिति कृत्वा चिन्त्यते । तेन सारस्वत्या अपि प्राप्नोतीति । लिङ्गविशेषादयुक्तं तस्यामिति यदुच्यते, तन्न । पश्वभिधानात् । अस्ति तत्र पशुत्वं सन्निहितम् । तदभिप्रेत्य, प्रास्मा अग्निं भरता पशव इति ब्रूयात् । तद्धि चोदनाभूतं, सर्वनामशब्दस्य पुंविषयत्वम् । तत् पशुशब्देनोच्यते । अस्ति च तद् मेष्याम् । तद-भिप्रेत्य पशुशब्दसमानाधिकरणं सर्वनामशब्दं समुच्चारयिष्यति । एवं प्रकरणमनुग्रहीष्यते । तस्मात् प्राप्नुयात् सारस्वती अध्रिगुवचनमिति ॥ ४६ ॥ पूर्व० ॥

## विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥

वाशब्द एतं पक्षं व्यावर्त्तयति । नैतदस्ति, प्राप्नुयात् सारस्वती अध्रिगुवचनमिति । अयमन्य पक्षः । न प्राप्नुयादिति । कुतः । विशेषो वा तदर्थनिर्देशात् । पुमर्थं ह्येष शब्दो निर्देष्टुं शक्नोति । स्त्री-लिङ्गश्चायमर्थो मेषीति । स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुमिति प्रथम एव पक्ष संकीर्त्तितः । केवलं परपक्षस्यानवक्लृप्तिर्वक्तव्या । ॥ ४७ ॥ उत्तरम् ॥

## पशुत्वं चैकशब्द्यात् ॥ ४८ ॥

अथ यदुक्तं, पशुत्वाभिप्रायमेतद्वचनम् । एको हि शब्दः पशुत्वस्य च पशोश्च । तत्र प्रास्मै पशव इत्यभिसम्बन्धो भविष्यतीति । तत् परिहर्त्तव्यमिति ॥ ४८ ॥ आ० ॥

## यथोक्तं वा सन्निधात् ॥ ४९ ॥

यथोक्तं स्यादध्रिगुवचनम् । अप्राप्ता सारस्वती । कुतः । पूर्वस्मादेव कारणाल्लिङ्गविरोधादिति । यदुक्त, पशुशब्दसमानाधिकरणः सर्वनामशब्दः प्रयोक्ष्यते इति । तन्न । कुतः । सन्निधानात् । सन्निहितवचनो हि सर्वनामशब्द । उच्चरितमात्रो य पदार्थ. शब्देन सन्निहित , तेन सम्बद्ध्यते । अथ तस्मिन्नसति लिङ्गादिसर्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते । सन्निधाने न एकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नोति । सन्निधानात्तत्रैकं सामान्यमाश्रीयते, नान्यत् किञ्चित् पशुत्वादि । तत्रोच्चार्य्यमाणे पशुशब्दे शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे अस्मै पशव इति शक्यते सम्बन्ध. कर्त्तुम् ।अनुच्चार्य्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति । तस्मादप्राप्ता

सारस्वती अध्रिगुवचनमिति कृत्वा चिन्तेयम्।अत्र प्रयोजनं न वक्तव्यम् । किमग्नीषोमीयार्थाः पशुधर्माः ? उत साधारणा इत्यस्मिन्नधिकरणे प्रयोजनाय विचारोऽयम् । यदि साधारणाः पशुधर्मास्ततः सारस्वती अध्रिगुवचनमप्राप्ता, अथाग्नीषोमीयधर्मा ततोऽस्याम् अध्रिगुवचनमूहेन प्राप्यते । न च प्रयोजनस्य प्रयोजनं वक्तव्यम् ॥ ४९ ॥ ॥ आ० नि० ॥ सारस्वत्यां मेष्यामध्रिगुवचनाभावाऽधिकरणम् ॥ १६ ॥

## आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥५०॥

अस्ति ज्योतिष्टोमः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र यज्ञायज्ञीयं प्रकृत्य आमनन्ति– न गिरा गिरेति ब्रूयात्,यद्गिरा गिरेति ब्रूयात्, आत्मानं तदुद्गातोद्गिरेदैरं कृत्वोद्गेयमिति । तत्र संशयः । किम् इरापदं गिरापदं वा कर्त्तव्यम्, अथ वा इरापदमेव ? इति । किं प्राप्तम् । यत्र अधिकारे आम्नातादन्यदुच्यते, तद्विकारभूतं स्यात् । ज्योतिष्टोमाधिकारे आम्नाताद् गिरापदादन्यदुच्यते इरापदम् । तद् विशेषे उच्यमानं सामान्येन प्राप्तं गिरापदं बाधेत ॥ ५० ॥ सि० ॥

## द्वैधं वा तुल्यहेतुत्वात् सामान्याद्विकल्पः स्यात् ॥५१॥

वाशब्द पक्षं व्यावर्त्तयति । न इरापदं नियम्येत । द्वैधं स्यात् । द्वौ प्रकारौ स्यातामित्यर्थः । कौ द्वौ प्रकारौ । इरापदवचनं, गिरापदवचनञ्च । तुल्यो हि हेतुः । गिरापदमाम्नातम् । तद्वता साम्ना ज्योतिष्टोमः साधयितव्य इत्येतदप्यवगम्यते । इरापदेन साधयितव्यमित्येतदपि । समानार्थे चैते द्वे पदे । एकमपि स्तुत्यर्थमपरमपि । तस्माद् विकल्पः स्यात् । इरापदं गिरापदं वेति ॥ ५१ ॥ पूर्व० ॥

## उपदेशाच्च साम्नः ॥ ५२ ॥

अत्राह । नैतयोस्तुल्यता विद्यते । गिरापदे समाम्नानमात्रं, न कर्त्तव्यता विधीयते । इरापदे तु कर्त्तव्यता विधीयते । तन्न । कुतः । उपदेशात् साम्नः । उपदिश्यते हि साम । यज्ञायज्ञीयेन स्तुवन्तीति । गिरापदवच्च यज्ञायज्ञीयम् । तस्मिन्नुपदिश्यमाने गिरापदमप्युपदिष्टं भवति । तस्माद्विकल्प इति ॥ ५२ ॥ युक्तिः ॥

## नियमो वा श्रुतिविशेषादितरत् साप्तदश्यवत् ॥ ५३ ॥

नियमो वा स्याद् इरापदस्य । कुतः । श्रुतिविशेषात् । श्रुति-

विशेषेण इरापदमुपदिष्टम् । ऐरं कृत्वेति । सामान्येन गिरापदम् । तत्कथं साम्न उच्यते ? । गिरापदस्य पाठमात्रं, न कर्त्तव्यता । न त्वन्यथा साम कृतं भवतीत्यर्थापत्त्या गिरापदस्य कर्त्तव्यता कल्प्यते । इरापदस्य पुन. श्रुत्यैव कर्त्तव्यता । तेन साम्नि सिद्धे नास्त्यऽर्थापत्तिर्गिरापदस्य । अथ यः सामान्येनोपदिष्टस्तस्य को विषय. । तदुच्यते । इतरत् साप्तदश्यवदिति । गिरापदमुपादिश्यते । तद्यथा साप्तदश्यं, तथा स्यात् । विकृतिषु साप्तदश्यं निविशते । इतरदपि विकृतीरभिनिवेष्टुमर्हतीति ॥ ५३ ॥ उत्तरम् ॥ यज्ञायज्ञीये गिराशब्दस्य स्थाने इरापदस्यैव कर्तव्यताधिकरणम् ॥ १७ ॥

## अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥५४॥

ज्योतिष्टोमे यज्ञायज्ञीयं प्रकृत्य आमनन्ति । न गिरा गिरेति ब्रूयात्, यद्गिरा गिरेति ब्रूयात् । आत्मानमेव तदुद्गाता उद्गिरेदैरं कृत्वोद्गेयमिति । ज्योतिष्टोमे गिरापदस्य स्थाने इरापदं कर्त्तव्यमिति समधिगतम् । इदानीमिदं सन्दिह्यम् । किं प्रगीतमिरापदं कर्त्तव्यम्, उत अप्रगीतमिति । किं प्राप्तम् । गिरापदादन्यस्मिन् शब्दे श्रूयमाणे ब्रूम. । अप्रगीतमिरापदं कर्त्तव्यम् । कुत । अप्रगाणात् । न हि तद् अप्रगीतमुपदिश्यते । सर्वं हि यद् यथाभूतमुपदिश्यते, तत् तथाभूतमुपयोक्तव्यम् ॥ ननु नैव तद् अप्रगीतमुच्चार्य्यते । तद्धितशब्देन अयं निर्देश. क्रियते । तेन स्वरविशेष. कश्चिन्निर्दिष्टो भवति। अत्रोच्यते । यद्यपि चास्ति स्वरविशेष । अन्ये तु गीतिविकारा आईभावादयो न निर्दिश्यन्ते । अविकृतात् तद्धित उत्पादित. । तस्माद् अविकृतं प्रयोक्तव्यम् । अथोच्यते । तद्भूतनिर्देशोऽविवक्षित इति । उच्यते । अविवक्षायां न किञ्चित् । विवक्षायान्तु निर्देश एव कारणम् । तस्मादप्रगीतं प्रयोक्तव्यमिति ॥ ५४ ॥ पूर्व० ॥

## यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात् ॥ ५५ ॥

वाशब्द पक्षं व्यावर्त्तयति । यस्य पदस्य स्थाने इरापदं प्रयुज्यते, तस्य पदस्य या गीति सा इरापदे स्यात् । कुतः । पदान्यत्वप्रधानत्वात् । पदान्यत्वप्रधानं हीदं वाक्यम् । गिरापदस्य स्थाने इरापदं भवतीति । नाप्रगीतं प्रयोक्तव्यमिति । अन्या हि वचनव्यक्ति-

इरापदस्य विशेषे विधीयमाने, अन्या इरापदे । एवं हि श्रूयते । इरापदस्य विकारं कृत्वोद्गेयमिति । तत्रानेन प्रकारेण इरापदं विधीयते, नान्यं प्रगानादिरापदस्य विकारं ब्रूयात् । न गिरापदस्येत्येतत् तद्धितेनोच्यते । नाप्रगीतस्य इरापदस्य विकारस्तद्धितशब्देनाध्यवसीयते । पश्चात्तद्धितार्थो विकारं ब्रूयादिति असावनूद्यते एव । य प्रकृत्यर्थ इरापदस्येति, स विधीयते । तेन पदान्यत्वपरमेतद्वचनं, न गीत्यनन्वयपरम् । गीतिर्हि विकारः सामान्यान्निर्दिश्यते ॥ ५५ ॥ सि० ॥

## गानसंयोगाच्च ॥ ५६ ॥

गानसंयोगो भवति, उद्गेयमा इरा चा दाक्षासा इति इरागानं दर्शयति ॥ ५६ ॥ युक्ति ॥

## वचनमिति चेत् ॥ ५७ ॥

इति चेत् पश्यसि, गानदर्शनमेतद्भवतीति । नैवं, वचनं भविष्यति, उद्गेयमा इरा चा दाक्षासा इति ॥ ५७ ॥ आ० ॥

## न तत्प्रधानत्वात् ॥ ५८ ॥

नैतदेवम् । तत्प्रधानं हीदं वाक्यम् । किम्प्रधानम् । इरापदप्रधानम् । निर्देशात् । न गीतिप्रधानम् । अनिर्देशादित्युक्तम् । तथा इरापदस्यार्थवादो भवति, न गीते । इरामहं यजमाने ददानि इतिपदस्य ह्यायमर्थवादो, न गीतेः । तस्मात् प्रगीतं प्रयोक्तव्यमिति ॥ किं भवति प्रयोजनं चिन्तायाः, नात्र कश्चिद्विशेषः ? अन्यस्मिन्नेतत्सदृशे प्रयोजनमस्ति, न प्रप्रेति ब्रूयात्, प्रप्रीति ब्रूयात् । यदि पूर्वः पक्षः, प्रप्रपदं वा वक्तव्यम् । प्रप्रीपदं वा । यदि सिद्धान्तः, प्रप्रीपदमेव वक्तव्यमिति ॥५८॥ आ० नि० ॥ इरापदस्य प्रगीतताधिकरणम् ॥१८॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य प्रथमः पादः ॥ ९ ॥ १ ॥

### अथ नवमाध्यायस्य द्वितीयः पादः ॥ ९ ॥ २ ॥

## सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

सन्ति सामानि, रथन्तरं बृहद् वैरूपं वैराजं शाक्वरं रैवतमिति अभित्वा शूर नो नुम इत्येवमादिषु । तत्रैषोऽर्थः सन्दिह्यते । किं प्रगीता एते मन्त्राः सामानि, उत गीतय सामानीति । ननु सिद्धं,

गीतिषु सामाख्येति। उच्यते। तत्र द्वितीयेऽध्याये मन्त्रगते भावशब्दे चोदकत्वं प्रति विचार्य्यमाणे मन्त्राभावाशङ्कायां मन्त्रसद्भावोपपादनाय, तच्चोदकेषु मन्त्राख्या इति कृते लक्षणे, अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः, ऋचो यजूंषि सामानीति ऋगादीनां विभागाय प्रसक्तानुप्रसक्तं लक्षणं गीतिषु सामाख्या इत्युक्तम्। तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रम्। उभयथापि ऋग्यजुषाभ्यामन्यत्सामेति सिद्धे विभागे न विवेकाय प्रयत्नः। प्रयोजनाभावात्। इह तु प्रगीते मन्त्रेऽन्यत् कर्म, गीतिमात्रेऽन्यदिति विवेकाय प्रयत्यते॥

आह। नन्वेतदपि सिद्धं, गानकर्मणो वाचकः सामशब्द इति। उच्यते। तदेव पुनरभिधीयते, स्मरणाय, उत्तरमधिकरणं चिन्तयितुम्॥ गीतिः सामेति स्थिते इदं चिन्त्यते। गीतिषु ऋचः प्रधानभूताः? उत, गुणभूता इति। आह। नैव स्मरणाय पूर्वपक्षोद्धरणम्। न हि मन्त्राः सामानीत्येषोऽर्थः स्मर्त्तव्यः। अत्रोच्यते। पूर्वपक्षेऽपि सिद्धान्तस्मरणार्थमेवोपादीयते। यत् प्रगीतं मन्त्रवाक्यं तत्सामेत्येवं पूर्वपक्षं कृत्वा गीतिमात्रं सामेति स्थापितम्। तस्मिन् स्थिते अयमुत्तरो विचारः कर्त्तव्यः। गीतिषु किम् ऋचः प्रधानभूताः, उत गुणभूता इति॥ किं प्राप्तम्। एके मन्यन्ते, प्रगीतं मन्त्रवाक्यं सामेति। कुतः। स्मृत्युपदेशाभ्याम्। एवं हि स्मरन्ति। प्रगीतं मन्त्रवाक्यं सामेति। तत्रभवन्तश्छान्दसाः। एवञ्चोपदिशन्ति शिष्येभ्यः। आह। ननु यदेव स्मरन्ति, तदेवोपदिशन्ति। नैवं सति उपदेशो हेत्वन्तरमिति। उच्यते। बाढम्। अन्यथा तर्हि उपदेशं वर्णयामः। अयमुपदेशः। अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः, ऋचो यजूंषि सामानीति। मन्त्रप्रकारः कश्चित् सामानीति मन्त्रोपदेशो भवति। तस्मादुपदेशान्मन्त्राः सामानीत्यवगच्छाम॥ १॥ पूर्व०॥

तदुक्तदोषम्॥ २॥

तस्यैतस्य पक्षस्योक्तो दोषः सप्तमे। ऋचः प्रदेशो नोपपद्यते कवतीषु रथन्तरं गायतीति। देशलक्षणा धर्मलक्षणा वा प्राप्नोतीति। तस्माद्गीतयः सामानि, न प्रगीतानि मन्त्रवाक्यानीति॥ २॥ सिद्धान्तः॥ गीतीनां सामनामनाधिकरणम्॥ १॥

एवं वा—

## सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

इदं सन्दिह्यते, योऽयम् ऊहो नाम, कया नश्चित्र आभुवो वा इति । किमयमप्यार्षो नित्य:, उत, चिन्तयित्वा-प्रगीत ? । किं प्राप्तम । एतानि ऊहसामानि मन्त्रभूतानि आर्षाणि नित्यानीति एके मन्यन्ते । कुतः । स्मृत्युपदेशाभ्याम् । एवं हि स्मरन्ति । मन्त्रभूतानि आर्षाणि नित्यानीति । उपदिशन्ति च, एवंविधमेव शिष्येभ्य: ॥ आह । ननु यदेव स्मरन्ति, तदेवोपदिशन्ति । बाढम् । अयमन्य उपदेशो वर्ण्यते, ऊहश्चिकीर्षित इति ब्राह्मणमुपदिशन्ति । चिकीर्षित इति च इष्ट उच्यते । इच्छायां हि सन् विधीयते । यदि चायम् अपुरुषबुद्धिपूर्वको वेदतुल्यः, तत इष्टः । अथ पुरुषप्रणीतस्ततो न प्रमाणम् । यज्ञे चाचिकीर्षितो न प्रयोक्तव्यः । चिकीर्षित इति च शब्दो भवति । तस्मान्नित्य ऊह इति ॥ १ ॥ पूर्व० ॥

## तदुक्तदोषम् ॥ २ ॥

तदेतदुक्तदोषं भवद्वचनम् । भवतैव हेतुं वर्णयता अस्योक्तो दोषः । ऊहश्चिकीर्षित इति । ऊहश्चिकीर्षित इत्यनित्ये एतद्भवति । यदुक्तम्, इष्टे चिकीर्षितशब्दो भवति । इच्छायां हि सन् विधीयते इति । उच्यते । सत्यम् । इष्टं कर्त्तुं यद्धि क्रियते, तत् कर्त्तुमिष्टं भवतीति । तस्माद् अनित्य ऊहः । यदुक्तं, स्मृतेर्नित्यतेति । नैषा स्मृतिः प्रमाणम् । दृष्टमूला ह्येषा । भवति हि वचनम् । कवतीषु रथन्तरं गायतीति । तस्माद् अतिदेशवचनान्न्यायेनैवं गातव्यमिति वाचनिकं प्रथमं विज्ञानम् । तत एषा स्मृतिः । तस्मादप्रमाणं, कृत्रिम ऊह इति । किं भवति प्रयोजनम् । न्यायविरुद्धमपि प्रमाणम् । यथापूर्वः पक्षः । यथा तर्हि सिद्धान्त, न्यायविरुद्धमप्रमाणम् ॥ २ ॥ सिद्धान्तः ॥ ऊहग्रन्थस्य पौरुषेयताधिकरणम् ॥ १ ॥

## कर्म वा विधिलक्षणम् ॥ ३ ॥

तान्येवोदाहरणानि । तेष्वयमर्थ समधिगत । गीतिः सामशब्देन उच्यते इति । तत इदमिदानीं सन्दिह्यते । किं सा गीतिः, ऋचः प्रति प्रधानभूता ? उत गुणभूतेति । ननु सिद्धं— संस्कारकर्मणः सामशब्दो वाचक इति, अपि तु कर्मशब्दः स्यात् भावोऽर्थ प्रसिद्धग्रहणत्वाद् इति । उच्यते । सत्यमाक्षेपेण प्रवर्त्तते । स एव निर्णयो

भविष्यति । किं प्राप्तम् । तेनैवाधिकरणेन संस्कारकर्मेति ॥ तथा प्राप्ते ब्रूम । प्रधानकर्म वा सामशब्देनोच्यते इति । किं कारणम् । प्रधानविधिलक्षणं हि अत्रास्ति द्वितीया विभक्तिः— रथन्तरं गायतीति । तस्मात् प्रधानकर्मेति । अपिच । कर्मकाले गानं भवति । तद् यदि द्रव्यसंस्कारार्थं, संस्कृतं द्रव्यमदृष्टेन संस्कारेण, न कर्मकाले पुनः संस्कर्तुं शक्यम् । न हि स्निग्धस्य स्नेहनं शक्यं कर्तुं, पिष्टस्य वा पेषणम् । स एषोऽग्नीनामिवाभ्युपगन्तव्यः । अकर्मकाले क्रियमाणः संस्कारो भवतीति । अस्मत्पक्षे पुनः प्रधानकर्म फलाय भविष्यति । तत्राविप्रतिषिद्धमकर्मकाले गानम् ॥ अपिच, श्रावण्यां पौर्णमास्यां व्रतान्युपाकृत्य, अर्द्धपञ्चमान् मासान् स्वाध्यायमधीयीतेति । तदेषां फलाय भविष्यति । इतरथा पुरुषाणामुपदिश्यमानं कर्मणां कल्प्येत । तस्मादपि प्रधानकर्मेति ॥ ३ ॥ पूर्व० ॥

## तादृग्द्रव्यं वचनात् पाकयज्ञवत् ॥ ४ ॥

आह । प्रधानकर्मेत्युच्यते । न चैतत् प्रधानकर्म । न हीदं फलवद् दृष्टम् । फलकल्पनायां चाश्रुतं कल्प्येत । तेन यागं प्रति गुणभूतम् । यदि न गुणभूतं, किमस्य द्रव्यम्, यत् प्रति प्रधानभूतमेतत् ? । तदुच्यते । ऋग्द्रव्यम् । ऋग् अस्य द्रव्यस्थानीया । यथाऽन्यस्य कर्मणो द्रव्यं साधकम्, एवमस्य ऋक् साधिका । तस्माद् ऋचं प्रति प्रधानभूतमेतत् । भूतं हि भव्यायोपदिश्यते । कथं पुनरेतद् ऋग्द्रव्यम् । वचनात् । वचनमिदं भवति । ऋचि साम गायतीति । यथा पाकयज्ञेषु तत्तद्वाचनिकं द्रव्यं भवति, लाजाः, धानाः, तण्डुलाः आज्यमिति । एवमिहापि ऋग् द्रव्यम् । वचनादिति ॥४॥ आ०नि० ॥

## तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५ ॥

आह । या ऋगस्य वचनेनोच्यते, तद् द्रव्यमेतद् भवति । कथं द्रव्यव्यतिरेके सति द्रव्यान्तरे प्रदेशो च तदिदं साम ? इति । अत्रोच्यते । अविप्रतिषिद्धमेतत् । गीतिमात्रं हि सामेति । द्रव्यमस्य निर्वर्त्तकं वाचनिकम् । तत् सामान्यविहितं, विशेषविहितेन द्रव्यान्तरेण बाध्यते । यदत्र द्रव्यव्यतिरिक्तं गीतिमात्रं, तदेव बृहद्वा रथन्तरं वेति न दोषो भवति । तस्मात् प्रधानकर्म सामेति ॥ ५ ॥ युक्ति.॥

## शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतदेवं भवितुमर्हति, प्रधानकर्म्म सामेति । गुणकर्म्म स्यात् । कुतः । शब्दार्थत्वात् । शब्दस्योपकारकं साम प्रत्यक्षमुपलभ्यते । साम्नि क्रियमाणे ऋगक्षराणि उच्चार्य्यन्ते । तस्मिन् सति नादृष्टं कल्पनीयम् ॥ ६ ॥ सि० ॥

## परार्थत्वाच्च शब्दानाम् ॥ ७ ॥

परार्थाश्च शब्दाः स्तुत्यर्थाः । स्तुतिर्हि चोदिता, आज्यैः स्तुवते पृष्ठैः स्तुवते इति साम्न ऋगक्षरैरुच्चार्य्यमाणैः प्रत्यक्षा अवगम्यते । ततः स्तुत्यर्थाया ऋच सत्याः सामार्थता परिकल्प्येत । कल्पनायाश्च प्रमाणं नास्ति । तस्मादपि साम गुणभूतमिति ॥ ७ ॥

## असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥

इतश्च गुणभूतं साम । कुतः । असम्बन्धश्च साम्नः स्तोत्रेण स्यात् । तस्य प्रधानभावेन स्तुतिः साम्न उपदिश्येत, न सामस्तुतेः । तत्र बृहत् पृष्ठं भवति रथन्तरं पृष्ठं भवतीति वचनं बाध्येत । रथन्तरगुणकं पृष्ठं भवतीत्येतदेवमुपदिश्यते । तद् ऋगर्थे साम्नामवकल्पते । प्रत्यक्षं हि तदा पृष्ठस्योपकारं साम करोति । यदस्य वाचकं प्रकाशयति शब्दं, तद् रथन्तरपृष्ठशब्दयोः सामानाधिकरण्यादेकार्थत्वे शक्यं विज्ञातुम् । पृथगर्थत्वे तु असम्बन्धः स्यात् । तस्माद् ऋचः साम गुणभूतमिति ॥ ८ ॥ युक्तिः ॥

## संस्कारश्चाप्रकरणेऽग्निवत् स्यात् प्रयुक्तत्वात् ॥ ९ ॥

अथ यदुक्तं, कर्म्मकाले गानम् ऋच संस्कारकमग्न्याधानमिव कल्प्येत । प्रयुक्तत्वादिति । तत् परिहर्त्तव्यम् ॥ ९ ॥ आ० ॥

## अकार्य्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥

यदि हि अकर्म्मकाले गानं कृतं, कर्म्मकालं यावत् तिष्ठेद् न विनश्येत् । ततः पुनरप्रयोग प्रतीयेत । यदि वा पुनर्न शक्येत कर्म्मकाले गानं कर्त्तुं, तथाप्यप्रयोगः स्यात् । शक्यन्ते तु प्रगीताः शब्दाः पुनः प्रयोक्तुम् । तस्मादकर्म्मकाले प्रयुक्ता असाधका इति कर्म्मकाले प्रयुज्येरन् । तस्मान्न दोषो भविष्यतीति ॥ १० ॥ आ०नि० ॥

## आश्रितत्वाच्च ॥ ११ ॥

अपि च कर्म्मकालाश्रितं गानं दर्शयति । औदुम्बरीं स्पृष्ट्वानपाश्रित उद्गातोद्गायेदिति । सदस्यौदुम्बरी मध्यमा स्थूणा भवति ।

तां स्पृष्ट्वा इति ब्रुवन् सदसि गानं दर्शयति । तस्मान्न अकर्मकालमग्न्याधानवत् कल्पयितव्यमिति ॥ ११ ॥ युक्ति. ॥

**प्रयुज्यत इति चेत् ॥ १२ ॥**

अथ यदुक्तम्, अर्द्धपञ्चमान्मासान् अध्ययनं प्रयुज्यते, तत् फलाय भविष्यतीति । तत् परिहर्त्तव्यम् ॥ १२ ॥ आ० ॥

**ग्रहणार्थं प्रयुज्येत ॥ १३ ॥**

न हि फलाय भवितुमर्हति । तथाहि अदृष्टं कल्प्येत । दृश्यतेऽत्र प्रयोजनम् । यत्तावदुपाध्याय' शिष्यसन्निधावधीते, तद् ग्रहणार्थम्। यच्छिष्यस्तद् धारणार्थम् । ग्रहणधारणे प्रयोगार्थे भूमिरथिकवत्, शुष्केष्टिवद्वा । तद् यथा, भूमिरथिको भूमौ रथमालिख्य शिक्षां करोति, संग्रामे प्राशुभावो भवितेति । यथा च छात्र शुष्केष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्म्मा भविताऽस्मीति । एवमेतद् द्रष्टव्यम् । तस्माद् दृष्टे सति नादृष्टायाध्ययनम् । तस्मात् संस्कारकर्म सामेति ॥ १३ ॥ आ० नि० ॥ साम्न ऋक्संस्कारकर्मताधिकरणम् ॥ २ ॥

**तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥**

ज्योतिष्टोमे समाम्नायते । तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति । अत्रायमर्थः सांशयिक. । किं तिसृषु ऋक्षु व्यासज्ज्य गानं कर्त्तव्यम् ? उत प्रतिऋचं, समाप्तं गानं कर्त्तव्यमिति । किं प्राप्तम् । व्यासज्ज्येति । कुत । श्रुतिनिर्देशात् । एवं श्रूयते । एकं साम तृचे क्रियते इति । साम्नि क्रियमाणे, निर्वृत्तौ गुणभूता त्रिसंख्या ऋग्गता श्रूयते । तत्र यद्येकस्यामृचि उपक्रम्य तस्याञ्चैतत् परिसमापयेयुः, न त्रिसंख्यया साधनमस्य क्रियमाणस्य परिच्छिन्द्यु' । एकसंख्यापरिच्छिन्नं क्रियमाणं स्यात् । तत्र श्रुतिर्बाध्येत । तद् यथा, अयं घटस्त्रिषु नागदन्तकेषु स्थाप्यतामित्युक्ते व्यासज्ज्य स्थाप्यते, न पर्य्यायण । एवमिहापि द्रष्टव्यम ॥ ननु पर्य्यायेऽप्येवञ्जातीयकः शब्दो भवति । यथा, त्रिषु कुलेषु देवदत्तो भुङ्क्ते इत्युक्ते न यौगपद्यमवगम्यते । पर्य्यायेणापि भुञ्जाने भवत्यष वादः । एवमिहापि पर्य्यायेण प्राप्नोतीति । अत्रोच्यते । न तत्र त्रिसंख्या भुजिं प्रत्युपदिश्यते, येनैतदेवं भवति । तत्र कुलशब्देन सम्बद्ध्यते । त्रिषु कुलेषु, न द्वयोरेकस्मिन् वेति । यदा भुजिनिर्वृत्तिं प्रत्युपदिश्यते, तदा यौगपद्येनैव

भोजयितव्यः । इह तु त्रिसङ्ख्या क्रियते इत्यनेन सम्बद्ध्यते । एवं सति क्रियायां त्रिसङ्ख्या विहिता भवति । तत्र स्वपदगतस्य किञ्चिद्विधायकेन विहितं भवति । इतरथा ऋच सङ्ख्यायाश्च सम्बन्धस्य पदान्तरगतेन शब्देन भावनोच्येत । तथा, अर्थविप्रकर्षं स्यात् । तस्मात् सामनिर्वृत्तिं प्रति त्रिसङ्ख्या उच्यते ॥ आह । ननु त्रिसङ्ख्या ऋक्शब्देनैवात्र सम्बद्ध्यते । अन्यथा असति सामर्थ्ये समास एव न स्यादिति । अत्रोच्यते । न ब्रूमो न सम्बद्ध्यते इति । सम्बद्ध्यते एव । समासश्च भवति । स तु समासशब्दः सामनिर्वृत्तावुपयुज्यते इति । तत्र त्रिशब्दस्य ऋक्शब्दस्य चार्थौ निर्वृत्तावुपदिष्टौ भवति । साम निर्वर्त्तयितव्यम् । एवं तास्तिस्र ऋचो भवन्ति, न न्यूना इति । इतरस्मिन् पक्षेऽभ्यासस्त्रिसङ्ख्यया सम्बद्ध्येत । तत्र साम क्रियते इति लक्षणा स्यात् । अभ्यासनिर्वृत्तौ सामनिर्वृत्तिशब्दो भवेत् । तस्माद् व्यासज्ज्य गानं कर्त्तव्यम् ॥ १४ ॥ पूर्व० ॥

## शब्दार्थत्वाद्विकारस्य ॥ १५ ॥

इतश्च पश्याम । तृचे व्यासज्ज्य साम गातव्यमिति । कुतः । शब्दार्थोऽयं सामसंज्ञको विकारः । ऋचो गुणभूत इत्यर्थः । स यदि व्यासज्ज्य क्रियते, बह्वन्यक्षराणि अविकृतानि भवन्ति । तत्रायं चोदकोऽनुग्रहीष्यते । तस्माद् व्यासज्ज्य गातव्यम् ॥ १५ ॥

## दर्शयति च ॥ १६ ॥

ऋक्सामौ वाव मिथुनीसम्भवावेति । सोऽब्रवीन्न वै त्वं ममालमसि जायार्थे वेदो मम महिमेति । ते द्वे भूत्वोचतु । सोऽब्रवीत् । न युवां ममालं स्वो जायार्थे वेदो मम महिमेति तास्तिस्रो भूत्वोचु । मिथुनीसम्भवामेति । सोऽब्रवीत् सम्भवामेति । तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति । नैका स्तोत्रीया साम्नः सम्भवति । नापि द्वे तिस्रः सम्भवन्तीति व्यासज्ज्य गानं दर्शयति ॥ १६ ॥ युक्तिः ॥

## वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात् संस्कारस्य तदर्थत्वात् ॥ १७ ॥

तुशब्दः पक्षं व्यावर्त्तयति । वाक्यानि विभक्तानि त्रीणि एतानि । यास्तिस्र ऋचस्तत्रैकैका ऋक् कृत्स्नेन पदग्रामेण काञ्चित् स्तुतिमभिनिर्वर्त्तयति, न ऋगन्तरेण सह कञ्चिदर्थं संस्तौति । तत्र साम,

ऋच' संस्तवमभिनिर्वर्त्तयन्त्या गुणभावं गच्छत् साहाय्यं करोति। तत्र यदि व्यासज्ज्य गीयेत, न ऋचः स्तुतिमभिनिर्वर्त्तयन्त्याः साम उपकारकं स्यात्। न हि सामावयव. साम भवतीति। न च ऋक्-समुदायेन कश्चिदर्थः स्तूयते, यत्र सामसम्बद्धा स्तुतिं कुर्य्यात्। ऋक् स्तुति करोति, सा न सामसम्बद्धा। य ऋक्समुदायः साम-सम्बद्धः स स्तुति न करोति। तत्र प्रत्यृचं साम्नि परिसमाप्ते क्रिय-माणे सामवता शब्देन स्तुति. कृता भवति। सामसंस्कारस्य स्तुति-भावनार्थत्वात् प्रत्यृचं परिसमाप्तं गानं कर्त्तव्यमिति॥ १७॥ सि॰॥

## तथा चान्यार्थदर्शनम्॥ १८॥

अन्यार्थमपि वाक्यमेतमर्थं दर्शयति। अष्टाक्षरेण प्रथमायामृचि प्रस्तौति द्व्यक्षरेणोत्तरयोरिति प्रस्तावे भेदं दर्शयति। तथाच, एका वा अस्योत्तमा स्तोत्रीया तामुद्गृह्योद्गायेदिति उद्गीथभेदं दर्शयति। तस्मादपि प्रत्यृचं गानं कर्त्तव्यमिति॥ अर्धर्चप्रगीतेष्वपि ऋच्येव गानं कर्त्तव्यम्। अपरिपूर्णं तद्वाक्यं अर्धर्चे भवति। ऋचि तु परि-पूर्य्यत इति। पादप्रगीतेषु पाद एव गानं कर्त्तव्यमिति। पाद एव हि तत्परिपूर्णं वाक्यम्। यथा, गोष्ठं वासिष्ठ इति। एवं यावति परिपूर्णं वाक्यं, तावति साम परिसमापयितव्यम्। क्वचित् पादेऽपि पूर्णं व.क्यम् ऋच्यपि क्वचिदर्धर्चेऽपि परिपूर्णम्। यत्र यथा परिपूर्णं, तत्र तथा गातव्यमिति॥ १८॥

## अनवानोपदेशश्च तद्वत्॥ १९॥

अनवानोपदेशश्च तद्वद् युक्तो भविष्यति। यथाऽस्माभिर्न्याय उपदिष्टः। अनवानं गायतीति। शक्यते अनवानं, प्रत्यृचं परिसमाप-यितुम्। न तु तिसृषु व्यासज्ज्य शक्यते॥ अपि च स्वाध्यायकाले प्रत्यृचं गान परिसमापितं, स्वाध्यायकाले चाभ्यासः, प्रयोगकाले कथं प्राशुता स्यादिति। तद्यदि प्रयोगकाले प्रत्यृचं गानं कर्त्तव्यं, ततः स्वाध्यायकाले तदभ्यासो युक्त। तस्मादपि प्रत्यृचं गेय-मिति॥ १९॥ युक्तिः॥

## अभ्यासेनेतरा श्रुतिः॥ २०॥

अथ यदुक्तं, तस्मादेकं साम तृचे क्रियते इति। तासु अभ्यासेन इतरा श्रुतिर्द्रष्टव्या। पर्यायेणेत्यर्थ। न ह्यत्र ऋक् सामनिर्वृत्त्यर्थमु-

पादीयते । तस्माद् न शक्यमिदं वक्तुम् । सामनिर्वृत्तिसाधनीभूना-मृचं त्रिशब्दः परिच्छेत्स्यतीति । साम स्तोत्रस्य गुणभूतं निर्दिश्यते । रथन्तरं पृष्ठं भवति, बृहत् पृष्ठं भवतीत्येवमादि । तत्र प्रत्यृचं न्यायेन गानं प्राप्तं, न सामनिर्वृत्त्या संख्या सम्बद्ध्यते । किं तर्हि । ऋग्भि । तत्रान्यथा नावकल्पते इति अभ्यासो लक्ष्यते । तिसृष्वभ्यसितव्यं सामेति । यथा, त्रिषु कुलेषु देवदत्तो भोजयितव्य इति । यदा त्रिसंख्या कुलैः सम्बद्ध्यते, तदाऽभ्यासो लक्ष्यते । एवमिहापि द्रष्टव्यम् । तस्मात् प्रत्यृचं परिसमाप्तं गानं कर्त्तव्यमिति ॥ २० ॥ ॥ आ० नि० ॥ तृचे प्रत्यृचं कृत्स्नसाम्न समापनाधिकरणम् ॥ ३ ॥

## तदभ्यासः समासु स्यात् ॥ २१ ॥

अस्ति ज्योतिष्टोमः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्रैतत् समाम्नायते । तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति । तत्रैतत् समधिगतम् । प्रत्यृचं परिसमाप्तं गेयमिति । इदमन्यत् सांशयिकम् । समासु विषमासु वा गेयम् ? उत समास्वेवेति । किं तावन्नः प्रतिभाति । नियामकस्य शास्त्रस्याभावादनियम इति ॥ एवं प्राप्ते ब्रूमः । समास्वेव गेयं, न नानाच्छन्दस्कास्विति । किमेवं भविष्यति । गीतेः संशर-विलेशौ न भविष्यतः । यदि न्यूनच्छन्दस्का ऋच उपादास्यामहे, गीतिं संश्रृणीयाम । अथ अधिकच्छन्दस्काः, ततो गीतिं विलेशयाम । उभयथा चार्थं बाधेमहि । समासु तु उपादीयमानासु न किञ्चिद् दुष्यति । तस्मात् समासु गानं कर्त्तव्यमिति । अपिच त्रिशब्दोपचारः समासु युक्तो भविष्यति । समाने हि कस्मिंश्चिदाश्रीयमाणे सङ्ख्याव्यवहारो भवति ॥ २१ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ २२ ॥

लिङ्गं खल्वप्यस्मिन्नर्थे पश्यामः । स्थाल्यां सक्तवधीयते सम्भवतीत्याहुः, यद् बृहद् गायत्रीषु क्रियते ऋक्त्वेनान्तरुजतीति, न चास्यां सम्भवतीति विच्छन्दस्कासु दोषं ब्रुवन् समानच्छन्दस्कासु गानं दर्शयति ॥२२॥ युक्तिः ॥ समास्वेव तिसृषु ऋक्षु गानाधिकरणम् ॥४॥

## नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥ २३ ॥

ज्योतिष्टोमे समामनन्ति । रथन्तरमुत्तरयोर्गायति, बृहदुत्तरयोर्गायति, कवतीषु रथन्तरं गायति, यद्योन्यां गायति, तदुत्तरयो-

गायतीति । तत्रैतत् समधिगतम् । समासु गेयमिति । अथेदानीमिदं संदिह्यते । किं योन्युत्तरयोर्वा, उत्तराग्रन्थसमधीतयोर्वा गेयम् ? उतोत्तराग्रन्थसमधीते एव उपादातव्ये इति । किं प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति । एवं प्राप्ते ब्रूमः । नैमित्तिकं तूत्तरात्वमुत्तराग्रन्थसमधीतासूपपद्यते इति । कुत । समाख्यानात् । प्रकृतत्वाच्चोत्तराग्रन्थसमधीतानाम् ॥ आह । द्वाभ्यामपि समाख्याप्रकरणाभ्यां वाक्यं बलीयस्तस्मादनियम एव प्राप्नोति । अत्रोच्यते । सर्वे हि सम्बन्धिशब्दा· पदान्तरमनपेक्षमाणा न कञ्चिदप्यर्थमाहु· । तस्मादपेक्षितं पदान्तरं, तत् प्रकृतं सन्निहितं वा । इतरथा अपरिपूर्णार्थं वाक्यमनभिधायकमेव कस्यचिदर्थस्य स्यात् । संज्ञासंज्ञिग्रहणे न पुन पदान्तरमपेक्षते । श्रुत्यैव परिपूर्णार्थो गृह्यते । तस्मान्न सम्बन्धिशब्दोऽध्यवसानीयः । उत्तरासंज्ञैवोपादातव्येति । न हि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्य्यमपेक्षितव्यं भवति ॥ २३ ॥ सि० ॥

## ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

तास्वेव चोत्तराग्रन्थसमधीतासु साम अभ्यसितव्यम् । एवमेकार्थता तृचशब्दस्य भविष्यति । एकं कञ्चित् सामान्यविशेषमाश्रित्य तृचशब्दमुपचरन्ति । एतदेवमुक्तम् । यद्विशेषे कस्मिंश्चित् संख्या भवति, इतरथा हि सर्वत्र सर्वसंख्या भवेयु' । तथाहि संव्यवहाराभाव· स्यात् । तस्मात् समानच्छन्दस्कासु समानदेवताकासु च तृचशब्दोपचारादुत्तराग्रन्थसमधीता एव ग्रहीतव्या इति ॥ २४ ॥ युक्ति ॥ उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाऽधिकरणम् ॥ ५ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा—

## तदभ्यासः समासु स्यात् ॥ २१ ॥

अस्ति द्वादशाह', द्वादशाहेन प्रजाकामं याजयेदिति । तत्र चतुर्थेऽहनि त्रैशोकं नाम साम अतिजगत्यामुत्पन्नम् । अतिजगती, विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रञ्जजनुश्च राजसे । क्रत्वा वरिस्थं वरामुरीमुतोग्रमोजिष्ठं तवसं तरस्विनम् । उत्तरे द्वे बृहत्यौ । तयोः पूर्वा, नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा । सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभि । उत्तरा, समीं

रेभासो अस्वरन्निन्द्रं सोमस्य पीतये । स्वर्पति यदीं वृधे । धृतव्रतो ह्योजसा समूतिभिरिति । तत्रैषोऽर्थः । सांशयिक । किमन्ये अतिजगत्यौ उपादाय समासु गेयम् ? उत ये एव ते उत्तरे बृहत्यौ, एते एव उपादाय विषमास्वेव गातव्यमिति । किं प्राप्तम् । संशयविलेशो मा भूतामित्यन्ये उत्पत्तिजगत्यावुपादाय एतत्साम समास्वेव अभ्यसितव्यमिति ॥ २१ ॥ पूर्व० ॥

## लिङ्गदर्शनाच्च ॥ २२ ॥

लिङ्गं खल्वप्यस्मिन्नर्थे दर्शयति । अतिजगतीषु स्तुवन्तीति । किं लिङ्गम् । अतिजगतीष्विति बहुवचनम् । तस्मादन्ये अतिजगत्यौ उपादातव्ये इति ॥ २२ ॥ युक्ति ॥

## नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥ २३ ॥

नैमित्तिकं तूत्तरात्वमानन्तर्यादुत्तरापाठनिमित्तमानन्तर्ये सति प्रतीयेत । श्रुतिर्हि वाक्याद्बलीयसीति प्रकृतत्वादुत्तरे बृहत्यौ एवमनुग्रहीष्येते । तस्मान्नान्ये आदातव्ये इति ॥ २३ ॥ सि० ॥

## ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

एवञ्च समानदेवताके त्रैशोके तृच इति तृचशब्दोपचारो युक्तो भविष्यति । तस्मादपि नान्ये उपादातव्ये इति । अत्राह । अथ यदुक्तम्, अतिजगतीषु स्तुवन्तीति शब्दोपचारादतिजगतीबहुत्वं दर्शयतीति । तत् परिहर्त्तव्यम् । अत्रोच्यते । तदभ्यास एव द्रष्टव्य । षोडश्यभ्यासः । एकविंशः षोडशी इति एकविंशतिकृत्व षोडशिनि अभ्यस्यमाने त्रैशोकाभ्यासः । तत्र सप्तकृत्वोऽतिजगत्यामभ्यस्यमानायामतिजगतीषु स्तुवन्तीति वचनमुपपत्स्यते इति ॥ २४ ॥ युक्तिः ॥ अतिजगत्यामभ्यस्यमानायां त्रिशोकगानाधिकरणम् ॥ ९ ॥ द्वितीयवर्णकम् ॥ २ ॥

## प्रागाथिकं तु ॥ २५ ॥

ज्योतिष्टोमे श्रूयते, बृहत् पृष्ठं भवति रथन्तरं पृष्ठं भवतीति । रथन्तरस्य योनिर्बृहती, अभि त्वा शूर नोनुमो दुग्धा इव धेनव. । ईशानमस्य जगत' स्वर्दृशमीशानमिन्द्र तस्थुष । उत्तरा पङ्क्तिः, न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे । बृहतो योनिर्बृहत्येव,

त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वत । उत्तरा पङ्क्तिरेव, स त्वं नश्चित्र वज्रहस्त धृष्णुया महःस्तवानो अद्रिवः । गामश्वं रथ्यमिन्द्र सङ्किर सत्रा वाजन्न जिग्युषे इति । तयोर्वैच्छन्दस्कं गानमाम्नायते, न वै बृहद्रथन्तर-मेकच्छन्दो यच्चैतयोः पूर्वा बृहती ककुभावुत्तरे इति ॥ तत्रायमर्थः सांशयिकः । किमन्ये उत्पत्तिककुभावागमय्य गातव्यम्, उत, याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिस्तयो प्रग्रथनेन तृचकर्म कृत्वा ककुभावुत्तराकारं गानं कर्त्तव्यम् ? इति । किं प्राप्तम् । उत्पत्तिककु-भावागमयितव्ये इति । कुतः । एवमन्यासां ककुभामुत्पत्तिरर्थवती भविष्यति, यदि ताः ककुप्कार्य्ये प्रयुज्यन्ते ॥ आह । ननु वाचस्तोमे तासामर्थवत्ता भविष्यति । उच्यते । सत्यमर्थवत्ता तत्र भविष्यति । ककुप्कार्य्यार्थताऽपि तु गम्यते । सा नापह्नोतव्येति ॥ एवं प्राप्ते ब्रूमः । प्रागाथिकं तु । तुशब्दः पक्षं व्यावर्त्तयति । प्रागाथिकं सामगानं कर्त्तव्यमिति । याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिस्तयोः प्रग्रथनं कर्त्तव्यम् । एवं हि स्मरन्ति । काकुभः प्रगाथ इति । आह । ननु ककुभि अनाद्यायां काकुभ इति न प्राप्नोतीति । उच्यते । तस्येदमिति, तत्र भव इति वा न दोषः ॥ २५ ॥ सि० ॥

## स्वे च ॥ २६ ॥

एवञ्च स्वे च्छन्दसि गानं कृतं भवति । उत्तरापाठेन हि अत्रैषा पङ्क्तिरुपदर्शिता तृचकर्मणि । तत्र प्रकृतहानं अप्रकृतप्रक्रिया च न कृता भविष्यति । तस्मादपि तयोः प्रग्रथनं कर्त्तव्यमिति ॥ २६ ॥

## प्रगाथे च ॥ २७ ॥

एवञ्चात्र प्रगाथशब्द उपपन्नो भवति । प्रकर्षं हि प्रशब्दो द्योत-यति । प्रकर्षेण यत्र गानं, स प्रगाथः । कश्च प्रकर्षः । यत् किञ्चित् पुनर्गायति । तस्मादपि प्रकृतयो प्रग्रथनं कर्त्तव्यमिति ॥ २७ ॥

## लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अव्यतिरेकेण च सर्वत्र लिङ्गं दर्शयति । कथमिदमव्यतिरेकेणे-ति । यत् प्रकृतयोरेव प्रग्रथनमुपपद्यते, न प्रकृतव्यतिरेकेणेति । किं लिङ्गं भवति । एवमाह । एषा वै प्रतिष्ठिता बृहती या पुन पदा तद्य-त्पादं पुनरारभते तस्माद् वत्सो मातरमभि हिङ्करोतीति । पुनः

पादारम्भः प्रग्रथने उपपद्यते, नान्यथा । तस्माद्याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्त्तव्यमिति ॥ २८ ॥ युक्तिः ॥ बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् ॥ ६ ॥ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा—

## प्रागाथिकं तु ॥ २५ ॥

अस्ति ज्योतिष्टोमः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा, गायत्रामहीयवे गायत्रे तृचे भवतो रौरवयौधाजये बार्हते तृचे औशनसमन्त्यं त्रिष्टुप्स्विति । यदेतद् रौरवं यौधाजयञ्च द्वे सामनी, तयोः पूर्वा बृहती । पुनान सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः । उत्तरा विष्टारपङ्क्तिः । दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् । आपृच्छ्य धरुणं वाज्यर्षति नृभिर्धौतो विचक्षणः । तदत्र संशयः । किमन्ययोरुत्पत्ति–बृहत्योरागमं कृत्वा समासु गानं कर्त्तव्यम्, उत, याऽसौ पूर्वा बृहती, उत्तरा च विष्टारपङ्क्तिस्तयोः प्रग्रथनेन तृचकर्म कृत्वा बृहतीकारं गानं कर्त्तव्यम् ? इति ॥ किं प्राप्तम् । अन्ये बृहत्यावागमयितव्ये इति । कुतः । एवमृचामुत्पत्तिरर्थवती भविष्यतीति ॥ एवं प्राप्ते ब्रूमः । प्रागाथिकं तु तुशब्दः पक्षं व्यावर्त्तयति । प्रागाथिकं सामगानं कर्त्तव्यं, नोत्पत्तिबृहत्यावागमयितव्ये । प्रकृतयोरेव प्रग्रथनं कर्त्तव्यम् । एव हि स्मरन्ति । बार्हतः प्रगाथ इति । उत्पत्तिबृहत्योरानीयमानयोः प्रगाथो न स्यात् । तत्र स्मृतिर्बाध्येत । तस्मात् प्रकृतयोः प्रग्रथनं कर्त्तव्यमिति॥२५॥सि०॥

## स्वे च ॥ २६ ॥

एवञ्च स्वे च्छन्दसि प्रकृते गानं भविष्यति, न प्रकृतहानमप्रकृतप्रक्रिया । तस्मादपि नान्ये बृहत्यौ आगमयितव्ये इति ॥ २६ ॥

## प्रगाथे च ॥ २७ ॥

एवञ्च प्रगाथशब्द उपपन्नो भविष्यति । स हि प्रकर्षे गानस्य भवति । प्रकर्षश्चेह पुनःपादे उपादीयमाने भवति । तस्मादपि नान्ये बृहत्यौ उपादातव्ये इति ॥ २७ ॥

## लिङ्गदर्शनाच्च्यतिरेकाच्च ॥ २८ ॥

अव्यतिरेकेण च लिङ्गं दर्शयति । किं लिङ्गं भवति । एवमाह, षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति । कथं कृत्वा लिङ्गम् । यदि प्रग्रथनेन बृहतीकारङ्गानं क्रियते, ततः सर्वस्मिन् सवने या ऋचः समाम्नातास्ताः षष्टिर्भवन्ति । इतरथा उत्पत्तिबृहत्योरानीयमानयोरभ्यधिका भवेयुः । तादिदं निर्दिश्यते, गायत्रामहीयवे गायत्रे तृचे भवतः । ता षड्गायत्र्यः । रौरव-यौधाजये बार्हते, ता अपि षड्बृहत्यः । औशनसमन्त्यं त्रिष्टुप्सु । ता अपि तिस्रस्त्रिष्टुभः । अथ होतुः पृष्ठे बृहति रथन्तरे वा सप्तदशस्तोमे क्रियमाणे पञ्च बृहत्यो भवन्ति । द्वादश च ककुभ ॥ कथम् ? । एषा हि तत्र तत्र विष्टुतिः । पञ्चभ्यो हिङ्करोति, स तिसृभिः, स एकया स एकया । पञ्चभ्यो हिङ्करोति, स एकया, स तिसृभिः, स एकया । सप्तभ्यो हिङ्करोति स एकया, स तिसृभिः, तिसृभिरिति ॥

तत्र बृहतीभिस्तिसृभिः प्रथममेकया च ककुभा, पुनश्चैकया ककुभा । ततः पुनरेकया बृहत्या तिसृभिः ककुब्भिः, एकया च ककुभा । एवं चतस्रो बृहत्यः षट् ककुभः । ततः पुनः, एकया बृहत्या, पुनश्च तिसृभिः ककुब्भिः, पुनश्च तिसृभिः ककुब्भिरिति । एवं पञ्च बृहत्यो द्वादश ककुभ इति । ताभिश्च बृहतीभिः सहैकादश बृहत्यो भवन्ति । ततः षण्णां गायत्रीणां चतस्रो गायत्र्यो द्वादशभिः ककुब्भिर्द्वादश बृहत्यो भवन्ति । एवं त्रयोविंशतिर्बृहत्यः । ततो वामदेव्ये सप्तदशाका गायत्र्यः । पावमानीभ्यां द्वाभ्यां गायत्रीभ्यामवशिष्टाभ्यां सहैकोनविंशतिर्गायत्र्यो भवन्ति । ततो नौधसकालेययोरेकत्र सप्तदश बृहत्यः, एकत्र सप्तपञ्चाशता गायत्रीपादैः सह सप्तपञ्चाशद् बृहत्यः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति । पावमानीभिस्त्रिष्टुब्भिः सह षष्टिस्त्रिष्टुभ इति सिद्धं भवति ॥ अथ बृहद्रथन्तरयोरुत्पत्तिककुभोरागमः क्रियते तत्र याः सवने समाम्नाताः, ताः षष्टिर्भवन्ति । ये ते द्वे सवने ककुभौ असमाम्नाते आनीयेते, तयोर्द्वादशकृत्वः प्रयोगः । तत्र सा षष्टिः पूर्यते । यास्ता ऋचः सवने समाम्नातास्ता इह सवनशब्देन उच्यन्ते, न कर्म्मणि सवनशब्दप्रयोगः । तत्र हि त्रिषु सवनेषु बह्व्यस्त्रिष्टुभो भवेयुः, न षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति । तस्माद्याऽसौ पूर्वा बृहती उत्तरा च विष्टारपङ्क्तिस्तत्र प्रगाथं कृत्वा गा-

तव्यमिति ॥ २४ ॥ युक्ति ॥ बृहतीविस्तारपङ्क्त्योः प्रग्रथनेन रौरव यौधाजयसाम्नोर्गानाधिकरणम् ॥ ६ ॥ द्वितीयवर्णकम् ॥ २ ॥

एवं वा—

प्रागाथिकं तु ॥ २५ ॥

पञ्चच्छन्दा आवाप आर्भवः पवमान सप्तसामा, गायत्रसंहिते गायत्रे तृचे भवत, श्यावाश्वान्धीगवे आनुष्टुभे, उष्णिहि सफ, ककुभि पौष्कलं, कावमन्त्यञ्जगतीष्विति । यदेतत्, श्यावाश्वमान्धीगवञ्च द्वे सामनी, तयो. पूर्वा अनुष्टुप्, पुरोजिती वो अन्धसः सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वम् । उत्तरे द्वे गायत्र्यौ, यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्य । तं दुरोषमभी नरः सोमं विश्वस्या धिया । यज्ञं हिन्वन्ति अद्रिभिरिति । तत्रैषोऽर्थः सांशयिकः । किमन्ययोरुत्पत्त्यनुष्टुभोरागमं कृत्वा समासु गानं कर्त्तव्यम् ? अथ वा याऽसौ पूर्वाऽनुष्टुप्, उत्तरे च गायत्र्यौ, तयोः प्रग्रथनेन तृचकर्म्म कृत्वा अनुष्टुप्कारं गानं कर्त्तव्यम् ? इति ॥ किं प्राप्तम् । अन्ये अनुष्टुभावागमयितव्ये इति । कुत एतत् । एवं तासामुत्पत्तिरर्थवती भविष्यति । एवं प्राप्ते ब्रूम । प्रागाथिकं तु । प्रागाथिकं गानं कर्त्तव्यम् । एवं हि स्मरन्ति । अनुष्टुभ प्रगाथ इति । प्रगाथता स्मर्य्यमाणा नापह्नोतव्या ॥२५॥सि०॥

स्वे च ॥ २६ ॥

एवं स्वे गानं भविष्यति । तत्र प्रकृतमनुग्रहीष्यते । नाप्रकृतप्रक्रिया भविष्यति ॥ २६ ॥

प्रगाथे च ॥ २७ ॥

प्रगाथशब्दश्चोपपत्स्यते पुन.पादे गीयमाने ॥ २७ ॥

लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अव्यतिरेकेण च लिङ्गं भवति । एवमाह, चतुर्विंशतिर्जगत्यस्तृतीयसवनम्, एका ककुबिति । तन्निर्दिश्यते । पञ्चच्छन्दा आवाप आर्भव. पवमानः सप्तसामा, गायत्रसंहिते गायत्रे तृचे भवतः । ता षड् गायत्र्यस्तिस्रो जगत्यो भवन्ति । श्यावाश्वान्धीगवे आनुष्टुभे, तयोः पूर्वा अनुष्टुप्, उत्तरे गायत्र्यौ । तत्र प्रग्रथनेन क्रियमाणे द्वयोः साम्नो· षडनुष्टुभ ,ताश्चतस्रो जगत्य , पूर्वाभिः सह सप्त । उष्णिहि

सर्फं, ककुभि पौष्कलम् । एकमपि एकस्यामृचि, अपरमप्येकस्याम् । ते द्वे उष्णिक्ककुभौ । सैका जगती । गायत्रीपादैश्च पूर्वाभिः सहाष्टौ जगत्यः । कावे तिस्रो जगत्य । ताभि सहैकादश भवन्ति । एकविंश यज्ञायज्ञीयम् । तत्र पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिः । तत ककुभावुत्तरे कृत्वा प्रगाथः क्रियते । एकविंशे च स्तोमे क्रियमाणे सप्त बृहत्यो भवन्ति । चतुर्दश ककुभ । या सप्त बृहत्यः, ता पञ्च जगत्य. । पूर्वाभिः सह षोडश । एकश्चात्र जगतीपादः । पूर्वेण गायत्रीपादेन सह विंशतिरक्षराणि । अथ चतुर्दशसु ककुप्सु या द्वादश ककुभः, ता सप्त जगत्य । पूर्वाभि सह त्रयोविंशतिः । ये द्वे ककुभौ शिष्टे, सैका जगती गायत्रीपादश्च । पूर्वाभिः सह चतुर्विंशतिर्जगत्य । गायत्रीपादः पूर्वैर्विंशत्यक्षरैः सह ककुब् भवति । एवं प्रगाथे क्रियमाणे चतुर्विंशतिर्जगत्य । एका च ककुप् । अथ प्रगाथो न क्रियते, तत. श्यावाश्वान्धीगवयोरुत्तरत्रानुष्टुभोरागमाद् यज्ञायज्ञीये उत्पत्तिककुभोरागमान्नैषा संख्या सम्पद्यते । तस्मात् प्रग्रथनेन गानं कर्त्तव्यमिति ॥ २८ ॥ युक्ति. ॥ अनुष्टुब्गायत्र्योः प्रग्रथनेन श्यावाश्वान्धीगवयोर्गानाधिकरणम् ॥६॥ तृतीवर्णकम् ॥३॥

एवं वा— गवामयने ब्रह्मसाम प्रकृत्य समामनन्ति । चतु शतमैन्द्रा बार्हताः प्रगाथास्त्रयस्त्रिंशतं च सतोबार्हतास्त्रिका इति । तत्र सन्देहः । किं द्वयोर्द्वयोर्ऋचोः प्रगाथं कृत्वा गातव्यम् ? उत तिसृषु ऋक्षु गातव्यमिति । किं प्राप्तम् । तिसृषु ऋक्षु इति । कुत । एवं प्रकृतौ श्रूयते तस्मादेकं साम तृचे क्रियते इति । तदिह चोदकेन प्राप्तम् । तस्मात्तिसृषु गातव्यमिति । एवं प्राप्ते ब्रूमः—

**प्रागाथिकं तु ॥ २५ ॥**

**स्वे च ॥ २६ ॥**

**प्रगाथे च ॥ २७ ॥**

द्वयोर्द्वयोर्ऋचोर्गेयम् । एवं स्वे गानं कृतं भविष्यति । कस्मिन् स्वे । प्रगाथे । कथं प्रगाथः स्व. । विहितो हि गवामयने ब्रह्मसाम प्रकृत्य । तस्माद् ब्रह्मसाम्न स्व प्रगाथः । प्रगाथशब्देन च वचनात् स्वः प्रगाथ इत्युच्यते ॥ २५ ॥ २६ ॥ २७ ॥ सि० ॥

**लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥**

भवति हि लिङ्गदर्शनं, पञ्चसुमाः सुबार्हताः प्रगाथा आप्यन्ते इति । तच्च प्रग्रथने युज्यते, न तृचगाने । कथम् । चतुरुत्तरं हि शतं ते प्रगाथा. । तत्र बृहद्रथन्तरयोर्ज्योतिष्टोमे प्रगाथद्वयम् । नौधसकालेययोरपि । तत्रैव प्रगाथद्वयम् । इन्द्रक्रतु. प्रगाथ उत्तरस्मिन् यक्षसि भवति । त एते नवनवतिः प्रगाथा शिष्टा अभिप्लवेषु कर्त्तव्याः । पृष्ठेषु सतोबृहत्यो विधीयन्ते । अभिप्लवानां तृतीये दिवसे सतोबृहत्यः । एवमवशिष्टानि अभिप्लवानां शतमहानि । तेषामन्त्ये सतोबृहत्य । अन्येषु नवनवतौ दिवसेषु नवनवति प्रगाथाः । आप्यन्ते इति लिङ्गमप्युपपन्नं भवति । तृचे पुनर्गाने क्रियमाणे षट्षष्टिस्तृचास्त्रिषु सप्ताधिकेषु मासेषु समाप्येरन् । तदेतस्माल्लिङ्गदर्शनात् प्रगाथे गानं कर्त्तव्यमिति मन्यते ॥ आह । अथ कस्मान्न प्रथमतृचे गानं कृत्वा ततस्तस्मात् तृचादेकामृचमादायान्ये द्वे ऋचौ गृहीत्वा तृचे गानं क्रियते ? । तथा हि तृचगानप्राप्ती चोदकोऽनुगृहीतो भवति । लिङ्गञ्चोपपत्स्यते । पञ्चसुमाः सुबार्हताः प्रगाथा आप्यन्ते इति। उच्यते । अव्यतिरेकेण लिङ्गं दर्शयति । अन्या ऋचो भवन्ति । तदेव सामेति । तस्माद् द्वयोर्द्वयोर्ऋचोः प्रगाथं कृत्वा गानं कर्त्तव्यमिति ॥ २८ ॥ युक्ति ॥ पादप्रग्रथनेन ब्रह्मसामगानाधिकरणम् ॥६॥ चतुर्थवर्णकम् ॥ ४ ॥

## अर्थैकत्वाद् विकल्पः स्यात् ॥ २९ ॥

सामवेदे सहस्रं गीत्युपायाः । आह । के इमे गीत्युपाया नाम । उच्यते । गीतिर्नाम क्रिया । सा आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका । सा सामशब्दाभिलप्या । सा नियतपरिमाणे ऋचि च गीयते । तत्सम्पादनार्थं ऋक्षु अक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादय सर्वे समाधिगताः समाम्नायन्ते । तेषु संशयः । किं समुच्चीयन्ते, उत विकल्प्यन्ते इति । किं तावन्नः प्रतिभाति । सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति । एवं प्राप्ते ब्रूम. । अर्थैकत्वाद्विकल्पः स्यादिति । एकार्था हि गीत्युपायाः । गीतिः कथं निर्वर्त्तेतेति प्रयुज्यन्ते । तत्रान्यतरेण भित्ती गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति । तस्माद्विकल्प इति ॥ २९ ॥ गीतिसंपादकानामक्षरविकारादीनां विकल्पाधिकरणम् ॥ ७ ॥

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥**

क्वचित्कर्मविशेषे श्रूयते, ऋचा स्तुवते साम्ना स्तुवते यदृचा स्तुवते तदसुरा अन्ववायन् यत् साम्ना स्तुवते तदसुरा नान्ववायन् य एवं विद्वान् साम्ना स्तुवीतेति । तत्रायमर्थः सांशयिकः । किमृचा वा स्तोतव्यं, साम्ना वा ? उत साम्नैवेति । किं तावत् प्राप्तम् । विकल्प । ऋचा वा साम्ना वा । भिन्नमिदं वाक्यं दृश्यते । यदृचा स्तुवते तदसुरा अन्ववायन्निति । ऋचा स्तवे क्रियमाणेऽसुरा अन्ववगता इति । परिपूर्णमेतावति वाक्यं पश्यामः । एवमर्थमिदं सङ्कीर्त्यते । कथं नाम गम्यते ऋचा स्तोतव्यमिति । किमर्थम् । यस्मिन् कर्मविशेषे श्रूयते, तस्याङ्गं यथा स्तात् । तच्च प्रयोगसामर्थ्यात् प्रयोगवचनेन गम्यते इति ॥ नन्वसुरसङ्कीर्त्तनान्निन्दैषा । नेत्याह । न वयं निन्दितान् अनिन्दितान् वा असुरान् विद्म । सङ्कीर्त्तनात् कर्त्तव्यताम व्यवस्यामः । एवं साम्ना स्तुवते इति पृथग्वाक्यम् । तस्माद्विकल्प । ऋक्सामयोः स्तुत्यर्थत्वादुभयोरप्येकं कार्य्यम् । स्तुतिर्हि निर्वर्त्तयितव्येति, तदन्यतरेण सिद्ध्यतीति विकल्पः ॥ ३० ॥ पूर्व० ॥

**वचनाद्विनियोगः स्यात् ॥ ३१ ॥**

नैतदस्ति, विकल्प इति । साम्नो विनियोग स्यात् । कुतः । तस्येह विनियोजकं वचनमस्ति । यदृचा स्तुवते तदसुरा अन्ववायन् । य एवं विद्वान् साम्ना स्तुवीतेति साम्ना स्तुतिः प्रशस्यते प्रत्यक्षेण प्रशंसावचनेन । इतरथा कल्प्या स्यात् । ऋचा स्तवने असुरा अनुगताः । तस्माद् ऋचा स्तोतव्यमिति । अथ साम्ना स्तवः प्रशस्यते, ततो यदृचा स्तुवते तदसुरा अन्ववायन्नितीतरप्रशंसार्था निन्दैषा न किञ्चिद् विकल्पयिष्यते इति । कथं निन्दावचनमेतदिति गम्यते । इतरस्तुतिवचनात् । तस्मात् साम्नैव स्तोतव्यमिति ॥ ३१ ॥ ॥ सिद्धान्तः ॥ ऋचा स्तुवते साम्ना स्तुवते इति विधिना साम्नैव स्तवविधानाधिकरणम् ॥ ८ ॥ प्रथमवर्णकम् ॥ १ ॥

**अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥**

क्वचित् कर्मविशेषे श्रूयते । अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते इति । अत्रायमर्थः सांशयिकः । किमप्रगीतया उपस्थातव्यम्, उत प्रगीतयेति । किं प्राप्तम् । प्रगीतया अप्रगीतया वा ।

कुतः । अविशेषोपदेशात् । प्रगीताऽप्यसौ इयमेव ऋक् । अप्रगीताऽपीयमेव। उभयथा हि तां समामनन्ति । तस्मान्न विशेष आदर्त्तव्य इति।न चेद्विशेष , स्तुतिपरत्वादृक्सामयोर्विकल्प इति ॥३०॥ पूर्व०॥

एवं प्राप्ते ब्रूम —

वचनाद्विनियोगः स्यात् ॥ ३१ ॥

प्रगीतैव विनियुज्येत, नाप्रगीता । कुतः । वचनात् । किं वचनम् । अयं सहस्रमानव इत्येतया इतिप्रकृतवचनशब्द । प्रगीता च सामवेदे प्रकृता । सा, एतया इति सम्बद्ध्यते । नन्वप्रगीताऽपि तत्र पठ्यते । सत्यम् । प्रगाणसम्बन्धार्था तु सा । न ह्यपठितायां प्रगाणं शक्यते कर्त्तुमिति ऋक् सामार्थे । ऋचोऽध्ययनं सामार्थं गम्यते । न ह्यन्तरेण ऋचं, सामनिर्वृत्तिर्भवति । अन्तरेणापि तु साम, ऋक् निर्वर्त्यते । न ऋक् साम आकाङ्क्षते इति । तस्मादेवं सामवेदे, उपतिष्ठते वा, स्तौति वेत्युक्ते प्रगीतायामेव ऋचि सम्प्रत्ययो भवति, नाप्रगीतायाम् ॥

आह । यदि प्रगीतायां सम्प्रत्ययः प्रकरणाद्, वचनादप्रगीतायाम् । अप्रगीताऽपि हि शाखान्तरे समाम्नायते । सा प्रकरणं बाधित्वा वाक्येन गृह्येतेति । उच्यते । न वाक्येन ऋक् गृह्यते । प्रतीकग्रहणं ह्येतत् । अयं सहस्रमानव इत्येतयेति पुनः प्रकृताया ऋचो वाचको मुख्य ऋक्शब्दः । त्वत्पक्षे प्रतीकग्रहस्य लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मात् प्रगीतया उपस्थातव्यमिति ॥ ३१ ॥ सिद्धान्तः ॥ अयं सहस्रमानव इत्यृचा प्रगीतयैव आहवनीयोपस्थानाधिकरणम् ॥ ८ ॥ द्वितीयवर्णकम् ॥ २ ॥

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥३०॥

इह केचित् त्रैस्वर्य्येणाम्नायन्ते, केचिच्चातुःस्वर्य्येण । आह। ये इमे चातुःस्वर्य्येणाधीयन्ते, किं ते, उदात्तानुदात्तस्वरितेभ्योऽधिकमपरं स्वरं कुर्वन्ति ? नेत्याह । तेषामप्येते एव स्वरा , येऽन्येषाम् । किं नु कुर्वन्ति । एकं स्वरान्तरमुत्क्रम्याधीयन्ते । तत्र सन्देहः । किं समुच्चयस्त्रैस्वर्य्यादीनाम्, उत विकल्प इति । किम्प्राप्तम् । सर्वाङ्गोपसंहारित्वात् प्रयोगवचनस्य, समुच्चय इति । एवम्प्राप्ते ब्रूमः । अर्थैकत्वाद्विकल्पः स्यात् । एकोऽर्थः सर्वेषां त्रैस्वर्य्यादीनामध्ययननिर्वृत्तिः । तस्माद्विकल्पः ॥ ३० ॥ पूर्व० ॥

## वचनाद्विनियोगः स्यात् ॥ ३१ ॥

वचनमिदं भवति स्मृत्यनुमितम् । तानो यज्ञकर्म्मणि इति । तस्मात्तानेन प्रयोग. कर्त्तव्यः । अथ त्रैस्वर्य्यादीनां किमर्थं समाम्नानमिति । उच्यते । अर्थावबोधनार्थं भविष्यति ॥ ३१ ॥ सिद्धान्तः ॥ अग्निर्मूर्द्धेत्यादियाज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम् ॥ ८ ॥ तृतीयवर्णकम् ॥ ३ ॥

## सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्॥३२॥

इदमाम्नायते, रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति, ककुतीषु रथन्तरं गायति, विराट्सु वामदेव्यमिति । तत्र सन्देहः । किमुत्तरावर्णवशेन गातव्यं, किं योनिवर्णवशेन ? । कथमुत्तरावर्णवशेन गीतं भवति ? कथं वा योनिवर्णवशेनेति । उच्यते । किञ्चिदुदाहरणं गृहीत्वा व्याख्यास्यामः । यदा तावद् वृद्धं तालव्यमाई भवति इति योनौ यस्मिन् भागे आईभाव कृतस्तस्मिन्नेव भागे उत्तरासु आईभाव. क्रियते । ततो योनिवर्णवशेन गीतं भवति । अथ भागान्तरे वृद्ध तालव्यं दृष्ट्वा आईभाव क्रियते, तत उत्तरावर्णवशेन गीतं भवति ॥

किं पुनरत्र कर्त्तव्यम् । योनिवर्णवशेनेति । कथम् । यावति भागे एकारस्य योनौ आईभाव. कृतस्तत्र विचारयाम.। किं तत्र कृतमिति । एकारो नोच्चारित., ईकाराकारौ आगमिताविति । एवञ्चेदुत्तरास्वपि तावत्येव भागे यो वर्ण., स नोच्चारयितव्य । ईकाराकारौ आगमयितव्याविति । एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति । तस्माद्योनिवर्णवशेन गातव्यमिति । अपिचैवं गीतिर्न प्रणङ्क्ष्यति, इतरथा क्वचित् प्रणश्येद् यत्र महती गीतिरल्पेषु अक्षरेषु गीयते । तत्र व्यक्तं प्रणश्यति यद्युत्तराक्षरवशेन क्रियते । तस्माद्योन्यक्षरवशेन कर्त्तव्यम् ॥ अपिच क्वचिदुपरुध्यते यत्राक्रमे आईभावभाग्वर्ण । आर्षञ्च क्वचिदुपरुद्ध्यते। यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकालं गानमविरुद्धं कर्त्तव्यम । तस्माद्योन्यक्षरवशेन कर्त्तव्यमिति सामप्रदेशे विकार आईभावादि । तदपेक्षो योन्यपेक्षः । एतत्, शास्त्रेण कृतं, यद्योन्यां तदुत्तरयोरिति । यावति सामभागे योनौ आईभाव कृतस्तावत्येवोत्तरासु कर्त्तव्यः ॥ ३२ ॥ पूर्व० ॥

**वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥**

उत्तरावर्णवशेन कर्त्तव्यं बादरिर्मन्यते स्म, न योनिभागवशेन । कुत. । योऽसौ प्रकृतौ आईभाव कृतो, नासौ आगम. । न च तत्र एकारलोप । किं तर्हि एकारो नाम अवर्णम् इवर्णञ्च । अवर्णं संवृ-तम्, इवर्णं विवृतम्,उभे अपि च दीर्घे । ताभ्यामसाधुभ्यां सन्ध्यक्षरं साधु जन्यते । तत्र प्रकृतौ अकारेकारौ विश्लेषितौ, नाऽपूर्वा-वागमितौ । गुणस्तु तयोः कश्चिदपूर्वं कृत. । सर्वत्रात्र प्रमाणं प्रत्यक्षम् । तद्यत्र, तावति भागेऽन्यो वर्णो भवति, न सन्ध्यक्षरं, तत्र संश्लेषाभावे विश्लेषो न शक्य. कर्त्तुम् । अन्यस्मिन् भागे यत्र सन्ध्यक्षरं भवति, तत्र तद्वशाद्विश्लेष. क्रियते । एवं, यद्योन्यां तदुत्त-रयो. कृतं भवति । योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः । इहापि सं-श्लिष्टयोर्विश्लेष' । इतरथा व्यतिरिक्तं कल्पितं स्यात् ॥ अथ यदु-क्तं, गीति प्रणङ्क्ष्यतीति । न प्रणङ्क्ष्यतीति । विनामं कृत्वा अनक्षरं गायिष्यते । संश्लेषाभावाच्चाशक्यो विश्लेषः कर्त्तुम् । आर्षक्रमौ नो-परोत्स्येते ॥ ३३ ॥ सिद्धान्त' ॥ रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरा-वर्णवशेन गानाधिकरणम् ॥ ९ ॥

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४॥**

कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति. यद्योन्यां तदुत्तरयोर्गायतीति । तत्रोत्तरावर्णवशेन गातव्यमित्येतत्समधिगत-म् । अथेदानीमिह सन्दिह्यते । किं स्तोभाः प्रदिश्यन्ते, न ? इति । किं प्राप्तम् । न प्रदिश्यन्ते इति । कुतः । गीतिर्हि साम, न स्तोभाः । या गीति सा प्रदिश्यते । यद्योन्यां तदुत्तरयोर्गायतीति गायतिशब्द-सम्बन्धात् । अपि च दिक्शब्दार्थैरसम्बध्यमानः स्तोभोऽनर्थकः स्यात् । तस्मादपि न प्रदिश्येत । अपिच क्वचिद् भवति वचनम् । ऐन्द्र्यामवभृथसाम गायतीति । तत्रानुपपत्तिर्भवेत् । शीतकर्मा हीन्द्रोवाक्यशेषेभ्योऽवगम्यते । तस्य तपतीत्यनेन सम्बन्धो न स्यात् । तस्मात् स्तोभस्य ऋगन्तरं निवृत्ति । यथा ऋगक्षराणामगीति-त्वान्निवृत्तिरेवं स्तोभाक्षराणामपीति ॥ ३४ ॥ पूर्व० ॥

**सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥**

नैतदस्ति, स्तोभानां निवृत्तिरिति । सर्वातिदेशो हि भवति ।

ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टाया गीतेः सामशब्दो वाचक । कथमवगम्यते । तत्र प्रयोगात्। यदि स्तोभा निवर्त्तेरन्, तत्कृतो विशेषो नोपसंगृहीत स्यात्। तत्र शब्दो बाध्येत। तस्मात् स्तोभाः प्रदिश्येरन्। यत्तूक्तम्, ऋक्शब्दार्थैरसम्बद्ध्यमाना स्तोभा अनर्थका भवेयु। अत्र ब्रूम। लोकवन्न अनर्थका भविष्यन्ति। तद्यथा लोके गायनैरङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते तानि गीतिकालगणनाऽर्थानि, नार्थसम्बन्धायोच्चार्यन्ते। सुखं ह्यक्षरैर्गीतिकालः परिच्छिद्यते । तद्वद् इहापि कालपरिच्छेदार्थानि स्तोभाक्षराण्यनुवर्त्तेरन्निति ॥ ३५ ॥ सि० ॥

## अन्वयश्चापि दर्शयति ॥ ३६ ॥

अन्वयतश्चापि स्तोभान् दर्शयति। यत्रार्च्चिकानि पदानि निवर्त्तन्ते, स्तोभा गेह्माश्चानुयन्तीति। स्तोभाः स्तोभा एव। गेह्माः स्वरा । तस्मादपि स्तोभाः प्रदिश्यन्ते ॥ ३६ ॥ युक्ति. ॥

## निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥

वाशब्दात् पक्षो विनिवर्त्तते। निवृत्तिः, अभिप्रपतीत्येवञ्जातीयकाना स्तोभानाम्। शीतकर्मा हीन्द्रो वाक्यशेषे उपलभ्यते। न तेनैवञ्जातीयका. स्तोभा. सम्बद्ध्येरन्निति। अन्वयात् सम्बद्ध्यन्ते लोकवदिति यदुक्त, तत् परिहर्त्तव्यम् ॥ ३७ ॥ आ० ॥

## अन्वयो वार्थवादः स्यात् ॥ ३८ ॥

अन्वीयुर्वा एवञ्जातीयका स्तोभाः। न हि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे। यच्च वाक्यशेपवचन, सोऽर्थवाद. ॥ ३८ ॥ आ० नि० ॥ उत्तरयोः स्तोभातिदेशाधिकरणम् ॥ १० ॥

## अधिकश्च विवर्णश्च जैमिनिः स्तोभशब्दत्वात् ॥३९॥

अथ क. स्तोभो नाम। तस्य लक्षणं कर्त्तव्यम्। उच्यते। य ऋगक्षरेभ्योऽधिको, न च तैः सवर्ण. स स्तोभो नाम। ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति । तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति । यदर्थवचनेभ्योऽधिकं विवर्णश्च, तद् आलोच्य एवंवक्तारो भवन्ति। लक्षणकर्मण. प्रयोजनं न वक्तव्यम्। लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। किमर्थमुभयं सूत्रितम्? नन्वन्यतरत् पर्याप्तम्, अधिकमिति वा विवर्ण-

मिति वेति । नेत्याह । भवति हि किञ्चिदधिकं, न विवर्णम् । यथा अभ्यासश्चाद्रिश्चाद्रिरिति । तथा किञ्चिद् विवर्णं, नाधिकम् । यथा विकारः, ओग्नाइ इति तस्मादुभयं सूत्रयितव्यमिति ॥ ३९ ॥ स्तोभलक्षणाधिकरणम् ॥ ११ ॥

धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

वाजपेये श्रूयते । बार्हस्पत्यश्चरुं नैवारं सप्तदशशरावं निर्वपतीति । अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणम् । तद्नीवारेषु भवति, न वेति संशयः । तथा, उद्गीथा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः सन्तिष्ठते, न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै ब्रूयात् । संस्थिते षडहे मध्वाशयेद् घृतं वा इति मध्वशने घृताशने च षडहधर्मा भवन्ति वा, न भवन्तीति संशयः । तथा राजसूये श्रूयते, नैर्ऋतश्चरुं नखावपूतानां परिवृत्त्यै ग्रहे इति । अस्ति प्रकृतौ उलूखलमुसलयोः प्रोक्षणम् । प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति । तद् नखेषु भवति, न भवति? इति संशयः । तथा चातुर्मास्येषु श्रूयते । परिधौ पशुं नियुञ्जीतेति परिधौ यूपधर्माः कर्त्तव्याः, न कर्त्तव्याः ? इति संशयः । तथा, स गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति यादात्मानं तदुद्गातोद्गिरेद् ऐरं कृत्वोद्गेयमिति, इरापदे गिरापदधर्मा भवन्ति ? न भवन्तीति संशयः ॥ किं तावत् प्राप्तम् । व्रीह्यादिषु उक्ता धर्म्मा, न नीवारादिषु । तस्मात्तेषु न भवेयुरिति । एवं प्राप्ते ब्रूमः । नीवारादिषु चोदनानुबन्धः स्यात् । समवैति हि तेषु स प्राकृतो धर्म्मः । प्रकृतौ तावदपूर्वप्रयुक्तोऽसौ न व्रीह्यादिप्रयुक्तः । येनापूर्वस्य विशिष्टोऽयं साधनविशेषस्तत्रैव धर्मो, न व्रीह्यादाविति समधिगतमेतत् । नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते । नीवारस्य भावचोदना । नैवारश्चरुः कर्त्तव्य इति । स च नान्येन प्रकारेण नीवारो यागस्योपकरोति, वर्जयित्वा तण्डुलनिर्वृत्तिम् । स प्रत्यक्षेणावगम्यते, व्रीहिकार्य्ये वर्त्तते इति । तस्माद् व्रीहिधर्मा नीवारे भवेयुरिति ॥ एवं षडहेनोपासीतेति चोदनायां सत्यां यदा षडहः सन्तिष्ठते, न षडहेनोपास्यते इत्यर्थः । मधुघृताभ्यामुपासीतेति गम्यते । यस्य भावे यस्य निवृत्तिस्तत्तस्य स्थानेऽवगम्यते । षडहनिवृत्तौ मध्वशनं ब्रुवन् षडहकार्य्ये व-

दृतीति गम्यते । तस्मात् षडहधर्मो व्रतं नियमो वा मध्वशने भवतीति । यागाभावात्तन्निमित्ता ग्रहा न प्रवर्त्तन्ते । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति ग्रहचमसाभावात् स्तोत्राभाव । स्तुतमनुशंसतीति स्तोत्राभावादस्याभाव । सवनाभावात् सवनीया न प्रवर्त्तन्ते, इत्येवमादि न प्रवर्त्तते । व्रतानि नियमाश्च प्रवर्त्तन्ते इति ॥ यच्चान्यदनर्थलुप्तं न नखावपूतानामिति । नान्यथा नखावपूता भवन्ति । यदि न तैस्तुषा विपूयन्ते, तस्मात्तुषविमोचने नखाः श्रुता इति गम्यते । अतश्चोलूखलमुसलधर्म्मैः सम्बद्ध्यन्ते इति ॥

तथा परिधिर्यूपकार्य्ये वर्त्तते इति विस्पष्टमेव वचनं, परिधौ पशुं नियुञ्जन्तीति । तस्मात्तद्धर्म्मक परिधिः स्यादिति ॥ तथा न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमिति नैतौ द्वावपि विधीयेते प्रतिषेध, इरापदश्च । तथा हि वाक्यं भिद्येत । न च, इरापदमप्राप्तत्वादनूद्यते । प्रतिषेधे त्वनुवाद सम्भवति । यदा इरापदं तदा व्यक्तं गिरापदं न भवतीति । एकवाक्यरूपश्च गम्यते । यस्माद्गिरापदस्यायं दोषस्तस्मादिरापदं ब्रूयादिति । भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात् । न ह्यात्मानं गिरेदिति दोषो विधीयते । शरीरं गिरितुमसम्भवः । परमात्मन्यदोषः । वाक्यभेदस्तु स्थित एव । तस्माद् गिरापदोच्चारणमिरापदस्य तत्कार्य्यापत्तिषु दर्शनार्थं, न गिरा गिरेति कृत्वोद्गायेदिति । तस्माद्गिरापदधर्म्मा इरापदे भवेयुरिति सर्वत्र पर्य्यवसितम् । परिधौ अनन्तरा कथा वर्त्तिष्यते ॥ ४० ॥ नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानाधिकरणम् ॥१२॥

## तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥

चातुर्मास्येष्वाम्नायते । मध्यमे पर्वणि परिधौ पशुं नियुञ्जन्तीति । तत्रोक्तं, यूपधर्मा परिधौ कर्त्तव्या इति । तद्विपरिवर्त्तते । ते न कर्त्तव्याः । तदुत्पत्तेः परिधेराहवनीयपरिधानार्थोत्पत्तेर्यूपधर्मा निवर्त्तेरन् । तत्कृता हि ते अपूर्वप्रयुक्तपशुबन्धनद्वारेण अपूर्वं गच्छन्ति । तत्र यद् बन्धनस्याङ्गभूतमिति श्रुत तद् बन्धनार्थमेव द्रव्यमुत्पन्नम् । यच्चाहवनीयपरिधानार्थमुत्पन्नं, तस्मिन् पराङ्गभूते बन्धनं कृतं भवति । न तद्धर्माणां द्वारं भवितुमर्हति । न हि तत्र क्रियमाणाः पशोः कृता भवन्ति । न पाशुकस्य । अपिच सत्वक्कः परिधिरनु-

च्छ्रयश्च यूपधर्मैः परिधित्वाद् हीयेत । यूपायाज्यमानायेति च शब्द ऊह्येत । तत्रायं बाधितः स्यात् । तस्मात् परिधौ यूपधर्मा न स्युरिति ॥ ४१ ॥ पूर्व० ॥

**आवेश्येरन् वार्थवत्त्वात् संस्कारस्य तदर्थत्वात् ॥४२॥**

आवेश्येरन् वा यूपधर्माः परिधौ । बन्धनोपकारसाधने हि विधीयन्ते । यश्च परार्थो बन्धनं नयति निष्पादयति, करोत्यसौ बन्धनोपकारम् । अयञ्च संस्कारो बन्धनं निष्पादयति, तदर्थोत्पत्तिम् अतदर्थोत्पत्तिं वा नापेक्षते । तस्मात्परिधौ यूपधर्माः कर्त्तव्या इति ॥ यदुक्तम्, अनुच्छ्रयश्च सत्वक्कश्च परिधिरिति । अत्रोच्यते । ये परिधित्वाविरोधिनो यूपधर्मास्ते करिष्यन्ते, न विरुद्धा इति ॥ ४२ ॥ सि० ॥

**आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्वत्वात् ॥४३॥**

अथ यदुक्तं, यूपायाज्यमानायेति शब्द ऊहितव्यः स्यादिति । अत्रोच्यते । नोहितव्यो भविष्यति । धर्मावेशाद् आख्या अपि यूप इति भविष्यति । धर्मनिबद्धा हि सा यथैव यूपे, तथा परिधावपि भवितुमर्हति । तस्मान्नोहिष्यते यूपशब्द इति ॥ ४३ ॥ आ० नि० ॥ परिधौ यूपधर्मानुष्ठानाधिकरणम् ॥ १३ ॥

**परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥**

वि वा एनं प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । य स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् । शृते चरुं दधश्चरुमित्येवमुदाहरणम् । तत्रायमर्थः सांशयिकः । किं शृते दध्नि प्रणीता धर्माः कर्त्तव्याः ? उत न कर्त्तव्या इति । किं प्राप्तम् । न कर्त्तव्या इति । परार्थमेतत् प्रदानार्थमिति, न प्रणीतार्थम् । दधि च तण्डुलविभागश्च एको भाग इन्द्राय प्रदात्रे दातव्यः । शृतश्च तण्डुलविभागश्च विष्णवे शिपिविष्टाय, न श्रपणार्थं दधि पयो वा विधीयते । तत्र हि सप्तमीसंयोगोऽनुवाद एव । न च प्रणीताकार्य्यं विधीयते दधि पयो वा । तस्मात् प्रणीतानां धर्मैर्न संयुज्येते । न हि प्रणीतानां दध्नश्च अर्थसामान्यं किञ्चिदस्ति । तदर्थश्चायं संस्कारः, श्रपणद्वारकः । तस्मान्न प्रणीताधर्माः पयसि दधनि

वा भवेयुरिति ॥ ४४ ॥ पूर्वं० ॥

क्रियेरन् वाऽर्थनिर्वृत्तेः ॥ ४५ ॥

नचैतदस्ति, प्रणीताधर्मा दधिपयसोर्न कर्त्तव्या इति । श्रपणसाधने हि ते विधीयन्ते, न श्रपणार्थमुत्पन्ने द्रव्ये, येनार्थो निवर्त्तेत तत्र ते अपूर्वप्रयुक्तत्वात् क्रियन्ते । क्रियते च दधिपयोभ्यां श्रपणम् । तस्मात् तद्धर्मैः संयोग स्यात् ॥ ४५ ॥ सिद्धान्त. ॥ शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

ज्योतिष्टोमे समामनन्ति, बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवतीति । व्यक्तो हि बृहद्रथन्तरयोर्विकल्पः । यस्मिन् कार्य्ये रथन्तरं प्रवर्त्तते तस्मिन्नेव कार्य्ये बृहत्पृष्ठसिद्धिद्वारेण धर्मा विहिताः । तस्माद् बृहद्धर्मा रथन्तरधर्माश्चोभयत्र कर्त्तव्या इति । बृहद्ग्रहणं रथन्तरग्रहणञ्च लक्षणाऽर्थं भविष्यति ॥ ४६ ॥ पूर्वं० ॥

निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

निर्देशाद्वा रथन्तरे रथन्तरधर्मा. कर्त्तव्याः । नोच्चैर्गेयं, न च बलवद् गेयम् । रथन्तरे प्रस्तूयमाने संमीलेत् स्वर्द्दृशं प्रतिवीक्षेतेत्येवमादयः । बृहद्धर्माश्च, बृहति उच्चैर्गेयं, बृहति गीयमाने समुद्रं मनसा ध्यायेदित्येवमादयः । एवं निर्देशोऽर्थवान् भविष्यति । इतरथा रथन्तरग्रहणञ्च बृहद्ग्रहणञ्च प्रदर्शनार्थं स्यात् । तथा लक्षणा भवेत्। न च श्रुतिसम्भवे लक्षणा न्याय्या । यदुच्यते, अर्थैकत्वाद् बृहद्रथन्तरयोरिति । सत्यमेकोऽर्थ. पृष्ठसिद्धि. । एतदप्यस्ति । अन्यथा बृहता साध्यते पृष्ठम् । अन्यथा रथन्तरेणेति । यथा पर्वणि विभज्यमाने द्वावप्युपायौ । यथा द्वौ पुरुषौ अन्तयोर्गृहीत्वा आकर्षतः । यद्वा तीक्ष्णेन शस्त्रेण च्छेदनम् । तत्र यच्छस्त्रस्य तीक्ष्णीकरणं द्रव्यं तच्छेदनाभ्युपाये सम्बद्ध्यते, नाकर्षणाभ्युपाये तदर्थापन्नेऽपि । एवं बृहद्धर्मा रथन्तरे तदर्थापन्ने भवेयुर्वा न वेति जायते विचारणा । तत्र निर्देशसामर्थ्यादिदमवगच्छामः । अन्यथा बृहत्साधयति । अन्यथा रथन्तरमिति । प्रत्यक्षं खल्वपि अन्यदुपलभामहे । रथन्तरं शूरादिकां संस्तुतिं कुर्वत् पृष्ठं साधयति । बृहत् चित्रादिकाम् । तस्माद्रथन्तरधर्माः शूरादिकायां स्तुतौ निबद्धा रथन्तरे प्रस्तूयमाने भवे-

गुर्ने बृहति । बृहद्धर्मा अपि चित्रादिकायां स्तुतौ निबद्धा बृहति भवेयु., न रथन्तरे । तस्माद् व्यवस्था धर्माणामिति ॥ ४७ ॥ सिद्धान्तः ॥ बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

**अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥**

अस्ति वैश्यस्तोमः । वैश्यो वैश्यस्तोमेन यजेतेति । तत्रेदमाम्नायते । कण्वरथन्तरं पृष्ठं भवतीति । तत्रायमर्थः सांशयिक । किं कण्वरथन्तरेऽन्यतरस्य रथन्तरस्य बृहतो वा धर्म्माः कर्त्तव्याः ? उतोभयोरपीति । किं प्राप्तम् । अन्यतरस्येति । कुत । एवं हि उक्तम् । रथन्तरस्य राथन्तरा भवन्ति । बृहतो बृहद्धर्मा इति निर्देशसामर्थ्यादिति । तद्विशेषेऽनुच्यमाने यावदुक्तं तावत् प्राप्तमिति । तस्मादन्यतरस्य धर्माः कर्त्तव्या इत्येवं प्राप्ते ब्रूम । अप्राकृते कण्वरथन्तरे तद्विकाराद् यस्मात् कण्वरथन्तरमुभयो. कार्य्ये वर्त्तते, तस्मादुभयधर्मांल्लभेत । न हि विकृतौ निर्देशोऽस्ति यथा प्रकृतौ । अर्थापत्तित इह भवन्ति । चोदकेन कण्वरथन्तरमुभयोरर्थापन्नम् । तस्मादुभयधर्मांल्लभेत । ये तु विरुद्धा धर्माः, तद्यथा उच्चैर्गेयं बलवद्गेयमित्येवञ्जातीयका विरोधाद् व्यवतिष्ठेरन् । अविरुद्धेषु समुच्चयः ॥ ४८ ॥ कण्वरथन्तरे बृहद्रथन्तरधर्मसमुच्चयाधिकरणम् ॥ १६ ॥

**उभयसाम्नि चैवमेकार्थात्त्वे ॥ ४९ ॥**

सन्ति उभयसामानः क्रतवः । संसव उभे कुर्य्यात् गोसव उभे कुर्य्यात् । अपवितावपि एकाहे उभे बृहद्रथन्तरे कुर्य्यादिति श्रूयते । सन्ति तु प्रकृतौ बृहद्धर्मा रथन्तरधर्माश्च । ते इह चोदकेन प्राप्यन्ते तत्र संशय. । किमुभयसाम्नि उभयधर्मा. कर्त्तव्या ? अथवा इहापि तथैव व्यवतिष्ठेरन्निति । किं प्राप्तम् । उभयसाम्नि चैवं स्यात् । यथा कण्वरथन्तरे । उभे हि अत्र सामनी पृष्ठकार्य्ये वर्त्तेते, नैकैकम् । तस्मान्नैकैकधर्मांल्लभेत । उभे हि अत्र संहते, उभे धर्मैं संयुज्येयाताम् । उभे हि ते संहते, एकार्थापन्ने पृष्ठकार्य्ये वर्त्तेते इति ॥४९॥ पूर्व०

**स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ५० ॥**

वाशब्द पक्षं व्यावर्त्तयति । न चैतदस्ति बृहद्रथन्तरयोः संहतयोरुभये धर्मा कर्त्तव्या इति । रथन्तरे रथन्तरधर्मा बृहति बृहद्धर्मा । कुतः ? । स्वार्थत्वाद् धर्माणाम् । रथन्तरधर्मा रथन्तरार्थाः,

बृहद्धर्मा बृहदर्था । साम्नोश्चैते धर्मा , न पृष्ठस्य । तच्च साम प्रयुज्यते रथन्तरं बृहद्वा । रथन्तरे प्रयुज्यमाने तद्धर्मा. प्रयोक्तव्याः । बृहत्यपि प्रयुज्यमाने बृहद्धर्माः । सामप्रयुक्ता एवैते धर्मा । साम्नापि हि दृष्टमदृष्टञ्च क्रियते । तस्मात् सामापि धर्मप्रयोजने समर्थम् । अतो व्यवस्था धर्माणां प्रकृतिवत् । यथा प्रकृते रथन्तरे प्रयुज्यमाने तदङ्गं प्रयुज्यते । बृहति तदङ्गम् । एवमिहापीति ॥ ५० ॥ सिद्धान्त ॥ द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ॥ १७ ॥

## पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥

स्तो दर्शपूर्णमासौ । तत्रेदं समामनन्ति । स्रुवेण पार्वणौ जुहोतीति । सौर्य्यादिषु वैकृतेषु कर्मसु भवति सन्देह । किं तेषु पार्वणहोमौ कर्त्तव्यौ, न वा ? इति । तत इद तावत् परीक्ष्यम् । किं कालाभीज्या पार्वणहोमौ, उत समुदायाभीज्या ? इति । कालाभीज्यायां तयो प्रवृत्ति । समुदायाभीज्यायामप्रवृत्ति. । कुत. सशय. । उभयत्र प्रसिद्धे । उभयत्र हि पर्वशब्दो लोके प्रसिद्धः काले समुदाये च आ हिमवत आ च कुमारीभ्य । किं तावत् प्राप्तम् । कालाभीज्या इति । तत कालगता प्रसिद्धिर्व्यपदिश्यते ॥ एवं प्राप्ते ब्रूमः । पार्वणयोर्वैकृतेषु कर्मसु अप्रवृत्ति । कुतः । समुदायार्थसंयोगात् । ततः समुदाये प्रसिद्धिर्व्यपदिश्यते । काले प्रसिद्धिं परिहरिष्याम इति । अतः समुदायवाचित्वात् पर्वशब्दस्य समुदायस्याभियष्टव्यत्वाद् वैकृतेष्वप्रवृत्तिरिति ॥ ५१ ॥ सि० ॥

## कालस्येति चेत् ॥ ५२ ॥

इति चेत् पश्यसि, कालस्य पर्वशब्दो वाचक । तस्मात् कालाऽभीज्येति । तत् परिहर्त्तव्यम् । आभाषान्तं सूत्रं परेण विशेष्यते ॥ ५२ ॥ आ० ॥

## नाप्रकरणत्वात् ॥ ५३ ॥

नास्ति कालस्य प्रकरणम्, अस्ति तु समुदायस्य । तस्मात् प्रकरणेन विशेषेण समुदायवाची गृह्यते, न कालवाची । अत्राह । न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुम् । दुर्बलं हि लिङ्गात् प्रकरणम् । उच्यते । नायमुभयत्र पर्वशब्दो वर्त्तते । यदि

कालवचनस्तत्सम्बन्धात् समुदाये गम्यते । यदि वा समुदाये, यदि वा समुदायवचनस्तत्सम्बन्धात् काले। अन्यतरवचनो युक्तो, नोभयवचन । तत्र समुदायवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति ॥ अपि च, पृणाते पर्वशब्द । पृणातिश्च दाने प्रसिद्धः । दानानि च समुदायाः । तस्मात् समुदायाभीज्या । एवं शब्दावयवप्रसिद्धिरनुगृहीता भवतीति । तस्माद्वैकृतेषु पार्वणयोरप्रवृत्तिः ॥ ५३ ॥ आ०नि०॥

## मन्त्रवर्णाच्च ॥ ५४ ॥

मन्त्रवर्णाच्च फलवदनुवादो भविष्यति । ऋषभं वाजिनं वयं पूर्णमासं यजामहे । अमावास्या सुभगा सुशेवा इति च । तस्मादपि समुदायाभीज्येति ॥ ५४ ॥ युक्ति. ॥

## तदभावेऽग्निवदिति चेत् ॥ ५५ ॥

नैतदस्ति, यदुक्तं वैकृतेष्वप्रवृत्तिरिति । तदभावेऽपि यद्यपि समुदायवचनोऽयम् । न च वैकृतेष्वयमस्ति समुदाय. । तथापि पार्वणहोमौ भवेतामेव । कुत । अन्या एवंशब्दिका देवता भविष्यन्ति । समुदायो वाऽसन्निहितोऽपि यक्ष्यते, सौर्याद्युपकारार्थेन । यथा, अग्निमग्न आवह इति सन्निहितोऽसन्निहितो वा अग्निर्यागार्थेनावाह्यते । एवमिहापीति ॥ ५५ ॥ आ० ॥

## नाधिकारिकत्वात् ॥ ५६ ॥

नैतदेवम् । आधिकारिकं हीदं वचनम् । अधिकारे भवं, यस्याधिकारस्तस्य गुणं विदधातीति । आग्नेयादीनाञ्चाधिकारः । ते चाऽत्र देवताः । तेषां होमो देवतार्थः । एवं यत्र सा देवता नास्ति, तत्र तदर्थो होमो न करिष्यते । तस्मात् पार्वणहोमयोर्वैकृतेभ्यो निवृत्तिः ॥५६॥ आ० नि० ॥ सौर्यादिषु पार्वणहोमाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

## उभयोरविशेषात् ॥ ५७ ॥

इदमिदानीं संदिह्यते । किमुभौ होमौ पौर्णमास्याममावास्यायाञ्च ? उत पौर्णमासीहोम पौर्णमास्याम्, अमावास्याहोमोऽमावास्यायामिति । किं प्राप्तम् । उभावप्युभयत्र । कुत । उभयोर्हि प्रकरणे उभावप्याम्नातौ । तस्मादुभयत्र भवितुमर्हतः ॥ ५७ ॥ पूर्व० ॥

## यदभीज्या वा तद्विषयौ ॥ ५८ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, उभयमुभयत्रेति । यदभीज्या, स तत्र भवेत् । तस्य हि स उपकारकः । अनुपकारक इतरस्य । न चानुपकारकः कर्त्तव्यः । समुदायप्रधानावत्र होमावित्युक्तम् । तस्माद्यदभीज्या, तद्विषयौ भवेतामिति ॥ ५८ ॥ सिद्धान्तः ॥ दर्शपौर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ॥ १९ ॥

## प्रयाजेऽपीति चेत् ॥ ५९ ॥

दर्शपूर्णमासयोः प्रयाजा आम्नाता, समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीति । तत्र संशयः क्रियते । किं समिधो यजतीत्यादिशब्दैः समिदादयो देवताविशेषा विधीयन्ते, एतान् समिदादीन् यजतीति । किं वा न प्रकृतैः समिदादिभिः सम्बन्ध उपादीयते, एवंशाब्दिका देवता न प्रकृतौ उपदिश्यन्ते इति ॥ किं तावत् प्राप्तम् । प्रकृतानां समिदादीनां यागो विधीयते । समिदादयश्च देवता वाक्यसम्बन्धादिति । एवं प्रकृतैः समिदादिभिः सम्बन्धे क्रियमाणे प्रकरणानुग्रहो भविष्यति । तस्मात् प्रयाजेऽपि प्रकृता देवता भवितुमर्हतीति । देवता प्राधान्यञ्च यथा पार्वणहोमे इति ॥ ५९ ॥ आ० नि० ॥

## नाचोदितत्वात् ॥ ६० ॥

नैतदेवम् । नात्र समिदादयश्चोद्यन्ते देवतात्वेन । कुतः । द्वितीयानिर्द्देशात् । तद्धितनिर्द्देशेन वा देवता चोद्यते, चतुर्थ्यन्तनिर्द्देशेन वा । तत्र हि तादर्थ्यं गम्यते । तादर्थ्ये च सति देवता भवति । न देवता नाम जात्या काचित् । सैव कस्यचिद्रूपस्य देवता, सैव नान्यस्य । यस्य यां प्रति तादर्थ्यं, सा तस्य देवता । द्वितीया हीप्सिततमे कारके भवति । तत्र न द्रव्यस्य तादर्थ्यं गम्यते । तस्मान्न द्वितीयान्तेन देवताविधानम् ॥ अत्राह । तादर्थ्यं कल्पयिष्यामः । यथा विष्णुं यजति वरुणं यजतीति । अत्र न विष्णुर्वरुणो वा यागः । नाऽपि यागादर्थान्तरं यागस्य कारकं यदीप्सितं, तद् द्वितीययाऽभिधीयते । तेन तत्र कल्प्यते तादर्थ्यम् । शब्दान्तरेण वा विहितं गम्यते । इह तु न शब्दान्तरविहितम् । न चैवं शक्यं परिकल्पयितुम् । न च यागस्य कारकत्वेन सम्भवति । समिदादिशब्दकत्वात्तु यजीनां समिदादयः शब्दा वाचका उपपद्यन्ते । क्रियायां चेप्सितायामिष्यते द्वितीया । यथा पाकं पचतीति । तस्मात् समिधो यजतीत्ययमर्थः,

समिद्यजिः कर्त्तव्य इति । यदा च यजिं प्रति अनुष्ठानं चोद्यते, तदा यजिरुपदिष्टो भवति । यदि पुनरत्र देवता उपदिश्येत, उपदिष्टे यजौ देवतोपदिश्येत । तत्रोपदिष्टोपदेशो वाक्यं भिद्येत । तस्मान्न देवतोपदेशः । यदा न देवतोपदेशस्तदा मान्त्रवर्णिको देवताविधिः । तदा चोपादेयत्वादेवंशब्दिका देवताश्चोद्यन्ते । तस्मान्मान्त्रवर्णिको देवताविधिः ॥ ६० ॥ सिद्धान्तः ॥ समिदादीनां यागनामधेयताधिकरणम् ॥ २० ॥ इत्याचार्य्यशबरस्वामिकृते मीमांसाभाष्ये नवमस्याध्यायस्य द्वितीयः पादः ॥ ९ ॥ २ ॥

अथ नवमेऽध्याये तृतीयः पादः ॥ ९ ॥ ३ ॥

## प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्य्यत्वात् ॥ १ ॥

वैकृतानि कर्म्माणि उदाहरणम् । सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्च्चसकाम इति । ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इति । चित्रया यजेत पशुकाम इति । वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकाम इति । अस्ति तु प्रकृतौ निर्वापमन्त्रः । अग्नये जुष्टं निर्वपामीति । तथा इन्द्राय मरुत्वते, नैवारमेकादशकपालं निर्वपेदिति । अस्ति तु प्रकृतौ व्रीहिलिङ्गो मन्त्रः । स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति । तच्चैतच्च विकृतौ चोदकप्राप्तं सन्दिह्यते । किम् अविकारेण प्रयोक्तव्यम्, उतोहेनेति ॥ किं प्राप्तम् । अविकारेणेति । तथा, आर्षमनुगृह्यते । यत् प्रकृतौ कर्त्तव्यं, तद्विकृताविति । प्रकृतौ चाग्निव्रीहिशब्दौ प्रयुक्तौ । तस्माद्विकृतावपि तावेव प्रयोक्तव्याविति ॥ एवं प्राप्ते ब्रूमः । सत्यं प्रकृतौ यथा उत्पत्तिवचनमर्थानां कृतं मन्त्रे, तथोत्तरस्यामपि ततौ विकृतौ तेनैव मन्त्रेण वचनं कर्त्तव्यम् । तत्प्रकृतित्वात् ॥ तथा प्राप्ते इदमुच्यते । नैतदेवम् । अर्थे चाकार्यत्वाद् इति । एतावदर्थौ अग्निव्रीहिशब्दौ सूर्य्यं नीवारञ्च नाभिदध्याताम् । चशब्दोऽत्र तुशब्दस्यार्थे । मन्त्राणां चार्थवचनं कार्य्यं, न स्वरूपम् । स्वरूपे ह्यदृष्टं कल्पयितव्यम् । अर्थवचनेन दृष्ट उपकारः । तस्माद् ऊहितव्यौ इति ॥ १ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

लिङ्गं खल्वपि अस्मिन्नर्थे भवति । न माता वर्द्धते न पिता न भ्राता न सखा इति । प्रत्यक्षं, भ्रातरं सखायञ्च वर्द्धमानं पश्याम । अतो नार्थवृद्धिप्रतिषेधसंवादोऽयम् । शब्दवृद्धिप्रतिषेधस्तु । न भ्रातृशब्दो वर्द्धते, न सखिशब्द इति । का च तयोर्वृद्धिः । वर्णान्तरोपजननं सा । एकस्मिन् भ्रातेति, द्वयोर्भ्रातराविति । एतदुक्तं भवति । न भ्रातृशब्द ऊह्यते, न सखिशब्दश्चेति । अतोऽवगम्यते, अन्ये ऊह्यन्ते इति । यथा, न भवन्तः समाजं गच्छन्ति, न भवन्तः प्रेक्षका भवन्तीत्युक्ते नूनमन्ये गच्छन्तीति गम्यते । एवमिहापि, न भ्राता ऊह्यते, न सखा इत्युक्ते नूनमन्ये ऊह्यन्ते इति लिङ्गदर्शनम् । स्थितं तावद् अपर्य्यवसितमेव, अन्तरा चिन्तान्तरं वर्त्तिष्यते ॥२॥ युक्तिः ॥ विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् ॥ १ ॥

## जातिर्नैमित्तिकं यथास्थानम् ॥ ३ ॥

इदमामनन्ति । मौद्गं चरुं निर्वपेत् श्रियै श्रीकाम इति । तत्रेदं विधीयते । पौण्डरीकाणि बर्हींषि भवन्तीति । अस्ति प्रकृतौ मन्त्रः । स्तृणीत बर्हिः परिधत्त वेदिं जयामि मा हिंसीरमुपाशयाना दर्भैः स्तृणीत हरितैः सुपर्णैः निष्का इमे यजमानस्य ब्रध्न इति । इह चोदकेन प्राप्तः । अत्र दर्भैरिति जातिशब्दः । हरितैरिति नैमित्तिको गुणशब्दः । तत्र संशयः । किं जातिशब्द ऊहितव्यः, नैमित्तिकः अविकारेण प्रयोक्तव्यः ? उतोभावपि यथास्थानमूहितव्यौ ? जातिशब्दः स्तरणे, नैमित्तिकः स्तरणसाधने द्रव्ये इति । तत एवं तावत् परीक्ष्यम् । किमयं हरितशब्दो हरितगुणविवक्षया प्रयुज्यते, उत स्तरणद्रव्यगुणाभिधित्सयेति । कश्चात्र विशेषः । यदि दर्भाणां हरितगुणसम्बन्धो वक्तव्यः, व्यक्तमसावदृष्टोऽर्थः । तदा पुण्डरीकाणामपि अदृष्टायैव हरितसम्बन्धो वचनीयो भवतीत्यविकारेण प्रयोक्तव्यः । अथ स्तरणद्रव्यगुणविवक्षया प्रयुज्यते, तत्र पुण्डरीकाणामपि स्वगुणो वक्तव्यो भविष्यति । तदेतद् द्वयमपि हरितशब्दादवगम्यते । किन्तु विवक्षितमिति संशयः ॥ किं तावत् प्राप्तम् । अविकारेण प्रयोक्तव्य इति । तत एतत्तावच्चिन्त्यते । हरितगुणविवक्षया प्रयुज्यते इति । कुतः । हरितशब्दस्य मन्त्रे भावात् । न हि यो यो द्रव्यगुणः सोऽवश्यवचनीयो भवति । यस्य यस्य तु वाचको मन्त्रे शब्दो-

ऽस्ति, स गुणो वक्तव्य इति गम्यते । हरितगुणस्य वाचको मन्त्रोऽस्ति । तस्माद् हरितगुणो वक्तव्य इति ॥

ननु स एव स्तरणद्रव्यगुणस्य वाचक. । नेत्याह । न ह्यसौ स्तरणद्रव्यगुण इत्यनेन कारणेन हरितशब्देनोच्यते । कथं तर्हि । हरितत्वयोगाद् हरितशब्देनोच्यते । स एव हारित्यं श्रुत्या अभिदधाति, लक्षणया स्तरणद्रव्यगुणम् । श्रुतिश्च लक्षणाया ज्यायसी । तस्माद्धरितगुणविवक्षया प्रयुज्यते, विकृतौ न ऊहितव्य इति ॥ एवं प्राप्ते ब्रूम । जातिशब्दो नैमित्तिकश्च उभावप्यूहितव्यौ । तत एतद्वर्ण्यते। स्तरणद्रव्यस्य गुणविवक्षया प्रयुज्यते इति । यद्यपि हारित्यं श्रुत्या हरितशब्दोऽभिवदति, तथापि हरितगुणवचनमनर्थकम् । अदृष्टं हि तत्र कल्पनीयं स्यात् । तच्चाशक्यं दृष्टे सम्भवति । स्तरणद्रव्यगुणन्तु लक्षणयाऽभिवदति । तद्वचने अदृष्टं· प्रयोजनं स्तरणद्रव्यप्रत्यायनम् । एवञ्चेदिहापि स्तरणद्रव्यस्य पुण्डरीकस्य गुण प्रत्याययितव्यः । तस्मात्तद्वाचक ऊहितव्यो रक्तशब्द इति ॥ ३ ॥ सि० ॥

तत एव अन्तरागर्भिणीन्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते—

**लिङ्गदर्शनाच्च ॥ २ ॥**

**जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥**

इति । इतश्च पश्यामो विकृतावूह कर्त्तव्य इति । कुतः । लिङ्गं दृश्यते । किं लिङ्गं भवति । एवमाह । विश्वेषां देवानामुस्त्राणां छागानां वपानां मेदसोऽनुब्रूहीति । जातिशब्दानामूहितानां समुच्चारणं भवति । तन्मन्त्राणामर्थवचनपक्षे एव कल्प्यते । ऊहे क्रियमाणे अनर्थपरत्वे अग्निच्छागशब्दावेव प्रयुज्येयाताम् । तत्रामीषामक्रियाऽर्थानां वचनमनर्थकमेव स्यात् । न चात्रैते शब्दा विधीयन्ते, विधायकस्याभावात् । ननु प्रयोगवचनेन विधायिष्यन्ते । एवं तर्हि अदृष्टाऽर्थतादोष । तस्मादस्ति ऊह इति ॥ २ ॥ युक्तिः ॥ ३ ॥ सिद्धान्त ॥

**अविकारमेके नार्षत्वात् ॥ ४ ॥**

एके पुनराचार्य्या अविकारमनुमन्यन्ते । अस्मिन्नर्थे लिङ्गं वक्ष्यति । तस्येयं प्राप्तिः क्रियते । यदि हि ऊह्येत, आर्षश्चोदको बाध्येत । तस्मादनूह इति ॥ ४ ॥ पूर्व० ॥

**लिङ्गदर्शनाच्च ॥ ५ ॥**

लिङ्गमस्मिन्नर्थे दृश्यते । आग्नेये वैकृते पशौ आम्नायते । अग्नये छागस्य वपायाया मेदसोऽनुब्रूहीति । ऊहपक्षे न विधातव्यं स्यात् । विधीयते तु । तस्मादनूह इति । अपिचेदमपरं लिङ्गमग्नीषोमीये पशौ श्रूयते । यद्येकं यूपमुस्पृशेत्, एष ते वायो इति ब्रूयात् । यदि द्वौ, एतौ ते वायू इति । यदि बहून्, एते ते वायव इति । यद्यूहो भवेद् एतदपि प्राप्तत्वान्न विधातव्यं स्यात् । विधीयते तु । तस्माद-प्यनूह इति ॥ ५ ॥ युक्ति ॥

## विकारो वा तदुक्तहेतुः ॥ ६ ॥

वाशब्देन पक्षो व्यावर्त्यते । यदुक्तमविकार इति । तन्न । ऊहः स्यात् । अस्मिन्नर्थे पूर्वोक्तो हेतुः । अर्थे चाकार्य्यत्वादिति । मन्त्रार्थो ह्यनुरुध्यते चोदकः, न मन्त्राक्षराणि । अर्थपराणि हि तानि, न स्वरूपप्रधानानि । तस्मादूहः स्यात् पूर्वेणैव हेतुना । केवलं लिङ्गपरिहारो वक्तव्यः ॥ ६ ॥ उत्तरम् ॥

## लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥

यल्लिङ्गमुक्तम्, अग्नये छागस्य वपाया मेदसोऽनुब्रूहीति । तन्मन्त्रचिकीर्षया विधीयते । इतरथा ऊहितत्वादमन्त्रः स्यात् । तस्मात् पुनर्वचनम् ॥ ७ ॥ आ० नि० ॥

## नियमो वोभयभागित्वात् ॥ ८ ॥

यल्लिङ्गमुक्तम्, एष ते वायो इति । तत् परिह्रियते । यदि हि एतन्नोच्येत, यदि द्वावुपस्पृशेत्, यदि बहून्, सर्वे इमे मन्त्रा एकयूपे भवेयु । उभयमपि मा प्रकृतौ भूदितिनियमः क्रियते । यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात्, यदि बहून्, एते ते वायव इति ब्रूयात् तस्मादेतदप्यलिङ्गमिति ॥ ८ ॥ आ० नि० ॥ पौण्डरीकेषु हविःषु स्नरणमन्त्रस्योहाधिकरणम् ॥ २ ॥

## लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ९ ॥

अस्ति ज्योतिष्टोमः । तत्राग्नीषोमीये पशौ आम्नायते । यदि एकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयाद्यदि द्वावेतौ ते वायू इति, यदि बहून् एते ते वायव इति । तत्रैषोऽर्थः सांशयिकः । लौकिके वैदिके च यूपोपस्पर्शने प्रायश्चित्तम् ? उत वैदिके, अथ वा लौकिके इति ।

किं प्राप्तम् । लौकिके वैदिके वाऽनियम इति । कथम् ? । विशेषानाश्रयणात् । न हि विशेष आश्रीयते लौकिके वैदिके वेति, तस्मादनियम इति । वैदिके वा । तथाहि अस्य मन्त्रस्य समीपगतेन प्रयोजनाभिसम्बन्धो भविष्यति । इतरथा दूरगतेनाप्रकृतेन परोक्ष सम्बन्धः स्यात् । तस्माद् वैदिके यूपोपस्पर्शने इदं प्रायश्चित्तमिति ॥ एवं प्राप्ते ब्रूमः । लौकिके उपस्पर्शने भवितुमर्हति, न वैदिके । कुतः । एवं दोषसयुक्तं हि श्रूयते इदं प्रायश्चित्तम् । यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चेत तस्माद्यूपो नोपस्पृश्य इत्यभिधाय, यद्येकं यूममुपस्पृशेदिति समाम्नायते । तस्माद्यत्र दोषस्तत्र प्रायश्चित्तमिति । लौकिके च दोषो, न वैदिके । वैदिके हि अञ्जनमुपच्छ्रयणं च कर्त्तव्यमुक्तम् । न तत् कर्त्तव्यं सद् अकर्त्तव्यं भविष्यति । सावकाशश्चोपस्पर्शनप्रतिषेधवचनं लौकिके अविरुद्धं भविष्यति ॥

अपि च अपवृक्ते कर्मणि चोद्यते निमित्तेन । कथम् । यूपो वै यज्ञस्य दुरिष्टमामुञ्चते इति । यत् किल यज्ञे दुरिष्टं तद्यूप आमुञ्चते, यत् सुकृतं तद्यजमान इति । सर्वमिदं प्रशंसार्थं, न विधिपदान्तरेण सम्बद्ध्यते । इष्टशब्द एवैको विधिपदैः सम्बन्धमुपैति । प्रशंसापदैरपि सम्बध्यमान इह सन्निहितो भवति । सन्निहितत्वाच्च पदान्तरैः सम्बद्ध्यते । यथा दण्डो मनोहरो रमणीयश्च प्रहर शीघ्रमिति रमणीयमनोहर-सम्बन्धेऽपि सति सन्निहितत्वात् प्रहर शीघ्रमित्येतैः पदैः सम्बद्ध्यते । एवमिष्टशब्दोऽपि सन्निहितत्वात् सम्बध्यते । इष्टे यदि यूपमुपस्पृशेदेष ते वायो इत्येवमादि ब्रूयादिति । सोऽयमिष्ट इत्यपवर्गस्य वक्ता शब्दः । अपवृक्ते चेदुपस्पर्शनं मन्त्रस्य निमित्तं, व्यक्तं न वैदिकम् । तस्माल्लौकिके यूपोपस्पर्शने प्रायश्चित्तं, न प्रकृतौ वैदिके अभागित्वात् प्रतिषेधस्यापवर्गस्य च वैदिके न सम्भवतीति ॥ ९ ॥ अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् ॥ ३ ॥

## अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥

अस्ति पशुरग्नीषोमीयः । यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र पाशैकत्वाभिधायी मन्त्रः । अदितिः पाशं प्रमुमोक्त-

त्वामिति । तथा पाशबहुत्वाभिधायी, अदितिः पाशान् प्रमुमोक्तेता-
निति । प्रकृतौ तयोः समुच्चयं वक्ष्यति । अस्ति द्विपशुर्विकृतिः । मैत्रं
श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकाम इति ।
तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ । तयो संशय । किं बहु-
वचनान्तोऽविकारेण प्रवर्त्तते एकवचनान्तस्य निवृत्तिः ? उत बहु-
वचनान्तो निवर्त्तते, एकवचनान्त ऊहितव्यः ? उत उभयोरपि प्रवृ-
त्तिरभिधानविप्रतिपत्तिश्च ? उतैकवचनान्त ऊहितव्यो, बहुवचना-
न्तोऽपि निवर्त्तेत ? ॥ किं प्राप्तम् । अन्यायस्त्वविकारेण । अन्यायनिगदो
बहुवचनान्तोऽविकारेण प्रवर्त्तते । एकवचनान्तो निवर्त्तितुमर्हति ।
कुतः । नास्यैकस्मिन् पाशे प्रवर्त्तमानस्य दृष्टः प्रतिघातः । यथैवैक-
स्मिन् पाशे प्रवर्त्तते, तथा द्वयोरपि प्रवर्त्तितुमर्हति । नासौ एकस्य
वाचक , न द्वयो. । एवमार्षश्चोदकाऽनुगृहीतो भविष्यति । इतरथा
हि ऊह्यमाने यथाप्रकृति मन्त्रो न कृतः स्यात् । न द्वयोः पाशयो ,
एकस्मिंश्च पाशे कश्चिद् विशेषोऽस्ति । तस्माद् अविकारेण बहु-
वचनान्तः प्रयुज्यते, एकवचनान्तस्य निवृत्तिरिति ॥ १० ॥

## विकारो वा तदर्थत्वात् ॥ ११ ॥

वाशब्दः पक्षं व्यावर्त्तयति । विकारो वा स्यात् । एकवचनान्त
ऊहेन प्रवर्त्तेत,बहुवचनान्तनिवृत्तिरिति । कुत. । तदर्थत्वात् । यौ पाशौ
विकृतौ वक्तव्यौ, तौ च प्रयोगवचनानुग्रहाद् यौगपद्येन, न पर्य्या-
येण । तत्र न गम्यते विशेषः । पाशशब्दे उच्चरिते कस्य पाशस्या-
ऽभिधानं, कस्य नेति । अविशेषाद् द्वयोरपि पाशयोः । तत्र तयोः क-
र्म्मत्वाभिसम्बन्धं द्वितीयाद्विवचनमेव शक्नोति वदितुं, नान्यत् । त-
स्माद् द्विवचनमूह्येत।बहुवचनमेकवचनं च निवर्त्तितुमर्हत इति॥११॥

## अपि त्वन्यायसम्बन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात् ॥ १२ ॥

अपि त्विति पक्षो व्यावर्त्यते, न बहुवचनं निवर्त्येत । यथा प्रकृ-
तौ बहुवचनान्तमेकवचनान्तं च प्रवृत्तम् । अन्यायसम्बन्धाद् बहु-
वचनान्तम् । एवं विकृतावपि एकवचनान्तं, द्विवचनान्तमूह्येत । अ-
न्यायसम्बन्धाच्च बहुवचनान्तं प्रवर्त्तेत । यदि प्रकृतौ प्रातिपदिकार्थ-
मात्रं पक्षे प्रकाशितं, विकृतावपि तत् पक्षे प्रकाशयितव्यम् । अथ

बहुवचनान्तेनैकत्वमुक्तम्, इहापि बहुवचनान्तेन द्वित्वं वक्तव्यम् । तस्मादभिधानविप्रतिपत्ति कर्त्तव्या इति ॥ १२ ॥ पूर्व० ॥

**यथार्थं त्वन्यायस्याचोदितत्वात् ॥ १३ ॥**

तुशब्दस्तमपि पक्षं व्यावर्त्तयति । नाभिधानविप्रतिपत्तिः कर्त्तव्येति । किं तर्हि । यथार्थं द्विवचनमूहितव्यं, बहुवचनमेकवचनं च निवर्त्तेयाताम् । तद्धि द्विपाशाभिधायिन पाशशब्दात् परं बहुवचनमेकवचनं वा न शक्नोति कर्मसम्बन्धं वदितुम् । लोको हि शब्दाऽर्थावगमे प्रमाणम् । नच लोके द्वयोरर्थयोर्बहुवचनान्त एकवचनान्तो वा प्रवर्त्तमानो दृश्यते । तस्मादूहेन द्वयो पाशयोर्बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्य ॥ १३ ॥ सि० ॥

कथं प्रकृतौ एकस्मिन् पाशे बहुवचनान्त इति चेत्—

**छन्दसि तु यथादृष्टम् ॥ १४ ॥**

यावद्दर्शनं प्रामाण्यमभ्युपगन्तव्यम् । छन्दसि न दर्शनमतिक्रमितव्यम् । यो हि दर्शनमतिक्रम्यान्यदपि कल्पयेत्, न तेन छान्दसं कृतं स्यात्, न लौकिकं, नापि लक्षणसिद्धम् । यदुक्तं, चोदकेनाभिधानविप्रतिपत्तिश्चोद्यते इति । नैतदेवम् । अन्यायस्याचोदितत्वात् । न हि चोदकोऽन्याय्यामभिधानविप्रतिपत्तिमभिप्रापयति । किं कारणम् । प्रकृतावेकत्वात् । पाशस्य प्रकृतत्वाच्च बहुवचनान्तस्य प्रत्यक्षाऽभिधानविप्रतिपत्ति. । केयमभिधानविप्रतिपत्तिर्नाम । यदन्यथाऽभिधानम्, अन्यथा अभिधेयम् । न च प्रकृतौ एकस्मिन् बहुवचनान्तं प्रयुक्तमभिधानविप्रतिपत्तिं कर्त्तुम् । कि तर्हि । यत् तेन शक्यते, तत् कर्त्तुम् । किञ्चानेन शक्यते ? । अस्य सिद्धे प्रयोगेऽर्थमन्विच्छन्तो, यदवगम्यते तदर्थः शब्द इत्यवधारयाम. । अस्माच्च पाशद्रव्यस्य मोचनेन सम्बन्धोऽवगम्यते, तदर्थता शब्दस्य भवितुमर्हति । न एकत्वेन बहुत्वेन वा प्रयोजनम् । इह तु विकृतौ पाशस्य च पाशस्य च यौगपद्येन मोचनेन सम्बन्धो वदितव्य. । बहुवचनञ्च द्वयोः पाशयोरन्याय्यम् । तस्याभिधाने इह पुनर्न प्रयोग । किन्तु प्रयोग एव चिन्त्यते । क. शब्दः प्रयोक्तव्य इति । तत्र प्रयोगेऽस्मदायत्ते किमित्यवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके । न चायं द्वयोश्छन्दसि दृष्टो बहुवचनान्तः । सोऽयं मन्त्र. प्रयुज्यमानोऽपभ्रश एव स्यान्न

छान्दसः । न च बहुवचनं द्वित्वप्रत्ययार्थं लभ्यते लौकिके वैदिके च । न चाभिधित्सिते द्वित्वे द्वयोर्बहुवचनं भवति । तद्यथा देवदत्त-यज्ञदत्ताभ्यां कर्त्तव्यमिति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं, न विभक्त्या विधित्स्यते । तथापि द्विवचनमेव भवति, न बहुवचन-म् । तस्माद् विकृतावूहितव्यमिति ॥ १४ ॥ आ० नि० ॥ द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेनोहाधिकरण-म् ॥ ४ ॥

## विप्रतिपत्तौ विकल्पः स्यात् समत्वाद् गुणे त्व-न्यायकल्पनैकदेशत्वात् ॥ १५ ॥

अस्ति पशुरग्नीषोमीयः । यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र पाशैकत्वाभिधायी पाशबहुत्वाभिधायी च मन्त्रौ समा-म्नातौ । तयो किमेकत्वाभिधायी प्रकरणे निविशते, बहुत्वाभिधायी प्रकरणादुत्कृष्यते ? उत उभावपि प्रकरणमभिनिविशेते इति । किं प्राप्तम् । बहुत्वाभिधायी उत्क्रष्टव्य इति । कुत ? बहूनां हि स पाशानां मोचकः । न च प्रकरणे बहव. पाशा. सन्ति । तस्मात् प्रकरणे असम्बध्यमानो यत्र बहवः पाशास्तत्र नीयेत । यथा, युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्य्यादिति । एते असृग्रमि-न्द्व इति बहुभ्यो यजमानेभ्य प्रतिपदं कुर्य्यादिति प्रतिपद्विधानमु-त्कृष्यते । यथा च पौष्णसावित्र—सारस्वत—द्यावापृथिवीयाद्यनुम-न्त्रणानि उत्कृष्यन्ते, एवं पाशबहुत्वाभिधाय्यपीति ॥ एवं प्राप्ते ब्रूम । विप्रतिपत्तौ एतस्यां का विप्रतिपत्ति. । यत् प्रकृतावेक पाश , पाश-बहुत्वाभिधायी च मन्त्रः । एतस्यां विप्रतिपत्तौ किं मन्त्र उत्कृष्यते, न ? इति । उच्यते । नोत्क्रष्टव्यः । ननु प्रकृतौ अन्यो मन्त्र ? । उ-च्यते । तेन सह विकल्पो भविष्यति । कुत' । पाशप्रातिपदिकार्थस्य प्रकृतौ विद्यमानत्वादुत्कर्षो न न्याय्यः । ननु बहुपाशवचन एष मन्त्रः । प्रकृतौ त्वेक पाश । तस्मात् तत्र न सम्भवतीति । उच्यते । बहूनप्यसौ पाशान् वदन् बहुत्वाधिष्ठानं द्रव्यं प्रकाशयत्येव । यदि न प्रकाशयेद्, न पाशविशिष्ट बहुत्वं गम्येत । प्रकाशयति चेत् ताव-ता न. प्रयोजनम् । तस्य हि उन्मोचनं क्रियते, न बहुत्वस्य, पाशाकृते-र्वा । तस्मात् तस्य प्रकाशनं कर्त्तव्यम् । तत् प्रातिपदिकेन करिष्यते,

नोत्कृष्यते । अस्त्येव ह्येकवचनान्तं प्रातिपदिकम् । तत्तस्य प्रकाशनं करिष्यति इति । अत्रोच्यते । न हीदं तस्मादन्यत् । यद्येकवचनान्तं प्रातिपदिकं न उत्कृष्यते प्रकरणादित्युच्यते, सिद्धस्तर्ह्यनुत्कर्षस्तदेवेदमिति ॥ ननु बहुवचनस्य बहुपाशकप्रयोगेऽर्थवत्ता । तस्मादुत्क्रष्टव्यम् । तदुत्कृष्यमाणमेकदेशत्वात् प्रातिपदिकमुत्कर्षतीति । उच्यते। गुणे त्वन्यायकल्पना स्यादिति, न प्रधाने । गुणश्च विभक्त्यर्थः। प्रधानं प्रातिपदिकार्थं । प्रातिपदिकार्थविशेषो विभक्त्याऽभिधीयते । सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम् । न च विकृतौ प्रातिपदिकमस्ति । अनारभ्याप्यभिहितं प्रकृतिं प्रविशति । किमङ्ग पुनः प्रकृतावेवाभिहितम् । तस्माद्यत्र प्रातिपदिकार्थस्तत्र विभक्त्यर्थो भविष्यति ॥

ननु विकृतावपि चोदकेन प्राप्तं प्रातिपदिकं, प्रातिपदिकार्थश्चोच्यते । बाढम् । विप्रकृष्टस्तु चोदक. । बहुवचनसमर्थकं प्रातिपदिकं चोदको नोत्कक्ष्यति । तस्मात् प्रातिपदिकमेकदेशत्वाद् बहुवचनमाकक्ष्यतीति । न च प्रकृतौ अनर्थकमेव बहुवचनं,पाशाकृतिकस्य हि तदुन्मोचने कर्म्मसम्बन्धं करोति । तस्माद् गुणे बहुवचने अन्यायकल्पना, न प्रधाने प्रातिपदिकार्थे इति । किं पुनरन्याय्यम् । यद् बहुत्वं गम्यमानमविवक्षितमित्युच्यते । तत् कल्प्यतां, न तु प्रकृतौ प्रातिपदिकस्य प्रातिपदिकार्थाभिधानमन्याय्यं कल्पयितव्यम् । अस्य हि गुणस्यावाच्यमेव वैकृतं बहुत्वं सन्निधानाभावात् । तस्मात् प्रकृतौ बहुवचनान्तस्यापि निवेश इति ॥ १५ ॥ सि० ॥

**प्रकरणविशेषाच्च ॥ १६ ॥**

प्रकरणविशेषाच्चैतदध्यवसीयते, प्रातिपदिकं बहुवचनमाकर्षति, न प्रातिपदिकं बहुवचनेनोत्कृष्यते इति । प्रकृतौ प्रातिपदिकार्थो विद्यते अग्नीषोमीये पशौ बहुवचनार्थो विकृतिषु । तस्मादपि बहुवचनान्तस्य प्रकृतौ निवेश इति ॥ १६ ॥ युक्ति. ॥

उत्कर्षो वा द्वियज्ञवदिति यदुक्तं, तत् परिहर्त्तव्यम् ॥

**अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ॥ १७ ॥**

युक्तं यत् प्रतिपद्विधानमुत्कृष्यते, नास्ति प्रकृतौ यजमानद्वित्वं यजमानबहुत्वं वा । तत्र न भवेद्विषय एतयोः प्रतिपदोः । इह तु

गुणमात्रं नास्ति बहुत्वम् । अन्यत्तु बहुवचनस्य प्रयोजनं, मुञ्चिना सम्बन्धः । नचानेकप्रयोजनमन्यतमेन प्रयोजनेन न प्रयुज्यते । न हि उल्का प्रकाशनेनाप्रयुज्यमाना भस्मना न प्रयुज्यते । तस्माद् विषमं प्रतिपद्भ्यामिदमिति ॥ १७ ॥ आ० नि० ॥

द्यावोस्तथेतिचेत् ॥ १८ ॥

अथ यदुक्तं, द्यावापृथिवीयादीनामनुमन्त्रणानां यथा उत्कर्ष-स्तथाऽस्येति । तत् परिहर्त्तव्यम् ॥ १८ ॥ आ० ॥

नोत्पत्तिशब्दत्वात् ॥ १९ ॥

नैतदनुमन्त्रणेन तुल्यम् । न हि दर्शपूर्णमासयोर्द्यावापृथिव्या-दीनामुत्पत्तौ शब्दोऽस्ति । अस्ति त्विह पाशस्योत्पत्तौ शब्दः । त-स्माद् विषममनुमन्त्रणेनेति ॥ १९ ॥ आ० नि० ॥ अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम् ॥ ५ ॥

अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत ॥ २० ॥

दर्शपूर्णमासयोरामनन्ति, प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं सन्नह्य आज्येनोदेहीति । तत्र, पत्नीं सन्नह्येति चिन्त्यते । अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च । तत्र सर्वस्य प्रयोगमधिकृत्य पत्नीशब्द उच्चरतीति एतत्पाशाधिकरणेनैव निर्णीतम्। इदन्तु सन्दिह्यते । किं द्विपत्नीके बहुपत्नीके च प्रयोगे ऊहितव्यः पत्नीशब्दः ? उत नेति । किं प्राप्तम् । अभिधानार्थत्वान्मन्त्राणामूहित-व्य इति ॥ एवं प्राप्ते ब्रूमः । अपूर्वे तु अप्रकृतिपूर्वके कर्मणि अविका-रेण प्रयुज्येत । कुतः । ईकारान्तं हीदं पत्नीमात्रस्य वाचकम् । तत्र द्विपत्नीके बहुपत्नीके च प्रयोगे पत्नीशब्दे उपादीयमाने द्विवचनं बहुवचनं च सामर्थ्यात् प्राप्नोति सन्नहनसम्बन्धं कर्त्तुम्। समाम्नान-सामर्थ्यात्तु एकवचनेन क्रियते । नचात्र द्वित्वं बहुत्वं वा विवक्ष्य-ते। लक्षणत्वेन हि पत्नीशब्दस्य श्रवणात् । न चैकपत्नीकात् प्रयोगा-द् द्विपत्नीके प्रयोगेऽतिदेशो भवति । यथा तत्र सङ्ख्या उक्ता तद्व-दिहापीति । तस्मादविकारेण पत्नीशब्दस्य प्रयोगः । अथापि कथ-ञ्चिदेकत्वं विवक्ष्येत, तथापि द्विपत्नीके प्रयोगे सम्प्रतिपत्त्यभावादे-कवचनार्थमेकवचनम् । तदनेकपत्नीके प्रयोगे अविरुद्धमित्यविकारेण प्रयुज्यते इति ॥ २० ॥ दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं सन्नह्ये-

ति मन्त्रस्यानूहाधिकरणम् ॥ ६ ॥

## विकृतौ चापि तद्वचनात् ॥ २१ ॥

अथेदानीं विकृतौ पत्नीशब्दश्चिन्त्यते । किं द्विपत्नीके बहुपत्नीके च प्रयोगे ऊहितव्यो, न ? इति । द्विवाची बहुवाची वा पत्नीशब्दो द्विवचनं बहुवचनञ्चोपाददान प्रकृतौ समाम्नानेन बाधित इह समाम्नानाभावादुपादातुमर्हतीति ॥ एवं प्राप्ते ब्रूमः । विकृतावपि अविकारेण प्रयोक्तव्य इति । कुतः । तद्वचनात् । यत् प्रकृतौ तद् विकृतौ कर्त्तव्यमिति तद्वचनम् । प्रकृतौ चैकत्वमविवक्षितमिहापि द्वित्वं बहुत्वमेकत्वञ्च न विवक्षितव्यमिति । तस्मादविकार । अथवा तदेव विवक्षितम् । तदनेकपत्नीकेऽपि अविरुद्धमित्यविकार एवावसीयते ॥ २१ ॥ द्विपत्नीके विकृतियागेऽपि, पत्नीं सन्नह्येति मन्त्रस्यानूहाऽधिकरणम् ॥ ७ ॥

## अध्रिगुः सवनीयेषु तद्वत् समानविधानाश्चेत् ॥२२॥

अस्ति सोमे पशुरग्नीषोमीय', यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्राध्रिगौ इदं समाम्नायते । प्रास्मा अग्नि भरतस्तृणीत बर्हिरन्वेनं माता मन्यतामनु पिताऽनु भ्राता इत्येवमादि । यदा तु अग्नीषोमीया. सवनीयाश्चसमानविधाना , तदेदं विचार्य्यते । किमध्रिगौ प्रास्मै इत्येवमादि पदमूहितव्यम् ? उत नेति । कि प्राप्तम् । ततोऽतिदेश क्रियते । अध्रिगौ तद्वदिति । तत्र यः पत्न्यधिकरणे पूर्वपक्षः स इह पूर्वपक्षः । य सिद्धान्तः स इह सिद्धान्त । ऊह इति पूर्वपक्षः । अविकार इति सिद्धान्तः ॥ २२ ॥ सवनीयपशूनामग्नीषोमीयसमानविधानत्वे, प्रास्मै अस्मिन्निति मन्त्रे अनूहाधिकरणम् ॥ ८ ॥

## प्रतिनिधौ चाविकारात् ॥ २३ ॥

अस्ति प्रतिनिधि. श्रुते द्रव्येऽपचरति । आगमो वा चोदनार्थाविशेषादिति । स च सदृशः सामान्यं तच्चिकीर्षेति । तद् यदा व्रीहिषु अपचरत्सु नीवारा उपादीयन्ते प्रतिनिधित्वेन, तदा व्रीहिमन्त्रो य. समाम्नातः, स्योनं ते सदनं कृणोमि । घृतस्य धारया सुशेवं कल्पयामि तास्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधसुमनस्यमान इति । तं प्रति सन्देहः । कि नीवारेषु व्रीहिशब्दस्य ऊहेन प्र-

योगः ? उताविकारेणेति । किं प्राप्तम् । अविकारेण व्रीहिशब्दः प्रयुज्यमानः कार्य्यवतो नीवारान् न शक्नोति प्रकाशयितुमिति तेषु प्रकाशयितव्येषु नीवारशब्दः प्रयोक्तव्यो भवति । तस्माद् ऊहः कर्त्तव्य इति ॥ एवं प्राप्ते ब्रूमः । प्रतिनिधौ च अविकारात् प्रतिनिधौ चेति ऊहो न कर्त्तव्य इत्यनुकृष्यते । किमेवं भविष्यति । एवमविकारो भविष्यति । तत्रार्षमनुग्रहीष्यते । तस्मादनूहः ॥ २३ ॥ सि० ॥

**अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २४ ॥**

न चैतदस्ति अनूह इति । एवमनूहो भवेत् । यदि तस्मिन् मन्त्रे व्रीहिशब्दो नाम्नातः स्याद्, अभावाच्चेतरस्य यदि नेदं नीवाराख्यं स्यात् । न चेदमुभमयमास्ति । तस्मादभिधानसिद्धये ऊहितव्यो नीवारशब्द इति ॥ २४ ॥ सा० ॥

**तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात् ॥ २५ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । ऊह इति । अविकारेण प्रयोगः । कुतः । तादर्थ्यात् । तादर्थ्यं व्रीह्यर्थता नीवाराणाम् । ये व्रीहिप्रोक्षणादयः संस्कारा क्रियन्ते । संस्कारैरविशिष्टश्चास्य व्रीहिशब्दो यथा धान्येषु व्रीहिलक्षितेषु भवति, एवमेतेष्वपि नीवारेषु । तस्मादविकारेण प्रयोक्तव्य इति ॥ २५ ॥ आ० नि० ॥

**उक्तश्च तत्त्वमस्य ॥ २६ ॥**

कथं पुनर्ज्ञायते, यो यो व्रीहिगतो विशेषः स नीवारेष्विति ? । उक्तश्च तत्त्वमस्य । उक्तोऽस्य विशेषस्य तद्भावः षष्ठेऽध्याये, सामान्यं तच्चिकीर्षा इति । तस्मादप्यविकारः ॥ २६ ॥ युक्तिः ॥ नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम् ॥ ९ ॥

**संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥२७॥**

सन्त्यध्रिगुप्रैषे संसर्गिणोऽर्थाः । तद्यथा चक्षुः प्राण इत्येवमादयः । सूर्य्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादिति । द्विपश्वादिषु पशुगणेषु किमूहितव्य ? उत, नेत्युच्यते । नन्वन्यायनिगदत्वादेवायं नोहितव्यः । द्वयोश्चक्षुषोरेकवचनान्तो यतः श्रूयते । उच्यते । नायमध्रिगौ अधिष्ठानयोः सूर्य्यगमनमाह । न हि अधिष्ठाने सूर्य्यं गच्छत । तेजोरश्मिवचनस्त्वयम् । एकश्च तत्तेजः । तस्मान्नायमन्याय-

निगदः । द्विपश्वादिषु च वैकृतेषु प्रयोगेषु मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकाम इत्येवमादिषु पशुभेदात्तेजसो भेदे गम्यमाने ऊह स्यादिति प्राप्नोति । नन्वेकस्मिन्नपि पशावधिष्ठानभेदेन भिन्ने एव तेजसी । नेत्युच्यते । सूर्य्यमस्य चक्षुर्गमयतादिति । यत् पशोस्तेजस्तद् हि विवक्षितम् । नाधिष्ठानभेदः । पश्वन्तरेषु पशुतेजोभेदादूह इति ॥ एवं प्राप्ते ब्रूमः । संसर्गिषु चाऽर्थस्यास्थितपरिमाणत्वात् । संसर्गिषु अर्थेषु यद्यपि पशुभेदस्तथापि रश्मीनां संसर्ग एवैकीभूतास्तेषां रश्मयः । यथैव पानीयस्य तैलस्य घृतस्य वा स्तत्का नानादेशेषु भिन्ना समानदेशे एकीभूता भवन्ति तद्वद्रश्मय ।तस्मादेकवचनान्तस्तेषां वाचक इत्यनूह स्यात्॥२७॥सि०

## लिङ्गदर्शनाच्च ॥ २८ ॥

लिङ्गं खल्वपि भवति, यथा संसर्गिणो नोह्यन्ते इति । न माता वर्द्धते न मज्जा न नाभि प्राणो हि स इति प्राणस्य सिद्धमनूहं हेतुत्वेनोपदिशति । तस्मात् संसर्गिणो नोह्यन्ते इति ॥ २८ ॥ युक्ति० ॥

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्राणामनूहाधिकरणम् ॥ १० ॥

## एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥ २९ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्राध्रिगुप्रैषे समाम्नायते । एकधाऽस्य त्वचमाच्छ्यतादिति । तद्विकृतौ द्विपश्वादिषु सन्दिह्यते । किमभ्यसितव्य ? उताविकारेण प्रयोक्तव्य इति । किं प्राप्तम् । एकधेत्ययमभ्यसितव्य । कुत । एकसंयोगादेकस्त्वचः प्रकार आच्छता कर्त्तव्य इति । तत्र द्वयोर्बह्वीषु वा त्वक्षु उत्कृत्यमानासु नैकः प्रकारो भवति । पर्य्यायेण हि तां पशुभ्योऽपाच्छन्ति । एकस्यां त्वचि अपाच्छ्यमानायामेकेन प्रकारेणापाच्छेयुस्तस्मादसर्वविषयो भवति अविकृत शब्दः प्रयुज्यमानस्तस्मादभ्यसितव्य इति ॥ २९ ॥ सि० ॥

## अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥

वाशब्दात् पक्षो विपरिवर्त्तते । नैतदस्ति । अभ्यसितव्य इति । अविकारेण प्रयोक्तव्य इति । कुतः । ऐकध्यवचन एष शब्दः । एकीकुरु एषां त्वच इति ॥

किं तत्र ऐक्यम्, एककालोपदेशो वा, एकदेशोपदेशो वा ? ।

बहूनामेककर्मवत् । यथा बहूनामेककाले कर्माणि भवन्ति, एकधा गाः पाययतीति । एवमिहापि ऐकध्यं त्वचः कुर्वीति । बहूनां तु एकीकरणं शक्यते कर्त्तुं, नैकस्यास्त्वचः । तस्माद्बह्वीषु त्वक्षु एकीकरणमेकधाशब्दो वदतीत्यवसेयम् ॥ ३० ॥ पूर्व० ॥

**सकृत्त्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥३१॥**

तुशब्दः पक्षं व्यावर्त्तयति । नाविकारः । अभ्यसितव्यः शब्द इति । एककाले कर्मण्यभिधीयमाने सहत्वं त्वचामभिहितं भवति । तत्प्रकृतावेकस्यां त्वचि असम्भवादनभिप्रेतं तत्प्रकृतित्वादुत्तरासां ततीनां परेषु वर्द्धमानेषु पशुषु अभ्यासेन अभिधानं स्यात् ॥ ३१ ॥ उत्तरम् ॥ द्विपशुयागे अध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाऽधिकरणम् ॥ ११ ॥

**मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥**

अस्ति ज्योतिष्टोमेऽग्नीषोमीये पशावध्रिगुप्रैषे मेधपतिशब्द एकवन्निगदः । परेषां शाखिनां द्विवन्निगदः । तं प्रति संशयो भवति । द्विपश्वादिषु पशुगणेषु किमविकारेण इतरश्चेतरश्च प्रयोक्तव्यः ? उत स्वामिपर ऊहः कर्त्तव्यः, उत देवतापर इति । किं प्राप्तम् । अविकारः । कुत । मेधपतित्वं स्वामिदेवनस्य, स्वामी मेधपतिर्देवता च । स्वामिना पशुर्देवताभ्यां दत्तः सङ्कल्पितः। मेधपतये स्वामिनेऽप्यसौ भवति । तस्य कार्य्यं करिष्यतीति । देवताभ्यामपि ताभ्यामुत्स्रक्ष्यते इति। त्रयाणामपि हि तं मेधं प्रति आधिपत्येन समवायोऽस्ति । सर्वत्र च आधिपत्ये पतिशब्दः प्रयुक्त आ हिमवत, आ च कुमारीभ्यः । स एष त्रयाणामेकवचनान्तो वाचको द्विवचनान्तश्च । यथा प्रकृतावविवक्षितैकत्वोऽविवक्षितद्वित्वश्च सम्बन्धमात्रनिबन्धनः। एवं सर्वासु विकृतिषु । तस्मान्न विक्रियेत ॥ ३२ ॥

**अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात् ॥ ३३ ॥**

अपि वा नैतदेवम् । तयोरिह समवाय , एकवन्निगदस्य, द्विवन्निगदस्य च । तयोरेकवन्निगद स्वामिनि प्रयोक्ष्यते, येषां समाम्नात । येषां द्विवन्निगद. समाम्नातस्तेषां सद्देवते वक्ष्यति । तस्माद्विकृतौ बह्वीषु देवतासु द्विवन्निगद ऊहेन प्रवर्त्तिष्यते । यजमानेष्वेकवन्निगद ऊहिष्यते । एवं यथासङ्ख्यं प्रयोगो भविष्यति ॥ ३३ ॥

## स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्यां द्वितीयशब्दः स्यात् ॥ ३४ ॥

वाशब्द पक्षं व्यावर्त्तयति । स्वामिदेवतयोरुभयोर्वाचक इति । नैतदेवम् । एक एव मेधपतिशब्द. । यस्माद् द्विवचनं, यस्माद् एकवचनं, स एव न स्वामिदेवतयोर्वाचको भविष्यति । नन्वेकोऽपि मेधपतिरपरोऽपि प्रतीयते । कथमवाचक इत्युच्यते । यदा स्वामिनस्तदा मेधपतये यो मेधस्तं मेध्यादुर उपनयतेति सम्बन्ध । यदा देवतावचनस्तदा मेधपतये उपनयत मेध्यादुर इति सम्बन्ध । स एष सकृदुच्चरित उभाभ्यां पदाभ्यां न सम्बन्धुमुत्सहते । वचनव्यक्तिभेदाद् वाक्यभेद. प्रसज्ज्यते । तस्मात् स्वामिनो वाचक इति अध्यवसीयते ॥ अथ किमर्थं न देवतावचनः कल्प्यते । तथा हि कल्प्यमाने एकवन्निगदे उत्कृष्येत एकदेवत्यः क्रतु । तत्र प्रकरणं बाध्येत । यजमानवचने पुन. कल्प्यमाने न द्विन्निगद उत्कृष्येत । तत्रैव यजमानयोर्दम्पत्योर्वाचको भविष्यति। तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते । स्वामिपरस्योहो भविष्यतीति ॥ ३४ ॥ पूर्व० ॥

## देवता तु तदाशीष्ट्वात् सम्प्राप्तत्वात् स्वामिन्यनर्थिका स्यात् ॥ ३५ ॥

तुशब्द. पक्षं व्यावर्त्तयति । न स्वामिवचनो देवतापरो भविष्यति । कुत. । तदाशीष्ट्वात् । आशासाना मेधपतये मेधमिति देवताभ्यां हविराशास्यते । मेधपतिभ्यां मेधमाशासाना उपनयत ताभ्यामिति । यजमानं प्रत्याशासानानुकीर्त्तनमनर्थकम्, अकर्त्तव्यञ्च। स प्राप्त एव स्वामिनं, मेधः किमर्थमाशास्यते । न च तेन नित्यमेव स्वामिसम्बद्धेन प्रयोजनम् । याग एव हि न संवर्त्तेत । तस्माद्देवतावचनो मेधपतिशब्द इति ॥ ३५ ॥

## उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३६ ॥

उत्सृष्टश्च यजमानेन नायं ममेति। केवलं परकीयो रक्ष्यते। कालेन देवतया सम्भन्त्स्यते इति । कः पुनरस्य देवतया सम्बन्धः । यत्तामुद्दिश्य परिग्रहोऽस्य त्यज्यते। स च यागात् प्राक्तन। तस्माद् यागात् परार्थं द्रव्यं नात्मीयं परित्यज्य आस्ते। आत्मप्रधानं यत्तदात्मीयं, न यं प्रति आत्मा गुणभूतस्तादृशेषु भक्त्या पतित्वं भवति। तस्माद् देवतयोरेव तत्र मुख्यं मेधपतित्वं, भाक्तं स्वामिन इति ॥ ३६ ॥ युक्तिः ॥

## उत्कृष्येतैकसंयुक्तो द्विदेवते सम्भवात् ॥३७॥

इति यदुक्तं, तत् परिहर्त्तव्यम् ॥ ३७ ॥ आ० ॥

## एकस्तु समवायात्तस्य तल्लक्षणत्वात् ॥ ३८ ॥

अत्रोच्यते। यौ हि तौ द्वावग्नीषोमौ तयोर्गणे मेधपतिशब्द । स चात्र देवतासमवेतस्तस्मिन् कर्मणि एकस्मै गणाय मेध उपनयत इत्युच्यते। तस्मादेकवचनान्तो गणवाची मेधपतिशब्दो नोत्कृष्यते इति ॥ ३८ ॥

## संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात् ॥ ३९ ॥

अयं चान्यः परिहारः। संसर्गी अयमर्थो देवता नाम। द्वौ अर्थौ ससृष्टौ कदाचिदेका देवता भवति । यदि द्वयाय परिकल्पितं किञ्चिद् द्रव्यं, तत्र द्वयं देवता भवति। द्वावर्थौ संसृष्टौ एकतां यात । तस्मादेकवचनान्तोऽपि प्रकरणमभिनिविशते पूर्वेण च सह विकल्पेत इति ॥ ३९ ॥ आ० नि० ॥

## एकत्वेऽपि गुणानपायात् ॥ ४० ॥

अन्वारुह्य वचनमिदम्। मा तावद् भूदिहैकत्वमर्थः। तथापि प्रकरणमनुप्रविशेतैव एकवचनान्त । प्रातिपदिकं हि तस्य विद्यमानाऽर्थम्। एकवचनञ्चोपनयनसम्बन्धार्थम् । एकत्वं वा अविवक्षितम्। तस्मान्न प्रकरणादुत्कृष्येतेति। अथोच्यते, एकत्वविशिष्टस्य विभक्तिसम्बन्धं ब्रवीतीति । तथाप्यस्मत्पक्ष उपपद्यतेतराम्। सर्वोऽपि ह्येकत्वसम्बद्ध इति। अथ सम्बन्धं करोति एकत्वञ्च ब्रवीतीति। न तेन विशिनष्टि अविवक्षितत्वादविरुद्धं भविष्यतीति । अथोच्यते। अविवक्षितेऽपि वचने एकत्वसम्बन्धे एकवचनं भवति, नान्यत्रेति। तथा

मेधपतिगतमेकत्वमस्य भविष्यति । ततः सोऽनुवदिष्यते । तस्माद्दोष इति ॥ ४० ॥ युक्ति० ॥ द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥ १२ ॥

## नियमो बहुदेवते विकारः स्यात् ॥ ४१ ॥

अस्ति बहुदेवत्यः पशुः । स एतान् पशूनादित्येभ्यः कामाय आलभते इति । तथा वैश्वदेवं धूम्रमालभेतेति । अस्ति तु प्रकृतौ अग्नीषोमीये द्विवन्निगद एकवन्निगदश्च मेधपतिशब्दश्चोदकप्राप्तः सन्दिह्यते । किं द्विवन्निगद ऊहितव्यः । एकवन्निगदो निवर्त्तेत ? उत उभावपि परस्परेण विकल्पमानौ निविशेयातामिति । किं तावत् प्राप्तम् । द्विवन्निगदः समवेताभिधायित्वादूहितव्य । एकवन्निगदोऽशक्नुवन्नभिधातुमित्येतावता दर्शनेन निवर्त्तते एष नियमः । आह । ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादविकारेण प्रयोग प्राप्नोतीति । उच्यते । अविशेषकमत्र द्वित्वं, नतु तत्र समवेतं न गम्यते । न च गम्यमानं निष्प्रयोजनम् । अन्यसंख्यापरिच्छेदेन पुनः संख्येयमुपस्थापयति । तदस्य दृष्टमेव प्रयोजनम् । तस्माद् बहुष्वप्यूहो भवतीति ॥४१॥ पूर्व०॥

## विकल्पो वा प्रकृतिवत् ॥ ४२ ॥

यदुक्तं द्विवचनान्त ऊहितव्य इति । तद् गृह्णीम । यत्त्वेकवचनान्तो निवर्त्तेतेति । तन्न । एकवचनान्तोऽपि प्रकृतिवदिह द्विवचनान्तेन विकल्पितुमर्हति । उक्तं हि गणाभिप्रायं तत् प्रकृतौ । संसर्गित्वाद्वा देवतानामिति । तद्वदिहापि गणाभिप्रायात् संसर्गित्वाद्वा देवतानां विकल्पेन निवेक्ष्यते इति ॥ ४२ ॥ सिद्धान्तः ॥ बहुदेवपशौ अपि एकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥ १३ ॥

## अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् ॥ ४३ ॥

अस्त्येकादशिनी, प्रैषाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेनेत्येवमादि । अस्ति च प्रकृतौ अध्रिगुप्रैषे एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः । तस्येह चोदकप्राप्तिश्चिन्त्यते । द्विवन्निगद ऊहितव्य एव । अथैकवन्निगदः किम् अविकारेण प्रवर्त्तेत, उत निवर्त्तेत ? । किं प्राप्तम् । विकल्पो वा प्रकृतिवदिति । एवं प्राप्ते ब्रूमः । विकार एवैकादशिन्यां, न विकल्पः ।

तत एकवचनान्तेन निवर्त्तितव्यम् । कुतः । देवतापृथक्त्वात् । पृथगत्र देवता । अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवं, नात्र गणो देवतात्वेन । तदभावात् संसर्गित्वमपि नास्ति । प्रकृतौ च एतद्द्वयं कारणम् । एकवचनान्तस्य निवेशे न तदभावादिहास्ति प्रवृत्तिः । यच्चोक्तम्, एकत्वेऽपि गुणानपायादिति । परपक्षमन्वारुह्य तद्वचनं, न स्वपक्षः । तस्माददोष इति ॥ ४३ ॥ एकादशिन्यामेकवचनान्तमेध-पतिशब्दस्योहाधिकरणम् ॥ १४ ॥ इत्याचार्य्यशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य तृतीयः पादः ॥ ९ ॥ ३ ॥

अथ नवमाध्यायस्य चतुर्थः पादः ॥ ९ ॥ ४ ॥

## षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येना-ऽभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्राध्रिगुप्रैषे इदमाम्नायते— षड्विंशतिरस्य वङ्क्रय इति । तच्चोदकेन द्विपश्वादीन् पशुगणान् सम्प्राप्तम् । मैत्रं श्वेतमालभते वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकाम इत्येवमादिषु । अयमर्थः सांशयिकः । किं षड्विंशतिशब्दोऽभ्यसितव्यः ? किमविकारेण प्रयोक्तव्यः, किं वचनमात्रमूहितव्यम् ? अथ अस्य पदाभ्यासः ? उत समस्य वचनमिति । किं प्राप्तम् । षड्-विंशतिशब्दोऽभ्यसितव्यः । द्विपश्वादिषु पशुगणेषु प्रकृतावेकस्य पशोः षड्विंशतिर्वङ्क्रय उक्ताः । इह स गुणः प्रविभक्तः । पशौ पशौ षड्विंशतिर्वङ्क्रयः । तत्र यदि अविकारेण प्रयुज्येत, न कृत्स्ना वङ्क्रीरभिवदेत् । अथ समस्य वचनं क्रियते, तथा षड्विंशतिशब्दो निवर्त्तेत । तत्रार्षं बाधितं स्यात् । न च सर्वाभिर्वङ्क्रिभिः पशोः स-म्बन्धोऽस्ति । पशुद्वयस्य ताभिः सम्बन्धः । न च पशुद्वयं पशुः ॥ ननु पशोः कार्य्यं यः पशोः स्थाने, स वाङ्क्रिभिः सम्बन्धयितव्यः । तथा हि प्रकृतौ वचनं कृतं, समस्ताभिर्वङ्क्रिभिः पशुद्वयस्य सम्बन्धे कृ-ते एकैकस्य षड्विंशत्या सम्बन्धः प्रत्यायितः स्यात् । अत्रोच्यते ।

नैवम् । प्रकृतौ साक्षात् षड्विंशत्या पशुसम्बन्ध । इह परसंख्यया सम्बन्धे क्रियमाणे परोक्षयाऽवयवसंख्यया सम्बन्ध आनुमानिक. स्यात् । न च नियोगतः षड्विंशत्या एकैकस्य सम्बन्धः प्रत्यायित स्यात् । पञ्चविंशतिरेकस्य सप्तविंशतिरेकस्येदृशमपि तत्र गम्यते । न चैवं प्रकृतावभिधानं कृतम् । तस्मादभ्यसितव्य इति ॥१॥ पूर्व० ॥

## अभ्यासेऽपि तथेति चेत् ॥ २ ॥

इतिचेद् भवान् पश्यति,समासवचने अप्राकृतः. शब्द उच्चारितो भवतीति । अभ्यासेऽपि अनभ्यस्तं प्रकृतौ वचनम् । इह साभ्यासमप्राकृतं स्यात् ॥ २ ॥ आ० ॥

## न गुणादर्थकृतत्वाच्च ॥ ३ ॥

नैष दोषः । गुण एष शब्दस्याभ्यासो नाम । स मत्पक्षे अप्राकृत । त्वत्पक्षे पुन. शब्द एव । अङ्गगुणाविरोधे च तादर्थ्यादित्युक्तम् । अर्थाच्च मयैतदश्रुतमुपादीयते, प्रविभक्तं गुणं वक्तुम् । यच्च श्रुतचिकीर्षयाऽश्रुतं क्रियते, इष्यते एव तदस्माभिः । तस्माददोष. ॥ ॥ ३ ॥ आ० नि० ॥

## समासेऽपि तथेतिचेत् ॥ ४ ॥

इतिचेत् पश्यसि, अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति । कार्त्स्न्येन वङ्क्रयो वक्ष्यन्ते इति । समासेऽपि चोदकानुग्रह. । कार्त्स्न्येन वङ्क्रीणामभिधानाद् । अपिच समासवचनं यौगपद्यवचनात् प्रयोगवचनोऽनुगृहीतो भविष्यति । तस्मात् समभ्यसितव्या वङ्क्रय इति ॥ ४ ॥ आ० ॥

## नासम्भवात् ॥ ५ ॥

नैतदेवम् । मम चोदकोऽनुगृहीतः षड्विंशतिशब्दप्रयोगात् । तव प्रयोगवचन. समस्य वचनात् । न च सम्भवति चोदके प्रयोगवचनं प्रत्यादर्त्तव्यम् । बलीयान् हि चोदक । स हि धर्म्माणामुत्पादकः प्रापकश्च । प्रयोगवचनः प्राप्तानामुपसङ्ग्राहक । स उत्तरकालेऽर्थविप्रकर्षाद् दुर्बलः । तस्मादभ्यसितव्यं वचनमिति ॥५॥ आ० नि० ॥

## स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥

स्वाभिश्च वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ । इहापि तथैवोपलक्षयितव्य । सोऽभ्यासवचने शक्यते । समासवचने हि परसंख्या

समुदायस्योक्ता भवति,न स्वाभिः पशव उपलक्षिता भवन्ति। तस्मा-
दसदेतत् ॥ ६ ॥ युक्ति ॥

**वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात्
प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥**

तुशब्द. पक्षं व्यावर्त्तयति । नैतदेवम् । अभ्यसितव्यः षड्विंशतिशब्द इति । किं तर्हि । समस्य वदितव्या वङ्क्रय इति । कुत.? । तत्र वङ्क्रीणां प्रधानत्वात् । प्राधान्यं हि तासाम् । प्रकृतौ षड्विंशतिरेता वङ्क्रय इति अभिसम्बन्धः।तत्रेप्सित. षड्विंशतिरस्येति वङ्क्रयो गणिताः । न ताभिर्गणिताभिः पशुरुपलक्षित. । किं कारणम् । वङ्क्रीभिर्गणिताभिर्दृष्टं प्रयोजनं, कृत्स्नं पार्श्वमुद्धरिष्यते इति । न तु वङ्क्रीभिर्गणिताभि. पशावुपलक्ष्यमाणे किञ्चिद् दृष्टमभ्यधिकं भवति । तस्मान्न पशुसम्बन्धो विवक्षितः । एवं प्राधान्य वङ्क्रीणाम्। अध्रिगोर्वङ्क्र्यर्थत्वान्न तस्य सङ्ख्यापशुसम्बन्ध. प्रयोजनम् । तस्मात् समस्य वचनं कर्त्तव्यम् । एतावत्त्वं प्रकृतौ उक्तमिति विकृतौ एतावत्त्वेव वक्तव्येति । तस्मात् समस्यवचनं कर्त्तव्यमिति ॥ ७ ॥ उत्तरम् ॥

**तासाञ्च कृत्स्नवचनात् ॥ ८ ॥**

तासाञ्च वङ्क्रीणामिदं कार्त्स्न्यमुच्यते,न पशूनाम् । ता अनुष्ठ्योच्चयावयतादिति । षड्विंशतिवङ्क्रयस्ताः प्रयत्नेन उद्धर्त्तव्या इति । इतरथा षड्विंशतिरस्य वङ्क्रयस्तं प्रयत्नेन किञ्चित् कुर्य्यादित्येवमभिसम्बन्धो भवेत् । यद्धि लक्ष्यते, तद्धि कार्य्यसम्बन्धार्थं प्रतिनिर्द्दिश्यते । तदिह षड्विंशतिरस्य वङ्क्रयस्ता इति वङ्क्रीणां प्रतिनिर्देश कार्य्यार्थ. । तस्मात्तासां प्राधान्यमिति ॥ ८ ॥ युक्तिः ॥

**अपि त्वऽसन्निपातित्वात् पत्नीवदाम्नातेनाऽभिधानं स्यात् ॥ ९ ॥**

अपित्विति पक्षव्यावृत्तिः । नैतदेवं, समसितव्या वङ्क्रय इति । किं तर्हि । अविकृत षड्विंशतिशब्द. प्रयोक्तव्यः। कुत । असन्निपातित्वात् । असन्निपाती ह्यध्रिगु', न करणत्वेन निर्द्दिश्यते । यदि हि करणत्वेन निर्द्दिश्येत, ततोऽनेन प्रकाशितं कर्त्तव्यं, न ध्यानेनेति

मन्त्रान्तेन कर्मसन्निपातः स्यात् । तत्राशक्यमविकृतेन यौगपद्यं कर्त्तुमिति विक्रियेत, अभ्यस्येत वा । अथ पुनरेतदकरणं, क्रियमाणानुवादिनयनकालमध्रिगुवचनमनेकस्मिन् पशौ चोदकेनात्र निपतितम् । तत्रैषां स्वसङ्ख्यावतीर्वङ्क्रीरभिवदितुमशक्यं विप्रतिपत्तिरूपं तत् । तस्मान्न तद्वङ्क्रीणामियत्ता वदितव्या । किं तर्हि । षड्विंशतिसङ्ख्यायाः सम्बन्धः कर्त्तव्यः । यथा द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्द एकवचनान्तो न सङ्ख्यया पत्नीः परिच्छिनत्ति । किं तर्हि । एकत्वेन सम्बध्नाति । एवमिहापि । तस्मादविकारेण प्रयोग । एवमविकारे आर्षमनुग्रहीष्यते इति ॥ ९ ॥ पूर्व० ॥

## विकारस्तु प्रदेशत्वाद् यजमानवत् ॥ १० ॥

तुशब्दात् पक्षो विपरिवर्त्तते । नाविकारः । ऊह कर्त्तव्य इति । यद्यत्संख्येषु आहत्य तत्संख्योच्चार्य्यते, तत्र वचनप्रामाण्याद् विप्रतिपन्नसङ्ख्याकस्य शब्दस्य प्रयुज्यमानस्य अदृष्टोऽर्थोऽभ्युपगम्यते । यथा प्रकृतौ पत्नीशब्दस्य, न तु इहाहत्य षड्विंशतिशब्दोऽनेकस्मिन् पशौ प्रयुज्यते । किन्तु चोदकेनेह प्राकृतवचनं प्राप्यते । तत्र यद् न्याय्यं तच्चोदक प्रापयिष्यति, नाहत्य षड्विंशतिशब्दम् । किं तद् न्याय्यम् । यत् प्रकृतौ विवक्षितम् । प्रकृतौ च वङ्क्रीणामियत्ता कथिता । तस्मादिह सा प्रदिश्यते ॥ नन्वेतदुक्तं नाध्रिगो. करणत्वेन निर्देश इति । यदा च न करणं, तदा कथमयं वङ्क्रीयत्तावचन. । श्रुत्या षड्विंशतिसङ्ख्यावचन एव भवितुमर्हतीति । उच्यते । यद्यपि नास्य तृतीयया निर्देशः, तथापि प्रयोगवचनेनोपगृहीतः साधको भवन् कमन्यं दृष्टमुपकारं करिष्यति, अन्यतोऽवदानप्रकाशनात् । अत्रोच्यते । नास्यावदानैरभिसम्बन्धः प्रकृतियागप्रयोगवचनो यागेन सम्बध्नाति । तत्र च हविष्कङ्कीर्त्तनं दृष्ट प्रयोजनम् । षड्विंशतिशब्दोऽपि तत्स्तुतये भविष्यतीति । नैतदेवमिति ब्रूम । प्रकरणाद् यागमात्रेण अभिसम्बन्धे सति ऋत्विजां प्रैष इति गम्यते । लिङ्गात्तु शमितृप्रैषमेनमध्यवस्याम । तथारूपाणि ह्यत्र वाक्यानि, दैव्याः शमितार उपहूता मनुष्या आरभध्वमिति । तथा षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतादिति । तस्माद् वङ्क्रीयत्तावचन एष, न षड्विंशतिसङ्ख्यावचनः । यथा यजमानपदे एकयजमानवाचिनि स्वसङ्ख्या-

मात्रैकवचनमिति कृत्वा द्वियजमानके च प्रयोगे स्वसङ्ख्यावचनप्रदेशाद् ऊहः क्रियते । एवमिहापीति ॥ १० ॥ उत्तरम् ॥

**अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥**

यदुक्तं पत्नीवदिति । युक्तं पत्न्यां न तत्रैकपत्नीके यजमाने पत्नीशब्दः समाम्नातः । द्विपत्नीके बहुपत्नीके च प्रदेशाद् भवति । यथा एकस्याः पत्न्याः स्वसङ्ख्यावचन । एवं द्वयोर्बहूनां च स्वसङ्ख्यावचन इति । तस्माद्वैषम्यं पत्न्याम ॥ ११ ॥ युक्तिः ॥

**अनाम्नातस्त्वविकारात् संख्यासु सर्वगामित्वात् ॥१२॥**

तुशब्दोऽन्यं पक्षमवतारयति, न समस्य-वचनं सङ्ख्योहः स्यादिति । यथा समाम्नातं षड्विंशतिप्रातिपदिकं प्रयोक्तव्यम् । एवमविकारे आर्षानुग्रहो भविष्यति । प्रविभक्तं गुणमभिवदितुं वचनमूहिष्यते । षड्विंशती एतयोर्वङ्क्रय इति । ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति । उच्यते । यत्रा षड्विंशतिगुणः प्राधान्येन विवक्षितो भवति, तद्विशेषणार्थं सङ्ख्येयमुच्चार्य्यते । तदा प्रथमान्तेनापि लक्षणया सङ्ख्या विशेष्यते । यथा,इन्द्राग्नी देवते इति। यदा दिवेरैश्वर्य्यकर्मणोऽर्थो गुणो विवक्षितो भवति,तदैकवचनान्तमेव इन्द्राग्नी इति शब्दो लक्षणया विशिनष्टि । तथा च प्रयोगो दृश्यते । पञ्चपञ्चाशतस्त्रिवृत संवत्सराः पञ्चपञ्चाशत पञ्चदशा पञ्चपञ्चाशतः सप्तदशा पञ्चपञ्चाशत एकविंशा इति सङ्ख्यावचनः शब्दस्त्रिवृत इत्यनेन लक्षणया विशेष्यते । यथा,देवदत्तयज्ञदत्तविष्णुमित्राः पर्षदिति। एवं षड्विंशती वङ्क्रय इति । एवमविकारं च भविष्यति । वङ्क्रिगामी च षड्विंशतिशब्दो भविष्यतीति ॥१२॥पूर्व०

**सङ्ख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥**

सत्यमुपपद्यत एव वचनं, षड्विंशती वङ्क्रय इति । संख्याप्रधानस्त्वेवं निर्देश कृतो भवति । षड्विंशतिगुणः प्राधान्येन विवक्षितः । तद्विशेषणत्वेन वङ्क्रीणामुच्चारणम् । वङ्क्रयः पुनः प्रकृतौ प्रधानं, न सङ्ख्या। तदुक्तं,प्राधान्यमध्रिगोस्तदर्थत्वात्।तासाञ्च कृत्स्नवचनादिति । तदेवं न प्रकृतिवदभिधानं कृतं भवेत् । तत्र चोदक एव बाध्येत । तस्मात् समसितव्यमेव वचनमिति ॥ १३ ॥ उत्तरम् ॥

**अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः ॥१४॥**

न खल्वप्यस्मिन् पक्षे सर्वमेवाम्नातमुच्यते, अनाम्नातवचनमपि प्रतीयते इति षड्विंशती षड्विंशतय इति । अथ द्विवचनं बहुवचनं वा अनार्षं, तथा न क्रियते, न तासां वङ्क्रीणां कात्स्न्येनाभिधानं स्यात् ॥ १४ ॥ युक्तिः ॥

अभ्यासो वाऽविकारात् ॥ १५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न समासवचनम् । अभ्यासः स्यात् । एवमविकारो भविष्यति । तत्रार्षचोदकावनुग्रहीष्येते । सर्वं समाम्नातं कृतं भविष्यति । केवलमस्यशब्दोऽभ्यसिष्यते । कृत्स्नाश्च वङ्क्रयोऽभिहिता भविष्यन्ति ॥ १५ ॥ पूर्व० ॥

पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात् समासशब्दः स्यात् ॥ १६ ॥

तुशब्देनावधार्य्यते । नैतदेवं, समस्य-वचनमेवेति । कथम् ? । एवं सति पशुः प्राधान्येनात्र निर्दिष्टः स्यात् । पशोः पशोः षड्विंशतिः षड्विंशतिर्वङ्क्रयो न कश्चिद् अषड्विंशतिवङ्क्रिः पशुरिति पशो सङ्ख्यासम्बन्धेऽभिधित्सिते एवं वचनं भवति । न च पशुसङ्ख्यासम्बन्धः प्रकृतौ विवक्षित इत्युक्तम् । इयत्ता वङ्क्रीणां प्रकृतौ वक्तव्या । इहापि सैव चोदकेन प्रदिश्यते । तेन नाभ्यासः । स हि पशुनिमित्तकः । तस्मात् समस्य-वचनं वङ्क्रीणां कर्त्तव्यमिति ॥१६॥ सि० ॥ षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ॥ १ ॥

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

अस्त्यश्वमेधः । तत्र सवनीयः पशुः, अश्वस्तूपरगोमृगौ च । अस्ति तु प्रकृतौ अग्नीषोमीये षड्विंशतिरस्य वङ्क्रय इति वचनम् । तदिह चोदकेन प्राप्तम् । तत्राश्वस्य चतुस्त्रिंशद्वङ्क्रयः । तूपरगोमृगयोः षड्विंशतिः । अस्ति तु ऋक् समाम्नाता । चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्याविशस्ता इति । तदिदं सन्दिह्यते । किमश्वस्य वैशेषिकमिदं वचनं कर्त्तव्यं, तूपरगोमृगयोः समासेन ? उत सर्वेषामेव समासवचनम् । किं प्राप्तम् । अश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तस्य वैशेषिकमिदं वचनं कर्त्तव्यम् । कस्मात् । वचनात् । एवं चतुस्त्रिंशद्वाजिनो देवबन्धोरित्येतद् वचनमर्थवदिति । इतरथा एतद्

वचनमर्थकं स्यात् । तस्माद्वैशेषिकमश्वस्येति ॥ १७ ॥ चतुस्त्रिंशद्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ॥ २ ॥

**तत् प्रतिषिद्ध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १८ ॥**

तत् प्रतिषिद्ध्य प्रकृतिर्नियुज्यते, प्रकृतौ यत् कृतं वचनं तत् कर्त्तव्यमिति । कथम् । न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति, सा नियुज्यमाना चतुस्त्रिंशद्वाच्यत्वाद् वारयति शब्दम् । तस्मात् प्रतिषिद्धत्वाद्वैशेषिक वचनं न कर्त्तव्य, सामासिकं वचनं कर्त्तव्यम् ॥ ननु षड्विंशतिरित्येव ब्रूयादिति वचनात् प्रतिषिद्धेऽपि वैशेषिकमेव वचन कर्त्तव्यमिति।नेत्युच्यते, न ह्ययं षड्विंशतिशब्दो विधीयते । किं तर्हि । यथाप्राप्तिवचनमनूद्यते। कथमवगम्यते । एवकारकरणात् । यथाप्राप्ते एवकारकरणम् । न च षड्विंशतिशब्दः प्राप्त । षड्विंशतिसङ्ख्याभिधानं प्रकृतौ कृतमिहापि तदेव प्राप्तम् । षड्विंशतिशब्देन तत् प्रकृतौ लक्षितमिहापि षड्विंशतिशब्दस्तल्लक्षणार्थमेवोच्चारित । षड्विंशतिसङ्ख्यापरेऽनेकोऽर्थो विधीयते। चतुस्त्रिंशत्प्रतिषेधः । षड्विंशतिसंख्यावचनञ्च । तत्र वाक्यं भिद्येत। भिद्यमाने एकवाक्यरूपं बाध्येत । किं तत् । साकाङ्क्षत्वम् । न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति । एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत् कर्त्तव्यतया प्रतिषेधं प्रशंसितुमुच्चार्यते । तदेवमेकवाक्यतामापद्यते । सैकवाक्यता संख्यापरे बाधिता स्यात् । अनेकार्थविधानञ्चान्याय्यम् एकार्थविधाने सम्भवति । भूयसी हि तत्रादृष्टकल्पना स्यात् । तस्माद्यथाप्राप्तवचनं कर्त्तव्यमिति ॥ १८ ॥ सि० ॥

**ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १९ ॥**

आम्नाता हि ऋक् प्रतिषिद्धा च । तस्मादश्वस्य वैशेषिकं वचनं स्यात् । तथा च अविकल्पो भविष्यति । अविकल्पश्च न्याय्य । विकल्पे विरुद्धं वचनमन्योन्येन भवति । भवतीति चेद्, न प्रतिषेधः । नेति चेद्, न विधिः । तस्माद्वैशेषिकं वचनं कर्त्तव्यम् ॥ १९ ॥ पूर्व० ॥

**तस्यां तु वचनादैरवत् पदविकारः स्यात् ॥ २० ॥**

अथ यदुक्तम्, ऋक् तत्र प्रतिषिद्ध्यते इति । नैतदेवम् । तस्यां वचनात् पदविकारः स्यात् । वचनं हि भवति, न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयादिति । तत्र चतुस्त्रिंशत्पदं श्रुत्या प्रतिषिद्ध्यते । ऋग् लक्षणया प्रतिषिद्ध्यते । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्माद्वैशेषिकं वचनं कर्त्तव्यमिति ॥ २० ॥ आ० नि० ॥

## सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात् ॥ २१ ॥

सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य । कस्मात् । पदेन असंयोगात् । चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्याद्, विना तस्मात् पदात् । नैव ऋक्शेषो वङ्क्रिगणनं कुर्य्यात् ॥ अथ षड्विंशतिपदेन सम्बद्ध्येत, तथापि नाश्ववङ्क्रीसंख्यां ब्रूयात् । तत्र दृष्टोऽर्थो नावकल्पेत । ऊनश्च वाक्यमर्थं न साधयेत् । ऊने च वाक्ये दोषश्रवणात् । मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति । चतुस्त्रिंशत्पदं चेह अनर्थकं स्यात् । तस्मात् समस्य वचनं कर्त्तव्यम् । ऋचश्च विध्यन्तरेण विहितत्वाद्वैशेषिकं वचनमिति ॥ २१ ॥ उत्तरम् ॥ आश्वमेधिकसवनीयाश्वस्य, न चतुस्त्रिंशदिति ब्रूयादित्यनेन समस्ताया एव ऋचो निषेधाधिकरणम् ॥ ३ ॥

## वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥

ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगौ वचनं, वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना इति । तत्रोरूकशब्दं प्रति विचारः । किं वनिष्ठुमस्य मा राविष्टोलूकसदृशं मन्यमानाः ? उत उरूकं वपां मन्यमाना वनिष्ठुं मा राविष्टेति । किं प्राप्तम् । वनिष्ठुमुलूकं मन्यमाना इति । कथमुरूकशब्दः उलूकवचनः ? । रलयोः समानवृत्तित्वात् । पर्य्यङ्कः पल्यङ्कः, रोमाणि लोमानि, अङ्गुरिः अङ्गुलिः । उलूकसदृशत्वाच्च वनिष्ठोः, वपायाश्चाप्रसिद्धेः ॥ एवं प्राप्ते ब्रूमः । उरूकशब्देन वपाभिधानं स्यात् । वपां मन्यमाना वनिष्ठुं मा राविष्टेत्येषा बुद्धिः क्रियमाणा दृष्टार्था । भवति हि वनिष्ठुसन्निधानाद् व्यामोहेन वनिष्ठोर्लवनप्रसङ्गः । तं च निवर्त्तयन्नेष शब्दो दृष्टप्रयोजनो भवति । न हि वनिष्ठुर्न लवितव्य एव । वपोद्धरणकाले वपां मन्यमानैर्न लवितव्यः । इतरस्मिन् पक्षे वनिष्ठुं मा राविष्टेति लवितव्ये वनिष्ठौ अन-

र्थक प्रतिषेधः । उलूकसदृशवचनञ्चअदृष्टार्थम् । कथं पुनर्वपायामप्रयुक्तो वपां प्रत्याययिष्यति उरूकशब्दः ? इति । उच्यते । अवयवप्रसिद्ध्या उरुशब्दस्तावद्विस्तीर्णवचनो दृष्टः । तद्यथा उरु राजाङ्गणम्, उरु तैलिकाङ्गणमिति । तथा, उरुं हि राजा वरुणश्चकार सूर्य्याय पन्था मन्वेत वा उ इति । तथा उरु विष्णो विक्रमस्व इति । इहाऽपि स विस्तीर्णवचन एव । तथा कशशब्दो मेदसि प्रसिद्धः । यथा, कशवाहिनो रथा । मेदोवाहिन इति गम्यते । तस्यैकदेशः कशब्दः समुदायप्रत्ययमादधाति । मेदस्विनी तस्य वपा, न विस्तीर्णं मेदो मन्यमानेन तत्सन्निकृष्टो वनिष्टुर्लवितव्य इति वपावचनता सिद्धा भवति । किं भवति प्रयोजनम् । वनिष्टुवचनपक्षे उपमानस्य उरूकशब्दस्य अनूह । वपावचनपक्षे उरुशब्द ऊहितव्यः कशब्दश्चेति उरूणी के,उरूणि कानि। अथ वा उरूके,उरूकानि,यदि समासाभिप्राय ॥ २२ ॥ अग्नीषोमीयपशावुरुकशब्देन वपाभिधानाधिकरणम् ॥ ४ ॥

## प्रशसाऽस्याभिधानम् ॥ २३ ॥

तस्मिन्नेवाध्रिगावाम्नायते, प्रशसा बाहू इति । तत्र सन्देह । किं प्रशसा बाहू कृणुतात्, प्रशसेति तृतीयान्तः । प्रशसा बाहू ग्रहीतव्याविति ? उत प्रशसेति द्विवचनम्, आकारे विभक्तेः कृते प्रशस्तौ बाहू कर्त्तव्याविति ? । किं प्राप्तम् । प्रशसाऽस्याभिधानम् । असौ हि शासशब्दः प्रसिद्धः । तथाहि तमनुवदति । दश प्रयाजानिष्ट्वाह शासमाहरति । असिं वै शासमाचक्षते इति । अनर्थिका च बाह्वो स्तुतिः । स्तुतौ बाहू किमप्यदृष्ट कुरुत इति मान्त्रवर्णिकं तयोर्देवतात्वं क्लिपतं स्यात् । तच्चायुक्तमन्यस्मिन् पक्षे सति । तथा शौन शेफे भवति दर्शनम् । अतस्त्वामग्निं शासहस्तं शासेन विशसनत्वान्न द्रष्टुमुत्सहे इति । तस्मादसिना प्रशसेति गम्यते ॥ २३ ॥ पूर्व० ॥

## बाहुप्रशंसा वा ॥ २४ ॥

अथ वा बाहुप्रशंसैषा । प्रशसा बाहू कृणुतात् प्रशस्तौ बाहूच्छेत्तव्याविति । तथा प्रशसाशब्दस्य दृष्टार्थता भविष्यतीति । कात्स्न्र्येन हि बाह्वोः प्रशस्तता । कृत्स्नौ बाहू उद्धरतेत्यर्थः । कृत्स्नौ च बाहू उद्धर्त्तव्याविति । इतरस्मिन् पक्षे स्वधितिना विशसनं क्रियते, असेश्च वाचक शब्द उच्चार्य्यते । यदि वा मान्त्रवर्णिकं द्रव्यं विधीयते

असिना बाहू छेत्तव्यौ इति । तच्चायुक्तं विधिविहिते स्वधितौ सति। न च न प्रशस्तौ बाहू । ताभ्यां पशुर्हि गच्छति । अवनम्य च शमी-करीरे भक्षयति । तस्माद् बाहुप्रशंसा । किं भवति प्रयोजनम्। अश्वमेधे शतं राजता हरितत्सरवोऽसयः । तत्रासिपर ऊहो भवति। यथा पूर्व पक्ष । यथा तर्हि सिद्धान्तः, तथा बाहुपरेणोहेन भवित-व्यम् २ ॥४ ॥ सिद्धान्त. ॥ अध्रिगौ प्रशसा बहू इत्यत्र प्रशंसाशब्द-स्य प्रशंसापरत्वाधिकरणम् ॥ ५ ॥

## श्येनशलाकश्यपकवषस्रेकपर्णष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २५ ॥

अस्मिन्नेवाध्रिगाविदमाम्नायते, श्येनमस्य वक्ष कृणुतात्, शला दोषणी कश्यपेवांसौ कवषोरू स्नेकपर्णाष्ठीवन्त इति । एषु संशय. । किमाकृतिवचनमेषु भवति । उत कात्स्न्योंद्धरणमिति । किं प्राप्तम् । प्रसिद्धसन्निधानादाकृतिवचनम् । इह प्रसिद्धस्य सन्निधौ यदभिधी-यते, किञ्चिदिदं कर्त्तव्यमिति तत्राकृतिवचनं गम्यते । यथा, अमी पिष्टपिण्डाः सिंहा. क्रियन्तामिति, अर्जुनबदरा मेखलाः क्रियन्ता-मिति सिंहाकृतिवचनं मेखलाकृतिवचनञ्च गम्यते । एवं श्येनाकृति वक्ष' कर्त्तव्यं, शलाकृती दोषणी, कश्यपाकृती अंसौ, कवषाकृती ऊरू, करवीरपर्णाकृती अष्ठीवन्ताविति ॥ २५ ॥

## कात्स्न्यं वा स्यात्तथाभावात् ॥ २६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, आकृतिवचन इति । किन्तर्हि । कृत्स्नोद्धरणं विवक्षितम् । कृत्स्नानि उद्धृतानि एतानि एतदाकृतिकानि भवन्ति । यथा श्येनाद्याकृतिकानि भवन्ति तथैतानि कुरुत, कृत्स्नानि उद्धरतेत्ययमर्थोऽवगम्यते । लक्षणयेदं चोद्यमानं दृष्टार्थं भवति । कृत्स्नोद्धृतैर्हि तै प्रयोजनम् । तथाहि तदाकृतिका-नामवत्तं भवति । इतरथाऽतदाकृतिकानामवद्यात् । तस्मात् कात्स्न्यं-मवगम्यत इति ॥ २६ ॥ सि० ॥

## अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥

अध्रिगुश्चाङ्गानामुद्धरणार्थः । अङ्गानां कात्स्न्येनोद्धरणं कथं स्या-दित्येवमर्थः । कथम् । एवं हि भवति वचनम् । गात्रं गात्रमस्यानूनं कृणुतादिति । तस्मादपि श्येनादिभिः कृत्स्नोद्धरणं गम्यत इति ।

प्रयोजनं पक्षोक्तम् ॥ २७ ॥ युक्ति ॥ अग्निगौ श्येनमस्य वक्ष इत्यादौ श्येनादिशब्दानां कात्स्न्र्यवचनाधिकरणम् ॥ ६ ॥

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २८ ॥**

अस्ति अग्निहोत्रम् । य एवं विद्वानग्निहोत्रं जुहोतीति । तत्रेदमाम्नायते । अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद् यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायादिति । यदि तु दर्शार्थेन पौर्णमासार्थेन वा अग्निरुद्धृतोऽहुतेऽग्निहोत्रे उद्वायात्, किं ज्योतिष्मती कर्त्तव्या, न ? इति । किं प्राप्तम् । कर्त्तव्येति । कुतः । उपसम्प्राप्तं हि निमित्तम् । भवितव्यं नैमित्तिकेनेति । अग्निरसौ उद्धृतोऽहुतेऽग्निहोत्रे उद्वातः । एतावच्च निमित्तं ज्योतिष्मत्या । तस्मात् सा कर्त्तव्येति । न चात्र शब्दोऽस्ति अग्निहोत्रार्थमुद्धृते उद्वाते कार्य्येति तस्मादपि कर्त्तव्या ॥ एवं प्राप्ते ब्रूम, प्रासङ्गिके एवंलक्षणकेऽग्नावनुगते प्रायश्चित्तं न कर्त्तव्यम् । परार्थं हि तदुद्धरणं कृतम् । दर्शपूर्णमासार्थम् । अग्निहोत्रार्थे चादुद्धृते व्यापन्ने तदाम्नातम् । तस्मान्न कर्त्तव्यम् । आह । ननूक्तं, नास्त्यत्र शब्द, अग्निहोत्रार्थमुद्धृतेऽनुगते प्रायश्चित्तमिति । अत्रोच्यते । यद्यपि नास्त्येवञ्जातीयक शब्द, तथाप्यग्निहोत्रार्थमेवोद्धृतेऽनुगते प्रायश्चित्तं गम्यते । कथम् । अग्निहोत्रप्रकरणे एतदाम्नातमिति, अग्निहोत्रप्रकरणे आम्नानात्तस्योपकारकमिति गम्यते । नाग्निहोत्रविशिष्टमुद्धरणम् । स्वार्थे हि सर्वं क्रियते, न परविशेषणार्थेन । अत्रोच्यते । अग्निसम्बद्धमेतत् प्रायश्चित्तमुच्यते, नोद्वानसम्बन्धम् । किमतो यद्येवम् । यद्युद्वानसम्बद्धं भवेद्, उद्वानस्याऽनङ्गत्वान्नैतदुद्वानार्थमिति गम्यते । प्रकृतं नाग्निहोत्रेण प्रयोजनेन सम्बध्यते । अग्निसम्बन्धे पुनर्गुणत्वादग्नेस्तेनैव प्रायश्चित्तस्य प्रयोजनसम्बन्ध । तत्रैवमुद्धृतो व्यापन्नो भवति । यदि स प्रयोजनं नाभिनिर्वर्त्तयति । तत्राग्निहोत्रार्थस्योद्धरणस्याग्निहोत्रनिर्वृत्तिः प्रयोजनम् । दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः । उद्धृतश्चानुगतं स्वस्मै प्रयोजनायायोग्य प्रायश्चित्तेन योग्य क्रियते । तच्च योग्यं कुर्वन् प्रायश्चित्तमग्निहोत्रस्योपकरोति । यस्तूद्धृतो दर्शपूर्णमासप्रयोजन., तं योग्यं कुर्वन्नग्निहोत्रस्योपकुर्य्यात् । यस्त्वग्निहोत्रार्थमुद्धृतः, तं योग्यं कु-

येनाग्निहोत्रायोपकरोति । तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तम् । कथं पुनर्ज्ञायते । अग्निना प्रायश्चित्तस्य सम्बन्धो, नोद्धानेनेति । अग्निविशिष्टेन उद्धानेन सम्बन्ध इति श्रुत्या गम्यते। उद्धानपरीतेनाऽग्निनेति वाक्येन। श्रुतेर्वाक्याद्बलीयस्त्वादुद्धानसम्बन्ध प्राप्नोतीति। उच्यते। उद्धानसम्बन्धस्यापरिहार्य्यत्वाद् यस्योद्धायादित्यविवक्षितमेव प्राप्नोति। अदृष्टार्थत्वाच्च अनाकाङ्क्षितेन सम्बन्धः । तदुद्धानपरीतेऽग्नौ प्रायश्चित्तेन सम्बद्ध्यमाने व्यापत्तौ सत्यामाकाङ्क्षितेन सम्बन्धो, दृष्टार्थता च। तस्मादुद्धानपरीतोऽग्निः प्रायश्चित्तेन सम्बद्ध्यत इति । दर्शपूर्णमासार्थमुद्धृतो यत्रानुगच्छति तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः । परकीयश्चोद्धरणमिति तत्र प्रायश्चित्तं न स्यात् । अपि च लिङ्गं भवति। किमिति । यस्याग्निरुद्धृतोऽग्निहोत्र इत्यनुवादः। विधौ हि एतस्मिन् सति वाक्यभेदप्रसङ्ग । यद्याग्निहोत्रप्रयोजनमुद्धरणं, ततोऽकृतप्रयोजनमिति विवक्षायाम् अहुतेऽग्निहोत्रे इति वचनमनुवदितुमुपपद्यते । तस्मादपि अग्निहोत्रप्रयोजने उद्धृतेऽनुगते प्रायश्चित्तं भवितुमर्हतीति । किन्तर्हि तदा कर्त्तव्यम् । अविशेषविहितमग्नेरुपशमे प्रसज्ज्यादिति ॥ २८ ॥ दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ॥७॥

## धारणे च परार्थत्वात् ॥ २९ ॥

इदमाम्नायते, धार्यो गतश्रिय आहवनीय इति अस्यानुगमे प्रायश्चित्तम्। अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायादिति । तत्रैषोऽर्थ सांशयिकः। यदा धार्य्योऽग्निरनुगच्छति, तदा किमिदं प्रायश्चित्तं कर्त्तव्यं, न ? । किं प्राप्तम्। कर्त्तव्यमिति। उपसम्प्राप्तं, हि निमित्तम् । एतावदिह निमित्तम् । अग्निरग्निहोत्रार्थमुद्धृत कृतप्रयोजन उद्वातीति। तच्चेह सर्वं प्राप्तम् । तस्मात् कर्त्तव्यं प्रायश्चित्तमिति । ननु सर्वकर्म्मार्थमेतद्, न केवलायाग्निहोत्राय। उच्यते। यदि सर्वकर्म्मार्थं, समुदायार्थं तद्, न केवलस्यार्थेन भवतीत्युच्यते। यत्तु एकैकस्मै इत्येवं सर्वार्थं तत्, सर्वेभ्योऽपि प्रयुक्तमग्निहोत्राय प्रयुक्तं भवति । न चेदं सर्वकर्म्मसमुदायार्थम् समुदायस्याचोदितत्वात् साधनानि प्रत्याकाङ्क्षाभावः। एकैकं तत्र कर्मोद्धरणमाकाङ्क्षति। तस्मात् सर्वार्थमपि सदग्निहोत्रार्थं

भवति। एवञ्चेद् अनुगमनप्रायश्चित्तं प्राप्नोतीति। यथा पर्युक्षणं परिसमूहनं तृणापचय इत्येवमादय पदार्था धार्य्येऽग्नावहन्यहनि क्रियन्ते, एवं प्रायश्चित्तमपि क्रियेत॥ एवं प्राप्ते ब्रूमः। धारणे च गतश्रियोऽनुगमने इदं प्रायश्चित्तं न कर्त्तव्यम्। कुत। परार्थत्वात्। न हि तदाऽग्निहोत्रार्थमुद्धरणं यस्मिन् काले भवत्यसौ गतश्रीः। तत्रान्यार्थमुद्धृतोऽग्निः सर्वार्थं धार्य्यते। उद्धरणं तु तद् एकस्मै एव प्रयोजनाय। धारणं तु सर्वकर्म्मार्थम्। न च धारणेऽग्निहोत्रार्थेऽनुगमने प्रायश्चित्तं विहितम्। किं तर्हि। उद्धरणे। परकीयं चात्रोद्धरणं, परार्थमुद्धरणम्। यदर्थमुद्धरणं तदर्थमुद्धृतेऽपि तत् प्रायश्चित्तम्। तस्मान्न तत्रेदं प्रायश्चित्तमिति॥ २९॥ सि०॥

## क्रियार्थत्वादितरेषु कर्म स्यात्॥ ३०॥

अथ यदुक्तं, परिसमूहनं पर्य्युक्षणमित्येवमादय पदार्था धार्य्येऽपि क्रियन्ते। एवं प्रायश्चित्तमपीति। अत्रोच्यते। युक्तं तत्। परिसमूहनादीनि क्रियन्ते। चोदितानि हि तानि। संस्कारार्थत्वेन शक्यानि च, अकृतप्रयोजनानि च। उद्धरणं तु कृतप्रयोजनत्वान्निवृत्तम्। नियतदेशकालत्वाच्चाशक्यम्। तस्मादिदमतुल्यं प्रायश्चित्तेन॥ ३०॥ आ० नि०॥ धार्य्योद्धाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाऽधिकरणम्॥ ८॥

## न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात्॥ ३१॥

अस्त्यग्निहोत्रे उद्धरणमन्त्रः, वाचा त्वा होत्रा प्राणेन उद्गात्रा इत्येवमादिः। तत्रायमर्थः सांशयिक। यद्दर्शपूर्णमासार्थेनोद्धरणं क्रियते, किं तत्रैष मन्त्र कर्त्तव्यो, न? इति॥ किं प्राप्तम्। दर्शपूर्णमासार्थमप्युद्धृतेऽग्नौ अग्निहोत्रं हूयत एव। तत्र चेन्मन्त्रो न क्रियते, अमन्त्रोद्धृतेऽग्निहोत्रं प्रवर्त्तते। तस्मान्मन्त्रेण तदुद्धरणं कर्त्तव्यम्। अथोच्येत, कालाभावे विगुणत्वादुद्धरणं नाग्निहोत्रस्येति। तन्न। कालमात्रं हि अपगतम्। उद्धरणं तु विगुणमप्यग्निहोत्रस्य भविष्यतीति। एवञ्चेत् समन्त्रकं कर्त्तव्यमिति॥ एवं प्राप्ते ब्रूमः। परार्थमुत्पन्नेऽग्नौ यस्याग्निहोत्रं प्रवर्त्तते। चोदनेति कर्म ब्रूमः। न तत्र मन्त्रः कर्त्तव्य इति। न तदग्निहोत्रस्योद्धरणम्। अतः परकीये उद्धरणे न कर्त्तव्यमिति। उच्यते। ननूक्तं, विगुणमुद्धरणमग्निहोत्र-

स्यैव भविष्यति, न गुणाभावे प्रधानाभावोऽपीति । अत्रोच्यते । न गुणः कालः । निमित्तमसौ भवतीत्येतदुक्तम् । अतो निमित्ताभावे क्रियमाणमश्रुतं कृतं भवति । तस्मान्न तदुद्धरणमग्निहोत्रस्येति । न चेदुद्धरणमग्निहोत्रस्य, तस्मादत्र मन्त्रो न कर्त्तव्य. । कृतोऽपि ह्यसावनर्थक इति ॥३१॥ दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम्॥९॥

## प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ ३२ ॥

ज्योतिष्टोमे समाम्नायते, आदित्यः प्रायणीयः पयसि चरुरिति तत्र सन्देहः । किं प्रदानार्था पयोधर्माः पयसि कर्त्तव्या, उत नेति । यदि प्रदानार्थमेतत् पय, ततः कर्त्तव्या । अथ श्रयणार्थं, न कर्त्तव्या । कथं संशयः । सप्तमीनिर्देशाच्छ्रयणार्थं पय इति गम्यते । देवतासम्बद्धस्य तु चरोरधिकरणे पयसि, श्रूयमाणे वाक्यभेदाशङ्का। अतः संशयः ॥ किं तावत् प्राप्तम् । प्रदानार्थमिति । कथम् । आदित्यश्चरुर्भवति । स च पयसीत्येवमनेकार्थावधाने वाक्यं भिद्यते । द्वावपि चेहार्थौ, अतो वाक्यादवगम्येते । यद्यन्यतरद्देवतयोर्विधीयते तदाऽन्यतरदविधीयमानं गम्यते । अतो न वाक्यभेद. । यथा च न वाक्यभेदस्तथा आश्रयितव्यम् । तत्राधिकरणसम्बन्धे विधीयमाने देवतासम्बन्धावगतिर्नावकल्पते, प्रमाणान्तरेणाप्राप्तत्वात् । देवतासम्बन्धे तु विधीयमाने हि ये निर्दिश्येते चरुपयसी, तयोर्निर्देशसामर्थ्याद्वाक्येन संसृष्टं गम्यते । तच्च देवतया सम्बद्ध्यते । तत्रार्थात् पयआधारश्चरुर्भवति ॥ आह । वाक्येन द्वे चरुपयसी गम्येते । न तयोः संसर्ग । उच्यते । यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्यमेतयोर्गम्यते । तत्रार्थात् संसर्ग । एकत्वाच्च वाक्यस्य समुच्चय । तेनात्र निर्देश एव विवक्षितो, नाधिकरणसम्बन्धो गम्यमानोऽपि विधीयते । एवं तु निर्देश क्रियते । ससृष्टे चरुपयसी कथं गम्येयातामिति । तत्र चरुसंसृष्टं पयश्चरौ त्यज्यमाने नियतं त्यज्यते । तदस्य प्रदानदर्शनं भवति । पयसा श्रयमाणस्य तस्य प्रदानं कथं स्यादिति सप्तमी निर्दिश्यते । तस्माद् भोजनार्थं यागार्थमेतत् पयः । भोजनमिति सारूप्याद् यागमाह । तस्माच्च पयः प्रदानार्थं पयोधर्मै. सम्बद्ध्यते ॥ आह । न त्यागमात्रं यागः । देवतामुद्दिश्य यस्त्याग.

स यागो भवति । उच्यते । अयमप्यदितिं देवताम् उद्दिश्य त्यागः क्रियते इति ॥ आह । न पयसोऽदितिर्देवता । न ह्युद्देशमात्रेण देवता भवति । या यस्य श्रूयते सा तस्य देवतेति । चरोश्चैषा श्रूयते, न पयसः । उच्यते । उभयस्य निर्देशात् । उभयेन देवता सम्बद्ध्यते । संसृष्टेन मधूदकवत् । यथा दधि मधु घृतं धाना उदकं, तत् ससृष्टं प्राजापत्यमिति भवति । एवमेवेदं द्रष्टव्यम् । यद्यपि सप्तमीनिर्दिष्टं, सप्तम्यर्थस्याविधित्सितत्वान्निर्देशमात्रस्य विवक्षितत्वात् । यथौदने दधि दत्वा अभ्यवहर्त्तव्यमिति ओदनस्य निर्देशमात्रं विवक्ष्यते, नाऽधिकरणत्वम् । एवमिहापि द्रष्टव्यम् । तस्मात् प्रदानार्थं पयः । प्रदानार्थाश्च पयोधर्मा कर्त्तव्या इति ॥ ३२ ॥ पूर्व० ॥

## संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥

एवञ्च कृत्वा प्रदेयसंस्काराणां केषाञ्चित् प्रतिषेध उपपन्नो भवति । अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयतीति प्राप्ते हि प्रतिषेधो न्याय्य इति ॥ ३३ ॥

## तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥

तत्प्रतिषेधे पय.प्रतिषेधे तथाभूतमपि लोके वर्ज्यते। पयसा सिक्तं, पयः श्रृतञ्च । नचैष श्रयणार्थस्य द्रव्यस्य धर्मः । यथा श्रयणार्थं पानीयम् । तत्प्रतिषेधे तैले पीते पानीयं न पातव्यमिति विलेप्यं यवागूश्च पीयते। न च तथाभूतस्य वर्जनात् पयो लोके एवं भवति। भोजनार्थं हि तत् । यथा हि लोके पयः, तद्वदिहापि भवितुमर्हतीति सामान्यतो दृष्टं व्यपदिष्टम् ॥ ३४ ॥ युक्ति ॥

## अधर्मत्वमप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥

अधर्मत्वं तु पयसः । नास्य प्रदेयपयोधर्मा भवेयुरित्यर्थः । कुतः अप्रदानात् । न हीदं प्रदीयते । ननु चरौ प्रदीयमाने प्रदायिष्यत इत्येवमर्थं पयसि श्रयणमुच्यते। नेत्याह। श्रृतश्चरु कथं स्यादित्येवमर्थं हि तज्ज्ञायते । श्रृतैस्तण्डुलै प्रयोजनमस्ति । न ह्यन्यथा चरुर्भवतीति । न तु प्रत्तेन पयसा नैतद्दातव्यं श्रूयते । कथम् । प्रणीतार्थे विधानात् । ननु वाक्यभेद एवं भवतीति परिहापित एष पक्षः। संसृष्टमत्र हविर्भवतीत्युक्तम् । उच्यते। अतुल्यत्वादसंसर्ग. । अतुल्ये

चरुपयसी । प्रत्यक्षतोऽधिकरणत्वेन पय श्रूयते । प्रदेयत्वेन चरुः । पयसो यद्वाक्येन प्रदेयत्वं गम्यते, तदधिकरणश्रुत्या बाध्यते । यत्तु वाक्यभेदप्रसङ्ग इति । तन्न । न हि पयसि चरुरिति सम्बन्धो भविष्यति । कथन्तर्हि । पयसि आदित्य इति । उभावादित्यशब्देन सम्भन्त्स्येते । आदित्यः पयसि, आदित्यश्चरुरिति उभौ चरुपय शब्दौ आदित्यप्रधानावित्येकं वाक्यं भविष्यति, न वाक्यभेदप्रसङ्गः । पय-आधार आदित्यो भविष्यति । तस्मान्न पयसि प्रदेयधर्मा भवितुमर्ह-न्ति ॥ ३५ ॥ सि० ॥

**परो नित्यानुवादः स्यात् ॥ ३६ ॥**

अथ यल्लिङ्गमुक्तम्, अयजुषा वत्सानपाकरोति, अपवित्रवति गां दोहयतीति । नैतत् । एवं सति अस्यार्थस्य साधकं भवति । किन्त-र्हि । एतन्नित्यानुवादकम् । नित्यमेतमर्थं सन्तमनुवदति । नैवाप्रदेय-त्वाद् यजुषा वत्सा अपाक्रियन्ते । न पवित्रवति गौर्दुह्यते । ननु नित्यानुवादोऽनर्थकः । उच्यते । न वयं प्रयोजनवत्तामप्रयोजनवत्तां वा विचारयामः । किमेतस्माद्वाक्याद्गम्यते ? इति परीक्षामहे । अस्मा-च्च वाक्यादिदं गम्यते, न यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते इति । तच्चास्य अप्रदेयत्वादप्राप्तं यजु पवित्रं वेति ॥ ३६ ॥

**विहितप्रतिषेधो वा ॥ ३७ ॥**

अथवा, विहितस्यैव प्रतिषेधो द्रष्टव्य । विहितं केषाञ्चिद्, यजुषा वत्सानपाकरोति, पवित्रवति गां दोग्धीति । तस्य प्रतिषेधोऽर्थवानेव भवतीति ॥ ३७ ॥ आ० नि० ॥

**वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात् स्यात् कारणात् केवलाशनम् ॥ ३८ ॥**

अथ यदुक्तं, पयःप्रतिषेधे पयसा सिक्तं पयसा संसृष्टं च वर्ज्य-ते इति । तत्र ब्रूमः । युक्तं हि लोके यत्ससृष्टस्य वर्जनं, तदेव हि तत्र प्रतिषिद्ध्यते । नित्यं ह्युपसर्जनीभूतं भोजने पयः प्रचरति । यच्च प्र-चरति, तत्प्रतिषेधोऽर्थवान् यद् न प्रचरति, तस्य ह्यप्रसङ्गात् प्रति-षेधोऽनर्थकः । ननु केवलमपि लोके पय उपभुज्यते । उच्यते । कार-णात् केवलाशनं, व्रतमौषधं वा यस्य स केवलमुपयुङ्क्ते । न त्वे-तत् प्रचुरम् । तस्मात् प्रायेण गुणभूतत्वात् पयस्, पयोयुक्तमेव

न भक्षयितव्यमित्येवमर्थः पयःप्रतिषेध उच्यते ॥ ३८ ॥ आ० नि० ॥

## व्रतधर्माच्च लेपवत् ॥ ३९ ॥

अथ कस्मान्नायमन्यः परिहार उच्यते । व्रतवदेतद् द्रष्टव्यमिति । यथा ब्रह्मचारिणा मांसं न भक्षयितव्यमित्युक्ते दर्विगतमपि लेपं वर्जयन्ति एवमिहापि पयो न पातव्यमित्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्तीति ॥ ३९ ॥ आ० ॥

## रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

न वा एष परिहारः । परिहारान्तरनिवृत्त्यर्थो वाशब्दः । कुतः । पुरुषधर्मत्वाद् व्रतस्य । अदृष्टार्थं ब्रह्मचारिणो मांसाभक्षणम् । तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं विदितं भवति, तस्यापि दोषो, न श्लेष्मप्रकोपादि किञ्चिद् दृष्टमपेक्षते । नतु पयःप्रतिषेधे तथा । तस्मात् पूर्व एव परिहार इति ॥ ४० ॥ आ० नि० ॥ प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम् ॥ १० ॥

## अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ॥४१॥

इदं समाम्नायते, वि वा एन प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति । शृते चरुं दधंश्चरुमित्येतदुदाहरणम् । तत्रैषोऽर्थं सांशयिकः । किं शृते दधनि च इज्यार्था. पयोधर्माः कर्त्तव्याः? उत नेति । किं प्राप्तम् । न कर्त्तव्या इति । कुतः । अप्रदानार्थत्वात् । प्रणीतार्थे विधानादतुल्यत्वाच्च चरुणा न संसर्ग इति ॥ एवं प्राप्ते ब्रूमः । अभ्युदये निमित्ते योऽयं दोहो देवताया अपनीतः. स स्वधर्मा स्यात् । इज्यार्थाश्च तत्र पयोदधिधर्माः कर्त्तव्या. । कुतः। इज्यार्थमेव हि तत् पयो दधि च प्रवृत्तम् । यतश्चेज्यार्थम्, अतोऽस्येज्यार्थाः प्रवृत्ता एव धर्माः । तद्धर्माणां प्रवृत्तावस्ति कारणं, निवृत्तौ नास्ति ॥ ननु प्रणीतार्थे दधिपयसी विधीयेते । नेत्याह । वाक्यं हि तदा भिद्येत । चरौ देवतार्थे, चर्वर्थयोश्च दधिपयसोः । आह । ननु चरोरपि देवतासम्बन्धो दधिपयसोरपि तथा, न भविष्यति वाक्यभेद इति । नैवं शक्यम् । विभाग कर्त्तव्य इति । पूर्ववाक्यं वृत्तम् । त्रेधा तण्डुलान्

विभजेदिति । तदनन्तरं विभागविशेषपरमिदं भवति वाक्यम् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति । अत्राविशेषाद्दधिपयसोरपि विभागो वक्तव्यः। यदि च दधिपयसी विभक्तव्ये सति प्रणीतार्थे अभ्युच्चयेयातां, ततो भिद्येत वाक्यम् । अतो नैतयोः प्रणीतार्थे विधानम् । अविधीयमाने च सप्तम्यर्थे प्रातिपदिकार्थौ देवतया सम्भन्त्स्येते । वाक्यसामर्थ्यात् उभे च दधिपयसी देवतया सम्भन्त्स्येते चरुणा सह । दधनि चरुरेको भाग इन्द्राय प्रदात्रे भवतीति । यथा विभज्यमानेषु नानाद्रव्येषु उच्येत । रुक्मपात्र्यां समाहार्य्या मणय । एको भागो देवदत्तस्य । रजतपात्र्यां सुवर्णं निहितम् । अपरो भागो विष्णुमित्रस्येति सह पात्रीभ्यां द्वौ भागौ गम्येते । विभागविशेषपरत्वाद्वाक्यस्य । पात्र्योश्च विभक्तत्वादनुवादश्च सप्तम्यर्थो गम्यते । एवमिहापि विभागपरत्वादेव वाक्यस्यास्य, विभक्तत्वाच्च दधिपयसोरेको भाग इति गम्यते । अर्थप्राप्तत्वाच्च सप्तम्यर्थोऽनुवादो भविष्यति । तस्मात् प्रदानार्थे दधिपयसी । प्रदानार्थाश्च दधिपयसोर्धर्माः कर्त्तव्याः ॥ ४१ ॥

## शृतोपदेशाच्च ॥ ४२ ॥

इतश्च प्रदानार्थे दध्नि पयसि च इज्यार्था धर्माः कर्त्तव्या इति । कुत । सिद्धवच्छृतोपदेशो भवति । शृते चरुं दधंश्चरुमिति । स सत्सु धर्मेषूपपद्यते । इतरथा श्रयणं न क्रियेतेति । तत्र सिद्धवच्छृतोपदेशो नावकल्पेत । तस्मादपि पश्याम इज्यार्था दधिपयसोर्धर्माः कर्त्तव्या इति ॥ ४२ ॥ युक्ति· ॥ अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

## अपनयो वार्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥

अस्ति पशुकामेष्टिः,यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्य्यात् । ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेद्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति । शृते चरुं, दधंश्चरुमित्येतदुदाहरणम् । अत्र सन्देहः । किं शृते दधनि चेज्यार्था दधिपयोधर्माः कर्त्तव्याः ? उत नेति । किं प्राप्तम् । पूर्वेणाधिकरणेन कर्त्तव्या इति । समाना हि श्रुतिर्भवतीति । सिद्धवच्च शृतोपदेशः सत्सु प्रदानार्थेषु धर्मेषूप-

पद्यते॥एवं प्राप्ते ब्रूमः । अपनयो वा धर्माणां भवेत् । अर्थान्तरे ह्येतत्पयो विधीयते । दधि च श्रयणार्थं, न प्रदानार्थं । सप्तमीसंयोगाच्चरुपयोवत् । यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते सप्तमीसंयोगात् । एवमिहापि ॥ ४३ ॥ सि० ॥

## लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

अथ यदुक्तं सिद्धवच्छृतोपदेशो भवतीति । नैष दोषः । श्रयणेन द्रव्यं लक्षयिष्यति । अर्थप्राप्तं हि चरौ श्रयणं, तत्सम्बद्धं लक्ष्यते । श्रयणवति द्रव्ये चरुरिति । तस्मात् प्रदेयधर्म्मा न भवेयुरिति ॥४४॥ आ०नि०॥पशुकामेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्॥१२॥

## श्रयणानां त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् ॥ ४५ ॥

ज्योतिष्टोमे श्रूयते, पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रमाज्येन पात्नीवतम् । तत्र संशयः । किं श्रयणानां प्रदेयधर्मा भवन्ति ? उत नेति । कुतः संशयः । यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्तीति । किं प्राप्तम् । प्रदेयानि प्रदेयधर्मैः सम्बद्ध्येरन्निति । श्रयणाद्धि द्रव्यं जायते । पयोमिश्रश्च सोमो भवति । सामिश्रे च हूयमाने पयोऽपि होमेन सम्बद्ध्यते । यदि पयोमिश्रश्च सोमो भवति, तत्र सोमस्य पयसा मिश्रमानस्य न कञ्चिदुपकारं पश्यामः । यागे तु उपकारो भवति निर्वृत्तिर्नाम । यदि होमेन सम्भन्त्स्यत इति मिश्रणाभिप्रायः । तत उपकारक मिश्रणं दृष्टेनोपकारेण । श्रुतो हि गुणवान् यागः प्रत्यक्षः पयसा निर्वर्त्स्येत इति । सोमोपकारः कल्प्य स्यात् । तस्मात् पयसा सोमो मिश्र्यते । स मिश्रितः प्रयोगवचनेन कथं सम्बद्ध्यत इति । न च प्राकृतं मिश्रणं केनचिद्द्रव्येण प्राप्तम् । यत्रेदं द्रव्यान्तरं पयो विधीयते इति । अपूर्वत्वात् सोमस्य । तस्मात् प्रदानार्थस्य पयसो विधानं स्यात् । प्रदेयपयोधर्माश्चात्र कर्त्तव्या इति ॥ ४५ ॥ पूर्व० ॥

## गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥

वा-शब्दः पक्षं व्यावर्त्तयति । गुणभूतं पयः स्यात् सोमस्य, न प्रदेयद्रव्यम् । प्रदेयत्वेनाश्रवणात् । सोमार्थेन च श्रुतत्वात् ॥४६॥सि०

## अनिर्देशाच्च ॥ ४७ ॥

न होमे प्रयोगवचनेन वा अस्य सम्बन्धः । अनिर्देशः परार्थत्वात् । न च प्रत्यक्षेणापि पयस्त्यागे यागनिर्वृत्तिः पयसा । प्रत्यक्षदेवतासम्बद्धो हि त्यागो यागः । न चात्र पयसो देवतासम्बन्ध । मैत्रावरुणं ग्रहं गृह्णातीति वचनं, न मैत्रावरुणं पय इति । तस्माद् दृष्टोपकाराभावाद् अदृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते । तस्मान्न प्रदेयधर्म्मैः सम्बद्ध्यत इति ॥ ४७ ॥

## श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥

इतश्च सोमार्थं पयः । कुतः । श्रुतिर्हि सोमप्रधाना भवति । द्वितीयाविभक्तिः श्रूयते । तस्माच्छ्रयणेन सोम एवेष्यत इति ॥४८॥

## अर्थवादश्च तदर्थवत् ॥ ४९ ॥

अर्थवादश्च श्रयणस्य सोमार्थस्य भवति । स मित्रोऽब्रवीत् पयसैव मे सोमं श्रीणन्निति । न हि भवति पयो मे दद्युरिति । कथं तर्हि । सोमं पयसा संस्कुर्य्युरिति । तस्मादपि सोमार्थं श्रयणम् ॥४९॥

## संस्कारं प्रति भावाच्च तस्मादप्यप्रधानं स्यात् ॥ ५० ॥

संस्कारं प्रति श्रयणवचनं भवति । यत्र संस्काराः श्रूयन्ते तत्रेदं श्रूयते । पयसा मैत्रावरुणं श्रीणातीत्येवमादि । तस्मात् संस्कारप्राये श्रवणादयमपि संस्कार एवेति गम्यते । भवति हि प्रायोवृत्त्या तद्बुद्धिः । यथाऽन्यप्राये लिखितोऽन्य इति गम्यते । तस्मात् प्रदेयधर्मैर्न सम्बद्ध्यत इति ॥ ५० ॥ युक्तिः ॥ ज्योतिष्टोमे श्रयणानां प्रदेयधर्मानुष्ठानाधिकरणम् ॥ १३ ॥

## पर्य्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥

अश्वमेधे समामनन्ति, ईशानाय परस्वत आलभेतेति । तत्प्रकृत्य श्रूयते, पर्य्यग्निकृतान् आरण्यानुत्सृजन्तीति । संशयः । किमारण्यानामालम्भ उत्सर्गार्थ एव, द्रव्योत्सर्गश्च, अथ किं कर्मशेषप्रतिषेधः । पर्य्यग्निकरणान्तैः संस्कृता उत्स्रष्टव्या ? इति । किं प्राप्तम् । द्रव्योत्सर्गोऽयम्, आलम्भश्च उत्सर्गार्थ एवेति । कुतः । एवमुत्सर्गमप्राप्तं विदधत् तस्य सत्तां ब्रुवन् श्रुत्या वक्ष्यति । इतरथा उत्सर्गं प्राप्तमनुवदेत् । वाक्यार्थस्य प्रतिषेधस्य सत्तां ब्रूयात् प्रत्ययः । श्रुतिश्च वाक्याद् बलीयसी । एवञ्च सति देवतासम्बन्धो ग्रहणे । ईशान-

मुद्दिश्य परस्वन्त आलब्धव्याः । पर्य्यग्निकरणं कृत्वा त्यक्तव्या इति । उपधानवत् । यथा, एतत् खलु साक्षादन्नं य एष चरुर्य एनं चरुमुपदधातीत्युपधानार्थमेव चरोरुपादानम् । एवमिहाप्युत्सर्गार्थ एवालम्भो भविष्यति ॥ ५१ ॥ पूर्व० ॥

## शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥ ५२ ॥

कर्मशेषप्रतिषेधो वाऽस्मिन् वाक्य उच्यते । कुत ? । अर्थाभावात् । ईशानाय परस्वत आलभेतेत्यस्य वाक्यस्य न कश्चिदर्थो भवेद् यद्युत्सर्गार्थ आलम्भः स्यात् । कथम् । आलम्भकाल एवाध्वर्युर्जानीयाद्, नेमे ईशानाय दास्यन्त इति । तस्यैवं जानतो नैवं सङ्कल्पो भवति, ईशानाय दातुं ग्रहीतव्या इति । अशक्यार्थत्वादनर्थकमिदं वाक्यं भवति । स एष सङ्कल्प एवमवकल्पते, यदीशानाय दातव्याः। तस्मादालम्भवचनेन शब्देन दानमेव विधीयते इति गम्यते । यदा च दानं विधीयते, तदा पर्य्यग्निकृतानुत्सृजन्तीत्युत्सर्गमनूद्य, एवमुत्सृजन्तीति विशेषविधानार्थं भवति शास्त्रम् । कथं पुनरत्र विशेषो विधीयते, किं कालः पर्य्यग्निकरणे । एतस्मिन् काल उत्सृजन्तीति । नेत्याह । नात्र कालवचनः शब्दः श्रूयते । काले च विधीयमाने कालान्तरं प्रतिषिध्यते न अङ्गान्तराणि । अथ किं पर्य्यग्निकरणवदुत्स्रष्टव्यमिति ? । तदपि नास्ति । न ह्यत्र पर्य्यग्निकरणभावना कीर्त्यते । तस्याञ्च सत्यां पर्य्यग्निकरणात् प्राञ्चः पराञ्चश्चार्थाः सर्वे प्रतिषिध्येरन् । कथ तर्हि । निर्वृत्ते पर्य्यग्निकरणे उत्स्रष्टव्य इति । किमेतस्यामवस्थायामिति । नेत्याह । चोदकादेवैतत् प्राप्तम् । एतदवस्थः पशुरुत्सर्जनीय इति । अवस्थान्तरप्रतिषेधस्य च नायं शब्दो वाचक । चोदकप्राप्ते हि काले उत्सृज्यमाने कृतपर्य्यग्निकरण एवासौ भवति । यदि तु अवस्थाया प्रतिषेधः स्यात्, पर्य्यग्निकरणादूर्ध्वमुत्सर्गात् प्राक् पदार्थाः प्रतिषिध्येरन्, न पराञ्च । कस्तर्ह्यर्थः । पर्य्यग्निकरणे कृते यादृशो भवति तादृशस्त्याज्य इति । ननु चोदकेनैव तदङ्गोऽसौ प्राप्त । उच्यते । पुनरस्यैतदङ्गवत्ता श्रूयते, अङ्गान्तरपरिसङ्ख्यार्थम् । एतैरेव अङ्गैरङ्गवानुत्स्रष्टव्यः । एवं चोदकप्राप्तानि परिसङ्ख्यायन्ते, नान्यानि अङ्गानि भवन्तीति । कथमेष शब्द एवं परिसङ्ख्यातुं शक्नोतीतिचेत् । शक्नोतीति ब्रूम । कथम् ? । प्रत्यक्षेण

वाक्येन तैरङ्गैर्निराकाङ्क्षीकृते प्रधाने शेषैरङ्गैः सह चोदकेन परोक्षा सती एकवाक्यता न भविष्यतीति । तस्मात् कर्मशेषप्रतिषेध इति ॥ ५२ ॥ सि० ॥

**पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥**

पूर्ववांश्च भवति शब्दो यागप्रवृत्तिपूर्वकः । आज्येन शेषं संस्थापयतीति । यदि याग एव प्रारब्धस्तत संस्थापयतीति समाप्तिसादृश्यादुपपद्यते । यागस्य हीदं यागान्तरं समाप्त्या सदृशम् । यदि हि पूर्वो न यागः प्रवृत्तः स्यादुत्सर्गमात्र,न तस्य यागः समाप्त्या सदृशः । तत्र संस्थापयतीति नोपपद्यते । तस्मादपि शेषकर्मप्रतिषेधः ॥ ५३ ॥

**प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५४ ॥**

इदं प्रयोजनसूत्रम् । यदि द्रव्योत्सर्गो विधीयते ततः संस्काराणामकर्म स्यात् । कुतः । संस्कारप्रवृत्तेर्यज्ञहेतुत्वात् । तत्प्रतिषेधे यज्ञाभावे किमिति संस्कारा क्रियेरन् । यज्ञकारिता हि ते । यथा प्रयाजाभावे तदर्थमाज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते । अप्रयाजास्ता अननुयाजा इति यत्र श्रूयते तत्र प्रयाजाभावे तदर्थमाज्यं न गृह्यते । एवमिहापि संस्कारा न कर्त्तव्या इति ॥ ५४ ॥ युक्तिः ॥

**क्रिया वा स्यादवच्छेदादकर्म सर्वहानं स्यात् ॥ ५५ ॥**

यदा तु कर्म्मशेषप्रतिषेधपक्षस्तदापि किं न कर्त्तव्याः संस्काराः ? इति । नैतदेवम् । क्रिया स्यादवच्छेदपक्षे । यागो हि तदा भवति । तस्मात् सर्वे यागपदार्थाः कर्त्तव्याः । यदि न यागो भवेत् ततोऽकर्म । संस्काराणां सर्वहानं स्यात् । यागस्तु तदा भवति । तस्मात् कर्मशेषप्रतिषेधपक्षे सर्वं कर्त्तव्यमिति ॥ ५५ ॥ आ० नि० ॥ अश्वमेधे, ईशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम् ॥ १४ ॥

**आज्यसंस्थाप्रतिनिधिः स्याद् द्रव्योत्सर्गात् ॥ ५६ ॥**

पर्य्यग्निकृतं पात्नीवतमुत्सृजतीति प्रकृत्य श्रूयते । आज्येन शेषं संस्थापयतीति । तत्र सन्देहः । किमाज्यं पूर्वस्मिन् प्रतिनिधीभूत-

म ? अथ वा आज्यद्रव्यकं पूर्वस्मात् कर्म्मान्तरं विधीयते ? इति । किं प्राप्तम् । प्रतिनिधिरिति । कुतः । पात्नीवतमितिद्रव्यमुच्यते । उत्सृजतीति तत्रैवोत्सर्गः श्रूयते । शेषमित्युपयुक्तेतरद् विद्यमानं गम्यते । तद् आज्येन संस्थापयतीति पशोः कार्य्ये आज्यं श्रुतं भवतीति । ननु पूर्वकर्म्म परिसमाप्तमित्युक्तम् । अत्रोच्यते । द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वाऽपरिहृते पुनरसमाप्तं पूर्वकर्मेत्याशङ्क्यते । तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे । संस्थापयतीति चापूर्वे नोपपद्यते ॥ ५६ ॥ पूर्व० ॥

इतश्चाशङ्कामहे—

समाप्तिवचनात् ॥ ५७ ॥

समाप्तिवचनमिदं भवति, संस्थापयतीति । तेन मन्यामहे । यत् पूर्वं पशुना आरब्धं तदुत्सृष्टे पशावाज्येन परिसमाप्यते इति । अपूर्वस्यात्र कर्मण उच्यमानस्यारम्भ एव वक्तव्यो भवति । यतस्त्वनभिधायारम्भं परिसमाप्तिरेवोच्यते । ततोऽवगच्छाम, पूर्वस्यैव परिसमाप्तिर्नापूर्वकर्म्म चोद्यत इति ॥ ५७ ॥ युक्ति० ॥

चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात्॥ ५८ ॥

कर्मान्तरचोदना वा । कुतः । पूर्वस्य कर्म्मणः परिसमाप्तत्वात् । ननूक्तं द्रव्योत्सर्गे शेषवचने वाऽपरिहृते पूर्वकर्मणोऽसमाप्तिराशङ्किता भवति । अत्रोच्यते । इदं द्वयमपि परिहृयते । संस्थापयतीति प्रकृतेन पात्नीवतशब्देन सम्बध्यते । तत्रायमर्थः । पात्नीवतं संस्थापयतीति । स एव यागो विधीयते । संपूर्वश्च स्थापयतिः प्रयुज्यते । अवश्यं कश्चिद् धातुः पूर्वो भावनावचनस्य प्रयोक्तव्य इति तत्राविरुद्धो भावनायामुच्यमानायामर्थप्राप्तः संस्थापयतिरालभतिरिव प्रयुज्यते । शेषशब्दश्चैव सादृश्यात् प्रयुज्यते । द्रव्योत्सर्गश्चाऽविरुद्ध एव यागे उच्यमाने । तस्माद् यथाऽन्ये निर्वपत्यादयः कर्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति ॥ ५८ ॥ सि०॥

अनिज्याश्च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥

प्रसिद्धां वनस्पतेरनिज्याम् । अत एव पठति । कथम् । यत् त्वष्टारञ्च वनस्पतिमावाहयस्यथ वैनौ यक्ष्यसि त्वाष्ट्रो नवमो प्रयाजेज्या

वानस्पत्या दशम्यत्रैवैताविष्टौ विद्यादित्यङ्गान्तरेणाऽनुग्रहं ब्रुवन् वनस्पतीज्याया अभाव दर्शयति । शेषपरिसमाप्तौ सत्यां वनस्पति जुहोतीति । अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात । तत्राऽभावदर्शनमुपपद्यते । तस्मात् पूर्वकर्म परिसमाप्तम् । इदमपि कर्मान्तरमिति ॥ ५९ ॥ युक्ति ॥

संस्था तद्देवतत्वात् स्यात् ॥ ६० ॥

अथ यदुक्तं, संस्थापयतीति च अपूर्वं नोपपद्यते इति । तत् परिहर्त्तव्यम् । अत्रोच्यते । असंस्थायां सस्थावचनमेतत् । तदपि पूर्वं पात्नीवतमिति समानदेवत्वात् समाप्तिसादृश्य ज्ञायते । तत्र तत्पात्नीवतमारब्धमिह परिसमाप्तमिति । स एष सादृश्यात् सस्थापयतीति शब्दोऽवकल्पत इति ॥ ६० ॥ आ० नि० ॥ आज्येन शेष सस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम् ॥ १५ ॥

इति श्रीभट्टशबरस्वामिन कृतौ मीमासाभाष्ये नवमस्य अध्यायस्य चतुर्थ पाद ॥ ९ ॥ ४ ॥

सम्पूर्णश्चाध्याय ॥ ९ ॥

श्रीहरिः ।

# मीमांसादर्शनम् ।



श्रीशबरस्वामिविरचितभाष्यसहितम् ।

दशमाप्रभृति–द्वादशाध्यायपर्यन्तम् । १०–१२ ।

पं० रत्नगोपालभट्टेन संशोधितम् ।

चौखम्भासंस्कृतपुस्तकालयाऽध्यक्ष-
हरिदासात्मजहरिकृष्णदासगुप्तेन
स्वकीये विद्याविलास यन्त्रे
संमुद्रितम् ।

—:o:—

# MÎMÂNSÂDARŜANA,

With the commentary of Sabara swami.

TEN TO TWELVE CHAPTERS.

Edited by

Pandita Ratna Gopâla Bhatta.

PRINTED AT THE VIDYÂ VILÂSA PRESS,
BY HARIKRISHNA DÂSA GUPTA.
BENARES CITY.
1910.

श्रीहरिः ।

# मीमांसादर्शनाधिकरणसूची ॥ अ० १० । ११ । १२ ॥



अ० १० । पा० १ ॥

अ० १० । पा० ५ ॥



## विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥

ऊहो वृत्तः । बाधाभ्युच्चयमिदानीं वर्त्तयिष्याम । बाधो नाम यदेवेदमिति निश्चितं विज्ञानं, कारणान्तरेण मिथ्येति कथ्यते । तथाऽभ्युच्चयो यदिदमिह भवतीति विज्ञायते । अपरमपि भवतीति विज्ञानम् । तत्रायमर्थः प्रथमं परीक्ष्यते । किं सर्वं प्राकृतं विकृतौ कर्त्तव्यम् ? उत किञ्चिद् बाध्यत इति ! किं तावत् प्राप्तम् । विधेः प्राकृतस्य प्रकरणान्तरे विकृतौ यतो भवत्यविशेषेणातिदेशः । अतो यच्च यावच्च प्राकृतं धर्मजातं तत्सर्वं विकृतौ कर्त्तव्यं, यदप्यर्थलुप्तम् । कुतः । वचनेन हीदं सर्वं प्राप्यते । न च वचनस्यातिभारोऽस्ति प्रापयतः । कथं वचनमिति गम्यते । सर्वास्वेव वैकृतीषु देशनासु प्राकृतं धर्मजातमपेक्ष्यते वाक्यशेषत्वेन । तद्यथैव प्राकृत्यां देशनायामनुषज्ज्यते, एवं वैकृत्यामपि । न कश्चिद्विशेषोऽस्ति । तत्र यथा कृष्णलानां पाकोऽप्राकृतार्थोऽपि वचनप्रामाण्यात् क्रियते, एवमवहन्त्यादि अप्राकृतार्थमपि सर्वं कर्त्तव्यमिति ॥ १ ॥ पूर्व० ॥

## अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

अपिवेति पक्षव्यावृत्तिः । नैतदस्ति । सर्वं प्राकृतं विकृतौ कर्त्तव्यमिति । क्वचिदभिधानसंस्कारद्रव्यं निवर्त्तितुमर्हति यल्लुप्तार्थम् । कुत एतत् । अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाऽप्रयोजनम् । अन्यस्मै प्रयोजनाय तदाम्नायते, न स्वार्थम् ॥ ननु चोक्तं लुप्तार्थमपि क्रियते वचनप्रामाण्याद्यथा कृष्णले पाकः । नेत्याह । नास्ति लुप्तार्थस्य देशकं वचनम् । न वैकृतं कर्म प्राकृतैरङ्गपदार्थैः सहैकवाक्यतां याति । नैवं विज्ञायते, यागेन फलं कुर्य्यात् । कथम् । प्राकृतैरङ्गैरिति । कथन्तर्हि । यथा प्राकृतेन यागेन फलं साधितमभूत् तथेति । कुत एतत् । यागगतो हि व्यापारविशेषस्तेनापेक्ष्यते, न व्यापारमात्रम् । यागगतश्च व्यापारः प्राकृते यागे प्रयोगवचनेन

कल्पितः, सङ्गृहीतश्च विद्यते । स शक्योऽपेक्षितुम् । स चाकाङ्क्षितो निराकाङ्क्षश्च शक्नोति कर्त्तुमिति । अङ्गेष्वप्यपेक्ष्यमाणेषु न यागगतो विकृतौ व्यापारविशेषः कल्प्यः स्यात् । इतरथा लक्षणा स्यात् । यथा, दण्डेन युद्ध्यते इति वचने न दण्डिरूपं शब्देनाभिहितम् । यदि तु तेन लक्षितेन प्रयोजनं स्यात्, शक्यते तेन लक्षयितुम् । एवमिहाप्यङ्गवत्त्वं यागगतो विशेषो नाङ्गेष्वपेक्ष्यमाणेषु शब्दाभिहितो भवति। लक्षणया तु कल्प्यते । लक्षणायाश्च शब्दो बाध्येत । अथ शब्दो मा बाधीति यागगतो विशेषो नैवापेक्ष्येत, अङ्गान्येवापेक्ष्येरन् । ततः, कथमिति इतिकर्त्तव्यताविशेषं प्रति वैकृतस्य कर्मणश्चोदकशब्दो निवृत्ताकाङ्क्ष एवावतिष्ठेत । अङ्गैरपि चापरेतिकर्त्तव्यताऽऽकाङ्क्ष्येत । गम्यमाना च प्राकृतयागेतिकर्त्तव्यता उत्सृज्येत । प्राकृतानाञ्चाङ्गानां प्रकरणेऽर्थवतां दुर्लभो वैकृतेन कर्मणा एकवाक्यभावोऽप्युपगम्येत । सर्वं चैतदन्याय्यम् । तस्मादेवमभिसम्बन्ध क्रियते । यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापीति ॥ किमतो यद्येवम् । एतदतो भवति । प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयोजने विकृतौ चोदितानि भवन्ति। तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीति ॥ २ ॥ सि० ॥

## तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥

अथ यदुक्तं, यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाको वचनप्रामाण्यात् क्रियते, एवमन्यदपि क्रियेतेति । तन्न । न हि कृष्णलेषु पाकश्चोदकेन प्राप्नोति । प्रत्यक्षं हि तत्र वचनम् । घृते श्रपयतीति । न तत् प्राकृतप्रयोजनं पाकमाह। तत्र वचनप्रामाण्याददृष्टार्थः पाकः । यदि च तत्र प्रत्यक्षवचनं नाभविष्यत्, तेषामप्रत्यक्षविशिष्टत्वात् पाकोऽपि नाभविष्यदेव। तस्मादनुपवर्णनं पाकवदिति ।

किं भवति प्रयोजनम् ? कतरद्वा वैकृतमुदाह्रियते ? इति । क्वचिच्छ्रूयते, स्वयंदितं बर्हिर्भवतीति । तत्र प्राकृतं द्रव्यं निवर्त्तते । स्वयंकृता वेदिर्भवतीति उद्धनन-खनन-परिलेखनानि निवर्त्तन्ते । स्वयंशीर्णा शाखा भवतीति असिद्रव्यं निवर्त्तते । मन्त्राश्चैतेषु निवर्त्तन्ते ॥३॥ आ० नि० ॥ विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ॥ १ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा—

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥**

इति । अस्ति प्राजापत्यश्चरुः । प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इति । तत्रैतद्विशिष्टमुदाहरणमङ्गीकृत्य एतदेव सर्वं चिन्त्यते । किं कृष्णलेष्ववहन्ति कर्त्तव्यः ? न ? इति । विधे प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यादिति पूर्वः पक्षः, कर्त्तव्यः । यथा तेषामेव पाक इति ॥ १ ॥ पूर्व० ॥

**अपिवाऽभिधानसंस्कारद्रव्यम् ॥ २ ॥**

इति सिद्धान्तो, न कर्त्तव्य इति ॥ २ ॥ सिद्धान्तः ॥

**तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥**

इत्युपवर्णनापरिहार ॥ ३ ॥ आ० नि० ॥ कृष्णलेऽवहन्तिबाधाऽधिकरणम् ॥ १ ॥ द्वितीयवर्णकम् ॥ २ ॥

एवं वा । वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवॉस्तं बर्हिःषदं कृत्वा शम्यया स्फ्येन व्यूहेदिदमहममुं चामुं च व्यूहामीति यं द्विष्यात् तं ध्यायेत् । यदधोऽवमृद्येत यच्च स्फ्य आश्लिष्येत् तद्विष्णव उरुक्रमायावद्येदिति । तत्र संशय । किं विष्णुरुरुक्रम आवाहयितव्य ? उत नेति । किं प्राप्तम् ? ।

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥**

आवाहयितव्यः । ननु स्फ्ये कदाचिन्न वा आश्लिष्येदपि, न वा अधोऽवमृद्येत । तत्रावाहनं कृतमनर्थकं स्यात् । न च वचनबलादाश्लेषयितव्यमवमर्दयितव्यं वा । न ह्युपादेयत्वेनाश्लिष्टमवमृदितं वा श्रूयते । न च विष्णोरुरुक्रमस्य यागोऽर्थकर्म । किन्तर्हि, आश्लेषणेनाऽवमर्दनेन च लक्षितमनेन प्रकारेण आहवनीये प्रतिपाद्यते । तथा हि दृष्टमपनयने तस्य प्रयोजनं भवति स्फ्यादिसंशोधनम् । इतरथा हि यागाददृष्टं कल्प्येत । ननु यागाददृष्टमवश्यं कल्पनीयम् । द्रव्यप्रतिपादनद्वारं तत् ॥ अत्रोच्यते । लुप्तार्थमपि कर्त्तव्यम् । यथा कृष्णले चरौ पाकः । अपि च कदाचिदाश्लिष्येत, अधश्चावमृद्येत । तत्रान्तरिते आवाहने वैगुण्यमापद्येत । तत्राप्रमाद्यद्भिरावाहयितव्या देवता, यदि स्फ्य आश्लेक्ष्यते अधश्चावमर्दिष्यते । न आवाहनमङ्गम् अन्तरा ईष्यते । स्वकाले हि आवाहनेन देवता स्मर्यमाणा साध्वी

भवतीति, न स्वकालोत्तरकाले । तत्र हि अर्थप्राप्तममन्त्रकं स्मरणम् । अथ स्फयो नोपश्लेक्ष्यते, न वा अधोऽवमर्दिष्यते तदा कृतेऽप्यावाहने न किञ्चिद् दुष्यति । नैवं मन्तव्यम् । यथा राजा अमात्यो वा ब्राह्मणो वा परिचरितुं निमन्त्रित आहूतोऽपरिचर्य्यमाणो विमानितमात्मानं मन्यमानोऽपचरिष्यतीत्याशङ्क्यते । एवं देवताऽपीति, न तत्र देवता आहूयते। आहूता सती हविरुपयोक्ष्यते, तर्प्स्यति च। तृप्ता प्रसत्स्यति । प्रसन्ना सती फलेन संयोक्ष्यतीति। तदेतन्नवमे सिद्धम् । तस्मान्न दोष आवाहितायामनिज्यमानायाम् ॥ १ ॥ पूर्व० ॥

**अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥२॥**

अपि वेति पक्षव्यावृत्ति । एषोऽभिधानसंस्कारो निवर्त्तते। कुत । अभिधानसंस्कारो द्रव्यं वा सति प्रयोजने क्रियते, नान्यथा । तद् वर्णितम् । यदप्युक्तम् । कदाचित् श्लिष्येत अवमृद्येत वा। तत्रावाहनं नान्तरा ईष्यते इति । नैष दोषः । अन्तरितमेतदनन्तरितेनैव तुल्यम् । यदा आवाहनस्य कालो, न तदा उरुक्रमयागस्य निमित्तमापतितम् ।आपतिते हि निमित्ते तस्य प्रयोगो भविष्यति । न ह्यनाश्लिष्टम् अनवमृदितं वा तत्र प्रतिपादयितव्यम् । न चारब्धे प्रयोगे कृतमुपकारकं भवति । तस्माद् विष्णुरुरुक्रमो नावाहयितव्य इति ॥ २ ॥ सि० ॥

**तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥**

इत्युपवर्णनापरिहार उक्तः ॥ ३ ॥ आ० नि० ॥ वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम् ॥ १ ॥ तृतीयवर्णकम् ॥ ३ ॥

**इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥**

अस्ति ज्योतिष्टोमो, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्र दर्शपूर्णमासप्रकृतिकानि कर्म्माणि दीक्षणीयादीनि आग्नावैष्णवमेकादशकपालं निर्वपेदित्येवमादीनि । अस्ति तु प्रकृतौ आरम्भणीयेष्टिः। आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारभमाणः सरस्वत्यै चरुं सरस्वते द्वादशकपालमग्नये भगिने अष्टाकपालं निर्वपेद् यः कामयेत भग्यन्नाद: स्यामिति । नित्यवदेके भगिनमामनन्ति । तत्र सन्देहः । किं दीक्षणीयादिषु आरम्भणीया कर्त्तव्या ? उत नेति । किं

प्राप्तम् । सर्वं प्राकृतं विकृतौ कर्त्तव्यम् । विधे प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यादिति ॥ एवं प्राप्ते ब्रूमः । इष्टिरारम्भणीया ज्योतिष्टोमाङ्गभूताद् दर्शपूर्णमासप्रकृतिकाद्दीक्षणीयादेः कर्मराशेर्निवर्त्तते । किं कारणम् । योऽत्रारम्भः स ज्योतिष्टोमस्य, न दीक्षणीयादेः । कुतः । आरम्भो हि प्रथम पदार्थं स्यात् । प्रथमं वा पुरुषस्य प्रवर्त्तनम् । यदि प्रथमः पदार्थं, स ऋत्विगानमनं देवयजनजोषणं वा । तदिह ज्योतिष्टोमस्याङ्गं क्रतोरर्थेन कृतं स दीक्षणीयादीनामर्थं साधयति, न पुनस्तेषां कर्त्तव्यम् । लुप्तमेव तत् । तस्मिन् लुप्ते आरम्भे तत्सिद्ध्यर्थो धर्म आरम्भणीयाख्यो लुप्येत । अथ प्रथमप्रवर्त्तनम् आरम्भः । औदासीन्याद् व्यावृत्तिः । पुरुषस्य व्यापृतता । तदा ज्योतिष्टोमं साङ्गं कर्त्तुमसावौदासीन्याद् व्यावृत्तो ज्यौतिष्टोमिकेन प्रथमेन पदार्थेन । स ततः प्रभृति आ साङ्गज्योतिष्टोमसमाप्तेर्व्यापृत एव न पुनरुदासीनो भवति । यतो व्यावृत्तो भवति । साङ्गज्योतिष्टोमारम्भेणैव प्रवृत्तो दीक्षणीयादिष्विति लुप्यत एवैषामारम्भः । तस्मिन् लुप्ते आरम्भणीया पदार्थ आरम्भसिद्ध्यर्थो लुप्येत ॥ नन्वङ्गभूतस्य दीक्षणीयादेरन्य आरम्भो जातः । नेत्याह । ऋत्विगानमनं देवयजनजोषणादि वा प्रथमं वा पुरुषस्य प्रवर्त्तनमारम्भ । प्रथमश्च प्रवृत्तोऽसौ ज्योतिष्टोमार्थमेव । अथायमन्य. प्रथम' पदार्थो दीक्षणीयादेर्जात इत्युच्यते । तथापि न तस्यारम्भणीया प्रकृतावुक्तेति तस्मादङ्गभूतात् पदार्थादारम्भणीया निवर्त्तेत । अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिद्ध्यति । एवं हि श्रूयते । आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्चारभते अग्निः प्रथमो देवतानां विष्णुः परमो यज्ञाग्नावैष्णवमेकादशकपालं निर्वपति देवताश्चैव यज्ञञ्चोभयतः परिगृह्याऽवरुन्धे इति ॥ ४ ॥ दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम् ॥ २ ॥

**प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ५ ॥**

अस्ति राजसूय, राजसूयेन स्वाराज्यकामो यजेतेति । तत्रेष्टिपशुसोमदर्विहोमाः प्रधानभूताः । ऐष्टिकेष्वनुमत्यादिषु संशयः । किम् आरम्भणीया कर्त्तव्या, न ? इति । किं प्राप्तम् । कर्त्तव्या । विधे कारणान्तरेऽतिदेशात् सर्वकर्म स्यादिति ॥

एवं प्राप्ते ब्रूमः । प्रधानाच अपरप्रधानसंयुक्तान्निवर्त्तितुमर्हति । कुतः । सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते । अग्निष्टोमं प्रथममाहरन्तीति । स प्राकृतानां प्रधानानामेकैकस्य तन्त्रेण समाम्नातो भवितुमर्हति । एकैकस्य ह्यत्र प्रधानस्य तन्त्रेण साधारणं प्रकरणम् । तेनानुमत्यादीनाम् आरम्भार्थे सिद्धे, नारम्भणीया भवितुमर्हतीति ॥ ५ ॥ अनुयज्ञादिषु आरम्भणीयाबाधाधिकरणम् ॥३॥

## तस्यां तु स्यात् प्रयाजवत् ॥ ६ ॥

अस्त्यारम्भणीया इष्टि, आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारभमाण, सरस्वत्यै चरुं, सरस्वते द्वादशकपालम्, अग्नये भगिनेऽष्टाकपालं य कामयेत भग्यन्नाद स्यामिति नित्यवदेके भगिनमामनन्ति । तत्रैषोऽर्थ· सांशयिकः । किमारम्भणीयायामारम्भणीया कर्त्तव्या, उत नेति । किं प्राप्तम् । तस्यां तु स्यात् प्रयाजवत् । संशयनिवृत्त्यर्थं तुशब्दः । न खलु संशयोऽस्ति । आरम्भणीयायामारम्भणीया भवितुमर्हति । कुत । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यादिति । यथा प्रयाजा एवमारम्भणीयापीति । आह । ननु तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थेऽन्येत्येवमारम्भणीया न व्यवतिष्ठेत । व्यवस्थितेन च शास्त्रार्थेन भवितव्यम् । अत्रोच्यते । सर्वास्वेव अनवस्थासु सामर्थ्येन व्यवस्था भविष्यति ॥ ६ ॥ पूर्व० ॥

## न वाऽङ्गभूतत्वात् ॥ ७ ॥

न वेति पक्ष प्रतिषिध्यते । न स्यादारम्भणीयायामारम्भणीयेति । कुत । अङ्गभूता हि सा दर्शपूर्णमासयोः । अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिरित्युक्तम् ॥ आरम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्त्तव्यौ । अत· प्रकृतिवदारम्भणीयापि आरम्भणीयाप्रवृत्तेन कर्त्तव्येति । तस्मात् किल आरम्भणीयायामारम्भणीया स्यात् । तच्च नैवम् । अकृत्वाप्यन्यामारम्भणीयामारम्भणीयां कुर्वन्नारम्भणीयाप्रवृत्त एव करोतीति गम्यते । तस्मान्नारम्भणीयायामारम्भणीया स्यात् । अपि च जलबुद्बुदवद् अव्यवस्था आरम्भणीयायां वाक्येन गम्यमाना सामर्थ्येन बाध्येत । अस्मत्पक्षे नाव्यवस्था, न बाध· । तस्मान्नारम्भणीयायामारम्भणीया इति ॥ ७ ॥ सि० ॥

## एकवाक्यत्वाच्च ॥ ८ ॥

इतश्च पश्यामः, एवमेवेति । कुतः । एकं हीदं वाक्यं यदा आरम्भणीयां विदधाति, तदा नासौ दर्शपूर्णमासयोर्विहिता । तामविहितामिव दर्शपूर्णमासयोर्विदध्यात् । विहितामिव चारम्भणीयायामतिदिशेत् । नैतत् कर्त्तुमलंभवति सकृदुच्चरितम् । तस्मादप्यारम्भणीयायामारम्भणीया नास्ति ॥ ८ ॥ युक्तिः ॥ आरम्भणीयायाम् आरम्भणीयाबाधाधिकरणम् ॥ ४ ॥

## कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदमाम्नायते । यूपमच्छेष्यता होतव्यम् । न हि दीक्षितस्याग्नौ जुहोति । आज्यं चारणिं चादाय यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोतीति । साद्यस्क्रे श्रूयते । खलेवाली यूपो भवतीति । तत्रैषोऽर्थः सांशयिकः । किं साद्यस्क्रे खलेवाल्यां यूपाहुतिः कर्त्तव्या, न ? इति । किं प्राप्तम् । कर्त्तव्या । विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यादिति ॥ एवं प्राप्ते ब्रूम । कर्म चैतद् द्रव्यसंयोगार्थं यूप एवमादिभिः संस्कारैर्भविष्यतीति क्रियते । यूपं प्राप्तुमेष्यत एतच्छ्रूयते । तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता । अच्छशब्दो हि आप्तुमित्यर्थे वर्त्तते । न चात्र यूपेन प्रयोजनम् । अयूपे हि खलेवाल्या पशुर्बध्यते । तस्मात् तत्र यूपकरणार्था यूपाहुत्यादयः संस्कारा अर्थलोपान्निवर्त्तितुमर्हन्तीति । तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति ॥ ९ ॥ खलेवाल्यां यूपाहुतिबाधाऽधिकरणम् ॥ ५ ॥

## स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥

तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते, स्थाणौ स्थाण्वाहुतिं जुहोतीति । तत साद्यस्क्रेऽयमर्थः सांशयिको भवति । किं साद्यस्क्रे स्थाण्वाहुतिः कर्त्तव्या, न ? इति । तत्र एतत्तावन्न परीक्ष्यम् । किमारादुपकारकं कर्म स्थाण्वाहुति, उत यूपसंस्कार इति । यद्यारादुपकारकं कर्म तदा कर्त्तव्या । अथ यूपसंस्कारो निवर्त्तेतेति । कथमारादुपकारकं कर्म स्यात्, कथं वा यूपसंस्कार इति । यद्येवमभि-

संबन्ध क्रियते, यूपमच्छेष्यता स्थाण्वाहुतिः कर्त्तव्येति, ततो यूपसंस्कारः । अथ यूपमच्छेष्यतेति प्रकृतेन न सम्बध्येत, तदा आरादुपकारकं कर्मेति । किं तावत् प्राप्तम् । आरादुपकारकं कर्मेति । एतद्विज्ञातं कर्मणां प्रयोजनम् । भूतं हि तावद् भव्यार्थमिति ॥

अपि च निवृत्तप्रयोजनेन स्थाणुना सम्बध्यमाना आहुतिः किमिव यूपस्य उपकरिष्यति । सम्बद्धं हि क्रियमाणं सम्बन्धिनि उपकुर्यात् । व्यावृत्तो हि यूपात् स्थाणुः । अपिच तन्त्रमेकादशिन्यां यूपाहुतिर्भविष्यति, यद्यारादुपकारकं कर्म स्यात् । तथा हि नाश्रुतोऽभ्यासः कल्पयिष्यते । अपिच अविशिष्टेन वाक्येन स्थाणौ स्थाण्वाहुतिः श्रूयते । सा च प्रकरणेन यूपव्रश्चनस्थाणुविशेषे कल्प्येत । तस्मादारादुपकारकं कर्म स्थाण्वाहुतिः साधकं च कर्त्तव्या चोदकानुग्रहायेति । एवं प्राप्तम् ॥ १० ॥ पूर्व० ॥

एवं प्राप्ते ब्रूमः —

अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ॥ ११ ॥

अपि वेति पक्षव्यावृत्तिः । यूपसंस्कारः प्रतीयेत । कुतः । प्रकरणविशेषाद् यूपमच्छेष्यत स्थाण्वाहुतिर्विधीयत इति गम्यते । यो हि मन्यते अविशिष्टेन वाक्येन स्थाणुदेशमात्रे विधीयत इति, फलं तस्य कल्पनीयं भवति । योऽपि मन्यते प्रकरणादारादुपकारकमग्नीषोमीयस्य भवतीति, तस्यापि प्रकरणसामान्यं प्रकरणविशेषेण बाध्येत । कर्मशेषभूतश्च यूपः प्रयोजनवत्त्वात् । तेन सम्बध्यमाना अदृष्टार्थापि आरादुपकारिका सती कल्प्यप्रयोजना स्यात् । अतः प्रासङ्गिकन्यायेन बाध्येत । यथा अश्वकर्ण इति । निवृत्तप्रयोजने चापि स्थाणौ यूपाद् व्यावृत्ते च यूपीयोऽसाविति कृत्वा तत्र क्रियमाणा यूपाहुतिर्यूपसम्बद्धा कृता भवतीति तदा व्रश्चने क्रियते । यथा शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः देवदत्तीया असाविति कृत्वा शुचिदेशनिधानादिः संस्कारः एषितव्यो भवति । एवं स्थाण्वाहुतिरपि एकादशिन्यां चान्तिकदेशस्याविवक्षितत्वात् तन्त्रं यूपाहुतिर्भविष्यत्येव । तस्मात् संस्कारपक्ष एव ज्यायान् ॥ ११ ॥ सि० ॥

समाख्यानञ्च तद्वत् ॥ १२ ॥

स्थाण्वाहुतिरिति च समाख्यानं स्थाणुप्रधानाया इवाहुतेर्भवती-

ति। कथं षष्ठीसमासोऽयम्। कर्मणि षष्ठी। ईप्सिततमञ्च कर्म। सप्तमीसमासो लक्षणापेत इति कृत्वा नादर्त्तव्यो भवति॥ १२॥

**मन्त्रवर्णाश्च तद्वत्॥ १३॥**

इतश्च पश्यामः संस्कारकर्मेति। यतो मन्त्रवर्णोऽपि तद्वद् भवति। अतस्त्वं देववनस्पते शतवल्शो विरोह इति। यस्त्वं मया वृक्णः, सोऽत आव्रश्चनाद् बहुप्रकारो विरोहेति यूपमिवाद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म खलेवाल्यां न कर्त्तव्यमिति॥ १३॥ युक्तिः॥ साद्यस्के स्थाण्वाहुतिबाधाधिकरणम्॥ ६॥

**प्रयाजे च तन्न्यायत्वात्॥ १४॥**

दर्शपूर्णमासयोराम्नायते उत्तम प्रयाजः। स्वाहाकारं यजतीति। तत्र संशयः। किम् उत्तम प्रयाज आरादुपकारकं कर्म? उत संस्कारकर्म इति। तत एतत् तावत् परीक्ष्यते। किम्? आज्यभागादिषु या देवता यष्टव्यास्ता एवात्र देवता? उत अन्यास्ताभ्यो देवताभ्य इति। कथमन्या देवताः? कथं वा प्रकृताः स्युरिति। यदि स्वाहाकारं यजतीति देवताविधानं, ततोऽन्या प्रकृताभ्यो देवता। अथ ये यजामहे, स्वाहाग्निमिति निगदेन मान्त्रवर्णिको देवताविधिस्ततः प्रकृता देवता इति॥ किं प्राप्तम्। आरादुपकारकं कर्मेति। तदेतद् वर्ण्यते। अन्या देवता स्वाहाकारं यजतीत्यनेन विधीयते। एवं वचनप्राप्ता भविष्यति। इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत्। नन्वन्या अग्न्यादिशब्दैर्न शक्यते वदितुम्। तत्रायं ये यजामहे स्वाहाग्निमिति मन्त्रवर्णोऽपि विप्रतिपिद्ध्येत। अत्रोच्यते। नैतद्विप्रतिषिद्धम्। अनेकस्याप्येकः शब्दो भवति वाचकः। तद्यथा मातेति मातरमपि वदति, मातारमपि। माता च परमं दैवतं, समा च पुत्रैश्चित्यैरनुबद्ध्यमानो जननीवचनोऽवगम्यते। माता समःक्षिप्रश्चेत्येभिरप्यनुबद्ध्यमानो धान्यस्य मातुर्वाचकः। एवं मन्त्रेऽप्यग्न्यादयः स्वाहाकारदेवताके यागे प्रयुज्यमानास्तद्वाचिनोऽवगम्येरन्। तथा सति प्रज्ञातं यागस्य कार्य्यमनुगृहीतम्, आरादुपक्रिया। तस्मादारादुपकारकं कर्म्म उत्तमः प्रयाज इति॥ एवं प्राप्ते ब्रूमः। प्रयाजे च तन्न्यायत्वाद् उक्तमधस्तात् स्थाण्वाहुतिः संस्कारकर्मेति इहापि चशब्देनान्वादिश्यते, उत्तमः प्रयाजः संस्कारकर्मेति। तत

एतस्तावद्वर्णयन्ति । या आज्यभागादिषु देवता यष्टव्यास्ता एव इह देवता इति । कुतः । स्वाहाकारस्य देवतासंयोगाभावात् । तद्धितेन वा देवतासंयोगो विज्ञायते, चतुर्थ्यन्तेन वा । न चेह तद्धितो न चतुर्थी। अतो न देवताविधिः । यागसामानाधिकरण्यं च द्वितीयया गम्यते । तस्माद् यागवचनः स्वाहाकारशब्दो यथा समिदादय इति ॥ आह । यदि द्वितीयया संयोगात् तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः । ईप्सिततमे हि द्वितीयाविभक्तिर्भवतीति । अत्रोच्यते । एवमेव प्राप्ते वदामः । तन्न्यायत्वादिति । स एव न्याय इह, यः स्थाणवाहुतौ । अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत इति । शेषभूताश्चाज्यभागादिष्वग्न्यादयः । तदर्थो यागः सन् प्रयोजनवान् भवति । इतरस्मिन् पक्षे यागो निष्प्रयोजनः स्यात् । तदर्थं देवताऽभिधानमपि निष्प्रयोजनं स्यात् । सत्यां च देवतासंस्कारशङ्कायां यागप्रयोजनं कल्पयितुं न शक्यते । तथाऽग्न्यादीनां सम्भवति स्वार्थे अदृष्टा स्वाहाकारवचनता न शक्या कल्पयितुम् । तस्माद् देवतासंस्कारार्थमुत्तमः प्रयाजः । देवतास्मरणसंस्कारद्वारं चादृष्टमपि तस्माद् यागाद् भवतीति ॥ १४ ॥

लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गमप्यस्मिन्नर्थे भवति । किं लिङ्गम् । संप्रतिपन्नदेवताकश्चातुर्मास्येषूत्तमप्रयाजस्य निगदो दृश्यते । स्वाहाग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणमित्येवंलक्षणकः । स देवतासंस्कारपक्षेऽवकल्पते । इतरस्मिन्नदृष्टार्थः स्यात् । तस्मादपि देवतासंस्कार उत्तमः प्रयाजः स्यात् । प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्त्तन्ते पूर्वपक्षे । सिद्धान्ते तु निवर्त्तन्ते ॥ १५ ॥ हेतुः ॥ उत्तमप्रयाजस्य संस्कारकर्मताऽधिकरणम् ॥ ७ ॥

तथाज्यभागाग्निरपीतिचेत् ॥ १६ ॥

दर्शपूर्णमासौ स्तो, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्रेदमाम्नायते । आज्यभागौ यजतीति । इदं चापरं श्रूयते । तौ होचतुः किमावयोस्ततः स्यादिति । यस्यै कस्यैचिद्देवतायै हविर्निर्वपस्तद्वां पुरस्तादाज्यस्य यजन्निति तस्माद्यस्यै कस्यैचिद्देवतायै हविर्निर्वपन्ति

ते पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तौ न सौम्येऽध्वरे न पशौ इति । तत्रैतत् सन्दिह्यते । यदाज्यभागयोरग्नीषोमाविज्येते, किं तत्राऽग्नियोगो देवतासंस्कारार्थ उत आरादुपकारक इति । किं प्राप्तम् । इति चेत् सन्देहं पश्यसि, तथा आज्यभागाग्निरपि स्याद् यथोत्तमः प्रयाजः । अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेतेति ॥ १६ ॥ पूर्व०॥

**व्यपदेशाद्देवतान्तरम् ॥ १७ ॥**

न चैतदस्ति । देवतासंस्कार आज्यभागयोरिति, किन्तर्हि, आरादुपक्रिया । कुतः । व्यपदेशाद् अवगम्यते । प्रधानाग्नेर्देवतान्तरमिह इज्यत इति । कोऽसौ व्यपदेश. । अग्निमग्न आवह सोममावह अग्निमावह इति । कथमस्मिन्नावाहने एतावत्यश्च देवता इज्येरन्निति । एवमावाहनेन देवतासु अव्यामोहार्थं परिगण्यमानासु द्विरग्निशब्देन परिगणनं कृतम् । तद्देवतान्तरेऽवकल्पते । इतरथा हि सङ्ख्यावृद्ध्या व्यामुह्येत । गणनं चोभयोरपि पक्षयोस्तुल्यम् । अपि च त्वत्पक्षे सोमव्यवधानाद् गणने क्रमो बाध्येत । अपि च असकृद्वचनं शब्देनाऽनुबध्यमानमन्यमिव व्यपदिशति । यथा ब्राह्मण आगतो वृषल आगतो ब्राह्मण अगत इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः । एवमिहापि द्वयोरिव अग्न्योर्भवति वादः ॥ १७ ॥ सि० ॥

स एष व्यपदेशो भवति लिङ्गं, प्राप्तिस्तु वक्तव्या । सोच्यते—

**समत्वाच्च ॥ १८ ॥**

इयं प्राप्ति । समोऽत्र देवतया यागः । देवतापि श्रुता प्रधानयागे । यागोऽपि वाक्यान्तरे । आज्यभागौ यजतीति । तदिहोभयोर्यागदेवतयोः प्रयोजनवतोर्देवताया यागार्थता न्याय्या । प्रज्ञातं ह्यारादुपकारकत्वं यागस्येति । न हि देवतां विना यागो भवति । तेन स देवतामाकाङ्क्षति, न तु प्रधानदेवता यागान्तरमाकाङ्क्षति । यच्च येनाकाङ्क्ष्यते तत् तदर्थं भवति । तस्माद् देवता यागार्था । अपिच आरादुपकारकैः कर्मभिः साम्यं भवति । कथम् । अभीषू वा एतौ यज्ञस्य यदाघारौ चक्षुषी वा एतौ यदाज्यभागौ यत् प्रयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्य अभिभूत्यै इति ॥ १८ ॥ हेतु ॥ अग्नियागस्यारादुपकारकताधिकरणम् ॥ ८ ॥

**पशावपीतिचेत् ॥ १९ ॥**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । आ सोमं वहन्त्यग्निना प्रतितिष्ठन्ति तौ सम्भवन्तौ यजमानमभिसम्भवतो वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितो यदग्नीषोमीयं पशुमालभते वरुणपाशाभ्यामेव मुच्यते इति । तत्रेदं समामनन्ति । अग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति । तत्र सन्देहः । किं पशुपुरोडाशयाग आरादुपकारकः ? उत देवतासंस्कारार्थं इति । किं तावत् प्राप्तम् । ततः प्रयाजाधिकरणे पराजितोऽपि हेतुः केनचिदपरेण विशेषेण पुनरनुप्राण्यत इति पुनरुपदिश्यते, पशावपीति चेत् । इति चेत् पश्यसि, किम् आरादुपकारको, देवतासंस्कारः ? इति । पशावप्यारादुपकारकः स्यात् । एतद्धि कर्मणां प्रसिद्धं कार्यम् । अग्निषोमीयमिति च गुणभूतदेवताकस्तद्धितशब्दो भवति । पशावपि तद्धित एव शब्दो वाक्यशेषेण बलवता ज्वलनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशे । अतः प्रसिद्धेरारादुपकारकत्वम् ॥ १९ ॥ पूर्व० ॥

## न तद्भूतवचनात् ॥ २० ॥

नेति प्रतिषेधकः शब्दः । आ सोमं वहन्ति अग्निना प्रतितिष्ठन्तीत्यर्थवादवचन एष । यद्यर्थवादवचनादन्या पशौ देवता, अन्या पुरोडाशयागे इति गम्यते । अर्थवादवचनादेव सैवेत्यवगन्तव्या । एवं ह्याह । यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाश इति । तस्मादर्थवादसाम्ये देवतासंस्कार इति गम्यते ॥ २० ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ २१ ॥

इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति । कुतः ? । लिङ्गमप्येतमर्थं दर्शयति । इन्द्राय वज्रिणे वृषभमालभेतेत्यस्य पशोः पुरोडाशस्य कर्म सम्प्रतिपन्नदेवताकं याज्यानुवाक्याद्वयं समाम्नातम् । इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं स्तुहि शूर वज्रिणं सुप्रतीतिमिति च तत् संस्कारपक्षेऽवकल्पते, नान्यथा । तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयाग इति ॥ २१ ॥ हेतुः ॥

## गुणो वा स्यात् कपालवद् गुणभूतविकाराच्च ॥२२॥

विशेषविवक्षया पुनस्तमेव हेतुं व्यपदिशति । वाशब्देन पक्षं व्यावर्त्तयति । गुणः स्याद् देवता । एवमारादुपकारकत्वप्रसिद्धिरनु-

ग्रहीष्यते। अनेकगुणभावश्च कपालवद्भविष्यति। यथा कपालं श्रयणेऽपि तुषोपवपनेऽपि। एवमग्नीषोमावप्यभिन्नौ पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः। एवञ्चसति दार्शपौर्णमासिकयोरग्नीषोमयोर्गुणभावेन यागे द्वारभूतयोः कर्म आम्नातम्। इह गुणभूतयोरेवाविरोधेन भविष्यति, इतरथा प्रधानभूतयोरन्यकार्य्ययोर्न प्राप्नुयात्। दृश्यते चानिरुक्तः स्विष्टकृदिति। तस्मादप्यारादुपक्रिया। अपिच सौत्रामण्यामाश्विनसारस्वतसुत्रामदेवताकेषु पशुषु ऐन्द्रावरुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते। संस्कारपक्षे उत्कृष्येरन्। छिद्रापिधानार्थतायाश्च उक्तमर्थवादत्वम्। तस्मादप्यारादुपक्रिया॥ २२॥ पूर्व०॥

## अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात्॥ २३॥

अपि वेति पक्षव्यावृत्तिः। न आरादुपकारकं कर्म्म। तत्संस्कारः प्रतीयेत, देवतासंस्कार इति। कुतः। शेषभूतत्वाद् देवतायाः प्रयोजनवत्त्वम्। तस्माद्यथा स्वाहाकारयजिर्निष्प्रयोजन इति देवतासंस्कार प्रतीयते, एवमिहापि। अङ्गानामर्थसंयोगात्। अर्थेन प्रयोजनेन संयोग इह गम्यते वाक्येन। तेन न आरादुपकारकम्। आरादुपकारकेभ्यः सामवायिकानि अङ्गानि वरीयांसि भवन्तीति। यदुक्तम्। गुणभूतदेवताकेन तद्धितशब्देन निर्देश इति। प्रधानभूतदेवताकेनाप्येवञ्जातीयकेन शब्देन सम्बन्धे विधीयमाने निर्देशो भवति। अपिच, दृष्टकार्य्यमदृष्टाद् बलीयः। तस्मात् संस्कारकर्मेति॥ २३॥ उत्तरम्॥

## व्यृद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात्॥ २४॥

इतश्च संस्कारकर्मेति। सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कारे एवावकल्पते। यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धं यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्या पशव इति॥ २४॥ युक्तिः॥

## गुणेऽपीतिचेत्॥ २५॥

एवञ्चेत् पश्यसि, संस्कारपक्षे व्यृद्धवचनमवकल्पत इति। तन्न। संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते। न हि तत्र किञ्चिद् व्यृद्धं,

विप्रतिपन्नदेवताकैरेव पुरोडाशैस्तत्कर्म्म समृद्धतरं भवति । एवं ह्याह । यद् अन्यदेवत्याः पुरोडाशा भवन्ति, अन्यदेवत्याः पशव इति, तदस्यां समृद्धं भवतीति । यश्चोभयोः पक्षयोर्दोषः, न तमेकश्चोद्यो भवति । यथैव हि संस्कारपक्षे व्यृद्धवचनमर्थवाद एवमितरस्मिन्नपि पक्षेऽर्थवादो भविष्यति ॥ २५ ॥ आ० ॥

नासंहानात् कपालवत् ॥ २६ ॥

नैतदेवं, भवदीये पक्षे न किञ्चिदपि हीनम् । यथैवैकेन कपालेन तुषेषु उप्यमानेषु अन्येषां कपालानां न किञ्चिद्धीयते । एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किञ्चित् पशुदेवतायां हीयते । तत्राव्यृद्धे एव व्यृद्धवचनं भवति । मदीये तु पक्षे देवताप्रकाशनमङ्गभूतं हीयते । अन्यदेतदुच्यते । यद् व्यृद्धमपि समृद्धं भवतीति । अहीने तु व्यृद्धशब्दे उच्चरिते न शब्दार्थो गृहीत इति ॥ ॥ २६ ॥ आ० नि० ॥

ग्रहाणाञ्च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥

इतश्च संस्कारकर्मेति । सौत्रामण्यां सम्प्रतिपन्नदेवताकेषु ग्रहेषु तद्वचनं भवति । पुरोडाशवचनम् । नैतेषां पशूनां पुरोडाशा विद्यन्ते । ग्रहपुरोडाशा ह्येते पशव इति । न तावन्न विद्यन्ते । विप्रतिपन्नदेवताकैस्तु संस्काराभावमालोच्य एवमुच्यते । ग्रहा एषां पुरोडाशाः, ग्रहपुरोडाशा ह्येते इति । किं तेषां पुरोडाशैः सामान्यम् । यदेते देवतासंस्कारार्थाः । यदि पुरोडाशा अपि देवतासंस्कारार्था एवमेतदवकल्पते । तस्मात् संस्कारपक्ष एव श्रेयान् ॥ २७ ॥

ग्रहाभावे च तद्वचनम् ॥ २८ ॥

एवं श्रूयते, नैतस्य पशोर्ग्रहं गृह्णन्ति पुरोडाशवानेष पशुरिति । पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोरेकार्थतां दर्शयति । तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता, यदि पुरोडाशोऽपि देवतासंस्कारार्थ एवमेतदवकल्पते ॥ २८ ॥

देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २९ ॥

इतश्च पश्यामः संस्कारकर्मेति । एवं ह्याम्नायते, अग्निभ्यः कामेभ्य. पशव आलभ्यन्ते, कामा वा अग्नय आग्नेयाः पुरोडाशा भवन्ति, आग्नेया हि पशव इति । पशुदेवताहेतुकान् पुरोडाशान् ब्रुवन्

देवतासंस्कारार्थतां पुरोडाशानां दर्शयति ॥ २९ ॥ युक्ति· ॥

**अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारः स्यात् ॥ ३० ॥**

अथ यदुक्तं, गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यादिति । उच्यते । अविरुद्धा प्रधानभूतयोरप्यग्नीषोमयोर्धर्माणामुपपत्तिः । कुतः । अर्थापत्तेः । प्रधानभूतावपि प्राकृतं कार्य्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूताविति धर्मैर्योक्ष्येते शृतवत् । यथा शृते चरुं, दधंश्चरुमिति प्रदानार्थे दधिशृते प्रणीताकार्य्यं कुर्वाते इति धर्मैर्युज्येते । न च दोषो भवति ॥ ३० ॥

**स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद् विप्रतिपत्तौ तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥**

अथ यदुक्तम्, ऐन्द्रवारुणसावित्राणां पुरोडाशानां सौत्रामणीप्रकरणादुत्कर्षः प्राप्नोति । तत्रेदमुच्यते । स द्व्यर्थो यागो देवतासंस्कारार्थश्छिद्रापिधानार्थश्च । उभयोरर्थयोः श्रुतिभूतत्वात् । अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति । तत्प्रकरणगत एवायं विकारो भविष्यति । तस्याप्युक्तम् ॥ ३१ ॥

अर्थवादत्वमिति यदुक्तं, तत्रेदमुच्यते—

**विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥**

एवं तर्हि अनेन प्रकारेण प्रकरणादनुत्कर्षः । देवतासंस्कारस्तावत् प्रकरणादुत्कर्षेण न शक्यते बाधितुम् । तत्र सौत्रामण्यां सम्प्रतिपन्नदेवताका एव चोदकेन पुरोडाशा प्राप्ताः । तत्रेन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः । कथम् । एकदेशा हि तेषामिमे वर्णान्तरसहिता उच्चारिता इति गम्यते । शक्नुवन्ति ह्येकदेशा. समुदायिन समुदायं प्रत्याय्य समुदायार्थान् गमयितुम् । यथा गाव्यादयः । यथा च सरस्वतीदेवताके निगदे, सरस्वति देवनिदो निवर्हय प्रजां विश्वस्य वृसयस्य मायिन इति । वृसयशब्दो बृहच्छब्दार्थं गमयति । किमर्थं पुनरेवं कल्प्यते ? । यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानानि अनर्थकानि भवेयुः । तस्मात् पशुदेवतानामाख्याविकाराः पुरोडाशदेवताशब्दा इति ॥ ३२ ॥ आ० नि०

**अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥**

संस्कारपक्ष एव, वाशब्दो युक्तिं व्यावर्त्तयति । न पक्षे, न वा आख्याविकारः । संस्कारपक्षेऽन्यथानुपपद्यमाने आख्याविकारा भवन्ति । अनाख्याविकारेष्वपि संस्कारपक्षोऽवकल्पत एव । कथम् । अभ्यास एव पुरोडाशयागस्य भविष्यति । तत्र हि चोदकेन पशुदेवता च प्राप्नोति पुरोडाशश्च । पशुदेवताया अन्यद् द्रव्यं विधीयते ग्रहः । पुरोडाशस्यान्या देवता । यागस्त्वविकृत एव तिष्ठति । स पशुदेवतासम्बद्धश्चैव कर्त्तव्यो ग्रहसम्बद्धश्च । तदुभयमनभ्यस्ते यागे न सम्भवतीत्यर्थादभ्यस्यते यागः । तस्य एकदेशोऽन्यदेवत्यः प्रयाजवत् । तद्यथा, पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानामेकदेशसङ्ख्या विधीयते । सा चान्तरेणाभ्यासं नावकल्पत इत्यभ्यस्यन्ते प्रयाजाः । तेषामभ्यस्यमानानामेकदेशे अन्या देवता उरउपासा इत्येवमादयः । एवमिहाप्यभ्यास पुरोडाशयागस्य । तस्मादनुत्कर्षः संस्कारपक्षेऽपीति ॥३३॥ युक्तिः॥ पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम् ॥ ९ ॥

**चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥**

चरुः श्रूयते । सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति । सौर्य्यं आग्नेयविकार इत्येतत्समधिगतम् । सामान्याद्धा नियम्येत पूर्ववत्त्वाद्विकारो हि इति । तत्रैषोऽर्थः सांशयिकः । किं चरुः कपालविकारः, हविर्विकारः ? इति । यदा हविर्विकारस्तदा किं स्थाल्या हविर्विक्रियते ? उत ओदनेनेति । किं तावत् प्राप्तम् । हविर्विकारः स्यादिति । कुतः । इज्यासंयोगात् । तद्धितार्थो विधीयते चरोः । सौर्य्यं चरुं निर्वपेदिति । एवमिज्यार्थश्चरुः । तस्माद्धविर्विकार इति ॥ ३४ ॥ सि० ॥

**प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥**

एवं स्थिते विशेष उच्यते । हविर्विकारः । प्रसिद्धग्रहणत्वाच्च स्थाल्या हविर्विकारः क्रियते । प्रसिद्धस्य ग्रहणं न्याय्यम् । प्रसिद्धश्च स्थाल्यां चरुशब्दः, आ हिमवतः, आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः । तस्मात् स्थाल्या हविर्विक्रियते इति ॥ ३५ ॥ पूर्व० ॥

**ओदनो वान्नसंयोगात् ॥ ३६ ॥**

ओदनेऽपि चरुशब्दः प्रयुज्यते। तत्रौदनस्यैव ग्रहणं न्याय्यं, न स्थाल्याः। कुत.। अदनीयसंयोगात्। अदनीयेन हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, नानदनीयेन। तत्रभवतामाचारात्। तेषां स्मृतिरनुमीयते, स्मृतेः श्रुतिः। तस्मादोदनेन हविर्विक्रियते इति॥ ॥ ३६ ॥ उत्तरम्॥

न द्व्यर्थत्वात्॥ ३७॥

न ओदनस्य वाचकश्चरुशब्दः। कुत । द्व्यर्थ एवं स भवेत्। स्थाल्यां हि स प्रसिद्ध समधिगत। तस्मादोदने लक्षणाशब्दस्तत्संयोगादित्येवं मन्तव्यम्। अन्याय्यो ह्येवञ्जातीयकेष्वनेकार्थभावः। तस्मात् स्थाल्या हविर्विक्रियते इति। यदुक्तम्। अदनीयेन शिष्टा देवतायागमाचरन्तीति ध्रुवमेषां स्मृतिरिति। उच्यते। अनुमानमेतत् प्रत्यक्षेण वचनेन बाध्यते। वचनादवगम्यते स्थाल्या यागः कर्त्तव्य इति। कथम्। तस्यां हि चरुशब्दः प्रसिद्ध। न असौ आचारानुरोधेन लक्षणाशब्दः कल्पनीयः। कल्प्यमाने वा आचारेण शब्दो बाध्येत। न चैतन्न्याय्यम्। शब्दानुरोधेन हि व्यामोहादाचार इति कल्पयितुं न्याय्यम्। यथा शूलैश्च मासरेण चावभृथमभ्यवयन्तीति। प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्काम इति च॥ ३७॥ आ०॥

कपालविकारो वा विशये ऽर्थोपपत्तिभ्याम्॥ ३८॥

हविर्विकारपक्षो न सिद्ध्यति। स्थाल्या विकारे स्मृतिहेतुराचाराच्छ्रुतिराशङ्क्यते। ओदनेन विकारे स्थालीसंयोगाल्लक्षणाशब्द आशङ्क्यः। अस्ति चान्या गतिः। कपालविकारो भवेदिति। तस्माद्वाशब्देन पक्षं व्यावर्त्त्य कपालविकारश्चरुरिति ब्रूम.। कपालविकारोऽप्यर्थ. सूर्यस्य। तेन सौर्य्य इति शक्यते व्यपदेष्टुम्। उपपत्तिश्चास्ति। शक्यते स्थाल्यां श्रपयितुम्। तस्माद्धविर्विकारपक्षे संशये कपालविकार आश्रयणीय॥ ३८॥ पूर्व०॥

गुणमुख्यविशेषाच्च॥ ३९॥

अस्ति च गुणमुख्ययोर्विशेष। गुणो बाधितव्यो न्याय्यो, न मुख्यः। तदुक्तम्, अङ्गगुणविरोधे च तादर्थ्याद् इति॥ ३९॥

तच्छ्रुतौ चान्यहविष्ट्वात्॥ ४०॥

चरुश्रुतौ चान्यद्धविर्दर्शयति । प्राजापत्यं घृते चरुं निर्वपेच्छत-कृष्णलमायुष्काम इति । शतकृष्णलानि हविः । चरुरेषां सम्बन्धी । चत्वारि चत्वारि कृष्णलान्यवद्यतीति कृष्णलानां हविष्ट्वम् ॥ ४० ॥

## लिङ्गदर्शनाच्च ॥ ४१ ॥

एवं हि आह । मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रियङ्गवं ग्राम-काम इति । मृण्मयो हि चरुर्न प्रियङ्गुविकारः । तस्माद् अन्यद्धविः । चरुरपि कपालविकार इति ॥ ४१ ॥ युक्तिः ॥

## ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥

हविर्विकार एवात्र चरुस्तद्धितसंयोगादवगम्यते । सौर्य्यश्चरुः कर्त्तव्य इति । यदि पुरोडाश उत्सृज्येत, चरुरत्रश्रूयोऽवगम्यमानो बाध्येत । सूर्यसम्बद्धो हि चरुः कर्त्तव्यः । तस्मिन्नशक्ये सौर्य्यस-म्बद्धः क्रियेत, न शक्ये । यदा च हविर्विक्रियते, तदा ओदनेन । ओदने हि चरुशब्दः प्रसिद्धः, आ हिमवतः, आ च कुमारीभ्यः । तत्र अदनीयसंयोगो युक्तो भविष्यति ॥

यत्तु, द्व्यर्थत्वमन्याय्यमिति । अन्याय्यमेव द्व्यर्थत्वम् । तत्र कुत एतत् स्थालीसंयोगेन ओदने भविष्यतीति, न पुनरोदनसंयोगात् स्थाल्यां स्यात् । स्मरन्ति च पाके चरुशब्दम् । अनवस्त्रावितान्त-रूष्मपक्वो विशदसिद्ध ओदनश्चरुरिति । तदुक्तं, न पक्तिनामत्वाद् इति । आचाराच्च स्मृतिर्बलीयसी । तस्मादोदने चरुशब्दः । ओदनेन हविर्विक्रियत इति । तत्रायमप्यर्थोऽनदनीयेन यागो भविष्यतीति । अपि च सूर्य्यस्यान्यद्द्रव्यं नैवास्ति येन चरुः सम्बद्ध्येत । चोदकप्राप्तः पुरोडाश इति चेत् । नैतदेवम् । कर्म्मचोदनायां हि निष्पन्नायां चोदको भवति । प्राक् चरुशब्दवचनाच्च यजतिचोदना । द्रव्यदेवता-सम्बन्धो हि यज्यर्थः । तेन चोदनाविधिशेषश्चरुशब्दो न पुरोडाश-विशेषणं भवति । जघन्यत्वाच्चोदकस्येति ॥ ४२ ॥ आ० ॥ तथा, पूर्व० नि० ॥

## अपूर्वव्यपदेशाच्च ॥ ४३ ॥

इतश्च पश्यामः, ओदनेन हविर्विक्रियत इति । कुतः । अपूर्वव्य-पदेशो भवति । एवं ह्याह । पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नु-वंश्चरुणामुष्मिँल्लोके इति । पुरोडाशेन आर्ध्नोति चरुणामुष्मिन्निति ।

यदि स्थाल्यां चरुशब्दः कपालविकारश्चरुः। ततो यस्मिन्नेव पक्षे पुरोडाशस्तस्मिन्नेव पक्षे चरुः। पुरोडाशेन वै देवा अस्मिँल्लोके आर्ध्नुवन्निति चरुणा अस्मिँल्लोक इति गम्यते। तत्र चरुणामुष्मिन्नित्यन्यवद् व्यपदेशो नावकल्पते। तस्मादप्योदनेन हविर्विक्रियत इति॥ ४३॥

तथा च लिङ्गदर्शनम्॥ ४४॥

एवञ्च कृत्वा लिङ्गदर्शनमप्युपपन्नं भविष्यति। कथम्?। आदित्यः प्रायणीयश्चरुः, आदित्य उदयनीय इति। तत्रैतच्छ्रूयते। आज्यस्यैव चरुमभिपूर्य्य चतुर आज्यभागान् यजति। पथ्यां स्वस्तिमिष्ट्वाग्नीषोमौ यजति। अग्नीषोमाविष्ट्वा सवितारं यजति। अदितिमोदनेनेति। चतुर्षु आज्यभागेषु विधिः। अदितेरादित्यश्चरुरिति प्राप्तत्वादनुवादः। तत्र चरुमोदनशब्देन ब्रुवन् ओदनेन हविर्विक्रियत इति दर्शयति। तथा इदमपरं लिङ्गं भवति। यदि तण्डुलो विद्यते आमं तद्धविः स्यादिति। तण्डुले हविःशब्दं ब्रुवन्नोदनेन हविर्विक्रियत इति दर्शयति॥ ४४॥ युक्तिः॥ सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम्॥ १०॥

स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्॥ ४५॥

अस्ति चरुः, सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति। अत्रैषोऽर्थः समधिगतः। ओदनेन हविर्विक्रियत इति। स इदानीमोदनः क पक्तव्यः? इति भवति संशयः। किं तावत् प्राप्तम्। न नियमः स्यात्, कपालेष्वेवेति। अर्थप्राप्ते यस्मिन् कस्मिँश्चिद् द्रव्ये पच्येत। यदि हि कपालं चोदकेन प्राप्येत, कपालवच्चोदकेन सङ्ख्यापि प्राप्येत। न हि प्रकृतौ कपालेषु श्रपयितव्यमित्येव चोदना। किं तर्हि। अष्टाकपालो भवतीति सङ्ख्यायां प्राप्यमाणायामष्टाकपलतास्य चोदिता भवति, नान्यथा। न चैवं सङ्ख्या प्राप्यते। न हि बहुषु कपालेषु पुरोडाशवदोदनः पक्तुं शक्यः। केवले च कपाले प्राप्यमाणे यासावष्टाकपालता चोदिता सा नैव प्राप्येत। अतो यस्मिन् कस्मिँश्चिद् अर्थप्राप्ते द्रव्ये पक्तव्यश्चरुरिति॥ एवं प्राप्ते ब्रूमः। स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्। स एष चरुः कपाल एव स्यात्। एवं प्रकृतिवच्छब्दोऽनुगृहीतो भवति। न चान्यत् किञ्चिद् द्रव्य-

माम्नायते । तस्मान्नियमः ॥ ४५ ॥ पूर्व० ॥

सङ्ख्या चापि कपालवदिति यदुक्तं, तत् परिहर्त्तव्यम् ॥

## एकस्मिन् वा विप्रतिषेधात् ॥ ४६ ॥

यदि बहुषु कपालेषु न शक्यते चरु पक्तुं, विप्रतिषेधादेकस्मिन् पक्तव्यः । यदेतदुच्यते, अष्टाकपालो भवतीत्येतदुक्तं भवति— अष्टसु कपालेषु श्रपयितव्य इति । तन्न । यदि अष्टत्वं विरोधान्न प्राप्यते, तत् कपालमविरोधात् प्राप्येत ॥ ४६ ॥ आ० नि० ॥

## न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥

न वा कपालेषु पक्तव्यः । कुतः । अर्थान्तरसंयोगात् । अपूपपाके यत् कपालमुपादीयते, तद्गतेनोष्मणाऽपूपस्य निर्वर्त्तकः पाको यथा स्यादिति । तत्र कपालं चरोरुपादीयमानं उदकधारणार्थं यदूष्मणा उदकगतेन ओदनपाको निर्वर्त्यते, स ओदनपाको न कपालगतेन ऊष्मणा निर्वर्त्तते । तत्रोदकधारणार्थं कपालमुपादीयमानं न प्राकृतकार्य्यं स्यादिति चोदको नैवानुगृह्यते । तस्माद् अर्थात् पात्रलाभ स्यादिति तद्, अविशेषाद् न नियम्येत, किं तदिति॥४७॥पूर्व०

## चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥

स्थाल्यां वा श्रपणं क्रियेत । लिङ्गं हि भवति । यासु स्थालीषु सोमाः स्युस्ते चरवः स्युरिति । सोमस्थालीषु चरुं पक्तव्यं ब्रुवन् विशेषेण स्थालीं चरुस्थापनार्थां दर्शयति ॥ आह, दर्शनमिदं व्यपदिश्यते प्राप्तिरुच्यतामिति । अत्रोच्यते । स्थाल्यां स चरुसंज्ञकः पाको निर्वर्त्यते, न कटाहे कपाले वा । तस्मात् स्थाल्यां चरुः पक्तव्य इति । किं भवति प्रयोजनं, यदि कपालविकारश्चरुर्यदि वा ओदनेन हविर्विक्रियते ? इति । यदि कपालविकारः, तस्मिन् पेषणमनर्थलोपात् कर्त्तव्यम् । अथ ओदनेन हविर्विक्रियते, अक्रिया पेषणस्य अपूपहेतुत्वात् । पिण्डार्थत्वाच्च संयवनं पूर्वपक्षे कर्त्तव्यं, न सिद्धान्ते । संवपनमप्येवम् । सन्तापनञ्च अधस्ताच्छ्रपणार्थं पूर्वपक्षे कर्त्तव्यं, न सिद्धान्ते । उपधानञ्चैवमेव । पृथुश्लक्ष्णे च पूर्वपक्षे कर्त्तव्ये, न

सिद्धान्ते। अभ्यूहश्चाङ्गाराणां पूर्वपक्षे कर्त्तव्यो, न सिद्धान्ते। उपरि-पाकार्थत्वात्। अवज्वलनमप्येवमेव। व्युदूधृत्यासादनं पूर्वपक्षे अर्थात् कर्त्तव्यम्। अर्थो नास्तीति न सिद्धान्ते। अर्थात् कृतं हि व्युदूधृत्यासादनं, न शब्दप्राप्तम्। अर्थाच्च कृतं न चोदकः प्रापयति॥ ॥ ४८ ॥ सिद्धान्तः ॥ सौर्यचरो स्थाल्यामेव पाकाधिकरणम् ॥११॥

एवं वा, पृथगधिकरणानि पेषणादीनि। अस्ति चरुः। सौर्य्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति। ओदनेन हविर्विक्रियते, इत्येतत् समधिगतम्। तत्रैतत् संदिह्यते। किं चरौ पेषणं कर्त्तव्यं, न? इति। किं प्राप्तम्।

**तस्मिन् पेषणमनर्थलोपात् स्यात् ॥ ४९ ॥**

शक्यते हि तण्डुलेषु पेषणं कर्त्तुम् ॥ ४९ ॥ पूर्व० ॥

**अक्रिया वा अपूपहेतुत्वात् ॥ ५० ॥**

यद्यपि शक्यते, तथापि न क्रियते। अपूपः पेषणेन विना न निर्वर्त्तते, ओदनस्तु विनैव पेषणेन भवति। कामं पेषणेन व्याहन्यते। पिष्टकं यवागूर्वा स्यात् खलिर्वा। तस्माच्चरो पेषणं निवर्त्तेत ॥ ५० ॥ सिद्धान्तः ॥ सौर्यचरौ पेषणाभावाधिकरणम् ॥ १२ ॥

**पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥**

चरुरेवोदाहरणम्। प्रकृतौ श्रूयते, प्रणीताभिर्हर्वींषि संयौतीति। तदिह चरौ संयवनं कर्त्तव्यं, न? इति। कर्त्तव्यम्। शक्यते हि कर्त्तुमिति ॥ एवं प्राप्ते ब्रूमः, शक्यमपि न क्रियते, पिण्डार्थं हि तत्। पिण्डनं च अपूपस्य प्रयोजनं, न चरो ॥ ५१ ॥ सौर्यचरौ संयवनाभावाधिकरणम् ॥ १३ ॥

**संवपनञ्च तादर्थ्यात् ॥ ५२ ॥**

सौर्य एव चरुरुदाहरणम्। प्रकृतौ श्रूयते, सवितृप्रसूत इत्येवैनं देवताभिः संवपनीति। इह चरौ सन्देहः। संवपनं कर्त्तव्यं, न? इति। किं प्राप्तम्। शक्यत्वाच्चोदकानुग्रहाय कर्त्तव्यमिति। एवं प्राप्ते ब्रूमः। संयवितुं हि तत् प्रकृतौ क्रियते, न चरोः संवप्तव्येन प्रयोजनम् ॥ ५२ ॥ सौर्यचरौ संवपनाभावाधिकरणम् ॥ १४ ॥

**सन्तापनमधःश्रपणात् ॥ ५३ ॥**

चरावेव च सन्देहः। प्रकृतौ सन्तापनं कपालानामस्ति, वसूनां

रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्म्मस्य तपसा तप्यध्वमिति । चरौ सन्तापनं कर्त्तव्यं, न? इति सन्देहः । प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्तम् । अध:पाकार्थं हि तत् । तस्मान्न चरौ चोदकः प्रापयति ॥ ५३ ॥ सौर्यचरौ संतापनाभावाधिकरणम् ॥ १५ ॥

## उपधानञ्च तादर्थ्यात् ॥ ५४ ॥

चरावेव कपालोपधानं प्रति सन्देहः । कर्त्तव्यं ? न? इति । प्रकृतिवद्वचनात् प्राप्तम् । अधःपाकार्थत्वान्निवर्त्तते इति ॥ ५४ ॥ सौर्यचरावुपधानाभावाधिकरणम् ॥ १६ ॥

## पृथुश्लक्ष्णे वानपूपत्वात् ॥ ५५ ॥

पृथुश्लक्ष्णे च प्रति चरावेव सन्देहः । प्रकृतौ श्रूयते, उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति । सं ते तन्वा तनूः सृज्यतामिति त्रिभिः परिमार्ष्टि । तदुभयं चरौ कर्त्तव्यं, न? इति । चोदकानुग्रहाय कर्त्तव्यमिति प्राप्ते । अनपूपत्वात् तद् निवर्त्तते ॥ ५५ ॥ सौर्यचरौ पृथुश्लक्ष्णाभावाधिकरणम् ॥ १७ ॥

## अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥

प्रकृतौ श्रूयते, वेदेन भस्मनाङ्गारान् अभ्यूहतीति । तत् सौर्ये चरौ कर्त्तव्यं, न? इति सन्देहः । प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्ते ब्रूमः । उपरिपाकार्थं हि तत् पुरोडाशस्यावकल्पते, न चरोरिति निवर्त्तते ॥ ५६ ॥ सौर्यचरावभ्यूहाभावाधिकरणम् ॥ १८ ॥

## तथाऽवज्वलनम् ॥ ५७ ॥

दर्शपूर्णमासयोः श्रूयते, दर्भपिञ्जूलैरज्वलयतीति । सौर्ये चरौ सन्देहः । किं तत् कर्त्तव्यं, न? इति । किं प्राप्तम् । प्रकृतिवद्वचनात् कर्त्तव्यम् । उपरिपाकार्थत्वान्निवर्त्तते इति ॥ ५७ ॥ सौर्यचरावज्वलनाभावाधिकरणम् ॥ १९ ॥

## व्युद्धृत्यासादनञ्च प्रकृतावश्रुतत्वात् ॥ ५८ ॥

प्रकृतौ श्रूयते, अन्तर्वेद्यां हवींष्यासादयतीति । तत् प्रकृतौ कपालेभ्यो व्युद्धृत्यासादनं क्रियते । सौर्ये चरौ सन्देहः । किं स्थाल्या व्युत्थाप्य चरुरासादयितव्यः? उत व्युत्थानंनकर्त्तव्यमिति। प्रकृतौ कृतत्वाच्चरावपि कर्त्तव्यमिति प्राप्तम् । तदुच्यते । व्युद्धृ-

त्यासादनञ्च प्रकृतावश्रुतित्वात् । प्रकृतौ न श्रूयते । कपालेभ्यो व्युद्धृत्यासादयितव्यः पुरोडाश इति । अर्थात् स व्युद्ध्रियते । यच्चार्थात् कृतं न स चोदनार्थः । तस्माच्चरौ व्युद्धरणं न कर्त्तव्यम् । अपि चोद्धरणे क्रियमाणे कपित्थवत् परिशोष्य उद्ध्रियेत । तत्र पात्रभेदः स्यात् । तस्माद् व्युद्धृत्यासादनं चरौ न कर्त्तव्यमिति ॥ ५८ ॥ सौर्यचरौ व्युद्धृत्यासादनाभावाधिकरणम् ॥ २० ॥

इति भट्टश्रीशबरस्वामिन कृतौ मीमांसाभाष्ये दशमस्य अध्यायस्य प्रथमः पादः ॥ १० ॥ १ ॥

अथ दशमे अध्याये द्वितीयः पादः ॥ १० ॥ २ ॥

## कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥

प्राजापत्यं चरुं निर्वपेद् घृते शतकृष्णलमायुष्काम इति । तत्र सन्देहः । किं चोदकेन पाकः प्राप्यते कर्त्तव्यश्च । उत न प्राप्यते, न कर्त्तव्यः ? इति । किं तावत् प्राप्तम् । कृष्णलेषु पाको न स्यात् । प्रकृतौ हि पुरोडाशार्थः पाकः । इहान्तरेणपि पाकं, कृष्णलानि कृष्णलान्येव भवन्ति । तस्मान्न प्राप्यते । अतो न कर्त्तव्य इति॥१॥पूर्व०

## स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ॥ २ ॥

स्याद्वा पाकः । चोदकेन तु न प्राप्यते । प्रत्यक्षन्तु अस्य शासनं, घृते श्रपयतीति । प्राकृतस्य कार्यस्यार्थे न भवति, वचनप्रामाण्याददृष्टार्थो भवति । यथा तेषामेवानदनीयानां प्रत्यक्षशासनात् प्रदानम् । एवं पाकोऽपीति ॥ २ ॥ सिद्धान्तः ॥ कृष्णले चरौ पाकाऽनुष्ठानाधिकरणम् ॥ १ ॥

## उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥

कृष्णलचरावेव सन्देहः । ये प्रकृतावुपस्तरणाभिघारणे, यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति । ते उपस्तरणाभिघारणे कृष्णलचरौ कर्त्तव्ये, न ? इति एष संशयः । किं प्राप्तम् । उपस्तरणाभिघारणयोर्न क्रिया । कुतः । अमृतार्थत्वात् । अमृतार्थत्वेन हि ते क्रियेते । यदुपस्तृणात्यभिघारयति अमृताहुतिमेवैनां करोतीति अमृतेनोपमिमानः स्वादुभावार्थतां तयोर्दर्शयति । न च कृष्णलेषु स्वादुभावः सम्भवति । तस्माद् अक्रियेति ॥ ३ ॥ सि० ॥

**क्रियेत वार्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥**

क्रियेत वा उपस्तरणमभिघारणञ्च । विधेः प्रकारान्तरेऽनिर्देशात् सर्वकर्म स्यादिति । यदुक्तं, स्वादुत्वाय ते क्रियेते इति । न स्वादुतार्थं प्रकृतौ श्रुतः । स्वादु कर्त्तव्य इति । तस्मादर्थवादः । अमृताहुतिर्मेवनां करोतीति । संसर्गमात्रमाज्यस्य क्रियते हविषश्च । तच्च कृष्णलेष्वपि शक्यं कर्त्तुम् । तस्मादनिवृत्तिः ॥ ४ ॥ पूर्व० ॥

**अकर्म वा चतुर्भिराप्तिवचनात् सह पूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । अक्रिया तयोरिति । कुतः । चतुर्भिराप्तिवचनात् । चत्वारि कृष्णलान्यवद्यतीति । कोऽभिप्रायः । चत्वारि कृष्णलानि चत्वारि अवदानानि । एकैकं कृष्णलम्, एकैकस्यावदानस्य स्थाने । ततोपस्तरणाभिघारणयोर्निवृत्तिः । तथा चाप्तिवचनं भवति । चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै इति । अविद्यमानस्यार्थान्तरेणानुग्रहो भवति । तस्मान्निवृत्तिरेतयोः । सह पुनरुपस्तरणाभिघारणाभ्यां पूर्णं चतुरवत्तमेव स्यात् । तत्राप्तिवचनं व्याहन्येत ॥ ॥ ५ ॥ उत्तरम् ॥

**क्रिया वा मुख्यावदानपरिमाणात् सामान्यात् तद्गुणत्वम् ॥ ६ ॥**

क्रिया वा तयोश्चोदकानुग्रहाय । मुख्यावदानस्य हि प्रकृतौ परिमाणमुक्तम् । अङ्गुष्ठपर्वमात्रं देवतानामवद्यतीति । इहापि कृष्णलशब्दः परिमाणवचनः श्रूयते । स चतु सङ्ख्ययाऽनुबद्ध्यते, चत्वारि कृष्णलान्यवद्यतीति । न यानि चत्वारि अवदानानि तानि कृष्णलपरिमाणानि भवन्तीति । हिरण्यपरिमाणवचन एव कृष्णलशब्दो नाज्यस्य परिमाणं वदितुमुत्सहते । तच्च परिमाणं न द्रव्यं निवर्त्तयति । न हि द्रव्यकार्येषु गुणो वर्त्तितुमर्हति । परिमाणं यत् प्राकृतं तस्य कार्ये वर्त्तमानं तन्निवर्त्तयेत् । यथा, इदं दधि घृतं शाकम् इमे शालयः, देवदत्तो भोज्यतां देवदत्तवद् यज्ञदत्तस्तैलेनेति । तैलं हि भोजने स्नेहनेनोपकरोति, तत्स्नेहनार्थप्राकृतं निवर्त्तयितुमर्हति घृतं, न शाकं दधि च ओदनं वा । एवमिहापि परिमाणं मुख्यावदान परि-

मिमीते, न द्रव्यं निवर्त्तयेत् । प्रकरणात्तु मुख्यपरिमाणं स्याद्, न उपस्तरणाभिघारणयोः । तस्मात्तयोरनिवृत्तिरिति ॥ ६ ॥ पूर्व० ॥

## तेषां चैकावदानत्वात् ॥ ७ ॥

चतुर्णां चैकावदानतां दर्शयति । चत्वारि कृष्णलान्येकमवदानमिति। इतरथा चत्वारि अवदानानि अभविष्यन् । तत्रैकावदानवचनमुपरोत्स्यते । तस्माद्प्यनिवृत्तिरिति ॥ ७ ॥ युक्तिः ॥

## आप्तिः संख्यासमानत्वात् ॥ ८ ॥

अथ यदुक्तम्, आप्तिवचनं भवतीति, चतु सङ्ख्यासंस्तुतिरेषा । एवं चतुःसङ्ख्याया माहात्म्यं यदेकस्मिन्नवदाने चत्वारि अवदानानि भवन्तीति । यथा, यद्वैश्वदेवः प्रातःसवने गृह्यते, प्रातःसवने वा एतद्वैश्वदेवयज्ञं संस्थापयतीति वैश्वदेवसंस्तुतिर्न अन्यसवननिवृत्तिः । एवमिहापि चतु सङ्ख्यासंस्तवो, नोपस्तरणाभिघारणयोर्निवृत्तिरिति ॥ ८ ॥ परिहार. ॥

## सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥

तुशब्द एनं चतु सङ्ख्यासंस्तवं व्यावर्त्तयति । न हि विद्यमानयोरुपस्तरणाभिघारणयोस्तदाप्तिवचनेन कश्चित् संस्तवोऽस्ति । यद्यऽविद्यमानमआपयतीत्युच्यते, ततो गुणवानित्युक्तो भवति । तत्र संस्तूयते । अथ विद्यमानमापयतीति अनर्थको भवतीत्युक्तं भवति, न संस्तवः । तस्माद्विद्यमानयोरुपस्तरणाभिघारणयोराप्तिवचनं व्यर्थमेव । अन्य. परिहारो वक्तव्यः ॥ ९ ॥

## विकल्पस्त्वेकावदानत्वात् ॥ १० ॥

तुशब्द आप्तिवचनान्निवृत्तिरुपस्तरणाभिघारणयोरित्येतन्निवर्त्तयति । यथा भवान् ब्रूते, आप्तिवचनाल्लिङ्गान्निवृत्तिरेतयोरिति, एवमेकावदानवचनाल्लिङ्गादनिवृत्तिरेनयोरिति लिङ्गविकल्पः । लिङ्गविकल्पाच्च नैकान्ततो निवृत्तिमाप्तिवचनं कर्त्तुमर्हति ॥१०॥ परिहार· ॥

## सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥

तुशब्द आप्तिवचनं बाधते । आप्तिवचने बाधिते सति चतुर्षु कृष्णलेषु सर्वावदानविकारेष्वभ्यासोऽनर्थकः स्यात् । चत्वारि

चत्वारि कृष्णलान्यवद्यति समृद्ध्यै इति। अस्मत्पक्षे पुनरितरद्विर्द्वितीयमवदानमपेक्ष्याभ्यासोऽवकल्पिष्यते । अथ मतम्, एतन्ममापि स्विष्टकृतमपेक्ष्याऽभ्यासे भवतीति । तन्नैवम्। इतरस्य स्विष्टकृतोऽपेक्षणमन्याय्यम्। प्रकरणात् प्रधानमभिसम्बध्यते वचनेन । न च स्विष्टकृतः प्रकरणम्। चोदकेन हि स प्राप्यते । तस्मात् त्वत्पक्षेऽभ्यासोऽनर्थक एव । उपस्तरणाभिघारणे कर्त्तव्ये एव ॥ ११ ॥ परिहारनिरासः ॥

## अकर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

अक्रिया उपस्तरणाभिघारणयोः कुतः। संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां मा भूदिति । उपस्तरणेन स्रुक् स्निग्धीक्रियते, अभिघारणेन हविः स्रुचि असंयुक्तं कृत्स्नं यथा अग्नौ पतेदिति । न तु विशदस्य कृष्णलस्य स्रुचि संयोगो भवति, यन्निमित्तमुपस्तरणमभिघारणञ्च स्नेहनार्थं सुवर्णस्य क्रियेत । तस्मात् प्राकृतस्य प्रयोजनस्य निवृत्तत्वात् कृष्णलेषु उपस्तरणाभिघारणे निवर्तितुमर्हतः। एवञ्चाप्तिवचनमुपपन्नं भविष्यति । चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै इति ॥ १२ ॥ पूर्वपक्षोत्तरपक्षौ ॥ कृष्णले उपस्तरणाऽभिघारणयोरभावाधिकरणम् ॥ २ ॥

## भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥

शतकृष्णलश्चरुरुदाहरणम्। सन्ति प्रकृतौ भक्षाः, इडाप्राशित्रचतुर्द्धाकरणशंयुवाककालाः। तेषु संशयः। कृष्णलचरौ ते भक्षाः कर्त्तव्याः? उत न?। किं प्राप्तम्। न कर्त्तव्याः । प्रीत्यर्थे हि प्रकृतौ ते कृता, सामर्थ्यं जनयिष्यन्तीति । न तु हिरण्यं प्रीतिमुत्पादयति भक्ष्यमाणम्। अतो न कर्त्तव्याः ॥ १३ ॥ पूर्व० ॥

## स्याद्वा निर्द्धानदर्शनात् ॥ १४ ॥

स्याद्वा हिरण्यस्य भक्षः। भक्षणविशेषदर्शनात्। निरवधयन्तो भक्षयन्ति चुक्षुषाकारं भक्षयन्तीति प्राप्ते भक्षे केवलं भक्षोपायं विधास्यति शब्द इति । इतरथा भक्षोपायं भक्षणञ्च विकृतौ विदध्यात्। तत्र वाक्यं भिद्येत। तस्माच्चोदकेन प्राप्यते भक्ष इति ॥ १४ ॥ सि० ॥

## वचनं वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥१५॥

न त्वेतदस्ति, प्राप्यन्ते भक्षा इति। अर्थलोपादेषां निवृत्तिः। यत्तु, भक्षणे विशेषवचनं भवतीति। वचनादेतदाज्यस्य भविष्यति। निरवद्ययन्तो भक्षयन्त्याज्यमिति, चुक्षुषाकारं भक्षयन्त्याज्यमिति। निर्वानं चुक्षुषाकारं चार्थप्राप्तं भक्ष्यमाणस्यानूद्यत इति न वाक्यभेदः ॥ १५ ॥ आ० ॥

## वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

सत्यम्। वचनमेतद्धिरण्यस्य, न त्वाज्यस्य। कुतः। भक्षयन्तीत्येतावच्छ्रूयते। नेदं वा तद्वा इति। तत्र यन्निर्दिष्टं प्रकृतं, तस्य तेन सम्बन्धो भवतीति। हिरण्यं चात्र निर्दिश्यते, नाज्यम्। कथम्। प्राजापत्यं चरुं निर्वपेद्घृते शतकृष्णलमिति शतकृष्णलश्चरुरत्र कार्यसम्बन्धार्थमुच्यते। तद्विशेषणार्थेन घृतं, नस्वनिर्देशार्थेन। तस्माच्चरुरेवं शब्दान्तरे सम्बद्ध्यते, न घृतम्। तद्यथा एष दण्ड इष्टकाकूटे तिष्ठति प्रहराननेति; दण्डेनेति गम्यते, नेष्टकाकूटेनेति। एवमिहापि चरुर्भक्षणवचनेन सम्बद्ध्यते, न घृतम्। तस्माच्चरोर्भक्षणं प्रदानवत्। यथा तेषामेव कृष्णलानाम् अनदनीयानां प्रदानं क्रियते, एवमत्रापि द्रष्टव्यमिति ॥ १६ ॥ ॥ आ० नि० ॥ कृष्णलचरौ भक्षसद्भावाऽधिकरणम् ॥ ३ ॥

## एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥ १७ ॥

तत्रैव श्रूयते, एकधा ब्रह्मणे परिहरतीति। तत्र सन्देहः। किमेतत् सहत्वम् ? उत सकृत्त्वमिति। किं प्राप्तम्। सकृत्त्वं वा, सहत्वं वा, अनियम इति। कुतः। एकप्रकारवचन एकधेति शब्दः। सकृत्त्वमप्येकः प्रकारः, सहत्वमपि। तद्यथा, यः सकृद् गाः प्रापयति स एकधा प्रापयतीत्युच्यते। योऽपि सह प्रापयति सोऽप्येकधा प्रापयतीति। तस्मात् सकृत्त्वं सहत्वं वा कर्त्तव्यमिति ॥ एवं प्राप्ते ब्रूमः। एकधा ब्रह्मणे परिहरतीति। सहेति गम्यते। एवं ब्रह्मभक्षस्याब्रह्मभक्षस्यापि परिहारः कृतो भविष्यति। इतरस्मिन् पक्षे कस्यचिद् ब्रह्मभक्षस्य परिहारो न क्रियेत। तत्र प्राकृतः प्रयोगवचनो बाध्येत।

विहृताश्चामी भक्षाः प्रकृतौ । ते इह चोदकेन विहृता एव प्राप्ताः । तत्र सहत्ववचनं एकधाशब्दोऽवकल्पते । ननु वाचनिका इह भक्षाः, अप्राकृताः, न प्राकृता विहृताः प्राप्तुमर्हन्तीति । उच्यते । पुरुषसंस्कारार्थत्वेन न प्राप्नुवन्ति, द्रव्यसंस्कारार्थत्वेन तु प्राप्नुवन्तीति । यदि प्राप्नुवन्ति, किमर्थं तर्हि वचनम् ? इति । भक्षोपायविधानार्थम् । ननु निर्द्धानं चुश्रुपाकरणं वाऽर्थप्राप्तम् । अर्थप्राप्तत्वादनुवादः । उच्यते । न नियमेन प्राप्यते । नियमार्थश्च विधीयते इति ॥ १७ ॥ कृष्णलचरौ एकधा ब्रह्मणे चरतीत्यनेन सहपरिहारविधानाधिकरणम् ॥ ४ ॥

## सर्वत्वं च तेषामधिकारात् स्यात् ॥ १८ ॥

कृष्णलचरुरेवोदाहरणम् । तत्र श्रूयते । सर्वं ब्रह्मणे परिहरतीति । तत्र सन्देहः । किं ब्रह्मभक्षाणामेवैष परिहारः, उत पुरुषेभ्यः शेषापनय इति । कथं ब्रह्मभक्षाणां परिहारः ? कथं वा शेषापनय इति । यदि ब्रह्मणे परिहरतीत्यनूद्य सर्वमिति विधीयते, ब्रह्मणे सर्वमिति वानूद्य परिहरतीति विधीयते, ततो ब्रह्मभक्षाणां परिहारः । अथ सर्वमिति लक्षयित्वा ब्रह्मणे परिहरतीति विधीयते, परिहरतीति वा लक्षयित्वा सर्वं ब्रह्मणे इति । ततः शेषापनयः । किं प्राप्तम् । सर्वत्वं ब्रह्मभक्षाणां स्यात् । कुतः । ब्रह्मणे परिहरतीति प्राप्तमेव न विधीयते । सर्वपरिहारस्तु अप्राप्तः । तस्य विधानं भवितुमर्हति ॥

अथ वा अस्त्येव ब्रह्मणे सर्वो भागः । तत्र कस्यचिद्भागस्य परिहारः प्राप्तः, कस्यचिन्न प्राप्तः । यस्य च न प्राप्तस्तस्य परिहारो विधीयते । तस्मादधिकृतानां ब्रह्मभक्षाणामेष वाद इति ॥ १८ ॥ पूर्व० ॥

## पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

वाशब्दः पक्षं व्यावर्त्तयति । पुरुषापनयः स्यात् । यद्येवमुच्येत । यद् ब्रह्मणे परिहरति, तत् सर्वमिति । सर्वमेव हि तद्विधानमनर्थकं स्यात् । अथ यद् ब्रह्मणे, तत् सर्वं परिहरतीति । विशेष्यस्यानिर्देशात् न ब्रह्मशब्दो विशेषणम् । अथ यद् ब्रह्मणे, सर्वं तत् परिहरतीति । एवमपि विशेष्यो नैव निर्दिष्टः स्यात् । यत् सर्वं तत् परिहरतीति । नैव वचनमर्हति । सर्वं हि सर्वम् । ततश्च विशेषयितव्यम् । तस्मात् सर्वं ब्रह्मणे परिहरतीति ब्रह्मसम्बन्धः सर्वस्य विधीयते चरोः । एवं न किञ्चिदनर्थकम् । तस्मात् पुरुषेभ्यः शेषापनय इति ॥ १९ ॥ सि०

कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् ॥ ५ ॥

## पुरुषापनयात् स्वकालत्वम् ॥ २० ॥

तत्रैव सन्देहः। समधिगते शेषापनये किमेकस्मिन् काले सर्वे भक्षा भक्षयितव्या, उत स्वस्मिन् स्वस्मिन् काले ? इति। किं प्राप्तम्। भक्षयितुं तत्परिहरणं क्रियते। अतो यद् भक्षणाय परिहृतं तदनन्तरं भक्षयितव्यमेव ॥ एवं प्राप्ते ब्रूमः, पुरुषापनयात् स्वकालत्वमिति। पुरुषापनयं कृत्वा कृतार्थः शब्दः स्वकालतां भक्षणानां न निवारयति। तस्माद्यथाकालमेव भक्षयितव्या इति ॥ २० ॥ ॥ भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् ॥ ६ ॥

## एकार्थत्वादविभागः स्यात् ॥ २१ ॥

तत्रैवेदं चिन्त्यते। प्रकृतौ व्यादेश आम्नातः। इदं ब्रह्मण इदं होतुरिदमध्वर्य्योरिदमग्नीध इति। स इह कर्त्तव्यो ? न कर्त्तव्य इति संशयः। चोदकप्राप्त्या कर्त्तव्य इति यस्य बुद्धिः स्यात्, तस्य निवृत्त्यर्थं सूत्रम्। प्रकृतौ बहूनां सम्बन्धः कर्त्तव्यः। स विभागमन्तरेण सिद्ध्यतीति विभागो बहुसम्बन्धाय क्रियते। इह तु सर्वं ब्रह्मणे परिहरतीत्येकस्मै सर्वश्चरुः। तत्र विभागेन न प्रयोजनम्। क्रियमाणोऽपि न प्राकृतार्थः स्यात्। अदृष्टार्थमेव क्रियेत। तस्मात् कृष्णलचरौ न व्यादेश इति ॥२१॥ ब्रह्मभक्षे चतुर्धाकरणादीनामभावाधिकरणम् ७

## ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥२२॥

अस्ति ज्योतिष्टोमः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति। तत्रेदं समामनन्ति, गौश्च अश्वश्च अश्वतरश्च गर्दभाश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा। इदं चापरं श्रूयते। ऋत्विग्भ्यो दक्षिणां ददातीति। तत्र संशयः। किं दानं धर्ममात्रम् ? उत ऋत्विगानमनमिति। किं प्राप्तम्। ऋत्विग्दानं धर्ममात्रं स्यात् तस्य हि कर्त्तव्यता श्रूयते। ददातिकर्त्तव्यता अस्माच्छब्दाद् गम्यते। ऋत्विगानमनं कर्त्तव्यं वाक्याद्गम्यते। श्रुतिश्च वाक्याद् बलीयसी। लोकेऽपि अदृष्टार्थेनैव ददातेर्गम्यते इति सामर्थ्याद्न नानमनादि। अपि च कर्मानुरूपमपि दाक्षिण्यं क्वचिच्छ्रूयते। अैवातव्यायां सहस्रम्। पेये सोमचमस। अपि च यत्रोच्चनीचपणापणं क्रियते स परिक्रयो भवति, न यत्र नियतपरिमाणं दान-

म् । तस्माद्धर्ममात्रं दानम् । अपि च नियमवन्मन्त्रवच्च क्रियते । तददृष्टार्थत्वेनावकल्पते । क्वचिच्च श्रूयते । दण्डः, उपानहौ, शुष्का दृतिः, सा हि दक्षिणा इति । को हि दण्डेनानमेत् ? । तस्माद् धर्ममात्रं दानमिति ॥ २२ ॥ पूर्व० ॥

## परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥

परिक्रयार्थं वा दानम् । कुतः । कर्मसंयोगात् । कर्मसंयुक्तेभ्य श्रूयते । ऋत्विग्भ्यो दक्षिणां ददातीति । तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुम् । यदपि नियमाददृष्टं, तदपि दृष्टद्वारमेव । अनेन नियतेन नियतगुणकेन दानेनानम्यमाना ऋत्विजोऽभ्युदयकारिणो भवन्ति । कथम् । आनमने गुणभूतस्त्यागश्चोद्यते, न प्रधानभूतः । वाक्यार्थश्चावश्यं ग्रहीतव्यः । इतरथा ऋत्विग्भ्य इत्येतदेव पदमनर्थकं स्यात् । अगृह्यमाणे सुतरां श्रुतिर्बाध्येत । यच्च, न कर्मानुरूपं दाक्षिण्यमिति । नैतावताऽदृष्टोऽर्थः सन्नपह्नूयेत । नियमाद् दृष्टद्वारमदृष्टमित्युक्तमेव । वचनप्रामाण्याच्च दण्डोऽवगम्यते । अपि च भवति तत्र या च यावती चानमनमात्रा । लोकेऽपि हि काष्ठवाहप्रभृतिभ्यो यद्दीयते, तदसङ्कीर्त्तितेऽपि परिक्रये आनमनार्थमेव भवति । तस्मात् परिक्रयार्थं दक्षिणादानमिति ॥ २३ ॥ सि० ॥

## दक्षिणायुक्तवचनाच्च ॥ २४ ॥

दक्षिणायुक्तवचनाच्च लिङ्गात् परिक्रयार्थं दानमिति पश्यामः । दक्षिणायुक्ता वहन्ति ऋत्विज इति ॥ २४ ॥

## न चान्येनानम्येत परिक्रयात् कर्मणः परार्थत्वात् ॥ २५ ॥

इतश्च परिक्रयार्थं दानमिति । कुतः । नान्तरेण परिक्रयं, परार्थे परः प्रवर्त्तते । ननु सामादयोऽपि प्रवर्त्तनोपाया । न ब्रूमो, न प्रवर्त्तनोपाया इति । किन्तर्हि । परिक्रयः प्रत्यक्षमाम्नात इति । अतस्तेनैव परिक्रेतव्या, नान्येनेति ॥ २५ ॥

## परिक्रीतवचनाच्च ॥ २६ ॥

परिक्रीतवचनं भवति, तेनायमर्थो द्योत्यते । दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्तीति । तस्मादपि परिक्रयार्थं दानमिति ॥ २६ ॥

## सनिवन्येव भृतिवचनात् ॥ २७ ॥

सनिवनिप्राप्तं सनिवन्यं याच्ञाप्राप्तमित्यर्थ तस्मिन् भृतिवचनं भवति । यज्ञो वै देवतानां न समभवत्, तं भृत्या समभावयन् । यद् भृतिं वनुते, यज्ञस्य भृत्यै द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति । यज्ञार्थं यद् भिक्षितं ऋत्विज परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुं, तस्मिन्नेव भृतिवचनम् । भृतिश्च कर्मकरेभ्य आनत्यर्थं यद्दीयते । तस्मादपि परिक्रयार्थम् ऋत्विग्भ्यो दानमिति ॥ २७ ॥

## नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

नैष्कर्तृकेण च संस्तवो भवति । यथा वै दारुहारो नैष्कर्तृको निष्कर्त्तनभृतः कर्म्मयोगे वर्त्तते, एवं वा एते यज्ञस्य ऋत्विज इति । नैष्कर्तृको दारुहार । यथाऽसौ, एवमृत्विज इति ब्रुवन् परिक्रयार्थं दानं दर्शयति ॥ २८ ॥ युक्ति० ॥ ज्योतिष्टोमे ऋत्विग्दानस्यानत्यर्थता-ऽधिकरणम् ॥ ८ ॥

## शेषभक्षाश्च तद्वत् ॥ २९ ॥

सन्ति शेषभक्षा ज्योतिष्टोमे दर्शपूर्णमासयोश्च । यथा वषट्कार-निमित्ता होमाभिषवनिमित्ताश्च । तथा इडाप्राशित्रचतुर्द्धाकरण-शंयुवाककालाः । तेषु संशयः । किं ते परिक्रयार्था ? उत न इति । किं प्राप्तम् । शेषभक्षाश्च तद्वद् भवितुमर्हन्ति, यद्वद् दक्षिणादानम् । प्रीतिं हि करोति भक्षणं, प्रीतया चानमन्ति । तस्मात् परिक्रयार्थाः शेषभक्षा इति ॥ २९ ॥ पूर्व० ॥

## संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥

वाशब्द पक्षं व्यावर्त्तयति, न परिक्रयार्थं भक्षणम् । द्रव्यसं-स्कारार्थमिति । कुतः । यज्ञार्थेन हि द्रव्यमुत्पन्नं प्रयोजनवत् । यदि तस्य संस्कारार्थं भक्षणं, ततस्तदपि प्रयोजनवत् । दक्षिणार्द्धा-न्मध्याच्चावद्यतीत्येवमादि चैकदेशवचनं प्रकृतशेषापेक्षं भवति, न द्रव्यस्योत्पादकम् । तस्माद् द्रव्यस्य भक्षणमुच्यते, न भक्षणार्थं द्रव्यमुपादीयते । प्रकृतस्य च भक्षणम् । तस्मात् संस्कारार्थमिति गम्यते ॥ ३० ॥ सि० ॥

## शेषे च समत्वात् ॥ ३१ ॥

अपि च यच्छेषं द्रव्यं, तद् देवतायै सङ्कल्पितं यजमानेन न

स्वयमुपयोक्तव्यमिति । तस्मान्न तस्योपयोक्तुम् ऋत्विज ईशते, नो खल्वपि यजमानः । साम्यमत्र यजमानस्य ऋत्विग्भिः । परिक्रीणानश्च स्वीकुर्य्याद् द्रव्यम् । तत्रास्य देवतार्थः सङ्कल्प एव नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ ३१ ॥

स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥

स्वामिनि च भक्षणं दृश्यते । यजमानपञ्चमाः समुपहूता इडां भक्षयन्तीति । यजमानस्य असंशयम् अपरिक्रयः । तत्सामान्यादितरेषामपि न परिक्रयः । कथम् । एवं सति नैव विज्ञायते, इडाभक्षणेन यजमानपञ्चमाः परिक्रीयन्त इति । किं तत् सामान्यम् । द्वितीया विभक्तिः । तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ ३२ ॥

तथा चान्यार्थदर्शनम् ॥ ३३ ॥

एवमन्यार्थदर्शनमिदमुपपन्नं भवति । कुण्डपायिनामयने अत्सरुकैश्चमसैः सोमान् भक्षयन्तीति प्राप्ते भक्षे विशेषः श्रूयते— अत्सरुकैरिति । एवं सत्रेषु भक्षणं दृश्यते । तत्परिक्रयार्थत्वे नावकल्पते । तस्मादपि न परिक्रयार्थं भक्षणमिति ॥ ३३ ॥ युक्तिः ॥ ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् ॥ ३४ ॥

सन्ति द्वादशाहप्रभृतीनि सत्राणि, द्वादशाहमृद्धिकामा उपेयुरित्येवमादीनि । अस्ति च प्रकृतौ ज्योतिष्टोमे वरणम् । अग्निर्मे होता स मे होता होतस्त्वं मे होतासीति होतारमित्येवमादीति । तत् सत्रेषु सन्दिह्यते । किं कर्त्तव्यं, न ? इति । तत एतत् तावन्नः परीक्ष्यम् । किं प्रकृतौ धर्ममात्रं वरणम्, उत परिक्रयार्थमिति । यदि धर्ममात्रं, प्रकृतौ सत्रेषु कर्त्तव्यम् । अथ परिक्रयार्थं, न कर्त्तव्यमिति । किं प्राप्तम् । मन्त्रवन्नियमवच्चेति कृत्वा धर्ममात्रम् । तस्मात् सत्रेषु कर्त्तव्यमिति ॥ एवं प्राप्ते ब्रूमः । वरणमृत्विजां सत्रेषु न स्यात् । न कर्त्तव्यमिति । स्वार्थं हि तेषां कर्म । न च कश्चिदात्मानं वृणीते । प्रकृतौ चानमनाऽर्थं वरणं दृष्टप्रयोजनमिति न शक्यमदृष्टं कल्पयितुम् । तस्मात् सत्रेषु

वरणं न स्यादिति ॥ ३४ ॥ सत्रे ऋत्विग्वरणाभावाधिकरणम् ॥१०॥

**परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥**

परिक्रयश्च प्रकृतौ ज्योतिष्टोमे आम्नात । गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति । तद्दाक्षिण्यं सत्रे चोदकेन प्राप्तं किं कर्त्तव्यं निवृत्त वा इति संशय । किं प्राप्तम् । कर्त्तव्य परिक्रयश्चोदकानुग्रहाय । अपि च तत्र गवादयः प्रतिषिद्ध्यन्ते, न ह्यत्र गौर्दीयते, न वासो न हिरण्यमिति । तत् सति परिक्रयेऽवकल्पते । एव प्राप्ते ब्रूमः, परिक्रयश्च तादर्थ्यादिति । परिक्रयश्च न कर्त्तव्य । उक्तमधस्ताद् वरणं सत्रेषु न कर्त्तव्यमिति । परिक्रयश्चेति च-शब्देनान्वादेशः क्रियते, न कर्त्तव्य. परिक्रय. । कुतः । आत्मार्थत्वात् । न कश्चिद् आत्मानं परिक्रीणीते इति ॥ ३५ ॥

**प्रतिषेधश्च कर्मवत् ॥ ३६ ॥**

प्राप्तौ सत्यां प्रतिषेधोऽवकल्पते इति यदुक्तं, तत् परिहर्त्तव्यम् ॥ ३६ ॥ आ० ॥

**स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥**

प्रतिषेध उपपद्यत इत्यर्थ. । कस्य । प्रासर्पिकस्य दानस्येति । धर्ममात्रं हि तत् सत्रेषु चोदकप्राप्तं, तन्निवर्त्तते । तस्मादुपपन्नः प्रतिषेध इति ॥ ३७ ॥ पूर्व० ॥

**न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् ॥३८॥**

नायं प्रासर्पिकस्य प्रतिषेधः । दक्षिणा-शब्दात् । दक्षिणाशब्दो ह्यत्र भवति । अदक्षिणानि सत्राण्याहुः । न हि अत्र गौर्दीयते, न वासो न हिरण्यमिति । दक्षिणाशब्दश्च परिक्रयाऽर्थो भवति । तत्र हि श्रूयते । गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति । ऋत्विग्दानं दक्षिणा, न प्रासर्पिकम् । तस्यैवासौ प्रतिषेधो, न प्रासर्पिकस्य । तस्मान्नित्यप्राप्तस्यैवानुवादोऽसौ न सत्रेषु दक्षिणा इति ॥ ३८ ॥ सिद्धान्तः ॥ सत्रे परिक्रयाभावाधिकरणम् ॥ ११ ॥

**उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥**

अस्ति उदवसानीय । सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्निति । तत्रैषोऽर्थः सांशयिकः । दक्षिणादानं धर्ममात्रम्? उत परिक्रयार्थमिति । तथा इदमपरं द्वैतम् । किं सत्राऽङ्गमुदवसानीय, न ? इति । यदि सत्राङ्गं, धर्ममात्रं दानम् । अथ न सत्राङ्गं, परिक्रयार्थमिति । किं प्राप्तम् । सत्राङ्गमिति । कुतः । सत्रप्रकरणात् । सत्रं परिसमाप्य कर्त्तव्यमिति श्रूयते । सत्रप्रकरणात् सत्रं लक्षयित्वेति गम्यते । उदवसानीयश्च सत्रस्य विधीयते इति । सत्रस्य च फलार्थत्वान्नोदवसानीयार्थता गम्यते । न च सत्रोदवसानकाले उदवसानीयः । लक्षणा हि तथा स्यात् । अनङ्गत्वे च फलं कल्पयितव्यम् । तस्मादानन्तर्य्यादेकवाक्यतासम्बन्धाच्च सत्राऽङ्गमुदवसानीयः । सत्रं यथोक्तं परिसमाप्य न सन्तोष्टव्यम् । न तावत् कृत्वा कृतिता मन्तव्या । इदमपरं तस्याङ्गं कर्त्तव्यमुदवसानीय इत्येवमभिसम्बन्धः क्रियते । यथा अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवनेन यजेतेति । तस्मात् सत्राङ्गम् । एवञ्चेत् साङ्गस्य सत्रस्य स्वयंकर्तृकत्वाद् धर्ममात्रं तत्र दानम् । सत्रधर्मा उदवसानीय इति ॥ ३९ ॥ पूर्व० ॥

## न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च ॥ ४० ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतदेवं, धर्ममात्रमत्र दानमिति । किं तर्हि । परिक्रयार्थमिति । कुतः । नैतत् सत्राङ्गम् । विभक्तचोदितत्वात् । नैतद् बृहस्पतिसवेन सौत्रामण्या च तुल्यम् । तत्रैवं श्रूयते । यथोक्ताङ्गं कृत्वा नैव सन्तोष्टव्यमिदमपरं तस्य कर्त्तव्यमिति । इह पुनः सत्रमुत्सृज्य उदवसानीयः कर्त्तव्य इति । सत्रादुदवसाय उत्थायेत्यर्थ । तत्रान्योऽर्थः क्त्वाशब्दस्य । यथोदितं निर्वर्त्य न प्रहातव्यम् । उत्पूर्वस्य अवपूर्वस्य स्यतेः प्रहायेत्यथः । प्रहाणे इह क्त्वाशब्दस्तत्र पुनरनुष्ठानानन्तर्य्ये । तस्माद् विभक्तचोदितत्वान्न सत्राङ्गं, न च सत्रप्रकृतिकम् । तस्मादत्र दानं परिक्रयार्थमिति ॥ ४० ॥ सिद्धान्तः ॥ उदवसानीयस्य सत्रानङ्गतया तत्र दानस्य परिक्रयार्थताऽधिकरणम् ॥ १२ ॥

## तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् ॥ ४१ ॥

इदमेवोदाहरणं, सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन

सहस्रदक्षिणेन यजेरन्निति। तत्रैषोऽर्थ समधिगतः। न सत्राङ्गं पृष्ठशमनीय इति। अथेदानीमिदं सन्दिह्यते। किं संहत्य तैस्तत् कर्त्तव्यम्? उत एकैकेनेति। किं प्राप्तम्। संहत्य इति। कुतः। उपादेयत्वेन यागे चोद्यमानस्य बहुत्वस्य श्रवणात्। स चेदेकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्याद् द्वियज्ञवत्। यथा, एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति। यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते, एवमपि यजेयातामिति याग उपादेयत्वेन। यागे च एतत् कर्तृद्वित्व श्रूयते, यजेयातामिति। तद्वत् पृष्ठशमनीयेन यजेरन्निति। तस्मात् संहत्य पृष्ठशमनीयं प्रयुञ्जीरन्निति ॥ ४१ ॥ पूर्व० ॥

एवं स्थितं तावदपर्य्यवसितम्। अन्तराचिन्तान्तरस्य सूत्रं तावद्वर्णयिष्यामः—

## तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥

अस्मिन्नेवोदाहरणे एषोऽर्थः सांशयिकः। किं त एव सत्रिण ऋत्विजः? उतान्ये वा वरीतव्या इति। किं प्राप्तम्। त एव। कुतः। समानकर्तृकता हि गम्यते। उदवसाय यजेरन्निति। य एव उदवसातारस्त एव यष्टार इति भवति प्रत्ययः। यथैव वचनप्रामाण्याच्चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यानृत्विजो बाधित्वा वचनप्रामाण्यात् त एव भवितुमर्हन्तीति ॥ एवं प्राप्ते ब्रूमः। तत्रान्यानृत्विजो वृणीरन्निति। न हि पृष्ठशमनीये ये सत्रादुदवसातारस्ते कर्त्तारो विधीयन्ते। न तेषामुपादेयत्वेन चोदनेत्युक्तम्। न चाविहितमङ्गं भवति। न चानङ्गे हीने विगुणता काचिद् भवति। सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः। अपि चात्र यावति कर्त्रभिप्रायं क्रियाफलं, तावति त एव कर्त्तारः तदेतदुपग्रहविशेषादवगम्यते। न च ऋत्विज प्रति यागस्य कर्त्रभिप्रायं क्रियाफलम्। तस्मान्नार्त्विज्ये त एव कर्त्तार। प्रधानयागे तावत्कर्तृन् अवगच्छाम। ऋत्विज पुनरन्ये वरीतव्या इति ॥ ॥ ४२ ॥ उदवसानीये सत्रिभ्योऽन्येषाम् ऋत्विक्त्वाधिकरणम् ॥१३॥ अन्तराचिन्ता ॥

## एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात्॥४३॥

स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्त्तयति। न पृष्ठशमनीयं सह-

त्य प्रयुञ्जीरन् । किं तर्हि । एकैकशः । कुतः । अविप्रतिषेधात् । उद्वमानेन हि पुरुषा लक्ष्यन्ते । ये सत्रादुवस्यन्तीति । तत्र चैकोऽप्युद्वसाता भवति । ये चोद्वसानलक्षितास्तेषां याग इत्येकैकस्याऽपि यागो विहितो भवति । न च केनाचित् प्रतिषिद्ध्यते । तस्मादेकैकोऽपि यजेत । ननु बहूनां प्रयोग उच्यते । तेनैकैकस्य न भवति । नैष दोषः । एकैकस्यापि न वार्यते । तेन चोदकसामर्थ्यादेकैकश एव यजेतेति ॥ आह । बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्त्तुमिति । एवमपि न दोष. । नात्र बहुवचनं विधीयते । ये सत्रादुद्वसातारस्तेषामेव यागः । ते च बहवः । तेषां बहूनामत्र प्राप्तानामयमनुवादः । एकैकश्येनापि च ते उद्वसातार । तस्मात्तेषां तथैव यागो भविष्यति, यथैवोद्वसाने तेषामसंहतानां बहुवचनम्, एवं यागेऽपि असंहतानामेव भविष्यति ॥ अत्रोच्यते । न बहुवचनमनुवाद. । अप्राप्तत्वात् । न हि बहुवचनं यागे प्राप्तं, यदनूद्येत । नन्विदानीमेवोक्तमुद्वसातॄणां यागः । ते च बहव इति । उच्यते । बहुत्वं तेषामुद्वसाने, न यागे । ननु वाक्यसामर्थ्याद्यागेऽपि भविष्यति । नेत्याह । परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति । ततो वाक्यं भवति । अयञ्च याग. । प्रागेव बहुवचनेन सम्बन्धः । न तस्यामवस्थायां वाक्येनोद्वसातार प्राप्ता. । उपादत्ते तु तदा बहुत्वम् । ततो बहुवचनसंयुक्तः पदान्तरगतान् उद्वसातॄनपेक्षते । तस्माद् बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः । यथा द्वियज्ञे सत्रेषु चेति ॥ आह । नैतदेवम् । यत्र केनचित्प्रकारेणाऽनुवादः सम्भवति तत्रानुवादो वा स्याद्, विधिर्वेति । यद्यप्यपूर्वत्वादन्यत्र विधिर्ज्यायाननुवादात् । तथाप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति । तथा हि यागसम्बन्धो बहूनां न कृतो भवति । तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसम्बन्धे अदृष्टं कल्पनीयं स्यात् । तस्मादनुवाद इति ॥ आह । द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति सत्रेषु चेति । अत्रोच्यते । अस्त्यत्र विशेष. । उद्वसाय यजेरन्निति । राजपुरोहितौ यजेयाताम्, ऋद्धिकामा' सत्रमासीरन्निति । यत्र क्त्वान्त शब्दो भवति तत्र द्वौ प्रयोगौ गम्येते । समानाश्च कर्त्तारः श्रवणादेव । तत्रोत्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते । तदाश्रयः प्रयोगः, कर्त्तारश्च । तद्गता च सङ्ख्या । एवं सर्वमेतत् । धात्वर्थे विधीयमाने प्राप्तमेवानूद्यते । द्वियज्ञे सत्रेषु च

धात्वर्थो विधीयते, प्रयोगोऽपि, कर्त्तारः, तद्गता च सङ्ख्येति सर्वमेव तत्राप्राप्तम् । न हि राजपुरोहिताविर्त्येष शक्नोति प्रयोगं वदितुम् । तत्र च कर्तृत्वं तद्गताश्च सङ्ख्याम् । तथा ऋद्धिकामा इति । तस्मादेवञ्जातीयकेषु संख्या उपादेयत्वेन श्रूयते । अतो द्वियज्ञादिषु नानुवादस्तेषु बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः । इह तु न तथा । तस्मादेकैकः पृष्ठशमनीयेन यजेतेति ॥ ४३ ॥ सिद्धान्तः ॥ उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ॥ १४ ॥

## कामेष्टौ च दानशब्दात् ॥ ४४ ॥

अस्ति सारस्वते सत्रे कामेष्टिः, प्लाक्षं प्रस्रवणं प्राश्याग्नये कामायाष्टाकपालं पुरोडाशं निर्वपति तस्यामश्वां पुरुषीं च धेनुके दत्वा प्रति यमुनामवभृथमभ्यवयन्तीति । तत्र संशयः । किं परिक्रयार्थं दानम् ? उत धर्ममात्रमिति । पृष्ठशमनीये च सत्रस्यानङ्गभूते परिक्रयार्थं दानमित्युक्तम् । अथेदानीमङ्गभूतायां कामेष्टौ चिन्त्यते । तत्र किं तावत् प्राप्तम् । यथा पृष्ठशमनीये परिक्रयार्थम्, एवमिहापीति चशब्देनान्वादिश्यते । कुतः । दानशब्दात् । दानशब्दो भवति । तस्यामश्वां पुरुषीं च धेनुके दत्वा इति । दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थं इत्युक्तम् ॥ न चैतत्सत्रम् । सत्रस्याङ्गभूतमेतत् । प्रकरणाच्च सत्रस्य स्वयङ्कर्तृकता, नाङ्गानाम् । तच्चोदकप्राप्तैर्ऋत्विग्भिः सगुणं सत् सत्रस्योपकारकं भवति । अन्यैर्ऋत्विग्भिर्विना विगुणं सत्रस्य नोपकुर्य्यात् । तस्मादत्र दानं परिक्रयार्थमिति ॥४४॥ पूर्व० ॥

## वचनं वा सत्रत्वात् ॥ ४५ ॥

वाशब्दात् पक्षो व्यावर्त्त्यते । नात्र परिक्रयार्थं दानं . धर्ममात्रमिति । कुतः । सत्रत्वात् । सत्रे हि आनतिर्निवृत्ता । आह । नैतत् सत्रं, सत्राङ्गमित्युक्तम् । उच्यते । न सत्रम् । सत्राङ्गं तु सत्रमध्यपतितम् । सत्रस्य च साङ्गस्य स्वयं कर्तृकता । तस्यां क्रियमाणायां सिद्धा अस्या इष्टेः कर्त्तार । तत्र आनत्या न प्रयोजनम् । श्रूयमाणं तु दानं धर्ममात्रं भवितुमर्हतीति ॥ ४५ ॥ सिद्धान्तः ॥ कामेष्टौ दानस्यादृष्टाऽर्थताधिकरणम् ॥ १५ ॥

## द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

दर्शपूर्णमासयोरिदमाम्नायते, यदि पत्नीः संयाजयन् कपाल-

मभिजुहुयाद् वैश्वानरं द्वादशकपालं निर्वपेत् । तस्यैकहायनो गौ-र्दक्षिणा । तं स द्वेष्याय दद्यादिति। तत्र संशय । किं परिक्रयार्थमेक-हायनस्य दानम् ? उत धर्ममात्रमिति । किं प्राप्तम् । दक्षिणाशब्दात् परिक्रयार्थमिति । परिक्रयार्थे हि दक्षिणाशब्दो भवति । एवं प्राप्ते ब्रूमः । द्वेष्ये च धर्ममात्रं दानमिति चशब्देन अन्वादिश्यते । कुतः । अचोदनाद् द्वेष्यस्य ऋत्विजः । न हि द्वेष्य ऋत्विग् भवति। ऋत्वि-गाचार्य्यौ नातिचरितव्यौ इति । यदा परिक्रेतव्येनैव कर्त्रा प्रयोजनं नास्ति, तदा किं दक्षिणाशब्द करिष्यति । अपि च परिक्रयार्थे सति दक्षिणाशब्दः स्यात् । चोदकप्राप्तोऽन्वाहार्य्योऽपनीयेत, तत्र चोदको बाध्येत । तस्माद्धर्ममात्रमेकहायनस्य दानमनृत्विजे दातव्यमिति ॥ ॥ ४६ ॥ दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् ॥ १६ ॥

## अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रति-षेधादस्थ्नाम् ॥ ४७ ॥

इदमाम्नायते, यदि सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं तस्य स्थाने दीक्षयित्वा तेन सह यजे-रन् । ततः संवत्सरे अस्थीनि याजयेदिति । योऽयं संवत्सरे यज्ञः, स सन्दिह्यते किमस्थ्नामुत जीवताम् ? इति । किं तावत् प्राप्तम् । सा-मानाधिकरण्यादस्थ्नामिति । किं सामानाधिकरण्यम् । याजयते-रस्थीनि कर्मभूतानि ॥

नन्वस्थीन्यचेतनानि न शक्नुवन्ति स्वयं तन्त्रयितुं, कथं तानि क्रियायां कर्त्तॄणि भवेयु. ? इति । उच्यते । प्रयोज्यता तेषां श्रूयते । ततोऽन्ये प्रयोजयितार । ते एतानि क्रियां कारयिष्यन्तीति ॥ आह । न हि अकुर्वंति कारयतीति भवति । कर्त्तुर्हि प्रयोजको हेतु. । न चै-तानि कार्त्स्न्येन क्रियामुपसंहर्त्तुं शक्नुवन्तीति । उच्यते । वचन-प्रामाण्याद् यावद् यजमानं कारयितुं शक्यन्ते तावत् कारयिष्यन्ते, औदुम्बरीसम्मानं शुक्रान्वारम्भणमित्येवमादीनि ॥ आह । प्रधानमेव न शक्नुवन्ति, नाङ्गानि कुर्वन्ति याजमानानि भवन्तीति । अत्रो-च्यते । वचनसामर्थ्यात् तच्छवद्द्रव्यं ऋत्विजः प्रतिग्रहीष्यन्ति त-द्दक्षिणास्तत्परिक्रीता । तत् त्यक्ष्यन्ति । ईदृशो द्रव्यत्यागो वाचनिको भविष्यतीति । आह । एवं वर्ण्यमाने याजयितृणामेव कर्तृत्वमुपदिष्टं

भवति, नास्थ्नामिति । उच्यते । यष्टॄणामेवैतेन प्रकारेण कर्तृत्वमुपदिश्यते । न ह्यकर्त्तरि कारयतीति भवति । हेतुकर्तृत्वं चास्थ्नां यागे सति प्राप्तमेवानूद्यते । यथा, ग्रामकामं संयाजयेदिति ग्रामकामो यजेतेति विधीयते । हेतुत्वं च प्राप्तानुवादमात्रम् । तच्च दर्शयति, स्तोत्रे अस्थिकुम्भमुपदधातीति । अस्थ्नामेव यजमानत्वं दृश्यते । तस्माद् अस्थ्नां यज्ञो न जीवताम् ॥ इति प्राप्ते ब्रूमः । अस्थियज्ञ इतरेषां जीवतां स्यात् । तेषामविप्रतिषिद्धो यज्ञः । अस्थ्नां विप्रतिषिद्ध्यते । त्यागो नाम मनसा क्रियते, न चास्थ्नामस्ति मनः । यदुक्तम्, ऋत्विजः शवद्रव्यं दक्षिणां प्रतिगृह्य तत्परिक्रीतास्त्यागं कुर्वन्तीति । ईदृशो वाचानिकस्त्यागो भवतीति । नैतदेवम् । न हि यजेतेत्युक्ते अशक्नुवत्सु वचनप्रामाण्यादन्यो यज्यर्थो भवति । यागं कुर्वीतेति हि तद्वचनं, नान्यो यज्यर्थ इति । न च वचनप्रामाण्यादेतद्भवति, यच्छवद्रव्यं तद् गृह्यते । न हि तद् अस्थिभिर्दत्तं भवति । न चासति दाने परिक्रयः । न च गौणोऽर्थो विधिशब्दादवगम्यते । अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गौणः शब्दः सम्बद्ध्यते । यथा, गौरनुबन्ध्य इति गोजातिविशिष्टः पशुरनुबद्ध्यते, न वाहीकः । गौरयं वाहीक इति तु संवादे वाहीके गौणः शब्दः प्रवर्त्तते । तस्मान्न त्यागविधाने अन्यो यज्यर्थः स्यात् । न चास्थ्नां द्रव्यं स्वं सम्भवति, यद् ऋत्विजो गृहीत्वा वयमनेन परिक्रीता इति मन्येरन् । तस्मान्न कथञ्चन अस्थीनि यष्टॄणि भवन्ति । अतो न विवक्षितं सामानाधिकरण्यमिति ॥ आह । सम्बद्धवचनादनर्थकं तर्हीदं वाक्यम् । नेति ब्रूमः । न हि गम्यमाने अर्थे अनर्थकं भवति । ततः संवत्सरे याजयेदित्येतावतो वाक्यात् कश्चिदर्थोऽवगम्यते, स इह विवक्षितः । अस्थीनि याजयेदित्येष सम्बन्धो न विधीयते । आह । किमस्थीनीति प्रमादपाठः ? । न च प्रमादपाठ इति ब्रूमः । न हि स एवाप्रमादपाठो यो विधानार्थो मुख्यार्थश्च । अनुवदन्नप्यर्थं लक्षणयापि ब्रुवन् वाक्ये समवायं गच्छति । न च प्रमादपाठो भवति । तत्र, अस्थीनीत्येष शब्दो विदधत् स्वमर्थं मुख्यया वृत्त्या ब्रुवन् वाक्ये न समवैति । अनुवदंस्तु लक्षणया समवेष्यति । ततः संवत्सरे याजयेदिति जीवतः प्रकृतान् वक्ष्यति । तत्रास्थिशब्दो वर्त्तिष्यते लक्षणया । ततः संवत्सरेऽस्थिमतो याजयेदिति । के तेऽस्थिमन्तः ? । ये तेन सह यष्टुं प्रक्रान्ता । तस्माद्

यस्य तानि अस्थीनि तैरस्थिभिः स शक्यते लक्षयितुम्। तस्माज्जीवतां यज्ञ इति ॥ ४७ ॥ सि० ॥

**यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥**

अथ यदुक्तमस्थ्नां याजमानं दर्शयति, स्तोत्रेऽस्थिकुम्भमुपदधातीति। नैतद् याजमानम् । न हि अस्थीनि यजन्ते इत्युक्तम् । अतो वचनप्रामाण्यादेतत् कर्म याजमानसरूपं भवति। यावति वचनं तावत्येव तद् भवितुमर्हति, न तत् सर्वं याजमानं शक्नोति लक्षयितुम्। तस्माज्जीवतामेव यज्ञ इति। ४८ ॥ आ० नि० ॥ जीवतामस्थियज्ञाधिकरणम् ॥ १७ ॥

**यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥**

इह जपसंस्कारमिष्टिश्च चिन्त्यते। तत्र सूत्रेतरार्द्धेन जपसंस्कारं चिन्त्यते, शेषेणापीष्टि.। जपाः यत्र जपतीति चोदनाः, संस्काराः केशश्मश्रु वपतीत्येवमादय.। किमस्थ्नां जपसंस्कारं कर्त्तव्यं, न? इति संशयः। ननु नैवास्थ्नां यज्ञो जीवतामसावित्युक्तम्। अत्रोच्यते। कृत्वा चिन्तैषा। अस्थ्नामिति कृत्वा चिन्त्यते । अनेन प्रकारेण पूर्वाधिकरणस्य प्रयोजनं विचार्यते। यदि अस्थ्नां यज्ञ. स्यात्, किं जपसंस्कारं क्रियते, न? इति।

किं तावत् प्राप्तम्। विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यादित्यनेन न्यायेन कर्त्तव्यमिति ॥ एव प्राप्ते ब्रूमः । यदि तु वचनात्तेषामस्थ्नां यज्ञ. स्यात्। तेषां जपसंस्कारं लुप्तार्थं निवर्त्तेत। न तैः शक्यं जपितुं, नापि केशश्मश्रु वप्तुम । अशक्यञ्च चोदको न प्रापयति। अत्र सूत्रोत्तरार्द्धे, सेष्टि तदर्थत्वादिति । दीक्षणीया इष्टि कर्त्तव्या, न? इति विचारः । किं प्राप्तम् । चोदकानुग्रहाय कर्त्तव्या ॥ एव प्राप्ते ब्रूम.। सहेष्ट्या जपसंस्कारं न कर्त्तव्यम्, इष्टिर्लुप्येतेति। कुतः। तदर्था हि सा। यजमानो दीक्षा ग्रहीष्यतीति। दीक्षां च व्रतानि। नियमाश्च मानसं कर्म्म। न चैषां मनोऽस्ति दीक्षाग्रहणार्था चेष्टि. संयोगाज्ज्ञायते । आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति । तस्मादिष्टिरपि निवर्त्तेतेति। क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ४९ ॥ अस्थियज्ञे अस्थ्नां जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

अस्थियज्ञे एवेदं सन्दिह्यते । यजमानेन सम्मितौदुम्बरी भवति । तथा शुक्रं यजमानोऽन्वारभते इति । अस्थ्नां यागे सति किमेवञ्जातीयकं कर्त्तव्यं, न ? इति । किं प्राप्तम् । अचेतनानामस्थ्नां सर्वक्रियासु स्वातन्त्र्यं नास्ति । तस्मादौदुम्बरीसम्माने शुक्रान्वारम्भणे च नास्थीनि कर्त्तॄणि भवेयुरिति ॥ एवं प्राप्ते ब्रूमः । क्रत्वर्थन्तु क्रियेत । गुणभूतत्वात् यत् क्रत्वर्थमेवञ्जातीयकं तत् क्रियेत । गुणभूतत्वात् । गुणभूतस्तत्र यजमानः । यजमानपरिमाणसम्मितया औदुम्बर्या प्रयोजनम् । यजमानान्वारब्धेन च शुक्रेण अचेतनेनैव च परिमीयते । शुक्रश्चान्वारभ्यते । तस्मादेवञ्जातीयकं कर्त्तव्यमिति ॥ ४९ ॥ ॥ औदुम्बरीमानशुक्रस्पर्शानुष्ठानाधिकरणम् ॥ १९ ॥ कृत्वाचिन्ता ॥

### काम्यानि तु न विद्यन्ते कामाज्ञानाद् यथेतरस्यानुच्यमानानि ॥ ५० ॥

अस्ति ज्योतिष्टोमः । तत्र श्रूयते । यदि कामयते वर्षेत् पर्जन्य इति, नीचै सदो मिनुयादित्येवमादि । तदिह चोदकेन प्राप्तं काम्यं कर्त्तव्यं, न ? इति सन्दिह्यते । चोदकानुग्रहाय कर्त्तव्यमिति ॥ नन्वऽस्थीनि न किञ्चित् कामयन्ते । यजमानकामनिमित्तकाश्चैवञ्जातीयाः पदार्थाः । अत्रोच्यते । नात्र यजमानेन कामयमानेन प्रयोजनम् । एषोऽत्रार्थो, नीचै. सदसि मीयमाने वृष्टिर्भवति । तद्यदि वृष्ट्या प्रयोजनं, नीचैः सदो मातव्यं, वृष्टिः प्रयोजनवती भविष्यतीति ॥ एवं प्राप्ते ब्रूमः । काम्यान्येवञ्जातीयकानि न कर्त्तव्यानि । कुतः । यदि यजमानो वृष्टिं कामयेत नीचै सदसि मीयमाने वृष्टिर्भवति । यजमानफलदं हि उपग्रहविशेषात् साङ्गं कर्म, नान्येषां कामयितॄणां दातुमर्हतीति । न च वृष्टिर्यजमानस्य फलमिति विज्ञायते । यथेतरस्य जीवतो यजमानस्य विद्यमानेऽपि कामोऽनुच्यमानो न भवति । किमङ्ग पुनरस्थ्नां, येषां काम एव नास्ति । तस्मात् काम्यानि न कर्त्तव्यानीति ॥ ५० ॥ अस्थियज्ञे अस्थ्नां काम्यकर्माद्यननुष्ठानाधिकरणम् ॥ २० ॥ कृत्वा चिन्ता ॥

### ईहार्थाश्चाभावात् सूक्तवाकवत् ॥ ५१ ॥

सन्ति अस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीयादीनि, तेषु चोदकप्राप्तः सूक्तवाकः । तत्रेमानि, अयं यजमान

आयुराशास्ते सुप्रजास्त्वमाशास्ते विश्वं प्रियमाशास्ते, यदनेन हविषाऽऽशास्ते तदश्यात् तदृध्यात् तदस्मै देवा रासन्तामिति । किमिमानि कर्त्तव्यानि, न कर्त्तव्यानि ? इत्येषोऽर्थः सन्दिह्यते । किं तावत् प्राप्तम् । ईहार्था ये कामाः सूक्तवाके श्रूयन्ते, तेऽपि न स्युः । किं कारणम् । अभावात् कामयितुः । न हि अस्थीनि कामयन्ते इत्येतदुक्तम् । तस्मान्न कर्त्तव्यानि । सूक्तवाके इति सूत्रयितव्ये, सूक्तवाकवदिति सूत्रितम् ॥

कथमेवं वर्ण्यते इति । उच्यते । ईहार्थाः सूक्तवाकार्हाः । अर्हे वतिर्द्रष्टव्यः । यथा छन्दो व्यतिक्रमाद्व्यूढे भक्षपदमानपरिधिकपालम् । मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यादिति । तस्मान्न सूत्रोपालम्भः ॥५१॥

स्युर्वा अर्थवादत्वात् ॥ ५२ ॥

न चैतदस्ति, यदुक्तं भवता अस्थ्नामीहार्थाः कामा न कर्त्तव्या इति । स्युर्वा अर्थवादत्वात् । स्युर्वा एते कामाः । कस्मात् । अर्थवादत्वात् । अर्थवादा एते आयुराशास्ते सुप्रजास्त्वमाशास्ते इति । नैते विधयः, अर्थवादा एते । अर्थवादत्वाच्च तेषां क्रियां चोदकः प्रापयति । एवं चोदकानुग्रहो भवति । तस्मात् पश्यामः । ईहार्थाः कामाः कर्त्तव्या इति ॥ ५२ ॥ पूर्व० ॥

नेच्छाभिधानात् तदभावादितरस्मिन् ॥ ५३ ॥

न चैतदस्ति, यदुक्तं भवता ईहार्थाः कामाः कर्त्तव्या इति । कस्मात् । इच्छाभिधानात् । इच्छाभिधाना एते कामाः । आयुराशास्ते दिव्यं धामाशास्ते सुप्रजास्त्वमाशास्ते इतीच्छायामुत्पन्नायां प्रयुज्यन्ते । य एतान् कामान् इच्छेत् । स चेह यजमानो नास्ति । अचेतनावन्ति एतानि अस्थीनि । अस्थ्नामिच्छा न विद्यते । तदभावाद् अस्थ्नामिच्छाया अभावाद्, इतरस्मिन् जीवति एते कामा भविष्यन्ति, नास्थिषु । तस्मात् पश्यामोऽस्थ्नामीहार्थाः कामा न कर्त्तव्या इति ॥ ननु एतेऽर्थवादा इत्युक्ताः । अत्रोच्यते । नैते अर्थवादाः । विधय एते । एवञ्चेत् परिहृतमेतद् भवति । तस्माद् यदुक्तं भवता, अस्थ्नामीहार्थाः कामा कर्त्तव्या इति । नैतदेवम् । न कर्त्तव्याः । नेच्छाभिधानात् तदभावादितरस्मिन् ॥ ५३ ॥ सिद्धान्तः ॥ अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम् ॥ २१ ॥

## स्युर्वा होतृकामाः ॥ ५४ ॥

द्वादशाहप्रभृतीनि सत्राणि उदाहरणम् । तानि प्रकृत्य श्रूयते । ततः संवत्सरे अस्थीनि याजयेदिति । चोदकप्राप्तानि दीक्षाप्रभृतीनि कर्माणि श्रूयन्ते । सन्ति च प्रकृतौ होतृकामाः । यं कामयेत अपशुमान् स्यादिति, परार्ची तस्यैडामुपह्वयेत, अपशुमानेव भवति यं कामयते प्रमायुकः स्यादिति, तस्योच्चैस्तरां वषट् कुर्य्यात् । यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्यया वषट्कुर्य्यात् । यं कामयेत वर्षीयान् स्यादिति उच्चैस्तरां तस्य याज्यया वषट्कुर्यादिति । एवं तत्र संशयः क्रियते । किमस्थ्नां होतृकामाः कर्त्तव्याः ? अथ वा न कर्त्तव्या इति । ननु जीवतां यज्ञ इत्युक्तम् ॥ अत्रोच्यते । अस्थ्नां यज्ञ इत्येवं कृत्वा चिन्ता प्रवर्त्तते । तत्र सूत्रेणैवोपक्रमः क्रियते । स्युर्होतृकामाः । एतेऽस्थ्नां कर्त्तव्याः स्यु । कस्मात् । चोदकः प्रापयति । एवं चोदकानुग्रहो भविष्यति । तस्मात् पश्यामो होतृकामा कर्त्तव्या इति ॥ ५४ ॥ पूर्व० ॥

## न तदाशीष्ट्वात् ॥५५ ॥

न चैतदस्ति, यदुक्तं भवता होतृकामाः कर्त्तव्या इति । न कर्त्तव्याः । कस्मात् । तदाशीष्ट्वात् । तदाशीरेषा भवति । यजमानाशीरेषा । यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते सा सर्वा यजमानस्येति यजमानविषयतामाशिषो दर्शयति । स चेह यजमानो नास्ति । अचेतनानि अस्थीनि । अस्थ्नां कामयितुं सामर्थ्यं नास्ति । अर्थी समर्थश्चाधिक्रियते इत्युक्तम् । कर्त्तुर्वा श्रुतिसंयोगाद् विधिः कार्त्स्न्येन गम्येतेति । तस्मात् पश्यामोऽस्थ्नां होतृकामा न कर्त्तव्या इति । क्षीणा कृत्वा चिन्ता । प्रयोजनं नोच्यते । न तदाशीष्ट्वात् ॥५५॥ सिद्धान्त ॥ अस्थियज्ञे होतृकामाभावाधिकरणम् ॥ २२ ॥

## सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५६ ॥

अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः । मरणकामो ह्येतेन यजेत, यः कामयेतानामय स्वर्गं लोकमियामिति । तत्र संशयः । किं दिष्टगते यजमाने तदन्तं कर्म उत्स्रष्टव्यम् ? उत परिसमापयितव्यमिति । किं तावत् प्राप्तम् । सर्वस्वारे दिष्टगतौ यजमानस्य सत्यां

तदन्तं कर्म उत्स्रष्टव्यम् । कर्मणो जीवसंयोगात् । जीवता हि शक्यं, नाजीवता । तस्मादिदमर्थादापद्यते, सर्वस्वारेण दिष्टगत्यन्तं यजेतेति ॥ ५६ ॥ पूर्व० ॥

**स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५७ ॥**

स्याद्वा तस्य परिसमाप्ति । उभयं हि प्रत्यक्षशिष्टम् । क्रतु', परिसमाप्तिश्च । मरणकामो हि एतेन यजेतेत्यारभ्य परिसमापयितव्यमित्याख्यातार्थः । तेन समाप्तिराख्यातेनैवोक्ता भवति । अपि चेदमाम्नायते । आर्भवे प्रस्तूयमाने औदुम्बरीं परितोऽदशेन वाससा परिवेष्ट्य ब्राह्मणाः परिसमापयत मे यज्ञमिति सम्प्रेष्याग्निं विशतीति । यदि प्रैषमात्रं स्यात्, अदृष्टार्थं भवेत् । तस्मात् सम्प्रेषणद्वारलक्षणया परिसमाप्तिरेव विधीयते । यथा, यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयादिति । अथ यदुक्तं, जीवन् कर्त्ता भवति, न मृत इति । नेत्युच्यते, जीवता वचनं प्रोक्तम् । आरब्धं परिसमापयतेति । अतस्तत्कृतैवासौ परिसमाप्ति ॥ अत्राह । यदासौ प्रयुक्तवांस्तदा तावत् परिसमाप्तिस्तेन न कृता । यदा परिसमाप्तिस्तदासौ नास्ति । कः परिसमाप्ते कर्त्ता ? इति । अत्रोच्यते । मुक्तसंशयेनैतत् तुल्यम् । यद्भवान् मुक्तसंशयं जीवन्तं कर्त्तारं मन्यते । तेनैतत् तुल्यम् । योऽपि परिसमापयतेति प्रेष्य परिसमाप्तिकाले जीवति, तस्यापि जीवनं परिसमापनकालेऽनुपकारकं, पूर्वप्रैषादेवास्य कर्तृत्वमुपपद्यते इति । स च पूर्वप्रैषो जीवतोऽजीवतश्च तुल्यः । तस्माज्जीवान्निव अयमपि कर्त्तेति । अथोच्येत । जीवतः सत्त्वात् कर्तृत्वमुपपद्यते इति । एतदपि तुल्यमेव । जीवतोऽपि पुरुषः कर्त्ता, न शरीरम् । स च पतितेऽपि शरीरे पुरुषोऽस्ति । तस्मात् स एव परिसमाप्तौ कर्त्तेति । अथोच्येत । याजमानासम्भवादशक्यं हि दिष्टगतौ उत्तरं तन्त्रं कर्त्तुम् । अतस्तच्चोदको न प्रापयतीति । नैतदेवम् । याजमानवर्जं प्रापयिष्यति सः । तस्माददोषः । अथ वा, प्रत्यक्षमेव परिसमाप्तेर्वचनं, ब्राह्मणाः संस्थापयत मे यज्ञमिति । तत्सामर्थ्यादेव याजमानं भविष्यति ॥५७॥ सिद्धान्त ॥ यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनाधिकरणम् ॥ २३ ॥

**गते कर्मास्थियज्ञवत् ॥ ५८ ॥**

अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः। मरणकामो हि एतेन यजेत, यः कामयेत अनामय स्वर्गं लोकमियामिति। तत्र दिष्टगतौ यजमानस्य सत्यां किं कर्त्तव्यम्, ? इति प्रश्नः। भवति चादर्शयित्वापि द्वौ पक्षौ, प्रश्नेनोपक्रम.। पक्षद्वयेऽपि प्रतिभाति भवति संशयः। सर्वाप्रसिद्धावपि भवति। यथा को नामायं पर्वतः ? का नामेयं नदी ? किमिदं फलम् ? इति। तदभिधीयते। गते कर्म, अस्थियज्ञवत्। दिष्टां गतिं गते यजमाने अस्थियज्ञवत् कर्म भविष्यति। यथा अस्थियज्ञे क्रत्वर्थं क्रियते, नान्यद् अस्थिभिः। एवं दिष्टामपि गतिं गते क्रत्वर्थं शवेन कारयितव्यं, नान्यत्। यथा, शुक्रं यजमानोऽन्वारभते, यजमानेन सम्मिता औदुम्बरी भवतीति ॥ ५८॥ यजमानस्य दिष्टगतौ सर्वस्वारस्य शुक्रस्पर्शादियोग्याङ्गाद्यनुष्ठानाधिकरणम् ॥ २४ ॥

**जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ५९ ॥**

सर्वस्वारे एव जीवति यजमाने भवत्येव संशय.। आशास्ते यजमान इति किमायुराशीर्वक्तव्या ? उत नेति। किं प्राप्तम्। जीवति अवचनमायुराशिषः। कुत। तदर्थत्वात्। यत्रायुराशास्ते यजमानस्तत्र प्रस्तरं प्रयच्छत। एवङ्कामो यजमान इत्यावेदयितव्यं भवति। तद् यजमान कथं प्राप्नुयादिति। स चायमत्र यजमानो विपरीतकामो, मरणकामः। तस्मादायुराशीस्तत्र न वक्तव्या ॥ ५९ ॥ पूर्व० ॥

**वचनं वा भागित्वात् प्राग् यथोक्तात् ॥ ६० ॥**

उच्यते। वक्तव्या आयुराशी.। भागी हि आयुराशीर्वादः। आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति। प्रागार्भवकालादायुराशास्ते यजमानः। आर्भवकालं यावज्जीव्यासमिति। चोदकश्चैवमनुग्रहीष्यते। तस्मादत्रापि आयुराशीर्वक्तव्येति ॥ ६० ॥ सिद्धान्तः ॥ सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम् ॥ २५ ॥

**क्रिया स्याद्धर्ममात्राणाम् ॥ ६१ ॥**

अस्ति द्वादशाहः। द्वादशाहमृद्धिकामा उपेयुरिति। अस्ति तत्र चोदकप्राप्तं धर्ममात्रं किञ्चित्। यथा ऋतुयाज्या, वरणम्, आत्रेयहिरण्यदानञ्च। तत्र संशय.। किं धर्ममात्रं कार्यं, न ? इति। किं प्राप्तम्। स्वयङ्कर्तृकत्वात् सत्रस्य, वरणं दानञ्च निवर्त्तेते इत्यु-

क्रम् । न चान्यद्वचनमस्ति, कर्त्तव्यमिति । यावानेव श्रुतस्योत्सर्गे दोषस्तावान् अश्रुतकल्पनायाम् । तस्मान्न कर्त्तव्यमिति ॥ एवं प्राप्ते ब्रूम । क्रिया स्याद्धर्ममात्राणाम् । यद्धि वरणं दानं वा, न भवत्यानन्त्यर्थं, तत् स्वयङ्कर्तृकेऽपि न विरोधमुपैति । तस्माच्चोदकानुग्रहाय क्रिया स्यादिति॥६१॥द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ॥२६॥

## गुणलोपे च मुख्यस्य ॥ ६२ ॥

सन्ति अग्न्याधाने पवमानेष्टयः । योऽग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत् । अग्नये पावकायाग्नये शुचये इति । तत्र चोदकेन प्राप्तमग्निहोत्रहवण्या हवींषि निर्वपेदिति । तत्र तावदग्निहोत्रस्य काल । तस्मादग्निहोत्रहवणी नास्ति पवमानेष्टिषु । तदऽभावे किं निर्वापोऽपि न कर्त्तव्य ? उत कर्त्तव्य इति । किं प्राप्तम् । यथाश्रुतोऽसौ न शक्यते कर्त्तुम् । न चायथाश्रुतेन कृतेन किञ्चिदस्ति प्रयोजनम् । तस्माद्विगुणत्वान्न कर्त्तव्य इति ॥

एवं प्राप्ते ब्रूम. । गुणलोपे च मुख्यस्य क्रिया स्यादिति । गुणोऽग्निहोत्रहवणी । प्रधानं निर्वाप. । यदि निर्वापो न सम्भवेत्, ततस्तदसम्भवादग्निहोत्रहवण्यापि न सम्भवतीति निवर्त्तेत । न तु गुणलोपे मुख्यं न सम्भवतीति । तस्मान्निर्वापः कर्त्तव्यः । अग्निहोत्रहवणीसाधनता च तस्य न सम्भवतीति निवर्त्तेत ॥ ६२ ॥ पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥ २७ ॥

## मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् ॥ ६३ ॥

अस्ति वाजपेयः । शरदि वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र श्रूयते । नैवारः सप्तदशशरावः क्षीरे चरुर्भवतीति । अस्ति तु प्रकृतौ सङ्ख्या मुष्टयश्च । चतुरो मुष्टीन्निर्वपतीति । उभयं चोदकेन प्राप्तम् । तत्र संशयः । किं सङ्ख्यानुग्रहो मुष्टिलोप', उत मुष्ट्यनुग्रहः सङ्ख्यालोप ?अथवा किं संख्यालोप ? अथवा किं सङ्ख्याया मुष्टीनाञ्च लोप ?। अथवा अन्यतरलोप ? इति । किं प्राप्तम् । अन्यतरलोप इति यदि वा मुष्टिषु, यदि वा सङ्ख्यायाम् । कुत.। नियमकारिणः शब्दस्याऽभावादनियम इति॥एव प्राप्ते ब्रूमः । मुष्टिलोपः स्यात्, सङ्ख्यानुग्रहश्चेति । कुतः । मुख्यत्वात् सङ्ख्याया । पूर्वं हि सङ्ख्या निपतति। सा पूर्वमेवावगम्यते, न तदवगमकाले सङ्ख्याविज्ञानस्य परिपन्थि

किञ्चिद्विज्ञानमस्ति । तस्मिन्निष्प्रतिद्वन्द्वे सङ्ख्याविज्ञाने प्राप्ते मुष्टिविज्ञानमापतति । तत् सङ्ख्याविज्ञानपरिपन्थितां नाचरितुमर्हति । तस्माज्जघन्यत्वान्मुष्टीनां लोपः । मुख्यार्थत्वात् सङ्ख्यानुग्रहः । तदुक्तं, मुख्यं वा पूर्वचोदनाल्लोकवद् इति ॥ एवं प्राप्ते ब्रूमः । मुष्टिलोपेन सङ्ख्या लोपमर्हतीति । कुत. । तद्गुणत्वात् । मुष्टिगुणो हि सङ्ख्या श्रूयते । चतुरो मुष्टीरिति । चतु सङ्ख्याविशिष्टा मुष्टयः कथं भवेयुरिति सङ्ख्या उच्चार्य्यते, न स्वार्थे । तस्मात् सङ्ख्या पूर्वनिर्दिष्टा अनिर्दिष्टेव । सा हि परविशेषणार्थमेवोच्चार्य्यते । तेन नैव तस्या अनुग्रहः कार्यः । मुष्टिलोपे सति तदधिकरणा सङ्ख्या अधिकरणाऽभावान्निवर्त्तते । अन्याधिकरणायां क्रियमाणायां न प्रकृतिवत् कृता स्यात् । सङ्ख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणानिवृत्त्या न निवर्त्स्यन्ति । तस्मान्मुष्टिगुणत्वात् सङ्ख्या निवर्त्तेत, न मुष्टय. । तदुक्तम् । गुणविरोधे च तादर्थ्यादिति ॥ ६३ ॥ पूर्व० ॥

## न निर्वापशेषत्वात् ॥ ६४ ॥

नैतदेवम् । न सङ्ख्या मुष्टिषु श्रूयते । यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्त्तेत । क्व तर्हि श्रूयते । निर्वापे । कथम् । नैवमभिसम्बन्धः क्रियते, चतुरो मुष्टीरिति । कथं तर्हि, चतुरो निर्वपतीति । मुष्टिगुण. सङ्ख्यागुणश्च निर्वापो निर्दिश्यते । क्रियासम्बन्धे हि द्वितीया विभक्तिर्भवति । कथम् । कारकविभक्तिर्हि सा । कारकं क्रियाया एव भवति, न द्रव्यस्य । अतश्चतुःसङ्ख्या श्रुत्या अवगता निर्वापस्य, वाक्येन मुष्टीनाम् । वाक्याच्च श्रुतिर्बलीयसी । तस्मान्मुख्यानुग्रहान्मुष्टिलोप एवेति ॥ ६४ ॥ सि० ॥

## संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः ॥ ६५ ॥

तुशब्द एतं पक्षं व्यावर्त्तयति । न सङ्ख्यानुग्रहो मुष्टिलोप इति । किं तर्हि । सङ्ख्यया सङ्ख्या निवर्त्तते, शरावैश्च मुष्टयः । कथम् । सामान्यात् । निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः । तासां परिच्छेदिका चतु सङ्ख्या, इह सप्तदशसङ्ख्याक. शरावद्रव्यकश्चरुर्भवतीति श्रूयते । तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्त्यते । तत्परिच्छेदनार्था चतुःसङ्ख्या परिच्छेदार्थया सप्तदशसङ्ख्यया निवर्त्त्यते ।

तद्यथा इदं दधि घृतं शाकमिमे शालय, देवदत्तो भोजयितव्य:, देवदत्तवद् यज्ञदत्तस्तैलेनेति भोजनं यद् घृतेन शक्यते कर्त्तुं तत् तैलेन क्रियते। तस्माद् यद्यपि न श्रूयते तैलेन स्नेहयितव्यमिति, तथापि समानकार्यत्वात् तैलं घृतस्य विनिवर्त्तकं भवति। एवं सङ्ख्यापरिच्छेदं कुर्वती परिच्छेदिकाया एव सङ्ख्याया निवर्त्तिका भवितुमर्हति। परं च शरावद्रव्यं मुष्टेर्निवर्त्तकं संयोगात्। तस्मात् प्राकृती सङ्ख्या प्राकृतं च द्रव्यं निवर्त्तेते ॥ ६५ ॥ पूर्व० ॥

**न चोदनाभिसम्बन्धात् प्राकृतौ संस्कारयोगात् ॥६६॥**

नैतदेवम् । चोदनेति यागं ब्रूम । यागसम्बद्धा हि सप्तदशसङ्ख्या शरावद्रव्यञ्च । प्रकृतौ निर्वापसंस्कारसम्बद्धा चतु:सङ्ख्या मुष्टिद्रव्यञ्च। न चान्यत्र क्रियमाणं समानकार्यमप्यन्यत्र निवर्त्तकं भवति। यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यमभिनिर्वर्त्त्यते, तेन च यागे क्रियमाणे निर्वापकार्यं निवर्त्त्यते। तस्मान्निर्वापप्राप्तं किञ्चिदपि अनेन न निवर्त्त्येत इति। विरोधात्तु चतुर्भिर्मुष्टिभिर्निरूप्यमाणं द्रव्यं न सप्तदशशरावं भवति । तस्माद्विरोधाद् अन्यतरं निवर्त्त्यते द्रव्यं सङ्ख्या वा । तत्र चतु:सङ्ख्यानुग्रहान्मुष्टिलोपो न्याय्यतर इति ॥ ६६ ॥ सिद्धान्त ॥ वाजपेये मुष्टिलोपाधिकरणम् ॥ २८ ॥

**औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥६७॥**

क्वचिच्छ्रूयते, द्यावापृथिव्यां धेनुमालभेत मारुतं वत्समैन्द्रम् ऋषभमिति । तदत्र संशय: । किमजाधेनुवत्सर्षभा ? उत गाव इति। किं प्राप्तम्। चोदकानुग्रहाय अजा इति। गुणनिमित्तास्ते शब्दा:। स गुणश्चोदकेन प्राप्ते द्रव्ये आवेशयितव्य.। ननु गवि गुणमाहुस्ते शब्दा:। सत्यं गवि आहु:। न तु गौरत्र प्रत्यक्षेण वचनेन, चोदकेन वा। स एष गुणवचनो यद्यपि श्रुत्या गोऽधिष्ठानं गुणं वदति, वाक्येन आलम्भद्रव्यमास्कन्दति।तथापि गोद्रव्यस्याभावाद् आलभतिवाक्यमेव गृह्यते, न श्रुति: ॥ अपि च धानवयोवचना एते शब्दा: । गुणाश्चामूर्त्तत्वाद् न क्रियया सम्बद्ध्यन्ते । द्रव्येणैषां सम्बन्धो भवति। चोदकप्राप्तञ्च द्रव्यम् । तेनैषां सामानाधिकरण्यम् । यथा अवी द्वे धेनू ददाति, तस्य पुरुषी धेनुर्दक्षिणा। तथा अजर्षभस्य अजिनमवस्तृणातीति। धानवयोवचन: शब्दस्तदेकवाक्यगतेनैव द्रव्येण

सम्बद्ध्यते । एवमिहापि चोदकप्राप्तेन द्रव्येण सम्भन्त्स्यत इति । तस्मादजा धेनुवत्सऋषभा इति ॥

एवं प्राप्ते ब्रूम । औत्पत्तिके एतस्मिन्नुत्पत्त्यैव जातिविशिष्टे गुणशब्दे द्रव्यतो विकार स्यात् । द्रव्यमपि विकुर्य्याद्, न गुणमात्रम् । यदेतज्जातिविशिष्टं धानं वयश्च, न तद् अजपशुषु शक्यं कर्त्तुम् । गोपशुष्वेव तद् भवति । नन्वत्र यदपि स्याच्छक्यमावेशयितुं, तद् आवेशयिष्यते । यन्न शक्यं, तत् प्रमादिष्यते । यथा अजा धेनुवत्सर्षभा इति । उच्यते । विस्पष्टस्तत्र अजशब्देन धेन्वादीनामेकवाक्यभाव । इह चोदकेन अजद्रव्यम् । चोदकश्च विरोधे सति नाजद्रव्यं प्रापयति । न च धेन्वादीनां द्रव्येण सम्बन्धः । कारकविभक्तिरेषा आलम्भेन सम्बन्धं करोति । गवि सा च श्रुति. । द्रव्यसम्बन्धो वाक्येन स्यात् । तच्च दुर्बलं श्रुतेः । तस्मिंश्च जातिविशिष्टे गुणे आलम्भसंयुक्ते सति न शक्यमजाद्रव्येण भवितुम । न च चोदकापेक्षया प्रत्यक्षा जातिरुत्स्रष्टुं शक्यते । तस्माद् गावो धेन्वादयो भविष्यन्तीति ॥ ६७ ॥ धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गोवाचिताधिकरणम् ॥ २९ ॥

## नैमित्तिके तु कार्यत्वात् प्रकृतेः स्यात्तदापत्तेः ॥ ६८ ॥

इदमामनन्ति, वायव्यं श्वेतमालभेत भूतिकाम इति । अत्र संशयः । किमिहापि नाज पशुः कर्त्तव्य ? उत अजः पशुरिति । उच्यते । औत्पत्तिकोऽयं श्वेतगुणसम्बन्धे श्वेतशब्दः । अतो यः कश्चिच्छ्वेतगुणसम्बद्धः, स आलभ्यः । न हि श्वेतशब्दः प्रत्यक्ष. सन् कुतश्चिच्छ्वेतद्रव्याच्चोदकेन निवर्त्तयितव्य. । तस्मादजो गौरन्यो वा श्वेत आलब्धव्य इति ॥ एवं प्राप्ते ब्रूम । नैमित्तिके एतस्मिञ्छ्वेतगुणनिमित्तके द्रव्ये श्वेतशब्दे सति गुणमात्रं विक्रियते । न ह्यत्र जातिविशिष्टं द्रव्यं प्रतीयते । यदेवालम्भसाधनभूतं तदेव परिच्छेत्तव्यम्, इत्येतद्वाक्यादवगम्यते । यच्चास्य चोदकप्राप्तं द्रव्यं साधनमविरुद्ध्यमानं श्रुत्वा प्राप्नोति, तदय श्वेतशब्दः परिच्छेत्स्यति । नन्वजादन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति । न ब्रूमो- न शक्नोति । न तेन परिच्छिन्नेन प्रयोजनमस्ति । तस्मात् प्रत्यक्षोऽपि श्वेतशब्दश्छागमेव परिच्छिन्द्यान्नान्यं पशुमिति ॥ ६८ ॥ वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम् ॥ ३० ॥

## विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात् ॥ ६९ ॥

साद्यस्के श्रूयते, खलेवाली यूपो भवतीति । तत्र सन्देहः । किं खादिरश्चोदकेन प्राप्यते, स खलेवाली कर्त्तव्यः ? अथ न प्राप्यते, खादिरी अखादिरी वा खलेवाली स्याद् ? इति । तथा चित्रायां श्रूयते । दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यं भवतीति । तत्रापि सन्देहः । किं व्रीहयश्चोदकेन प्राप्यन्ते, व्रैहास्तण्डुलाः कर्त्तव्याः ? उत न प्राप्यन्ते, व्रैहा अव्रैहा वा तण्डुला उपादातव्याः ? इति ॥ किं तावत् प्राप्तम् । खादिरादिः खलेवाली कर्त्तव्या, व्रैहास्तण्डुलाः कर्त्तव्याः । चोदकेन खादिरादयो व्रीहयश्च प्राप्नुवन्ति । एवं चोदकानुग्रहो भविष्यति । तेषां प्राप्तानां खलेवालीत्वं विधीयते । यो यूपः स खलेवाली कर्त्तव्य इति । शक्यते हि यूपः खलेवाली कर्त्तुं, न खलेवाली केनचित् प्रकारेण यूपो भवति । खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः, न त्वन्येषाम् । तत्र यूपो भवतीति यूपकार्ये भवतीत्युक्तं स्यात् । तथा लक्षणाशब्दो भवेत् । व्रीहीणामपि तण्डुलाश्चोदकेन प्राप्ता एव । तेषां तद्भूतानां पिष्टभावं प्रत्याख्याय देवतासम्बन्धः क्रियते । तस्मात् खादिरादयः खलेवालीत्वमापादयितव्याः । व्रीहयश्च तण्डुलभावमापादयितव्या इति ॥

एवं प्राप्ते ब्रूमः । विप्रतिषेधे एतस्मिन् प्राकृतस्य गुणस्य लोपः स्यात् । कथं विप्रतिषेधः । तद्वचनात् । खलेवाल्या यूपता विधीयते, न यूपस्य खलवालीता । तथा अव्यवहितेन भवतिना सम्बन्धात् प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन परोक्षं स्यात् । खलेवालीशब्दश्च यः खले वारणे प्रवर्त्तते तस्य वाचकः । तथाभूतश्च यूपकार्ये विनियुज्यते । या खलेवाली स यूप इति । शक्यते च यूपकार्ये विनियोक्तुम् । यत्तु यूपशब्दः कार्यलक्षणार्थ इति । व्यवधानाल्लक्षणापि ज्यायसी । प्रत्यक्षं हि लक्षणायां, परोक्षं व्यवधाने वाक्यम् । तस्माद् यज्जातीयस्य वृक्षस्य खलवाली कृता, तज्जातीयस्य यूपकार्ये विनियोक्तव्या । नैनां चोदको विशेषेऽवस्थापयितुं शक्नोति । प्रत्यक्षा हि श्रुतिः । तथा चोदकेन बाधिता स्यात् । तस्मान्न खादिरादिनियम इति ॥ ६९ ॥ साद्यस्के चित्रायां च खलेवाल्यास्तण्डुलस्य

च यथाक्रमं खादिरत्वव्रैहत्वानियमाधिकरणम् ॥ ३१ ॥

परेषां प्रतिषेधः स्यात् ॥ ७० ॥

खलेवाल्यामेव संशयः । किं तक्षणं जोषणमुच्छ्रयणमित्येवमादयः पदार्थाः कर्त्तव्याः, न ? इति । किं प्राप्तम् । चोदकानुग्रहाय कर्त्तव्या इति ॥ एवं प्राप्ते ब्रूम , परेषां प्रतिषेधः स्यादिति । तथाभूतस्य हि यूपकार्ये विनियोगे कृते कृतः शास्त्रार्थो भवति । कृते शास्त्रार्थे स अपरस्मै गुणाय यतितव्यम् । अपिच तक्षणादीनि यूपकारणानि । न चात्र यूपे योजनम् । अयूपो हि यूपकार्य्ये विनियोजयितव्य. । तस्मात् तक्षणादयो न कर्त्तव्या इति ॥ ७० ॥ सि० ॥

प्रतिषेधाच्च ॥ ७१ ॥

इतश्च न कर्त्तव्याः । विप्रतिषेध. कृतो भवेत्, क्रियमाणेषु तस्याः खलेवाल्याः । यत् काष्ठं खले वारणप्रवृत्तं, सा खलेवाली । तादृश्येवोपादातव्या । तक्षणे क्रियमाणे सा विनश्येत्, द्रव्यान्तरं जायेत । यदू न खले वारणे प्रवृत्तम् । जोषणं तु भ्रष्टावसरमेव । जोषितं तदू अन्यार्थेनैव । वृक्षाणां हि जोषणं, न तु विकारस्य । उच्छ्रयणं चोच्छ्रिताया अशक्यमेव । तस्मात्तक्षणादयो न कर्त्तव्या इति ॥ ७१ ॥ हेतुः ॥ खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम् ॥ ३२ ॥

अर्थाभावे संस्कारत्वं स्यात् ॥ ७२ ॥

खलेवाल्यामेव सन्देहः । किं मैत्रावरुणदण्डेन भूमेः समक्रिया, अद्भिरवसेचनं, बलवदवधानमञ्जनमित्येवमादयः पदार्थाः कर्त्तव्याः, उत न ? इति । किं प्राप्तम् । न कर्त्तव्या इति । परेषां प्रतिषेधः स्यादित्युक्तम् । यादृश. खले वारणे वर्त्तते, तादृश एव यूपकार्ये विनियोक्तव्य अयूप. । यूपार्थाश्च चोदकप्राप्ताः संस्कारास्तस्मिन्निवर्त्तेरन्निति एवं प्राप्त ब्रूमः । अर्थाभावे कार्याभावे यदि खले वाल्यास्तैः संस्कारै कार्यं न भवति, ततो यूपत्वमेव तेषां निमित्तं स्यात्, खलेवाल्यां न भवेयुः । इह पुनर्भूमेः समक्रियया अद्भिरवसेचनेन बलवदवधानेन च कार्यमस्ति दार्ढ्यम् । शिथिला हि सा खले वारणे न भवति । न च खलेवालीत्वमुपघ्नन्ति । तस्मात् कर्त्तव्याः । अञ्जनमपि अनुपघातकं चोदकप्राप्तं, क्रियमाणमधिकाय गुणाय स्यान्न दोषाय । तस्मात् तदपि कर्त्तव्यमिति ॥ ७२ ॥ खलेवाल्यां पर्यूहणादि-

संस्काराणामनुष्ठानाधिकरणम् ॥ ३३ ॥

## अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७३ ॥

अस्ति महापितृयज्ञ , सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धाना पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमिति । धाना इत्यत्र सन्देह । किं धानासु हन्ति कर्त्तव्यः ? उत नेति । किं प्राप्तम् । न कर्त्तव्य इति । कुतः । विघातात् । क्रियमाणे हन्तौ धानात्वं विहन्येत, सक्तवो हि भवेयुः । तस्मान्न कर्त्तव्या इति ॥

एवं प्राप्ते ब्रूम । उक्तमविघातकमधिकाय गुणाय कर्त्तव्यम्, अञ्जनवदिति । आह । अञ्जनमविघातकं, हन्तिस्तु धानात्वं विहन्तीति । अत्रोच्यते । यथा न विघातकं भवति, तथा करिष्यते । विपर्य्यसिष्यते तथा, न विहनिष्यते । विपर्यासे क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्त्तते । तदुक्तं, गुणलोपे च मुख्यक्रिया भवतीति । तस्मात् पूर्वं हन्तिं कृत्वा पाकः कार्यः । तत्र हि हन्ति पाकाऽर्थो भविष्यति, न धानात्वं विहनिष्यते इति ॥ ७३ ॥ महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम् ॥ ३४ ॥ इति भट्टश्रीशाबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य द्वितीयः पादः ॥ १० ॥ २ ॥

अथ दशमे अध्याये तृतीयः पादः ॥ १० ॥ ३ ॥

## विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥

अस्ति सोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदं समाम्नायते । एकादश प्रयाजान् यजत्येकादशानुयजान् यजतीति । तथा चातुर्मास्यानि चातुर्मास्यैः स्वर्गकामो यजेतेति । तत्राप्याम्नायते, नव प्रयाजान् यजति नवानुयाजानिति । तथा वायव्यं श्वेतमालभेत भूतिकाम इति । तत्राप्याम्नायते । हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयति । तथा अवभृथे श्रूयते, अप्सु नृणां प्रास्याघारमाघारयतीति । तदेतेषु संशयः । किं प्राकृतेतिकर्त्तव्यता न प्राप्यते, अप्राप्तायां कर्मान्तराण्येतानि चोद्यन्ते ? अथ वा प्राप्यते, प्राप्तायां गुणविधयः ? इति । किं प्राप्तम् । न प्राप्यते इति । विकृतौ तस्यां तस्यां शब्दवत् प्रधानं नाङ्गानि ।

तस्मादग्नीषोमीयादिषु गुणकर्मणामधिकानामुत्पत्तिः । यजति, आघारमाघारयतीति च कर्मान्तराण्येतानि विधीयन्ते। तथा हि श्रुतिरनुगृहीता भवति। तैरेव च तानि साङ्गानि जायन्ते। तस्मात् प्राकृती इतिकर्त्तव्यता न प्राप्यते । सन्निहिता हि सा प्रकृतौ, न प्रकृतिं सन्निहितामतिक्रमिष्यतीति ॥ १ ॥ पूर्व० ॥

## प्रकृतिवत्तस्य चानुपरोधः ॥ २ ॥

एवञ्च नोपरोधो भविष्यति। क उपरोधः। प्रकृतिवदिति कल्पना। स चोदकशब्दो न दूरे सतीमिमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते। तस्मात् कर्मान्तराणि चोद्यन्ते । प्रयाजयागान् करोति, नव करोति, आघारं करोति, हिरण्यगर्भः समवर्त्तताग्रे इति करोतीति ॥ २ ॥ युक्ति ॥

## चोदनाप्रभुत्वाच्च ॥ ३ ॥

इदं परिचोदनोत्तरं सूत्रम्। नन्वेषां कर्म चोदयितुं सामर्थ्यं नास्ति। कथमिति। नैतस्माद्वाक्यादिदमवगम्यते, यागं करोतीति। कथं तर्हि। यागे एकादशसङ्ख्यां करोतीति। यागे गुणवत्तां भावयतीति गुणशब्दश्रवणात्। यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात् । तस्माद् गुणविधिस्वरूपा एते शब्दा इति ॥ अत्रोच्यते। अस्त्येतेषां चोदनाप्रभुत्वे सामर्थ्यम्। प्रभवन्त्येते कर्म चोदयितुम्। कुत । आख्यातशब्दा ह्येते । आख्यातशब्दाश्च कर्मणश्चोदकाः समधिगताः भावार्थाः कर्मशब्दाः, इति। त एते सगुणं कर्म चोदयिष्यन्ति। यागः कर्त्तव्यः, एकादशसङ्ख्या चेत्येवं सर्वत्र । तस्मात् कर्मणश्चोदका एते शब्दाः। इतिकर्त्तव्यता न प्राप्नोतीति ॥ ३ ॥ आ० नि० ॥

## प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्त्तितः ॥ ४ ॥

न त्वेतदस्ति, इतिकर्त्तव्यता न प्राप्यते कर्मान्तराणीति। प्रधानं प्राकृतमङ्गसंयुक्तं तथाभूनमपूर्वमपि वैकृतं स्यात् । उक्तमेतद्विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तते तथाहि लिङ्गदर्शनम् इति। तस्य प्राकृतस्य कर्मणो विधिर्वैकृतेषु कर्मसु केषुचिदुपलक्ष्यते। त-

स्मात् सर्वो वैकृतो विधिः पूर्ववान् प्रकृतिपूर्वकः । अविशेषात् प्रवर्त्तितश्चोदकादवगम्यते । तस्मादिहापि प्राकृती इतिकर्त्तव्यता प्राप्यते । यदुच्यते, प्रयाजादिभिर्निराकाङ्क्षत्वात् प्राकृती इतिकर्त्तव्यता न प्राप्यते इति । स्यादेतदेवं, यदि यागो विधीयते । यागे हि विधीयमाने एकादश, नव, हिरण्यगर्भः समवर्त्तताग्रे इत्येतानि पदान्यनर्थकानि भवेयुः । न च शक्यते वदितुमेकादशादीनि अनूद्यन्ते इति। अपूर्वाणि हि तानि अवश्यं विधातव्यानि । तानि च वाक्येन यागे । अथ यागो विधीयते, यागे च सङ्ख्या, तथा वाक्यं भिद्येत । तस्माद् इतिकर्त्तव्यतायां प्राप्तायां गुणविधय एते इति ॥ ४ ॥ सि० ॥

न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥

इतश्च गुणविधय इति । न ह्यनङ्गे कर्माणि अङ्गस्य विशेषविधिः स्यात् । भवति च विशेषविधिः । आश्ववालः प्रस्तर इति । न हि असति प्रस्तरे प्रस्तरविशेष शिष्येत । यथा यस्य नास्ति पुत्रो, न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते । एवमिहापि प्रस्तरस्याश्ववालता न विधीयेत । तस्माद् गुणविधय इति ॥ ५ ॥

कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात् ॥ ६ ॥

अयं त्वपरो विशेष, प्रधानकर्मणो गुणकर्मणश्चैकशब्द्यात् । प्रयोगवचनेन हि एकेन शब्देनाङ्गप्रधानान्युच्यन्ते । तस्मात् प्रधानवचने सन्निहितानि अङ्गानि । तेषु सन्निहितेषु गुणविधेर्नाम गृहीत्वा अभिसम्बन्धो भवति । य प्रयाजसंज्ञको याग, तत्र गुण इति । एवं सर्वत्र यागे गुणेन तद्विकार स्यात् । संख्यया मन्त्रेण च संख्यान्तरं मन्त्रान्तरञ्च विक्रियेत । प्रयाजादिविधिगामी हि शब्द । गुणश्चोपदेष्टव्य । नानर्थकं पुनर्वचनम् । तस्माद् इतिकर्त्तव्यता प्राप्यते । प्राप्तायां गुणविधय इति ॥ ६ ॥

अकार्यत्वाच्च नाम्नः ॥ ७ ॥

न च शक्यते वदितुं, नामनामिसम्बन्धोऽयं विधीयते इति । अन्या हि वचनव्यक्ति शब्दार्थसम्बन्धे विधीयमाने भवति । एकादश यागान् करोति । ते च प्रयाजानुयाजसंज्ञका भवन्तीति । वाक्य हि

अस्यां वचनव्यक्तौ भिद्येत । अथ पुनरेषां प्रसिद्धनामकानामुच्चारणं गुणविधानार्थं, तस्मादपि इतिकर्त्तव्यता प्राप्यते, गुणविधयश्चैते इति ॥ ७ ॥ युक्तिः ॥

**तुल्या च प्रभुता गुणे ॥ ८ ॥**

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । कानि तानि पदानि ? यदुक्तं, प्रयाजानुयाजा असन्निहिता , न शक्यते तेषां गुणो विधातुमिति । तत् परिहर्त्तव्यम् ॥ अत्रोच्यते । तुल्या ह्येषा प्रभुता गुणान् प्रति चोदकस्य, प्राकृतान् गुणान् इह प्रापयिष्यति । ते च प्राप्ता गुणविधानपरे वाक्ये इह सङ्कीर्त्यन्ते । यद्वा उत्पाद्य प्रापयिष्यति । ते गुणवचनेन सम्भन्त्स्यन्ते इति । तत्रोत्पन्नानां प्राप्तिर्लघीयसी । प्राकृतान् प्राप्य कृतार्थं शब्दो नापूर्वान् उत्पादयितुं शक्नोति । इदमधुनातनवचनमुत्पादकमिति चेत् । नैतदेवम् । गुणसम्बन्धार्थमेव तद् । गुणवचनस्य श्रवणात् । तस्मादपि प्राप्तेषु गुणविधय इति ॥ अथ यदुक्तम्, आख्यातशब्दा एते कर्मणो विधायकाः । भावार्थाः कर्म्मशब्दास्तेभ्य. क्रिया प्रतीयेत इति ।तुल्या एषां प्रभुता आख्यातशब्दानाम् । ये हि शक्नुवन्ति गुणवचनसहिता गुणं कर्म्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम् । यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुल्य इति ।तस्मादपि गुणविधयइति॥८॥

**सर्वमेवं प्रधानमितिचेत् ॥ ९ ॥**

इति चेत् पश्यसि, आख्यातशब्दोऽयं गुणं विधास्यतीति । एवं सति सर्वं प्रधानम् । आख्यातशब्दवाच्यत्वादिति ॥ ९ ॥ आ० नि०॥

**तथाभूतेन संयोगाद्यथार्थविधयः स्युः ॥ १० ॥**

न हि आख्यातशब्दाभिधानेन प्रधानभूतो गुणभूतो वा अर्थो भवति । यः स्वभावतो गुणभूतोऽर्थः, नासौ आख्याताभिधानेन प्रधाने भूतो भवति। तथाभूतेन संयोगे सतिआख्यातशब्दभूतेन यथार्थविधयो भवेयुः । यत् प्रधानं तत् प्रधानमेव, यद् गुणभूतं तद् गुणभूतमेवेति ॥ १० ॥ आशङ्कानिरासे युक्तिः ॥

**विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात् सर्वं प्रधानार्थम् ॥ ११ ॥**

इतश्च पश्यामो गुणविधय इति । कुतः । विधित्वं चाविशिष्टम् ।

प्राकृतानां वैकृतैरर्थवादकर्म्मणा योगो न विशिष्यते। अग्निं स्विष्टकृतं यजति यज्ञस्य प्रतिष्ठित्यै इति । प्रकृतौ य एव, स एव विकृतावर्थवादो भवति । अग्निं स्विष्टकृतं यजति यज्ञमेव प्रतिष्ठापयतीति । तथा चक्षुषी वा एते यज्ञस्य यदाज्यभागौ इति प्रकृतौ, आज्यभागौ यजति चक्षुषी एव नान्तरेति इति विकृतौ । तस्मात् सर्वमेवञ्जातीयकं प्रधानार्थं, विकृतौ गुणभूतमिति ॥ ११ ॥

**समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥**

इतश्च पश्यामो न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति । समा हि उत्पत्तिक्रमता प्रयाजानुयाजानाम् । येनैव क्रमेण प्रकृतौ प्रयाजानुयाजानां संस्काराणामधिकारस्तेनैव क्रमेण विकृतौ दृश्यते। कथम् । प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यत पृषदाज्यं पश्चादिति । तस्मादाज्येन पुरस्तात् प्रयाजा वर्त्तन्ते पशुना मध्यतः पृषदाज्येन पश्चादनुयाजा वर्त्तन्ते इति प्रयाजानुयाजानां स्वक्रमाणां दर्शनं प्रधानार्थत्वे सति उपपद्यते, न प्रधानत्वे। तस्मान्न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति ॥ १२ ॥ युक्ति ॥ पश्वादौ सामिधन्यादिप्राकृतेतिकर्तव्यताऽनुष्ठानाधिकरणम् ॥ १ ॥

**हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥**

अस्ति वायव्यः पशुः, वायव्यं श्वेतमालभेत भूतिकाम इति । तत्र श्रूयते । हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयतीति । तत्रायमर्थः समधिगतः । प्राप्ते एवाघारे गुणविधिरयमिति । इदन्तु चिन्त्यते । किं पूर्वस्मिन्नाघारे गुणविधिः? उत, उत्तरस्मिन्निति । किं प्राप्तम् । हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् । पूर्वस्य आघारस्य गुणविधिरयम् । कुतः । मन्त्रलिङ्गात् । एवं मन्त्रार्थो भवति । हिरण्यगर्भं समवर्त्तताग्रे इत्याघारमाघारयतीत्यत्र मन्त्रे इदमस्ति वचनं, भूतस्य जातः पतिरेक आसीदिति । एक इति च प्रजापतेरभिधानमिति । स हि प्रजोत्पत्तिसम्भवात् प्राक्, प्रजोत्पत्तेरेकसङ्ख्यायुक्त इति गम्यते । स एष मन्त्रः प्रजापतिमभिवदितुं शक्नोति। प्राजापत्यश्च पूर्व आघारः। तत्रायं समर्थः कार्यं निर्वर्त्तयितुं, नोत्तरस्मिन् । अतः पूर्वस्य गुणविधिरिति ॥ १३ ॥ पूर्व० ॥

**प्रकृत्यनुपरोधाच्च ॥ १४ ॥**

प्रकृतिवदिति चोदकस्यानुपरोधो भविष्यति । उत्तरस्य आघारस्य मन्त्रानपनयात् । इतरथा अपनीयेत, ऊर्ध्वोऽध्वर इति मन्त्र । तस्मादपि पूर्वस्य गुणविधिरिति ॥ १४ ॥ युक्ति. ॥

## उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न पूर्वस्य गुणविधिरिति । किं तर्हि। उत्तरस्य गुणो विधीयते । तस्य मन्त्रेणार्थो, न पूर्वस्य । कथम् । एवमास्नायते । हिरण्यगर्भः समवर्त्तताग्रे इत्याघारयतीति । कोऽर्थः । आघारे एतामृचमुच्चारयतीति । सा उच्चारिता विशिष्टं श्रौतं विज्ञानमङ्गभूतं करोति । कस्मै देवाय हविषा विधेम इति । एकस्मै देवायेत्यर्थः । एकारलोपेन एतच्छब्दविज्ञानाद् एतदर्थप्रत्ययो भवति, एकस्मै देवाय हविर्दातव्यमिति । न च पूर्वस्मिन्नाघारे श्रौतं विज्ञानमङ्गभूतमस्ति ।, तत्र कल्पयितव्यं स्यात् । श्रौतं विज्ञानमङ्गभूतं भवतीति । तच्च हिरण्यगर्भः समवर्त्तताग्रे इत्येतेन कर्त्तव्यमिति । कल्पनायां न प्रमाणमस्ति । इदं हि वाक्यं मन्त्रकार्यविशेषस्य विधायकं, न मन्त्रकार्यसामान्यस्य नियामकम् । सामान्यं मन्त्रकार्यं पाक्षिकम्। तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत् । आनर्थक्यम्, अस्मत्पक्षपरिग्रहश्च, उपदेशस्य चार्थवत्त्वम् । जौहवाघारविषयत्वात् । तस्मादुत्तरस्य गुणविधिरिति ॥

यदुक्तं, प्रजापतिवचनोऽयं मन्त्र इन्द्रमभिवदितुं न शक्तो भविष्यतीति । नैतदेवम् । यथा हि प्रजापतिरेक इति संस्तुतः प्रजापतिशब्दत्वात् । एकोऽसौ प्राक् प्रजोत्पत्तेरिति प्रजापतिरेक आसीदित्युच्यते।एवमिन्द्रोऽपि, ऐश्वर्य्यवचनत्वादिन्द्रशब्दस्य, सर्वमुत्पादयितुमयम् अजमिति संस्तूयते। क ईं स्तवत् कः पृणात् को यजाते यदुग्रमिन्मघवा विश्वहावेत् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ( ऋ० ६ म० ४७ सू० ) इति । तथा, क उ नु ते महिमनः समस्यास्मत् पूर्व ऋषयोऽन्तमापुः । यन्मातरञ्च पितरञ्च साकमयजनयथा स्तन्वा स्वायाः ( ऋ० १० म० ५४ सू० ) इति । क ईं स्तवत् कः पृणात् को यजाते इति । ऐन्द्रे सूक्ते वचनादैन्द्री ऋक् । क एनं शक्नोति स्तोतुं, को वाऽस्मै ददाति, को वा यजतीति सर्वत्राऽनवक्लृप्ति । अयमेव सर्वमिदं करोति । यथा गच्छन् कश्चित् पूर्व-

पादमपरं करोति, अपरञ्च पूर्वम् । एवमयमिदं सर्वं करोतीति । अयं चेत् सर्वं करोतीति, प्राक् करणादेकः । तथा, क उ नु ते महिमनः समस्य इति, केऽस्य सकलस्य महिम्न अस्मत्पूर्वेऽप्यृषयोऽन्तं प्राप्तुं शक्नुवन्ति, यन्मातापितरावपि स्वस्माच्छरीराज्जनयसीति मातापितृभ्यामपि पूर्वः, किमुत अन्यस्माज्जनादिति सिद्धमेकत्वमस्येति । सोऽपि प्राक् सर्वोत्पत्तेः, एक एव । अत इन्द्राभिधायिन्येषा ऋक्, तस्मादविरोधः ॥ १५ ॥ सि० ॥

**विध्यतिदेशात्तच्छ्रुतौ विकारः स्याद् गुणानामुपदेश्यत्वात् ॥ १६ ॥**

गुणविधिरयमुपदिश्यते, आघारश्रुतौ । स तन्मन्त्रस्य विकारः स्यात् । उपदेश्यो हि मन्त्रविशेषोऽत्र उत्तरस्मिन्नाघारे, यच्छ्रौतं मन्त्रविशेषविज्ञानम्, ऊर्ध्वोऽध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् बृहद्भावी हि मधोर्घृतस्य स्वाहा इति । तदङ्गभूतमुपकारकस्य विज्ञानस्य साधनमिति इन्द्राय हविर्दातव्यम् । इह तु हिरण्यगर्भ इति विज्ञानं श्रौतं, श्रौतस्य प्राकृतस्य विज्ञानस्य कार्यं विधातुमर्हति सामर्थ्यात् । इदं दधि घृतं शाकमिमे शालयः, देवदत्तो भोजयितव्य । देवदत्तवद् यज्ञदत्तस्तैलेनेति भोजने तैलमुपकारकं श्रूयमाणं, यस्य प्राकृतस्य कार्यमभिनिर्वर्त्तयितुं शक्नोति, तस्य कार्य्ये विनियुज्यते घृतस्य । सामान्यं हि अस्य स्नेहनसामर्थ्यं घृतेनेति । इहाऽपि मन्त्र उच्चार्यमाणः प्राकृते श्रौतविज्ञाने विशेषमुत्पादयति । तच्चोत्तरस्मिन्नङ्गभूतं तदर्थविज्ञानस्य साधकं, न पूर्वस्मिन् । तस्मादुत्तरस्य गुणविधिरिति ॥ १६ ॥

**पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १७ ॥**

पूर्वस्मिंश्चाघारे अमन्त्रत्वमेव दर्शयति, स्वाहेति करोति, मन्त्रश्च न आहेति । तस्मादप्युत्तरस्य गुणविधिरिति ॥ १७ ॥

युक्तिः ॥ वायव्यपशौ हिरण्यगर्भ इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ॥ २ ॥

**संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥**

सन्ति चातुर्मास्याः सोमाः । तत्र श्रूयते, उत्करे वाजिनमासादयन्ति, परिधौ पशुं नियुञ्जन्तीति । तत्रैषोऽर्थः सांशयिकः । किमेत-

दासादनान्तरं नियोजनान्तरञ्च ? उत प्राकृतयोरासादननियोजनयोर्गुणविधिः, इतरश्चेतरश्चेति । तत्रैतत्तावन्न परीक्ष्यम् । किं धर्ममात्रमासादनं नियोजनञ्च, उत दृष्टकार्य्यमिति । यदि धर्ममात्रं, ततः क्रियान्तरम् । अथ दृष्टकार्यं, ततो गुणविधिरिति । तत उभयं सन्दिग्धमित्युभयं संहृत्य परीक्ष्यते । किं धर्ममात्रमितरश्चेतरश्च क्रियान्तरम्, उत दृष्टकार्यं गुणविधिः ? इति ॥ किं प्राप्तम् । तुङ्गत्वात् तीक्ष्णाग्रत्वाच्चोत्करस्य दृष्टं कार्यमासादनं न शक्यं कर्त्तुम् । तथोपशयत्वात् परिधेर्दृष्टकार्यकं नियोजनमशक्यं कर्त्तुम् । तस्माद् धर्ममात्रम् । यथा सौत्रामणीप्रकरणे, ब्राह्मणस्य मूर्द्धनि आसादयतीति धर्ममात्रमासादनम् । एवमिहापि धर्ममात्रं चेत् क्रियान्तरम् । तथा च सति आसादनं नियोजनञ्च विधायिष्यते । तत्र श्रुत्या विहितं भविष्यति । इतरथा वाक्यं विधायकं स्यात् । अपि च अस्मत्पक्षे आसादननियोजने गुणविधिलक्षणार्थे न भविष्यतः । भवत्पक्षे तु गुणविधिं लक्षयेयाताम् । तस्मात् क्रियान्तरम् इतरदितरच्च । तस्य विधायकत्वात् स्वपदगतस्य भावप्रत्ययस्य पदोत्तरस्य न यथा आघारे गुणविधिस्तथाऽस्मिन् संस्कारे आसादननियोजनाख्ये ॥१८॥ पूर्व० ॥

## प्रकृत्यनुपरोधाच्च ॥ १९ ॥

एवञ्च प्राकृतस्य धर्मस्य प्रापकश्चोदको नोपरोत्स्यते । वेद्यां हवींष्यासादयति, यूपे पशु नियुञ्जन्तीति । तस्मादपि क्रियान्तरमिति ॥ १९ ॥ युक्तिः ॥

## विधेस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥

तुशब्द पक्षं व्यावर्त्तयति । नासादनान्तरं नियोजनान्तरं चेति । किं तर्हि । प्राकृतयोरासादननियोजनयोर्गुणविधि । तत्रैतद्वर्ण्यते । दृष्टकार्यके आसादननियोजने इति । कुत. । कार्यस्य दृष्टत्वात् । आसादनं समीपानयनम् । तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनम् । नियोजनस्यापि पश्वनपगम । एवं चेत्, तस्माद् गुणविधिरितरश्च इतरश्च । कुत. । विधेरासादननियोजनविधेस्तत्र दृष्टत्वात्, चोदकेन तत्र प्राप्तत्वात् । संदेहे, तत्र गुणविधिः कर्मान्तरमिति । न कर्मान्तरविधानं युक्तम् । अज्ञातस्य हि ज्ञापनं विधि· । ज्ञाते च चोदकेन

आसादननियोजने । तस्माद् यस्य गुणस्य चोदकः शब्दस्तदर्थंतया उच्चारणं स्यात् । तस्माद् गुणविधिरिति । अथ यदुक्तं, श्रुतिरेवं विधायिका, त्वत्पक्षे तु वाक्यमिति । उच्यते । यद्यपि वाक्यं, तथापि अल्पीयसी अदृष्टानुमानकल्पना भविष्यतीति । यावता केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्येति ॥ २० ॥ सि० ॥

## संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥

अथ यदुक्तं, तीक्ष्णाग्रत्वादुत्करस्य, उपशयत्वाच्च परिधेः, दृष्टकार्ये आसादननियोजने न शक्येते कर्तुमिति । अत्रोच्यते । यथा शक्येते उत्करे च परिधौ च आसादननियोजने कर्तुं, तथा करिष्यते । पृथ्वग्रमुत्करं करिष्याम । महान्तञ्च परिधिम् । अतः पृथ्वग्रतया स्थविम्ना च गुणेन संयोगादासदननियोजनसंस्कारसामर्थ्यं भविष्यति । तस्मान्न कर्मान्तरमिति ॥ २१ ॥ आ० नि० ॥

## विप्रतिषेधात् क्रियाप्रकरणे स्यात् ॥ २२ ॥

अथ यदुक्तं, यथा सौत्रामणीप्रकरणे धर्ममात्रमासादनम्, एवमिहापीति । तत्परिहर्त्तव्यम् । अत्रोच्यते । सौत्रामणीप्रकरणे विप्रतिषेधान्न शक्यं दृष्टकार्यकमासादनं कर्त्तुम् । तस्मात् क्रियामात्रमदृष्टकार्यकं सौत्रामणीप्रकरणे स्यात्, न त्विह दृष्टकार्यकमशक्यम् । तस्माद् गुणविधिः ॥ २२ ॥ युक्तिनिरासः ॥ चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम् ॥ ३ ॥

## षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥

अस्ति अग्निः, य एवं विद्वानग्निं चिनुते इति । तत्र दीक्षाहुतयः प्राकृत्यो वैकृत्यश्च । आकूतिमग्निं प्रयुज स्वाहा, मनो मेधामग्निं प्रयुजं स्वाहा, चित्तं विज्ञातमग्निं प्रयुजं स्वाहा, वाचो विधृतिमग्निं प्रयुजं स्वाहा, प्रजापतये मनवे स्वाहा, अग्नये वैश्वानराय स्वाहा, विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यम् । विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा इति प्राकृत्यः । तथा वैकृत्य. आकूत्यै प्रयुजेऽग्नये स्वाहा, मेधायै मनसेऽग्नये स्वाहा, दीक्षायै तपसेऽग्नये स्वाहा, सरस्वत्यै पूष्णेऽग्नये स्वाहा, आपो देवीर्बृहतीर्विश्व शम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा विधातु स्वाहा, विश्वे देवस्य नेतुर्मर्त्तो वृ-

णीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा इति । एताः प्रकृत्य समामनन्ति, षड्भिर्दीक्षयतीति । तत्र संशयः । किं वैकृतीनां प्रयोग, प्राकृतीनां निवृत्ति । अथ वा समुच्चय प्राकृतीनां वैकृतीनाञ्च ? इति । किं प्राप्तम् । षड्भिर्दीक्षयतीति तासां प्राकृतीनां आहुतीनां मन्त्रविकार स्यात् । वैकृतैर्मन्त्रै. प्राकृता निवर्त्तेरन् । श्रुतिसंयोगात् । प्रत्यक्षश्रुतिसंयोगो विकृतानाम् । षड् वैकृता मन्त्राः षट्शब्देन वैकृता गृह्यन्ते । तस्मात् प्राकृतानां बाधो न समुच्चय इति ॥ २३ ॥ पूर्व० ॥

## अभ्यासात्तु प्रधानस्य ॥ २४ ॥

तुशब्द. पक्षं व्यावर्त्तयति । प्राकृतानां बाध इति । न बाधः । समुच्चयः । कुतः । सम्भवात् । यत्र हि प्राकृतवैकृतयोर्युगपद् न सम्भव, तत्र वैकृतेन प्राकृतं बाध्यते । समुच्चये हि आवृत्तिः स्यात् प्रधानस्येति । यत्र पुनरावृत्तिः श्रुता कर्त्तव्यैव, तत्र नैष दोषो भवति । आवृत्तिः प्राप्नोतीति । इह चावृत्ति श्रूयते प्रधानस्य होमस्य । द्वादश जुहोतीति । अत. सम्भवात् समुच्चय इति ॥ २४ ॥ सि० ॥

## आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥

नैतदस्ति, समुच्चय इति । प्रत्यक्षश्रुतैर्वैकृतैश्चोदप्राप्ताः प्राकृता बाध्येरन् । अथ यदुक्तं, सम्भवे सति न बाधितव्या इति । अत्रोच्यते । नास्ति सम्भव. । कथम् । वैकृताः षड् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते । ते चेद्धोमाः, वैकृतैर्मन्त्रैर्भवितव्यम् । अभ्यासे सति पुनस्त एव होमा भवन्ति । ते चेद्धोमाः, वैकृतैरेव मन्त्रैर्भवितव्यम् । तस्माद् आवृत्त्या मन्त्रकर्म स्यात् । अत. प्राकृता बाध्येरन्नेवेति ॥ २५ ॥ आ० ॥

## अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ ॥

अपि वेति पक्षव्यावृत्तिः । प्रतिमन्त्रम् आहुतयो भवन्ति । अभ्यासाच्च द्वादशता प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः । वैकृता अपि श्रवणेन । सर्वाङ्गग्राही च प्रयोगवचन उभयान् सङ्गृह्णाति । समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये । बाधे हि चोदकप्राप्तिरपह्नूयेत । न च होमनिर्वृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते । तेन

होमश्चेदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयम् । दीक्षणे हि ते वैकृता श्रूयन्ते । षड्भिर्दीक्षयतीति । होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन सन्निहितान् गृह्णाति । उभये च प्राकृता वैकृताश्च सन्निहिताः । तस्मान्न विनिगमनायां हेतुरस्ति। इमान् सङ्गृह्णाति, इमान्नेति । न च प्रधानावृत्तिरिह दोषो भवतीत्युक्तमेव । तस्मात् प्राकृतानां मन्त्राणामहानम् । अपि च अन्यायश्च कृतेऽभ्यासः । सकृद्वैकृता मन्त्रा पठ्यन्ते । तैर्दीक्षित सम्पादयितव्य इति । सकृत्सम्पादिते तैर्दीक्षिते कृतेऽर्थे पुनरभ्यासो न न्याय्य । तस्मादपि प्राकृतानामहानमिति ॥ २६ ॥ आ० नि० ॥

## पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७॥

अपि च पूर्वापरशब्दौ भवत । षट् पूर्वाञ्जुहोति षडुत्तराञ्जुहोतीति । न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरता उपपद्यते । नैमित्तिकत्वात् । पूर्वनिमित्तो हि उत्तरशब्द., उत्तरनिमित्तश्च पूर्वशब्दः । तस्मादपि प्राकृतानामहानमिति ॥ २७ ॥

## तत्पृथक्त्वञ्च दर्शयति ॥ २८ ॥

इतश्च पश्यामो– न निवृत्ति , समुच्चय इति । कुत. । तासामाहुतीनां पृथक्त्वं दर्शयति । उभयीर्जुहोति आग्निकीश्चाध्वरिकीश्चेति । यद्युभयेषां मन्त्राणां समुच्चयस्ततस्तेषामाग्निकत्वात् आध्वरिकत्वाच्च भवत्येष निर्देशः । इतरथा सर्वा एवाग्निक्यो भवेयु. । तत्र पृथक्त्वं नोपपद्येत। भवति च पृथक्त्वम् । तस्मादनिवृत्ति ,समुच्चय इति ॥२८॥

## न चाविशेषाद् व्यपदेशः स्यात् ॥ २९ ॥

इतश्चानिवृत्ति., समुच्चय इति । कुतः । व्यपदेशात् । व्यपदेशो भवति । अध्वरस्य पूर्वमथाग्नेरुपाग्नि ह्येतत्कर्म यदग्निकर्म इति । पूर्वमध्वरस्य अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे । तस्मात् समुच्चय इति ॥ २९ ॥ युक्ति. ॥ अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम ॥ ४ ॥

## अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥

अस्ति पुनराधानं निमित्ते श्रूयते । भाग्ययश श्रीकामानां पुनरादधीत । योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरा-

दधीतेति । तत्र श्रूयते । पुनरुत्स्यूतं वासो दक्षिणा पुनरुत्सृष्टोऽनड्वानिति । तथा, आधाने दक्षिणा—एका देया षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः शतं देयं सहस्रं देयमपरिमितं देयमिति । तत्र संशयः । किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः । अथाग्न्याधेयदक्षिणानां निवृत्तिः ? इति । किं प्राप्तम् । अग्न्याधेयस्य नैमित्तिके पुनराधेये दक्षिणादानमधिकं स्यात् । प्राकृतीनामनिवृत्तिः समुच्चय इति । कुत । एकस्मिन् वाक्ये उभय्यो दृश्यन्ते । उभयीर्ददाति, अग्न्याधेयिकीश्च पुनराधेयिकीश्चेति । तस्मादनिवृत्तिः, समुच्चय इति ॥ ३० ॥ पूर्व० ॥

## शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥

इदं पदोत्तरं सूत्रम् । कथं चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य समुच्चयो भविष्यति ? अत्रोच्यते । शिष्टत्वादितरासां, प्राकृतीनां वचनप्रामाण्याद् यथास्थानं समुच्चयो भविष्यतीति । प्रत्यक्षं हीदमनुशासनम् । आग्न्याधेयिकीर्दत्वा पुनराधेयिकीर्ददातीति । तस्मान्न बाधः प्राकृतीनां, समुच्चय इति ॥ ३१ ॥ युक्तिः ॥

## विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

तुशब्दः पक्षं व्यावर्त्तयति, न तु समुच्चयो विकार इति । कुतः । काम्यं ह्येतत् पुनराधेयं श्रूयते । तद् असति प्राकृते प्रकरणे आम्नानमवकल्पते, न सति । यत्तत्रोच्यते वैकृतं, तत् प्राकृतं बाधत इत्यर्थः । काम्यो वा नैमित्तिको वा अर्थो नित्यमर्थं विकृत्य निविशते । यथा अक्ष्यामयं मुद्गौदनभोजनं निवातशय्या चेति नित्यं शय्यासनं भोजनञ्च विकरोति । प्रत्यक्षं हि वैकृतम् । आनुमानिकञ्च प्राकृतम् । तस्माद् वैकृतेन बाध्यते । अथ यदुक्तं, वचनप्रामाण्यात् प्राकृत्यो भविष्यन्तीति । अत्रोच्यते । ता उभयीर्ददातीति नात्र विधिविभक्तिरस्ति । वर्त्तमानापदेशोऽयम् । प्रमाणान्तरमादायापि अयमर्थः प्रापित । उभयीर्दक्षिणा ददाति, अग्न्याधेयिकीः पौनराधेयिकीश्च । अग्न्याधेये अग्न्याधेयिकीः, पुनराधेये पौनराधेयिकीः । तदेतद् भूतानुवादमात्रम् । तस्मात् प्राकृतीनां निवृत्तिरिति ॥ ३२ ॥ सि० ॥

## शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

इतश्च प्राकृतीनां निवृत्ति । कुतः । निवृत्त्याशङ्कादर्शनात् शङ्कते

हि निवृत्तिरिति गम्यते । कथम् । उभयत्वं हि श्रूयते । यद् वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति । ननु उभय्योऽपि प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह । अग्न्याधेयिकी हि अग्न्याधेये, पुनराधेयिक्यः पुनराधेये । तस्मात् प्राकृतीनां निवृत्तिरिति ॥ ३३ ॥ युक्तिः ॥ पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ॥ ५ ॥

## वासो वत्सश्च सामान्यात् ॥ ३४ ॥

आग्रयणं भवति, हुताद्याय यजमानस्यापराभवाय नवानामैन्द्राग्न. पुराणानामाग्नेयः सौम्यः श्यामाको वैश्वदेवः पयसि चरुः द्यावापृथिवीय एककपाल इति । तत्र श्रूयते । वासो दक्षिणा वत्सः प्रथमजो दक्षिणा इति । अस्ति तु प्रकृतौ अन्वाहार्य्यो दक्षिणेति । स इह चोदकेन प्राप्यते । तदत्र संशय. । किं वासो वत्समन्वाहार्य्यस्य निवर्त्तकम् ? उतानिवर्त्तकमिति । किं प्राप्तम् ? । चोदकानुग्रहाद् विरोधाभावाच्चानिवर्त्तकमिति ॥ एवं प्राप्ते ब्रूम. । वासो वत्सश्च सामान्यात् । उक्तमधस्तात् । आधानदक्षिणानां पुनराधेये निवृत्तिरिति । च-शब्देनान्वादेशः क्रियते । अन्वाहार्य्यस्य निवृत्तिः । कुतः । कार्यसामान्यात् । दक्षिणाकार्ये अन्वाहार्य्य. प्रकृतौ । इह वासो वत्सं तस्मिन् कार्ये । दक्षिणाशब्दश्रवणात् । तस्मान्न समुच्चयो, निवृत्तिरिति । प्राप्तिर्वा उत्तरविवक्षया क्रियते इति ॥ ३४ ॥ आग्रयणे वासोवत्साभ्यामन्वाहार्यस्य निवृत्त्यधिकरणम् ॥ ६ ॥

## अर्थापत्तेस्तद्धर्म्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

तत्रैव वाससि वत्से च संशयः । अन्वाहार्य्यधर्म्माः कर्त्तव्याः ? उत न ? इति । किं प्राप्तम् । न तावद् न्याय उच्यते । कर्त्तव्या इति । तेनाकर्त्तव्या इति मन्यामहे इति ॥

एवं प्राप्ते ब्रूमः । अर्थापत्तेस्तद्धर्म्मा वत्सः स्यात् । तद्धर्म्मकश्च वास. साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्य्यनिबन्धनाः । तस्माद् अन्यस्मिन्नपि तत्कार्यापन्ने भवितुमर्हन्तीति । कथं पुनर्वासो वत्सं तत्कार्यापन्नम् ? इति । निमित्ततयाऽऽख्याय परिक्रयेण दक्षिणेति तयाऽभिसंयोगो भवति । वासो दक्षिणा वत्स. प्रथमजो दक्षिणा इति । तस्माद्वासोवत्सावन्वाहार्य्यधर्मकौ स्यातामिति ॥ ३५ ॥

आग्रयणे वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् ॥ ७ ॥

दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

तत्रैव, वत्सः प्रथमजो दक्षिणा इति। तत्रैतत् समधिगतं, अन्वाहार्य्यधर्माः कर्त्तव्या इति । तदत्र संशयः । किं वत्से पाकः कर्त्तव्यः, उत न ? इति। किं प्राप्तम् । चोदकानुग्रहाच्छक्यत्वाच्च कर्त्तव्य इति॥ एवं प्राप्ते ब्रूमः । वत्सस्य दाने पाको न कर्त्तव्यः । अपक्को हि वत्सो वत्स एव । वत्सश्च श्रूयते, न मांसम् । परिक्रयाय च श्रूयते, न पुरुषसंस्काराय । तस्माच्चोदकः पाकं न प्रापयति । तद्यदि पाकः क्रियेत, अश्रुतः प्राणिवध आचारविरुद्धोऽनुष्ठीयेत । तस्मात् पाको न कार्यः ॥ ३६ ॥ आग्रयणे वत्से पाकाभावाधिकरणम् ॥ ८ ॥

पाकस्य चान्नकारितत्वात् ॥ ३७ ॥

तत्रैव श्रूयते, वासो दक्षिणा इति । तत्रायमर्थः समधिगतः । अन्वाहार्यधर्मा कर्त्तव्या इति । अथ पाकः कर्त्तव्य, न ? इति संशय । अर्थापत्तेः कर्त्तव्य इति प्राप्ते ब्रूम । न कर्त्तव्यः । अन्नकारितत्वादिति । अन्नकारितो हि पाकः । न च वासोऽन्नम् । न तत्र पाकः शक्यते कर्त्तुम् । तस्मात् तत्र पाको न कर्त्तव्य इति ॥ ३७ ॥ आग्रयणे वाससि पाकाभावाधिकरणम् ॥ ९ ॥

तथाभिधारणस्य ॥ ३८ ॥

आग्रयणे श्रूयते, वासो दक्षिणा वत्सः प्रथमजो दक्षिणा इति । तत्रायमर्थः समधिगतः । अन्वाहार्यधर्मा वाससि वत्से च कर्त्तव्या इति । अथायमर्थः सांशयिकः, किमभिघारणं कर्त्तव्यं, न ? इति । किं तावत् प्राप्तम् । अर्थापत्ते कर्त्तव्यमिति ॥ एवं प्राप्ते ब्रूमः । तथाऽभिघारणस्य । किम् । अक्रियेति, अभिघारणं हि अन्वाहार्ये स्वादिम्ने क्रियते । स्वादिमा हि ओदनस्य परिक्रये उपकरोति । न च वाससि वत्से च स्वादिम्ना प्रयोजनम् । तस्मात् तत्राभिघारणं न स्यादिति ॥ ३८ ॥ आग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम् ॥ १० ॥

द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात् स्यात् ॥ ३९ ॥

अस्ति ज्योतिष्टोम, ज्योतिष्टोमेन स्वर्गकामो यजेतेति । तत्रैवाम्नायते, गौश्चाश्वश्च अश्वतरश्च गर्दभश्च अजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा इति । तत्र संशयः। किमे-

कैकस्य गवादेर्द्रव्यस्य द्वादशशतम्, उतैकस्य द्रव्यस्य। यदा एकस्य, तदा किमनियमो यस्य कस्यचित् ? उत माषाणाम् । अथ वा सर्व्वसम्पादनी इयं सङ्ख्या ? उतैकजातीयस्य । यदा एकजातीयस्य, तदा किमनियमः, यस्य कस्यचित् ? उत पशूनाम् । यदा पशूनां, तदा किमनियम , येषांकेषाञ्चित् ? उत गवामिति । एते पक्षा भविष्यन्तीति । किं तावत् प्राप्तम् । द्रव्याणां विधीयमानानां सन्निधौ । केषां द्रव्याणाम् । गवादीनाम् । क्व विधीयमानानाम् ? । दक्षिणासंबन्धे संख्या समाम्नाता । तस्य द्वादशशतं दक्षिणा इति । तेषां गवादीनामेकैकस्य सङ्ख्या स्यात् । कुतः ? । गुणतः सङ्ख्या विधीयते, गवादीनि प्रधानतः । कथम् । नैवमभिसम्बन्ध क्रियते, द्वादशशतं स्यादिति । कथं तर्हि द्वादशशतं तस्येति। एवं तस्य ग्रहणमर्थवद् भवति । इतरथा तद् अनर्थकं चानुवादो वा स्यात् । एकवचनमपि प्रकृतापेक्षं लक्षणया अनूद्येत । प्रधानसन्निधौ च गुणः शिष्यमाण. प्रतिप्रधानं भिद्येतेति। अस्ति चैतया सङ्ख्यया प्रयोजनम् । गवादीनि द्रव्याणि तत्संख्यानि कर्तव्यानि । तत्र न गम्यते विशेष. । किमेतत्सङ्ख्यं कर्त्तव्यं, किं न ? इति । यदेव द्रव्यं नैतत्सङ्ख्यं स्यात्, तत् प्रतिश्रुति बाध्येत । तस्मादेकैकमेतया सम्बद्धव्यमिति ॥ ३९ ॥

## समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥

तुशब्द पक्षं व्यावर्त्तयति । तस्य तस्य द्वादशतमिति, नैतदेवमेकस्य कस्यचिद् द्वादशशतं स्यात् । कुतः । समत्वाद् गुणानाम् । गवादयोऽपि हि दक्षिणासम्बद्धाः, सङ्ख्यापि । न गवादीनां सङ्ख्या विधीयते । दक्षिणा तु सङ्ख्याविशिष्टा चोद्यते, न गवादय ॥ कुत. । सङ्ख्याया दाक्षिण्येन अनाभिसम्बन्धे सति आनियतसङ्ख्यानां गवादीनां दक्षिणासम्बन्धेनानर्थक्यमेव सङ्ख्यायाः स्यात् । सङ्ख्येयसामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्ज्येत । गवादिषु तस्य द्वादशशतमिति चैकवचनं न स्यात् । तस्माद् यस्य कस्यचित् परिक्रयसाधनस्य द्रव्यस्यैतस्यां सङ्ख्यायां कृतायामेतत्सङ्ख्यः परिक्रयः कृतो भवति । तस्मादेकस्य सङ्ख्या, नैकैकस्य । एवमेकवचनश्रवणं युक्तरूपं भविष्यति ॥ ननु लक्षणत्वात् तस्य शब्दस्याविवक्षितं वचनम् । उच्यते । अविवक्षितेऽपि वचने या

सङ्ख्यानूद्यते, तेन वचनेन भवितव्यम् । यथा लक्षणत्वेनाप्युच्यमाने ब्राह्मणजातीयो न हन्तव्य इति न द्विवचनान्तेन निर्देशो भवति- ब्राह्मणौ न हन्तव्यौ इति । आह । जात्याख्यायामेकस्मिन् बहुवचनं भवति । बहुषु वा एकवचनं भवति, न त्वेकस्मिन् बहुषु च द्विवचनं भवति । तेनात्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति । अत्रोच्यते । जात्याख्यायामेतदेवं भवति । न च त-च्छब्देन जातिरभिधीयते । सन्निहितव्यक्तिवचन एष भवति । तस्मा-देकस्य कस्यचित्सङ्ख्या इति ॥ ४० ॥

**यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभि-**
**सम्बन्धः ॥ ४१ ॥**

इदं पदोत्तरं सूत्रम् । यदा एकस्य सङ्ख्यासम्बन्ध , तदा अनिय-म । य. कश्चिद्, विशेषाश्रवणादिति ॥ एवं प्राप्ते ब्रूम । यस्य वा सन्निधाने स्यात् । यस्य शब्दस्य सन्निधाने सङ्ख्याशब्द उच्चरित', सोऽर्थ सङ्ख्याविशिष्ट प्रतीयेत । अनन्तरमुच्चरितेन हि सहैकवा-क्यता भवति । कुतः । अनन्तरसम्बद्धं हि विशेषण विज्ञानं विशेष्टुं शक्नोति, न हि व्यवहितम् । व्यवहिताश्च गवादयो माषैः । वाक्य-ञ्च प्रकरणाद् बलीयः । तस्मान्माषाः सङ्ख्यया सम्बध्येरन्निति ॥४१॥

**असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात्**
**सर्वाधिकारः स्यात् ॥ ४२ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । माषाः सङ्ख्यायुक्ता इति । नैतदेव-म् । सर्वव्यापिनी सङ्ख्या स्यात् । सर्वैर्गवादिभिः सम्पाद्येत । असं-युक्ता केवलैर्माषैः सङ्ख्या । तुल्यवदितराभिर्द्रव्यश्रुतिभिर्माषाः श्रू-यन्ते । कथम् । तिलाश्च माषाश्चेति च-शब्देन तिलैः सहिता माषा इति गम्यते । गवादिभिः सहितानां सङ्ख्यासम्बन्धः । च-शब्दश्रुति-रर्थान्तरसम्बन्धमेषामाह । च-शब्दश्रवणस्यैतत्सामर्थ्यम् । यस्मा-च्च-शब्दः पर उच्चार्यते । तस्यार्थान्तरसम्बन्धं श्रुत्यैवाह, न वाक्येन । यदि हि वाक्येन स्यात्, पुरस्तादप्युच्चार्यमाण एतमर्थं कुर्य्यात् । सङ्ख्या तु वाक्येन सम्बद्ध्यते । यदि च पूर्वं न चार्थोऽवकल्पेत, च-शब्दश्रवणमनर्थकं स्यात् । न हि असावुत्तरकाले सम्बद्ध्यते, सङ्ख्या-सम्बन्धे अभिनिर्वृत्ते । तस्य द्वादशशतं चेति अन्य एवावगम्येत ।

द्वादशशतमन्यच्च किञ्चिदिति । न च तदन्यत् किञ्चिदुच्चार्य्यते । तस्मात् पूर्वं च-योग', पश्चात् सङ्ख्यासम्बन्ध. । समर्थतराणि समानविभक्तीनि, दुर्बलो विविभक्ति. ॥

अपि च समानविभक्तीनि समर्थतराणि । तेषां हि आशुतरा आवृत्तिः । विलम्बिता विविभक्तीनाम् । स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमान्तानि भवन्ति । परपदार्थे षष्ठ्यन्तो विशिनष्टि । तस्मात् समुच्चितानि वा इतरेतरयुक्तानि वा सङ्ख्येयानि सङ्ख्यया सम्बद्ध्यन्ते । समाहारो वैषां सङ्ख्यया युक्तः । तस्मात् सर्वैः संख्या सम्पादयितव्या । किमेवं भविष्यति । सङ्ख्यासम्बन्धे न कश्चिद्वर्ज्जितो भविष्यति । विनिगमनायां हेत्वभावे यमेव सङ्ख्यासम्बन्धो वर्जयेत्, तत्रैव प्रत्ययो बाध्येत । तस्माद्गवादिराशिः सङ्ख्ययैतया सम्बद्ध्येतेति ॥ ४२ ॥

## असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात् क्रतोः ॥ ४३ ॥

नैतदस्ति, सर्वसम्पादनीया सङ्ख्या इति । असंयोगाद्विधिश्रुतौ सर्वसम्पादने सम्बन्धो नास्ति । न श्रूयते, गवादिराशे सङ्ख्या भवतीति । न गवादिराशि. शब्देन निर्दिश्यते, यः सर्वनाम्ना प्रतिनिर्दिश्येत । गवादयस्तु शब्देनोक्ताः । तेन ते सर्वनाम्ना प्रतिनिर्देशमर्हन्ति, न चात्र गवादीनां प्राधान्यमित्युक्तम् । दाक्षिण्येन हि सङ्ख्या सम्बध्यत इति संख्याविशेषणं सर्वनामशब्दः सङ्ख्यां विशेष्टुमुपादीयते । तत्रैकवचनं विवक्षितमेव । तत्रैषां नानाजातीयानां निर्दिष्टानामन्यतमदेकं प्रतिनिर्देशेन सङ्ख्याविशेषणमुपादीयते । तस्मान्नानाजातीयानां निर्दिष्टानामेकं स्यात् । स एकजातीय एव भवति । तस्माद्, एकजाताऽधिकार. इति सूत्रितम् । किमेवं भविष्यति । एवमेकश्रुतिर्न कोपिता भविष्यति । इतरथा वाक्येन द्रव्यस्य भवन्ती प्रवृत्तिविशेषमकुर्वती नाप्रवृत्तिविशेषकरा प्रकरणवशेन क्रतोः कल्पिता भविष्यति । तस्य क्रतोर्द्वादशशतं दक्षिणा इति । तस्माद् एकजातीयस्य द्वादशशतं दक्षिणा इति ॥४३॥ सि० ॥

## शब्दार्थश्चापि लोकवत् ॥ ४४ ॥

अपि च लोकवदेतद् द्रष्टव्यम् । लोके हि निर्विशेषिते सङ्ख्या-

शब्दे उच्चरिते, एकजातीये प्रत्ययो भवति। कुतः?। अन्यथा व्यवहारानुपपत्तेः। असति एकस्मिन् जातिविशेषे, सर्वत्रान्यैः सह परार्द्धसङ्ख्या निविष्टा। परार्द्धस्य चावान्तरसङ्ख्याभिः संव्यवहार क्रियते। येषामेकेन केनचित् सम्बन्धस्तेषां तमेकं सम्बन्धिनमपेक्ष्य सङ्ख्या निविशते। स तत्रैकः सम्बन्धी वक्तव्यः। प्रकृतो वा ग्रहीतव्यः। अर्थाद्वा य आपद्येत, स उपादेय। इह च प्रकृता नानाजातीया। तेषामन्यतमः सङ्ख्यया सम्बद्धः स्यादिति। यथा, शतमाभ्यां दीयतामिति एकजातीयानां शतं, न भिन्नजातीयानाम्। यथा द्रव्यं गुणः कर्मावयव इत्येवमादीनाम्॥ ४४॥ युक्ति॥ ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम्॥ ११॥

## सा पशूनामुत्पत्तितो विभागात्॥ ४५॥

एकजातीयस्य सङ्ख्येत्येतत्समधिगतम्। सा पशूनाम्? उत माषाणामिति अनियमे प्राप्ते उच्यते। पशूनामिति। कुतः। उत्पत्तितो विभागात्। औत्पत्तिकेन विभागेन पशव संव्यवहारेषु सङ्ख्यायन्ते। पञ्चभिरश्वैः क्रीतः, पञ्चभिर्गोभि क्रीत इति। न व्रीह्यादीनामौत्पत्तिकेन विभागेन संव्यवहारेषु संख्या सङ्कीर्त्यते। निगदाऽभिप्राया मानाभिप्राया वा भवति। न हि भवति, पञ्चभिर्माषैः क्रीत इति। पञ्चभिर्माषाणामाढकैर्द्रोणैर्वा कुडवैर्वा खारीभिर्वेति भवति। तत्र आढकादिभिरनुच्चार्यमाणैः साकाङ्क्षमेव वाक्यमपरिपूर्णमप्रमाणमर्थस्य कस्य चित्॥ अथ माषाणामपि औत्पत्तिकेन विभागेन कस्मादिह परिक्रयो न क्रियते? इति। अत्रोच्यते। मूलस्य सतः परिक्रये विशेष उच्यते, द्वादशशतं दक्षिणा इति। न च द्वादशशतं व्रीह्यादिबीजानां, भृतित्वेन ऋत्विजामवकल्पते। त्रिभिः प्रकारैर्भृतिर्भवति-व्यापारतः, फलतो, वचनत इति। व्यापारस्तावन्न माषबीजानां द्वादशशतं भृति। कर्म कुर्वाणा हि कर्मकराः पादिकमप्यहर्लभन्ते। फलानुरूप्यं नैव ज्ञायते। वचनं तु भृतौ सत्यां परिमाणविशेषपरं भवति। यत्र हि पादिकमप्यहर्न लभ्यते, न सा दक्षिणा भवति। न हि सा तस्मिन् कर्मणि दक्षं करोति। स्नेहाद्वा अन्येन वा प्रकारेण कृत्स्नमह कर्म कुर्य्याद्, न व्रीहीणां द्वादशशतेन प्रोत्साहितः॥ आह। य कश्चित् कस्याञ्चिदवस्थायां व्रीहीणां द्वादशशतेन प्रोत्साह्यते, तस्य किं सा दक्षिणा भवेत्?। नेति ब्रूमः। दक्षकरणी

हि दक्षिणा । दक्षश्च बलम् । या न आशितम्भवं करोति, नासौ बलकरणी । तस्माद् या न आशितम्भवा, नासौ दक्षिणा । आशितम्भवाया आधिक्यं वचनस्य विषय ॥ आह । व्रीहिबीजानामपि द्वादशशतं याश्च यावतीं बलमात्रां करोति । अत्रोच्यते । आपेक्षिकमिदं बलं नाम । स एव हि पुरुष. कञ्चित् प्रति बलीयान्, कञ्चित् प्रति अबलः । तत्र यावदाशितम्भवं नास्ति, तावद् अबलता । बलवत्तरो हि आशितेन भवतीति आशितम्भवादूर्ध्वं बलकरणम् । तस्मादाशितम्भवं यद् द्रव्यं, सा भृति., सा दक्षिणा । ततोऽधिकं दक्षिणात्वे सिद्धे वचनप्रामाण्याद् भवति । विक्रुतौ ऋतपेये वचनप्रामाण्यादल्पबलकरणमपि दाक्षिणाया. स्थाने विधीयते सोमचमस । स आश्रयात् सिद्ध्यति । पशवस्तु सर्वे मुख्यबलकरणे समर्थाः । तेषु सत्सु न व्रीह्यादिबीजानि सङ्ख्यया सम्भन्त्स्यन्ते इति ॥ ४५ ॥ सि० ॥

## अनियमोऽविशेषात् ॥ ४६ ॥

यदा पशूनां द्वादशशतं, तदा अनियमो गवादीनां, अन्यतमस्य कस्यचिद् द्वादशशतम् । एवमनियमे लाघवं भविष्यति । प्रयोगप्राशुभावश्च । तत्राधिकारशास्त्रं महाविषयं भविष्यतीति ॥४६॥ पूर्व०

## भागित्वाद्वा गवां स्यात् ॥ ४७ ॥

वाशब्दोऽनियमं व्यावर्त्तयति । गवां द्वादशशतं स्यात् । कुत ? । भागित्वात् । भागवत्यो हि गावो महाभागाः । महति उपकारे वर्त्तन्ते इत्यर्थः । एवमृत्विजामुपकारभूयस्त्वं भविष्यति । ऋत्विजाश्च उपकार कर्त्तव्य । महत्तमे हि ते उपकारे वर्त्तन्ते, उपकुर्वतां चोपकर्त्तव्यमिति सदाचारः । एवं सदाचारोऽनुगृहीतो भविष्यति । यदि महाभागानां भूयसी सङ्ख्या दीयते । गावश्च महाभागा । तस्मात् तासां द्वादशशतम् । अश्वा उपकारकतरा भवेयु । यद्येषां दानप्रतिग्रहविक्रया न प्रतिषिद्ध्येरन् । न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णातीति श्रुति । स्मर्यते च, नाश्वं विक्रीणीते इति । तस्माद् द्वादशशतं गवां स्यात् ॥ ४७ ॥ सि० ॥

## प्रत्ययात् ॥ ४८ ॥

अतश्च गवां सङ्ख्या । कुतः ?। प्रत्ययात् । सङ्ख्यासम्पादनाऽर्थमुपादीयमानेषु प्रकृतेषु ग्रन्थेन उपायेन स्मर्य्यमाणेषु पूर्वं गाव

प्रतीयन्ते । अतस्ताः सङ्ख्यया सम्बद्ध्यन्ते । न च तत्र विरोध कश्चिदस्ति । गोषु सम्बद्धासु न पुनरश्वादय सम्बद्ध्यन्ते । एकजातीयो हि सम्बद्धव्यः । स च सम्बद्ध इति । तस्माद् गवां सङ्ख्या ॥ ४८ ॥

लिङ्गदर्शनाच्च ॥ ४९ ॥

लिङ्गं खलु एतमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह, सहस्रं दक्षिणा । सहस्रं स्तोत्रीया यावदस्य साहस्रस्य उत्तराधरा गौर्गवि प्रतिष्ठिता तावदस्माल्लोकादसौ लोक इति गा. प्राप्ता दर्शयति । तथा तां वा एतां शवलीं समामनन्ति । इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतिरदिति सरस्वति महि विश्रुति, एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं कृतादिति गवामेतानि नामानि । सहस्रतमीञ्च दक्षिणामेवमाह । एतानि ते नामानि इति । यदि सा गौः, एवमेतदवकल्पते । तस्मादपि गवां सङ्ख्या इति ॥४९॥ युक्ति ॥ तस्य द्वादशशतं दक्षिणा इत्यनेन पशुगवसंख्याभिधानाधिकरणम् ॥ १२ ॥

तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ५० ॥

ज्योतिष्टोमे गवादयो दक्षिणा । तत्रैषोऽर्थ. समधिगतः । गवां सङ्ख्या इति । अथेदानीमिदं सन्दिह्यते । किं यस्य यावान् भाग आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, उत परिषदैव विभज्यत इति । किं प्राप्तम् । अनियमो विभज्याविभज्य वा दातव्यम् । एतावद्धि श्रूयते, दातव्यमिति । न, विभज्याविभज्य वेति । तस्मादनियम इति ॥ एवं प्राप्ते ब्रूमः । विभज्य दातव्यमिति । दातव्यस्यैव तद्रूपं, यत् स्वत्वपरित्यागेन परस्वत्वापादनम् । तच्च यजमानेन स्वयं कर्त्तव्यम् । तस्मात् स्वयं प्रयोगे स्यादिति । यो यस्यांश आभजति, स तस्मै अनिर्दिष्टो न शक्यते तेन सम्बन्धयितुम् । तेन यस्तं निर्दिशति स दानमभिनिर्वर्त्तयति । यजमानेन च दानं निर्वर्त्तयितव्यम् । तस्माद् यजमानो विभज्य निर्दिशेत्, प्रदानानां पृथक्त्वात् । असति विभागे न शक्यः स्वेन भागेन सम्बन्धः कर्त्तुम् । तस्माद्विभज्य दक्षिणा दातव्येति ॥ ५० ॥ सि० ॥

परिक्रयाच्च लोकवत् ॥ ५१ ॥

अस्ति च परिक्रयार्थं दानं, न धर्ममात्रम् । परिक्रयार्थश्च भर्त्रा भृत्येन सह पणितव्यम् । यदि च परिषदं प्रत्युच्येत, परिषच्च वि-

भजेत, न स्वामिना सह अपणिष्यत । तत्र परिक्रय एव नाभविष्यत् । यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते । तेभ्यः स्वामी विभज्य निर्दिशति, इदं तुभ्यमिदं तुभ्यमिति । तद्वदिहापि द्रष्टव्यम् । तस्माद्विभज्य दक्षिणा दातव्येति ॥५१

## विभागश्चापि दर्शयति ॥ ५२ ॥

अपि च दर्शयति विभागं, यद् विभागाभिधायिनं मन्त्रमामनन्ति । तुथो वो विश्ववेदा विभजतु इति । कृष्णाजिनेन वित्रास्य दक्षिणां ददातीति । तथा अग्नीधेऽग्रे ददाति, अग्निमुखानेव पितॄन् प्रीणाति । ब्रह्मणे ददाति प्रस्तृतेभ्यो ददाति प्रस्तुत्यै । होत्रे ददाति । नेष्ट्रे ददाति । हविर्द्धाने आसीनेभ्य अध्वर्युभ्यो ददाति । उद्गातृभ्यो ददाति । अन्तःसदसि आसीनेभ्यो यथाश्रद्ध प्रासर्पकेभ्यो ददातीति । एवं विभागदर्शनमुपपद्यते । तस्माद्विभज्य दातव्यमिति ॥ ५२ ॥ युक्ति॰ ॥ विभज्य गोदक्षिणाया दानाधिकरणम् ॥ १३ ॥

## समं स्यादश्रुतित्वात् ॥ ५३ ॥

ज्योतिष्टोमे समाम्नायते, गौश्चाश्वश्च अश्वतरश्चेति । तत्रायमर्थः समधिगत । विभज्य दातव्यमिति । इदमिदानीं सांशयिकम् । किं समो विभागः, उत कर्मकृतं वैषम्यम् । उत शब्दकृतम् ? इति । किं प्राप्तम् । समो भागः स्याद् अश्रुतित्वाद् विशेषस्य । यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति । कथमिव । एकस्मै सर्वं दातव्यं प्राप्नोति । यद्यपरस्मै दातव्यं न भवति । तत्र यावति एकस्मै दीयमाने नान्यः संविभज्यते, तावत् तस्मै एकस्मै न दातव्यम् । अविशिष्टं दातव्यम् । एवमेकैकस्मै । तस्माद्विशेषाश्रवणात् समं देयमिति ॥ ५३ ॥

## अपि वा कर्मवैषम्यात् ॥ ५४ ॥

अपि वेति पक्षव्यावृत्तिः । न समं स्यात् । कर्मकृतं वैषम्यं भवेत् । यो बहु कर्म करोति, तस्मै बह्वी भृतिर्दीयते । तस्मात् कर्मानुरूप्येण वैषम्यमिति ॥ ५४ ॥ पूर्व० ॥

## अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥

न चैतदस्ति, कर्मकृतं वैषम्यमिति । किं तर्हि । उपकारकृत् । स उपकार श्रुत्या विज्ञायते । तस्माच्छ्रुतिकृतं वैषम्यम् । तेन अतुल्याः परिक्रये भवेयुः । विषमा हि एषामाख्या । केचिदर्द्धिनः, केचित् तृतीयिन, केचित् पादिन । येषामर्द्धं ते अर्द्धिनः । कथं च तेषामर्द्धं भवति ? । यदि तेभ्यः अर्द्धं दीयते । एवं तृतीयिनः, पादिन इति च दीक्षा विधिश्रुतौ समाख्यायन्ते । सा परिक्रयात् कर्मकृते वैषम्ये नोपपद्यते । क पुनरयं विशेषो दृश्यते । अभ्युदये । अभ्युदय इति अभ्युदयफलम् । ऋद्धिफलं द्वादशाहं ब्रूम. । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्द्धिनो दीक्षयति । ब्रह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातु', मैत्रावरुणं होतु । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । अग्नीधं ब्रह्मण., प्रतिहर्त्तारमुद्गातु', अच्छावाकं होतुः । ततस्तम् उन्नता दीक्षयित्वा पादिनो दीक्षयति । पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातु', ग्रावस्तुतं होतुः । ततस्तमन्यो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषित इति । अर्द्धिनस्तृतीयिन., पादिन इति द्वादशाहे अनुवाद । यदि प्रकृतौ यथासमाख्यममीषामिमे भागास्ततो द्वादशाहे दर्शनमुपपद्यते । तस्मादर्द्धादिभि. समाख्यानात् समाख्याश्रुतिकृतं वैषम्यं भवितुमर्हतीति ॥५५॥ सिद्धान्तः ॥ ज्योतिष्टोमे समाख्याऽनुसारेण दक्षिणाविभागाधिकरणम् ॥ १४ ॥

**तस्य धेनुरिति गवाम्प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारः स्याद्यथेष्टिर्गुणशब्देन ॥ ५६ ॥**

इदमामनन्ति, अथैष भूर्वैश्वदेवस्त्रिवृदेव सर्वस्तस्य विश्ववत्यस्तोत्रीया धेनुर्दक्षिणा इति । अत्र सन्देहः । किं धेनुर्गवां निवर्त्तिका, उत कृत्स्नाया दक्षिणाया इति । तत्रेदं तावत् परीक्ष्यम् । किं प्रकृतौ विभक्तं दाक्षिण्यम्, उत समस्तमिति । तत इदं तच्च संहत्याधिकरणं क्रियते । किं प्रकृतौ विभक्तं दाक्षिण्यं, धेनुर्गवां निवर्त्तिका ? उत अविभक्त, कृत्स्नाया दक्षिणाया निवर्त्तिका ? इति किं प्राप्तम् । तस्य धेनुरिति श्रूयमाणे ब्रूमः । धेनुर्गवां निवर्त्तिका इति ॥

तत एतत्तावद् विचार्यते । प्रकृतौ विभक्तं दाक्षिण्यमिति । किमिदं विभक्तमिति । गवादीनामेकैकं द्रव्यं दक्षिणा इति । कथम् ।

गौश्च अश्वश्च अश्वतरश्च दक्षिणा इति प्रकृतौ गवादिभिर्दक्षिणा-शब्द प्रत्येकं परिसमाप्यते। निर्दिष्टा हि गवादयो, न तेषां समुदाय। चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः। परपद-विशेषणार्थं तु समुच्चयमुपादत्ते। यदि हि निर्दिशत्, क्रियागुणै. स-मुच्चयः सम्बद्ध्येत। समुच्चयः शोभन, समुच्चयो द्रष्टव्य इति यथा भवति; एवं, च शोभनः, च द्रष्टव्य इति वा भविष्यति। तथा यथेह समुच्चययो षष्ठी भवति, धवखदिरयोः समुच्चय इति। एवं धवः खदिरश्चेत्यत्रापि अभविष्यत्। न तु भवति। तस्माच्च चशब्दः समुच्चयं निर्दिशति। श्रुत्या निर्दिष्टेन च एकवाक्यता न्याय्या, न गवादिलक्षितेन समुदायेन। तस्माद् गौर्दक्षिणा, अश्वो दक्षिणेत्येवं सम्बन्ध.। लक्षयित्वा हि गवादींस्तेषां दक्षिणात्वं विधीयते। तच्च गुण-भूतं प्रतिप्रधानं भिद्येत। चशब्दश्चैवं समर्थितो, भविष्यति गौर्दक्षिणा अश्वश्च दक्षिणा इति। न गौरश्वादिसहितो गवादीनां वा समाहार इति॥ यदि विभक्तं दाक्षिण्यं, तदा प्राप्ता गौर्दाक्षिण्ये। पुनर्विशेषा-ऽर्थमुच्चार्यते, धेनुर्दक्षिणा इति। याऽसौ गौर्दक्षिणा सा धेनुरिति अन्यासां दक्षिणानामविकारेण, यथाप्रकृतिभावेन चोदकानुग्रहो भ-विष्यति। शब्देनैव गवि एष गुण उच्यते धेनुत्वं नाम। गौरेव हि धेनुर्नान्या। यथेष्टिर्गुणशब्देन, सौर्यं निर्वपेदिति सूर्यसम्बन्धं कुर्या-त्। द्रव्यस्येति विवक्षिते निर्वपणाश्रय एव प्रयोग. शब्देन निर्दिश्यते इति। सनिर्वपणकात् प्रयोगादनेन निर्वपणशब्देन पेष्टिको विधयन्तो नियम्यते। एवमिहापि गोर्गुणवचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या दक्षिणा विक्रियते इति॥ ५६॥ पूर्व०॥

**सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तस्मात् समवायाद्धि कर्मभिः॥ ५७॥**

वाशब्द. पक्षं व्यावर्त्तयति। सर्वस्य क्रतुदाक्षिण्यस्य निवर्त्ति-का धेनुरिति प्रतिज्ञायते। तत्रैतद्वर्ण्यते समस्तं दाक्षिण्यमिति। कि-मिदं समस्तं दाक्षिण्यम्? इति। न प्रतिद्रव्यं दक्षिणाशब्दः सम्ब-द्ध्यते, गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति। कथं तर्हि गवादयो दक्षिणेति। न हि गवादीनुद्दिश्य, दक्षिणासम्बन्धो वि-

धीयते । ये गवादयस्ते दक्षिणा इति । तथा हि दक्षिणाशब्दो गवादीन् दक्षिणासम्बन्धविधानार्थं यौगपद्येन अन्तर्गतसम्बन्धमभिवदन् बहुवचनान्त' स्यात् । गवादयो दक्षिणा इति । यथा अग्नीषोमौ देवते प्राणापानौ अभिसमभवतामिति । गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । कथं तर्हि, दक्षिणामुद्दिश्य गवादयो विधीयन्ते । का दक्षिणा । गवादय इति । दक्षिणा नाम दक्षतेरुत्साहकर्मणः । दक्षिणा उत्साहिका इति । एक स गुणः । स च प्राधान्येन विवक्षितः । तद्विशेषणत्वेन गवादय । गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानामाश्रितगुणवशेन । यथा विश्वे देवा देवता इति । का पुनर्दक्षिणा । गौश्च अश्वश्च अश्वतरश्चेति दक्षिणाशब्दो दाने सम्बद्ध्यते । ऋत्विग्भ्यो ददातीति, न गवादय. । एको हि दक्षिणानामर्थ । ऋत्विजामानमनम् । सकृच्च आनतास्ते भवन्ति, भूय आनमनेन अर्थो नास्ति, गवादीनामपि गुणानामेकं कार्य्यं दक्षिणात्वम्॥यदा समस्तं दाक्षिण्यं, तदा विकृतौ भुवि तस्मिन् प्राकृते अर्थे धेनुः श्रुतिभूता । सा च प्राकृतं कार्यमभिनिर्वर्त्तयति । क्रतुसंयोगेन हि श्रूयते तस्य क्रतोर्धेनुर्दक्षिणा इति । तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्त्तते । तया समवायाद्धि कर्मभिर्ऋत्विजः सम्बद्ध्यन्ते श्रुतिभूतया ॥अपि च चशब्दश्रुतया ससहायं गोद्रव्यमिति प्रतीयते । दक्षिणासम्बन्धोऽस्य वाक्येन । श्रुतिश्च वाक्याद् बलीयसी । तस्मात् पूर्वं चयोगः, पश्चात् दक्षिणासम्बन्ध !इतरेतरयुक्ता दक्षिणात्वेन सम्बद्ध्यन्ते गवादयोऽर्था. । तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिका धेनुरिति ॥५७॥ सि० ॥

**चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥**

यदुक्तं, यथेष्टिर्गुणशब्देनेति । अत्रोच्यते, आग्नेयोपांशुयाजाग्नीषोमीयानां प्राकृतानां सौर्य्यार्यमणप्राजापत्यनैर्ऋतीनां चोदनानां न किञ्चिद् एकं कार्य्यं, यद्वैकृती चोदना आश्रयेत् । तत्र वक्ष्यते, एकस्य कर्मणो वैकृतं कर्म विध्यन्तं गृह्णातीति । तत्र कस्य ग्रहीष्यति ? इति सन्देहे युक्तो लिङ्गेन नियम । इह तु अदिष्टो हेतुः । गवादीनामेकं कार्य्यं दक्षिणात्वम, । तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तान् निवर्त्तयितुमर्हतीति ॥ ५८ ॥ आ० नि० ॥ भूनामैकाहे, तस्य धेनुरित्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥ १९ ॥.

## एका पञ्चेति धेनुवत् ॥ ५९ ॥

यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे पञ्च गा इति। अत्र सन्देहः। एका पञ्च च गावः श्रूयमाणाः किं कृत्स्नस्य क्रतु-दाक्षिण्यस्य निवर्त्तिकाः? उत गवामिति। किं प्राप्तम्। एका पञ्चेति धेनुवत्। यथा धेनुः कृत्स्नस्य निवर्त्तिका, एवमेका पञ्च च भवेयुः। दक्षिणासम्बन्धो हि तासां प्रत्यक्षः श्रूयते। तेन ताः प्राकृतीनां कार्यमभिनिर्वर्त्तयन्ति, प्राकृत्यश्च आनुमानिक्यो निवर्त्तन्त इति ॥ ५९ ॥ पूर्व० ॥

इदं तावदपर्य्यवसितं तिष्ठतु। अथाधिकरणान्तरं प्रस्तूयते—

## त्रिवत्सश्च ॥ ६० ॥

अस्ति साद्यस्के साण्डस्त्रिवत्स सोमक्रयण स्पर्द्धमानानामिति। सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि। अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति इत्येवमादीनि। तत्र संशय। किं त्रिवत्स ऋषभस्य निवर्त्तकः? अथ वा सर्वेषां क्रयार्थानां द्रव्याणामिति। किं प्राप्तम्। ऋषभस्य निवर्त्तक इति। कुत। पुङ्गवत्वात्। पुङ्गवत्वेन सामान्येन, पुङ्गवोऽसौ विधीयते। कुत. पुङ्गवत्वम्?। साण्डश्रवणात्। तस्माद् ऋषभस्य निवर्त्तक इति ॥ एवं प्राप्ते ब्रूमः॥ त्रिवत्सश्च॥ किम्?। कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति। प्रत्यक्षः स क्रीणातिना सम्बद्ध्यते, तेन चोदकप्राप्तं निवर्त्तयति। तस्मात् कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति ॥ ६० ॥

## तथा च लिङ्गदर्शनम् ॥ ६१ ॥

एवञ्च कृत्वा लिङ्गं दर्शयति। किं लिङ्गं भवति?। एवमाह। अपरस्मिन् साद्यस्के स्त्री गौ. सोमक्रयणी व्यावृत्ता ह्येषां स्पर्द्धा इति। यदि सर्वस्य क्रयार्थस्य निवर्त्तिका स्त्री गौः, ततः सैव एकाकिनी केन सह स्पर्द्धिष्यते? इति। इतरथा सर्वस्यानिवर्त्तिकायां सङ्घस्य स्पर्द्धा भवेत्। तत्रास्यां वर्त्तमानायां स्पर्द्धायां व्यावृत्ता ह्येषां स्पर्द्धा इति नोपपद्यते। तस्मात् सर्वस्य निवर्त्तिकेति। त्रिवत्सोऽपि तत्समानश्रुतिः। सोऽपि च सर्वस्य निवर्त्तक इति ॥

एवं वा, यदि त्रिवत्सः सर्वेषां निवर्त्तकस्तदा तमपबाधमाना

साद्यस्क्रान्तरे स्त्रीगवी श्रूयमाणा केवला स्यात्। तत्र व्यावृत्ता ह्येषां स्पर्द्धा इति दर्शनमुपपद्यते। इतरथा हि केवलस्य ऋषभस्यापबाधितारं त्रिवत्सं निवर्त्तयन्ती सङ्घमध्यपतिता स्पर्द्धेताऽपि। तत्र व्यावृत्ता ह्येषां स्पर्द्धा इति वचनं नावकल्पते। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकस्त्रिवत्स इति॥ ६१॥ युक्तिः॥ साद्यस्क्रे त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम्॥ १६॥

तत्र एवमन्तरागर्भिणीन्यायो भवतीति अन्यथा सूत्रं वर्ण्यते। इतश्च एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिका त्रिवत्सश्च। तथा च लिङ्गदर्शनम्। एवमेतत्समानश्रुतिस्त्रिवत्सोऽपि सर्वस्य निवर्त्तकः प्राप्नोति। तदैतद्दर्शनमुपपत्स्यते। व्यावृत्ता ह्येषां स्पर्द्धा इति॥

## एके तु श्रुतिभूतत्वात् सङ्ख्यया गवां लिङ्गविशेषेण॥ ६२॥

स्थितादुत्तरम्। यदुक्तम्, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिकेति। एतन्न। एके तु अर्था निवर्त्तन्ते, एके गावो निवर्त्तन्ते, अश्वादयो न निवर्त्तन्ते। एका देया पञ्च देया इति य एष नियम, स गोविषय। कुतः। गोविशिष्टया सङ्ख्यया सम्बन्धात्। यदेतद् एकां ददाति पञ्च ददातीति। नैवमभिसम्बन्धः क्रियते। एकां दक्षिणां ददातीति। कथं तर्हि एकां गामिति। गोसङ्ख्यासम्बन्धो हि मुख्यत्वाद् बलीयान्॥

अपिच गोशब्देन सह संख्यायाः प्रत्यक्ष सम्बन्ध। गोशब्दव्यवधानात् परोक्षो दक्षिणाशब्देन। गोशब्दश्चैवं मुख्यार्थो भवति। इतरथा लक्षणा स्यात्। एकां गामश्वादि चेति। तेन गवां लिङ्गविशेषेण सङ्ख्या गोषु निविशते। एवञ्च सर्वेषामनिवृत्तावश्वादीनां यथा प्रकृतिभावे चोदकानुग्रहो भविष्यति। तस्मादेका पञ्च च गवां निवर्त्तिका इति॥ ६२॥ सिद्धान्तः॥ यस्य सोममपहरेयुरित्यादौ, एकां गामित्यादिना गोगतसंख्याबाधाधिकरणम्॥ १७॥

## प्राकाशौ तथेति चेत्॥ ६३॥

अश्वमेधे श्रूयते, हिरण्मयौ प्राकाशावध्वर्य्यवे ददातीति। तत्रैषोऽर्थः सांशयिक। किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ? उताध्वर्युभागस्य निवर्त्तकाविति। कुत संशय। इह प्राकाशा-

वित्येष यदि ददातिना सम्बद्ध्यते, ततः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः । अथाध्वर्युणा, तदा अध्वर्युभागस्य । किं प्राप्तम् । कृत्स्नस्येति । तत्र एतद्वर्ण्यते, प्राकाशाविति शब्दो ददातिना सम्बद्ध्यत इति । कुतः । एवं ददातिसम्बन्धविधाने श्रुतिरनुगृहीता । अध्वर्युणा सम्बन्धे वाक्यम् । अपि च प्राकाशाविति द्वितीया कारकविभक्तिः सामर्थ्यादेवाख्यानेन सम्बद्ध्यते, न नाम्ना । तस्माद् ददातिना सम्बन्धः । अध्वर्युसम्बन्धे चाध्वर्युशब्दात् षष्ठी अभविष्यत् । तस्मादपि ददातिना सम्बन्धः । ददातिं लक्षयित्वा प्राकाशौ विधीयेते । तत्र न शक्यो ददातिरध्वर्युणा विशेष्टुम् । वाक्यं हि तदा भिद्येत । अपि च विशेषणे सत्यपि यदि ददातिरविशिष्ट पदान्तरेण सम्बद्ध्यते, अविशिष्ट एव कार्ये प्राप्नोति । प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि । तस्माद् योऽध्वरं युनक्ति, सोऽध्वर्युरिहाभिप्रेतः । अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ प्राकाशाविति ॥ ६३॥पूर्व०॥

## अपि त्ववयवार्थत्वाद् विभक्तप्रकृतित्वाद् गुणेदन्ताविकारः स्यात् ॥ ६४ ॥

अपि त्विति पक्षव्यावृत्तिः । दक्षिणावयवकार्यार्थौ प्राकाशौ, न कृत्स्नदक्षिणाकार्यार्थौ । विभक्ता हि तेषां भागा अध्वर्य्वादीनाम् । अयमध्वर्योभागः, इमे अन्येषामिति । तस्माद् गुणेदन्ताविकारः स्यात् । किमिदं गुणेदन्ताविकार इति । गुणस्य इदन्ता गुणेदन्ता । इदम्भाव इदन्ता । गुणेदन्ताया विकारो गुणेदन्ताविकारः । अध्वर्योर्भागस्य निवर्त्तकौ प्राकाशौ । कथमिव । एकमिदं हि वाक्यम् । हिरण्मयौ प्राकाशौ इति । नेयं प्रथमा, नापि दक्षिणाशब्देन सम्बन्धो, येन दक्षिणाकार्ये वर्त्तेयाताम् । का तर्ह्येषा । द्वितीया, ददातिनैव सम्बद्ध्यते । तदेकं वाक्यं, हिरण्मयौ प्राकाशावध्वर्यवे ददातीति । अध्वर्युसम्प्रदानकेन ददातिना एतयोः सम्बन्धः । तस्मात्तत्राध्वर्युददातिभागं निवर्त्तयतः । यद्वा सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते । दृष्टार्थत्वादध्वर्योरन्यान् आनत्यर्थान् प्रत्याख्यास्यति ॥

अथ यदुक्तं, प्राकाशयोर्ददातिसम्बन्धो विधीयत इति । तथा हि श्रुतिरनुगृहीता भविष्यतीति । नासौ वाक्यानपेक्षिणी श्रुतिः । असति ददातिना आनन्तर्ये नावकल्पते । यदप्युच्यते, कारकविभक्ति-

राख्यातेन सम्बन्धयोग्या इति । योग्यत्वं दर्शनेन बाध्यते । दृश्यते त्वानन्तर्यं प्राकाशयोरध्वर्युशब्देन । यदप्युक्तं, तत्सम्बन्धे षष्ठी अभविष्यदिति। सत्यं प्राप्नोति षष्ठी, न तु तदभावे सम्बन्धो नास्ति अध्वर्य्युणा। गम्यते हि स वाक्येन । आह । चतुर्थीश्रुतिरत्र या, सा वाक्यमपबाधिष्यते इति। न अविधीयमाना बाधितुमुत्सहते। कथं तर्हि अविधित्सिते सम्प्रदाने श्रूयते ? इति। सामर्थ्यप्राप्तस्याऽनुवादेनेति। तस्माददोषः। उक्तं वा सर्वविशेषणविशिष्टं दानं विधीयत इति । एवमन्येषामनिवृत्तौ यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति। तस्मादध्वर्युभागस्य निवर्त्तकौ प्राकाशाविति ॥ ६४ ॥ सिद्धान्त ॥अश्वमेधे प्राकाशावित्यनेनाध्वर्युभागबाधाधिकरणम्॥१८॥

**धेनुवच्चाश्वदक्षिणा, स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥**

अस्ति उपहव्यः, उपहव्यो अनिरुक्तस्तेनाभिशस्यमानं याजयेत्। अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथन्तरसामाश्वः श्वेतो दक्षिणा। उपहव्यो निरुक्त । तेनाभिशस्यमानं याजयेत् । उक्थ्यो यज्ञ सप्तदशस्तोमो बृहत्पृष्ठः अश्व श्यावो रुक्मललाटो दक्षिणा । तत्र श्रूयते, स ह्यनिरुक्त स ब्रह्मणे देय इति । तत्र सन्देहः । किमश्वो ब्रह्मभागस्य निवर्त्तक ? उत कृत्स्नस्य क्रतुदाक्षिण्यस्येति । किं प्राप्तम्। ब्रह्मभागस्य निवर्त्तक इति। कुतः । कर्तृसम्बन्धाद् अवयवाऽर्थत्वाद् विभक्तप्रकृतित्वाच्च गुणेदन्ताविकारः स्यात् । स्रग्वत्। यथा, स्रजमुद्गात्रे ददातीति उद्गातृभागस्य निवर्त्तिका स्रक्, न कृत्स्नस्य क्रतुदाक्षिण्यस्य। एवमिहापीति ॥ एवं प्राप्ते ब्रूमः। धेनुवद् अश्वदक्षिणा स्यात्, कृत्स्नस्य निवर्त्तिका इति। कुतः। दक्षिणाशब्दसम्बन्धात्। अश्व. श्यावो रुक्मललाटो दक्षिणा इति प्रत्यक्षश्रुतेनाश्वेन आनमनं कर्त्तव्यम् । एवञ्चेद् आनुमानिकं निवर्त्तितुमर्हति। ननु कर्तृसम्बन्धोऽस्य श्रूयते, स ह्यनिरुक्तः स ब्रह्मणे देय इति। उच्यते। एकेन वाक्येन देशकप्राप्तानां निर्वृत्ति । द्वितीयेन वाक्येन विनिवृत्तौ सत्यां पुरुषापनय क्रियते। यथा, हिरण्यस्य सर्वं ब्रह्मणे परिहरतीति। तस्मात् कृत्स्नस्य निकर्त्तकोऽश्व इति ॥६५॥सि०

**एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६६॥**

अथ यदुक्तम्- एके अर्था निवर्त्तन्ते, कर्तृसंयोगाल्लिङ्गविशेषेण स्रग्वदिति । तत् परिहर्त्तव्यम् ॥ ६६ ॥ आ० ॥

**अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥**

अपि वेति पक्षव्यावृत्ति । तदधिकाराद्दक्षिणाधिकाराद्दक्षिणा-शब्देन दक्षिणामधिकृत्याश्वसम्बन्ध कृतः । तस्मात् कृत्स्नदक्षिणा-विकारोऽश्व. । अतो हिरण्यवदेव भवति, न स्रग्वत् ॥६७॥ आ० नि० उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम् ॥ १५ ॥

**तथा च सोमचमसः ॥ ६८ ॥**

ऋतपेये श्रूयते, औदुम्बर सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देय इति । तत्र सन्देहः । किं ब्रह्मभागस्य निवर्त्तकः सोमचमसः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य ? । किं प्राप्तम् । तथा सोमचमस. स्यात् । यथा स्रग् उद्गात्रे तद्भागस्य निवर्त्तिका, उद्गातृसंयोगात् । एवं ब्रह्मसंयोगाद् ब्रह्मभागस्य निवर्त्तक सोम-चमस ॥ ६८ ॥ पूर्व० ॥

**सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् ॥६९॥**

वाशब्दः पक्षं व्यावर्त्तयति, न ब्रह्मभागस्य निवर्त्तक. । किं तर्हि कृत्स्नस्य क्रतुदाक्षिण्यस्य । कथमवगम्यते । पशुप्रतिषेधानुवादात् । एवमाम्नायते, ऋतं वै सोमोऽनृतं पशवो यत् पशून् दद्यात् सोऽनृतं कुर्यात् । औदुम्बरः सोमचमसो दक्षिणा इति । पशुदानमपोद्य सोमचमसो विधीयते । य पशून् दद्यात् तस्यैष दोषो भवेत् । एतस्मान्न पशवो दातव्या इति वक्तव्ये तमेवार्थमुक्तं मन्यमान. । सोमचमसो दक्षिणा इत्याह । सोमचमसदानेन पशवो न दीयन्त इति गम्यते । तदेवं कृत्स्नस्य निवर्त्तकोऽवकल्पते । ब्रह्मदानस्य निवर्त्तके सति अन्येभ्य. पशवो दीयेरन् । तस्मात् कृत्स्नस्य निवर्त्तक इति ॥ ६९ ॥ सि० ॥

**ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥**

इति चेत् पश्यसि पशुदानविप्रतिषेधात् कृत्स्नस्य क्रतुदाक्षिण्य-स्य निवर्त्तक इति । ब्रह्मदानेऽप्येतदवकल्पते । ब्रह्मणे सोमचमसो देयः । य पशून् दद्यात् स ब्रह्मणे इति गम्यते । तस्मान्न नियोगतः कृत्स्नस्यैव क्रतुदाक्षिण्यस्य निवर्त्तके पशुप्रतिषेधानुवादोऽवकल्पते ।

ब्रह्मणे दानेऽपि तदुपपद्यते इति ॥ ७० ॥ आ० ॥

**उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥**

न चैतदस्ति, ब्रह्मभागस्य निवर्त्तकः सोमचमस इति । कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः स्यात् । अस्य सोमचमसस्य य उत्सर्गः, स क्रत्वर्थः स्यात्।दक्षिणाशब्देन हि सम्बद्ध्यते, सोमचमसो दक्षिणा इति । न च प्रकृतावेकैको गवादिर्दक्षिणा । उक्तमेवेदं, गवादीनां समुदाये दक्षिणाशब्द इति । तदेवं सोमचमसदानेन प्रतिषिद्धेषु पशुषु यदि ब्रह्मदानेऽप्येतदविशिष्टमिति कृत्वा अन्येभ्यः पशवो दीयेरन् प्रतिषिद्धं क्रियेत । यो हि ब्रह्मभागो न सा दक्षिणा । दक्षिणावयवो हि सः । दक्षिणावयवे दक्षिणाशब्दो निविशमानो गौण स्यात् । न च विद्यमाने मुख्ये गौण उपादीयते । सोमचमसस्य हि प्रयोजनं दक्षिणानिवृत्तिः । सर्वेषाम् ऋत्विजाम् आनमनं प्रयोजनं दक्षिणानां न ब्रह्मदानम् । तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः सोमचमस इति ॥ ७१ ॥ आ० नि० ॥

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥**

**सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥**

प्रयोजनसूत्रद्वयमिदम् । यदि तु ब्रह्मभागस्य निवर्त्तकः सोमचमसः, ततो ब्रह्मभागोना सा दक्षिणा । एतेन विकारेण अन्या दीयेरन् यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्त, तथा सर्वं निवर्त्तते । तस्मिन् निवर्त्तिते, ततः पुरुषापनय क्रियते । स ब्रह्मणे देय इति । तासां दक्षिणानां क्रतुप्रधानत्वं भवति । सर्वर्त्विगानमनेन हि क्रतुः सिद्ध्यति, न ब्रह्मानत्या केवलया। सोमचसेन च सा सर्वानतिः कृतेति नान्यत् किञ्चन दीयेत । एतत्प्रयोजनं भवत्येव पक्षोक्तं यथोपवर्णितमिति ॥ ७२ ॥ ७३ ॥ ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम् ॥ २० ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा—

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥**

ऋतपेये श्रूयते, औदुम्बरः सोमचमसो दक्षिणा । स प्रियाय

सगोत्राय ब्रह्मणे देय इति। तत्रैषोऽर्थः सांशयिकः । किं ब्रह्मभागेनोनं दातव्यम् ? उत सोमचमस एव केवलो दातव्य इति । ननु सोमचमसो दक्षिणेत्येष सम्बन्ध इत्युक्तम् । तत्रोच्यते । सोमचमसो ब्रह्मण इत्येष सम्बन्ध इति कृत्वा चिन्ता। यद्येवं, ब्रह्मण. सोमचमस इति सम्बन्धो विवक्षित', सोमचमसेन ब्रह्मभागो निवर्त्तितोऽवशिष्टं दातव्यं तदूनो विकार स्यादिति ॥ ७२ ॥ पूर्वं० ॥

## सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥

सर्वं वा सोमचमसेन निवर्त्त्येत । कुत । सोमचमसो दक्षिणा इत्येष सम्बन्ध. प्रत्यक्ष । तेन निवर्त्तिते सर्वस्मिन् दाक्षिण्ये पुरुषापनय एव क्रियते। तासां क्रतुप्रधानत्वात्। दक्षिणानां सोमचमसो य. क्रतुदक्षिणा, स सर्वं क्रतुदाक्षिण्यं निवर्त्तयतीति ॥ ७३ ॥ सिद्धान्तः ॥ सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ॥२०॥ वर्णकान्तरम् ॥

## यजुर्युक्ते त्वध्वर्योर्दक्षिणा विकारः स्यात् ॥ ७४ ॥

अस्ति वाजपेयः । तत्रेदं समाम्नायते, यजुर्युक्तं रथमध्वर्य्यवे ददातीति। तत्रायमर्थः सांशयिक. । किं यजुर्युक्तोऽध्वर्य्योर्भागस्य निवर्त्तक ? किं भागे नियम इति। किं प्राप्तम्। यजुर्युक्ते दक्षिणा तु अध्वर्योर्विकारः स्यात्। तुशब्दः संशयव्यावृत्त्यर्थ. । न खलु संशयोऽस्ति। यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते। स रथोऽध्वर्युभागं निवर्त्त्य कृतार्थोऽवशिष्टानां चोदकप्राप्तानां निवृत्तिं न शक्नोति कर्त्तुम्। नैवमभिसम्बन्धः क्रियते। यजुर्युक्तं रथं वाजपेये ददातीति। येन क्रतुसंयोगो गम्यते । कुतः। प्रकृतो हि वाजपेयः। अध्वर्यु. पुनर्वाक्येन श्रूयते। वाक्यं पुन. प्रकरणाद् बलीयः। तस्मादध्वर्युभागस्य निवर्त्तको रथ इति ॥ ७४ ॥

## अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्यते ॥ ७५ ॥

अपि वेति पक्षव्यावृत्ति । श्रुतिभूता हि सर्वे रथाः सामान्येन वचनेन। सप्त सप्तदशकानि ददातीति । सप्तदश रथाः, सप्तदश निष्का. सप्तदश दास्यः, सप्तदश च युग्मानि, सप्तदश गवां शतानि, यवसो वयस्यश्च सप्तदश इति । तेनाविशेषेण सप्तदश रथाः

सर्वेषां प्राप्ता विभक्तव्याः । तत्र न ज्ञायते कस्य को रथः ?, तत्राध्वर्योर्यजुर्युक्तः पक्षे प्राप्त. स नियम्यते । यजुर्युक्तमध्वर्यवे ददाति, न अन्यं, न चान्यस्मै । एवम् ऋग्भिर्युक्त होत्रे, नान्यं, न चान्यस्मै । सामभिर्युक्तमुद्गात्रे ददाति, नान्यं, न चान्यस्मै । तत्र पक्षे विधानार्थं यजुर्युक्तग्रहणं, न अध्वर्य्योर्भागं निवर्त्तयितुमुत्सहते । तस्याऽनिवृत्तौ चोदकानुग्रहो भविष्यति । तस्मादध्वर्य्योर्भागे रथो नियम्यते, न तद्भागं निवर्त्तयतीति ॥ ७५ ॥ वाजपेये रथस्य भागनियामकताधिकरणम् ॥ २१ ॥ ॥ इति श्रीभट्टशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य तृतीयः पादः ॥ १० ॥ ३ ॥

अथ दशमाध्याये चतुर्थ पाद. ॥ १० ॥ ४ ॥

## प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

अस्ति अग्नि , य एवं विद्वानग्निं चिनुते इति । तत्र नक्षत्रेष्टिः । अग्नये कृत्तिकाभ्य पुरोडाशमष्टाकपालं निर्वपेत् । सोऽनु जुहोति । अग्नये स्वाहा, कृत्तिकाभ्य' स्वाहा, अम्बायै स्वाहा, नियतये स्वाहा, अभ्रपत्यै स्वाहा, निवर्गपत्यै स्वाहा, निपुणिकायै स्वाहा इति । सन्ति तु प्रकृतौ नारिष्ठहोमाः । नारिष्ठान् होमाञ्जुहोतीति । तत्र संशयः । किं नारिष्ठहोमानां निवृत्तिः, अथवाऽनिवृत्ति , समुच्चयः ? इति । तथा श्येने श्रूयते, लोहितोष्णीषा लोहितवसना निवीता ऋत्विज. प्रचरन्तीति। अस्ति प्रकृतौ, निवीतं मनुष्याणां प्राचीनावीत पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते इति । तदिह चोदकेन प्राप्तम् । तत्र संशय । किमुपवीतस्य निवृत्ति. ? उतानिवृत्ति , समुच्चय ? इति । तथा पृष्ठ्ये षडहे श्रूयते । मध्वाशयेद् घृतं वेति । अस्ति तु प्रकृतौ, पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति । तदिह चोदकेन प्राप्तम् । तत्र संशयः । किं तस्य निवृत्तिः ? उतानिवृत्तिः समुच्चयः ? इति ॥ किं प्राप्तम् । तस्य निवृत्तिरिति । प्रत्यक्षश्रुता उपहोमादयश्चोदकप्राप्तानामानुमानिकानां निवर्त्तका इति । अपि च प्रकृतिलिङ्गसंयोगो भवति, जुहोति, निवीताः, प्रचरन्ति, आशा-

येदिति । यथा, शरमयं बर्हिर्भवतीति शराः कुशान्निवर्त्तयन्ति ॥

एवं प्राप्ते ब्रूम , अनिवृत्तिः , समुच्चय इति । कुतः । प्रकृतिलिङ्गाऽसंयोगात् । प्रकृतेन लिङ्गेन कार्येण संयोग एषामुपहोमादीनां नास्ति । स हि प्रत्यक्षदर्शनेन वा भवति । यथा नैवारश्चरुरिति । अभावे विधानेन वा भवति । यथा, जुहूषा वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः सन्तिष्ठते । न बहु वदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयाद् मधु आशयेद् घृतं वा इति । विकारेण वा । यथा, नैर्ऋतश्चरुर्नखावपूतानामिति । स्वशब्देन वा भवति । यथा, परिधौ पशुं नियुञ्जीतेति । प्रतिषेधेन वा भवति । यथा, न गिरा गिरेति ब्रूयात् । यो गिरा गिरेति ब्रूयादात्मानं तदुद्गाता गिरेदैरं कृत्वोद्गेयमिति । अन्येन वा, येनावगम्यते प्राकृते कार्यमभिनिर्वर्त्तयतीति । तदिह न किञ्चिदप्यस्ति । न चैतावता निवृत्तिः । इदं प्रत्यक्षश्रुतम्, इदं चोदकेन प्राप्तमिति । प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति, नान्यथा ॥

नन्विदानीमेवोक्तम् । भवतीह प्रकृतिलिङ्गसंयोगः जुहोति, निवीता, प्रचरन्ति, आशयेदिति । उच्यते । प्रकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणि इमानि विधीयन्ते । तत्र तावज्जुहोतिरदृष्टार्थः । कथमसौ गम्येत प्राकृतस्यार्थे वर्त्तत इति । तथा, उपवीतमदृष्टार्थे, कथं तस्य कार्ये निवीतं वर्त्तेत इति गम्यते । तथा व्रतं वृत्त्यर्थम् । मध्वशनं घृताशनञ्च तस्मिन्नर्थे वर्त्तेत इत्येतन्न ज्ञायत एव । तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः ॥ अथोच्यते, नैवोपहोमा जुहोत्यन्तरं, प्रकृते होमे मन्त्रो विधीयते इति । तच्च न । विधायकस्याभावात् । सोऽनु जुहोतीति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्याम्नानं, नास्ति वचनम् । एवं जुहोतीति । भिन्नान्येतानि वाक्यानि । सोऽनु जुहोतीति विधिवाक्यम् । अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा इत्येवमादीनि मन्त्रवाक्यानि । तस्मान्न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणम् । होमविधानार्थं श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यम् । तस्मादपि न मन्त्रविधानम् । अतः समुच्चयः । उभयमपि प्रमाणेन प्राप्तम् । प्रत्यक्षश्रवणं प्रमाणं, चोदकोऽपि प्रमाणम् । नानाकार्यत्वान्नैतयोर्विरोधः । तस्माद्यथा, प्रयाजादीन्न बाधन्ते, एवं नारिष्टहोमानपि न बाधेरन् । अत एवञ्जातीयकं कर्मसंस्कारं विकृतावाधिकं स्यादिति ॥ १ ॥ सि० ॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

अथ यदुक्तं, शरमयं बर्हिर्भवतीति यथा शराः कुशान् निवर्त्तयन्ति, एवमिहापीति । अत्रोच्यते । युक्तं शरमये । भवति हि तत्र प्रकृतिलिङ्गेन संयोगः । बर्हिःशब्देन, एवंविशिष्टं वा बर्हिर्भवति । शरा वा बर्हिष कार्ये वर्त्तन्त इति । इह तु प्रकृतिलिङ्गासंयोगः । तस्माद्विषमं बर्हिषेति ॥ २ ॥ आ० नि० ॥ अग्न्यादौ नारिष्टहोमादिभिर्नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ॥ १ ॥

एवं वा—

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

इदमाम्नायते, सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन् इति । तत्रेदं श्रूयते । शरमयं बर्हिर्भवतीति । तत्र संशय । किं कौशं निवर्त्तते, न ? इति । किं प्राप्तम् । उभयस्य प्रमाणावगतत्वात् समुच्चय. ॥ १ ॥

एवं प्राप्ते ब्रूमः—

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत इति । अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोग' । तस्मात् प्राकृतस्य निवृत्तिरिति ॥ २ ॥ ॥ सिद्धान्ताशङ्कानिरासौ ॥ शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम् ॥ १ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा—

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

अस्ति वाजपेयः । शरदि वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र श्रूयते । रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति । दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीति । अस्ति च प्रकृतौ, उपावर्त्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोतीति । तदिह चोदकेन प्राप्तम् । तत्र संशयः । किं रथघोषेण दुन्दुभिघोषेण यो नाद. स मन्त्रस्य निवर्त्तक, यद्

द्रव्यं तद् दर्भयोः ? उतोभयमुभयस्य निवर्त्तकमिति । किं प्राप्तम् । शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्त्तक, द्रव्यत्वेन द्रव्यं दर्भयो । ननु तत्पुरुषनिर्देशोऽयम् तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणं, न स्वकार्येण निर्देश ॥ अत्रोच्यते । द्वन्द्वनिर्देशोऽपि ईदृशो भवति । तत्रायमप्यर्थ, न रथः परार्थ उच्चरिष्यते । श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात् । चोदनालिङ्गसंयोगश्च बाध्येत । तस्माद् घोषो मन्त्रस्य निवर्त्तको द्रव्य दर्भयोरिति ॥ १ ॥

एवं प्राप्त ब्रूमः—

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥**

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत; उभयस्य चोदनालिङ्गसंयोगो नैककस्य । रथघोषेणेति श्रूयते, न रथेन घोषेण चेति । रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य । प्रकृतौ दर्भौ लक्षणं, मन्त्रश्च । ननु इदानीमेवोक्तं द्वन्द्वनिर्देशो भविष्यतीति । नैतदेवं, द्विवचनं हि तथा स्यात् । एकवचनेन च निर्देश । तेनैको लक्षणं, स च घोष । तेन हि समभिव्याहारस्तृतीयाया । ननु समुदायेन समभिव्याहारो भविष्यति । न हि समुदायस्य । अशब्दार्थत्वात् । अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्त्तकमिति । ननु मन्त्रो वाचक एव उपावर्त्तध्वमिति । नेत्युच्यते । उपावर्त्तनमात्रस्याऽभिधायको मन्त्रः । न चोपावर्त्तनमात्रं स्तोत्रोपाकरणम् । अथाप्यभिधानं स्यात्, तथापि तस्य निवर्त्तक । लक्षणेनोपाकर्त्तव्यमिति प्रत्यक्षा श्रुति । अभिधानेनोपाकर्त्तव्यमिति चोदक । श्रुतिश्च चोदकाद् बलीयसी । तस्मादुभयस्य निवर्त्तको रथघोषो दुन्दुभिघोषश्चेति ! किं भविष्यति प्रयोजनम् । यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषस्तत्रोपाकरणं लक्षयेदिति॥२॥सिद्धान्ताशङ्कानिरासौ॥ वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोरेव बाधाऽधिकरणम् ॥ २ ॥ द्वितीयवर्णकम् ॥ २ ॥

**सर्वत्र तु ग्रहाम्नानमधिकं स्यात् प्रकृतिवत् ॥ ३ ॥**

बृहस्पतिसवे श्रूयते । बार्हस्पत्य ग्रहं गृह्णाति, विषुवत्यर्के ग्रहं गृह्णातीति । महाव्रते शुक्रग्रहं गृह्णातीति । अश्वमेधे सौवर्णराज-

ताभ्यां महिमानौ ग्रहौ गृह्णातीति । सन्ति तु प्रकृतौ ऐन्द्रवायवादयो ग्रहाः । त इह चोदकेन प्राप्ताः । तत्र संशय । वैकृतैस्ते निवर्त्त्येरन्ते, उतानिवृत्ति , समुच्चय ? इति । किं प्राप्तम् । प्रत्यक्षश्रुता वैकृताश्चोदकप्राप्तान् प्राकृतान् निवर्त्तयितुमर्हन्ति । अस्ति हि तेषां प्रकृतिलिङ्गेन ग्रहशब्देन संयोग इति ॥ एवं प्राप्ते ब्रूम । तत्र तत्र सर्वत्र ग्रहाम्नानमधिकं भवितुमर्हति । प्राकृतस्यानिवृत्तिरिति । कुतः । उभयेषां प्रमाणावगतत्वात् । चोदकोऽपि प्रमाणं, प्रत्यक्षश्रवणमपि । ग्रहशब्दः प्रकृतिलिङ्गमितिचेत् । नैवम् । यदि ग्रहशब्दमुच्चार्य्य गुणो विधीयते, ततः प्राकृता एव ग्रहा गुणविकृता भवेयुः । अथ ग्रहसम्बन्धेनाऽग्रहो विधीयते,ततो ग्रहकार्ये वर्त्तते इति प्राकृतं निवर्त्तयेत् । यथा,खलेवाली यूप इति । अन्यः पुनरेष ग्रहशब्दो ग्रहणवचन । अर्कं नाम ग्रह गृह्णाति, महिमानौ नाम ग्रहौ गृह्णातीति । अत्रापूर्वा ग्रहणक्रिया विधीयते । तस्मान्न ग्रहशब्दश्चोदनालिङ्गमेकार्थानां हि विकल्पो वा बाधो वा भवति । न चैषां वैकृतैरेकार्थता ॥ ननु यागनिवृत्त्यर्था सर्वे, तेनैषामेकार्थतेति । उच्यते । याग प्रति सहत्यकारिण एते, न निरपेक्ष एकैक एषां साधक । न ह्येषां पृथक्त्वेन यागसम्बन्ध , अर्केण यजेत, शुक्रेण यजेतेति । कथन्तर्हि । प्रयोगवचन एषां ग्राहकः । स च सन्निहितानाम् । न च सन्निधाने विशेषोऽस्ति । तस्मात् सर्वेषां प्राकृतानां वैकृतानाञ्च संग्राहकः प्रकृतिवत् । यथा प्रकृतौ ऐन्द्रवायवग्रहणं चोदितं, मैत्रावरुणग्रहणं पुनश्चोद्यते । विभागश्चादृष्टार्थः संस्कारो देवतोद्देशश्च । अदृष्टत्वात् कार्यस्य, न ज्ञायते पूर्वं उत्तरस्य कार्ये भवतीति । प्रयोगवचनग्रहणाच्च समुच्चयो, न केवलं मैत्रावरुणादिभि सह अप्रकरणाधीताभ्यामश्वदाभ्यामपि । एव विकृतावपि समुच्चयो भवितुमर्हति ॥ आह । ननु ग्रहं सङ्कीर्त्त्य गुणो विधीयते, अश्वमेधे सौवर्णराजताभ्यामिति । अत्रोच्यते । न तौ प्राकृतौ ग्रहौ सञ्ज्ञोत्पत्तिसंयोगादिति ग्रहकर्मणी भिद्येते ॥ आह । इह तर्हि बार्हस्पत्यं गृह्णातीति देवताविधानार्थं स्यात् । उच्यते । ग्रहे विधीयमाने श्रुतिरनुगृहीता । देवतायां वाक्यम् । श्रुतिश्च वाक्याद् बलीयसी ॥

आह । आग्नेयवत् । यथा अग्निष्टुति आग्नेया ग्रहा भवन्तीति देवताविधानं भवति, एवमेकवचनान्तेनापि । तस्याविवक्षितत्वात् । यथा ग्रहं सम्मार्ष्टीति सर्वग्रहाणां सम्मार्गोऽभिधीयते, एवमिहापि

सर्वग्रहाणां देवता विधीयते । अत्रोच्यते । उक्तमेतच्छ्रुतेर्बलीयस्त्वादिति । आग्नेया ग्रहा भवन्तीति तु वाक्यमविरुद्धं श्रुत्या । न हि तत्राग्नेयं ग्रहं गृह्णातीति । आग्नेयसत्ता तत्र वाक्येन श्रुत्यविरुद्धेन चोद्यमाना युक्तैवेति । तस्मात् प्राकृतेभ्यो व्यतिरिक्तो बार्हस्पत्यः समुच्चीयते । यथा प्रकृतौ अंशुं गृह्णाति, अदाभ्यं गृह्णातीति अप्राकरणिकौ प्राकरणिकैः समुच्चीयेते, एवमिहापि वैकृताः समुच्चीयेरन्निति ॥३॥ सि०

## अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥

इतश्च पश्यामः समुच्चय इति । कुतः । निःसन्दिग्धैश्च अधिकैः सुराग्रहैरेकवाक्यत्वं भवति । कथम् । सप्तदश एते ग्रहा गृह्यन्ते द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च । अत्र व्यक्तमधिकाः सुराग्रहाः । तेषु गृह्यन्ते इति ग्रहणं चोद्यते, नानूद्यते । सकृदुच्चरितो गृह्यन्ते—इति शब्दः सोमग्रहैरपि सम्बद्ध्यते । तस्माच्चोदनान्तरं ग्रहाणामनेन असन्दिग्धेन अन्यदप्येवमेवावगम्यते ॥ ४ ॥ युक्तिः ॥

## लिङ्गदर्शनाच्च ॥ ५ ॥

लिङ्गमप्येतमर्थं दर्शयति । किम् । विरण्यो वा एष यज्ञक्रतुर्यद् वाजपेयः । अतीव ह्यग्निष्टोमं क्रामत्युक्थ्यमति षोडशिनं नातिरात्रमाप्नोतीति । विरण्यशब्दो विस्तीर्णे भवति । यथा, विरण्यानि अरण्यानि, विस्तीर्णानीति गम्यते । यदि समुच्चयः । एवं विस्तीर्णता, बाधायां नोपपद्यते । तस्मादपि समुच्चय इति ॥ ५ ॥ हेतु ॥ बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतेन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम् ॥ ३ ॥

## प्राजापत्येषु चाम्नानात् ॥ ६ ॥

अस्ति वाजपेयः, वाजपेयेन स्वाराज्यकामो यजेतेति । तत्र प्राजापत्या पशवः, सप्तदश प्राजापत्यान् पशूनालभते इति । सन्ति तु प्रकृतौ क्रतुपशवः । ते इह चोदकेन प्राप्ताः । तत्र संशयः । किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्ते इति । किं प्राप्तम् । प्रत्यक्षाः प्राजापत्याश्चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति ॥ एवं प्राप्ते ब्रूमः । प्राजापत्येषु च समुच्चयः स्यात् । चशब्दोऽन्वाचयार्थः । आम्नायन्ते हि क्रतुपशवः । ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र इति । अथ कस्माद् वाजपेयेन सर्वे यज्ञक्रतवो-

ऽवरुध्यन्ते,पशुभिरिति ब्रूयात् । यदाग्नेयं पशुमालभतेऽग्निष्टोमे तेनावरुन्धे ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनं, सारस्वत्याऽतिरात्रं मारुत्या बृहत्स्तोत्रमेतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे इति समुच्चयं दर्शयति । ननु दर्शनमिदमुपादिश्यते, कोऽत्र न्याय ? इति। उच्यते । प्रकृतिलिङ्गासंयोगः । ननु पशुशब्दः प्रकृतिलिङ्गम् । नेत्याह । नात्र पशुमनूद्य देवता विधीयते,सङ्ख्याश्रवणात्। सङ्ख्यादेवताश्रवणात् कर्मान्तरं चेदमुक्तम् ।। पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यादिति । अतो ग्रहाणामिव समुच्चयो भवितुमर्हतीति ॥ ६ ॥ वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ॥ ४ ॥

## आमने लिङ्गदर्शनात् ॥ ७ ॥

अस्ति साङ्ग्रहणीष्टि', वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकाम इति । तत्र श्रूयते । आमनमस्या देवा इति तिस्र आहुतीर्जुहोतीति । सन्ति तु प्रकृतौ त्रयोऽनुयाजाः, तेऽत्र चोदकेन प्राप्ताः । तत्र संशयः किमामनहोमैरनुयाजा निवर्त्तन्ते, उत तैः समुच्चीयन्ते इति । किं प्राप्तम् । प्रत्यक्षश्रुतैरामनहोमैरानुमानिका अनुयाजा निवर्त्येरन् । अपि च त्रित्वं प्रकृतिलिङ्गयोगो भवति ॥ एवं प्राप्ते ब्रूमः । आमने समुच्चय स्यात् । कुतः । लिङ्गदर्शनात् । लिङ्गं हि इममर्थं दर्शयति । किं लिङ्गम् । बहिरात्मा वै प्रयाजानुयाजा आत्मा देवता यत् प्रयाजाऽनुयाजानां पुरस्ताद्वा उपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातानामादधीत, अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते इति अनुयाजानाम् अनिवृत्तिं दर्शयति । आह । ननु त्रित्वं प्रकृतिलिङ्गसंयोग । नेत्याह । न हि सङ्ख्यामात्रमनूद्य शक्यते गुणो विधातुम् । न हि कस्यचित् काचित् सङ्ख्या न भवति । तस्मान्न सङ्ख्या प्रकृतिलिङ्गसंयोगः । लिङ्गदर्शनं त्विदमपदिष्टं, प्राप्तिरत्र वक्तव्येति । उच्यते । आहुतीर्जुहोतीति श्रुत्या आहुतिसत्ता, वाक्येन मन्त्राविधानं, त्रिसङ्ख्या चानुवादत्वेनावकल्पते । सङ्ख्यामन्त्रवन्ति तु यागान्तराणि विधीयन्ते । तेषां चोभयप्रमाणावगतत्वात् समुच्चयो न्याय्य इति ॥ ७॥ सांग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयाऽधिकरणम् ॥ ५ ॥

## उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥

महाव्रते श्रूयते, पत्न्य उपगायन्ति, पिच्छोलाभिरुपगायन्ति, काण्डवीणादिभिरुपगायन्ति, आपाटलिकाभिरुपगायन्तीति । अस्ति तु प्रकृतौ ऋत्विज उपगायन्तीति । तदिह चोदकेन प्राप्यते । तत्राय-मर्थः सांशयिको भवति । किं पत्नीभि, उपगायन्तीति ऋत्विज उपगायन्तो निवर्त्यन्ते, उत न निवर्त्यन्ते ? इति । तत्रैतत् ताव-च्चिन्त्यते । किं गानोपगानमेतत्, उत वादित्रोपगानम् ? इति । तत्रापि द्वैतं, किं गानस्योपगानं गानोपगानम् । उत गानमेवोपगानं गानोपगानम् ? इति । किं तावत् प्राप्तम् । प्राकृतं निवर्त्यते इति । तत इदं वर्ण्यते । गानस्योपगानमिति । पत्न्यो गायतां गानमुपचिन्वन्ति इति, गानं प्राप्तमेव प्राकृतम् । उपचय उपसर्गार्थो विधीयते । त-स्माद् गानस्योपगानमिति ॥

अथ वा गानमेवोपगानं, गानशब्दो हि शारीर्य्यां गीतौ प्रसिद्ध । तस्माद् गानमेतदुपगानं, गानस्य वोपगानमिति । यदा एतयोरन्य-तरं, तदा ऋत्विक्कार्य्ये पत्न्यो वर्त्तन्ते । अत प्रकृतिलिङ्गसंयोगात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्यते शरवत् । यथा शरमयं बर्हिर्भ-वतीति शरा प्रत्यक्षश्रुताश्चोदकप्राप्तान् दर्भान् निवर्त्तयन्ति, एव-मिहापीति ॥ ८ ॥ पूर्व० ॥

## आनर्थक्यात् त्वधिकं स्यात् ॥ ९ ॥

तुशब्द' पक्षं व्यावर्त्तयति, न निवृत्तिरिति । समुच्चयः स्यात् । तत एतच्चिन्त्यते । वादित्रस्यैतदुपगानम् । अस्ति ह्यत्र वादित्रम् । दिक्षु दुन्दुभयो नदन्तीत्येवमादि । तस्योपगानं वादित्रस्योपगानम् । कथम् । प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते । विप्रकृष्टा उप-सर्गार्थस्य सत्ता अर्थविप्रकर्षाद् दुर्बला भवति । तस्मादुपसर्गो-ऽर्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते ॥

अथ वा वादित्रमिदमुपगानम् । एवं ह्याह । पत्न्य उपगायन्ति काण्डवीणादिभिरुपगायन्तीति । काण्डवीणादिभिर्वादित्रमुपगानं भ-वति, भवति च तन्त्रीगाने गानशब्दः । तस्माद् वादित्रमुपगानम् । तत्र यद्येवं वादित्रस्योपगानं, यदि वा वादित्रमुपगानम् । उभयथा प्राकृतादर्थान्तरे भवति । तस्मात् समुच्चयः । कुतः । आनर्थक्यात् । एवं चोदकानर्थक्यं न भविष्यति । चोदकोऽनुग्रहीष्यतीत्यर्थः । त-स्मात् समुच्चय इति ॥ ९ ॥ सिद्धान्तः ॥ महाव्रते ऋत्विगुपगानस्य

पत्न्युपगानेन समुच्चयाधिकरणम् ॥ ६ ॥

## संस्कारे चान्यसंयोगात् ॥ १० ॥

अस्ति अञ्जनाऽभ्यञ्जनो नाम एकोनपञ्चाशद्रात्र. । तत्रेदं समाम्नायते । गौग्गुलवेन प्रात सवने समञ्जते अभि वाञ्जते पैलुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीयसवने इति । अस्ति तु प्रकृतौ नवनीतेनाऽभ्यञ्जनम् । तदिह चोदकेन प्राप्तम् । तत्र संशय । किं तद् वैकृतेन बाध्यते, उत नेति । किं प्राप्तम् । प्रत्यक्षश्रुतत्वाद्, वैकृतेषु अञ्जते अभि वाञ्जते इति च, प्रकृतिलिङ्गसंयोगाद्बाध्यते इति । आह । ननु सुत्याकालमञ्जनमभ्यञ्जनञ्च सत्रे, दीक्षाकाले नवनीतेनाऽभ्यञ्जनं प्रकृतौ, अन्यकालत्वात् प्रयोजनान्तरे वर्त्तते इति बाधो न स्यात् । उच्यते । प्रयाजवदन्यकालमपि तत्कार्य्यमेव द्रष्टव्यम् । कालमात्रमन्यत्, पदार्थस्तु स एव । यथा तिष्ठन्तं पशुं प्रयजन्तीति तिष्ठति पशौ प्रयाजा वर्त्तमाना. प्राकृतकार्य्यका एव भवन्ति, एवमिहापि द्रष्टव्यम् ॥ एवं प्राप्ते ब्रूम ॥ संस्कारे अञ्जनेऽभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात् । कुत । अन्यसयोगात् । अन्यकालमिदं कार्य्यान्तरे वर्त्तते, एवं चोदकोऽनुग्रहीष्यते । तस्मात्समुच्चय इति ॥१०॥सि०

## प्रयाजवदिति चेत् ॥ ११ ॥

इति यदुक्तं तत्परिहर्त्तव्यम् ॥ ११ ॥ आ० ॥

## नार्थान्यत्वात् ॥ १२ ॥

न च प्रयाजवद् भवितुमर्हतीति । कुतः । अर्थान्यत्वात् । स्नेहनाऽर्थमादौ नवनीतं सुखप्रचाराय । प्रवृत्ते कार्य्ये सुत्याकालं गौग्गुलवेनाऽभ्यञ्जनं विरूक्षीकरणार्थं प्रत्यक्षं कार्य्यान्तरं वर्त्तत इति, न प्राकृतं निवर्त्तयितुमर्हति ॥ १२ ॥ आ०नि०॥ अञ्जनाऽभ्यञ्जने नवनीताऽभ्यञ्जनस्य गौग्गुलवाऽभ्यञ्जनादिभिः समुच्चयाधिकरणम् ॥ ७ ॥

## आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात् ॥ १३ ॥

महाव्रते श्रूयते, तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी इति । अस्ति तु प्रकृतौ, अहतवास परिधत्ते इति । तदिह चोदकेन प्राप्तम् । तत्र संशय । किम् अहतस्य वाससो निवृत्ति , न ? इति । कि प्राप्तम् । आच्छादने तु प्राकृतस्य विकारः स्यात् । कुतः । ऐकार्थ्यात् ।

एको ह्यर्थ' प्राकृतस्य वैकृतस्य च कौपीनमाच्छादयितुं, प्रकृतौ विकृतौ च प्रच्छादन क्रियते । तस्मात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्तेत ॥ १३ ॥ पूर्व० ॥

## अधिकं वान्यार्थत्वात् ॥ १४ ॥

वाशब्द पक्षं व्यावर्त्तयति । अधिकमिदं प्राकृताद्वाससो भवितुमर्हतीति । कुतः । तद् हि निवर्त्तकं भवति, यदनिवर्त्त्य न शक्नोति निवेष्टुम् । यत्तु अनिवर्त्त्यापि शक्नोति भवितुं, न तद् निवर्त्तयति । तद् हि निवर्त्तयदप्रतिषेधकं सच्चोदकं प्राप्तं बाधेत । ननु कौपीनप्रच्छादने परिधत्ते इति भवति, नान्यकार्य्यके । उच्यते । नैतदेवम् । उपरिवाससोऽपि कार्य्ये परिधत्ते इति भवति । तद्यथा, कम्बलं परिधत्ते, रौरवं परिधत्ते इति । सर्वतो धत्ते परिधत्त इति अवयवप्रसिद्ध्या भवति । तस्मादहतस्य वाससो न निवृत्ति, समुच्चय इति ॥ १४ ॥ सि० ॥

## समुच्चयञ्च दर्शयति ॥ १५ ॥

समुच्चयञ्च वास'शब्देन बहुवचनान्तेन दर्शयति, वासांसि वाराही चोपानहौ विमुञ्चतीति,कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्यु· परिधत्ते इति । तस्मादपि पश्यामः, अनिवृत्ति· समुच्चय इति ॥ १५ ॥ युक्तिः ॥ महाव्रते अहतवाससस्तार्प्यादिभि समुच्चयाऽधिकरणम् ॥ ८ ॥

## सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

महाव्रते श्रूयते, श्लोकेन पुरस्तात् सदस स्तुवते अनुश्लोकेन पश्चात् सदस क्रौञ्चेन चात्वालमवेक्ष्यमाण इति । सन्ति तु प्राकृतानि सामानि इह चोदकेन प्राप्तानि । तत्र संशयः । किं प्राकृतानां साम्नां निवृत्ति , उत अनिवृत्तिः, समुच्चयः ? इति । किं प्राप्तम् । स्तुवते इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्त्यन्ते इति । यथा, कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवत', भर्गयशसी भवतः । क्रौञ्चानि भवन्तीति श्रुतेषु चोदकप्राप्तानि निवर्त्त्यन्ते, एवमिहापि द्रष्टव्यम्॥ एवं प्राप्ते ब्रूमः।सामसु श्लोकेन पुरस्तात् स्तुवते इत्येवमादि श्रूयमाणेषु प्राकृतानामविकारः प्रतीयेत।कुतः । अर्थान्तरश्रुतेः। अर्थान्तरेण हि सम्बन्धः

श्रूयते,पुरस्तात् सदस स्तुवते इत्येवमादिषु। यच्च पदं केनचित् पदेन सम्बद्ध्यते विशेषणत्वेन, न तत् पदान्तरेण सहसम्बन्धमर्हति सकृदुच्चरितम्। यथा, भार्य्या राज्ञ, पुरुषो देवदत्तस्येति भार्य्याविशेषणत्वेनोच्चार्य्यमाणो राज्ञ इति शब्दो न पुनः पुरुषशब्देन सम्बद्ध्यत इति। एवं, पुरस्तात् सदसः स्तुवते इत्यनेन सम्बद्ध्यमानो न पुनः श्लोकेन स्तुवते इति सम्बन्धमर्हति॥

यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेति अनूद्येत, तत उपपद्येत एक वाक्यमिति। यदा तु पुनर्देशसत्ता विहिता तदा परिपूर्णं वाक्यं, श्लोकेन चेत्येतदपि विधातव्यम्, तदा पुनर्विधिप्रत्ययो हृदयमानेतव्यः। हृदयमानेतुमुच्चारयितव्यः। न चोच्चारितः। तस्मादनुच्चारितो वा कल्पयितव्य, उच्चारणं वा कल्पयितव्यम्। कल्पनायाञ्च शब्दो बाध्येत। तस्मान्नैवम्। कथं तर्हि? देशसामविशिष्टा स्तुतिः श्रुत्या विधीयते। न चैकेन केनचित् सम्बन्धे विहिते, परिपूर्णे वाक्ये पुनरपरं वाक्यं कल्पयितव्यं भवति। उभयविशेषणविशिष्टा हि स्तुतिः श्रुत्या यदा विहिता तदा परिपूर्णं वाक्यम्। न तदा पुनरपरेण केनचित् सम्बन्धः कल्पयितव्यो भवति, यदर्थं किञ्चिद् द्विरुच्चार्य्येत। तस्मात् स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्त्यते, समुच्चय इति॥ १६॥

## अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात्॥ १७॥

अथ यदुक्तं वर्णितं, यथा कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवत इत्येवमादिभिरिव प्राकृतानां निवृत्तिरिति। तत्र परिहर्त्तव्यम्। अत्रोच्यते, युक्तमत्र यत् प्राकृतं निवर्त्त्यते। अत्र हि अर्थान्तरं न श्रूयते, प्राकृतस्यैव शेषः श्रूयते। तस्मात् तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति। इह तु अर्थान्तरश्रवणाद् वाक्यभेदप्रसङ्गादनिवृत्तिरित्युक्तम्॥१७॥ युक्तिः॥ महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम्॥ ९॥ प्रथमवर्णकम्॥ १॥

एवं वा— क्वचिच्छ्रूयते, कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवत, शुद्धाशुद्धीये भवत, भर्गयशसी भवतः, क्रौञ्चानि भवन्तीति। सन्ति तु प्रकृतौ सामानि तत्र चोदकेन प्राप्ता-

म्नि । किं तानि निवर्त्येरन्, न ? इत्येषोऽर्थः सन्दिह्यते । किं प्राप्तम् । अनिवृत्तिः, समुच्चय इति । कुतः । साममात्रं विधीयते, न स्तुवते इति प्रकृतिलिङ्गसंयोगोऽस्ति । तस्मादधिकमिति ॥

एवं प्राप्ते ब्रूमः –

**अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् ॥ १७ ॥**

तुशब्दः पक्षं व्यावर्त्तयति, अश्रूयमाणेऽप्यर्थे प्राकृतस्य विकारः स्यात् । शेषभूतं हि प्रकृतौ साम । इदमपि साम श्रूयते । तत् सामत्वेन सामान्येन साम्नः कार्ये भवितुमर्हति । तद्यथा– दधि घृतं शाकं शाल्यः, देवदत्तो भोजयितव्यः, देवदत्तवद् यज्ञदत्तस्तैलेनेति । यद्यपि तैलेन स्नेहयितव्य इति न श्रूयते, तथापि स्नेहने एव तैलं भवति । तत्समर्थत्वात् । एवं यद्यपि साम्ना ऋक् संस्कर्त्तव्येति न श्रूयते, एवमपि तत्समर्थत्वात् साम ऋक्संस्कारे एव भवितुमर्हति ॥ १७ ॥ विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् ॥ ९ ॥ द्वितीयवर्णकम् ॥ २ ॥

**सर्वेषामविशेषात् ॥ १८ ॥**

क्वचिच्छ्रूयते– कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्तीति । सन्ति तु प्राकृतानि सामानि । तत्र चोदकेन प्राप्तानि तानि प्राकृतानां निवर्त्तकानीत्येतत् समधिगतम् । अथेषोऽर्थः सन्दिह्यते । किं सर्वाणि सर्वेषां निवर्त्तकानि, अथ किमेकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति । किं तावत् प्राप्तम् । सर्वाणि सर्वेषामिति । कुतः । विशेषाभावात् । न हि विशेषः कश्चिदस्ति येनावगम्यते, इदमस्य निवर्त्तकं, नान्यस्येति । तस्मात् सर्वं सर्वस्य निवर्त्तकमिति ॥ १८ ॥ पूर्व० ॥

**एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात् ॥ १९ ॥**

न चैतदस्ति, सर्वाणि सर्वेषां निवर्त्तकानीति । एकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति । कुतः । श्रुतिसामर्थ्यात् । कौत्सं भवति काण्वं भवतीति एकैकस्य निवृत्तिं कृत्वा श्रुतिः समर्था अर्थवतीति । एवं वशिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवत इति द्वयोर्निवृत्तौ कृतायां श्रुतिसामर्थ्यमनुगृहीतं भवति । तथा

क्रौञ्चानि भवन्तीति त्रिभिस्त्रीणि निवर्त्त्य कृतसामर्थ्या श्रुतिर्भवति । यद्येकस्मिन् श्रुते एकमेव निवर्त्त्यते, ततो यावत्येव असौ अङ्गीकृता प्राकृती सामसङ्ख्या तावत्येव भवति, एवं सर्वत्र । किमेवं भविष्यति ? । प्रकृतेरविकार प्राकृतानामवशिष्टानां साम्नां ग्रहणं भविष्यति । तत्र चोदकोऽनुग्रहीष्यते । तस्मादेकम् एकस्य निवर्त्तकं, द्वे द्वयो, बहूनि बहूनामिति ॥ १९ ॥ सिद्धान्त ॥ कौत्सादिभिर्व्यवस्थया एकादिबाधाधिकरणम् ॥ १० ॥

## स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ २० ॥

सन्ति विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव । एकविंशेनातिरात्रेण प्रजाकाम याजयेत् त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममिति । तथा द्वात्रिंशाः पवमाना अभिषेचनीयस्य । तत्र नव राजसामानि, एकादश राजसामानि, बलौघश्रवसे वशिष्ठस्य जनिजनित्रे च साकम्प्रवेदनान्याहु । शुद्धाशुद्धीये च संश्रवोपपदे चोभे । तथा रथहविर्धाने पुन.स्तोमस्य यज्ञस्य, तथा अपचितिवत्य. पुनःस्तोमस्य यज्ञस्य ॥

पुन.स्तोमस्य सवनं मध्यमं द्वादशं स्मृतम् ।
कार्य्यौ नवदशस्तोमावभित सवने उभे, इति ॥

तदत्र कचित् प्राकृती स्तोत्रसङ्ख्या विवृद्धा, कचिद्धीना । तत्र सन्देह । किं विकृतौ विवृद्धौ हानौ च प्राकृतानां साम्नां निवृत्ति ? उत हानौ निवृत्ति , विवृद्धावनिवृत्तिरिति । किं प्राप्तम् । उभयत्र निवृत्तिः । प्रत्यक्षश्रुतेन हि चोदकप्राप्तं निवर्त्त्यते । साम्नां चोत्पत्तिरर्थवती भविष्यति अपूर्वेषु क्रियमाणेष्विति ॥ एवं प्राप्ते ब्रूम. । स्तोमविवृद्धौ अनिवृत्तिराधिक्यं स्यात् । कुत: ॥ आगमेन हि साम्नां सङ्ख्यापूरणं वक्ष्यते । आगमेन वा स्यादभ्यासस्याश्रुतित्वाद् इति । एवं चोदकानुग्रहो भविष्यति । अविवृद्धौ तु प्राकृतं निवर्त्त्येत । यावता निवृत्तेन सा सङ्ख्या पूर्यते, तावत् प्राकृतं बाधितव्यम् । अन्यत् प्राकृतमेव स्यात् । कुत । इतरस्य अश्रुतित्वात् । इतर न श्रूयते, आगमः कर्त्तव्य इति । सङ्ख्यामात्रं श्रूयते । तस्मादविवृद्धस्तोमकेषु अनिवृत्ति. । हीनस्तोमकेषु यावदर्थं निवर्त्तयितव्यम् । अथ यदुक्त,

साम्नामुत्पत्तिरर्थवती भविष्यतीति । उच्यते । बाध्यताम् आर्षं चोदकेन, गुणमात्रमविशिष्टार्षम् । गुणश्चोदक, इति ॥ २० ॥ विवृद्धाऽविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाधिकरणम् ॥ ११ ॥

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥**

इह विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणम् । त एव ये पूर्वस्मिन्नधिकरणे उदाहृताः । तत्रैषोऽर्थः समधिगतः । विवृद्धस्तोमकेष्वनिवृत्तिरविवृद्धस्तोमकेषु निवृत्तिरिति । अथेदानीमिदं सन्दिह्यते । किं यस्मिन् कस्मिंश्चिदावापौ यत कुतश्चिदुद्वाप ? उत पवमानेष्वेवावापोद्वापाविति । किं प्राप्तम् । अविशेषादनियम इति ॥ एवं प्राप्ते ब्रूम । पवमाने आवापोद्वापौ स्यातामिति । कुतः । अस्मिन्नेव हि तौ दृश्येते, त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् । अत्र ह्येवावपन्ति, अत एवोद्वपन्तीति ॥ २१ ॥

ननु दर्शनमिदं, प्राप्तिरुच्यताम् । उच्यते—

**वचनानि त्वपूर्वत्वात् ॥ २२ ॥**

असति न्याये वचनान्येव एतानि कल्प्यन्ते । तस्मात् पवमान एवापोद्वापस्थानमिति ॥ २२ ॥ पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ॥ १२ ॥

**विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥ २३ ॥**

तौ दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति । तत्रेदमाम्नायते । यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । सन्ति चाग्नेरभिधानानि, अग्नि शुचिः पावकः धूमकेतु. कृशानुर्वैश्वानर. शाण्डिल्य इत्येवमादीनि । तत्र सन्देह । वाचिषु निगमेषु किं येन केनचिदग्ने शब्देनाभिधानं कर्त्तव्यम ? उत विधिशब्देनाग्निशब्देनेति । किं प्राप्तम् ॥ येन केनचिदिति । कुत । अग्न्यर्थनिर्देशात् । अग्न्यर्थेन पुरोडाश. संबद्धव्यः । अग्न्यर्था देवता कर्त्तव्या, त्यागकाले उद्देष्टव्या । सा येन शब्देन शक्यते उद्देष्टुं, तेनोद्देशनीया । सा एषां शब्दानामन्यतमेन शक्या उद्देष्टुम् । तस्माद् येन केनचिद् वाचिषु निगमेषूद्देश कर्त्तव्य इति ॥ एवं प्राप्ते ब्रूम । विधिशब्देनैव अग्निशब्देनोद्देष्टव्या, नान्येन

शुच्यादिना इति । कुतः । तेन चोदना, तेन विधिशब्देनास्य हविषः सम्बन्धश्चोदना भवति । कथमिव ? । आग्नेय कर्त्तव्य इत्यग्निरस्य देवता कर्त्तव्येत्यर्थ ॥

का पुनरियं देवता नाम ? । एकं तावन्मतं, या एता इतिहासपुराणेष्वग्न्याद्या. सङ्कीर्त्यन्ते नाकसदस्ता देवता इति ॥ उच्यते । तासु देवतासु अहरादीनां शार्दूलादीनां वा न सग्रहः । स्मर्यते च कालवाचिनां देवतात्वं, कालेभ्यो भवति, मासो देवता संवत्सरो देवता इति ॥

अपरं मतं, येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते, अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता इत्येवमादिषु, तेऽत्र देवताशब्देनोच्यन्ते इति ॥ तत्राप्यहरादीनामनुपसंग्रह एव । किञ्च सामान्यवचनस्य शब्दस्य लौकिके व्यवहारे अभावादर्थस्याप्रसिद्धिः स्यात् । तस्मात् सूक्तभाजो हविर्भाजश्च देवताः । काः सूक्तभाज. ? । इमं स्तोममर्हते जातवेदसे रथमिव सम्महेमा मनीषया । भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयन्तव(ऋ० १९।४म०)इति । हविर्भाजः, आग्नेयमष्टाकपालं निर्वपेत्, अग्नीषोमीयमेकादशाकपालमिति । आह । यदि हविर्भाजो देवताः कपालानामपि देवतात्वं प्राप्नोति । तान्यपि हविर्भाञ्जि । एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविष । सूक्तस्याप्येवमेव । अत्र हि देवताशब्द. स्मर्यते । अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविरिति । तथा अतिथिदेवत्यं पितृदेवत्यमिति । एवं मूर्त्तानाममूर्त्तानां चेतनानामचेतनानां श्रुत्या कांश्चदर्थं प्रति तादर्थ्येन सङ्कल्पनीयानां देवतात्वं भविष्यति । सामान्यवचनत्वं चोपपत्स्यते ॥ किमत. ? । यद्येवं, यस्या वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते, सा देवता भवति तत्र ॥

नन्वेवं सति सुतरां येन केनचिदग्नेः शब्देन निर्देशः करणीयः। अत्रोच्यते । भवेदेतदेवं, यद्यग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत। अर्थोऽपि हवि.सम्बन्धार्थं प्रत्याय्येत । न त्वत्राग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्यते । यत्र ह्यर्थे कार्यमासाद्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो भवति, यत्रार्थे न प्रयोजनम् । यत्र पुनः शब्दे एव कार्यं, तत्र कार्यसम्बन्धार्थ. शब्द एव प्रत्यापयितव्य. देवतायाश्च यज्ञसाधनभावो न

रूपेण भवति । केन तर्हि । सम्बन्धिना शब्देन । यथा अध्वर्युर्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति । यथा होतुः पाणौ ब्रिलेपेनोपस्तृणातीति पाणिसम्बन्धेऽपि होतैवोपकरोति, एवं सम्बन्धिना शब्देन उपकुर्वती देवता उपकारिणी गम्यते । देवतायामप्युपकारिण्यां चोदितायां शब्दस्यैव यज्ञे समवायः । तस्मान्न शब्दोऽर्थप्रत्यायनार्थमुच्चारितः । स चार्थः पुनः शब्दं प्रत्याययेदिति लक्षितलक्षणा हि तथा स्यात् । किं तर्हि । शब्द एव हविषा सम्बद्ध्यते । तत्सम्बन्धादर्थोऽपि देवता भविष्यति । यस्य हि शब्दो हविषा तादर्थ्येन सम्बद्ध्यते, सा देवता । शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायते । इह तु शब्द एव कार्यं सम्भवति । तस्मान्नार्थप्रत्ययनार्थं शब्द इति । तदुक्तं वृत्तिकारेण । न वा शब्दपूर्वको ह्यर्थसम्प्रत्ययस्तस्मादर्थनिष्पत्तिरिति । एवं चेदग्निशब्देन हविषः सम्बन्धो, नास्ति प्रसङ्गः शुच्यादीनां शब्दानामिति । तस्मान्मन्त्रत्वे विधिशब्द उपादातव्य इति ॥ उच्यते । नन्वेवं शब्द एव देवता प्राप्नोति । अत्रोच्यते । नैतदस्माभिः परिहर्त्तव्यम् । न हीदमुच्यमानमस्मत्पक्षं बाधते, सुतरां शुच्यादीनामप्रसङ्ग इति ॥ २३ ॥

## शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते ॥ २४ ॥

इतश्च विधिशब्देन वाचिषु वचनं कर्त्तव्यम् । कुतः । शेषाणां मन्त्राणामेकः शब्दः । य एवासौ विधिशब्दः, स एव सर्वत्र श्रूयते अपाट्कारे उज्जित्यां स्वाहाकारे च । अपाळग्ने प्रिया धामानि अपाट् सोमस्य प्रिया धामानि अपाळिन्द्रस्य प्रिया धामानि इति अपाट्कारे । अग्नेरुज्जितिमनूज्जेषं सोमस्योज्जितिमनूज्जेषमित्युज्जित्याम् । स्वाहाऽग्नये स्वाहा सोमायेत्येवमादि स्वाहाकारे । एवञ्च नित्यवच्छ्रूयमाणा अपाक्षिका भविष्यन्ति, यथाऽस्माभिर्न्यायोऽपदिष्टः । तस्माद् विधिशब्दस्य मन्त्रत्वे भावः स्यादिति ॥ २४ ॥ युक्तिः ॥ यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ॥ १३ ॥

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥

अस्ति चरुः, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इति । सन्ति सूर्यस्याभिधानानि । सूर्य आदित्यो भास्करः सविता दिवाकर इति तत्र किं वाचिषु निगमेषु येन केनचिच्छब्देनाभिधानं कर्त्तव्यम्, उत

विधिशब्देन सूर्यशब्देनेति । किं प्राप्तम् । अग्निशब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन प्राप्ताः, न सूर्यशब्देनेति । सूर्यशब्दो हि चरौ, न उर्ज्जित्यादिषु । ते यथार्थं विपरिणमयितव्याः । सूर्यार्थश्च तेषु सङ्कीर्त्तयितव्यः । स च येन केनचित् सूर्यवाचिना शब्देन सङ्कीर्त्यते । तस्मादनियम । ये च प्रकृतावग्निशब्दसंयुक्ता निगमास्ते इह-उदाहरणं, न असंयुक्ता ॥ एवं प्राप्ते ब्रूम । तथोत्तरस्यां ततौ तत्प्रकृतित्वादिति । यथा प्रकृतौ, तथा उत्तरस्यां ततौ विकृतौ कर्त्तव्याः । तत्प्रकृतित्वात् तेषाम् । चोदकानुग्रहाय प्रकृतौ च विधिशब्दाभिप्रायोऽग्निशब्दः प्रयुक्तो, नाग्न्यभिधानपरः । इहापि तत्प्रकृतित्वाद् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः । न चाय चरुणा सूर्यशब्दस्य सम्बन्ध । किं तर्हि । प्रयोगेण । सौर्यं निर्वर्त्तयेदिति प्रयोगेण सम्बन्धो, न सौर्यश्चरुरिति । कारकविभक्तिर्हि द्वितीया । सा आख्यातेन सम्बद्ध्यते । तस्मात्तत्रापि सूर्यशब्देन संयुक्ताः कर्त्तव्या इति ॥२५॥ अतिदेशस्थलेऽपि विधिशब्देनैव देवताऽभिधानाधिकरणम् ॥ १४ ॥

## प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥

अस्ति आधानं, य एवं विद्वानग्निमाधत्त इति । तत्र पवमानहवींषि श्रूयन्ते । अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये इति । तत्र संशय क्रियते । किं सगुणमग्नेरभिधानं कर्त्तव्यम्, उत निर्गुणमिति । किं प्राप्तम् । प्राकृतस्य निर्गुणस्य सगुणेनाभिधानं कर्त्तव्यमिति ॥ २६ ॥ सि० ॥

## अविकारो वा अर्थशब्दानपायात् स्याद् द्रव्यवत् ॥ २७ ॥

अविकारो वा स्याद्, निर्गुणमभिधानम् । कुतः । अर्थशब्दानपायात् । एवं शब्दोऽर्थश्चानपेतो भवति । य एव असौ अग्निः, स एव पवमान , पावकः शुचिश्च । या देवता निर्देष्टव्या, सा निर्दिष्टैव भवति । असत्यपि गुणवचने, द्रव्यवत् । यथा, सा वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत भूतिकाम इति । अजावशाशब्देन चोदिते कर्मणि छागाशब्देन वाचिषु निगमा भवन्ति । अर्थः शब्दोऽनपेत इति कृत्वा । एवमिहापि द्रष्टव्यम् । तस्मान्निर्गुणेन अभिधान कर्त्तव्यमिति ॥ २७ ॥ पूर्व० ॥

**तथारम्भासमवायाद्वा चोदितेनाभिधानं स्या-
दर्थस्य श्रुतिसमवायित्वादवचने च गुण-
शास्त्रमनर्थकं स्यात् ॥ २८ ॥**

अथ वा, चोदितेन, सगुणेनाभिधीयेत ।कुतः। आरम्भासमवायात् । न हि आरम्भेण देवता कर्मणि समवैति, न स्वेन रूपेण देवताया कर्मणि साधनभाव इत्युक्तम् । यदि हि रूपेण समवेयात्, तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत । कथ तर्हि साधनभावः । श्रुतिसमवायित्वाद् देवतार्थस्य । देवताशब्दस्य च हविषश्च सम्बन्ध साक्षादुच्यते । यस्य शब्दस्य सम्बन्ध , स शब्दो वदितव्यः । एवमसौ सम्बन्ध कृतो भवति । यदि च गुणाभिधानं न क्रियते, गुणशास्त्रनमनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि सम्बद्ध्येत इति । तत्र यदि गुणो न सम्बध्नीयात्, गुणवचनवैयर्थ्यं स्यात् । तस्मात् सगुणेनाभिधानं कर्त्तव्यमिति ॥ २८ ॥ उत्तरम् ॥

**द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ २९ ॥**

अथ यदुक्तं द्रव्यवदिति, सा वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत भूतिकाम इति । अजावशाशब्देन चोदिते कर्मणि छागाशब्देन निगमा वाचिषु भवन्तीति यदुक्तं, तत् परिहर्त्तव्यम् । अत्रोच्यते । युक्तं द्रव्येष्वारम्भसमवाय. । रूपेण समवाय गच्छति द्रव्यम् । तत्र छागाशब्देन या असौ आलब्धा यदि वशा यद्यवशा, तत्र साऽभिधीयत इति गम्यते । तस्मादर्थे साधने सति अविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यत इति विना गुणवचनेन, अभिधानं स्याच्चोदकानुग्रहाय । इह श्रुतिसमवायित्वादवश्यं चोदकप्राप्तस्य विकारः कर्त्तव्य इति ॥ २९ ॥ आधानेऽग्नेः सगुणेनाभिधानाधिकरणम् ॥ १५ ॥

**बुधन्वान् पवमानवद्विशेषानिर्देशात् ॥ ३० ॥**

अस्ति आधानं, य एवं विद्वानग्निमाधत्ते इति । तत्र पवमानेष्टयः । अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाऽग्नये शुचये इति । तत्राज्यभागौ प्रकृत्य श्रूयते, बुधन्वान् आग्नेयः कार्यः, पावकवान् सौम्य इति । तत्रायमर्थ. सांशयिक । किं स-

गुणमग्नेरभिधानं कर्त्तव्यम्, उत निर्गुणमिति॥ तत्रैवं तावत् परीक्ष्यते किं देवतानिर्देशोऽयं? मन्त्रनिर्देश.? इति। देवतानिर्देशे सति सगुणमभिधानं, मन्त्रनिर्देशे निर्गुणमिति। किं तावत् प्राप्तम्। सगुणमभिधानमिति। तत्रैतद्वर्ण्यते, देवतानिर्देश इति। कुत.। रूपत एव मन्त्राणां प्राप्तत्वाद् विधानमनर्थकं देवता पुनर्न प्राप्नोति। तस्या विधानमर्थवद् भवति। बुधन्वान् आग्नेय. कर्त्तव्य इति देवतया बुधन्वद्गुणयुक्ता भवति बुधन्वान् आग्नेय.। तस्मात् सगुणमभिधानम्। यथा पावमानेष्टिषु अग्नि. पवमान इति। एवमत्रापि अग्निर्बुधन्वानिति विशेषनिर्देशोऽर्थवान् भविष्यति। तस्मात् सगुणमभिधानमिति॥ ३०॥ पूर्व०॥

मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात्॥ ३१॥

न चैतदेवं, सगुणमभिधानमिति। निर्गुणं कर्त्तव्यम्। तत्रैतद् वर्णयन्ति, मन्त्रविशेषनिर्देशोऽयमिति। कुत.। मन्त्रविशेषरूपोऽयं शब्द.। आग्नेयो यो विशिष्टाग्निविशिष्ट स बुधन्वान् कर्त्तव्यो, नाग्नि। अथाग्निर्बुधन्वान् क्रियते, तत्र बुधन्वानग्निर्देवता स्यात्। तत्राग्नेय इति सापेक्षे तद्धितनिर्देशो न स्यात्। न हि सविशेषणानां वृत्तिर्भवति। न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते। तस्मान्नाग्नेर्विशेषणं बुधन्वत्ता। कस्तर्हि बुधन्वत्तया विशेष्यते। आग्नेय.। तस्य बुधो मन्त्र, तेनाऽसौ बुधन्वान् भवति याग। अग्निं स्तोमेन बोधय समिधानो अमर्त्यमिति। अथ वा मन्त्र एवाभिसम्बद्ध्यते, बुधन्वान् आग्नेय इति॥

अथ यदुक्तं, रूपादेव मन्त्र. प्राप्नोति, न विधातव्य इति। उच्यते यः कश्चिदग्न्यभिधानो मन्त्र. प्राप्नोति। तन्निषेधार्थमिदमुच्यते। बुधन्वान् कर्त्तव्य, अग्निं स्तोमेन बोधयेति। एवं चेद् न देवताविशेषणम्। तस्मान्निर्गुणमभिधानं देवताया कर्त्तव्यम्। एवं चोदकाऽनुग्रहो भविष्यति॥ ३१॥ सिद्धान्तः॥ आधानाज्ययोरग्नेर्निर्गुणताऽभिधानाधिकरणम्॥ १६॥

विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात्॥ ३२॥

अस्ति ज्योतिष्टोम.। तत्र श्रूयते, गौरनुबन्ध्योऽजोऽग्नीषोमीय इति। सन्ति तु गोरभिधानानि— उस्रा उस्रिया अही मही अदितिरिला

इति। तत्र संशयः । किं निगमेषु केनचिदेव शब्देन गोरभिधानं कर्त्तव्यम् ? अथ वा विधिशब्देन कर्त्तव्यमिति ॥ तथा पृषदाज्येन वनस्पतिं यजतीति । सन्ति वनस्पतेरभिधानानि, वृक्षः पादपो द्रुमो नग इति । तत्र संशयः । किं निगमेषु केनचिदेव शब्देन वनस्पतेरभिधानं कर्त्तव्यम् ? अथ वा विधिशब्देनेति । किं प्राप्तम् । केनचिदेवेति । कुतः । विधिनिगमभेदात् प्रकृतौ, विधिनिगमभेदः कृतः । यो दीक्षितो यदग्नीषोमीयं पशुमालभेत इति विधौ । मन्त्रे, छागस्य वपाया मेदसोऽनुब्रूहीति । इहापि चोदकेन यत् प्राकृतं, तत् प्राप्यते । विधिनिगमभेदश्च प्रकृतावस्ति । तस्मात् स प्राप्यते छागशब्दः । प्रकृतौ कृतः स न शक्यते गवि कर्त्तुम् । विधिनिगमभेदस्तु शक्यते । तस्माद् उस्रादीनामन्यतमेन वाचिषु वचनं कर्त्तव्यम् ॥ तथा, अग्निं स्विष्टकृतं यजतीति विधौ निगमेऽपि, प्रीहि देवमुशतो यविष्ठ विद्वन् ऋतूः ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्या यजिष्ठ इति । विधिनिगमभेदः प्रकृतौ कृतः । स्विष्टकृद्विकारश्च वनस्पतिरिति सङ्कर्षे वक्ष्यते । तस्मात् तत्रापि विधिनिगमभेदः कर्त्तव्यः । अतो येन केनचिद् वनस्पत्यभिधानेन निर्देशः कर्त्तव्यः । तत्प्रकृतित्वादिति ॥ ३२ ॥ पूर्व० ॥

## यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥

यथोक्तेन वा शब्देन वचनं कर्त्तव्यं, गोरुस्राशब्देन । स हि तत्राम्नातः । उस्रायै वपायै मेदसोऽनुब्रूहीति । आह । मन्त्राम्नानमेतद्, न वचनमस्ति । अनेन कर्त्तव्यमिति । वचनं पुनश्चोदको विधिभिन्नेन वक्तव्यमिति । नैतदेवम् । न विप्रतिपत्तिं चोदकः प्रापयति । न हि यत् प्रकृतावस्ति तद्विकृतौ कर्त्तव्यमिति केनचित् प्राप्यते । किन्तु यत् प्रकृतौ चिकीर्षितं शब्देनाभिहितं, न अर्थात् प्राप्तं, तत् चोदकः प्रापयति । न च प्रकृतौ विधिनिगमभेदो विवक्षितः । छागस्य वपायै मेदसोऽनुब्रूहीत्येतद्वक्तव्यमिति विधीयते । तत्रार्थाद् विधिनिगमभेदो जातः । छागशब्दविधानं श्रुत्या गम्यते । विधिनिगमभेदो लक्षणया । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मान्न येनकेनचिदभिधानम् । आम्नानसामर्थ्यादुस्राशब्देन । तथा पृषदाज्ये देवतायां यो विधिशब्द उक्तः, तेन वचनं कर्त्तव्यम् । विधिनिगम-

विप्रतिपत्तिर्न चोद्यते । तस्माद् वनस्पतिशब्देन निर्देशः कर्त्तव्य इति ॥३३॥ सिद्धान्तः ॥ गवानुबन्धनपृषदाज्यहोमयोर्विधिशब्दाभ्यामेव उस्नावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ॥ १७ ॥

**स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ ३४ ॥**

अस्ति अवभृथः, वारुणेनैककपालेनावभृथं यन्तीति । तत्रेदमाम्नायते, अग्नीवरुणौ स्विष्टकृतौ यजतीति । तत्रायमर्थः सांशयिकः । किं निगमेऽस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् ? उत सस्विष्टकृच्छब्दकमिति । तत्रैव तावत् परीक्ष्यते । किं सांविज्ञायिकः स्विष्टकृच्छब्दः ? उत स्विष्टं करोतीति एतेन गुणेन प्रवृत्त इति गौणो न रूढः ? इति । यदि रूढः, अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् । अथ व्युत्पाद्यते, ततः सस्विष्टकृच्छब्दकम् । किं प्राप्तम् । सांविज्ञायिकः, न व्युत्पाद्यते इति । कुतः । न तावत् स्विष्टं कृतवान् । अथ च तस्मिन्नेव काले स्विष्टकृदित्युच्यते, स्विष्टकृतं यजतीति । न ह्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ भवतः । अग्निरेव स्विष्टकृच्छब्देनोच्यते । तयोर्यः स्विष्टं कृतवान् । यदा सांविज्ञायिकः, तदा अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् । कुतः । अग्नेर्हि देवताया असौ वाचको, नाग्नीवरुणयोः । विकृतौ अग्नेर्देवताया अभावादग्नीवरुणाभ्यां निवर्त्येत । तस्मादस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति ॥ ३४ ॥ पूर्व० ॥

**संयोगो वा अर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥**

न चैतदस्ति, अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति । किं तर्हि सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् ? इति । तत एतद् वर्ण्यते । गौणमिदमभिधानमिति । स्विष्टकरणात् स्विष्टकृद् इति गम्यते । गम्यमानं न न्याय्यम् अविवक्षितं कल्पयितुम् । क्रियानिमित्तत्वमवयवशब्देभ्यो गम्यते । समुदायस्य चाग्नौ अप्रयोगाल्लोकेऽन्यभिधानत्वं नाध्यवसीयते । तस्मान्न सांविज्ञायिकः । एवं चेत् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् । अर्थापत्तेः । अग्नेरर्थे अग्नीवरुणौ श्रूयेते । अग्नीवरुणौ स्विष्टकृतौ यजतीति । क्रियासंयोगित्वाच्च शक्नोति स्विष्टकृच्छब्दोऽग्निवरुणौ वक्तुम् । तस्मात् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति । अथ यदुक्तं—स्विष्टंकृतवतिचैष शब्दो, न चाग्निः स्विष्टं कृतवानिति । अत्र ब्रूमः मत्पक्षे भूतकालता हीयेत,

त्वत्पक्षे स्या च सोपपदश्च धात्वर्थः । अपि च तत. पूर्वान् यागानपेक्ष्य स्विष्ट कृतयागोऽग्नि. ॥ ३५ ॥ सिद्धान्तः ॥ अवभृथे अग्नीवरुणयोर्नास्विष्टकृच्छब्देनाभिधानाधिकरणम् ॥ १८ ॥

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥**

आग्नि मारुते पशुरग्नीषोमीय. । तत्र श्रूयते । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीति । तत्र स्विष्टकृति गुणलोपः श्रूयते । अग्निं यजतीति । तदत्र संशयः । किं याग एव स्विष्टकृतो गुणलोपः, अवशिष्टेषु निगमेषु यथा प्रकृतिभाव ? उत सर्वत्रैव गुणलोप इति । किं प्राप्तम् । स्विष्टकृतोऽग्ने. सगुणस्य गुणलोपे श्रूयमाणे यत्र यत्रोच्यते, गुणलोपस्तत्रैव स्यात् । यागे चोच्यते, अग्निं यजतीति । यागे गुणलोपे उच्यमाने यदि सर्वनिगमेषु गुणलोपोऽध्यवसीयेत, अश्रुत कल्प्येत । यावांश्च श्रुतस्योत्सर्गे दोषः, तावान् अश्रुतकल्पनायाम् । तस्माद् याग एव लोप स्याद्, न सर्वेषु निगमेष्विति ॥ ३६ ॥ पूर्व० ॥

**सर्वस्य वैककर्म्यात् ॥ ३७ ॥**

सर्वस्य वा निगमस्थस्यापि स्विष्टकृतोऽग्निशब्दस्य गुणो लुप्येत । कुतः । एककर्म्यात् । नैव स्विष्टकृद्यागे एव गुणो लुप्येत, किं तर्हि यागप्रयोगे । कथम् । अग्निं यजतीति प्रयोगवचन एष शब्द, सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत, अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्याग एव । तस्मात् सर्वत्र लोप इति ॥ ३७ ॥ सिद्धान्त ॥ अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाऽधिकरणम् ॥ १९ ॥

**स्विष्टकृदावापिकोऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥**

स्तो दर्शपूर्णमासौ । तत्र स्विष्टकृत् । अनुयाजेष्वग्निं स्विष्टकृतं यजतीति । तत्र सन्देह । किं स्विष्टकृद्यागोऽनुयाजेष्वारादुपकारक, उत संस्कारक इति । किं प्राप्तम् । आरादुपकारक इति । कुतः । एतद्धि कर्मणां प्रसिद्ध कार्यं, यद् आरादुपक्रिया । तथा हि भूतस्य भव्यार्थता भविष्यति, श्रुत्या च विधानम् । इतरथा भव्यस्य भूताऽर्थता स्याद्, वाक्येन च विधानम् । तस्मादारादुपक्रियेति ॥ एवं

प्राप्ते ब्रूमः। स्विष्टकृदावापिक स्याद्, न बाह्य। किमिदम् आवापिक इति। आज्यभागस्विष्टकृतौ अन्तरा आवापः स्थानम्। तत्र भव आवापिक। बहिरावापादनुयाजस्तान्त्रिक। या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवता आवापिकी। तस्मादावापिक इत्युच्यते। यदा चैवं, तदा संस्कारकर्म स्यात्। तथा प्रयोजनवद् भवति, प्रयोजनवतांऽग्नेरुपकरोतीति। अपि च द्विविधानि अङ्गानि। आरादुपकारकाणि, सामवायिकानि च। आरादुपकारकेभ्य सामवायिकानि गरीयांसि। तत्र हि साक्षाद्वाक्यम्। आरादुपकारकेषु प्रकृतेन परोक्षेणैकवाक्यता स्यात्। तस्मात् संस्कारकर्मेति॥ ३८॥ अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम्॥ २०॥

## अन्वाहेति च शस्त्रवत् कर्म स्याच्चोदनान्तरात्॥३९॥

दर्शपूर्णमासयो. श्रूयते, याज्यामन्वाह पुरोनुवाक्यामन्वाह इति। तत्र संशय। किं याज्यापुरोऽनुवाक्यानुवचनं प्रधानकर्म? उत संस्कारकर्म? इति। किं प्राप्तम्?। अन्वाहेति प्रधानकर्म स्यात्। कुत.?। चोदनान्तरात्। यदि संस्कारकर्म ततोऽस्वरूपादेव तयोर्वचनं प्राप्नोति। पुनरन्वाहेति वचनमनर्थकम्। प्रधानकर्मत्वे तु वक्तव्यम्। न ह्यन्यथा तस्य कर्त्तव्यता गम्यते इति। अतः श्रुत्या कर्त्तव्यतावगमात् प्रधानकर्मेति। शस्त्रवत्। यथा स्तोत्रशस्त्रे स्तौति शंसतीति कर्त्तव्यतावगमात् प्रधानकर्मणा एवमिहापि द्रष्टव्यम्॥३९॥ पूर्व०॥

## संस्कारो वा चोदितस्य शब्दवचनार्थत्वात्॥ ४०॥

संस्कारकर्म वा स्यात्। कुत। चोदितस्य अर्थस्य य शब्द, स तद्वचनार्थो भवति। स तस्य दृष्टोऽर्थ.। तस्मिन् सति अदृष्टकल्पनायां हेतुर्नास्ति। तस्मात् संस्कारकर्मेति। अवाच्यत्वान्नेति चेदिति यदुक्तं, तत् परिहर्त्तव्यम्॥ ४०॥ सि०॥

## स्याद्गुणार्थत्वात्॥ ४१॥

स्याद् उपपद्येत अन्वाहेति वचनम्। कुतः। गुणार्थत्वात्। तिष्ठन् याज्यामन्वाह, आसीन. पुरोनुवाक्यामन्वाहेति स्थानासनगुणाऽर्थं पुनर्वचनमुपपद्यते। तस्मात् संस्कारकर्मणी याज्यापुरोऽनुवाक्ये इति॥ ४१॥ आ० नि०॥ दर्शपूर्णमासयोर्याज्यापुरोऽनुवाक्ययोः सं-

स्कारकर्मनाधिकरणम् ॥ २१ ॥

## मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

अस्ति वायव्य पशु, वायव्यं श्वेतमालभेत भूतिकाम इति। अस्ति तु प्रकृतावग्निषोमीये पशौ मनोतामन्त्र.। त्वं ह्यग्ने प्रथमो मनोता अस्याधियो अभवोदस्महोता इति । स इह चोदकेन प्राप्यते। तत्र सन्देह । किं यथादेवतमूहितव्यो मनोतामन्त्रः, अथ वा अविकारेण प्रयोक्तव्य इति। उच्यते। ननु प्रकृतावन्यायनिगदोऽयम्। अग्नीषोमौ हि प्रकृतौ देवता, अयमप्याग्नेयः । असमवेताभिधानाद् अविकारेण प्रयोक्तव्य । अत्रोच्यते सत्यमग्नीषोमौ देवता प्रकृतौ, तौ तु अग्निश्च सोमश्च। तत्राग्निरदेवता, न त्वसमवेत । अग्निप्रत्ययेन या अत्र देवता सा प्रतीयते । अयमिह वायुर्देवताकार्ये श्रूयते। स देवताकार्ये श्रूयमाणोऽग्निकार्यमपि करोति देवताप्रत्ययम्। तस्मात्तदर्थापत्तेस्तद्धर्मा स्यात् ( १० । ३ । ३५ सू० )। तस्माद् यथादेवतं मनोतामन्त्र प्रयोक्तव्य इति ॥ एवं प्राप्ते ब्रूमः। मनोतायां तु वचनादविकारः स्यादिति। वचनमिदं भवति । यद्यप्यन्यदेवत्यः पशुः। आग्नेय्येव मनोता कार्या इति । किमिव वचनं न कुर्यात्। नास्ति वचनस्यातिभार.। तस्मादविकारेण मनोतामन्त्रः प्रयोक्तव्य इति ॥ ॥ ४२ ॥ मनोतायामूहाभावाधिकरणम् ॥ २२ ॥

## पृष्ठार्थेऽन्यद्रथन्तरात् तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् ॥ ४३ ॥

अस्ति वैश्यस्तोम, वैश्यो वैश्यस्तोमेन यजेतेति । तत्र श्रूयते, कण्वरथन्तरं भवतीति । उभयविकार' कण्वरथन्तरमित्युक्तम् । अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन्निति । तत्र संशयः। किं रथन्तरयोनौ बृहद्योनौ वा अनियमेन कण्वरथन्तर गेयम्? उत रथन्तरयोनौ, अथ वा स्वयोनौ ? इति । किं प्राप्तम्। चोदकेन अनियमः। लाघवं हि तथा भवति। ततः प्रयोगप्राशुभाव ॥ एवं प्राप्ते ब्रूमः। पृष्ठार्थे यदेतद् अन्यद् रथन्तरात् कण्वरथन्तरं श्रूयते, तद् रथन्तरयोनौ स्यात। ज्योतिष्टोमपूर्वको हि वैश्यस्तोम'। ज्योतिष्टोमे रथन्तरयोनौ पृष्ठं कृतम् । ननु बृहद्योनावपि तत्र कृतम्। नैवम्। ऋचां प्रविभक्तत्वाद् ऋचां प्रविभाग इह गम्यते। यथा रथन्तरयोनि-

भवतीति । कुतः । कण्वरथन्तरे रथन्तरशब्दः श्रूयते । तेन गम्यते रथन्तरविशेषः कण्वरथन्तरमिति । अर्थान्तरे कण्वरथन्तरशब्दो भवेद्, यदि रथन्तरधर्मा न भवेयुः । तेषु सत्सु यूपवदुपपद्यते । यथा औदुम्बरो यूपो भवतीति । न हि औदुम्बरो यूपद्रव्यं प्रकृतौ संकीर्त्तितम् । धर्मनिमित्तस्त्वयं शब्द उपपद्यते । एवमिहापि धर्म्मनिमित्तः कण्वरथन्तरे रथन्तरशब्दो भवति, नान्यथेति ॥ ४३ ॥ पूर्व०

## स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥

न चैतदस्ति, रथन्तरयोनौ गीयेतेति । किन्तर्हि, स्वयोनौ । कुतः सर्वाख्यत्वात् । सर्वविशेषणविशिष्टस्य हि रथन्तरशब्दो वाचकः । प्रस्तोवोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकालाऽभ्यासस्य कण्वरथन्तरमित्याख्या भवति । तस्माद् योनिरपि विशेषणम् । अपि च अर्थान्तरे कण्वरथन्तरे रथन्तरशब्दः कल्प्यः स्यात् । तस्मात् स्वयोनौ गेयमिति ॥ ४४ ॥ सि० ॥

## यूपवदिति चेत् ॥ ४५ ॥

इति चेत् पश्यसि, स्वयोनौ गेयमिति रथन्तरशब्दः तेनोपपद्यते। स हि रथन्तरधर्मेषु सत्सु यूपवदुपपद्यते इति ॥ ४५ ॥ आ० ॥

## न कर्मसंयोगात् ॥ ४६ ॥

नैतदेवम् । कर्मसंयोगात् काष्ठस्य यूपता । न हि लोके यूप इति संज्ञातः कश्चिद् वृक्षोऽस्ति । यत्र ते संस्काराः, स यूपः । तस्माद् औदुम्बरो यूपो भवतीति संस्कारनिमित्तः । इह पुनरेवंविशेषणविशिष्टः कण्वरथन्तरशब्दो लोक एवास्ति । नासौ कण्वानां रथन्तरं कण्वरथन्तरमित्येवं कृत्वा उच्यते । रथन्तरत्वे कण्वसम्बन्धे वा अस्य विधीयमाने वाक्यभेदः प्रसज्ज्येत । तस्मात् सांविज्ञायिकः कण्वरथन्तरशब्दः । अत एव स्वयोनौ गीयते ॥ ४६ ॥ आ० नि० ॥ कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

## कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥

कण्वरथन्तर एव भवति संशयः । उत्तरयोर्गायन्तीति । किं रथन्तरयोन्युत्तरयोः, बृहद्योन्युत्तरयोर्वा गेयम् ? उत स्वयोन्युत्तरयोरिति । किं प्राप्तम् । बृहद्योन्युत्तरयोर्वा रथन्तरयोन्युत्तरयोर्वा इति । कुतः । चोदकानुग्रहात् । न तत्रैष दोषो भवति स्वयोनि-

विशिष्टं कण्वरथन्तरमिति । उत्तरयोर्हि यत्कार्यं, तत्र स्वयोनिरवश्यं ज्ञातव्या भवति । तस्मात् प्रकरणमपेक्षितव्यमिति ॥ ४७ ॥ पूर्व० ॥

**समानदेवते वा तृचस्याविभागात् ॥ ४८ ॥**

न चैतदस्ति, बृहद्योन्युत्तरयोः, रथन्तरयोन्युत्तरयोर्वा गेयमिति । किं तर्हि । स्वयोन्युत्तरयोः । कुतः । तृचशब्दात् । समानच्छन्दसि समानदेवताके च अविशेषितस्तृचशब्दो भवतीत्युक्तम् । अतः श्रुत्या चोदको बाध्यत इति स्वयोन्युत्तरयोर्गेयमिति ॥ ४८ ॥ सिद्धान्त. ॥ कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥ २४ ॥

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥**

अस्ति अग्निष्टुदेकाहः । तत्र श्रूयते, आग्नेया ग्रहा भवन्तीति । तत्र सन्देहः । किं प्राकृतयोः स्तोत्रशस्त्रयोर्यथादेवतमूहः, उत अविकार इति । ऊहबुद्धिं व्यावर्त्तयितुमिदमभिधीयते । ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्, प्रधानकर्मत्वादिति । कस्य पुनरेषा बुद्धिः स्याद्, यां निवर्त्तयेत् ? । यो मन्दधीर्मन्यते अभिधानं सत्स्यतीति । मन्दधियामपि चोपदेशः क्रियमाणः फलवान् भवति । अपि च कश्चिदपेक्ष्य सर्वे मन्दधियः । अथ तु न परितोष एवं, ततोऽन्यथा वर्ण्यते । यत्तद् वृत्तमधिकरणं द्वितीयेऽध्याये । तस्येदं प्रयोजनसूत्रं, ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्याद् इति । यदि संस्कारकर्मणी स्तोत्रशस्त्रे किं भवति प्रयोजनम्? । अग्निष्टुदेकाहे यथादेवतमूहः । अथ प्रधानकर्मणी, ततो ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति ॥ ४९ ॥ सि० ॥ अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ॥ २५ ॥

**उभयपानात् पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥ ५० ॥**

सन्ति चातुर्मास्यानि, चातुर्मास्यैः स्वर्गकामो यजेतेति । तत्रानुयाजान् प्रकृत्य समामनन्ति, पृषदाज्येनानुयाजान् यजतीति । अस्ति तु प्रकृतौ आवाहनं, देवान् आज्यपान् आवह इति । तदिह चोदकेन प्राप्तम् । तत्र संशयः । किमविकारेणावाहनं कर्त्तव्यम् ? उत ऊहेनेति । यदा ऊहेन, तदा किम् आज्यपान् दधिपानिति कर्त्तव्यम् ? उत

दधिपानिति ? अथ वा पृषदाज्यपानिति ? । किं प्राप्तम् । दध्नोऽपि उपलक्षणं स्याद् आज्यस्यापि । कस्मात् । उभयपानात् । उभयं हि तद् देवतामुद्दिश्य त्यज्यते । यच्च त्यज्यते, तत् पीयत इति मन्त्रेणोक्तम् । यच्च पातव्यं तदुपलक्षितं, प्रकृतौ आज्यपानिति । इह आज्यस्यार्थे दधिसर्पिषी श्रूयेते । अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननं, मिथुनमेवैतत् प्रजननं क्रियते इति । तुल्यं दधि आज्येन उच्चार्यते । तस्माद् उभयमप्युपलक्षयितव्यं दधि च आज्यं चेति ॥ ५० ॥ पूर्व० ॥ १ ॥

## न वा परार्थत्वाद्यज्ञपतिवत् ॥ ५१ ॥

न वा एतदेवं, दधि उपलक्षयितव्यमिति । कुतः । परार्थत्वात् । परार्थं हि पातव्यं द्रव्यं, पातॄणामुपलक्षणम् । तत्राज्येन चेदुपलक्ष्यते, कृतोऽर्थ इति न पुनर्दध्ना उपलक्षयितव्यम् । यज्ञपतिवत् । यथा इमं यज्ञवान्ये च यज्ञपतिं वर्द्धानिति । यज्ञपतिर्मनुष्याणां होतॄणां प्रशंसार्थो, न स्वार्थं कीर्त्यन इति अविकारेण प्रयुज्यते । न सर्वान् यजमानान् प्रत्याहरः । एवमिहापि पातव्यं पातुर्लक्षणार्थं प्रयुज्यते न स्वार्थम् । तत्रैकेनापि येन केनचिल्लक्षिताः पातार इति कृत्वा न द्वितीयः प्रयोक्तव्य इति ॥ ५१ ॥ पूर्व० नि० ॥ १ ॥

## स्याद्वा आवाहनस्य तादर्थ्यात् ॥ ५२ ॥

स्याद् दध्न उपलक्षणं, न यज्ञपतिवत् । यज्ञपतिशब्दो हि न स्वार्थमुच्चार्य्यते, इडास्तुत्यर्थेन स उच्यते । आवाहनं पुनः स्मरणार्थम् । तत्र पातापि स्मर्त्तव्य , पेयमपि । तस्माद्योदकानुग्रहाय पेयान्तरमुपलक्षयितव्यमिति ॥ ५२ ॥ आ० ॥

## न वा संस्कारशब्दत्वात् ॥ ५३ ॥

न वा दधि उपलक्षयितव्यम् । संस्कारशब्दोऽत्र विद्यते आज्यस्य, पृषदाज्येनानुयाजान् यजतीति । पृषदाज्येन चित्रेणेत्यर्थः । संस्कारेण हि मिश्रणे संस्कृतं चित्रमाज्यं भवति । तां च चित्रतामस्य प्रत्यक्षतो दधि उत्पादयति । तस्मात् परार्थं चित्रासञ्जननार्थं न पातव्यम् । अतो नोपलक्षयितव्यमिति ॥ ५३ ॥ आ० नि० ॥

## स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥

स्याद्वा दधि उपलक्षणम् । द्रव्यं हि दधि तुल्यमाज्येन प्रधानभूतमुपदिश्यते इत्युक्तमस्माभि । अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननं, मिथुनमेवैतत् प्रजननं क्रियते इति । किं पृषदाज्यं गृह्यते ?, सर्पिश्चैव दधि चेति ; सर्पिषा दध्ना च याग कर्त्तव्य इत्यर्थ । पृषदाज्यमिति न द्रव्यान्तरमुच्यते । तस्माद् दधि उपलक्षयितव्यमिति ॥ ५४ ॥ आ० ॥

## दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥

न चैतदस्ति, तुल्यं दधि आज्येन, प्रधानभूतमिति । ग्रहणे हि तत्तुल्यमाज्येन, न यागे । यागो हि आज्येन चित्रेण श्रूयते, तस्माच्छ्रुतेराज्यप्रधानत्वाद् यागं प्रतिगुणभूतं दधि स्यात् । न हि. ग्रहणं श्रूयमाण यागे श्रुतं भवतीति । दधि ग्रहणे श्रूयमाण न यागार्थं भवति । तत्र श्रुत्या आज्यं करणं, दधि वाक्येनेति । किमर्थं तर्हि तत्र दधिग्रहणम् । गृह्यमाणेन प्रत्यक्षतश्चित्रमाज्यं भवतीति । तस्मादाज्यपा निगमाः स्युर्न दध्न उपलक्षण कर्त्तव्यमिति ॥ ५५ ॥ सि० ॥

## दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥

न चैतदस्ति, आज्यपा निगमा भवेयुरिति न दध्न उपलक्षणं कर्त्तव्यमिति । दधिपानित्येव कर्त्तव्य, दधि एवात्र प्रधानम् । कुतः । आज्ये प्रथमान्त्यसंयोगात् । प्रथमसंयोग उपस्तरणम्, अन्त्यसंयोगोऽभिघारणम् । यदि च सत्रे यजेत द्विरुपस्तृणीयात् सकृदभिघारयेद् ओषधयो वै प्रियङ्क्त ओषधिष्वेव पशून् प्रतिष्ठापयन्तीति यदि प्रावृषि यजेत सकृदुपस्तृणीयाद् द्विरभिघारयेद् वृष्ट्यैव पशून् अभिजिघर्त्तीति, उपस्तरणमन्यत् तत्र निधापयितु क्रियते । परार्थेन एष तत्र शब्दार्थो, न ग्रहणमात्रम् . ग्रहणेनान्यस्याधिकरणसंस्कारं उपस्तृणातीति शब्दो वर्त्तते । तथा, अभिघारयतीति न ग्रहणमात्रमभिघारणम् । अन्यस्याभिमुखेनाभिघारयतीति गम्यते । सोऽन्य आज्यसयुक्त कथं स्यादिति । तदुपस्तरणाभिघारणशब्दाभ्यां दधि प्रधानभूतं गम्यते । आज्यमपि तस्य गुणभूतम् । तस्माद्दध्न एवोपलक्षणं कर्त्तव्यं, न आज्यस्येति ॥ ५६ ॥ पूर्व० ॥ २ ॥

## अपि वाज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५७ ॥

अपि वा नैतदेवं- दधि प्रधानं तदुपलक्षयितव्यमिति । आज्यमेव प्रधान, तद्धि प्रयोजनवत् । यागसम्बन्धात् । पृषदाज्येनानुजान् यजतीति । यत् तेनोपस्तीर्य्यते तत्रद्वय निष्पद्यते। तच्चैवावत्त भवति, दधि चोपस्तीर्णम् । तत्र शब्दादाधेयस्याधारसंस्कारोऽवगम्यते दधिसंस्कारः, न तु संस्कृतस्य प्रयोजनं दध्न । प्रत्यक्षा तु चित्रता निर्वर्त्यमाना लक्ष्यते । तया च प्रयोजनम् । पृषद्धि तदाज्यं श्रूयते । न च याग दधि करणं भवितुमर्हति वाक्यप्राप्तम्, आज्ये श्रुतिप्राप्ते प्रत्यर्थिनि । तस्मादुपस्तरणमाज्यग्रहणार्थमेव । ततो दधिग्रहणं भविष्यतीति अर्थादाधेयाधारसम्बन्धे उपस्तरणमिव तद् भवतीति भाक्त उपस्तृणाति प्रयुक्तः । तथाभिघारयति । तस्मात् सकृद् द्विरित्यतस्य गुणस्यार्थे व्यपदेशो भक्त्या एप संस्कारशब्द उपस्तृणाति, अभिघारयति, ओषधिष्वेव पशून् प्रतिष्ठापयति, दृष्ट्यैव पशूनभिजिघर्त्तीति च । तस्माद् आज्यपा निगमा एव भवेयुरिति ॥ ॥ ५७ ॥ पूर्व० नि० ॥ २ ॥

## अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८॥

अपि वा इति पक्षव्यावृत्तिः । न आज्यपा निगमा भवेयु, पृषदाज्यपानिति वक्तव्यम् । कुतः । आख्याविकार एव भवति । दधिसर्पिषोरत्र संसर्ग क्रियते । तत्र यो गुण उपजायते तद्गुणयुक्तस्य संसृष्टस्य आख्याविशेषो भवति पृषदाज्यमिति । तथा रागः खाडवः सुरा इति । तत्र हि उपचरितमेकं शब्दमुपलक्षयामः । उपचाराच्च अभिधानाभिधेयसम्बन्धो गम्यते, तेन च यागनिवृत्ति श्रूयते, पृषदाज्येनानुयाजान् यजतीति । तस्मादेवमुपलक्षयितव्यं, पृषदाज्यपानिति ॥ ५८ ॥ पूर्व० ॥ ३ ॥

## न वा स्याद् गुणशास्त्रत्वात् ॥ ५९ ॥

नैतदेवं स्यात्, संसृष्टस्य रागवत् पृषदाज्यशब्दो वाचक उपचारादिति । सत्यमुपचरितोऽयं तत्र । स तूपचारो लोकादेवावगतः । स गुण आज्यं भवतीति गम्यते । कुतः । आज्यशब्द सर्पिषो वाचकः । पृषच्छब्दश्चित्रस्य । तद्यथा पृषद्रज्जु पृषन्मणिः पृषन्मृग

इति । तयोरुच्चरितयोश्चित्राज्याभिधानं गम्यते । तस्मात् तत्रैव स उपचार उपपन्न. । अतश्चाज्यस्यैवोपलक्षणं चित्रमचित्रं वा आज्यम् आज्यशब्देनाभिधीयत एवेति ॥ ५९ ॥ पूर्व० नि० ॥ ३ ॥ चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनाधिकरणम् ॥ २६ ॥

इति श्रीभट्टशबरस्वामिविरचिते मीमांसाभाष्ये दशमस्य अध्यायस्य चतुर्थ पाद' ॥ १० ॥ ४ ॥

अथ दशमाध्याये पञ्चम. पाद. ॥ १० ॥ ५ ॥

## आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥

द्यावापृथिवीयमेककपालम्, आश्विनं द्विकपालं, वैष्णवं त्रिकपालमित्यादि एकदेशवचनम् । समस्तवचनमपि भवति । आग्नेयमष्टाकपालं निर्वपेदिति । तथा द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेतेत्येकदेशग्रहणम् । समस्तग्रहणमपि भवति, द्वादशाहेन प्रजाकामं याजयेत् । तथा, एकां सामिधेनीमन्वाह तिस्रः सामिधेनीरन्वाह इति एकदेशग्रहणम् । समस्तग्रहणमपि भवति, पञ्चदश सामिधेनीरन्वाह इति । तदत्र संशयः । किं सर्वेष्वेव आद्योपादानम् ? अन्त्यलोपश्च, उत विकल्प इति । किं प्राप्तम् । आनुपूर्व्यवतां क्रमवतामेकदेशग्रहणे ब्रूमः । अन्त्यलोप आद्योपादानञ्चेति । किं कारणम् । मुख्यमाद्य, जघन्यमन्त्यम् । मुख्यजघन्ययोरन्यतरस्मिन् लोप्तव्ये जघन्या लुप्येत । मुख्यो हि अनुग्रहीतव्य. । तदुक्तं, मुख्यं वाऽपूर्वचोदनाल्लोकवद् इति । आगमवत् । यथा, समाजेषु समासेषु च ये आगन्तवो भवन्ति । ते पूर्वोपविष्टाननुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ॥ १ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ २ ॥

इतश्च आद्योपादानमन्त्यलोपश्चेति । कुतः । लिङ्गमप्येवं भवति । लुप्येत वा एतत् षष्ठमहो यत् पञ्चाहानुपयन्ति, लुप्येत वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपतन्तीति षष्ठस्य लोपं दर्शयति, न प्रथमस्य ॥ २ ॥ युक्तिः ॥

## विकल्पो वा समत्वात् ॥ ३ ॥

नैतदस्ति, आद्योपादानमिति, किन्तर्हि विकल्पः । आद्यमन्त्यं वा उपादातव्यमिति । कुतः । समत्वात् । समो हि अन्त्यलोप आद्यलोपेन । न हि आदिलोपे श्रुति , नो खल्वपि अन्त्यलोपे । मुख्ये जघन्ये वा उपादीयमाने प्राकृतमुपात्तं भवति । न हि विशेषश्रुतिरस्ति, मुख्यमुपादातव्यमिति । तस्मादनियम इति ॥ ३ ॥ पूर्व० ॥

## क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥

अथ यदुक्तं, समाजेषु समासेषु चागन्तुर्जनो यथा वास्तव्यान् अनुपमृद्यैव निविशते एवमिहापीति । युक्त, यद्वास्तव्यैराक्रान्ते देशे आगन्तुर्जनोऽसंभवादन्ते निविशते । इह तु अनाक्रान्ते चिन्त्यते, के प्रथममाक्रमेयुरिति । तेनात्र न केषाञ्चित् क्रमो विरुद्ध इति ॥४॥ आ० नि०

## लिङ्गमविशिष्टं सङ्ख्याया हि तद् वचनम् ॥ ५ ॥

अथ यल्लिङ्गमुक्तं, लुप्येत वा एतत् षष्ठमह –इति षष्ठस्य लोपं दर्शयति, नाद्यस्येति । तद् अविशिष्ट विकल्पेऽपि । सङ्ख्याया हि षष्ठमिति पूरणवचनं भवति, यस्मिन् कस्मिंश्चिदपगते येन प्रथमेन मध्येन अन्त्येन वा सङ्ख्या पूर्य्यते, तत् षष्ठम् । यथा षष्ठो भ्रातॄणां न दृश्यते इति, कनीयसि ज्येष्ठ मध्ये वा अदृश्यमाने भवति । एवमिहापि द्रष्टव्यम् ॥ ५ ॥ आ० नि० ॥

## आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद् वचनादन्त्यविधिः स्यात् ॥ ६ ॥

वाशब्दः पक्षं व्यावर्त्तयति, आदित. प्रवृत्तिर्भवितुमर्हति । कुत. । आरम्भस्य तदादित्वात् । आरम्भो हि तेषाम् आनुपूर्व्यवताम् आदितो न्याय्यः । पूर्वेण हि उपक्रान्तो द्वितीयादिः कर्त्तव्य. । स इह प्रथममेव क्रियमाणोऽनुपक्रान्त. केनाचित् क्रियेत । पूर्वो हि पदार्थ. क्रियमाण उत्तरं पदार्थमभिनियच्छति । य. पुनराद्यः पदार्थ सोऽनुपक्रान्त एवान्येन कर्त्तव्य. । तस्मिन्नेव प्रथममुपादीयमाने नानुपक्रमदोषो भविष्यति । तस्मात् सर्वत्रैवं, ये क्रमवन्त आरब्धव्या , ते प्रथमादुपक्रमितव्या इति ॥ अपि च, प्रथमस्य निमित्तमुपसम्प्राप्तम् । न च विरोधोऽस्ति तदादिषु कृतेषु । अन्त्यानां निमित्तेऽपि

प्राप्ते, परिपूर्णत्वात् पदार्थानां, लोपो न विरुद्धः । तस्मादाद्योपादान-मन्त्यलोपश्चेति । अथैवं न्यायेन प्राप्ते, यत्र वचनं भवति, तत्रा-ऽपनीय मध्यममपि, विधिर्भवति । यथा, अपबर्हिष प्रयाजान् यजति । अपबर्हिषावनुयाजौ यजतीति । विना वचनेन, अन्त्यलोप एव न्याय्य इति ॥ ६ ॥ पूर्व० नि० ॥ एकदेशग्रहणे प्राथमिकानामेव ग्रहणा-ऽधिकरणम् ॥ १ ॥

## एकत्रिके तृचादिषु माध्यन्दिने छन्दसां श्रुति-भूतत्वात् ॥ ७ ॥

अस्ति एकत्रिकः क्रतु, अथैष एकत्रिक । तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिन । एकस्यामच्छावाकस्य, तिसृषु माध्यन्दिन. पवमान इति । तत्र माध्यन्दिने पवमाने संशयः । किं तृचाद्यासु गानं कर्त्तव्यम्, उत आद्ये तृचे ? इति । किं प्राप्तम् । एकत्रिके क्रतौ माध्यन्दिने पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात् । कुत । छन्दसां श्रुतिभूतत्वात्, श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ, त्रिच्छन्दा आवापः, माध्यन्दिन' पवमान पञ्चसामेति । तानि इह चोदकेनैव प्राप्तानि । तानि एवमुपसंहर्त्तुं शक्यन्ते । यदि तृचाद्यासु गानम् । तस्मात् तृचाद्यासु इति ॥ ७ ॥ पूर्व० ॥

## आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥८॥

वाशब्द पक्षं व्यावर्त्तयति । आद्ये तृचे गानं कर्त्तव्यम् । एष हि न्याय', क्रम एवमनुगृहीतो भवति । इतरस्य छन्दोऽनुग्रहस्य प्राकृतत्वादिह आनुमानिकत्व भवति ॥ आह । ननु क्रमोऽपि प्राकृतत्वादानुमानिक. । उच्यते । उभयोरानुमानिकयाः क्रमानुग्रहो ज्यायान् भवति । कथम् । तत्र हि प्रथमे गायत्रे छन्दसि अभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा, प्रथमारम्भेण हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति । अप्रवृत्ते कस्मिंश्चित् पदार्थे सर्वे वैकल्पिकं प्राप्नोति, न प्रवृत्ते । प्रवृत्ते हि ततोऽन्यदशक्तत्वादप्राप्तम् । प्रारब्धस्य च क्रिया प्राप्ता । तस्यामवस्थायामुभयप्राप्त्यभावादविकल्पः । अत्र किं तदेव प्रारब्धं परिसमाप्यताम्, अथान्यदु अप्राप्तमारभ्यतामिति । तत् परिसमापयञ्छ्रुतं करोति, परित्यजञ्छ्रुतं

जहातीति प्रारब्धं परिसमापनीयं गम्यते । अथेदानीं तस्मिन्निवृत्ते वैकल्पिकं कृतार्थत्वाद् अप्राप्तम् । तस्मात् क्रमानुग्रहो न्याय्यो न छन्दोऽनुग्रह इति ॥ तत्राह । ननु गायत्रेण छन्दसा पूर्वं क्रियमाणेन उत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति । उच्यते । सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा । अथ तयो पूर्णे तृचे नैव छन्दसां प्रयोजनम् । तस्मात् प्रत्यक्षत्वात् पूर्वया स्तोत्रीयया उत्तरयोः स्तोत्रीययोः क्रमस्य, क्रमानुग्रहो ज्यायान्न छन्दोऽनुग्रह इति ॥८॥ सि०

**यथानिवेशञ्च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात् ॥९॥**

इतश्चाद्ये तृचे गेयमिति । कुत । यथानिवेशं प्रकृतिवत्, शब्देन प्राप्तासु स्तोत्रीयासु तिसृषु माध्यन्दिन इति सङ्ख्यामात्रस्य प्रत्याम्नायो न क्रमस्य । आह । ननु यथा क्रमस्य न प्रत्याम्नाय, एवं छन्दसामपि । उच्यते । सत्यमेवमेतत् । मुख्यस्तु क्रमानुग्रह, जघन्यश्छन्दसाम् । तस्मादपि आद्ये तृचे गातव्यमिति ॥ ९ ॥ युक्ति ॥ एकत्रिके आद्ये तृच गानाधिकरणम् ॥ २ ॥

**त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥**

अस्ति एकत्रिक क्रतु, अथैष एकत्रिक । तस्य एकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिन । एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमान इति । सन्ति तु धुरि सामानि । तेषु संशयः । किं, तृचे गेयानि, उतैकस्याम् ऋचि ? इति । किं प्राप्तम् । त्रिकः स्तोमस्तृचे स्याद् धुरि सामसु । एव तृचप्रापकश्चादकोऽनुग्रहीष्यते । तस्मात् तृचे गेयमिति ॥१०॥ पूर्व०

**एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥**

एकस्यां वा ऋचि गेयं, स्तोमस्य हि तत्रावृत्तिधर्मता भवति । वचनप्रामाण्यात् । इदं भवति वचनम्—आवृत्त धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते इति । किमिव वचन न कुर्य्यात् । तस्माद् धुरि सामसु एकस्यामृचि गेयमिति ॥ ११ ॥ सिद्धान्त ॥ एकस्याम् ऋचि धूर्गानाधिकरणम् ॥ ३ ॥

**चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥**

सन्ति द्विरात्रादयोऽहर्गणा, द्विरात्रेण यजेतेत्येवमादयः । तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्त प्रवर्त्तते, उत प्रायणीयोदयनीयौ

वर्जयित्वा दशरात्रस्य ? इति । किं प्राप्तम् । अविशेषात् कृत्स्नस्येति॥ एवं प्राप्ते ब्रूमः । चोदनासु तासु प्रायणीयोदयनीययोः पूर्वत्वेनासम्भवाद् दशरात्रस्य विध्यन्तः प्रवर्त्तते । केन हेतुना । लिङ्गेन विध्यन्तो नियम्येत । किं लिङ्गं भवति । एवमाह– यत् प्रथमं तद् द्वितीयं, यद् द्वितीयं तत् तृतीयं जगतीमन्तर्गच्छतीति । एवं ज्ञापयति, यत् प्रथमं द्विरात्रस्य, तद् द्वितीयं द्वादशाहस्य गायत्रम् । यद् द्वितीयं द्विरात्रस्य, तत् तृतीयं त्रैष्टुभं जगतीमन्तर्गच्छतीति षडहतृतीयं जागतम् अहः अन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । यत् प्रथममिति द्विरात्रस्य वादः, प्रकरणात् । तत् तृतीयमिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपि चेदमपरं लिङ्गं, गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छतीति, अन्तरायं षडहतृतीयं जागतं दर्शयति । तस्माद्दशरात्रस्य प्रवृत्तिः ॥ १२ ॥ सि० ॥

## प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥

द्विरात्रेण यजेतेति रात्रशब्दः । इहापि दशरात्र इति स एव । तदेतस्मात् प्रकृतिलिङ्गाद्दशरात्रस्य विध्यन्त इति प्राप्ते लिङ्गदर्शनम् ॥१३॥ उपसंहारः ॥ द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥४॥

## अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात् ॥ १४ ॥

अग्नौ तु आधूननार्था मन्त्राः, वेशीनां त्वापन्मन्नाधूनोमीत्येवमादयः । तान् प्रकृत्य श्रूयते, सप्तभिराधूनोतीति । तथा अग्नौ वपनार्था मन्त्राः, या ओषधीरित्येवमादयः । तानपि प्रकृत्य श्रूयते, चतुर्दशभिर्वपतीति । तत्र संशयः । किमाद्योपादानम्? उत अनियम इति । किं प्राप्तम् । आद्योपादानम् । आदितो वा तन्न्यायत्वाद् इति ॥ एवं प्राप्ते ब्रूमः । अपूर्वासु तु सङ्ख्यासु अप्रकृतिपूर्विकासु श्रूयमाणासु ब्रूमः । विकल्पः स्यात् । एवं सर्वासां सङ्ख्यानामर्थवत्त्वं भविष्यति । आद्योपादाने हि केषांचिन्मन्त्राणामुत्पत्तिरनर्थिकैव स्यात् । गम्यते च ताभिर्वपनम् । प्रकरणात् । या हि प्रकृतिपूर्विका भवन्ति, तासां प्राकृतप्रयोगेणार्थवत्ता । आनर्थक्येन च कारणेन मुख्यातिक्रमः सङ्ख्यायाः ॥ १४॥ सप्तभिराधुनोतीत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम् ॥ ५ ॥

## स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरण-मविकारात् सङ्ख्यायां गुणशब्दत्वा-दन्यस्य चाश्रुतित्वात् ॥ १५ ॥

इह विवृद्धस्तोमका क्रतव उदाहरणम् । एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममिति। तत्रायं संशय । किं प्राकृतानां साम्नामभ्यासेन सङ्ख्या पूरयितव्या ? उत अप्राकृतानामागमेनेति । किं प्राप्तम् । अनियम । अविशेषादिति प्राप्ते ब्रूमः । स्तोमविवृद्धौ अभ्यासेन सङ्ख्या पूर्यते । एवं हि प्रकृतग्रहणम् । इतरथा अप्रकृतक्रियेति । सङ्ख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन । न चान्यत् सामद्रव्यं श्रुत्या विधीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषस्तावान् अश्रुतकल्पनायाम् । तस्मादभ्यसितव्यानि प्राकृतानि सामानि। यथा धुरि सामानीति ॥ १५ ॥

## आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । अप्राकृतानां साम्नामागमेन सङ्ख्या पूरयितव्या इति । कुत । अभ्यासो न हि श्रूयते, एतावच्छ्रूयते, एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति । यावांश्च श्रुतस्योत्सर्गे दोषः । तावानश्रुतकल्पनायाम् ॥ ननु आगमोऽपि न श्रूयते । उच्यते। उभयस्मिन्नश्रूयमाणे आगमो न्याय्यः । एवमागमपूरिता सङ्ख्या समञ्जसा भविष्यति । इतरथा अभ्यासपूरिता असमञ्जसा स्यात् । तस्मादागमेन पूरयितव्येति ॥ १६ ॥ सि० ॥

## सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥

इतश्चागमेनेति । कुतः । पृथक्त्वनिवेशिनी हि सङ्ख्या । यथा अष्टौ घटा इति । अभ्यासेनापृथक् स्यात् । तस्मादागमेन पूरयितव्या इति ॥ १७ ॥

## पराक्शब्दत्वात् ॥ १८ ॥

इतश्चागमेनेति । कुतः । पराक्शब्दो हि भवति । पराग् बहिष्पवमानेन स्तुवन्तीति । स च अनभ्यासस्य वाचक । यथा पराचीः सामिधेनीरन्वाह इति, अनभ्यस्ता इति गम्यते । तस्मादप्यागम ॥ १८॥

उक्ताविकाराच्च ॥ १९ ॥

इतश्चागमः । एवमुक्तस्यांविकारो भवति । किमिदम् अविकार इति ? । अपुनर्वचनम् । तत्र जामितादोषो न भविष्यति । अभ्यासे हि स स्यात् । जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेतेति ॥ १९ ॥ युक्ति ॥

अश्रुतित्वान्नेति चेत् ॥ २० ॥

इति चेत्, इति पुनर्यदुक्तम् आगमोऽपि नैव श्रूयते इति । तत् परिहर्त्तव्यम् ॥ २० ॥ आ० ॥

स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥

अर्थेन सामानि चोद्यन्ते । कतमेनार्थेन । एकविंशेनातिरात्रेण प्रजाकामं याजयेदित्येवमादीनां वाक्यानामर्थेनेति । न हि अनागम्यमानेषु सामसु एताः सङ्ख्याः सामञ्जस्येन सम्भवन्ति । तस्माद् अर्थचोदितानामिदं परिमाणशासनं कृतार्थः शब्द एकविंशेनातिरात्रेण प्रजाकामं याजयेदिति अर्थप्राप्तमागमं न शक्नोति वारयितुम् । तस्मादागमेन पूरणमिति ॥ २१ ॥ आ० नि० ॥

आवापवचनं चाभ्यासे नोपपद्यते ॥ २२ ॥

इतश्चागम इति पश्यामः । आवापवचनं हि भवति । त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप् । अत्र हि एवावपन्ति, अत एवोद्वपन्तीति । एतदभ्यासे नावकल्पते । तस्मादप्यागम इति ॥ २२ ॥

साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥

इतश्चागमः । कुतः । साम्नां हि एवमुत्पत्तिरर्थवती भवति—

दश सामसहस्राणि शतानि च चतुर्दश ।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥
अशीतिशतमाग्नेयं पवमानं चतुः शतम् ।
ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगा, इति ॥ इतरथा

एषां साम्नामुत्पत्तिरनर्थिका स्यात् । तस्मादप्यागम इति ॥ २३ ॥ युक्तिः ॥

धूर्ष्वपीति चेत् ॥ २४ ॥

अथ यदुपवर्णितं, यथा धूरिसामस्विति । तत् परिहर्त्तव्यम् ॥ २४ ॥ आ० ॥

नावृत्तिधर्मत्वात् ॥ २५ ॥

नैतदेवं युक्तं, धुरि सामसु आवृत्तिधर्मकाणि हि तानि । वचनप्रामाण्यात् । इदं तत्र वचनम् । आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते इति । वचनात् तत्र क्रियते । तद्वदिह वचनं नास्ति । तस्माद् विषममेतदुपवर्णनम् । अत्र आगमेन सङ्ख्या पूरयितव्येति सम्यगेतदिति ॥ २५ ॥ ॥ आ० नि० ॥ त्रिवृद्धस्तोमके अप्राकृतानां साम्नामागमाधिकरणम् ॥ ६ ॥

## बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥

त्रिवृद्धस्तोमकेषु क्रतुषु संशयः । बहिष्पवमाने किं साम्नामागमः ? अभ्यासः ? इति । पूर्वेण न्यायेनागम इति ॥ एवं प्राप्ते ब्रूमः । बहिष्पवमाने तु नैवम् । ऋगागमस्तत्रेति । कुत । सामैकत्वात् । कथम् । यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिङ्करोति । अथ कस्माद् बहिष्पवमाने सकृदेव हिङ्करोतीति ॥ एकं हि तत्र सामेति ब्रूयात् । स्वारमेव गायत्रमिति वचनात् । सामैकत्वे ज्ञाते ऋगागमेन सङ्ख्या पूरयितव्येति । सामापि अभ्यसितव्यमिति ॥ २६ ॥ बहिष्पवमाने ऋगागमाधिकरणम् ॥ ७ ॥

## अभ्यासेन तु सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥

स्तो दर्शपूर्णमासौ । तत्र काम्याः सामिधेनीकल्पा । एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य । चतुर्विंशतिमनुब्रूयाद् ब्रह्मवर्चसकामस्य । एकविंशतिञ्चानुब्रूयाद् अन्नकामस्य, द्वाविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य । षड्विंशतिमनुब्रूयात् पशुकामस्येत्येवमादय. । तत्रायमर्थ सांशयिकः । किं सामिधेनीष्वागमन सङ्ख्या पूरयितव्या, उत अभ्यासेन, उत यावदुक्तमभ्यस्य शेषमागमेन ? इति । किं प्राप्तम् । पूर्वेण न्यायेनागम इति । अपि च अविशेषोऽर्थ. । अभ्यासेन हि पूर्य्यमाणा न सामञ्जस्येन स्यात् । तस्मादागम इति ॥ एवं प्राप्ते ब्रूम. । अभ्यासेन तु सङ्ख्यापूरणमिति । तुशब्दः पक्षव्यावर्त्तकः । नागमः । किं तर्हि अभ्यासः । कुतः । अभ्यासप्रकृतित्वात् । प्रकृतौ अभ्यासेन सङ्ख्यापूरिता । त्रि. प्रथमामन्वाह त्रिरुत्तमामिति । कथम् । पञ्चदश सामिधेन्य इति श्रुति. । एकादश च समाम्नाताः । तत्र अभ्यासेनागमेन वा सङ्ख्यायां पुरयितव्यायाम् अभ्यास उक्त. ।

त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति । अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्त्तव्य इति । यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसङ्ख्या पूर्य्यते, तावत्कृत्वोऽभ्यसितव्यम्, इत्येतदभिप्रायं त्रित्वम् । तथा हि दृष्टार्थता । त्रिसङ्ख्याभिप्राये अदृष्टं कल्प्यं स्यात् । तस्माद् इहापि तत्प्रकृतित्वाद्यावत्कृत्वोऽभ्यस्यमानयोर्यथोदिता सङ्ख्या पूर्यते, तावत्कृत्वोऽभ्यसितव्यमिति ॥ २७ ॥ पूर्व० ॥

## अविशेषान्नेतिचेत् ॥ २८ ॥

इति यदुक्तं तत् परिहर्त्तव्यम् ॥ २८ ॥ आ० ॥

## स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येत आ सङ्ख्या पूरणात् ॥ २९ ॥

स्यादभ्यासः । कुतः । प्रकृतिधर्मत्वं हि विकृतेः । तस्माद् आ सङ्ख्यापूरणादभ्यसितव्यम् । एवं प्रकृतिवत् कृतं भविष्यति । चोदकाऽनुरोधेन अभ्याससामञ्जस्यमभ्युपगन्तव्यम् । तस्मादभ्यास इति ॥ २९ ॥ आ० नि० ॥

## यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैवम् । आ सङ्ख्यापूरणात् प्रथमोत्तमे अभ्यसितव्ये इति । यावदुक्तमभ्यस्य अवशिष्टानामागमेन पूरयितव्या सङ्ख्येति । कुतः । कृतपरिमाणत्वादभ्यासस्य । कृतं ह्यभ्यासस्य परिमाणम् । त्रिः प्रथमामन्वाह, त्रिरुत्तमामिति । त्रिसङ्ख्या चाभ्यासेन विवक्षिता, न पूरणी सङ्ख्या । तथा श्रुतिः परिगृहीता स्यात् । इतरथा लक्षणा ॥

अथ यदुक्तं, दृष्टार्थता चैवं भवतीति । नैतदेवम् । आदर्त्तव्यो हि त्रित्वानुरोधः । द्विचतुष्केणापि हि सङ्ख्या पूर्यते । तथापि प्रथमोत्तमयोस्त्रिरभ्यासोऽनुष्ठेयः । तेन सङ्ख्या पूरयितव्येति । इहापि तेनैव अभ्यासेन सङ्ख्या पूर्यते । भवति हि सोऽप्यत्र सङ्ख्यापूरणः । प्रकृतौ प्रथमोत्तमे च त्रिरभ्यस्ते । सङ्ख्या च पूरिता । इहापि तद्वदेव कर्त्तव्यम् । प्रथमोत्तमे च त्रिरभ्यसितव्ये । सङ्ख्या च पूरयितव्या । न प्रकृतावेष शब्दार्थो गम्यते, अनेनाभ्यासेन सङ्ख्या पूरयितव्येति । अभ्यासः कर्त्तव्य इति वचनादवगम्यते । सङ्ख्या पूरयितव्येति सामर्थ्यात् । सा च प्रकृतौ अर्थादनेन पूरिता । यश्चार्थात् कृतो, न

स चोदनार्थः । तस्मान्नानेनाभ्यासेन सङ्ख्या पूरयितव्येति चोदक आह । एवं चेद् यावदुक्तमभ्यस्य अवशिष्टानामागम इति॥३०॥ सि० ॥

## अधिकानाञ्च दर्शनात् ॥ ३१ ॥

इतश्चागम इति । अधिकदर्शनं हि भवति । न जगत्या परिदध्यात् । यज्जगत्या परिदध्यात् । तच्छन्दांसि गमयेत् । त्रिष्टुभा परिदधातीति । अभ्यासे च जगतीपरिधानाशङ्का नावकल्पते । तस्मादप्यागम इति ॥ ३१ ॥ युक्ति० ॥

## कर्मस्वपीति चेत् ॥ ३२ ॥

इति चेत् पश्यसि, यावदुक्तमभ्यस्य अधिका आगमयेदिति, धुरि सामकर्मस्वपि एवमेव स्यादिति ॥ ३२ ॥

## न चोदितत्वात् ॥ ३३ ॥

नैतदेवं, धुरि सामकर्मसु युक्तम् । चोदितस्तत्राभ्यासः । आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठन्ते इति । इह तद्वचनं नास्ति । तस्माद्यावदुक्तम् अभ्यस्य अवशिष्टानामागमेन सङ्ख्या पूरयितव्येति ॥ ३३ ॥ आ०नि०॥ सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणाधिकरणम् ॥८॥

## षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥

अस्ति षोडशी ज्योतिष्टोमं प्रकृत्याम्नातः— य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना, परास्य भ्रातृव्यो भवतीति । तत्र संशयः । किमेष प्राकृतो, वैकृत ? इति । कथम् । प्राकृतः । ज्योतिष्टोमं प्रकृत्य आम्नानाद् वैकृतो, विकृतौ वचनात् । मध्यमेऽहंस्त्रिरात्रस्य गृह्यते इति । प्रकृतावपि वचनमस्त्येवेत्याशङ्क्य, अग्निष्टोमे राजन्यस्य गृह्णीयादतिरात्रे ब्राह्मणस्येति । विकृतावपि वचनसामर्थ्याद्विकृतौ अतिरात्रे स्यादित्याशङ्क्यते । प्रकृतावाम्नानात् । प्रकृतौ चातिरात्रस्य भावात् प्राकृत इत्याशङ्का । तस्मात् संशय ॥ किं प्राप्तम् । षोडशिनो वैकृतत्वं स्यात् । कुतः । तत्र कृत्स्नविधानात् । विकृतावसौ कृत्स्नो विधीयते । कथम् । य एवं विद्वानेतं षोडशिनं गृह्णीत इत्यभिधाय मध्यमेऽहस्त्रिरात्रस्य गृह्यते इति विधीयते । प्रकरणाच्च वाक्यं बलीय । एवं वाक्येन प्रकरणे बाधिते, अतिरात्रे ब्राह्मणस्येति वचनं वैकृते अतिरात्रे इति गम्यते । तेन यद्यपि ज्योतिष्टोमं प्रकृत्य विधानाद्विकृतावसौ न कृत्स्न आम्नातः, तथापि कृत्स्न एव विकृतौ वि-

हितो भवति । तस्माद् विकृतिषु परिगणितासु षोडशी ग्रहीतव्यो, न प्रकृताविति ॥ ३४ ॥ पूर्व० ॥

## प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥

इतश्च वैकृत इति । कुतः । प्रकृतौ अभावो दृश्यते । कथम् । द्वे संस्तुतानां विराजमतिरिच्येते इति अभावे षोडशिन । द्वे स्तोत्रीये विराजमतिरिच्येते इति वर्णितं द्वितीयेऽध्याये (२अ०४पा०२६सू०) तस्मादपि वैकृत. षोडशीति ॥ ३५ ॥

## अयज्ञवचनाच्च ॥ ३६ ॥

इतश्च वैकृत स्यात् । एवं हि भवति वचनम् । न षोडशी नाम यज्ञोऽस्तीत्याहुरिति । न तावद् नास्ति षोडशी ज्योतिष्टोमे प्रकृतौ । इदं भवति वचनम् । यदि ज्योतिष्टोमे नास्ति, एवमुपपद्यते । तस्मादपि वैकृत इति गम्यते ॥ ३६ ॥ युक्ति ॥

## प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति वैकृतः षोडशीति । प्राकृत. स्यात् । कुत. । प्रकृत्यां हि ज्योतिष्टोमे आम्नातः । प्रकरणाच्च ज्योतिष्टोमेनैकवाक्यता स्यात् । सा विकृतावप्युच्यमानस्य नार्पति । न हीदं वचनं प्रकृतौ प्रतिषेधकम् । किं तर्हि विकृतावुपदेशकम् । तस्मात् प्रकृतौ शिष्टाप्रतिषिद्धत्वात् षोडशी भवितुमर्हतीति ॥

अपि च न केवलं प्रकरणमस्य साधकम् । किं तर्हि वाक्यमपि तथेति । अग्निष्टोमे राजन्यस्य गृह्णीयादतिरात्रे ब्राह्मणस्येति । न चेदं प्रकृतौ सम्भवद् वैकृतेऽतिरात्रे शक्यते कल्पयितुम् । तस्मात् प्राकृत. षोडशीति ॥ ३७ ॥ सि० ॥

## प्रकृतिदर्शनाच्च ॥ ३८ ॥

प्रकृतौ भवति दर्शनमस्य षोडशिनः । तिस्र संस्तुतानां विराजमतिरिच्यन्ते इति । उक्तमेतत् । षोडशिनि गृह्यमाणे तिसृणां स्तोत्रीयाणां दर्शनमवकल्पत इति । तस्मात् प्राकृतः षोडशीति॥३८॥ युक्तिः

## आम्नातं परिसंख्यार्थम् ॥ ३९ ॥

अथ यदुक्तं, वैकृतस्तत्र कृत्स्नविधानादिति । तदुक्तम् । प्रकृतावप्रतिषेधक तद्वचनमिति । अथ चोदकेन प्राप्तौ किमर्थं पुनरुच्यते इति । अविशेषेण हि तद्वचनं प्रकृतावभिधाय अग्निष्टोमे राजन्य-

स्य, ब्राह्मणस्य चातिरात्रे इति वाक्येनोक्तम् । तद्विकारार्थमेवं प्राप्नोति परिसङ्ख्यानम् । तदर्थमुच्यते । अनतिरात्रेऽप्यनग्निष्टोमेऽपि कथं गृह्येत ? । मध्यमेऽहंस्त्रिरात्रस्य गृह्यते इति ॥ ३९ ॥

## उत्क्रमभावदर्शनम् ॥ ४० ॥

अथ यदुक्तं, प्रकृतौ षोडशी न दृश्यते, द्वे संस्तुतानां विराजमतिरिच्येते इति । तदुक्तम् । अभावदर्शनाद् वैकल्पिकः षोडशी, न विहितप्रतिषेधात् पक्षेऽतिरेक इति ॥ ४० ॥

## गुणादयज्ञत्वम् ॥ ४१ ॥

अथ यदुक्तम् । अयज्ञवचनाद् न प्रकृतौ षोडशीति । तदुक्तम् । शिष्टत्वात् प्रकृतौ गृह्यत इति । कथं त्वयज्ञवचनम् । वैकल्पिकत्वात् । पक्षे स यज्ञो नास्तीति भक्त्या अयज्ञ इत्युच्यते । तस्मात् प्राकृतः षोडशीति । प्रयोजनं, पूर्वपक्षे प्रकृतौ न गृह्यते, गृह्यते सिद्धान्ते ॥४१ ॥ अ० नि० ॥ षोडशिनां प्राकृतत्वाधिकरणम् ॥ ९ ॥

## तस्याग्रयणाद् ग्रहणम् ॥ ४२ ॥

अस्ति षोडशी । य एवं विद्वानेतं षोडशिनं गृह्णाति, भवत्यात्मना परास्य भ्रातृव्यो भवतीति । तत्रायमर्थः समधिगतः । प्राकृतः षोडशीति । अथेदानीमिदं सन्दिह्यते । किमसौ आग्रयणादुक्थ्याच्च ग्रहीतव्य इति ? उत, आग्रयणादेवेति । किं प्राप्तम् । तस्याग्रयणाद् ग्रहणम् । कुतः । वचनात् । आग्रयणाद् गृह्णाति षोडशिनमिति ॥ ४२ ॥

## उक्थ्याच्च वचनात् ॥ ४३ ॥

गृह्णीम एतत्, आग्रयणाद् ग्रहीतव्य षोडशीति । किन्तु उक्थ्याच्च ग्रहीतव्यः । कुतः । वचनात् । वचनमिदं भवति । उक्थ्याद् गृह्णाति षोडशिनमिति । किमिदं वचनं न कुर्य्यात् । तस्मादुक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ॥ ४३ ॥ पूर्व० ॥

तदेतदपर्य्यवसितं तिष्ठतु तावत् । अथेदानीमेतच्चिन्त्यते-

## तृतीयसवने वचनात् स्यात् ॥ ४४ ॥

अस्ति ज्योतिष्टोमः । तत्र श्रूयते । यः षोडशी गृह्यते इन्द्रियमेव वीर्य्यमात्मन् धत्ते इति । तत्र संशयः । किं सवने सवने ग्रहीतव्यः ? उत, तृतीयसवने इति । किं प्राप्तम् । सवने सवने इति । कुतः । प्रतिसवनं हि श्रूयते, गृह्णाति षोडशिनमिति । शब्दलक्षणे च

कर्मणि शब्दो न प्रमाणम् । तस्मात् सवने सवने षोडशी गृह्यते इति ॥ एवं प्राप्ते ब्रूम । तृतीयसवने स्यादस्य ग्रहणमिति । कुतः । वचनात् । भवति हि वचनम् । तृतीयसवने आग्रयणाद् गृह्णाति षोडशिनमिति वचनं न प्रमाणम् । तस्मात् तृतीयसवने ग्रहीतव्य इति । अथ यदुक्तं, प्रतिसवनं षोडशिग्रहणमिति । तृतीयसवनग्रहणस्तुत्यर्थं तत् । कथम् । प्रात सवने गृह्य' । तेजो वै प्रात.सवनम् । तेजस एव वज्रं निर्म्मिमीते । माध्यन्दिने सवने गृह्यः । तेजो वै माध्यन्दिनं सवनम् । तेजस एव वज्रं निर्म्मिमीते तृतीयसवने गृह्य. । पशवो वै तृतीयसवनम् । पशुभ्य एव वज्रं निर्म्मिमीते । यत् प्रातःसवने गृह्णीयाद् वज्र उत्तरे सवने व्यतिरिच्येत । यन्माध्यन्दिने मध्यत , वज्रं निहन्यात् । तृतीयसवने गृह्य. । तत् सर्वेषु सवनेषु गृह्णाति न पूर्वे सवने आर्त्तिं नीत इति ॥ ४४ ॥ तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ ११ ॥

## अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥

स्थितादुच्यते । इतश्च पश्याम. । उक्थ्याच्च ग्रहीतव्य इति । कुत । यत् पराञ्चमुक्थ्यान्निगृह्णाति षोडशिनमिति । उक्थ्यान्निगृह्णातीति सम्बन्धो, नोक्थ्यात् । पराञ्चमिति । कुतः । अनभ्यासे पराक्शब्दो वर्त्तते । कुत । तादर्थ्यात् । तादर्थ्यं हि अस्यावगम्यते । पराचीः सामिधेनीरन्वाह । अनभ्यस्ताः सामिधेनीरन्वाहेति । यथा, अनभ्यासवचन. सन् नोक्थ्येन सम्बद्ध्यते । न हि भवति सम्बन्धः । उक्थ्यादनभ्यस्तमिति । कथं तर्हि । उक्थ्यान्निगृह्णातितमनभ्यस्तमिति । तस्मादप्युक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ॥ ४५ ॥ १० दशमाधिकरणपूर्वपक्षयुक्तिः ॥ १ ॥

## उक्थ्याविच्छेदवचनत्वात् ॥ ४६ ॥

इतश्चोक्थ्यादपि ग्रहीतव्य इति । कुत. । उक्थ्याविच्छेदवचनं भवति । विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनञ्च ततः प्रणयन्तीति । प्रणयतिना सम्बन्धाद्विस्पष्टमपादानं दर्शयति । तस्मादप्युभाभ्यां ग्रहीतव्य इति ॥ ४६ ॥ युक्तिः ॥ २ ॥

## आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४७ ॥

आग्रयणाद् एव वा ग्रहीतव्यः । नोक्थ्यात् । कुतः । यदाग्रयणाद् गृह्णाति षोडशिनमिति वचनाद्, न शक्य आग्रयणात् कृत्स्नो गृह्यमाण उक्थ्याद् ग्रहीतुमिति । अगतिका ह्येषा गतिः । यत् कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्याताम् । सत्यां हि गतौ न तौ आश्रयणीयौ स्त । अस्ति चात्र गति । कथम् । पराक्शब्दस्य देशवाचित्वात् । दिग्देशकालवचनो हि पराक्शब्दो भवति । तथा सति उक्थ्यात् पराञ्चमिति सम्बन्धो भविष्यति, न कृत्स्नसंयोगो विरोत्स्यते । यथा, पराञ्चमग्न्याधयात् पुनरादधातीति कालसंयोगे पञ्चमी, नापादाने । एवमिहापि द्रष्टव्यम् । तस्मादप्याग्रयणादेव ग्रहीतव्य इति ॥ ४७ ॥ १० दशमाधिकरणपूर्वपक्षोत्तरम् ॥

## विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

अथ यदुक्तं, विच्छेदवचनादपादानदर्शनमिति । नैतदेवम् । विच्छेदः स्तोमसामान्याद् भवति । विच्छिन्दन्ति वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनश्च ततः प्रणयन्तीति । एकविंशस्तोमत्वादुक्थ्यविग्रह इव षोडशी इति । तत्र पूर्वयोर्विच्छिन्न एवोच्यते । तत प्रणयन्तीति । इयमपि कालसम्बन्ध एव पञ्चमी, नापादाने । तस्माद् आग्रयणादेव ग्रहीतव्यः षोडशी ॥ ४८ ॥ आ० नि० ॥ आग्रयणादेव षोडशिग्रहणाधिकरणम् ॥ १० ॥

## उक्थ्याऽग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् सति हि संस्थान्यत्वम् ॥ ४९ ॥

षोडशिनि प्रकृते इदमाम्नायते, अग्निष्टोमे राजन्यस्य गृह्णीयादप्युकथ्ये ग्राह्य इति । तत्रायमर्थः सांशयिकः । किमस्तोत्रशस्त्रः षोडशी ? उत सस्तोत्रशस्त्र इति । किं प्राप्तम् । अस्तोत्रशस्त्र. स्यात् कुतः । उक्थ्याग्निष्टोमसंयोगात् । उक्थ्याग्निष्टोमसंयोगो भवति । अग्निष्टोमे राजन्यस्य गृह्णीयादप्युकथ्ये ग्राह्य इति । अग्निष्टोमसंस्थे उक्थसंस्थे च षोडशी ग्रहीतव्य इत्युच्यते । एवमग्निष्टोमसंस्थोऽसौ क्रतुर्भवति । यद्यत्र स ग्रहो गृह्यत, यदि च तत्र स्तोत्रं शस्त्रं वा क्रियते । सति हि स्तोत्रे शस्त्रे वा षोडशिना स्तोमेन सन्तिष्ठेत । तत्राग्निष्टोमसंस्थो न स्यात् । उक्थ्यसंस्थश्च । तत्रेदं वचनमुपरुद्ध्येत । अग्निष्टोमे राजन्यस्य गृह्णीयादप्युकथ्ये ग्राह्य इति । अग्निष्टोम-

विशिष्टे ज्योतिष्टोमे स उच्यते, अग्निष्टोमस्यैवाङ्गम् । न हि यागः स्तुतशस्त्रयोरङ्गं भवति । फलवत्त्वाद् यागस्य । अफलत्वाच्चेतरयोः अग्निष्टोमश्चासौ ज्योतिष्टोमसंस्थोऽनेन भवति, नान्यथा । तस्मादस्तोत्रशस्त्र स्यादिति ॥ ४९ ॥ पूर्व० ॥

## सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥

सस्तुतशस्त्रो वा षोडशी । कुतः । तदङ्गत्वात् । यागस्य हि स्तोत्रशस्त्रे अङ्गभूते ग्रहग्रहणनिमित्ते । कथम् । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीत्युपसम्प्राप्ते निमित्ते भवितव्यं नैमित्तिकेन । तस्मात् सस्तुतशस्त्रः षोडशी स्यात् ॥ ५० ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ ५१ ॥

लिङ्गमप्येतमर्थं दर्शयति, सस्तुतशस्त्रः षोडशीति । कथम् । ऊर्ध्वा वा अन्ये यज्ञक्रतव सन्तिष्ठन्ते तिर्य्यञ्चोऽन्ये । ये होतारमभिसन्तिष्ठन्ते, त ऊर्ध्वाः । ये वा अच्छावाकं, ते तिर्यञ्च' । कथं कृत्वा एतल्लिङ्गम् । एतदुक्तं भवति । द्वये एव यज्ञक्रतवो भवन्ति ये होतारमभिसन्तिष्ठन्ते ये चाच्छावाकम् । यदि सस्तोत्रशस्त्र षोडशीति तत एवम् । अन्यथा अयं षोडशी अध्वर्य्युमभिसन्तिष्ठेत । तस्मादपि सस्तोत्रशस्त्रः षोडशी ॥ ५१ ॥ हेतु ॥

## वचनात् संस्थान्यत्वम् ॥ ५२ ॥

अथ यदुक्तं, सति हि संस्थान्यत्वमिति । वचनादेवं भविष्यति । अग्निष्टोमान्तं यदुक्तं तस्य वचनादयमन्योऽन्तो विधीयते । किमिव वचनं न कुर्य्यात् । तस्मादपि सस्तोत्रशस्त्र इति ॥ ५२ ॥ आ० नि० ॥ षोडशिग्रहस्य सस्तोत्रशस्त्रताधिकरणम् ॥ १२ ॥

## अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥

अस्ति आङ्गिरसां द्विरात्र' । तत्रेदमाम्नायते, वैखानसम्पूर्वेद्युः साम भवति षोडश्युत्तरे इति । तत्रायमर्थः सांशयिकः । किमत्र षोडशिनो विधानम् ? उत प्राप्तस्य परिसङ्ख्यानमिति । किं प्राप्तम् । अप्राप्तस्य विधानम् । आनुमानिकश्चोदक' । स विहितं न प्रापयति । विहितश्च, उत्तरेऽहन् द्विरात्रस्य गृह्यते इत्यनेन वचनेन । तस्माच्चोदको न प्रापयतीति अप्राप्तस्य विधानमिति गम्यते ॥ ५३ ॥ पूर्व० ॥

## अन्वयो वानारभ्यविधानात् ॥ ५४ ॥

अन्वयो वा षोडशिनोऽन्यस्मिन् क्रतौ परिसङ्ख्यार्थमिदं श्रवणं, वैखानसं साम पूर्वद्युर्भवति षोडश्युत्तरे इति । कथमन्वय । अनारभ्य-विधानात् । कतमोऽनारभ्यविधिः । उत्तरेऽहन् द्विरात्रस्य गृह्यते इति । तेन प्राप्ते उपसंहारः क्रियते । यदेतद् द्विरात्रस्योत्तरे गृह्यते इति । एतदाङ्गिरसां द्विरात्रस्य गृह्यते, नान्यत्रेति ।

अथ वा एव प्राप्तम्, अभावादतिरात्रेषु गृह्यते इति । यदेतत् प्राकृतमतिरात्रेषु षोडशिग्रहणं, वैकल्पिकं तद् विकल्पेनैव सर्वद्वि-रात्रेषु प्राप्त नियम्येत, उत्तरेऽहन् द्विरात्रस्य गृह्यते इति । तस्योपसं-हारे कृतेऽन्यद्विरात्रेषु अभाव. । अभावादाङ्गिरसां द्विरात्रे नियतो गृह्यते षोडशी उत्तरे इति । अन्वयो वा अनारभ्यविधानात्, अ-न्वितानि षोडशिना सर्वद्विरात्रेषूत्तराणि अहानि । प्रत्यक्षश्रवणा-दुत्तरेऽहन् द्विरात्रस्य गृह्यते इति अनारभ्याविधानेन । ननूपसं-हारः परिसङ्ख्या वा षोडशी उत्तरे इति । उच्यते । न शक्यं प्रत्यक्ष-श्रवणं परिसङ्ख्यातुं विशेषवचनेन । त्रयो हि दोषाः प्रादुःष्यु.- अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च । न चोपसंहार । भिन्न-त्वाद्वाक्ययो. । किमर्थं तर्हीद षोडश्युत्तरे इति । नैवैतद्विधानं षोड-शिन. । किन्तर्हि वैखानसस्य साम्नः । वैखानस तत् साम पूर्वद्युर्भ-वतीति विधीयते । उत्तरे षोडशीत्यनूद्यते । अनारभ्यविधानेन प्राप्त-त्वात् । तस्मात् प्राप्तस्य षोडशिनो ग्रहणमिति ॥ ५४ ॥ सिद्धान्तः ॥ अङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम् ॥ १३ ॥

## चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥

षोडशिनं प्रकृत्य आमनन्ति, चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते इति । अत्रैषोऽर्थ. सांशयिक । किमेकस्मिन्नहीने चतुर्थे दिवसे षोडशी अभ्यसितव्य ? उतैकस्मादहीनादहीनान्तरे चतुर्थेऽहनि गृह्य-ते इत्येवमभ्यसितव्य इति । किं प्राप्तम् । एकस्मिन्नभ्यसितव्य इति । कुतः । अहीनस्यैकस्येत्युच्यते, नानाऽहीनेषु चेदिष्यते, सा लक्षणा भवति । अस्मिन् पक्षे श्रुतिः । अपिच वीप्सानर्थक्यं नानाहीनेषु चे-त् स्यात् । चतुर्थेऽहनि अहीनस्येत्येतावतैव तत् सिद्ध्यति । एकस्मिं-स्तु वीप्सा अर्थवती भवति । तस्मादेकस्मिन्नहीने अभ्यसितव्यः ।

भोजनवत् । यथा चतुर्थेचतुर्थेऽहनि देवदत्तो भुङ्क्ते इति चतुर्थे भुक्त्वा ततश्चतुर्थे गम्यते एकस्मिन् पक्षे इति । एवमिहापि द्रष्टव्यम् । तस्माद् एकस्मिन्नहीन इति ॥ ५५ ॥ पूर्व० ॥

**अपि वा सङ्ख्यावत्त्वान्नानाऽहीनेषु गृह्यते पक्षवदेकस्मिन् संख्यार्थभावात् ॥ ५६ ॥**

नानाहीनेषु वा चतुर्थेऽहनि गृह्यते, एवं सङ्ख्यावद्ग्रहणं भवति, चतुर्थेऽहनि इति । एकस्मिन्नहीने एकं चतुर्थमहः, अन्यदष्टमं भवति । यदुक्तं, श्रुतिशब्दो भविष्यतीति अहीन इति । भवति सा हि श्रुतिः । न च तया श्रुत्या किञ्चित् सिद्ध्यति । चतुर्थस्याभावात् । अस्मत्पक्षे लक्षणा । तया तु सिद्ध्यति । अपि च, न लक्षणा, सामान्याभिप्रायमेकवचनम् । यदुक्तं, वीप्सानर्थक्यमिति । न आनर्थक्यमापततीत्यशब्दार्थः कल्पनीय । तस्माद् नानाहीनेषु ग्रहीतव्य इति । पक्षवत् । यथा, पञ्चम्यां पञ्चम्यां भुङ्क्ते इति पक्षान्तरं गम्यते । एवमिहापि द्रष्टव्य. । तस्मान्नानाहीनेषु ग्रहीतव्य इति ॥ ५६ ॥ सि० ॥

**भोजने तत्सङ्ख्यं स्यात् ॥ ५७ ॥**

यत्तु भोजनवदित्युक्तम्, अर्थात् तत् तस्माच्चतुर्थादप्यन्यच्चतुर्थं तत्र कल्प्यते । चतुर्थादारभ्य यान्यहानि, तेषां चतुर्थमहीनस्य तदष्टमम् । शब्दलक्षणे कर्मणि शब्दाभिहितं गम्यते, न लोकाभिप्राय । तस्माद् युक्तं भोजने लोकाभिप्रायानुष्ठानम् । अहीने तु शब्दाभिहितं गम्यते ॥ ५७ ॥ आ० नि० ॥ नानाऽहीने षोडशिग्रहणाधिकरणम् ॥१४॥

**जगत्साम्नि सामाभावाद् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥**

ज्योतिष्टोमे श्रूयते, यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाऽग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रानिति । आग्रयणाग्रानित्येतदुदाहरणम् । तत्र संशयः । किमाग्रयणाग्रताया प्रकृतौ निवेशः ? उत विकृताविति । किं प्राप्तम् । प्रकरणानुग्रहात् प्रकृतौ इति । यदि जगत्सामा इति ज्योतिष्टोम एवोच्यते, येन केनचिदभिसम्बन्धेन गुणेन क्रियया वा ॥ एवं प्राप्ते ब्रूमः, जगत्साम्नि श्रूयमाणेऽपि ऋक्तः साम तदाख्यमिति

अध्यवसीयते । कुतः । सामाभावात् । न हि, कृत्स्नेऽपि सामवेदे जगन्नाम सामास्ति । तस्माद्यत्र जगत्यामुत्पन्नं साम स जगत्सामा । स विषुवान् । ननु शुक्राग्रो विषुवानित्युच्यते । नैष दोषः । स कामाय भविष्यति । तस्माद्विकृतौ विषुवति निवेश इति ॥ ५८ ॥ विकृतौ ग्रहाणामाग्रयणाग्रताया अधिकरणम् ॥ १५ ॥ प्रथमवर्णकम् ॥ १ ॥

एवं वा–

**जगत्साम्नि सामाभावाद् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥**

यदि जगत्सामा आग्रयणाग्रान् ग्रहान् गृह्णीयाद् इत्येतदेवोदाहरणम् । तत्र संशय । किमन्यतरसामा जगत्सामा, रथन्तरसामा बृहत्सामा वा ? किमुभयसामा जगत्सामा ? किं रथन्तरसामा जगत्सामा ? किं यत्र जगत्यामुत्पन्नं साम जगत्सामा ? इति । किं प्राप्तम् । अन्यतरसामा इति । कुत । विशेषानवगमात् । ज्योतिष्टोमस्य प्रकृतत्वात् । तस्य च अन्यतरसामत्वात् । एवं प्राप्तम् । अथवा उभयसामा जगत्सामा, जगच्छब्द कृत्स्नवाची । कृत्स्नपृष्ठता च ज्योतिष्टोमे उभयसामत्वे, अन्यतरसामत्वे जगच्छब्दस्याविशेषणत्वाद्ऽविवक्षा प्रसज्ज्येत । तस्मादुभयसामा । अथ वा रथन्तरसामा जगत्सामा । तत्र हि ऋचि जगच्छब्दो विद्यते । ईशानमस्य जगतः स्वर्दृशमिति । यदि चोभयसामा जगत्सामा भवेत्, कृतकरो विधिरनर्थक स्यात् । तेन नैनयो समुच्चय. प्रकृतौ । तस्माद् रथन्तरसामैव जगत्सामा इति ॥

एवं प्राप्ते ब्रूम । यत्र जगत्यामुत्पन्नं साम स जगत्सामा इति । तथा हि श्रुति', इतरथा रथन्तरसामनि अध्यवसीयमाने ऋचा पदं लक्ष्यते, पदेन साम, सैषा लक्षितलक्षणा स्यात् । तस्माज्जगत्यां यत्र साम, स जगत्सामा । ऋक्तो जगदाख्यं साम, स्याद्विषुवति । ननु शुक्राग्रो विषुवानित्युच्यते । नैष दोष । स कामाय भविष्यति । तस्माद्विषुवति विकृतौ निवेश इति ॥ ५८ ॥ जगत्सामेति शब्देन विषुवतो ग्रहणाधिकरणम् ॥ १५ ॥ द्वितीयवर्णकम् ॥ २ ॥

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥ ५९ ॥**

सन्ति उभयसामान. क्रतवः, संसव उभे कुर्यात् । अपचि-

तावच्चैकाहे श्रूयते, उभे बृहद्रथन्तरे कुर्यादिति । तत्रास्ति रथन्तरनिमित्तकं बृहन्निमित्तकञ्च, उपवती रथन्तरपृष्ठस्य प्रतिपदं कुर्यादग्रियवती बृहत्पृष्ठस्येति । तत्रैषोऽर्थः सांशयिकः । किं रथन्तरनिमित्तकं बृहन्निमित्तकं वा कार्यं, विकल्पः? अथ वा रथन्तरनिमित्तकं कर्त्तव्यम्? अथ वाऽन्यनिमित्तकमेव कर्त्तव्यम्? । किं प्राप्तम् । अन्यतरनिमित्तकं कर्त्तव्यं, विकल्पः? इति । कुतः । समा प्राप्तिः, विरुद्धश्च समुच्चयः । न हि विनिगमनायां हेतुरस्ति– एवन्निमित्तकं कर्त्तव्यं, नैवन्निमित्तकम् इति । न च द्वे प्रतिपदौ शक्येते कर्त्तुम् । तस्माद्विकल्पः ॥ ५९ ॥ पूर्व० ॥ १ ॥

## मुख्येन वा नियम्येत ॥ ६० ॥

यदुक्तं– समा प्राप्तिः, नास्ति विनिगमनायां हेतुरिति । अस्तीति ब्रूमः । मुख्यत्वं नाम रथन्तरस्य प्रथमाधीतत्वम् । तदुक्तं, मुख्यं वा पूर्वचोदनाल्लोकवद्, इति ॥ ६० ॥ पूर्व० ॥ २ ॥

## निमित्तविघाताद् वा क्रतुयुक्तस्य कर्म स्यात् ॥ ६१ ॥

वाशब्दः पक्षं व्यावर्त्तयति । द्वयोरपि निमित्तयोर्विघातः स्यात्, क्रतुनिमित्तमेवाश्रीयते । तथा सति नैतद्रथन्तरपृष्ठं, न बृहत्पृष्ठं बृहद्रथन्तराभ्यामुभाभ्यां तत्र पृष्ठनिर्वृत्तिः । तस्माद् नोपवती प्रतिपत्, नाग्रियवती अन्यत्र क्रतुनिमित्ता भवितुमर्हतीति ॥ ६१ ॥ सि० ॥ संसवे उपवत्यग्रियवत्योरभावाधिकरणम् ॥ १६ ॥

## ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥

ज्योतिष्टोमे श्रूयते, वाग् वा ऐन्द्रवायवो यद् ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवावरुन्धे इति । तत्र संशयः । किमैन्द्रवायवस्य सर्वादितः प्रतिकर्षः स्यात्, उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्यः? उत शुक्रामन्थिभ्यां पूर्वं ग्रहणमिति । किं प्राप्तम् । ऐन्द्रवायवस्य सर्वादितः प्रतिकर्ष इति । कुतः । अग्रवचनात् । अग्रताऽत्र विधीयते, ऐन्द्रवायवाग्रं गृह्णातीति ऐन्द्रवायवमग्रे कुर्य्यादेषामिति । अविशेषात् सर्व एव ऐन्द्रवायवाग्रा कर्त्तव्याः । यदि आदितः प्रतिकर्षो न क्रियेत, उपांश्वन्तर्य्यामौ ऐन्द्रवायवाग्रौ न स्याताम् । आदितस्तु प्रतिकर्षे क्रियमाणे सर्वे ऐन्द्रवायवाग्रा कृता भवन्ति । न चात्र ऐन्द्रवायवस्याग्रता विधीयते । यदि विधीयेत,

यान् काँश्चित् प्रति ऐन्द्रवायवस्य अग्रतायां कृतं कर्त्तव्यं स्यात् । अथ पुनरन्येषां ग्रहाणामैन्द्रवायवाग्रता धर्म उच्यते, तस्मात् सर्वेषां धर्मः कर्त्तव्य इत्यादित प्रतिकर्ष स्यात् । कथं पुनरवगम्यते, सर्वेषामेवायं धर्म ? इति । ऐन्द्रवायवाग्रान् कुर्य्यादिति निर्देशात् । नात्र ग्रहस्य कर्त्तव्यता उच्यते । तदग्रा कर्त्तव्या इति श्रूयते । अग्रता परार्था, न स्वार्था विज्ञायते । तस्मात् सर्वादितः प्रतिकर्षः स्यात् ॥ ६२ ॥ पूर्व० ॥

## अपि वा धर्माविशेषात् तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥

अपि वा इति पक्षव्यावृत्तिः । न सर्वादितः प्रतिकर्ष स्यात् । किं तर्हि, स्वस्थानस्य ग्रहणम् । कुतः । नात्र तदग्रता विधीयते, वाक्यं हि तदा अनुगृह्यते । किन्तर्हि, तदग्राणां ग्रहणं विधीयते । तथा हि श्रुतिरनुगृहीता भवति । यदि रथन्तरसामा सोमः स्याद् ये ऐन्द्रवायवाऽग्रा ग्रहाः समाम्नातास्तेषामनेनानुपूर्व्येण ऐन्द्रवायवादितया धर्मविशेषेण तद्धर्माणां प्रकृतानां ग्रहण विधीयते, स्वे स्थाने ये ग्रहा ऐन्द्रवायवाग्राः, तान् प्रकृत्य ग्रहणविधिरिति न सर्वादितः प्रतिकर्ष इति ॥ ६३ ॥ सि० ॥

## धारासंयोगाच्च ॥ ६४ ॥

अपि च, धारासंयोगो भवति ऐन्द्रवायवादिवाक्ये, अण्वा अव्यवच्छिन्नया धारया गृह्णातीति । तस्माद्धाराग्रहास्ते । तदग्रान् अधिकृत्य ग्रहणं विधीयते इति ॥ ६४ ॥ युक्ति ॥ ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ॥ १७ ॥

## कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥६५॥

अथ यत्र कामसंयोगे वचनमैन्द्रवायवस्य, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्, यः कामयेत यथापूर्वं प्रजा प्रकल्पेरन्निति । तत्र किं, सर्वादित स प्रतिकर्षः ? उत तत्रापि स्वक्रमस्थस्य ग्रहणमिति । किं प्राप्तम् । पूर्वेणाधिकरणेन स्वक्रमस्थस्येति ॥ तथा प्राप्ते ब्रूमः । कामसंयोगे तु सर्वादित प्रतिकर्षः स्यात् । कुतः । वचनात् । वचनं हि भवति, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद् यः कामयेत यथापूर्वं प्रजाः प्रकल्पेरन्निति । तत् सर्वादित प्रतिकर्षेऽर्थवदग्रतायां

विधीयमानायाम् । अप्रवृत्तिविशेषकरं तद् अग्राणां ग्रहणे विधीयमाने । तस्मात् सर्वादितः प्रतिकर्ष इति ॥ ६५ ॥ पूर्व० ॥

**तद्देशानां वाग्रसंयोगात् तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥**

न चैतदस्ति, यदुक्तं सर्वादित प्रतिकर्ष इति । स्वक्रमस्थस्य ग्रहणे क्रमानुग्रहो भविष्यति । तस्मात् स्वक्रमस्थस्येति । यदुक्तम्, अग्रताभिधानादादितः प्रतिकर्ष इति । तन्न । तद्देशानां धारादशानामैन्द्रवायवाग्राणामयमुपदेशः । तद्युक्तानां तदग्राणां ग्रहणेन कामः साध्येत । श्रुतिरेवमनुगृह्यते । त्वत्पक्षे वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । अथ यदुक्तम्, अप्रवृत्तिविशेषकरं ग्रहणविधाविति । तत्र संयोगपृथक्त्वात् । एकोऽत्र नित्यस्य कामसंयोग. । ग्रहणेन कामं साधयेत् । अपरो नित्यसंयोग । ये ऐन्द्रवायवाग्रा ग्रहास्तान् गृह्णीयादिति । तस्मादस्ति प्रवृत्तिविशेषः । अतस्तद्देशसंयुक्ते कामसाधनमेतत । तस्मात् स्वक्रमस्थस्य ग्रहणमिति ॥ ६६ ॥ सिद्धान्तः ॥ कामसंयोगेऽपि ऐन्द्रवायवस्यादावप्रतिषेधाधिकरणम् ॥ १८ ॥

**परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु ॥ ६७ ॥**

अस्ति ज्योतिष्टोम । तत्र ऐन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते– आश्विनाग्रान् गृह्णीयादामयाविन', शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्य्यमाणस्येति । तत्र संशयः । किमेतेष्वपि स्वक्रमस्थानां ग्रहणम, उत सर्वादित' प्रतिकर्षः कर्त्तव्य इति । किं प्राप्तम । परेषु च ऐन्द्रवायवात्, परेष्वेवमादिषु ग्रहणेषु अग्रशब्दः पूर्ववत् स्यात् स्वक्रमस्थग्रहणमिति । यस्य यस्याग्रता श्रूयते, तदग्राणां कामसंयोग इति ॥ ६७ ॥

**प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥**

प्रागैन्द्रवायवात् प्रतिकर्षः स्यात् । कुत' । न हि अत्र नित्यार्थेन कामस्य संयोगो भवति । यदि हि नित्ये कामो भवेत्, आश्विनाग्रान् मन्थ्यग्रानित्यग्रशब्दोऽस्य नोपपद्येत । न हि, तस्मिन् वचने सति प्रवृत्तेः कश्चिद्विशेष उपलभ्यते, प्रागैन्द्रवायवात् पुनः प्रतिकर्षे वचनमर्थवद् भवति । अपि च प्रकृतास्ते ग्रहा. । तेषामाश्विनाग्रता शुक्राग्रता विधीयते । तस्माद् आदितः प्रतिकर्ष इति ॥ ६८ ॥

## प्रतिकर्षश्च दर्शयति ॥ ६९ ॥

धारयेयुस्तं यं कामाय गृह्णीयु , ऐन्द्रवायवं गृहीत्वा सादयेत् तं यं कामाय गृह्णीयुरिति कामाय गृहीते धार्य्यमाणे ऐन्द्रवायवस्य ग्रहणं दर्शयति । तस्मात् सर्वादित. प्रतिकष्टव्य इति ॥ ६९ ॥ युक्ति. ॥
आश्विनाग्राद्गीनां ग्रहाणां प्रतिकर्षाऽधिकरणम् ॥ १९ ॥

## पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥

अस्ति ज्योतिष्टोमः, तत्रैन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते, आश्विनाग्रान् गृह्णीयादामयाविन । शुक्राग्रानभिचरतः । मन्थ्यग्रानभिचर्य्यमाणस्येति । तेषां स्वक्रमस्थानां ग्रहणं, प्रतिकर्ष इति समधिगतमेतत् । अथेदानीमिदं सन्दिह्यते । किं सर्वादित प्रतिकर्ष., यत कुतश्चिद्वा ? उतैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति । कि प्राप्तम् । नियमकारिण. शास्त्रस्याभावादनियम इति ॥ एवं प्राप्ते ब्रूम । पुरस्तादैन्द्रवायवस्य प्रतिकर्ष इति । कुतः । अग्रस्य कृतदेशत्वात् । एषोऽग्रस्य देशो विज्ञातो, यदुपांश्वन्तर्य्यामाभ्यामूर्ध्वं, पुरस्ताच्चैन्द्रवायवस्य । कथमिव कृत्वा । पूर्वेण वचनेन ऐन्द्रवायवाग्रा ग्रहा प्रकृता', यदि रथन्तरसामा सोम स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति । तत्रैन्द्रवायवाग्रानुद्दिश्य तेषां ग्रहणं विहितम् । तेनैव विहितत्वान्न पुनराश्विनाग्रेषु शुक्राग्रेषु मन्थ्यग्रेषु च ग्रहणं विधीयते । अतो वाक्येन तदग्रताविधीयते । सा पुनरैन्द्रवायवाग्राणां प्रकृतत्वादभिचरत शुक्राग्रान् किं कुर्यात् । गृह्णीयादिति प्रकृतेनाभिसम्बध्यते । शुक्राग्रान् ग्रहानिति नास्ति सम्बन्धो ग्रहणशब्दाभावात् । केन तर्हि सम्बन्धः । प्रकृतेनैन्द्रवायवाग्रशब्देन, शुक्राग्रान् गृह्णीयाद्, ऐन्द्रवायवाग्रानिति । के ते ग्रहाः ? इति तत्रोक्तम् । तस्मादैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति ॥ ७० ॥ सि० ॥

## तुल्यधर्मत्वाच्च ॥ ७१ ॥

तुल्यधर्माश्चैते ऐन्द्रवायवाग्रै । तत्र धारासंयोगो दृश्यते । तस्माद् धाराग्रहानुद्दिश्यैतदग्रता विधीयते ॥ ७१ ॥

## तथा च लिङ्गदर्शनम् ॥ ७२ ॥

धारयेयुस्तं यं कामाय गृह्णीयु । ऐन्द्रवायवं गृहीत्वा सादयेत् । अथ तं सादयेद् यं कामाय गृह्णीयुरिति काम्यस्य धारणानन्तरमैन्द्र-

वायवस्य ग्रहणं दर्शयति । तस्मादैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति ॥ ७२ ॥ युक्तिः ॥ आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम् ॥ २० ॥

## सादनं चापि शेषत्वात् ॥ ७३ ॥

इदमाम्नायते- आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्येति ।पुरस्तादैन्द्रवायवस्य प्रतिकर्ष इत्युक्तम् । तत्रायमर्थः सांशयिक ।किं सादनमपि प्रतिकृष्यते, न? इति । अवचनान्नेति ब्रूमः।शब्दप्रमाणका वयम्। शब्दश्च ग्रहणस्य प्रतिकर्षमाह, न सादनस्य ।तस्मान्न सादनं प्रतिकृष्यत इति॥ एवं प्राप्ते ब्रूमः । सादनमपि प्रतिकृष्यत इति । कुत. । ग्रहणशेषो हि सादनम् । ग्रहणं हि प्रदानार्थम् । तदनेकस्य द्रव्यस्य युगपत् प्राप्तमसादयित्वा न शक्यं युगपद् होमार्थं कर्त्तुम् । सादनेन ग्रहणं होमयोग्यं भवति । तस्माद् ग्रहणशेषः सादनमिति ग्रहणे प्रतिकृष्यमाणेऽवश्यं प्रतिकष्टव्यमिति ॥ ७३ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ ७४ ॥

लिङ्गमपि दृश्यते, यथा सादनं प्रतिकृष्यते इति । किं लिङ्गम् । धारयेयुस्तं यं कामाय गृह्णीयु' । ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेद् यं कामाय गृह्णीयुरिति सादनस्यापि प्रतिकर्षं दर्शयति॥७४॥ युक्ति ॥ सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

## प्रदानञ्चापि सादनवद् ॥ ७५ ॥

इदमाम्नायते- आश्विनाग्रान् गृह्णाति आमयाविन , शुक्राग्रानभिचरतः, मन्थ्यग्रानभिचर्य्यमाणस्येति । तत्र ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते इत्युक्तम् । अथेदानीमिदं सन्दिह्यते- ग्रहणे प्रतिकृष्यमाणे प्रदानं प्रतिकृष्यते? न? इति । किं प्राप्तम् । प्रतिकृष्यते इति । कुत । सम्बन्धात्। सम्बद्धं हि ग्रहणं प्रदानञ्च । प्रदातु हि तद् गृह्यते । तथा हि दृष्टार्थं तद् भवति । इतरथा यत् सादनादूर्ध्वं तदऽदृष्टार्थं भवेत् । न चेदमदृष्टार्थम् । तस्मादितरस्मिन् काले प्रदानं क्रियते । तत्र ग्रहणं कर्त्तव्यम् । एवं चेद् यत्र ग्रहणं तत्र प्रदानमपि भवितुमर्हतीति सम्बन्धात् । सादनवत् । यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते, एवं प्रदानमपीति ॥ ७५ ॥ पूर्व० ॥

## न वा प्रधानत्वाच्छेषत्वात् सादनं तथा ॥ ७६ ॥

न चैतदस्ति, प्रदानं प्रतिकृष्यत इति । प्रधानं हि तत् । न हि तद् ग्रहणस्योपकारकम् । तस्मान्न प्रतिकृष्यते । यदुक्तं, सादनवदिति । शेषो हि सादनम् । तस्मात् प्रतिकृष्यते ॥७६॥ प्रदानस्याऽप्रतिकर्षाधिकरणम् ॥ २२ ॥

## ऽयनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥

अस्ति द्वादशाहे ऽयनीका, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममह , अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाऽऽग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम, अथाग्रयणाग्रमिति । तत्र प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रूयते । सा चोदकेनैव तयोः प्राप्ता,रथन्तरसामत्वाद् बृहत्सामत्वाच्च।तत्र सन्देह । किमुदितमनुवदितुं पुन श्रूयते ? किमन्यत् परिसङ्ख्यातुम्? उतार्थवादार्थम् ? अथवा समानविध्यर्थम् ? । किं प्राप्तम् ।अर्थवादायेति । कुत' । उदितमनुवदितुं हि उच्यमाने प्रवृत्तिविशेषक्रिया नास्ति । त्रिदोषा परिसङ्ख्या । तस्मादर्थवादायेति । कः पुनरत्र गुणवादः ? । औचित्यमाग्रयणाग्रत्वं हि तृतीयेऽहनि न्याय्यम् । कथमिव । प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता च उदिता, न तृतीयेऽहनि । तत्र त्वाग्रयणाग्रता न्याय्या इति ॥ ७७ ॥ पूर्व० ॥

## अपि वाहर्गणेष्वग्निवत् समानविधानं स्यात् ॥ ७८ ॥

अपि वेति पक्षव्यावृत्तिः, न गुणार्थं श्रवणं, समानविध्यर्थमिति । न शक्यं वदितुं चोदकेन प्राप्तम् । तत्र पुनर्वचनमनर्थकम् । तस्मात् तदन्यार्थमिति । कथन्तर्हि शक्यम् । वाक्येनेदं ज्योतिष्टोमे रथन्तरसाम्नि प्रवृत्तं चोदकेन प्राप्यते । तस्मात् समानविधिकं करिष्यामीति पुनरुच्यते । अग्निवत् । यथा अथातोऽग्निष्टोमेनैवानुयजति, तमुक्थेन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेणेति । प्रयोजनं पक्षोक्तं, न परिसङ्ख्या भवतीति ॥ ७८ ॥ सिद्धान्तः ॥ ऽयनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥ २३ ॥

## द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात् ॥ ७९ ॥

द्विविधो द्वादशाहः, व्यूढः समूढश्च । समूढस्तावत् । ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रमिति । अथ व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति। तत्र सन्देहः । किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा आम्नाताः ? उत समूढं प्रकृत्य आम्नातास्तद्विकारो व्यूढ इति । किं प्राप्तम् । द्वादशाहस्य व्यूढसमूढत्वे समानविधानं स्यात् । कुतः । उभयप्रकारस्य प्रकृतत्वाद् न गम्यते विशेषः, कस्य धर्म्माः, कस्य नेति । तस्मात् समानविधानौ । पृष्ठवत् । यथा बृहद्रथन्तरे पृष्ठे प्रकरणस्य तुल्यत्वात् समानधर्म्मणी, एवं व्यूढसमूढं स्यादिति ॥ ७९ ॥ पूर्व० ॥

## व्यूढो वा लिङ्गदर्शनात् समूढविकारः ॥ ८० ॥

वाशब्दः पक्षं व्यावर्त्तयति । न व्यूढसमूढौ समानविधानौ, किन्तु व्यूढः समूढविकारः स्यात् । कुतः । लिङ्गदर्शनात् । लिङ्गमिदं भवति, ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहरिति व्यूढे श्रूयते । न च व्यूढे चतुर्थेऽहनि ऐन्द्रवायवाग्रता । का तर्हि आग्रयणाग्रता । तत्र ऐन्द्रवायवस्य वा एतदायतनमिति वचनं नावकल्पते । यदि, व्यूढः समूढविकारः, ततः प्रकृतिमपेक्ष्योपपद्यते वाद , ऐन्द्रवायवस्य एतदायतनं प्राप्तम् । तत्र आग्रयणस्योच्यते इति । तस्माल्लिङ्गदर्शनाद् व्यूढः समूढविकार इति ॥ ८० ॥ सि० ॥

## कामसंयोगात् ॥ ८१ ॥

यः कामयेत बहु स्यां प्रजायेयेति काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते, यथाऽक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति ॥ ८१ ॥ युक्तिः ॥

## तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥

इदं प्रयोजनसूत्रम् । तस्य उभयप्रकारस्याहर्गणेषु प्रवृत्तिरविशेषेण । ऐककर्म्यात् । यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः । यत्र वचनं लिङ्गञ्च तत्र व्यूढः प्रवर्त्तते, अन्यत्राविशेषेण समूढ इति ॥ ८२ ॥ प्रयोजनम् ॥ व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् ॥२४

## एकादशिनवत् त्र्यनीका परिवृत्तिः स्यात् ॥ ८३ ॥

द्वादशाहे समाम्नायते- ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाह, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाऽग्रम, अथ शुक्राग्रम्, अथ आग्रयणाग्रमिति । तद् गवामयने चोदकेन प्राप्तम् । तत्र बहूनि त्र्यनीकानि परिवर्त्तयितव्यानि । तत्रार्थप्राप्तोऽभ्यासः । अथेदानीमभ्यासे सन्देहः, किं दण्डकलितवदभ्यासः कर्त्तव्यः ? उत स्वस्थानविवृद्धिरिति । कथं दण्डकलितवत् स्यात्, कथं वा स्वस्थानविवृद्धिरिति । यदि अह्नामधिकारस्ततः आद्येषु नवसु अहःसु परिसमाप्तेषु शिष्टेष्वपि त्र्यनीकां चोदकः प्रापयतीति उपस्थितमिदं भवतीति, ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमिति । तेष्वपि नवसु परिसमाप्तेषु पुनरिदमेवोपनिपतते, ऐन्द्रवायवाग्रं प्रथममहरिति । एवं दण्डकलितवदावृत्तिः । अथाहरधिकारो नास्ति, ततः प्रायणीयोदयनीययोरन्तरं नवभिरनीकैः पूरितमिति गवामयनेऽपि नवभिरनीकैः पूरयितव्यं स्यात् । तत्र पूर्णे पुनरावृत्तिर्नास्तीति दण्डकलितवद् न स्यात् । न च वृद्ध्या विना तदन्तरं पूर्य्यते इति स्वस्थानविवृद्धिरागतेति ॥

किं पुनः प्राप्तम् । दण्डकलितवदावृत्तिरिति । तत्रैतद्वर्ण्यते, अहरधिकारोऽत्रेति । एवं हि आम्नायते-ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम् । प्रकृतत्वादहरिति गम्यते । तस्मादहरधिकारः । अतोऽत्रगच्छामः, दण्डकलितवदावृत्तिरिति । आवृत्तिन्यायानां दण्डकलितं न्याय्यम् । तथा क्रमानुग्रहो भवति । तद्यथा, कश्चिदुच्यते- अनुवाकस्त्रिः पठ्यतामिति । दण्डकलितवदसौ पठ्यते, क्रमानुग्रहाय । एवमिहापि द्रष्टव्यम् । यथास्मिन्नेव गवामयने एकादशिनी अभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्ध्येति ॥ ८३ ॥ पूर्व० ॥

**स्वस्थानविवृद्धिर्वा अह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ८४ ॥**

स्वस्थानविवृद्धिर्वा, न दण्डकलितवदावृत्तिः । तत्र इदं वर्ण्यते, नाहरधिकार इति । कुतः । अह्नामप्रत्यक्षसङ्ख्यत्वात् । अप्रत्यक्षा अह्नां सङ्ख्या नवानामह्नामिति । ऐन्द्रवायवाग्रमिति च विधीयमानमिति । कथमहर्न विधीयते इति । वाक्यभेदप्रसङ्गात् । ऐन्द्रवायवाग्रं प्रथमं भवति । तच्च अहः, नाहःसङ्घात इति वाक्यं भिद्येत । तस्मादनुवादमात्रमहर्ग्रहणम् । एवञ्चेत् क्रमानुग्रहाय स्वस्थानविवृद्धिराश्रयणीया । आग्रयणाग्रान् कृत्वा ऐन्द्रवायवाग्राः कर्त्तव्या इति ॥ ८४ ॥ सि० ॥

**पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परि वृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥**

इतश्च पश्यामः, स्वस्थानविवृद्धिरिति । कुतः । उत्तरस्मिन् पक्षसि पृष्ठ्यावृत्तौ आग्रयणाग्रताया दर्शनं भवति त्रयस्त्रिंशेऽहनि । कथम् । जगतीं वै च्छन्दांसि प्रत्यवरोहन्ति आग्रयणं वै ग्रहाः, बृहत् पृष्ठानि, त्रयस्त्रिंशं स्तोमा इति । तदेतत् स्वस्थानविवृद्धाववकल्पते, न दण्डकलितवदावृत्तौ । कथम् । पूर्वस्मिन् पक्षसि त्र्यनीका त्रिः परिवर्त्तते, तस्मिन्ननावृत्तैव सा आग्रयणाग्रेषु परिसमाप्यते, उत्तरमपि पक्षो व्यावृत्तमिति कृत्वा आग्रयणाग्रेषु आरभ्यते । तत्र प्रथमे नवमभागे त्रयस्त्रिंशमहरिति कृत्वा तदाग्रयणाग्रं भवति । तत्रैतद्दर्शनमुपपद्यते । दण्डकलितवत् पुनरावृत्तौ सत्यां तदैन्द्रवायवाग्रं स्यात् कथम् । त्रिवृत आरभ्य नवकैरहःसु सङ्कल्प्यमानेषु पूर्वस्मिन् पक्षसि सप्त परिशिष्यन्ते । तत्र सप्तमे ऐन्द्रवायवाग्रता, शुक्राग्रो विषुवान्, आग्रयणाग्रं प्रथम स्वरसामा, ततो विश्वजिदिति त्र्यनीका समाप्ता । त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति । तत्रैतद्दर्शनं विरुद्ध्यते । तस्मात् स्वस्थानविवृद्धिरिति ॥ ८५ ॥ युक्तिः ॥

**वचनात् परिवृत्तिरैकादशिनेषु ॥ ८६ ॥**

अथ यदुक्तम्, ऐकादशिनवदिति । युक्तं, यद् ऐकादशिनेषु दण्डकलितवदावृत्तिरिति । वचनं हि तद्भवति । वारुणमन्ततः पुनःपर्य्यावृत्तेषु आग्नेयमेव प्रथमेऽहनि आलभेतेति वचनाद् दण्डकलितवदावृत्ति पुनःपर्य्यावृत्तेष्विति । सा द्वादशाहे असम्भवन्ती गवा-

मयनं विशति । किमिव वचनं न कुर्य्यात् । न हि वचनस्यातिभारोऽस्ति ॥ ८६ ॥ आ० नि० ॥

## लिङ्गदर्शनाच्च ॥ ८७ ॥

लिङ्गं खलु अप्येवमर्थं दर्शयति, यथा दण्डकलितवद् ऐकादशिना आवर्त्तन्ते इति　प्राणा वा एकादशिना यदेकादशिनीभिरीयुरहानि अतिरिच्यन्ते पशवो वा इति । स्वस्थानविवृद्धौ नास्त्यतिरेकः, दण्डकलितवदावृत्तौ न्यूनताऽतिरिक्तता वा भवति । तस्मादपि पश्यामः, ऐकादशिनेषु दण्डकलितवदावृत्तिरिति ॥ ८७॥ हेतुः ॥ संवत्सरसत्त्रेऽनीकानां विवृद्ध्यधिकरणम् ॥ २५ ॥

## छन्दोव्यतिक्रमाद् व्यूढे भक्ष-पवमान-परिधि-कपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् ॥ ८८ ॥

अस्ति द्वादशाहः, समूढो व्यूढश्च । तत्र व्यूढः, ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नाम् ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, तथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति ॥ तत्र व्यूढे इदं समामनन्ति, छन्दांसि वाऽन्योन्यस्य लोकमभिध्यायन्ति गायत्री त्रिष्टुभ. त्रिष्टुब् जगत्या जगती गायत्र्या इति । तत्र सन्ति भक्ष-पवमानपरिधिकपालानि । भक्षास्तावद्, भक्षे हि मा विश दीर्घायुत्वाय शन्तनुत्वाय एहि वसो पुरोवसो प्रियो मे हृदये भवाऽश्विनोर्बाहुभ्यां सध्यासं वसुमद्गणस्य रुद्रवद् गणस्यादित्यवद् गणस्य सोमदेवते मतिविदः प्रातःसवनस्य माध्यन्दिनसवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दसोऽग्निष्टुत इन्द्रपीतस्य मधुमत उपहूत उपहूतस्य भक्षयामीति । तथा पवमानः, श्येनोऽसि गायत्रच्छन्दाः सुपर्णोऽसि त्रिष्टुप्छन्दाः सखासि जगतीच्छन्दा, अनु त्वारभे स्वस्ति मा संपारय इति च । तथा परिधयः, गायत्रो मध्यम परिधिः, त्रैष्टुभो दक्षिणो जागत उत्तर इति । तथा कपालानि अष्टाकपालः प्रात सवने एकादशकपालो माध्यन्दिनीयो द्वादशकपालस्तार्त्तीयसवनिक इति । तत्र सन्देहः । किं छन्दोव्यतिक्रमे व्यतिक्रमो भक्षमन्त्राणां, भक्षणस्य च, पवमानमन्त्राणां पवमान-

स्य च, तथा परिधीनां कपालानाञ्च, अथ वा मन्त्राणां छन्दोव्यतिक्रम ? इति, किं प्राप्तम् । मन्त्राणां मन्त्रार्थानाञ्च । कुतः । अविशेषवचनात् । अविशेषेण भवति वचनम् । छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति गायत्री त्रिष्टुभः त्रिष्टुब् जगत्या जगती गायत्र्या इति । न विशेषः श्रूयते मन्त्राणां व्यतिक्रम इति । तस्मान्मन्त्राणाम् अर्थानाञ्चेति । अतो मध्यमः परिधिर्दक्षिणस्थाने स्थापयितव्यः, दक्षिण उत्तरस्य, उत्तरो मध्यमस्येति । अष्टाकपालो माध्यन्दिनीये कार्य्यः, एकादशकपालस्तार्त्तीयसवनिकः द्वादशकपालः प्रातःसवनीय इति । तथा प्रातःसवनीयस्य भक्षो माध्यन्दिनस्य भक्षणस्य स्थाने भक्षयितव्यः, माध्यन्दिनस्तार्त्तीयसवनिकस्य, तार्त्तीयसवनः प्रातःसवनीयस्येति । तथा बहिष्पवमानो माध्यन्दिनस्य पवमानस्य लोके माध्यन्दिन आर्भवस्य आर्भवो बहिष्पवमानस्येति ॥ एवं प्राप्ते ब्रूमः । नाविशेषेण च्छन्दसां व्यतिक्रमः स्यात् । मन्त्रगतो हि एष व्यतिक्रमः । मन्त्रगतान्येव व्यतिक्रमेयुः । किं कारणम् । शक्यन्ते मन्त्रगतानि विपर्य्यसितुं भक्षादयः पुनर्विपर्य्यस्ता अपि त एवेति । माध्यन्दिनस्य भक्षस्य कालेऽपि प्रातःसवनीयो भक्षो भक्ष्यमाणो नैव त्रैष्टुभः कृतः स्यात् । एवं सर्वत्र । कथम् । स्वकालेऽपि हि असौ न गायत्रः, गायत्री हि त्रिष्टुभः स्थानमभ्येति नागायत्री । न भक्षादयो गायत्रादयः । तस्मादसम्भवो भक्षादीनां व्यतिक्रमणस्य । मन्त्रगतानि तु छन्दांसि शक्नुवन्ति अन्योन्यस्य लोकं व्यतिक्रमयितुम् । तस्मान्मन्त्रगतानां छन्दसां व्यतिक्रम इति ॥ ८८ ॥ व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

इति श्रीभट्टशबरस्वामिविरचिते मीमांसाभाष्ये दशमाऽध्यायस्य पञ्चमः पादः ॥ १० ॥ ५ ॥

अथ दशमाध्याये षष्ठः पादः ॥ १० ॥ ६ ॥

## एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥

सामानि उदाहरणम् । रथन्तरं बृहद् वैरूपं वैराजं शाक्वरं रैवतमिति । तत्र संशयः । किमेकस्याम् ऋचि गानं कर्त्तव्यम् ? उत तृचे इति । किं प्राप्तम् । एकर्चस्थानि यज्ञे स्युः । एकस्यामृचि गातव्या-

नि। एवं स्वाध्याये गीतानि। यथा स्वाध्याये गीतानि, तथा कर्मणि गातव्यानि। कर्मणि स्वाध्याये च अवैलक्षण्यं न्याय्यम्। कर्माणि कर्त्तुं स्वाध्यायमभ्यस्यन्ति। अतो यथा अभ्यस्तं तत्र प्रयोक्तव्यम्। तस्मादेकस्याम् ऋचि गीयेरन्। एकर्चोत्पत्तीनि उदाहरणं, न तृचोत्पत्तीनि। यथाह सिमा–सन्तनि–यतय–एवागपत्य शाक्करवर्णमिति॥ १॥ पूर्व०॥

## तृचे वा लिङ्गदर्शनात्॥ २॥

न चैतदेवम्, एकस्यामेव गातव्यानीति। कुतः। लिङ्गदर्शनात्। लिङ्गं भवति। एवमाह, अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति द्व्यक्षरेणोत्तरयोरिति। न हि एकस्याम् ऋचि प्रथमोत्तरासम्बन्धो भवति। तस्मात् तृचे गातव्यानीति। अथेदमपरं लिङ्गम्। ऋक् साम उवाच मिथुनीसम्भवावेति, सोऽब्रवीत् न वै त्वं ममालमसि जायात्वे वेदो मे महिमेति। ते द्वे भूत्वा ऊचतुः, सोऽब्रवीन्नैव वां ममालं स्थो जायात्वे वेदो मे महिमेति। तास्तिस्रो भूत्वा ऊचुः, सोऽब्रवीत् सम्भवाम इति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति॥ आह, लिङ्गमिदं, प्राप्तिरुच्यतामिति। तदभिधीयते। कृत्स्नेऽपि ऋग्वेदे न प्रथमा नाम काचिदृगस्ति, तथा उत्तरे इति, व्यवस्थाकृतं प्रथमात्वम्, उत्तरात्वमिति प्रथमाया ऋचोऽष्टाक्षरेण प्रस्तोतव्यं, द्व्यक्षरेण चोत्तरयोरिति। तस्मिन् वचने सति ऋचस्त्रित्वमापद्यते। तथा, यद्यपि अनुवादसरूपोऽयं शब्दः, तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति तथापि ऋक् साम उवाच इति पुरस्तादर्थवादप्ररोचनया विदधातीति गम्यते। तदुक्तं, वचनानि त्वपूर्वत्वात् ( ३अ० ५पा० २१ सू० ) इति॥२॥ सिद्धान्त॥ रथन्तरादीनां साम्नां तृचे गानाधिकरणम्॥१॥

## स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात्॥ ३॥

ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः। प्रमथिता रथन्तरे प्रस्तूयमाने सम्मीलेत् स्वर्दृशं प्रति वीक्षेत। अत्र संशयः। किं स्वर्दृशं प्रति वीक्षणम् अङ्गप्रयोजनसम्बन्धः, उत कालार्थः संयोगः? इति। तत एतावत् तावन्नः परीक्ष्यं, किं रथन्तरे प्रस्तूयमाने सम्मीलदित्यस्य शेषः स्वर्दृशं प्रति वीक्षेतेति, उत, स्वर्दृशमित्येवमादि पृथग्वाक्यमिति। किं प्राप्तम्। अङ्गप्रयोजनसम्बन्ध इति पृथग्वाक्यमिति।

कुत । भेदेनावगमात् । भिन्नमिदमुपलभ्यते, स्वर्दृशं प्रति वीक्षेतेति । ननु अभिन्नमपि लक्ष्यते, रथन्तरे प्रस्तूयमाने सम्मीलेदिति विधाय, स्वर्दृशं प्रति वीक्षेतेत्यनुवदतीति । उच्यते । उभयावगतौ भेदो ग्रहीतव्य । स भेदो गृह्यमाणेन तेन विरुध्यते । अन्यतरगतिस्तु विध्यनुवादयोर्विरोधात् । तत्र विधिर्न्याय्योऽपूर्वत्वात् । वादमात्रं ह्यनर्थकम ( १ अ० २ पा० १९ सू० ) विध्यवगमाच्च । विधिश्चावगम्यते, वीक्षेतेति । श्रुतिश्चैवमनुगृह्यते, स्वर्दृशं प्रति वीक्षेतेति स्वर्दृक्शब्दं प्रति वीक्षणार्थो विधीयते । स्वर्दृक्शब्देन सह वीक्षणस्य साक्षात्सम्बन्ध । इतरथा स्वर्दृक्शब्दः कालं लक्षयेत् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादङ्गप्रयोजनसम्बन्धः ॥

अथ वा, स्वर्दृशं प्रति वीक्षेतेत्येवमङ्गप्रयोजनसम्बन्ध । स्वर्दृक्शब्दो वीक्षणस्य साधनमिति । तथा लिङ्गमप्यनुगृहीतं भवति । स्वर्दृक्शब्दश्रवणाद् वाक्यमपि । तस्मादङ्गप्रयोजनसम्बन्ध एवेति ॥

एवं प्राप्ते ब्रूम । स्वर्दृशं प्रति वीक्षणं कालमात्रं स्यात् परार्थत्वात् । नैतदेवम् अङ्गप्रयोजनसम्बन्ध इति । किन्तर्हि । स्वर्दृक्शब्देन वीक्षणस्य कालार्थ. सम्बन्ध स्यात् । कुत. । परार्थत्वात् साम्न । रथन्तरं पृष्ठं भवतीति पृष्ठस्तुतौ हि साम विनियुज्यते । तच्च साम पदानां स्तुतिं निर्वर्त्तयतां संस्कारादिभिर्विशेषै. स्तुतिपदाक्षराण्युपदर्शयत् स्तुतिमभिनिर्वर्त्तयतीत्युच्यते । एवंचेत् साम्नि स्तुतौ विनियुज्यमाने यानि, तानि परस्परसव्यपेक्षाणि ऋक्पदानि स्तुतौ विनियुक्तानि सम्भवन्तीत्यत. स्वर्दृक्शब्दस्य तन्मध्यपाठात् स्तुतौ विनियोग उक्तो भवतीत्यत. परार्थत्वादिह कालार्थ. संयोग इति अध्यवसीयते ॥

ननु मन्त्रे समाम्नानमात्रं, रथन्तरोपदेशाच्च पदोपदेशमानुमानिकं बाधित्वा एतद्वाक्यं प्रत्यक्षमङ्गप्रयोजनसम्बन्धमेव प्रकल्पयेदिति ॥ उच्यते । तद्धि बाधकं भवति । यदबाधमानमप्रयोजनं भवति । न चैतदबाधमानमनर्थकं, क्रियासु कालपरिच्छेदेनार्थवत्त्वात् । मन्त्रे समाम्नानसामर्थ्यात् । सामोपदेशाच्च स्तुतिसम्बन्ध. साक्षात् । वाक्यात् क्रियाकारकसम्बन्धः । उभया. प्रमाणावगतत्वादुभयसम्बन्धो न विरुध्यते इति यद्युच्येत । तन्न । यो हि मन्त्रवाक्याद् व्यवच्छिन्नस्य क्रियाकारकसम्बन्धमवगच्छति, नाऽसौ सकृदुच्चारितस्य

स्तुतिसम्बन्धमप्यवगच्छति । यद्यवगच्छेत्, पुनरुच्चारयेद् नान्यथा । तस्मात् तस्यामेव स्तुतौ क्रियासम्बन्ध कारकसम्बन्धो, न स्तुतिसम्बन्धे । कारकविशेषणाभावात् । तदेवं मन्त्राम्नानस्य सामोपदेशवाक्यस्य स्वर्दृशं प्रति वीक्षेतेत्यस्याविरोधे साधिते कालार्थः संयोग इति । अत उच्यते, कालार्थे सयोग इति ॥

अथ यदुक्त, भेदाभेदयोर्भेदो ग्रहीतव्यः । विध्यनुवादयोर्विधिर्ज्यायान् । विधिप्रत्ययदर्शनाच्चैवमेवावगम्यते इति । अत्र ब्रूमः । सत्यं, विध्यनुवादयोर्विधिर्ज्यायान्, अपूर्वार्थप्रकल्पकत्वादिति । यदि तु प्रमाणान्तरप्राप्तिर्नावगम्यते । यत्र तु पदान्तरादर्थाद्वा प्राप्तिरवगम्यतेऽर्थस्य । तत्र प्रमाणान्तरप्रतीतत्वाच्छब्द उच्चरन्ननुवाद इत्यवगम्यते । अत्र च स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति, नापश्यन् पुरुषं क्रियासु व्यापारमुपगन्तुमुत्सहते, इत्यर्थप्राप्ते विधिप्रत्ययोऽप्यनुवाद इत्यवगम्यते । ननु रथन्तरे प्रस्तूयमाने सम्मीलेदिति प्रत्यक्षवाक्यमर्थप्राप्तं पुरुषस्य दर्शन बाधेत । यथा प्रजापतिव्रतानि पौरुषेयीं स्वेच्छाप्रवृत्तिं वचनसामर्थ्यान्निरुन्धन्ति तद्वदिति । नेत्यवगम्यते । कथम् । क्रियाप्रारम्भसम्बन्धाद् रथन्तरे प्रस्तूयमाने इत्युच्यते । तदतीते प्रस्तावे वचनार्थस्य कृतार्थत्वादर्थप्राप्तं न वारयितुमर्हति ॥

अथ यदुक्तं, स्वर्दृक्शब्दवीक्षणयोर्वाक्येन सम्बन्ध इति, वाक्याऽर्थत्वाद् दृशिप्रयोगाच्च लिङ्गादर्शनक्रियासामर्थ्यमस्तीति । अत्र ब्रूमः । प्रतिशब्दः कर्मप्रवचनीयत्वात् स्वर्दृक्शब्दस्य लक्षणतामाचष्टे श्रुत्यैव, श्रुतिश्च लिङ्गवाक्ययोर्बाधिका समधिगतैव । अथ वा, नात्र वाक्यं बाध्येत । वाक्यं हि सम्बन्धप्रत्यायकं, यथासम्भवमनेकविधः सम्बन्धो वाक्याद् गम्यते । क्वचित् क्रियाकारकसम्बन्धः, क्वचिद्विशेषणविशेष्यसम्बन्ध, क्वचिल्लक्ष्यलक्षणसम्बन्धः, इत्येवम्प्रकाराः, सम्बन्धविशेषा इति । तत्रेह लक्ष्यलक्षणसम्बन्धः प्रयोजनप्रयुक्त इति गृह्यते एव सम्बन्धविशेष इति, न वाक्यं बाध्यते । यथा लोके, वृक्षं प्रति विद्योतते इति न॰ विद्योतनस्य वृक्षस्य च साध्यसाधनभावो गम्यते इति । अन्यत प्रवृत्तस्य विद्योतनस्य वृक्षश्चिह्नभावाय उपादीयते इति । तद्वदिहापि पुरुषार्थतया प्रवृत्तस्य दर्शनस्य स्वर्दृक्शब्दो लक्षणतयोपादीयते इति न वाक्यानर्थक्यम् । न हि लक्ष्यलक्षणयोरनुच्चार्य्यमाणयोः सम्बन्धोऽवगम्यते इति ॥

यदपि, दृशिप्रयोगाल्लिङ्गानुग्रह इति । तदपि न समर्थमिवेप्सितस्यार्थस्य पश्याम. । स्वार्थो हि दृशिः प्रयुज्यमानो दर्शनमवगमयेद् न परार्थं । स्वर्दृक्शब्दे तु सोपपदो दृशिः कर्तृत्वे गुणभूतोऽवगम्यते कर्त्ता तु प्रधानभूतः । न च कर्ता प्रत्याख्यमानो वीक्षणलिङ्गत्वेन कल्प्यते, दृशेरत्यन्तपारतन्त्र्यात्, कर्त्रभिधानश्च सन्नयं नैव वीक्षतिना सामञ्जस्येन सम्बन्धमुपैति । यदि तावदयमर्थ उपदिश्यते, स्वर्दृशं वीक्षेतेति, कोऽसौ स्वर्दृग्, यं प्रति वीक्षणमुपदिष्टम् ? इत्यविजानन्तो नैव क्रियामध्यवस्येम । अथायमर्थ , स्वर्दृशा वीक्षणं निर्वर्त्तयेदिति। तथाप्यप्रज्ञानात् स एव दोष । तदेवम्प्रकारे सम्बन्धे आञ्जस्येनाऽभ्युपगम्यमाने न लिङ्गं न च वाक्यमनुगृह्यते । लक्षणसम्बन्धेऽनुवीक्षणस्यैतदुच्चारणकाले वीक्षेतेति भवति कयाचिद् युक्त्या सम्बन्धः । स्तुतिसम्बन्धश्च कर्त्रभिधानस्यापि सतो न विरुद्ध्यते । सामानाधिकरण्यादीशानेन विशेषणविशेष्यभावसम्बन्धम् अभ्युपैति, ईशानं स्वर्दृशं तस्थुष इति । अतो वदाम., स्तुत्यर्थस्य सत स्वर्दृशं प्रति वीक्षेतेत्यत्र कालार्थ सम्बन्ध इति ॥ किं भवति प्रयोजनम् ? । अङ्गाङ्गिसम्बन्धे सति, यदा रथन्तरमुत्तरयोर्गायतीत्यतिदेश , तदैतदुपतिष्ठते, रथन्तरे प्रस्तूयमाने सम्मीलेदिति । उत्तरयोस्तु स्वर्दृक्शब्दाभावाद्दर्शनानियम. पूर्वपक्षे । सिद्धान्ते तु लक्षणसम्बन्धे सति तावति भागे कालाहानात् स्वर्दृशं प्रति वीक्षेतेति नियम सिद्धो भवति ॥ ३ ॥ स्वर्दृक्शब्देन वीक्षणस्य कालार्थताऽधिकरणम् ॥ २ ॥

## पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥ ४ ॥

इदमाम्नायते, पृष्ठ्य. षडहो बृहद्रथन्तरसामा इति । तत्रायमर्थ सांशयिक. । किमहरहर्द्विसामकं कर्त्तव्यम् ? उत केषुचिदहःसु रथन्तरं केषुचिद् बृहद् ? इति । कुत. संशय. ? । यद्येते समस्ते सामनी, यदि विभक्ते, उभयथा पृष्ठ्यः षडहो बृहद्रथन्तरसामा इति शब्दोऽवकल्पते । तत्रैष विचार । किं द्वन्द्वगर्भो बहुव्रीहिरयं, बृहद्रथन्तरे सामनी यस्येति ? उतानेकपदो बहुव्रीहि', बृहदस्य, रथन्तरमस्येति । यदि द्वन्द्वगर्भो बहुव्रीहिः, प्रत्यहं समस्ते सामनी, अनेकपदे बहुव्रीहौ विभक्त इति ॥ किं तावत् प्राप्तम् । समस्ते इति । तत एतद् वर्ण्यते । द्वन्द्वगर्भो बहुव्रीहिरिति । कुत. । बृहद्रथन्तरशब्दयो-

रानन्तर्याद् वृत्तिपक्षस्याश्रितत्वात् । वृत्तिपक्षे च समासस्य नित्यत्वात् । द्वन्द्वे च स्वार्थाभिधानाच्छ्रुत्यनुग्रहोऽन्तरङ्गता च । इतरथा च उभयमपि बाध्येत । अतो द्वन्द्वगर्भो बहुव्रीहिः । एवं चेत्, प्रत्यहं समस्ते सामनी भवेताम् । कुत । इतरेतरयोगद्वन्द्वस्य भावाद् यत्र रथन्तरं तत्र बृहत्साहितम् । स एष युगपद्विधिर्यदितरेतरयोग । तस्मात् प्रत्यह समस्ते इति । एकाहवत् । तथा ज्योगामयाविन उभे कुर्यात् संसवे उभे कुर्यात्, अपचितावपि एकाहे बृहद्रथन्तरे कुर्याद् इति ॥ ४ ॥ पूर्व० ॥

विभक्ते वा समस्तविधानात् तद्विभागे विप्रतिषिद्धम् ॥ ५ ॥

न चैतदस्ति, अहरहर्द्विसामकमिति । केषुचिदहःसु रथन्तरं, केषुचिद् बृहत्, न समस्ते सामनी विधीयेते । कुतः । यद्युभयोरपि पक्षयोर्बृहद्रथन्तरसामेतिशब्दोऽवकल्पते, विभक्ते सामनी इति न्याय्यम् । कुत । प्रकृतावेकेन साम्ना पृष्ठं साधितम् । विकृतावपि एकेन साधितव्यं, चोदकानुग्रहाय । तथा च सति बृहन्निमित्तं रथन्तरनिमित्तञ्च सकलमभिनिर्वर्त्तयिष्यते ॥

अथ बृहद्रथन्तरसमुदायः पृष्ठं साधयति, न बृहत्साधनं, न रथन्तरं साधनमिति तन्निमित्तं न प्रकल्पेत । तत्र चोदकोपरोधः स्यात् । न केवलं तन्निमित्तं न प्रकल्पते, बृहत्पृष्ठताऽपि न प्रकल्पते, रथन्तरपृष्ठताऽपि । तत्र वैषम्यात् स्यादन्यदेव प्रयोगान्तरम् ॥ अपि च समस्तं पृष्ठमित्युपचर्य्यमाण लक्षितं बृहत्पृष्ठं भवति, रैथन्तरं पृष्ठं भवतीति, तत्समुदायाभिधाने लिङ्गम् । अपि च बृहच्छब्द. सामशब्देन सम्बन्धमपेक्ष्यमाणो न रथन्तरशब्देन सम्बद्ध स्यात् । आनन्तर्य्यञ्च तुल्यं रथन्तरशब्दस्य सामशब्देन । अपि च वृत्तिपक्षाश्रये सुतरां द्वन्द्वपदेन असामर्थ्यम् । न चैष नियोगो वृत्तिपक्षे नित्य. समास इति । विभाषां हि स्म भगवान् पाणिनिरधीते । सामशब्दश्रुतिश्च बृहद्रथन्तरयोर्लक्षणतामाचष्टे । तस्मादसमस्ते सामनी स्याताामिति । एतच्चोक्तमेव विभागेऽपि साम्नोरविप्रतिषिद्धो बृहद्रथन्तरसामशब्द इति । यथा, मासं घृततैलाभ्यां देवदत्तो भोजयितव्य इत्युक्तोऽर्द्धं मासं घृतेनार्द्धं मासं तैलेन । एवमपि शब्दो-

ऽवकल्पते । एकाहे तु एकत्वादेव विभागासम्भवात् समस्ते ज्योगामयाविन उभे कुर्यादिति ॥ ५ ॥ सिद्धान्तः ॥ गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ॥ ३ ॥

## समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥

इदमाम्नायते, ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेतेति । तत्र संशय । किमेकादश प्रायणीये, पुनस्त एकादश उदयनीये, आहोस्वित् कांचित् पशव प्रायणीये कांचिदुदयनीये ? इति। समानत्वान्निर्देशस्य, संशयः । किं प्राप्तम् । तुशब्दः संशयनिवृत्त्यर्थः । समास एव ऐकादशिनेषु, सर्वे प्रायणीये, सर्वे पुनरुदयनीये भवितुमर्हन्ति । कुतः । तत्प्रकृतित्वात् । प्रकृतौ ज्योतिष्टोमे समस्तानामैकादशिनानामालम्भः, इहापि समासञ्चोदकः प्रापयति । अपि च लक्षणत्वेन प्रायणीयमुदयनीयं वा अह. श्रूयते । तत्र प्रायणीये सर्वे विहिता भवन्ति, न गम्यते विशेषः । के इह ऐकादशिनानां विहिताः ? इति, तथोदयनीये । तस्मात् समासस्तत्र ॥ ६ ॥ पूर्व० ॥

## विहारप्रतिषेधाच्च ॥ ७ ॥

विहारप्रतिषेधश्चायम, ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्निति । अन्वहमेकैकमालभेतेति विहार. प्राप्तः । तत्रैकः पशु. प्रायणीये प्राप्त एव । अन्येऽन्येषु अह सु । ततोऽनेन किं क्रियते ? येऽन्येषु अह सु, ते प्रतिषिद्ध्यन्ते, प्रायणीये च ते सर्वे भवन्तीति । तथोदयनीये । तस्मात् सर्वे प्रायणीये भवितुमर्हन्तीति ॥ ७ ॥ युक्तिः ॥

## श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥

वाशब्देन पक्षं व्यावर्त्तयति, नैतदस्ति समास इति । विभाग. स्यात् । कुतः । द्वित्वश्रुतितः । द्वित्वश्रुतिर्हि भवति, प्रायणीयोदयनीययोरिति । सा च इदानीमुपादेयत्वेन, न लक्षणतया । कुतः । एकादशिनीविधौ सन्निहिते वचनादेकादशिनीं विधाय पुनः श्रुत्या तां लक्षयित्वा प्रयोजनविधित्सया एतदभिधीयते । प्रायणीयोदयनीययोरिति । तत्र द्वन्द्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः । समासे च इतरेतरयोगाद् न एकादशिनी केवले प्रायणीये । सा उदयनीययुक्तं भवितुमर्हति, तद्वदुदयनीयेऽपि । तस्मात्

समुदाये वाक्यपरिसमाप्ति । यदि पुनर्नोपादेयत्वेन अश्रोष्येतां, तत्र द्वन्द्वभाविनोरप्राधान्यम्, अप्राधान्येऽस्यामाकाङ्क्षायां न समासो भविष्यति । तत्र प्रत्यकं वाक्यपरिसमाप्तिः स्यात् । उपादेयत्वेन तु एतच्छ्रूयते । तस्माद्विभाग इति । लोकवत् । यथा, लोके शतं देवदत्तयज्ञदत्तयोर्दीयतामित्युक्ते समासार्थो विधीयते, यदेतच्छतं, तदेतयोर्दीयतामिति । द्वन्द्वश्रुतिविधानसामर्थ्याच्छतं विभज्यते, एवमेकादशिन्यपि विभज्येतेति ॥ ८ ॥ सि० ॥

## विहारप्रकृतित्वाच्च ॥ ९ ॥

इतश्च विभाग । कुत । विहार प्रकृत । एकादशिन्यामन्वहमेकैकमालभेतेति । तस्यैव विकार । ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेतेति । यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यम् ॥ ९ ॥ युक्ति ॥

## विशये च तदासत्तेः ॥ १० ॥

इदं पदोत्तरं सूत्रम् । आह । यदि विहारोऽभिप्रेयते, तत्रैकत्र पञ्च आलब्धव्याः, एकत्र षट् । तत्रैकदेशो न निर्णीयते, किं प्रायणीये किमुदयनीये ? इति । अनिर्णयनानध्यवसानम् । अनध्यवस्यतोऽप्रवृत्ति, तत्रोपदेशवैयर्थ्यं स्यादिति । अत्रोच्यते । विशये एतस्मिन् संशये प्रकृत्यासत्तिर्मुख्येनानुगृह्येत । तत्र प्रायणीये पञ्च आलभ्यन्ते, षड् उदयनीये इति अध्यवस्याम ॥ १० ॥ आ० नि० ॥

## त्र्यस्तथेतिचेत् ॥ ११ ॥

इति चेत् पश्यसि प्रत्यासत्तिर्मुख्येनानुग्रहीतव्येति । तस्मात् त्रय एव प्रायणीये आलब्धव्या, यावत्सु बहुवचनमविरुद्धं भवतीति स्थितायां प्रतिज्ञायां सूत्रेण प्रतिचोदयत्येवम् ॥ ११ ॥ आ०

## न समत्वात् प्रयाजवत् ॥ १२ ॥

नैतदेवम् । कुतः । समत्वात् । यदा प्रायणीयोदयनीययोरितरेतरापेक्षयोरैकादशिना विधीयन्ते, न सर्वेऽन्यतरस्मिन् केवले कर्त्तव्यास्तदपेक्षया कार्त्स्न्यं बाधितं भवति । तत्र यावद्भिरन्यतरत्र भवद्भिरवश्यं बाधितव्यं तावद्भिरनुज्ञातो बाध । अत एव साम्येनैव विभागः प्रयाजानामिव । यथा षडागन्तवः प्रयाजाः प्रथमोत्तमयोर्विकारभूता, साम्येन प्रविभज्यन्ते, एवमिहापि यावत्सु साम्यं भवति,

तावतः साम्येन विभज्य अभ्यधिक उदयनीये आलप्स्यते प्रत्यासत्ति-र्मुख्येनानुग्रहीष्यत इति तस्माददोषः ॥ १२ ॥ आ० नि० ॥ प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम् ॥ ४ ॥

**सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १३ ॥**

इदमाम्नायते, विश्वजित् सर्वपृष्ठ इति । तत्रायमर्थः सांशयिकः। किं सर्वेषां पृष्ठदेशे निवेशः, उतैकस्य पृष्ठदेशे अन्येषामन्यत्र ? इति । किं प्राप्तम् । सर्वपृष्ठे एतस्मिन् सर्वेषां साम्नां पृष्ठदेशे निवेशः । कः पुनः पृष्ठदेशः । ऊर्ध्वं माध्यन्दिनपवमानात्, प्राग् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठदेशः । स एवैको देशः स्यात् सर्वेषां साम्नाम् । कुतः । पृष्ठशब्दात् । पृष्ठकार्ये वर्त्तमानस्य वा अयं कृतो देशः । तस्मात् सर्वेषां पृष्ठदेशे निवेशः ॥ १३ ॥ पूर्व० ॥

**विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥**

तुशब्दः पक्षं व्यावर्त्तयति, एवं न्यायेन प्राप्तं वचनादन्यथा भवितुमर्हति । एकस्य पृष्ठकार्ये विधिरन्येषां परिसामकार्ये । कथम् । पवमाने रथन्तरं करोति आर्भवे बृहत् मध्ये इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाक्वरं मैत्रावरुणसाम रैवतमच्छावाकसाम इति । एवमेकस्य पृष्ठकार्ये विधानमर्थवद् भविष्यति । यदीतरेषां सामकार्ये विशेषः । इतरथा एकस्य पृष्ठकार्ये विधानं नोपपद्यते, यन्मा भूदित्यतः पश्यामः, एकस्य पृष्ठकार्ये निवेशः, अन्येषां परिसामकार्ये इति ॥ १४ ॥ सिद्धान्तः ॥ विश्वजित् सर्वपृष्ठ इत्यत्रैकस्यैव पृष्ठदेशे निवेशाधिकरणम् ॥ ५ ॥

**वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥**

अस्ति ज्योतिष्टोमः, तत्रोक्थ्यः षोडशी च संस्थाविशेषः । तत्र श्रूयते । उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा इति । तत्रायमर्थः सांशयिकः । किं वैरूपं वैराजञ्च कृत्स्ने क्रतौ निविशेते, उत पृष्ठकार्ये इति । किं प्राप्तम् । कृत्स्ने क्रतौ वैरूपमेकं साम स्यात्, षोडशिनि वैराजम् । कुतः । कृत्स्नक्रतुसंयोगात् । अविशेषेण कृत्स्ने क्रतौ वैरूपसाम विधीयते, वैराजञ्च । तत्र विशेषोऽवस्थातुमर्हति पृष्ठकार्ये, त्रिवृद्वत् । यथा, त्रिवृदग्निष्टोम, त्रिवृत्स्तोमः

कृत्स्ने क्रतौ भवति, एवमिमे अपि सामनी कृत्स्नयोः क्रत्वोर्भवेताम् । यथा वा, धेनुरथैष भूर्वैश्वदेवः त्रिवृदेव सर्वस्तस्य विश्ववत्य स्तोत्रिया धेनुर्दक्षिणा इति कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये धेनुः संयोगात् । एवमिमे अपि सामनी भवितुमर्हत. ॥ १५ ॥ पूर्व०॥

## पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १६ ॥

पृष्ठकार्ये वा सामनी विधीयेते । कथम् । वैरूपसामा वैराजसामेति सामशब्देन प्रकृतिलिङ्गेन बहुव्रीहिरवगम्यते, न वैरूपं साम विधीयते वैराजञ्च । किन्तर्हि, वैरूपसामता वैराजसामता च क्रतोः। क्रतुसंयोगो हि भवति, न स्तोत्रसंयोगः । एकस्मिन्नपि च स्तोत्रे वैरूपे वैराजे च भवति वैरूपसामता वैराजसामता च क्रतो. । कुत । यदि हि स्तोत्रे साम विधीयते स्तोत्राविशेषात् सर्वस्तोत्रेषु भवेद्, न त्वेतदेवम् । तस्मादेकस्मिन् स्तोत्रे वैरूपे वैराजे च भवति, वैरूपसामता वैराजसामता चेति । यदेकस्मिंस्तदा पृष्ठकार्ये स्यातां, वैरूपसामता हि गुणो विधीयमानः । वैराजसामताऽत्र एवञ्जातीयकस्य गुणस्य कार्ये भवितुमर्हति, प्रकृतौ च बृहत्सामता रथन्तरसामता चैवञ्जातीयका । तदिह प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्ये वृत्तिरवगम्यते यस्य लिङ्गमर्थसयोगादभिधानवदित्यनेन न्यायेन। तस्मादिमे सामनी पृष्ठकार्ये निविशेयातामिति ॥ १६ ॥ सि० ॥

## त्रिवृद्वदिति चेत् ॥ १७ ॥

इति चेद् इति यदुक्त, यथा त्रिवृदग्निष्टोम इति त्रिवृत्त्वं कृत्स्ने क्रतौ निविशते, एवमिहापीति । तत् परिहरणीयम् ॥ १७ ॥ आ० ॥

## न प्रकृतावकृत्स्नसंयोगात् ॥ १८ ॥

नैतदेवम्, इह वैरूपवैराजयोः प्रकृतिलिङ्गेनाकृत्स्नसंयोगो गम्यते। नैवं त्रिवृति कश्चित् प्रकृतिलिङ्गेन संयोगोऽस्ति येनाकृत्स्नता अवगम्येत । ततो विशेषस्त्रिवृतः सामभ्याम् ॥ १८ ॥ आ० नि० ॥

## विधित्वान्नेति चेत् ॥ १९ ॥

इति चेत् इति यदुक्तं, यथा धेनुविधिर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्ये भवति, एवं सामनी अपीति ॥ १९ ॥ आ० ॥

**स्याद् विशये तन्न्यायत्वात् कर्माविभागात् ॥ २० ॥**

स्याद् धेनुर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तयित्री। सा हि कृत्स्नं क्रतुदाक्षिण्यं निवर्त्तयेत्, किं वा न ? इत्येतस्मिन् संशये एवं न्याय्यं कृत्स्नं निवर्त्तयेत् । कुतः । कर्माविभागात् । अविभक्तं हि दक्षिणाकार्यं कार्त्स्न्येन वा दाक्षिण्येन क्रियेत धेन्वा वेति । दक्षिणाकार्ये हि धेनुः श्रूयते, धेनुर्दक्षिणा इति । अतस्तत्र युक्तम् । इह प्रकृतिलिङ्गसंयोग इत्यपदिष्टो हेतुः । तस्मादेतदपि विषमम् ॥२०॥आ०नि०

**प्रकृतेश्चाविकारात् ॥ २१ ॥**

इतश्च न कृत्स्नक्रतुसंयोगः । कुतः । प्रकृतेरविकारात् । एवं बहु प्राकृतमविकृतं भविष्यति । तत्र चोदकोऽनुग्रहीष्यते । अतोऽपि न कृत्स्नक्रतुसंयोगः साम्नोरिति ॥ २१ ॥ युक्तिः ॥ वैरूपसामवैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् ॥ ६ ॥

**त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥२२॥**

एवं श्रूयते, त्रिवृदग्निष्टोम इति । तत्र संशयः । किं त्रिवृत्सङ्ख्या अग्निष्टोमस्य साधनमात्रम्, उत स्तोमविषया नियम्यन्ते ? इति । किं प्राप्तम् । त्रिवृद् भवतीति श्रूयमाणे सङ्ख्यामात्रविकारः स्यात् । कुतः । त्रिवृच्छब्दो लोके त्रित्वसम्बद्धे प्रयुक्तः । यथा त्रिवृद्रज्जुस्त्रिवृन्मार्णिरिति । इहापि त्रिवृदग्निष्टोम इति त्रित्वसम्बद्धोऽग्निष्टोमः कार्य इत्युच्यते । तच्च त्रित्वमग्निष्टोमसाधनपरिच्छेदद्वारेण तत्सम्बद्धमित्युक्तं भवति, न साक्षात् । गुणत्वात् सङ्ख्यायाः । न चेह सङ्ख्येयविशेषः कश्चित् तदीय उपादीयते । तदविशेषाद् यावान् कश्चिदग्निष्टोमसम्बद्धः सङ्ख्यया परिच्छेत्तव्यः सर्वं परिसञ्चक्षीत सङ्ख्यात्वेन सामान्येन तत्सङ्ख्यां विकुर्यात् । यथा दधिघृतशालिभिर्देवदत्तो भोजयितव्यो, देवदत्तवद् यज्ञदत्तस्तैलेनेत्युक्ते स्नेहनसामान्यात् तैलं स्नेहनकार्ये एव विनियुज्यते, न ओदनकार्ये, इत्येवं सङ्ख्यापि सङ्ख्याकार्ये एव विनियुज्यते ॥ २२ ॥ पूर्वं० ॥

**स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥**

न चैतदस्ति सर्वसङ्ख्याविकार इति । किन्तर्हि । स्तोमगतामेव सङ्ख्यां विकुर्यात् । कथम् । स्तोमविषये त्रिवृच्छब्दस्यान्यत्र दर्शनात् । यथा । त्रिवृद्बहिष्पवमान इत्यत्र स्तोमविषयता परिच्छिन्ना,

एवं त्रिवृदग्निष्टोम इत्यत्रापि स एव शब्द उच्चरितस्तमेव सम्बन्धिन-मनुमानाद् बुद्धौ सन्निधापयेत् । अतः स्तोमलिङ्गत्वात् तद्‌गतामेव सङ्ख्यां विकुर्यात् ॥

अत्राभिधीयते । नैतद्युक्तम् । सङ्ख्याशब्दा हि अनियतवृत्तयो भवन्ति । ते हि येन येन सम्बध्यन्ते सङ्ख्येयेन तं तं परिसङ्ख्यास्यते । तथा चोपदर्शितमेव त्रिवृद्रज्जुस्त्रिवृन्मणिरिति । तस्माद् बहिष्पव-मानेन सामानाधिकरण्यात् स्तोत्रं परिसङ्ख्यष्ट, अन्यत्रापि यो य परि-सङ्ख्यातव्यो भविष्यति, तं तं परिसङ्ख्यास्यतीत्यतः स्तोमलिङ्गत्व-मप्यहेतुर्नियमस्येति ॥

अत्राभिधीयते । अयमिह त्रिवृच्छब्दोऽतीत्य लौकिकमर्थं विशिष्ट-सङ्ख्येये आचरित । यथा त्रिवृद्बहिष्पवमान इति स्तोमविषयिण्यां नवसङ्ख्यायां त्रिवृद्बहिष्पवमान इत्यभिधाय नव स्तोत्रिया उ-च्यन्ते, तेन तासु वर्त्तत इति गम्यते । तथा परस्मिन्नपि दृश्यते । त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मिता नव प्रकृतिरग्निष्टोमस्येति नवानां कपालानां त्रिवृता स्तोमेन सम्मानं वदन् त्रिवृच्छब्दस्य तत्र प्रसिद्धिं दर्शयतीति । अत. प्रसिद्धवदाचारात्, सामानाधिकरण्य-दर्शनाच्च अयमस्यार्थ इति निश्चीयते । लोकेऽपि सामानाधिकरण्य-प्रयोगाद्वा आचाराद्वाऽर्थावसानं भवति, यथाऽयं देवदत्त इति । तस्मा-दयं त्रिवृच्छब्दो विशिष्टसङ्ख्यासङ्ख्येयविषयोऽन्यत्र दृष्ट इति इहापि प्रयुज्यमानो यत्र दृष्टस्तमेव लिङ्गाद् बुद्धौ सन्निधापयतीत्यत. स्तोम-विषयो नियम्येत । यदुक्तं, सङ्ख्या ह्यनियतविषया सर्वत्र सम्बन्ध-मुपयाति । एतद् अवयवार्थनिराकरणात् समुदायाङ्गीकरणाच्च परिहृतमेवेति । एवमन्यगतानां सङ्ख्यानामनिवृत्तौ चोदकानुग्रहो भविष्यतीति ॥ २३ ॥ सिद्धान्त. ॥ त्रिवृदग्निष्टोम इत्यत्र स्तोमगत-संख्याविकाराधिकरणम् ॥ ७ ॥

## उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥

सन्ति उभयसामान क्रतव । ससव उभे कुर्य्यादपचितावप्ये-काहे उभे कुर्य्यादिति । तत्र संशयः । किं बृहद्रथन्तरे विभक्ते भव-तः, उत समस्ते ? इति । कुत समस्तता अवगम्यते, कुतो वा व्य-स्ततेति । उच्यते । एतदेव वचनमुभयमर्थमुद्भासयति । कथम् ? ।

उभाभ्यां क्रतु सम्बन्धयितव्य । ते यदि समस्ते अथवा व्यस्ते भवत., उभयथाऽपि क्रतुस्ताभ्यां सम्बद्धो भवति। तत्रोभयथा प्रतिभाति वचने किं युक्तम् ? । व्यस्ते इति । कुतः ? । प्रकृतौ हि बृहद्रथन्तराभ्यामन्यतरेण पृष्ठं साधितमिहापि प्रकृतिवच्चोदकाऽनुग्रहायान्यतरेण साधयितव्यमवगम्यते । एवञ्च पृष्ठसम्बद्धानां कर्मणां कात्स्र्न्येन प्रवृत्तौ चोदकोऽनुग्रहीष्यते, उभयो पृष्ठं साधयतोरन्योन्येन विहितत्वात् प्रयोगान्तरमापद्येत, न रथन्तरं पृष्ठं, न बृहत् पृष्ठमिति उभयथाऽपि वचनार्थोपपत्तौ न चोदकबाधायां कारणमामस्ति । तस्माद् यथा न विश्वजिति बृहदादीनां सर्वेषामेकत्र निवेशः, एवमिहापीति ॥ २४ ॥ पूर्व० ॥

## पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥

नैतदस्ति, विभक्ते इति । किन्तर्हि । समस्ते सामनी स्याताम् । कुत । प्रकृतौ हि बृहद्रथन्तराभ्यां विकल्पमानाभ्यां पृष्ठं साधितम् । इह इदानीं विकृतौ तयोरधिगतदेशयोर्विकल्परूपेणैव प्राप्तयो केवलमेतद्वचनं सामस्त्यविधानार्थम् । उभे बृहद्रथन्तरे कुर्यादिति । एवञ्च सामस्त्यं भवति, यदि ते सामनी परस्परं न जहीतः । उपादेयत्वेन चानयो. श्रुतत्वाद् द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैव । तेन यत्र बृहत्, तत्र रथन्तरसहितं, न केवलमिति ॥ तत्रैतत् स्यात्, प्रधानक्रियापेक्षमनयोः साहित्यम् । तत्र व्यस्तयोरपि क्रियमाणयो. साहित्यं न विरुध्यते । यथा देवदत्तयज्ञदत्तयो पाकेन समस्तयोरपि संयोग उच्यमाने एकः किञ्चित्करोति अपरोऽपि किञ्चित् । न यदेकेन कृतं, तदेव अपरः करोति । तद्वदेकं साम किञ्चित् स्तोत्रमभिनिर्वर्त्तयिष्यति द्वितीयमप्यपरम् । प्रधानोपकारापेक्षं साहित्यमिति समस्तसंयोगो न विरोत्स्यते इति ॥ तत्राभिधीयते यत्र परस्परमन्यपेक्षयोर्योगो भवति, तत्रैतदेव न्याय्यम् । येन क्रियावयवेन आरम्भण मध्येन अवसानेन वा योग., तेन सहितयोर्न पृथक्त्व. । कुतः । यथैवानेनोपकर्त्तव्यमित्यवगम्यते, एवमितरसहितेनेति । यत्तु, लोके कारकसामस्त्येऽप्यभिहिते भेदेन व्यापारदर्शनमिति । अर्थासम्भवादसौ । न हि उखायामाधिश्रीयमाणायां भूयोऽधिश्रयणं शक्यते कर्त्तुमित्यर्थविरोधाद् न करोति, न तु शब्देनासौ

तत्र न चोदितः । यद्यत् कर्त्तव्यं तत्तत्सहिताभ्यामेव, नान्यथा । इह तु नासम्भवः । बृहद्रथन्तरयोर्हि ऋक्संस्कारत्वेन विनियोगात् । ते च शक्नुतः सहिते पृष्ठं संस्कर्त्तुमित्यतस्तयोः साहित्यमेव युक्तम् । यदुक्तम्, उभयथा सम्भवे चोदकानुग्रहो न्याय्य इति धर्मकार्त्स्न्यें निमित्तविघातश्च न भविष्यति । तत्र प्रत्यक्षात् समस्तविधानाच्चोदके बाध्यमाने न दोषो भवति ॥ २५ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ २६ ॥

लिङ्गञ्च दर्शयति, यथा समस्तयोः प्रयोगो न व्यस्तयोरिति । किं लिङ्गम् । एवमाह, महावृक्षौ वै बृहद्रथन्तरे निधनेन समाप्येते यन्महावृक्षौ समृच्छेते । न ह्यत्र विभग्नं प्रभग्नमिति निधनभेदवचनादेकस्थानता अवगम्यते । यदि भिन्नदेशे स्याताम्, अर्थादेव तत्र निधनभेदः सिद्धः । अथ तु सहिते भवतस्ततो निधनभेदवचनमर्थवद् भवति । तस्मादप्यभेदः । तथा अपरं लिङ्गं, पूर्वाह्णो वै रथन्तरम्, अपराह्णो बृहदिति एकेनाह्ना अभिसम्बन्धादेकस्थानतां दर्शयति । तस्मात् समस्तयोः पृष्ठदेशे निवेश इति ॥ २६ ॥ युक्तिः ॥ उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम् ॥ ८ ॥

## पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात् तदानन्तर्यात् प्रकृतिवत् ॥ २७ ॥

क्वचित् कर्मविशेषे श्रूयते, पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भण इति । द्वादशाहे वचनं, संस्थिते पृष्ठ्ये षडहे मधु आशयेद् घृतं वा इति । तदिदं मध्वशनं घृताशनञ्च चोदकप्राप्तं सत् सन्दिह्यते । किं त्रयस्त्रिंशान्ते कर्त्तव्यम्, उत षडहान्ते इति । किं प्राप्तम् । तत्र सूत्रेणैवोपक्रम, पृष्ठे रसभोजनमावृत्ते षडहे त्रयस्त्रिंशेऽहनि संस्थिते कार्यम् । कुतः । तदानन्तर्यात् । प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं वृत्तं, प्रकृतिवदिहापि कुर्वाणो यदि त्रयस्त्रिंशानन्तरं करोति, चोदकमनुगृह्णाति । अथ त्वन्यस्याह्नोऽनन्तरं कुर्याच्चोदकं बाधेत । आनन्तर्यं हि क्रमः । स च विशेषसम्बन्धे कारणमिति समधिगतम् । एतदानन्तर्यञ्च रसभोजनस्य, त्रयस्त्रिंशेन सह दृष्टमित्यतस्त्रयस्त्रिंशानन्तरं क्रियत इति ॥ २७ ॥ पूर्व० ॥

## अन्ते वा कृतकालत्वात् ॥ २८ ॥

न चैतदस्ति, त्रयस्त्रिंशानन्तरं रसभोजनमिति। किन्तर्हि। षडहान्ते स्यात्। कुत । संस्थिते षडहे इत्युच्यते, न संस्थिते त्रयस्त्रिंशे इति। षडहाभिगमलक्षिते पर्यवसाने, न त्रयस्त्रिंशाद्युपलक्षिते। षडहश्च षडह.सु पर्यवसितो भवति, नैकस्मिँस्त्रयस्त्रिंशेऽहनि। यदुक्तं, त्रयस्त्रिंशानन्तर्यदर्शनात् प्रकृतिवदिहापि तदानन्तर्ये एव भोजनन भवितव्यमिति। नैतद्युक्तम्। तत्र ह्यर्थात् त्रयस्त्रिंशानन्तर्यं वृत्तम्। कुनः। तस्मिन्नहनि तत्र द्वादशाहे षडह. पर्यवसित इति। इहापि यत्र पर्यवस्यति तत्र भोजनं भविष्यति। तत. षडहावसानलक्षितेन भोजनस्य सम्बन्ध, संस्थिते षडहे इति। न त्रयस्त्रिंशावसानलक्षितेनेति। यत्तु क्रमः कारण विशेषसम्बन्धे इति। सत्यं कारणं, न तु बलीयसा प्रमाणेन यत्र विरुद्ध्यते। इह तु वाक्येन षडहावसानं विधीयते इत्युक्तम्। तस्माद्वाक्येन विशेषसम्बन्धे सति न आनन्तर्यमात्रं कारणम्। अतः षडहान्ते भोजन स्यादिति ॥ २८ ॥ सिद्धान्त. ॥ मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ॥ ९ ॥

## अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥२९॥

आवृत्तं पृष्ठ्य षडहमुपयन्तीति श्रूयते। तत्रैतत् चोदकेन प्राप्यते संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति। तत्र सन्दिह्यते। किं षडहावृत्त्या आवर्त्तेत भोजनम्? उत षडहान्ते सकृदेव क्रियेतेति किं प्राप्तम्। षडहावृत्तौ सत्यामावर्त्तेत भोजनम्। कुतः। कर्मण पुन पुनः प्रयोगात्। तद्धि कर्म पुनरावर्त्तते। तदावृत्त्या यदपि तत्सम्बद्ध तदप्यावर्त्तेत। यथा स्तोत्रशस्त्रादि षडहसम्बद्धमावर्त्तते, एवं षडहसम्बन्धि भोजनमप्यावर्त्तेतेति ॥ २९ ॥ पूर्व० ॥

## अन्ते वा कृतकालत्वात् ॥ ३० ॥

न चैतदस्ति, यदुक्तं, षडहावृत्त्या भोजनमप्यावर्त्तेतेति, किन्तर्हि षडहान्ते सकृदेवानुष्ठीयेत। कुत. कृतकालत्वात् कृतो हि भोजनस्य काल। संस्थिते षडहे इति। संस्थानं, पर्यवसानं. षडहगतस्य व्यापारस्योपरम। न च पुन षडहं कुर्वाणः षडहगताद् व्यापारादुपरत इत्युच्यते। न चानुपरतौ कर्त्तु. षडह. सन्तिष्ठते। संस्था हि क्रियां प्रति औदासीन्यं, व्यापारान्तरकरणं वा, पूर्वस्मात् कर्मण. न च पुन. षडहं कुर्वाण औदासीन्यं भजते। न च व्यापारान्तरं करोति।

तस्यैव कर्मण आवृत्तिं करोति । अतोऽपर्य्यवसितः । अपर्य्यवसिते च संस्थाभावादश्रुतमेव प्राशनमिति न क्रियते ॥

यदुक्तं, यथा अन्ये षडहधर्माः स्तोत्रशस्त्रादय आवर्त्तन्ते, तद्वत् प्राशनमप्यावर्त्तेतेति । नैतद्युक्तम् । ते हि अहःसम्बद्धाः । तेषामह्नामावृत्तिरिति स्तोत्रादीनामावृत्तिरिति युक्तम् । न हि तेऽहःसु अवसानसंयोगेन चोद्यन्ते । इह तु अवसानसंयोगेन भोजनस्य चोदना इत्युक्तो हेतुः । तस्मान्न भोजनस्यावृत्तिर्युक्तेति ॥ अपि च यद्येतद् भोजनं षडहाङ्गं भवेत्, ततः प्रधानावृत्त्या आवर्त्तेत । न चैतदङ्गम् । कुतः । अङ्गत्वप्रख्यापकस्य कारणस्याभावात् प्रकरणादङ्गता स्याद्, वाक्यसंयोगाद्वा, प्रत्यक्षोपकारदर्शनाद्वा । एतेषाञ्चेह न किञ्चित् कारणं पश्यामः । प्रकरणं तावद् द्वादशाहस्य, न षडहस्य । वाक्यसंयोगोऽपि संस्थिते षडहे इति षडहस्य संस्थायां भोजनमाचष्टे । संस्थितश्चैवं षडहो भवति । यद्यस्य न किञ्चिदपरम् अङ्गजातं परिशिष्यते । न च, मध्वशनघृताशने प्रत्यक्षेणोपकुरुतः षडहस्य । कुतः । निवृत्ते करणात्, कामं यया च यावत्या च तर्पणमात्रया कर्त्तॄणां यानि पुरस्तात् कर्माणि वर्त्तन्ते, तेषां सामर्थ्योपजननेनोपकुर्य्यात् । नातिवृत्तस्य षडहस्येति । यान्यपि क्रमादीनि कारणानि, तान्यपि प्रमाणान्तरसम्बन्धमुपादाय विशेषसम्बन्धे कारणानि भवन्ति, न केवलानि । तस्मात् षडहाऽवसानलक्षिते काले पुरुषाणां भोजनक्रिया विधीयत इत्यतो नावर्त्तेत भोजनमिति ॥ ३०॥ सिद्धान्तः ॥ षडहावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणम् ॥ १० ॥

## आवृत्तिस्तु व्यवाये कालभेदात् स्यात् ॥ ३१ ॥

गवामयने श्रूयते, चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडह स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः । तत्रैतत् चोदकेन प्राप्तम् । संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति । तत्र सन्दिह्यते । किं प्रतिमासमावर्त्तते रसभोजनम् ? उत सर्वान्ते सकृदेव कार्यमिति । किं पुनर्युक्तम् । उक्तेन न्यायेन सकृदिति । सर्वान्ते ह्यसौ षडहगताद् व्यापारादुपरमते, न प्राक् । अर्वागसौ कृत्वापि षडहं, पुनः षडहाय प्रयतत एव । न चासौ षडहः संस्थितो भवति, य-

ऽपि पुनस्तदर्थं प्रयतत एव। सर्वान्ते तु न पुनः प्रयतते, इत्यत सर्वान्ते कुर्यादित्येवं प्राप्तम्। एवं प्राप्ते ब्रूमः। आवृत्तिस्तु व्यवाये कालभेदात् स्यात्। आवृत्तिः रसभोजनस्य स्यात्, न सकृत् क्रिया। कुतः। निमित्तावृत्तेः, षडहसंस्था निमित्तम्। स च षडहः पुनरावर्त्तते। तस्मिन्नावर्त्तमाने संस्था निमित्तमावर्त्तते इत्यत आवर्त्तेत॥

यदुक्तं-सर्वान्ते हि असौ षडहादुपरतो भवति, न प्राक्। कृत्वाऽप्यसौ पुनस्तदर्थं प्रयतत एवेति। अत्राभिधीयते। यद्यप्यसौ पुनः प्रवर्त्तते, तथापि तं परिसमाप्य पुनरारभते। पुनश्च परिसमापयति, न यथावृत्ते षडहे। तत्र ह्यनुपरतस्य पृष्ठ्यस्यावृत्तिः। इह चतुर्भिरभिप्लवैर्व्यवधीयते। तेनोत्तरक्रियान्तरव्यवधानात् पृष्ठ्यगतो व्यापारः पर्य्यवसित इति गृह्यते विशेषः। न च तस्मिन्नपर्य्यवसिते क्रियान्तरं शक्यं कर्त्तुम्। उभयप्रकारश्चान्तः क्रियायाः, कृत्वा आदिमन्तिं, क्रियान्तरव्यवधानश्चेत्युक्तमेव। तस्मात् प्रतिमासं सव्यवधानः पृष्ठ्य आवर्त्तते। तस्मिंश्चावर्त्तमाने संस्थानिमित्तं भोजनमप्यावर्त्तते इति। अतः प्रतिमासमावर्त्तेत इति॥ ३१॥ गवामयने मध्वशनघृताशनयोः प्रतिमासमावृत्त्यधिकरणम्॥ ११॥

## मधु न दीक्षिता ब्रह्मचारित्वात्॥ ३२॥

द्वादशाहे श्रूयते, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति। तत्र संशयः। किं सत्रिभिर्मधु भक्षयितव्यं, न? इति। किं प्राप्तम्। नेति। कुतः। दीक्षिता हि ते ब्रह्मचारिणः। ब्रह्मचारिणाञ्च मधु प्रतिषिध्यते। मधु मांसञ्च वर्जयेदिति। तस्मान्न प्राश्नीयुरिति। ननु एतद्वचनं, सामान्यं प्रतिषेधं बाधेत न बाधते इति ब्रूमः। कथम्। यद्यबाधमानमेतद्, द्वादशाहेऽनर्थकं भवेत्, ततो बाधेत। न त्वनर्थकम्। कथम्। उभयविधं द्वादशाहमङ्गीकृत्योभयमाशितव्यं घृतं मधु वा तत्र सत्रिणां घृतप्राशनं भविष्यति, अहीने मधुनः प्राशनम् ऋत्विजाम्। एवमुभयं द्वादशाहसम्बद्धं भविष्यति विषयभेदेन। न च विरुद्धस्याचारो भविष्यतीति। तस्मान्न प्राश्नीयुरिति॥ ३२॥ पूर्व०॥

## प्राश्येत यज्ञार्थत्वात्॥ ३३॥

न चैतदस्ति, सत्रिभिर्मधु न भक्षयितव्यमिति। किन्तर्हि। भक्षयितव्यम्। कथम्। अविशेषेणोच्यते कर्तृमात्रस्य। उभयप्रकार-

मङ्गीकृत्य द्वादशाहं, संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वेति। उभयं विकल्पेन, न कर्तृव्यवस्थया । तस्मात् सत्रिणोऽपि मधु भक्षयेयु ॥ यत्तूक्तं, विषयभेदेनार्थवत्त्वाद् न बाधो न्याय्य, द्वादशाहाऽङ्गभावश्चैवं सति न विरोत्स्यत इति। अत्रोच्यते । षडहे अतिवृत्ते सत्रसम्बद्धेऽहीनसंबद्धे वा अविशेषेण मध्वशने घृताशने चोच्यमानेऽत्र केन व्यवस्थां ब्रूम'। विरोधेनेति चेद्, न। विषयभेदेन विधिप्रतिषेधयोः समाम्नात्। पुरुषाथन प्रतिषेधः। कर्माङ्गत्वेन विधानम्। यदि च प्रतिषेधबलीयस्त्वमिहाङ्गीक्रियते, वचनमनर्थकमेव स्यात्। पक्षेऽर्थवत्तेति चेद्, न । नानाविषयत्वात् । तुल्यार्थयोर्हि तुल्यविषययोर्विकल्पो भवति, न नानार्थयोः। नानार्थता चेहाधिगम्यते। कुतः। विधेः कर्मसाद्गुण्यप्रयोजनत्वात् । प्रतिषेधस्यापि नियमानुष्ठानात् पुरुषस्यादृष्टसिद्धिरिति। तस्मात् प्राश्नीयुरिति ॥ ३३ ॥ सिद्धान्तः ॥ द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम् ॥ १२ ॥

## मानसमहरन्तरं स्याद् भेदव्यपदेशात् ॥ ३४ ॥

द्वादशाहे श्रूयते, अनया त्वा पात्रेण समुद्ररसया प्रजापतये जुष्टं गृह्णामीति, प्राजापत्यं मनो ग्रहं गृह्णातीति। तत्र संशय । किं मानसमहर्द्वादशाहादहरन्तरम् ? उताहरङ्गमिति । तत्रेह कानिचिद्भेदकारणानि प्रतिभान्ति, तानि निराचिकीर्षन् आचार्य उपन्यस्यति, मानसमहरन्तरं स्यादिति। कुतः। भेदेन व्यपदेशात्। द्वादशाहाद् भेदेन व्यपदिश्यते। कथम्?। वाग्वै द्वादशाहो मनो मानसमिति द्वादशाहानन्तर्भूतं मानसं व्यपदिशति। वाग्वै द्वादशाह इति वाक्संस्तवात् । मनो मानसमिति च मन संस्तवात्। यथा वाङ्मनसयोर्भेदो वस्तुतोऽवगम्यते, एवमेतयोरपि द्वादशाहमानसयो । यतः पृथक्त्वे सति भेदेन व्यपदेशो भवति, नान्यथा । अतो भिद्यते एतदहरिति व्यपदेशाद्गम्यते ॥ ३४ ॥ पूर्व० ॥

## तेन च संस्तवात् ॥ ३५ ॥

इतश्च अहरन्तरामिति। कुतः । तेन च मानसेनाह्ना द्वादशाहः संस्तूयते। कथम्। विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि। तानि मानसेनैव आप्याययन्तीति। द्वादशास्य यानि गतरसानि छन्दांसि, तानि मानसेनाप्याययन्तीति ब्रुवन् भिन्नं द्वादशाहा-

दर्शयति । कथम् । संस्तवात् । न हि तेनैवात्मना तस्य संस्तुतिर्भवति । कुतः । अत्यन्तभेदात् स्तुतिस्तुत्ययो । न हि देवदत्तो देवदत्तेन स्तूयते । भिन्नैः शिरःपाण्यादिभिः संस्तूयते । तद्वदिहापि द्वादशाहो मानसेन स्तूयते इति संस्तवादूभेदोऽधिगम्यते इति ॥३५॥ युक्तिः

अहरन्ताश्च परेण चोदना ॥ ३६ ॥

इतश्च अहरन्तरमेवेति गम्यते । कुतः । द्वादशाहिकादहरन्तात् परेण चोद्यते, पत्नीः संयाज्य प्राञ्च उद्रत्य मानसाय प्रसर्पन्तीति । तद्यदि द्वादशाहिकस्याह्नो गुणविधिर्भवेदू द्वादशाहिकी पत्नीसंयाजान्तता स्यात् । अथ त्वहरन्तरं भवति, ततो द्वादशाहिकानामयं धर्मो, नान्यस्येति न दोषो भविष्यति । अतोऽपि वैलक्षण्यादू अहरन्तरसिद्धिरिति गम्यते ॥ ३६ ॥ युक्ति ॥

पक्षे सङ्ख्या सहस्रवत् ॥ ३७ ॥

परिचोदनापरिहारोऽयम् । किमियं परिचोदना । नन्वेवं द्वादशाह इति त्रयोदशसु अहःसु नोपपद्यते । अत्रोच्यते । यदा प्रमाणान्तरेण शब्द एतावति अर्थे प्रयुक्त इति गम्यते तदा सङ्ख्यासन्निकर्षात् त्रयोदशसु गुणवृत्त्या प्रयोग. सेत्स्यति । यथा अतिरात्रः सहस्रम् अहानि अतिरात्रेण सहस्रसाध्येन यजेतेति अधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः । तद्वदिहापि अधिके भविष्यति । अथ वा कर्मगणनामधेयमेतदू, द्वादशाह इति । यावन्ति कर्माण्यङ्गीकृत्य प्रयुक्तस्तावतां वाचक इति निश्चीयते । सर्वाणि प्रकरणादङ्गीकृत्य प्रयोगात् सर्वेषां वाचको भविष्यतीति न दोष ॥ ३७ ॥ आ०नि० ॥

अहरङ्गं वांऽशुवच्चोदनाभावात् ॥ ३८ ॥

दशमस्याह्नो गुणस्य विधिः स्यादू, न अहरन्तरचोदना । कुतः । अहरन्तरप्रकल्पकस्य वचनस्याभावात् । कथम् । एवं तावच्छ्रूयते । अनया त्वा पात्रेण समुद्रंरसया प्रजापतये जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णातीति, दशममहरङ्गीकृत्य ग्रहचोदनैषा । गृह्णातीति संस्कारविधानात् । न च सस्कारभेदे कर्मभेदो भवति । अचोदकाश्च संस्कारा इत्युक्तम् । यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र ( २ अ० १ पा० ३ अ० ) कर्म न प्रधानमिति । यथा अंश्वदाभ्यौ विधीयमानौ न कर्म भिन्तः । यस्मिन् कर्मणि भवतस्तत्रापरौ ग्रहाभ्यासाविति

विज्ञायेते, न कर्मान्तरे इति। यदि चाहरङ्गमेतद् भवति, न कर्मान्तरम् । एवमल्पीयसी एव अदृष्टानुमानप्रसङ्गकल्पना भविष्यति । प्रकृतसम्बन्धश्च, न अप्रकृतप्रक्रिया क्रियान्तरस्य। अतो न अहरन्तरम् । दशमे एव अहनि गुणविधिरिति ॥ ३८ ॥ सि० ॥

दशमविसर्गवचनाच्च ॥ ३९ ॥

इतश्च न अहरन्तरं, तत्रैव गुणविधि । कुत. । दशमविसर्गवचनात्। दशमविसर्गवचनं हि भवति। एष वै दशमस्याह्नो विसर्गो यन्मानसमिति । एष दशमस्य विसर्गोऽन्तो यन्मानसमिति ब्रुवन्, अन्तोऽयमन्तवतो दशमस्य, न स्वतन्त्रमतत् कर्मेति दर्शयति। तस्मादपि दशमस्याङ्गं, नार्थान्तरमिति गम्यते ॥ ३९ ॥

दशमेऽहन्निति च तद्गुणशास्त्रात् ॥ ४० ॥

इतश्चाङ्गम्। कथम् । एवं गुणशास्त्रं युक्तं भविष्यति, दशमेऽहनि मानसाय प्रसर्पन्तीति। दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्तीति दशमस्याह्न प्रधानभावेन निर्देशाद् ग्रहस्याधेयभावेन। तत्स्तोत्रस्य गुणोऽयं दशमस्य, नार्थान्तरमिति गम्यते ॥ ४० ॥

सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥

यदि च गुणोऽयम्, एवं सङ्ख्या समञ्जसा भविष्यति, द्वादशाह इति। इतरथा त्रयोदशसु द्वादशाह इत्यसमञ्जसं सङ्ख्यावचनं स्यात्। अवाच्यत्वात्। यदुक्तं, गुणवृत्त्या सहस्रसाध्यवद् भविष्यतीति। तदनुपपन्नम्। कुत । तत्र हि प्रमाणान्तरेण सङ्ख्येयावगमादधिके सहस्रशब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते। न त्विह सङ्ख्येयातिरिक्ते प्रमाणमस्ति, येन गौणीयं वृत्तिराश्रीयेत। यदप्येतद्, अनया त्वा पात्रेणेति वचनं, तदपि ग्रहसंस्कारविधानाद्दशमेऽहनि यागाभ्यासं विधत्ते, न कर्मान्तरमिति समधिगतम्। एवञ्चेद्, नैतत् प्रत्यक्षवचनमहरन्तरप्रकल्पकं, नान्यत् प्रमाणान्तरं प्रापकं, येन संख्येयेऽतिरिक्ते शब्दप्रयोग इत्यध्यवस्यामः। तस्माद् नेह गौण्या वृत्त्या प्रयोग इति ॥

यदपि, कर्मगणनामधेयत्वात् प्रकरणवशेन तावतामङ्गीकरणाद् नामधेयरूपेण चावृत्तिर्भविष्यतीति। तदपि न युक्तम् । सत्यं कर्मगणनामधेयमेतत्, न त्वयथार्थसमन्वयेन। द्वादशैतानि कर्माण्यहोभि

परिमितानि एकत्र समाहृतानीत्यनेन रूपेण तत्कर्मगणस्य नामधेयं, न वर्णानुपूर्व्यमात्रेणेति । तथा हि सर्वेष्वेव कर्मनामधेयेषु अर्थसमन्वयेनानुवादभूतो नामशब्दो वर्त्तते, न लौकिकार्थतिरस्कारेण परिभाषामात्रेण वृद्धिगुणवत् । यथा, अग्निहोत्रं, श्येन., ज्योतिष्टोम इति । एवं द्वादशाह इत्यर्थान्वयेन नामधेयं, न अर्थाभावेनेति । तस्मादपरिचोदनैषा ॥ ४१ ॥

**पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥**

इतश्चाहरङ्गमिति विज्ञायते । कुत । पश्वतिरेकेण एकस्यातिरेकं दर्शयति, न द्वयो । कथम् । य पशुरतिरिच्येत स ऐन्द्राग्न कार्य इति एकादशिनीं द्वादशाहे विधाय विहृतायामेकस्यातिरेकं दर्शयति। तत्र तावदतिरिच्यते, एको न भवति । कथम् । एकादश पशव, द्वादश अहानि । एकस्यातिरेकं ब्रुवन् द्वादशैतानि अहानीति गमयति। यदि त्रयोदश अहानि स्युर्द्वयोरभाव स्याद्, नैकस्येति । तस्मादप्यहरङ्ग न कर्मान्तरमिति ॥ ४२ ॥ युक्ति. ॥

**स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं व्रतवत् ॥ ४३ ॥**

अस्मिन् सूत्रे द्वयो सूत्रयो परिहार उच्यते । यदुक्तं, मानसमहरन्तरं भेदेन व्यपदेशात् । तेन च मानसेन संस्तव द् भेद. । न हि आत्मनैव आत्मा संस्तूयते इति । अत्राभिधीयते । नैतद् विप्रतिषिद्धम् । अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा । यथा महाव्रतधर्मेण संवत्सरसत्रस्य । यन्ति वा एते मिथुनाद् ये सवत्सरमुपयन्ति । अन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुना न यन्तीति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानुजिघृक्षन् समुदायस्यावयवधर्मेण स्तुतिं दर्शयति । लोकेऽप्यवयवधर्मेणावयवी संस्तूयत एवेति । यथा दीर्घै केशैः शोभनो देवदत्त इति । तद्वदिहापि द्वादशाह संस्ताविष्यते इति न दोष ॥ ४३ ॥

**वचनादतदन्तत्वम् ॥ ४४ ॥**

यदुक्तं- यद्यहरन्तरमेतद्, एवं द्वादशाहधर्मवैलक्षण्यं मानसान्तता युक्ता भविष्यति, न तदङ्गत्वे, पत्नीसंयाजान्तता भवेदिति । अत्र वदामः । वचनादतदन्तत्वं भविष्यति, द्वादशाहिकानामह्नां सामान्येन पत्नीसंयाजान्तता, विशेषेण तु दशमस्याह्नो मानसान्तता

उच्यते । पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्तीति । नास्ति वचनस्यातिभारः । तस्मादप्यदोषः । अतो दशमस्याह्नो मानसमङ्गं न स्वतन्त्रमिति ॥४४॥ आ० नि०॥ मानसस्य दशमाहाङ्गताऽधिकरणम् ॥ १३ ॥

## सत्रमेकः प्रकृतिवत् ॥ ४५ ॥

इह द्वादशाहप्रभृतीनि सत्राणि उदाहरणम् । तत्र संशयः । किं सत्रमेकः प्रयुञ्जीत, उत बहवः ? । किं प्राप्तम् । एकः । कुतः । प्रकृतिवत् । ज्योतिष्टोमे एकः कर्त्ता । तत्प्रकृतित्वाच्चोदकानुग्रहाय सत्रमेक एव प्रयुञ्जीतेति । ननु बहवः श्रूयन्ते, य एवंविद्वांस सत्रमासते, य एवंविद्वांसः सत्रमुपयन्तीति । उच्यते । कामिनां सत्रं विधीयते । ते च परस्परनिरपेक्षा बहव एव । ते यद्येकैकश्येनापि कुर्वन्ति तथापि सत्रक्रियामभिसमीक्ष्य बहव एव कुर्वन्तीति बहुवचनं भविष्यति । यथा लोके पृथक्त्वेनापि कुर्वाणानां बहुवचनं दृश्यते, देवश्चेद् वर्षेद् बहवः कृषिं कुर्य्युः, सस्यं चेत् सम्पद्येत बहवो ब्राह्मणा यजेरन्निति । तथा वेदेऽपि प्रयोगदर्शनं, सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्निति । एवमत्रापि, आसीरन्, उपेयुरिति बहुवचनं भविष्यतीति ॥ ४५ ॥ पूर्व० ॥

## वचनात्तु बहूनां स्यात् ॥ ४६ ॥

नैतदस्ति, एको यजेत, न बहव इति । किन्तर्हि । बहवो यजेरन् । कुतः । वचनात् । वचनमिदं भवति । आसीरन् उपेयुरिति । बहुत्वसम्बद्धः प्रयोगो विधीयते । स प्रत्यक्षवचनाच्चोदकप्राप्तामेककर्तृकतां बाधेतेति ॥ ४६ ॥ सि० ॥

## अपदेशः स्यादितिचेत् ॥ ४७ ॥

यदुक्तं, सामान्यक्रियासम्बन्धमभिसमीक्ष्य लोकवद् बहुवचनशब्दप्रयोगो भविष्यति । यथा, कृषिं कुर्युरिति । वेदेऽपि दर्शनं, पृष्ठशमनीयेन यजेरन्निति बहुवचनं भवति, एवमत्रापीति । तत् परिहर्त्तव्यम् ॥ ४७ ॥ आ० ॥

## नैकव्यपदेशात् ॥ ४८ ॥

नैतत् सत्रे उपपद्यते, एककर्तृकमिति । कुतः । एकव्यपदेशात् । कथम् । एवमाह । एष वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति । एक एव

यजेतेति, सत्रमपोद्य अन्यस्यैककर्तृकतां विदधत् तस्य बहुकर्तृकतां गमयति । यत्त लोकवदिति । तन्न युक्तम् । लोकेऽन्यतः प्रवृत्तस्यार्थस्य अनुवादभूतः शब्द उच्चार्य्यमाणः सामान्याक्रियासम्बन्धाभिसमीक्षया उच्चरित इति गम्यते । यदपि उदवसानीयवदिति तदपि उदवसानीये युक्तम् । तत्र हि भिन्नानि उदवसानानि उपलक्ष्य क्रियामात्रं विधीयते, तद्बहुत्वञ्च समानकर्तृकत्वादेव प्राप्तमनूद्यत इत्युक्तमेव । इह तु शब्दपूर्विका क्रियाप्रवृत्तिः । शब्दश्च बहुत्वविशिष्टं प्रयोगं सत्रिभिरभिसम्बन्धयति । अतः शब्दप्रामाण्यादुपादीयमानायां क्रियाया बहुत्व विवक्षितमिति बहवः प्रयुञ्जीरन्निति ॥४८॥ आ० नि०

## सन्निवापञ्च दर्शयति ॥ ४९ ॥

इतश्च बहव एव यजेरन्निति । कुतः । सन्निवापदर्शनात् । बहूनामग्नीनामेकत्र सन्निवापमाह । पञ्चभिः पशुभिर्यक्ष्यमाणः सन्निवपेरन्, सावित्राणि होष्यन्तः सन्निवपेरन्निति । यदि संहत्य कुर्वन्ति, एवमग्नीनां सन्निवाप उपपद्यते । अथ त्वेकैकश्येन कुर्युः, सन्निवापदर्शनं नोपपद्यते । तस्मादपि गम्यते बहूनां सत्रमिति ॥ ४९ ॥

## बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥ ५० ॥

इतश्च पश्यामः, सम्भूय प्रयोग इति । कुतः ? । एवं श्रूयते । यो वै बहूनां यजमानानां गृहपतिः, स सत्रस्य प्रत्येता, स हि भूयिष्ठाम् ऋद्धिमाप्नोतीति । एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं ब्रुवन् बहूनां सहप्रयोगं दर्शयति । इतरथा एकस्मिन् यजमाने कर्त्तुरेकत्वात् फलैकत्वाच्च सामान्यविशेषभावानुपपत्तेः फलविशेषवचनं व्यर्थं स्यात् । अस्ति तु फलविशेषवचनम् । तस्मादपि गम्यते बहव एव यजेरन्निति ॥ ५० ॥ युक्तिः ॥ सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

## अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥

इह सत्राण्येवोदाहरणम् । तेषु बहवः कर्त्तार इत्युक्तम् । इदमिदानीं सन्दिह्यते । किं त एव सत्रिण ऋत्विजः, उतान्ये उपादातव्या इति । किं प्राप्तम् । अन्ये उपादातव्या ऋत्विजः । कुतः । ज्योतिष्टोमे हि प्रकृतौ अन्ये कर्त्तार उपादेयाः समाम्नाताः । तद्वदिहापि सत्रिभिः प्रकृतिवत् कुर्वाणैश्चोदकानुग्रहाय अन्ये एवोपादेया इति ।

एवं प्रकृतिवत् कृतं भविष्यतीति ॥ ५१ ॥ पूर्व० ॥

अपि वा यजमानाः स्युर्ऋत्विजामभिधान-
संयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥

नैतदस्ति, अन्ये ऋत्विज इति । यजमाना एव ऋत्विजः स्युः । कुतः । ऋत्विजामभिधानसंयोगात् । यजमानसंस्कारो हि दीक्षा-पदार्थोऽध्वर्य्वादिसमाख्यासंयोगेन कर्मनिमित्तेन प्रसिद्धिरूपेणाऽभिधाय विधीयमानो यजमानानां तेषामाध्वर्य्यवादिसम्बन्धमवबोधयति । कथम् । यदि ते तान् पदार्थान् कुर्वन्ति एवं ते नैमात्तिकीभिराख्याभिर्युज्यन्ते, नान्यथेति । अतोऽवगम्यते, अस्ति तैः पदार्थैरभिसम्बन्ध इति । किं तद्वचनम् । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ततो होतारं तत उद्गातारमित्युपक्रम्य सर्वर्त्विजः उपक्रान्ता दीक्षासम्बन्धेन । तस्माद्गम्यते यजमाना एव आर्त्विज्ये स्युर्नान्ये इति ॥ ५२ ॥ सि० ॥

कर्तृसंस्कारो वचनादाधातृवदितिचेत् ॥ ५३ ॥

इति चेद् मन्यसे, यजमाना एव ऋत्विजः स्युरिति । तन्न युक्तम् । प्रकृतौ हि यजमानादन्ये प्रकृतिवदिहापि यजमानेभ्योऽन्यैरेव भवितव्यमिति पूर्व एव पक्षो व्यपदिश्यते । केवलं तु पूर्वोक्तस्य परिहारो वक्तव्यः । स उच्यते । कर्तृसंस्कारो वचनादाधातृवद् भविष्यति । कथम् । एतावदेव श्रूयते, अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति । तद् यदि भिन्ना अपि कर्त्तारो भवन्ति तान् आत्मीयाभिः संज्ञाभिरुपलक्ष्य वचनसामर्थ्याद् दीक्षासंस्कारस्तेषां विधीयते इति नानुपपन्नम् । आधातृवत् । यथाऽन्यत्राप्यृत्विजां संस्कारो विधीयते आधाने, यस्तं श्वोऽग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतञ्चरेदिति । न मांसमश्नीयान्न स्त्रियमुपेयादिति वचनादध्वर्योर्नियमो विधीयते । तथा ज्योतिष्टोमे सर्वर्त्विज उपवसन्तीति ऋत्विजामुपवासो विधीयते । तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति ॥ ५३ ॥ आ० ॥

स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥

नैतदस्ति, अन्ये ऋत्विज इति । किन्तर्हि यजमाना एव ऋत्वि-

ज स्यु । कुत । एतस्मिन् संशये, त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्ना ? इति । त एवेति न्याय्यम् । उक्तोऽत्र न्याय । अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगादिति । अनेन न्यायेन पश्यामः, ते एवेति । यदुक्तम्, आधानवत्तत्संस्कार ऋत्विजां भविष्यतीति । तदनुपपन्नम् । कथम् ? । अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते । प्रकृतिवद्वा प्राकृतकार्यका सती यजमानबहुत्वात् क्रमपरतया सङ्कीर्त्येत । प्राप्तायाः सङ्कीर्त्तनं लघीयः । क्रममात्रविधानात् । ऋत्विक्संस्कारे सति अदृष्टकल्पना, अधिकार्थविधानञ्च । तस्मात् प्राप्तायाश्चोदकेन सङ्कीर्त्तनं, न अप्राप्तविधानमिति । यत्तु, यथा ऋत्विजामुपवासविधानम्, आधातुश्च व्रतविधानं, तद्वदिहापीति । तत्र युक्तम् । विस्पष्टं वचनम् । ऋत्विज उपवसन्ति, स तां रात्रिं व्रतञ्चरेदिति । न च तत्रापूर्वत्वात् प्राप्त्याशङ्का । तस्मात् तत्र विधानम् ॥ ५४ ॥ आ० नि० ॥

**स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥**

परिचोदनासूत्रमेतत् । अथ कस्माद् न स्वाम्याख्या एता अध्वर्य्वाद्या भवन्ति गृहपतिवत् ? इति । किमेवं भविष्यति । एवं चोदकप्राप्ताऽन्यकर्तृकता न बाधिता भविष्यति । अध्वर्य्वाद्याश्च समाख्या गृहपतिवद् यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति स्थिते अर्थे सूत्रेण परिचोदयति ॥ ५५ ॥ आ० ॥

**न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥**

नैतद् युक्तं, स्वाम्याख्या एता गृहपतिवदिति । कुतः । प्रसिद्धग्रहणत्वात् । आध्वर्य्यवादिकर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु. यजमानानामाभिः क्रियाभिरसंयुक्तानां भविष्यन्तीत्यनुपपन्नम् । कथं गृहपतिरित्याख्या ? । उच्यते । असंयुक्तस्य ऋत्विग्धर्मेण स्वामिन एवाख्या गृहपतिरिति । अपि चावयवप्रसिद्ध्यापि गृहपतिशब्दस्य पतिर्वाच्य इति यजमानाभिधेयता उपपत्स्यते । प्रकृतावपि स्वामिनि चायं प्रयुक्तः, गृहपतिर्यजतेति । न त्वध्वर्य्वाद्या स्वामिनि केनचिदपि प्रकारेण तत्क्रियासंयुक्ता उपपद्यन्ते, इत्यन्यक्रियासम्बन्धात् ता भिद्यन्ते इति । बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते ॥

इतश्च आर्त्विजेषु यजमाना एव । कुतः । एवमाह । यो वै बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाप्नोतीति एकस्मिन् गृहपतिरितिविशेषवचनमसमानत्वे सति उपपद्यते, नान्यथा । यदि सर्वे गृहपतिकर्म कुर्य्युर्न कर्मान्तरं, ततो विशेषाभावाद् गृहपतौ विशेषवचनानुपपत्तिः स्यात् । अथ तु इतरे उभयं कुर्वन्ति, गृहपतिर्याजमानमेव, ततो विशेषवचनं युक्तं भवति । तस्माद्विशेषवचनात् ते एव ऋत्विज इति गम्यते ॥ ५६ ॥ आ० नि० ॥

दीक्षितादीक्षितव्यपदेशश्च नोपपद्यते अर्थयोर्नित्यभावित्वात् ॥ ५७ ॥

इतश्च स्वयङ्कर्तृकाणि सत्राणीत्यवगम्यते । कुतः । दीक्षितादीक्षितव्यपदेशात् । एवमाह । दीक्षिताः सत्रैर्यजन्ते, अदीक्षिता अहीनैर्यजन्तीति । एतौ च नियतावेवार्थौ । दीक्षिता स्वार्थे यजन्ते, याजकाश्च अपि अदीक्षिता याजयन्तीति । अहीने सत्रे चैतयोरर्थयोर्विशेषाभावाद्व्यपदेशानुपपत्तिः स्यात् । अथ तु सत्रे यावत् कार्यं तत् सर्वं दीक्षितैरेव, क्रियते अहीने चादीक्षितैः, ततो व्यपदेश उपपद्यते, नान्यथा । अतो व्यपदेशादवगच्छामः, अस्ति सत्रे स्वयङ्कर्तृत्वमिति ॥ ५७

अदक्षिणत्वाच्च ॥ ५८ ॥

इतश्च स्वयंकर्तृकं सत्रम् । कुतः । अदक्षिणत्वात् । अदक्षिणानि सत्राणि आहुः । न ह्यत्र गौर्दीयते न वासो न हिरण्यमिति दक्षिणाभावदर्शनं स्वयंकर्तृकत्वे उपपद्यते, नान्यथा । परकर्तृकत्वे हि दक्षिणाभावो नोपपद्यते । न हि कश्चिदृते स्वार्थात् परार्थे परः प्रवर्त्तते । तस्मादपि गम्यते स्वयंकर्तृकाणि सत्राणीति ॥ ५८ ॥ सिद्धान्ते युक्तिः ॥ सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् ॥ १५ ॥

द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ५९ ॥

द्वादशाह एवोदाहरणम् । उक्तश्च पूर्वं सत्रमहीनश्च द्वादशाह इति । तस्येदानीं द्विप्रकारस्य लक्षणमन्वाख्यायते, एवँल्लक्षणको द्वादशाहः सत्रम्, एवँल्लक्षणकोऽहीन इति । तद्विवेकज्ञानार्थमिदमुच्यते, आसनोपायिचोदनया यजमानबहुत्वेन च सत्रत्वमवगम्यते ।

एते चोदने आसते, उपयन्तीति हि नित्यं सत्रसम्बद्धे दृष्टे । य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति । यजमानबहुत्वेन च, चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्निति । तत्सहचरितलिङ्गदर्शनात् । सहचरिते प्रत्ययो भवतीति ॥ ५९ ॥

## यजतिचोदनादहीनत्वं स्वामिनां चाऽस्थितपरिमाणत्वात् ॥ ६० ॥

अथ किँल्लक्षणकोऽहीन ? इति । तदुच्यते । यत्र यजतिचोदना, अनियतञ्च कर्तृपरिमाणं तत्र अहीन इति निश्चीयते । अहीनानां यजतिचोदनया विधानं, द्विरात्रेण यजेतेत्येवमादि । कर्तृपरिमाणञ्च एषामनियतम् । सत्राणान्तु नियतं परिमाणं बहवः । एवँल्लक्षणस्य च लक्षणे लक्षितं प्रयोजनं नान्यन्मृग्यमिति ॥ ६० ॥ सिद्धान्तः ॥ सत्राहीनयोर्विवेकाधिकरणम् ॥ १६ ॥

## अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदः स्यात् ॥ ६१ ॥

अस्ति पौण्डरीक एकादशरात्र, पौण्डरीकेण एकादशरात्रेण स्वाराज्यकामो यजेतेति । तत्र श्रूयते । अयुतं पौण्डरीके दद्यादश्वसहस्रमेकादशमिति । तत्र सन्दिह्यते । किं प्रत्यहमयुतम् अश्वसहस्रञ्च दातव्यम्?उतैकमेवायुतमश्वसहस्रञ्च सकृदिति । किं प्राप्तम् । अहीने दक्षिणाशास्त्रं प्रत्यहं भिद्येत । कुतः । गुणत्वाद् दक्षिणाया, प्रधानत्वाच्चाह्नाम् । समुदायशब्देन समुदायीनि अहानि उपलक्ष्य दक्षिणा गुणो विधीयमानः प्रतिप्रधानं भिद्येत । यथा गणाय स्नानम्, उपलेपनं वा विधीयमानं गणिनां भवति । एवमत्रापि द्रष्टव्यम् । प्रतिकर्मावमायी च चोदक एवमनुग्रहीष्यतेदक्षिणाभूयस्त्वाच्च फलभूयस्त्वं भविष्यति । अतोऽवगम्यते भेद इति॥६१॥ पूर्व०

## सर्वस्य वैककर्म्यात् ॥ ६२ ॥

न चैतदस्ति, प्रत्यहं दक्षिणाभेद इति । एकमेवायुतं सहस्रं च दीयते । कुतः । एककर्म्यात् । एकं हि दक्षिणानां कार्यम् । ऋत्विगानमनम् । आनतिश्च साङ्गक्रतुनिर्वृत्तये कृतेति । अन्तरा न तया प्रयोजनमस्तीति न भूयः क्रियते । यत्तु अङ्गभूयस्त्वेन फलभूयस्त्वमिति

तद् अङ्गत्वे प्रज्ञाते भवति, नान्यथा । समुदायाङ्गञ्च दक्षिणा, नावयवाङ्गमित्युक्तम् । अथ यदुक्तं, प्रतिकर्मावसायी चोदकः प्रतिकर्म प्रापयतीति । प्रत्यक्षवचनात् समुदायाङ्गीकरणेन च दक्षिणानां विधानमिति चोदको बाधित इति न दोषः ॥ ६२ ॥ आ० ॥

**पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥ ६३ ॥**

न चैतत्, सकृदेव दातव्यमिति । किं तर्हि । भेदेन । कुतः । प्रत्यहं दक्षिणानां प्राप्तानामयं विशेष उच्यमानः प्रत्यहमेव भवितुमर्हतीति । पृषदाज्यवत् । यथा पृषदाज्येनानुयाजान् यजतीति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते, एवमत्रापि द्रष्टव्यमिति ॥६३॥ आ० नि० ॥

**ज्योतिष्टोमे तु दक्षिणाः सर्वासामेककर्मत्वात् प्रकृतिवत्तस्मान्नासां विकारः स्यात् ॥ ६४ ॥**

न चैतदस्ति, भेद इति । किन्तर्हि । तन्त्रेण सकृदेव । कथम् । ज्योतिष्टोमे हि दक्षिणा साङ्गं कर्मराशिमङ्गीकृत्य दीयन्ते, तथाभूतानाञ्च तासां समुदायानत्यर्थानां प्राप्तानामयं विशेष उच्यते । सहस्रमयुतमिति विशेष उच्यमानो या इह दक्षिणा दीयन्ते तासामयं विकार इति गमयति । एकत्वम् आनतेर्न वारयति । तस्मात् सकृद् दातव्यमिति । यत्तु, अनुयाजवदिति । युक्तम् । यद् अनुयाजेषु द्रव्यस्य भेद इति । यागे हि द्रव्यं गुणभूतं चोद्यते । तद् यागानां भेदादन्यस्य क्रियमाणं नान्यस्योपकरोतीति भिद्यते । इह त्वेका आनतिरित्युक्तम् । तस्माद्विषमो दृष्टान्त इति ॥ ६४ ॥ आ० ॥

**द्वादशाहे वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां संख्याविकारः स्यात् ॥ ६५ ॥**

न चैतदस्ति, सकृद्दातव्यमिति । प्रत्यहमयं विशेषो भिद्यते । कुतः । द्वादशाहे हि प्रत्यक्षं वचनम्, अन्वहं द्वादशशतं ददातीति । पौण्डरीकश्च द्वादशाहप्रकृतिः । तस्मात् पौण्डरीके प्रत्यहं चोदकप्राप्त्या प्रसक्तानां दक्षिणानामयं विशेष उच्यमानस्तथैव कर्मावयवसम्बद्धानां विकार इति गम्यते । ततो भेदेन दक्षिणानां विशेष इति ॥ ६५ ॥ आ० नि० ॥

**परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥६६॥**

न चैतदस्ति, दक्षिणाभेद इति । किन्तर्हि । सकृदेव दक्षिणा दीयेतेति । कुतः । परिक्रयाविभागात् । समस्ता दक्षिणा विक्रियेरन् । कृत्स्नं हि क्रतुमङ्गीकृत्य दक्षिणा विधीयन्ते । कथम् । तावत पुरुषार्थत्वात् । यत् फलवत्, तत् पुरुषस्य चिकीर्षितम् । तच्च कुर्वाणस्य, सहायान् उपाददानस्यायं विशेष उच्यते परिक्रय. । न चावयवः फलवान्, समुदायात् फलनिष्पत्तेः । समुदायं चाङ्गीकृत्य परिक्रयः क्रियमाण , आ समुदायनिर्वृत्तेः परिक्रयः कृत इति अन्तरा न भूयः क्रियते ॥ अपि च । पौण्डरीकशब्दसंयोगेन परिक्रयविशेष उच्यमानस्तच्छब्दवाच्यस्यैव भवतीति गम्यते । समुदायश्च पौण्डरीकशब्दवाच्यो, नावयव. । स हि समुदायशब्देन लक्ष्यते । तत्र लक्षणैव दोष । असम्भवे हि लक्षणा आश्रीयते । न चेहासम्भव । अत समुदायमङ्गीकृत्य सकृदेव ऋत्विजो व्रियेरन्निति । तस्मात् सकृत् परिक्रय इति । सकृद्दाने च प्रयोगवचनानुग्रहः । प्रयोगप्राशुभावाच्च महाविषयता शास्त्रस्येति । तस्मादप्येतदेव न्याय्यमिति ॥ ६६ ॥ सि०

**भेदस्तु गुणसंयोगात् ॥ ६७ ॥**

यदुक्तं, द्वादशाहप्रकृतित्वात् पौण्डरीकस्य । तत्र च द्वादशाहे दक्षिणाभेदात् तथाभूताया एवेह विशेष उच्यत इति । तत् परिहर्त्तव्यम् । अत्रोच्यते । तत्राप्येकत्वात् क्रतोः, एक एव परिक्रय । भेदस्तु वचनात् सुत्यासम्बन्धप्रयोजनो दक्षिणासंस्कारप्रयोजनश्च, न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यत इति ॥ ६७ ॥ ॥ आ० नि० ॥ पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् । १७ ॥

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वशेषत्वात् ॥ ६८ ॥**

पौण्डरीक एवोदाहरणम् । तत्रैतत्समधिगतं, सकृदेव परिक्रय इति । अस्ति तु प्रकृतौ, माध्यन्दिने सवने दक्षिणा नीयन्ते इति । तत्र संशयः । किं सर्वासां कार्त्स्न्येन प्रत्यहं नयनम्, उत सकृन्नयनम्, अथ वा प्रविभज्य नयनम् ? इति । किं प्राप्तम् ?, प्रत्यहं सर्वासां संस्कार. स्यात् । कुतः ? । प्रकृतिवत् । प्रकृतौ हि सकला दक्षिणाः तस्मिन् काले संस्कृताः । इहापि तद्वदेव सकलाः संस्कर्त्तव्या इति ।

कथम्। अह्नां प्राधान्यात्। तद्गुणभावाच्च दक्षिणानाम्। सर्वा एताः सर्वेषामह्नां शेषभूताः। शेषभूतस्य चार्थस्य यः संस्कारः, स तेन तेन अह्ना प्रयुज्यत इति। तस्मात् प्रत्यहं सर्वसंस्कारः॥ ६८॥

## एकार्थत्वान्नेति चेत्॥ ६९॥

न चैतदस्ति, प्रत्यहं सर्वसंस्कार इति। किन्तर्हि?। सकृदेव संस्कारः स्यात्। कुतः। एकार्थत्वाद्दक्षिणानाम्। एकं कार्यमानमनं, तासाञ्च नयनादिसंस्कारसंस्कृतानां प्रत्यर्पणं कार्यम्। एकस्मिन्नपि च अहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतश्चोदनाऽर्थ इति भूयः संस्कारेण प्रयोजनं नास्ति। तस्मात् सकृत् संस्क्रियेरन्निति॥ ६९॥

## स्यादुत्पत्तौ कालभेदात्॥ ७०॥

नचैतदस्ति, सकृत्संस्कार इति। किन्तर्हि। प्रत्यहम्। कुतः। उत्पत्तौ कालभेदात्। उत्पत्तौ दक्षिणानां विशिष्टकालसम्बन्धः श्रूयते। तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते इति। सर्वाश्चैताः सर्वेषामह्नां शेषभूताः। तेषाञ्चाह्नां माध्यन्दिनानि सवनानि भिद्यन्ते। तत्र च अगम्यमानविशेषत्वाद् यस्य माध्यन्दिने सवने न संस्क्रियेरन्, तस्यैव संस्कारलोपः स्यात्। प्रयोगभेदात्। न च अन्यत्र संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति। तस्माद् भेदेन संस्क्रियेरन्निति॥ ७०॥ पूर्व०नि०॥

## विभज्य तु संस्कारवचनाद् द्वादशाहवत्॥ ७१॥

न चैतदस्ति, समस्तानां प्रत्यहं संस्कार इति। किन्तर्हि। विभज्य संस्क्रियेरन्। कुतः। वचनात्। द्वादशाहे प्रत्यहं नयनादिसंस्कारो वचनात् क्रियते। अन्वहं द्वादशशतं ददातीति। पौण्डरीकश्च द्वादशाहप्रकृतिः, न ज्योतिष्टोमप्रकृतिः। तस्मात् परिक्रयैकत्वेऽपि सति वचनाद् भेदेन संस्कार इति॥ ७१॥ ॥ सिद्धान्तः॥
पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम्॥ १८॥

## लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत्॥ ७२॥

क्वचित् कर्मविशेषे श्रूयते, मनोत्र्यृचः सामिधेन्यो भवन्तीति, तत्र संशयः। किं यावत्यो मनुलिङ्गा ऋचः, ताः सर्वा दाशतयीभ्य

आनीय सामिधेनीषु विनियोक्तव्याः ? उत काश्चिदेव, न सर्वा इति। किं प्राप्तम् । सर्वा एवंलिङ्गा उपादेयाः । कुतः । लिङ्गस्य सर्वगामित्वात् । इहैतावच्छ्रूयते मनोर्ऋचः सामिधेन्यो भवन्तीति । मनुशब्दसंयोगो हि लक्षणम् ऋचामुपादीयमानानाम् । मनुसम्बन्धेन च शब्द उपलक्षयन् यावतीषु सम्भवेत्, तावतीरविशेषाच्छक्नोत्युपलक्षयितुम् । एतच्च वचनं लिङ्गमात्रसम्बन्धेन विनियोजकं, न इयत्तापरिच्छिन्नानां विशेषकम् । तस्मादविशेषात् सर्वास्तल्लिङ्गवत्य उपादेयाः । आग्नेयवत् । यथा, ऋजीषाणामाग्नेयेन संवत्सरमुपधाने, आसीन सूक्तेन सूक्तस्य अविच्छेदायेति आग्नेयेन सूक्तेनेत्युक्तम् । यावन्ति आग्नेयानि सूक्तानि दाशतयानि, सर्वैरिष्टका उपधीयन्ते । एवमिहापि मनुलिङ्गाभिः सामिधेनीकार्यं कर्त्तव्यमिति । यथा वा अहर्गणे ऋजीषमप्सु प्रास्यतीति, सर्वेषामह्नां यद् ऋजीषम् अविशेषात् तत् सर्वं प्रास्यते । तद्वदिहाप्यविशेषात् सर्वासामुपादानमिति ॥ ७२ ॥ पूर्व० ॥

**यावदर्थं वाऽर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥**

न चैतदस्ति, सर्वासां मनुलिङ्गानां दाशतयीनामागम इति । किन्तर्हि । यावदर्थमुपादेया इति । कुतः । अर्थशेषत्वात् । कार्यशेषभावेन हि सामिधेनीनामुपादानम् । तच्च कार्यमल्पाभिरपि सिद्ध्यतीति । सिद्धत्वात् कार्य्यस्य । यद्यपि लक्षिताः सन्ति अपरा ऋचः, तथापि प्रयोजनाभावाद् नैवोपादीयन्ते इति ॥ ननु कार्यशेषभावः सर्वत्र वाचनिकः, इहापि प्रत्यक्षवचनाल्लिङ्गपरिच्छिन्ना सामिधेन्यो विधीयन्ते इति सर्वासां विधानं भविष्यतीति । अत्राभिधीयते । सत्यं सर्वत्र वाचनिकः शेषभाव, न त्विह सामिधेन्यो विधीयन्ते । किन्तर्हि । चोदकप्राप्तानामियत्तापरिच्छिन्नानां केवलमनेन विशेष उच्यते, मनोर्ऋच इति । सोऽयं विशेष उच्यमानो यावत्य उपन्यस्ताः, ता एव विशेष्य कृतार्थत्वाद् व्यावर्त्तन्ते, नापरा अपि तल्लिङ्गाः प्रसज्ज्यन्ते । तस्माल्लिङ्गवतीनां नियतानामुपादानं न सर्वासाम् । इति । न च लिङ्गवतीनां भावाद् गुणानुरोधेन प्रधानावृत्तिर्न्याय्या । एवञ्च लाघवं प्रयोगप्राशुभावश्च भविष्यतीति । अपि चास्मिन् पक्षे

लिङ्गमपि समर्थमेव। कथम् । लिङ्गं हि लक्षणत्वेन सामिधेनीनामुच्यते । तत्र यद्यपि न तल्लिङ्गाः सर्वा उपादीयन्ते, यास्त्विह प्रयुज्यन्ते तास्तल्लिङ्गा एव, नान्यलिङ्गाः, तथापि लिङ्गमनुगृहीतमेव, न बाधितमिति । तस्माद् यावदर्थमुपादानं न सर्वासामिति ॥७३॥ सि०॥

## आग्नेये कृत्स्नविधिः ॥ ७४ ॥

यदुक्तं, यथा आग्नेयैः सूक्तैरिष्टका उपदधाति इत्युक्ते सर्वाणि लिङ्गविशिष्टानि उपादीयन्ते, न कानिचित् । एवमत्रापि द्रष्टव्यमिति । तत् परिहर्त्तव्यम् । अत्रोच्यते । युक्तमाग्नेयेषु कृत्स्नविधानम् । कुतः । इष्टकाबहुत्वात्, प्रतिसूक्तमुपधातीति वचनाद् बह्वीनामुपधेयानां सूक्तालपत्वात् कार्त्स्न्येनोपादानमविरुद्धम् । इह तु इयत्तापरिमितानां विशेष उच्यते, इत्युपदिष्टो हेतु । तस्माद्यमिह अदृष्टान्त इति ॥ ७४ ॥

## ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिःस्यात्॥७५

यदप्युक्तम्, अहर्गणे यथा ऋजीषस्य कृत्स्नस्याप्सु प्राशनम्, एवमत्रापि अविशेषात् सर्वासामुपादानमिति । तत् परिहर्त्तव्यम् । अत्रोच्यते । ऋजीषस्य प्रधानत्वाद् युक्तम्, ऋजीषस्य अविशेषात् प्रतिपत्तिरियम् अभिधीयते । सा सर्वस्य ऋजीषस्य स्यात् । यस्य न क्रियेत, तस्य संस्कारपरिलोपः स्यात् । तस्मात् सर्वेषामह्नां यद् ऋजीषं, तत् सर्वं प्रास्यते । इह तु अर्थशेषत्वादित्युपदिष्टो हेतुः । तस्माद् विषममेतद् ऋजीषेणेति ॥ ७५ ॥ आ० नि० ॥ मनोर्ऋचं इत्यनेन यावदर्थम् ऋचामुपादानाधिकरणम् ॥ १९ ॥

## वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥

ज्योतिष्टोमे मानोपावहरणे समाम्नाते । तत्र संशय । किं यत्रक्वचिद् मानं, येन केनचिदुपावहरणं कार्यम्, उत, वाससि मानं वाससा चोपावहरणमिति । किं प्राप्तम् । अर्थाद् यत्र क्वचिन्मानं, येन केनचिदुपावहरणम् । एवञ्च अनियमे लाघवं प्रयोगप्राशुभावश्च भविष्यतीति ॥ एवं प्राप्ते ब्रूमः । वाससि मानं वाससा चोपावहरणञ्च कार्य्यम् । कुतः ? । वचनात् । वचनमिदं भवति । वाससि मिनोति, वाससा च उपावहरतीति वचनस्य सामर्थ्यान्नियम्येत ॥

अथ वा, नैवात्र संशय । वचनाद् वाससि मानं वाससा चोपावहरणम् । एवं प्राप्तमुत्तरविवक्षया कीर्त्यते, विशेषं चिन्तयितुम् । यच्च प्राप्तमुत्तरविवक्षया कीर्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति ॥ ७६ ॥ वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥ २० ॥

## तत्राहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥

अस्ति द्वादशाहः । तत्र चोदकप्राप्तमुपावहरणं, वाससा उपावहरतीति । तत्र संशयः । किमुपावहरणार्थमन्यद्वास उत्पाद्यम् ? उत नेति । किं प्राप्तम् । नोत्पाद्यम् । कुत । न वचनमस्ति । अन्यद् भेदेनोत्पाद्यमिति । वचनादृते न प्रतीमो भेदेनोत्पत्तिम् । तस्मान्नोत्पाद्यमिति ॥ एवं प्राप्ते ब्रूम । अहर्गणेऽर्थाद्वास उत्पाद्यम् । कथम् । अहर्बहुत्वात् । बहूनि अहानि । तत्र चोदकेनैतत् प्राप्यते । वाससा उपावहरतीति । भेदेन चानुत्पाद्यमाने उपावहरणार्थं एव न सिद्ध्येत् । तस्मादुत्पादयितव्यमिति ॥ ७७ ॥ अहर्गणेऽर्थाद् वासोऽन्तरोत्पादनाधिकरणम् ॥ २१ ॥

## मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥

तत्रैवाहर्गणे चिन्त्यते । उक्तमेतद्, अर्थाद् वास उत्पाद्यमिति । तत्र संशयः । किं मानं प्रति उत्पाद्यम् ? उतोपावहरणं प्रति उत्पाद्यमिति । किं प्राप्तम् । मानं प्रति उत्पाद्यते । कुत । प्रकृतौ तेन दर्शनादुपावहरणस्य । ज्योतिष्टोमे यस्मिन् मीयते तेनैवोपावहरणं क्रियते । प्रकृतिवच्च विकृतौ, चोदकानुग्रहाय तस्मिन्नेव काले उत्पाद्यमिति ॥ ७८ ॥ पूर्व० ॥

## हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥

न चैतदस्ति, मानं प्रति उत्पाद्यमिति । किन्तर्हि । हरणं प्रति उत्पाद्यम् । कथम् । श्रुत्यसंयोगात् । न हि श्रूयते, मानं प्रति उत्पाद्यमिति । श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते, अत्रैवेति । यस्य चार्थः प्रयोजकः, स प्रयोजनप्रयुक्तत्वात् तत्काल एव न्याय्यो, नान्यकाल इति । हरणकाले चानेन प्रयोजनमिति हरणे एव न्याय्यमुत्पादयितुमिति।यदुक्तं, प्रकृतौ माने यद् वासस्तस्य हरणे दर्शनादिह चोदकाऽनुग्रहाय तत्कालमेवोत्पाद्यमिति । तत् परिहर्त्तव्यम् । अत्रोच्यते ।

न श्रूयते, तेनैव वाससा उपावहरणं कर्त्तव्यमिति । किन्तु अर्थाल्लु तेन क्रियते । एकत्वादह्नः । न हि तद्वासोऽन्यत्र व्यापृतमिति तेनैव क्रियते । यच्चार्थात् कृतं, न तत् चोदकः प्रापयति । अवाचनिकत्वात् । न चेह तदेव वास उभयार्थं सम्भवति । अहर्बहुत्वात् । तस्माद् हरणकाले एव उत्पाद्यमिति ॥ ७९ ॥ सिद्धान्त. ॥ उपावहरणार्थमेव वासोऽन्तरोत्पादनाधिकरणम् ॥ २२ ॥

इति श्रीभट्टशबरस्वामिविरचिते मीमांसाभाष्ये
दशमाध्यायस्य षष्ठ. पादः ॥ १० ॥ ६ ॥

अथ दशमाध्याये सप्तमः पादः ॥ १० ॥ ७ ॥

## पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र संशयः । किं कृत्स्नः पशुरेक हवि ? उत प्रत्यङ्गं हविर्भेद इति । किं प्राप्तम् । कृत्स्न पशुरेकं हविरिति । कुत. । समस्तस्य चोदितत्वात् । समस्तो हि पशुरग्नीषोमौ प्रति चोद्यते, न पृथग् अङ्गानामग्नीषोमीयता । तस्मात् पश्वाकृतित्वाद् द्रव्याद् अवदायाग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात् । तस्मात् कृत्स्नः पशुरेकं हविः । तच्च दर्शयति । अथो खल्वाहुः, कापेया दक्षिणस्य पूर्वं पदस्यावदेयं, तत् सर्वस्य पशोरवत्तं भवतीति । अथो खल्वाहु , गोपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवतीति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि । कृत्स्नः पशुरेकं हविरिति ॥ १ ॥ पूर्व० ॥

## प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, कृत्स्न. पशुरेकं हविरिति। किन्तर्हि । प्रत्यङ्गं हविर्भेद. । कुतः । पृथक्प्रकल्पनत्वात् । पृथगङ्गानि प्रकल्पन्ते । हृदयस्याग्रेऽवद्यति जिह्वाया अवद्यति वक्षसोऽवद्यति दोष्णोरवद्यति पार्श्वयोरवद्यति गुदस्यावद्यति । हृदयाकृतिकादिभ्योऽवदानं श्रूयते, नैतद् अविशसिते पशौ सम्भवति । तस्माद् हृदयाद्यर्थेन विशसितव्यः पशु. । तस्मिंश्च विशस्यमाने पश्वाकृतिर्न भवति । तदेवमापतति । पश्वाकृत्या यागस्य क्रियमाणस्योपकुर्यात् । तां पश्वाकृतिमन्तर्धाय च न शक्यते साक्षाद् यागद्रव्यं परिच्छेत्तुम्।

तस्मात् प्रणाड्या सा आकृतिरुपकर्त्तुमर्हतीति पश्वाकृतिकस्य द्रव्य-स्य हृदयादीनि यानि, तानि हवींषि । तेभ्योऽवदाय प्रदातव्यमिति ग्रहवत् । यथा, सोमे ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णातीति पृथक्कल्पनत्वात् सोमरसो हविः, न सोमलता एवमत्रापि द्रष्टव्यम् । समस्तचोदना तु अङ्गहविष्ट्वेऽपि प्रणाड्या अव-कल्पत एव । अथ यद्दर्शनमुक्तं, तत् सुतरामनेकहविष्ट्वे उपपद्यते । कथम् । कृत्स्नपशोरवदानमन्येनानुजिघृक्षन् न कृत्स्नस्य पशोरवदी-यते इति दर्शयति ॥ २ ॥ सिद्धान्तः ॥ ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदा-ऽधिकरणम् ॥ १ ॥

## हविर्भेदात् कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥

प्रत्यङ्गं हविर्भेद इत्येतत् समधिगतम् । इदमिदानीं सन्दिह्यते । किं येन केनचिदङ्गेन हविषा यागो निर्वर्त्तयितव्यः ? उत सर्वेभ्यो-ऽवदातव्यम् ? अथ वा परिसङ्ख्या केनचिदिति । किं प्राप्तम् । सर्वे-भ्योऽवदातव्यमित्यवदानकर्म्म अभ्यसितव्यमिति । कुतः । हविर्भे-दात् । भिन्नानि हवींषि हृदयादीनि यानि अवदाने सङ्कीर्त्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि । तेभ्यः सर्वे-भ्योऽवदातव्यम् । पश्वाकृत्या हि केचिद्विशेषाः परिच्छिद्यन्ते । तद् यदि एकस्मादङ्गाद् अवदीयेत, न पश्वाकृतिपरिच्छिन्नाःसर्वे विशेषा उपसंगृह्येरन् । तत्र पश्वाकृत्या अङ्गभावो न कृत स्यात् । अनेक-विशेषणविशिष्टं हि मांसराशिं परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा । एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशेः सर्वावदाना-ऽनभ्यासेनैव यथाश्रुतादेव अवत्तं भवति । पृथक्प्रकल्पितेषु अङ्गेषु एकस्मादङ्गाद् अवद्यन् कांश्चिद् विशेषाञ्जह्यात् । अभ्यस्यंस्तु अव-दानानि सर्वान् विशेषान् परिगृह्णाति । तस्मात् सर्वेभ्योऽवदातव्य-मिति ॥ आह । ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वाद् अन्यतमेन यागः सिद्ध्येत । उच्यते । सिद्ध्येदेव, यदि विशेषाणां यागसम्बन्धः श्रूयेत । पश्वाकृतेस्तु श्रूयते । तस्माद्विशेषेषु गृह्यमा-णेषु अङ्गभावः कृतो भवतीति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेषः । को वा विशेषो गृहीत, को वा नेति । अतः

सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय । यश्च विशेषो न गृहीतः, तेन विनापि यथाश्रुतमेव भवतीति कल्प्यमाने तस्य पश्वाकृत्या परिच्छेदे न कश्चिदप्यधिकोऽर्थोऽङ्गीकृतो भवतीत्यनादरस्तं प्रत्याश्रितः स्यात् । तस्मात् सर्वेभ्योऽवदेयं हृदयादिभ्योऽवशिष्टाच्चेति ॥ ३ ॥ पूर्व० ॥

## आज्यभागवद्वा निर्देशात् परिसङ्ख्या स्यात् ॥ ४ ॥

हृदयादिभ्योऽवदातव्यं नावशिष्टात् । कुतः । तेषां निर्देशान्नि-र्दिश्यन्ते हृदयादीनि । एकादश वैतानि पशोरवदानानीति । तत्र प्राप्तत्वादेवैषामेष विधिर्न सम्भवतीति । आनर्थक्यान्नानुवादः । नि-र्गुणश्च पुन श्रवणमिति इतरेषामश्रुतानां परिसङ्ख्यायक भवति । यथा, न गन्तव्यं न भोक्तव्यमिति च विस्पष्टं प्रतिषेधः, एवमेव परिसङ्ख्यायां प्रतिषेधः क्रियते । आज्यभागवत् । यथा गृहमेधीये, पञ्चमे पक्षे आज्यभागग्रहणं परिसङ्ख्यार्थमित्युक्तम् । एवमिहापि प्राप्नोति । तस्मात् परिसङ्ख्येति ॥ ४ ॥ उत्तरम् ॥

## तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् ॥ ५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, परिसङ्ख्येति । तत्र हि त्रयो दोषाः— स्वार्थप्रहाणं, परार्थकल्पना, प्राप्तबाधश्च । यदुक्तं निर्देशादिति । नैतदेवम् । तेषां हृदयादीनां द्व्यवदानत्वं विवक्षन्नभि-निर्दिशेत् । नैवं वचनव्यक्तिर्भवति । एकादशैव पशोरवदानानि, नाभ्यधिकानि । यानि अवदानानि तानि द्विर्द्विरवद्यतीति । कथन्त-र्हि । एकादश द्विर्द्विरवद्यतीति । कुतः ? । नात्र अवदानमनूद्यते । अप्राप्तत्वात् । कथमप्राप्तिः । पशोः पञ्चावदानत्वात् । पञ्चावदानत्वं हि पशोः श्रूयते । तस्मान्नानुवादः । एतानि द्विर्द्विरवद्यतीति । एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति । अवशिष्टानां त्यागं न वारयति । तस्मात् सर्वेभ्योऽवदेयमिति ॥ ५ ॥ पूर्व० ॥

## अंसशिरोऽनूकसक्थिप्रतिषेधश्च तदन्यपरिस-ङ्ख्याने ऽनर्थकः स्यात् प्रदानत्वात् तेषां निरवदानप्रतिषेधः स्यात् ॥ ६ ॥

इतश्च न परिसङ्ख्या । कुतः । अंसशिरोऽनूकसक्थिप्रतिषेधात् ।

एवमेनेषां प्रतिषेध उपपद्यते, यदि न परिसङ्ख्यानं भवति, भवति च सः । नांसयोरवद्यति न शिरसो नानूकस्य नापरसक्थ्योरिति । परिसङ्ख्याने अंसशिरोऽनूकसक्थ्नां प्रतिषेधोऽनर्थकः स्यात् । अथ तु न परिसङ्ख्या, ततः प्रदानत्वाद् यानि अंसादीनि, तेषां निरवदानं प्रतिषिद्ध्यते । किमिदं निरवदानमिति । निष्कृष्य तस्मादङ्गाद् अवदानं निरवदानम् । छिरवद्यतीति तत् प्रतिषिद्ध्यते इति । अतः सर्वैरङ्गैरिज्या क्रियते इति ॥ ६ ॥ युक्तिः ॥

## अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥

अपि वेति पक्षव्यावृत्तिः । परिसङ्ख्या एव स्यात् । नैव सर्वेभ्योऽवदातव्यम् । कुतः । पुन श्रवणस्यार्थवत्वात् । ननु त्रिदोषा परिसङ्ख्येत्युक्तम् । उच्यते । नात्रायं दोषो भवति । कथम् । अवदानं हि चोदकेन होमार्थं प्राप्नोति । इह तस्य हृदयादिभिः सम्बन्धः क्रियते । तेन हृदयादीनि वाक्येन होमसम्बद्धानि भवन्ति, नान्यानि अङ्गानि पश्वाकृतेर्देवतासम्बन्धीनि । न चैतस्मिन् प्रत्यक्षे हृदयादिवाक्ये सति पश्वाकृतेर्देवतासम्बन्धोऽन्येषामङ्गानां होमसाधनत्वेनोपपद्यते। हृदयादिष्वपि एवमाकृतिकाद् गृह्यमाणेषु आकृतेर्देवतासम्बन्ध उपपद्यत एव । तस्मादन्यानि अङ्गानि परिसङ्ख्यायन्ते ॥ अपि च अनवदानीयशब्दो भवति। मारुत्यान् अनवदानीयान्सुराग्रहांश्च आजिसृद्भ्यो हरतीति । यदि परिसङ्ख्या, तत किञ्चिदङ्गमनवदानीयं भवति । इतरथा सर्वमवदानीयं स्यात् । अनवदानीयशब्दो नोपपद्यते । तस्मात् परिसङ्ख्येति । ननु शृङ्गखुराभिप्रायमनवदानीयं भविष्यति । नेत्युच्यते । अनवदानीयं हि तत् । अनवदानीयहरणे आजिसृद्भ्य इति चतुर्थी नोपपद्यते । न हि शृङ्गखुरेण आजिसृतोऽभिप्रेयन्ते । स्यादेतत् । परिक्रयार्थं तद् भविष्यतीति । उक्तमेतत् । न देवताद्रव्येण स्वकार्य्याणि कर्त्तव्यानीति । तस्मान्न शृङ्गखुराभिप्रायम् ॥ ७ ॥

## अब्राह्मणे च दर्शनात् ॥ ८ ॥

इतश्च परिसङ्ख्येति । कुतः । अब्राह्मणे हि भक्षं दर्शयति । कथम् । ककुभो राजपुत्रः प्राश्नाति ध्रुवगोप इति ककुभो भक्षं दर्शयति । इतरथा यागे प्रवृत्तस्यादर्शनं स्यात् । सर्वप्रदानं भवेत् । निरव-

दानप्रतिषेधात् । तस्मादपि परिसङ्ख्येति ॥ ८ ॥

## श्रुताश्रुतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥

इतश्च परिसङ्ख्येति । कुत । श्रुताश्रुतोपदेशात् । श्रुताश्रुतोपदेशो हि भवति, द्व्यानि अङ्गानि अभिमृशति श्रुतानि अश्रुतानि चेति । यदि न परिसङ्ख्या, सर्वेषां श्रपण स्यात्, अश्रुतदर्शनं नोपपद्येत । परिसङ्ख्याने तु सति हृदयादिभ्योऽन्येषाम् अयज्ञशेषत्वं, यथा पर्य्यग्निकृतं पात्नीवतमुत्सृजन्तीति । तेषां तत्र श्रपणं न स्यात् । अश्रुतदर्शनं चोपपद्यते । तस्मादपि परिसङ्ख्येति ॥ ९ ॥ युक्तिः पशोर्हृदयादिभिरेवाङ्गविशेषैर्यागानुष्ठानाधिकरणम् ॥ २ ॥

## इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति । अस्ति तत्र चोदकप्राप्त. स्विष्टकृत् । इहैवं श्रूयते । त्र्यङ्गैः स्विष्टकृत यजतीति । तत्र संशय. । किम्, इज्याशेषेभ्यस्त्रिभ्योऽङ्गेभ्य स्विष्टकृता यष्टव्यम्, उत अनिज्याशेषेभ्यः । किं प्राप्तम् । इज्याशेषेभ्य इति । कुत । एवं प्रकृतिवच्छब्दानुग्रहो भविष्यति । त्रीणि अङ्गानि यानि इज्याशेषभूतानि । तेभ्य इज्यायां क्रियमाणायां त्रिशब्दोऽप्यनुगृहीतो भवति ॥ १० ॥ पूर्व० ॥

## त्र्यङ्गैर्वा शरवद् विकारः स्यात् ॥ ११ ॥

अनिज्याशेषैस्त्र्यङ्गैरिज्येत, एष विकारः स्याद्, न त्रीणि यानि कानिचिदङ्गानि । यदि यै. कैश्चित्त्रिभिरङ्गैरिज्या कर्त्तव्येत्यभ्युपगम्येत, तत्राङ्गैरिति न विधीयेत । प्राप्तत्वादेव । त्रित्वार्थ विधानं स्यात् । त्रिभिरिज्येतेति । तत्र त्रिशब्दोऽङ्गशब्देनासमर्थ एव स्यात्, असामर्थ्ये समासो नोपपद्येत ॥ अपि च असत्यां त्रयाणामङ्गानामेकस्यां साधारण्यां क्रियायामेकस्मिन् वा साधारणे गुणे त्रिशब्दस्याङ्गशब्देन विशेषणविशेष्यसम्बन्धाभावात् सामर्थ्यं न विद्यते । यानि त्रीण्यङ्गानि त्रित्वसम्बद्धानि तानि त्र्यङ्गानीति । असति विशेषे व्यवहाराभावात् साकाङ्क्षं भवति ॥ कतमानि त्र्यङ्गानीति । त्वत्पक्षेऽपि कथम् । तदुच्यते, समाहार एष समास. । येषां समाहार उक्त एकक्रियागुणसम्बन्धो वा, तानि त्र्यङ्गानि । एषाश्च समाहार उच्यते । यद्दोष्ण पूर्वार्द्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनत

इति । समवदानं समाहारः, एकेन अग्निना गुणेन सम्बन्धः, एकया च समवद्यति क्रियया । तस्मादेतानि त्र्यङ्गानि, एतानि चानिज्याशेषाणि । अतो वचनप्रामाण्यादनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृदिज्येतेति । शरवत् । यथा शरमयं बर्हिरिति वचनप्रामाण्याच्छरैः कुशा बाध्यन्ते, एवमिहापीज्याशेषता बाधिष्यते इति ॥

आह, इज्याशेषाणां प्रतिपत्तिरेषा । न चान्येन इज्यायां क्रियमाणायामेतत् प्रतिपादितं भवति । तस्मादिज्याशेषाणां कार्य्ये अवसमानानि नेज्याशेषविकारभूतानि भवितुमर्हन्तीति । अत्रोच्यते । यद्यपि प्रतिपाद्यन्ते तथापि नान्यथा । तस्यां निर्वृत्तौ इज्याशेषे कर्त्तव्यायामनिज्याशेषाणि विधीयन्ते । एतानि तत्र प्रतिपादयितव्यानि । एतान्यपि हि कृतकार्य्याणि प्रतिपादयितव्यान्येव । यानि तु शेषभूतानि तानीह प्रतिषिद्धानि यथाकाममन्यत्र प्रतिपादयिष्यन्ते इति ॥ ११ ॥ सि० ॥ ज्योतिष्टोमेऽनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृद्यागाधिकरणम् ॥ ३ ॥

**अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात् ॥ १२ ॥**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्रेदमाम्नायते, अध्यूध्नीं होत्रे हरन्तीति । तत्रायमर्थः सांशयिकः । किमध्यूध्नी होतृभक्षस्य विकारः, उताविकारो होतुर्नियम्यते ? इति कथं विकारः स्यात् । कथं नियम्यते ? इति । यदि अध्यूध्नी विधीयते, होत्रे हरन्तीत्येतदनूद्यते, ततो विकारः । अथ अध्यूध्नीमुद्दिश्य होत्रे हरन्तीति विधीयते, ततो नियमः । किं प्राप्तम् । होतुर्भक्षस्य विकारः स्यात् । कुतः । अपूर्वा अध्यूध्नी अदैवतशेषत्वादिडाभक्षे न प्राप्ता, सा न शक्या अनुवदितुम् । अतो विधीयते, होतृभागहरणोऽध्यूध्नी भवन्ती होतृहरणं प्रत्यक्षा, आनुमानिकमिडाभक्षं निवर्त्तयतीति । त्र्यङ्गवत् । यथा अनिज्याशेषैस्त्र्यङ्गैरिज्याशेषाणि निवर्त्तन्ते, तद्वत् ॥ १२ ॥ पूर्वपक्षे पूर्वपक्षः ॥

**शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥**

वाशब्दः पक्षं व्यावर्त्तयति । इडाभक्षविकार इति । कथं स्यादिडाभक्षविकार, यद्यपूर्वा अध्यूध्नी स्यात् ? । सा हि इडायां समवैति । कथम् । अनस्थिभिरिडां वर्द्धयन्तीति तस्या हरणं प्राप्तं, होतृ-

सम्बन्धो न प्राप्तः। स विधीयते। यामिमामध्वर्युर्न्नी हरन्ति, तां होत्रे नान्यस्मै इति। होत्रे त्वन्यं भक्षं कुर्वन्तीति। अपि च होत्रे हरन्तीत्यानन्तर्य्याद् एकवाक्यता प्रत्यक्षा। इतरतरस्मिन् पक्षे, अध्वर्युर्न्नी हरन्तीति च होतृशब्दव्यवधानात् कल्पयितव्या भवेत्। तस्माद् भागे नियमः। रथवत्। यथा, यजुर्युक्तं रथमध्वर्य्यवे ददातीति रथस्य वाक्यान्तरेण प्राप्तत्वादव्यवधानाच्चाध्वर्युभागे नियमः। एवमिहापि होतृभागे नियमः इति॥ १३ ॥ पूर्वपक्षे उत्तरपक्षः॥

## अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥

तुशब्दः पक्षं व्यावर्त्तयति। न भागे नियमः। इडाभक्षविकार इति। कुतः। नास्ति शास्त्रं, येन इडाभक्षे अध्वर्युर्न्नी स्यात्। नन्विदमुक्तम्, अनस्थिभिरिडां वर्द्धयन्तीति। उच्यते। अनुवादस्वरूपत्वादस्य। प्राप्तत्वाच्च अनस्थिकानां वचनान्तरेण। अथ यद्यूष्परिशिष्यते तत्समवत्त धान्यामानयति तद् हृदयं प्रास्यति जिह्वां वक्षस्तानिममतस्नेस्तेस्या वनिष्ठुमिति। अनुवाद इति गम्यते। न चात्र अध्वर्युर्न्नी कीर्त्यते। तस्मादप्राप्ता। अप्राप्ता चेद् होतृहरणमुद्दिश्य विधीयते। यत्तु व्यवधानादप्राप्तैव एकवाक्यता कल्पयितव्येति। अपूर्वत्वादध्वर्युर्न्ना अनुवादाभावेऽनर्थकत्वपरिहाराय कल्पयिष्यामः। एवञ्च स्वपदगतं हरणं विहितं भविष्यतीति। इतरथा तु होत्रेऽध्वर्युर्न्नीसम्बन्धो विधीयते, न स्वपदगतहरणम्। तस्मादपि भक्षविकारः॥ १४ ॥ सि०॥

## अपि वा दानमात्रं स्याद् भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥

अपि वेति पक्षव्यावृत्तिः। यदा एवं, न वचनान्तरेण इडाभक्षेऽध्वर्युर्न्नी प्राप्ता, साऽपूर्वा हर्त्तव्या विधीयते। न तर्हि भक्षविकारः। दानमात्रमेतद् होत्रे अध्वर्युर्न्नी हरन्तीति। नात्र भक्षशब्देन अभिसंयोगो विधीयते। तस्मान्न भक्षविकार इति॥ १५॥ पूर्व०॥

## दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

तुशब्दः पक्षं व्यावर्त्तयति। दानमात्रमेतद् न भक्षविकार इति। नैतद्दानम्। दातुरभावात्। पशुर्हि एवं सङ्कल्पित। यागं वर्जयित्वा

नान्यत् स्वकार्यमनेन कार्यमिति । तेन स्वाम्यभावाद्दानं नास्ति । कथं स्वाम्यभावः । शेषं प्रत्यावशिष्टत्वात् । शेषं प्रति यथा यजमानस्तथा होता । उभावपि न प्रभवतो द्रव्यस्येति नास्ति दानम् । अथ कथं भक्षशब्दानभिसंयोगे भक्षः । चतुर्थी तादर्थ्ये भवति । होत्रर्था अध्यूध्नी । तया होता अभिप्रेयते, होत्रे सा होतुरुपकरोति, सा भक्ष्यमाणा सामर्थ्यजननस्य दृष्टस्य लाभाय । यया च यावत्या च मात्रयोपकारिणी भवति । तत्र चतुर्थीश्रुतिरनुगृह्यते । इतरथा हि अदृश्यमाने उपकारे चतुर्थीश्रुतिर्बाध्यते । तस्मादिडाभक्षविकार इति ॥ १६ ॥ उत्तरम् ॥ अध्यूध्न्यामिडाभक्षविकारताधिकरणम् ॥४॥

## अग्नीधश्च वनिष्ठुरध्यूध्नीवत् ॥ १७ ॥

तत्रैवाग्नीषोमीये पशौ श्रूयते, वनिष्ठुरग्नीधे इति तत्र अधिकरणप्रदेशः । तत्र यः संशयः, स इहापि । किं वनिष्ठुरग्नीधे, विकारो भक्षस्य, उत तस्य भागनियमः ? इति । ततः स एव पूर्वपक्षः । अपूर्वत्वाद् विधीयते । तस्माद्विकार इति । तस्य तदेवोत्तरम् । वचनान्तरेण प्राप्तत्वाद् भागनियम इति । ततस्तदेवोच्यते । अनस्थिभिरिडां वर्द्धयन्तीत्यनुपात्तत्वादप्राप्तो वनिष्ठुर्विधीयते इति॥ अत्राह । ननु वनिष्ठुरपि तत्र सङ्कीर्तनात् प्राप्त एवेति । अत्रोच्यते । वनिष्ठु प्रास्यतीत्येतावत् तत्र । तेन इडायां प्रासनमात्रं तस्य विधीयते इडासंस्कारार्थेन । नाऽसौ इडा न तस्य भक्षशब्दसंयोगः । तस्मात् प्रासनमात्रं, न तस्य भक्षे प्राप्तिः । पूर्वस्मिन् वचने न चतुर्थीसम्बन्धः, तस्यैतदग्नीधे इति । चतुर्थीसम्बन्धेन भक्षणं विधीयते । तस्मात् पूर्वेण अधिकरणेन अतुल्याशङ्कायां तुल्यता सूत्रणातिदिश्यते । सर्वेष्वेव अधिकरणप्रदेशेषु अतुल्याशङ्का निवर्त्यते ॥१७॥ वनिष्ठोर्भक्षविकारताधिकरणम् ॥ ५ ॥

## अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । अस्ति तत्र मैत्रावरुण ऋत्विक् । तं प्रति सन्देहः । किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति, न ? इति । किं प्राप्तम् । अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत् कृतं भवति । तस्मादप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ पूर्व० ॥

## स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात् ॥ १९ ॥

स्याद्वा मैत्रावरुणभक्षः । प्रैषेषु असौ अध्वर्य्युविकारः । अनुवचनेषु होतुः । तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह इति । अतस्तस्य तयोः कर्माभिसम्बन्धादर्थापत्त्या भक्षं लभते । तस्मात् सभक्षः स्यादिति ॥१९॥ सिद्धान्तः ॥ मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम् ॥ ६ ॥

## द्विभागः स्याद् द्विकर्मत्वात् ॥ २० ॥

अथेदानीं मैत्रावरुणमेव प्रति भवति सन्देहः । किं द्विभागो मैत्रावरुणः ? उतैकभाग इति । किं प्राप्तम् । द्विभागः स्यात् । अध्वर्युविकारत्वादध्वर्युभागं प्राप्नोति, होतृविकारत्वाद् होतृभागं प्राप्नोति । तस्माद् द्विभागः स्यादिति ॥ २० ॥ पूर्व० ॥

## एकत्वाद्वैकभागः स्याद्भागस्याश्रुतिभूतत्वात् ॥ २१ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न द्विभागः स्यात् । एकभागो भवेदिति । कुतः । भागस्याश्रुतिभूतत्वादिति । नेह अध्वर्युभागो मैत्रावरुणस्य श्रूयते,नापि होतृभागः । यदि ह्युभौ श्रूयेयाताम्, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात् । चोदकेन तयोः प्राप्तिर्गम्यते । तत्रैकत्वान्मैत्रावरुणस्य, एकेनैव भागेन यावती प्राकृती शक्तिः सा कृतेति द्वितीयभागं चोदको न प्रापयति । तस्माद् एकभागः स्यादिति ॥२१॥ सिद्धान्तः ॥ मैत्रावरुणस्यैकभागताऽधिकरणम् ॥ ७ ॥

## प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥

अग्नीषोमीये एव पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते । तं प्रति सन्देहः । किं तस्य शेषभक्षो भवेद्, न ? इति । किं प्राप्तम् । भवेदिति । कुतः । वपां हि श्रपयन्नध्वर्युकर्म करोति, प्रतिप्रस्थाता वपां श्रपयतीति । तस्मात् स्यादस्य भक्ष इति ॥ २२ ॥

## अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥

अभक्षः स्यात् प्रतिप्रस्थाता । कुतः । यस्मिन् यागे स अध्वर्योर्विकारः । तस्य द्रव्यशेषो नास्ति । वपामसौ श्रपयति । तस्याः सर्व-

प्रदानत्वम् । तत्र शेषाभावात् किं भक्षयेत् । यत्र शेषोऽस्ति हृदयादिषु अंशेषु, न तत्रासौ अध्वर्योर्विकारः । अन्यद्धि वपापूर्वम् अङ्गाऽपूर्वात् । चोदकेन च यस्यापूर्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्मकरे भक्षः । एवं हि तस्योपकारको भवतीति । अन्यकर्मकरे भक्षयति तदुपकाराभावादनङ्गं स्यात् । तस्मान्नान्यकर्मणि भक्षणं चोदकः प्रापयतीति ॥

ननु अङ्गेष्वपि प्रतिप्रस्थाता अध्वर्युविकारः । स हि अवदानं करोति । दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यतीति । यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा । अथ वा अन्यकार्यमेतद् अवदानम्, अन्यकार्यकं प्राकृतम् । तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भेऽवदाने गृहीते द्विसङ्ख्या केवला श्रूयते, नावद्यत्यर्थः । इह पुनः प्रतिप्रस्थातुरवदानं चोद्यते, नारम्भः । यदत्रावदानं भविष्यति, स प्रदानारम्भ । तत्र प्रकृतौ प्रदाने चिकीर्षिते अर्थादध्वर्युरचोदितोऽवदानं निर्वर्त्तयति । तेन वा अन्येन वा तत् कर्त्तव्यम् । सन्निधानादध्वर्युरेव करोति, न नियोगतस्तत् तत्राध्वर्युकर्म । यच्चार्थात् कृतं, न तच्चोदकः प्रापयति । अर्थादेव तदिहाध्वर्युणा अन्येन वा कर्त्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थम् । तस्मान्नावद्यन्नपि प्रतिप्रस्थाता अध्वर्युकर्मणि वर्त्तत इति न अस्याङ्गेषु भक्ष स्यात् ॥२३॥ सिद्धान्तः ॥ प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥

## विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥

चातुर्मास्येषु श्रूयते, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदन इति । तत्रेदं समामनन्ति, आज्यभागौ यजतीति । तत्र संशयः । किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा चोदकेन अनेन च द्वाभ्यामेकं कर्म चोद्यते, किं वाऽर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्मान्तरयोरुत्पत्तिः, अथ परिसङ्ख्यार्थम्, अथ वा आज्यभागौ वर्जयित्वाऽन्यच्चोदकः प्रापयति, अथ वा चोदकेन आज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्वो गृहमेधीय ? इति । किं प्राप्तम् । विकृतौ एतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुन श्रवणमनर्थान्तरं स्यात् । अनुवादमात्रमेव

सुहृद्भूत्वा आचार्य्य उपदिशति स्म, न अर्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतद् अनुवादमात्रमेतदित्यन्यांश्चिन्त्यतामिति । कथम् । तद्धि गम्यते, अन्यश्च नावगम्यते इति । यथाऽस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां, देवदत्तो यज्ञदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य वक्तार । एवमेतदपीति ॥ २४ ॥

अपिवाग्नेयवद् द्विशब्दत्वं स्यात् ॥ २५ ॥

यदि हि एतावदेवास्य सामर्थ्यं गम्येत उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात् । अथ तु अन्यदपि कर्त्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशङ्का न भवतीति । अस्ति च सामर्थ्यं, चोदकेन अनेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते । गृहमेधीयो हि भवति प्रकृतिवत् । किं तत् सादृश्यम् । आज्यभागौ यजतीति । प्रकृताविदं श्रूयते, आज्यभागौ यजति । एवं प्राकृतेन यागेन स्वकार्यं करोतीति । इह पुनराज्यभागौ यजतीति । स प्रकारोऽतिदिश्यते । एवमनेन प्रकारेण यागः स्वकार्यं करोति । यथा द्वाभ्यां शब्दाभ्यामेकोऽर्थ उच्यते । आग्नेयवत् । आवाहने अग्निमग्न आवह इति य एवं सम्बोध्यते, स एवोच्यते, आत्मानमावह इति । यथा वा, एष दण्डो, दण्डेन प्रहरेति द्वाभ्यामेक एव दण्ड उच्यते । एवमिहापि प्राकृतौ, आज्यभागौ यजतीति विकृतावपरेण आज्यभागवचनेन तद्वन्तं गृहमेधीयं करोतीति वाक्यं पूर्यते, न यागान्तर चोद्यते । नाऽपि चोदकप्राप्तस्यानुवादमात्रमिति ॥ २५ ॥

न वा शब्दपृथक्त्वात् ॥ २६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदाग्नेयावाहनेन तुल्यम् । तत्र हि अग्ने आवहेत्येतावता आवोढा अग्निरुक्तः । अग्निमावहेत्येतावता वोढव्योऽग्निरुच्यते । न ताभ्यामेकोऽर्थ क्रियते । इह तु प्रकृतिवदित्येकेनैव वचनेन आज्यभागवत्ताऽवगम्यते । पुनराज्यभागौ यजतीति कृतकरं शास्त्रमनर्थकं स्यात् । तस्मादनुवादमात्रमित्यध्यवसातव्यम् । नन्वनुवादोऽनर्थकः । नेत्युच्यते । अर्थवादार्थेन भविष्यति, आज्यभागौ यजति यज्ञताया इति । यदेतत् प्रकृतिवत् करोति । तथा कुर्वन् आज्यभागौ यक्ष्यति । तत्र यज्ञता सम्पत्स्यते इति ॥ २६ ॥

अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचना-

## द्विकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

अथवा अधिकयोः कर्मान्तरयोरुत्पत्तिः । नानुवाद इति । आज्यभागावत्र क्रियेते एवेति । किन्तर्हि उपदिश्येते, यागावत्र कर्त्तव्याविति । कुतः । अनुवादमात्रं हि अनर्थकम् । शब्दपृथक्त्वान्न द्वाभ्यामेकं कर्मोच्यते । अथ कस्माद् न अर्थवादार्थता गुणार्थता विकारार्थता वा भवति ? इति । उच्यते । अर्थवादासङ्कीर्त्तनान्नात्रार्थवादार्थता । नन्वत्र यज्ञताया इत्यर्थवादः सङ्कीर्त्यते । उच्यते । न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेण अर्थवादेन किञ्चित् प्रयोजनमस्ति । तस्माद्यागान्तरविधानार्थ एवायं नार्थवादः । ननु यागान्तरं नास्ति आज्यभागसंज्ञकम् । उच्यते । आज्यभागधर्मकं भविष्यति । न च, गुणसङ्कीर्त्तनमस्ति, यथा अंशुमन्तौ आज्यभागौ यजतीति । नचान्यो वचनप्रकारोऽस्ति । यथा नान्यामाहुतिं पुरस्ताज्जुहुयादिति प्रतिषिद्धप्रसवार्थं यदन्यामाहुतिं पुरस्ताज्जुहुयादिति निन्दित्वा स्रुवेणाघारयतीति वचनम् । तेषु हि सत्सु एवमर्थवत्ता स्यात् । तस्मात् कर्मान्तरवचनम् अपूर्वत्वात् । एवमपूर्वमर्थं करिष्यति । इतरथा न विशिष्टोत्पत्तिः स्यात् । किं पुनरत्र कर्मान्तरे लक्षणमिति ? एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हि स्यादिति । अतः क्रमेण प्रधानयागादुपरिष्टादपरौ यागौ आज्यभागधर्मकौ विधीयेते । अज्ञातौ ज्ञाप्येते इत्यर्थः ॥ २७ ॥

## प्रतिषेधः स्यादिति चेत् ॥ २८ ॥

इति चेत् पश्यसि, कर्मान्तरचोदनेति । तन्न । तस्य आज्यभागौ इति नामसङ्कीर्त्तने सति अनाज्यभागौ न शक्यौ प्रतिपत्तुम् । तद्धर्मकत्वे सति लक्षणशब्दः । आज्यभागौ इति विशेषस्याविवक्षा स्यात् । तस्मान्न कर्मान्तरवचनं, किन्तु परिसङ्ख्यया प्रतिषेधः स्यात् । यथा पञ्च पञ्चनखा भक्ष्या इति शशादीनां पञ्चानां कीर्त्तनादन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यत इति । एवमिहापि अन्येषामङ्गानां प्रतिषेधो भविष्यतीति ॥ २८ ॥ पूर्व० ॥

## नाश्रुतत्वात् ॥ २९ ॥

न हि अत्र प्रतिषेधवाचि किञ्चित् पदं श्रूयते । नापि इतराङ्गावचनम् । न चासम्प्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति । पदा-

ऽर्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति । तदुक्तं, तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वाद् इति । तस्मान्न प्रतिषेधः । तत्र हि त्रयो दोषाः—अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च । तस्मात् कर्मान्तवचनमेतादिति ॥ २९ ॥ पूर्व० नि० ॥

## अग्रहणादितिचेत् ॥ ३० ॥

इति चेत् पश्यसि कर्मान्तरचोदनेति । उक्तस्तत्र दोषः स एव महान् । तस्मात् किं भवतु ? आज्यभागयोः स्वशब्देन ग्रहणम् । अन्येषामङ्गानां चोदकेन । स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति । अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यतीति । किमेव भविष्यति ? इति । संहत्यकारिता न कल्पयिष्यते, चोदकप्राप्तयोर्वाक्यान्तरेणार्थवादवचनमनर्थक न प्रतिज्ञातं भविष्यति । विस्पष्टं संज्ञाग्रहणेन पुनः श्रुतिरित्येतन्न कर्मान्तर कल्पयिष्यते । यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते न तिष्ठन्नेव तिष्ठतीत्युक्त , एतावता देवदत्ताख्योऽयमभिधीयत इति गम्यते । न च परिसङ्ख्यात्रिदोषा सती कल्पिता भविष्यति । तस्माच्चोदकेन अगृहीतावाज्यभागौ गृहीताविति ॥

आह, कस्मादिदं गौरवमाश्रितम् । यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां, चोदक एष तौ शक्नुयाद् ग्रहीतुं, प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनमिति । उच्यते । न गौरवस्य किञ्चित् साधु प्रयोजनं, न तु गौरवेण यत् कृतं तन्न कृतं भवति । गौरवस्य तु दोषोऽस्ति । न तु दोषोऽपि सति चोदक आज्यभागौ गृह्णाति । यः परिहारेण पथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति । तस्माद् अग्रहणादाज्यभागयोर्ग्रहणमिति ॥ ३० ॥ पूर्व० ॥

## न तुल्यत्वात् ॥ ३१ ॥

नैतदेवम् । यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थान् अपेक्षेत, तत्र आज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत । अन्यांश्च गृह्णीयात् । न त्वसौ पृथक् पृथक् पादार्थानपेक्षते । किन्तु प्राकृतमपूर्वमपेक्षते यद्वत् तेन, तद्वदनेनेति । तस्मिन्नपेक्ष्यमाणे आज्यभागवत्तापि अपेक्षिता भवति । तत्रैतदेवमागच्छति, कृतकरं शास्त्रमन-

र्थकं भवतीति । तस्मादन्यैरङ्गैस्तुल्यत्वान्न चोदकेनागृहीतयोराज्यभागयोर्ग्रहणमिति ॥ ३१ ॥ पूर्व० नि० ॥

तथा तद्ग्रहणे स्यात् ॥ ३२ ॥

अथ यदुच्येत, आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवद् गृहमेधीयो भवति । कथमाज्यभागौ यजति ? एवमिति । यथा सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिष्विति वाक्यशेषाद् न अन्यासु इष्टिषु साप्तदश्यम् । यथा शिंशपामानय वृक्षमिति नान्योऽपि वृक्ष आनीयेत, शिंशपैव वृक्षशब्देन गृहीता भवति । एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम् । एवं प्राप्ते ब्रूमः । तथा तद्ग्रहणे स्यात् । तुल्यमग्रहणेन तद् ग्रहणम् । पृथक्पदार्थापेक्षिणि चोदके स्यात् । अग्रहणमन्येषामङ्गानां, प्राकृतापूर्वापेक्षिणि तु नैतदुपपद्यत इति ॥ ३२ ॥ पूर्वपक्षतन्निरासौ ॥

अपूर्वतान्तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥

एवं तर्ह्यपूर्वो गृहमेधीय । कुतः ? ग्रहणस्यार्थवत्त्वात् । एवं ग्रहणमाज्यभागौ यजतीति अर्थवद्भविष्यति । पूर्ववत्त्वे तद् अनर्थकं स्यात् । आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकाङ्क्षो न चोदकेन अन्यानि अङ्गानि गृह्णातीति । यस्यान्तु विकृतावपूर्वं किञ्चिदङ्गमुक्तं, न तेन सह एकवाक्यतामगत्वा प्राकृतानि अङ्गानि गृह्णातीति । कुतः । केन प्रकारेण कुर्यादिति तस्याकाङ्क्षा न किं कुर्यादिति । प्रकृतौ चाङ्गवत्ता नाम प्रकारो विदित प्रयोगवचनेन च आकाङ्क्ष्यते, न तु विकृतावङ्गवत्ता क्लृप्ता । सा कल्पयित्वा आकाङ्क्षिता भवति । न च क्लृप्तामुज्झित्वा कल्पनीयसम्बन्धो न्याय्यः । तस्मात् तत्रापि चोदकेन अङ्गानि गृह्यन्त इति । गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूदिति तेषामङ्गानां कल्पयित्वा सर्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रह क्रियत एवेति ॥ ३३॥ सिद्धान्तः ॥ आज्यभागौ यजतीत्यनेन अपूर्वगृहमेधीयविधानाधिकरणम् ॥ ९ ॥

ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

गृहमेधीय एवोदाहरणम् । तत्रैषोऽर्थः समधिगतः । आज्यभागाभ्यामेतद् निराकाङ्क्षमन्याङ्गानि न गृह्णातीति । तदुच्यते । किमेष

एवोत्सर्गः, सर्वाण्येवान्यानि अङ्गानि न गृह्णातीति । एवं खलु प्राप्ते, उच्यते । ततोऽपि यावदुक्तं स्यात् । तत एवमुक्तम्, अङ्गानि नान्यानि गृह्णातीति अगम्यमाने विशेषे न गृह्णीयात् । गम्यते चाऽत्र विशेष । प्रत्यक्षविहितत्वादाज्यभागयोरिति । अतो यस्य यस्य प्रत्यक्षवचन सर्वेषु तेषु पुनर्गम्यते विशेषस्तस्माद् यावदुक्तं स्यात् । यथा अग्नये समवद्यतीति, इडामुपह्वयतीति ॥ ३४ ॥ गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥ १७ ॥

स्विष्टकृद्भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात् ॥ ३५ ॥

आस्ति गृहमेधीयः । तत्रैषोऽर्थः समधिगतः, अपूर्वो गृहमेधीय इति । तत्रेदमामनन्ति, अग्निं स्विष्टकृतं यजतीति । तत्रेदं सन्दिह्यते । किमन्येषां शेषकार्याणां भक्षणस्य च परिसङ्ख्यायकः स्विष्टकृच्छब्दः, उत नेति । आह, ननु अपूर्वत्वाद् गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते । अत्रोच्यते । पूर्ववान् गृहमेधीय इति कृत्वा चिन्तयम् । पूर्वस्य अधिकरणस्य प्रयोजनं चिन्त्यते । यदि परिसङ्ख्या भवेद्, आज्यभागाभ्यां यागाः परिसङ्ख्यायेरन्, नान्ये इति । इदमपि प्रयोजनं भवति । स्विष्टकृच्छ्रवणेन शेषभक्षाः परिसङ्ख्यायन्ते, न ? इति । किं प्राप्तम् । स्विष्टकृति श्रूयमाणे परिसङ्ख्या स्याद्भक्षाणाम् । कुतः । तुल्यकारणत्वात् । तुल्यं हि कारणं स्विष्टकृतो भक्षाणाञ्च । उभयमपि शेषसंस्कारार्थम् । तत्र वचनादयं शेषसंस्कारो भवति, नान्य इति प्रतिषिद्ध्येरन् भक्षाः ॥ ३५ ॥ सि० ॥

अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३६ ॥

यथैव स्विष्टकृच्छ्रवणेऽन्येषां शेषकार्याणामदर्शनमिति शेषभक्षा न सन्तीत्युच्यते, एवं भक्षणदर्शनाद्भक्षाः सन्तीति गम्यते । दर्शनाऽदर्शनयोश्च दर्शनं प्रमाणम् । किं तद्दर्शनम् । इडामुपह्वयतीत्युपह्वानं ह्यनुज्ञापनम् । तत् सति भक्षणे भवति, नासति । तस्मान्न प्रतिषेध ॥ ३६ ॥ पूर्व० ॥

प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३७ ॥

प्रतिषेधो वा, तुल्यकारणेन हि प्रत्यक्षश्रुतेन आनुमानिकं बाध्यते । अथ यद्दर्शनमुक्तं, तद्विधिपूर्वस्य भक्षस्य भविष्यति । एवं ह्याम्नायते । अथ इडामेवावद्यति न प्राशित्रमुपहूय प्राश्नातीति तस्य दर्श-

नम् । कृत्वा चिन्तायाः प्रयोजनं न वक्तव्यम् । पूर्वाधिकरणस्य हि तत् प्रयोजनम् । न च प्रयोजनस्य प्रयोजनमुच्यते यत् प्रयोक्तव्यं तच्च पूर्वाधिकरणम् ॥ ३७ ॥ उत्तरम्॥गृहमेधीये प्राशित्राद्भिक्षणाभावाधिकरणम् ॥ ११ ॥

## शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् ॥ ३८ ॥

ज्योतिष्टोमे श्रूयते, शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्तीति । इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजन्तीति । तत्र संशयः । प्रायणीया किं शंय्वन्ता, कृत्स्नसंस्था वा, उत शंय्वन्तैव ? तथा आतिथ्या किमिडान्ता, कृत्स्नसंस्था वा, उतेडान्तैव । किं प्राप्तम् । शंय्विडान्तत्वे विकल्प स्यादिति । कुत । पत्न्यनुयाजस्य प्रतिषेधात् । शंय्वन्ता सन्तिष्ठते इति तावद् व्यक्तमेव वचनम् । अपरमपि वचनं न पत्नीः संयाजयन्तीति । यदि शंय्वन्तैव नित्यं, पत्न्यनुयाजप्रतिषेधोऽनर्थकः स्यात् । तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थानमुच्यते । कथम् । प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोतीति । तथा आतिथ्यायामनुयाजान् केवलान् न करोति,नान्यं न करोतीति, अकर्त्तव्यपरिसङ्ख्यानार्थमेवेदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति ॥३८॥ पूर्व० ॥

## नित्यानुवादो वा कर्मणः स्यादशब्दत्वात् ॥ ३९ ॥

न त्वेतदस्ति, विकल्प इति । एक एव कल्प शंय्विडान्तत्वम् । तत्र हि विशिष्टं वचनम् । द्वितीयः कल्पो नास्त्येव । न हि तस्य वचनमस्ति । न च पत्न्यनुयाजप्रतिषेधक कृत्स्नसंस्थानवाचकम् । किन्तर्हि । तन्नित्यानुवादः । नित्यप्राप्तमनुवदति । यथा, नान्तरिक्षे न दिवि अग्निश्चेतव्य इति पूर्वाभ्यां सहैकवाक्यतैवानयो. । शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नी. संयाजयन्तीति । तथडान्ता आतिथ्या सन्तिष्ठते । नानुयाजान् यजन्तीति । अत्र यत्नलाघवेन स्तुतिः । ननु प्रतिषेधवचनः कृत्स्नसंस्थानं वदेत् । य एव हि श्रुतस्यार्थस्योत्सर्गे दोष. स एवाश्रुतकल्पनायाम् । तस्माच्छंय्विडान्ततैव स्यादिति ॥३९॥ सिद्धान्तः ॥ प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम्॥१२

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधः स्यात् ॥ ४० ॥

इदमेवोदाहरणं, शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्तीति । इडान्ता आतिथ्या सन्तिष्ठते नानुजान् यजतीति । तत्र द्वौ शंयू द्वे इडे इति । तत्रायमर्थः सांशयिकः । किं परेण शंयुना शंय्वन्ता सन्तिष्ठते ? उत पूर्वेण । एवं, किं परया इडया इडान्ता सन्तिष्ठते ? उत पूर्वेणेति । किं प्राप्तम् । पूर्वाभ्यां शंय्विडाभ्यामिति । कुतः । पूर्वाभ्यामपि संस्थापयता श्रुत्यर्थः कृतो भवतीति । कृते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्य्यादिति । उच्यते । उत्तराभ्यामपि संस्थापयञ्छब्दार्थमेव करोति । तत्र नियमात् पूर्वाभ्यां संस्थापयन्न शब्दार्थं परिच्छिन्द्यात् । शब्दार्थं परिच्छेत्स्यामः । यदि उत्तराभ्यामपि संस्थापनं शब्दो वक्ष्यति, ततस्ताभ्यां संस्थापयन् भूयांसमुपकारं लप्स्यते । तस्मादनियमः । पूर्वाभ्यामुत्तराभ्यां वेति ॥ एवं प्राप्ते ब्रूमः । उत्तराभ्यामिति । कुतः । निषेधार्थवत्त्वात् । तदैव पत्नीसंयाजस्यानुयाजस्य च प्रतिषेधोऽर्थवान् भवति । यद्युत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः । तस्मादुत्तराभ्यामिति। ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तम् । उच्यते । न सत्यां गतौ न्याय्यम् । तस्मान्न पूर्वाभ्यामिति । उच्यते । लिङ्गमेतदुपदिष्टम् । न च लिङ्गं साधकं भवति । प्राप्तिरुच्यतामिति । पक्षेऽपि हि लिङ्गस्याऽर्थवत्ता स्यात् । अत्रोच्यते । इयं प्राप्तिः । यदा विशेषो नावगम्यते, शंयुरन्ते यस्या अङ्गरीते, सा शंय्वन्ता । एवम् इडान्ता । सैषा अङ्गरीतिर्विधीयते । शंय्वन्ता इडान्ता च । सा च विधीयमाना अन्यानि अङ्गानि परिसञ्चष्टे । कथम् । शय्वन्तया अङ्गरीत्या इडान्तया च सङ्कीर्त्यमानया शंय्विडान्ततायां सत्यामन्यान्यङ्गानि च नाकाङ्क्ष्यन्ते । अनाकाङ्क्ष्यमाणानि च नैकवाक्यतां यान्ति । अतोऽप्राप्तानीति गम्यते । नन्वेव सति पूर्वाभ्यां शंय्विडान्तता न कञ्चिदर्थमधिकं साधयतीति । उच्यते । नैष दोषः । न हि तस्यार्थे पृथग्वाक्यं, यस्यानर्थक्यं परिजिहीर्ष्यते । अस्य वाक्यस्योत्तरान्तता प्रयोजनं, तस्मादुत्तराभ्यां संस्था स्यादिति ॥ ४० ॥ पूर्व० ॥

प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥

नैतदस्ति, उत्तराभ्यां शंय्विडाभ्यां सन्तिष्ठते इति। पूर्वाभ्यामेव। कुतः। नेह शंय्वन्ताया अङ्गरीतेर्भावो विधीयते, इडान्तायाश्च। किं तर्हि। संस्था विधीयते। शंय्विडान्ता सन्तिष्ठते, प्रवर्त्तमाना शय्विडान्ता च जाता सन्तिष्ठते, न प्रवर्त्तते। तिष्ठत्स्वेव कर्तृषु सन्तिष्ठतीत्युच्यते। तत्र पूर्वाभ्यामुत्तराभ्यामिति विशेषेऽनवगम्यमाने पूर्वाभ्याश्च न प्रवर्त्तेत, उत्तराभ्याश्च। तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति। प्रतिषेधश्च नित्यानुवाद इत्युक्तम् ॥ ४१ ॥ सि० ॥

**प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥ ४२॥**

इतश्च पूर्वाभ्यां परं न कर्त्तव्यमिति। कुतः। त्वरायुक्तो हि प्रतिषेधोऽयं कृतः। कथम्। देवासुराः सत्यमभजन्त। अर्द्धं देवाः सत्यस्याभजन्त अर्द्धमसुराः। तदसुरैः सत्यमनूच्यमानं देवानपाक्रामत्। ते प्रायणीयं निरवपन्। तच्छंय्वन्तमासीत्। अथ असुरा यज्ञमायंस्तनो यज्ञः तत्वर इति। तमेवं कृत्वा त्वरितमाद्रियन्त इति। तथा, आतिथ्यं निरवदंस्तदिडान्तमासीदथा सुरा यज्ञमायंस्ततो यज्ञः तत्वरः इति। तदिडान्तमेव कृत्वा त्वरितमाद्रियन्ते इति। त्वराकृतश्च पूर्वमपेक्षन्ते, नोत्तरम्। तस्मान्नान्यो देशः प्रतिषेधस्य। तस्माच्च पूर्वाभ्यामेव शय्विडाभ्यां परं न कर्त्तव्यमिति ॥ ४२ ॥ युक्तिः॥ प्रायणीयातिथ्ययोः पूर्वाभ्यामेव शंय्विडाभ्यां संस्थाधिकरणम् ॥१३

**उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४३ ॥**

अस्ति ज्योतिष्टोमः। तत्रेदमाम्नायते। षडुपसद उपसाद्यन्ते इति। ता प्रकृत्य आमनन्ति। अप्रयाजास्ता अननुयाजा इति। तत्र संशय। किं यावत् प्रतिषिद्धं तावन्न कर्त्तव्यम्, अन्यत् सर्वं कर्त्तव्यम्, अथ यावदुपदिष्टं तावत् कर्त्तव्यम्, अन्यत् सर्वं न कर्त्तव्यम्। अथापूर्वा उपसद? इति। किं प्राप्तम्। उपसत्सु यावदुक्तं न कर्त्तव्यम्। अप्रयाजास्ता अननुयाजा इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दोऽविशिष्टांश्चोदकप्राप्तान् न वारयति। तस्मादविशिष्टं सर्वं कर्त्तव्यमिति ॥ ४३ ॥ पूर्व० ॥

**स्रौवेण वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४४ ॥**

न चैतदस्ति, प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यमिति। यावदुपदिष्टं कर्त्तव्यम्। स्रौवेण आघारेण सर्वमन्यत् परिसङ्ख्यायते।

अविशिष्टो ह्यसौ स्रौव आघारः पुनराम्नायते । न तत्र कश्चिद् गुणो विशिष्टः श्रूयते । तस्मात्तेन तत् परिसङ्ख्यायते ॥ ४४ ॥ पूर्व० ॥

अप्रतिषिद्धं वा प्रतिषिद्ध्य प्रतिप्रसवात् ॥ ४५ ॥

न चैतदस्ति– यावदुक्तं कर्त्तव्यम्, अवशिष्टं नेति । किन्तर्हि । सर्वं कर्त्तव्यं प्रतिषिद्धं वर्जयित्वेति । एवं हि श्रूयते, अप्रयाजास्ता अननुयाजास्ता इति । एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य बाधको भवितुमर्हति । यदुक्त, निर्गुणं स्रौवाघारश्रवणमिति । प्रतिप्रसवोऽयं न परिसङ्ख्या । एवं श्रूयते, नान्यामाहुतिं पुरस्ताज्जुहुयाद् यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् स्रुवेणाघारमाघारयतीति, नान्यामाहुतिं पुरस्ताज्जुहुयात् प्राकृतिकीऽय. । एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखं, यदन्यामाहुतिमौपसदीमग्न्यादिकां जुहुयादन्यन्मुखं कुर्यात् । तस्मात् स्रुवेणाघारयतीति । आघारादिकान्याहुतीर्जुहोतीत्याघारादीनामभावमाशङ्क्य पुनः प्रतिप्रसवोऽयम् । आघारमाघारयति इति, नान्यत् करोति । किन्तर्हि, आघारयति, न नाघारयतीति । तस्मान्न परिसङ्ख्या । प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यमिति ॥ ४५ ॥ पूर्व० नि० ॥

अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥

अथ वा अपूर्वा उपसद , अनिज्या प्राकृतस्य शेषस्य । नित्याऽनुवादोऽयम्, अप्रयाजास्ता अननुयाजा इति । मुख्यदेवतामनभीज्यामुपदिश्य प्रधानदेवता विधीयन्ते । नान्यामाहुतिं पुरस्ताज्जुहुयादाग्नेय्या अग्निर्हि मुखमित्यभिधाय, यदन्यामाहुतिं पुरस्ताज्जुहुयाद् वैकृतीमन्यन्मुखं कुर्यादाग्नेय्या अग्निर्हि मुखं स्रुवेण आघारमाघारयति नान्य यजते अग्निमनीकं सोमं शल्यं विष्णुतेजनमिति । तदेतदाघारेण निराकाङ्क्षीकृतं, नान्येन प्रकृताङ्गेन सहैकवाक्यतामेति । अतः प्राप्ता मुख्यदेवता अनभीज्या अत्रोपदिश्यन्ते नान्यं यजाति । तस्मादग्निः प्रथम इज्यते इति ॥ ४६ ॥ ॥ सि० ॥ षडुपसद उपसाद्यन्ते इत्यादिना अपूर्वोपसत्कर्मविधानाधिकरणम् ॥ १४ ॥

अवभृथे बर्हिषः प्रतिषेधाच्छेषकर्म स्यात् ॥ ४७ ॥

अस्ति ज्योतिष्टोमेऽवभृथः वारुणेनैककपालेनाभृथमभ्यवयन्तीति । तत्रैतदाम्नायते । अपबर्हिष प्रयाजान् यजाति । अपबर्हिषौ

अनुयाजौ यजतीति । तत्रैषोऽर्थः सांशयिकः । किं बर्हिर्मात्रं वर्जयित्वा अन्यत् सर्वं कर्त्तव्यम् ? उत, आज्यभागाभ्यामन्यत् परिसङ्ख्यायते । अथ वाऽपूर्वोऽवभृथ इति । किं प्राप्तम् । बर्हिर्मात्रं वर्जयित्वा शेषकर्म स्यात् । कुतः ? । बर्हिःप्रतिषेधात् । अपबर्हिषौ अनुयाजौ यजतीति बर्हिर्मात्रं प्रतिषिद्ध्यकृतार्थः शब्दोऽन्यच्चोदकप्राप्तं न शक्नोति वारयितुम् । तस्मादन्यत् स्यादिति । ननु आज्यभागौ यजतीति परिसङ्ख्यार्थं ग्रहणम् । अप्सुमन्तावाज्यभागौ यजतीति गुणार्थं तन्मन्यते स्म ॥ ४७ ॥ पूर्व० ॥

## आज्यभागयोर्वा गुणत्वाच्छेषप्रतिषेधः स्यात् ॥ ४८ ॥

न चैतदस्ति, शेषकर्म कर्त्तव्यमिति । किन्तर्हि शेषप्रतिषेधः स्यात् । कुतः । आज्यभागयोः श्रवणात् । अप्सुमन्तावाज्यभागौ यजतीति । ननु अप्सुमत्तागुणकविधानार्थं तदित्युक्तम् । नेत्याह । लिङ्गक्रमाभ्यां प्राप्तावेव अप्सुमन्तौ, अप्स्वग्ने सधिष्टव अप्सु मे सोमो अब्रवीदिति । ताभ्यामेतौ आज्यभागौ अप्सुमन्तावेव, निर्गुणमेवेदं वचनमितरेषामङ्गानां परिसङ्ख्यायकं भवितुमर्हति । यत्तु, अपबर्हिषः प्रयाजान् अपबर्हिषौ अनुयाजौ यजतीति । परिसङ्ख्यातानां प्रयाजानाम् अनुयाजयोश्च विधानार्थं भवतीति । तस्माच्छेषाणामेवाङ्गानां परिसङ्ख्येति ॥ ४८ ॥ पूर्व० ॥

## प्रयाजानां त्वेकदेशप्रतिषेधाद् वाक्यशेषत्वं तस्मान्नित्यानुवादः स्यात् ॥ ४९ ॥

तुशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, परिसङ्ख्येति । त्रिदोषा परिसङ्ख्या इत्युक्तम् । किञ्च, अपबर्हिषः प्रयाजान् यजतीति वाक्यशेषो नावकल्पते । यदि प्रयाजान् यजतीत्येष विधिस्तदा बर्हिःप्रयाजोऽपि प्राप्नोति । तत्र अपबर्हिष इत्येतन्नोपपद्यते । अथ बर्हिषः प्रतिषेधः । प्रयाजानां विधिर्नावकल्पते । तत्राप्राप्तस्य बर्हिष प्रतिषेधोऽनुपपन्नः । उभयविधाने वाक्यं भिद्येत । वाक्यशेषो नोपपद्यते । एकश्चेदं वाक्यम् । तस्मान्न शेषपरिसङ्ख्या ॥ ४९ ॥ पूर्व० नि० ॥

## आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत् स्यात् ॥ ५० ॥

अथ वा अपूर्वोऽवभृथः । यद्वद् गृहमेधीयः, तद्वत् स्यात् । आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यामेकवाक्यतामित्वा निराकाङ्क्षो नान्यैः प्राकृतैरेकवाक्यतामेति । तस्मादपूर्वोऽवभृथ इति ॥५०॥ सि०॥ वारुणेनैककपालेनेत्यादिना अपूर्वस्यावभृथस्य विधानाधिकरणम्॥१५

## विरोधिनामेकश्रुतौ नियमः स्याद् ग्रहणस्यार्थवत्त्वाच्छरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥

अस्ति वाजपेय, शरदि वाजपेयेन स्वाराज्यकामो यजेतेति । अत्र श्रूयते । खादिरो यूपो भवतीति । तत्र संशयः । किं खादिरो वा, पालाशो वा, रौहितको वा ? उत खादिर एवेति । तथाऽन्यत्र श्रूयते, बृहत् पृष्ठं, भवतीति । तत्र संशयः । किं बृहद्वा पृष्ठं, रथन्तरं वा ? उत, बृहदेवेति । त्रैधातव्यायां श्रूयते, यवमयो मध्यम इति । तत्र संशयः । किं यवमयो वा, व्रीहिमयो वा ? उत यवमय एवेति । सर्वेष्वेषु किं प्राप्तम् । विरोधिनामन्यतमस्मिञ्छ्रूयमाणे नियमः स्यात् । खादिर एव यूपः, बृहदेव पृष्ठं, यवमय एव मध्यम इति । कुतः । ग्रहणस्यार्थवत्त्वात् । एवं बृहत्खदिरयवानां ग्रहणमर्थवद्भविष्यति, इतरथा प्राप्तानुवादमात्रमनर्थकं स्यात् । श्रुत्या विशिष्टाः खदिरादयश्चोदकप्राप्तान् पलाशादीन् बाधेरन् । शरवत् । यथा शरमयं बर्हिर्भवतीति शरेषु श्रुतेषु कुशा निवर्त्तन्ते, एवमिहापीति ॥ ५१ ॥ सि० ॥

## उभयप्रदेशान्नेति चेत् ॥ ५२ ॥

इति चेत् पश्यसि, उभयं हि प्रदिशति चोदकः, खादिरं पालाशञ्च, बृहद् रथन्तरञ्च, व्रीहीन् यवांश्च । केनेदानीं चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्त्तिताः ? । खदिरग्रहणमशक्तं परिसङ्ख्यातुम् । त्रिदोषत्वात् परिसङ्ख्याया इत्युक्तम् । तस्मान्न नियमो विकल्प एवेति ॥ ५२ ॥ पूर्व० ॥

## शरेष्वपीति चेत् ॥ ५३ ॥

यद्युभयप्रदेशादुभयं भवतीत्यध्यवसीयते, शरेष्वपि श्रुतेषु कुशा नैव निवर्त्तेरन्निति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति स्म ॥ ५३ ॥ आ० ॥

विरोध्यग्रहणात्तथा शरेष्विति चेत् ॥ ५४ ॥

इति चेत् पश्यासि, एष न्याय उच्यमानः शरेष्वपि दोषं प्रसञ्जयतीति । न शरेषु किञ्चन दोक्ष्यति । तत्र कुशा निवर्त्तन्त इति तथा स्यात् । कुतः । विरोध्यग्रहणात् । न हि विरोधिषु शरेषु अङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेनोपादातुम् । तस्मात् कुशा निवर्त्तन्ते इति ॥ ५४ ॥ आ० नि० ॥

तथेतरस्मिन् ॥ ५५ ॥

तथा इतरस्मिन्नपि खदिरादौ विरोधिनि अङ्गीक्रियमाणे न शक्याः पलाशादयोऽङ्गत्वेनोपादातुम् । तस्मान्निवर्त्तिष्यन्त इति ॥५५॥ आ० ॥

श्रुत्यानर्थक्यमिति चेत् ॥ ५६ ॥

इति चेत् पश्यसि, विरोध्यग्रहणात् पलाशादीनां निवृत्तिर्भविष्यतीति । चोदकश्रुतेरानर्थक्यं स्यात् । प्रापयति हि चोदकः पलाशादीनि । स हि तुल्यः खदिरादिषु पलाशादिषु वा । तदुक्तम्-अग्रहणादितिचेन्न तुल्यत्वादिति । न च शक्यं वक्तुं, खदिरादिभिः प्रयोगवचन एकवाक्यतामेतीति बध्नाति । प्रयोगवचनेन हि स श्रूयमाणः परम्परया पशुयागं यास्यतीति । अथेदानीं यागप्रयोगवचनस्तद्विशिष्टान् यागान् यास्यति । तेषु पलाशादयो विशेषाश्चोदकप्राप्ता न खदिरादिभिर्निवर्त्तिताः । तस्माद्विकल्प इति॥५६॥ आ०नि० ॥

ग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात् ॥ ५७ ॥

बध्नाति, प्रयोगवचनो हि प्रत्यक्षश्रुतेन खदिरेणैकवाक्यतामेति । तस्मिन् निराकाङ्क्षे न पलाशः प्रवर्त्तिष्यते । तस्मात् खदिरविशिष्टः पशुयागो यागप्रयोगवचनेन गृहीतो, न पलाशविशिष्टः । तस्मात् खदिरस्यैव वृत्तिर्नोभयोः । एवं रथन्तरे यवमये च । तस्मात् खदिरादीनां नियमः । नैष पलाशादिभिर्विकल्प इति ॥ ५७ ॥ उत्तरम् ॥ वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् ॥ १६ ॥

सर्वासाञ्च गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्ते स्यात् ॥ ५८ ॥

काम्या इष्टयः श्रूयन्ते । आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं ब्रह्मवर्चसकामः, ऐन्द्र-

मेकादशकपालं निर्वपेत् प्रजाकाम इति । तत्रैतेषु यागेषु अयमर्थः सांशयिकः । किं प्राकृतं द्रव्यदेवतं निवर्त्तते ? उत न निवर्त्तते इति । सर्वासामेवञ्जातीयकानां चोदनानामुत्पन्नानां द्रव्यदेवतेनैव सहोत्पत्तिः । तस्योत्तरकालं चोदकः । तस्मादगृहीतद्रव्यदेवते चोदकेन, विधिनैव प्राप्ते द्रव्यदेवतं प्रति निराकाङ्क्षे यागे अवशिष्टानि अङ्गानि चोदक· प्रापयिष्यतीति । अथ यदुक्तम्, अग्रहणाद् ग्रहणम् ( १० । ७ । ३० सूत्रे ) इति । तदिह सिद्धम् ॥ ५८ ॥ सि० ॥

## अधिकं स्यादिति चेत् ॥ ५९ ॥

इति चेत् पश्यसि, विधिना प्राप्तत्वादवशिष्टानि चोदकः प्रापयिष्यतीति । नैतदेवम् । अधिकं स्यात् । उक्तमेतत् ( १० । ७ । ६१ सूत्रे ) तुल्यश्चोदकः सर्वेषु अङ्गेषु । न हि स पदार्थमाकाङ्क्षति । पदार्थकृतं प्रकारमाकाङ्क्षति, तस्माद् द्रव्यदेवतमपि चोदक प्रापयति । प्राप्ते वचनप्रामाण्यादधिकं भविष्यति । एकं वचनप्रापितम्, अन्यच्चोदकेनेति ॥ ५९ ॥ पूर्व० ॥

## नार्थाभावात् ॥ ६० ॥

नैतदेवम्, अधिकं कर्त्तव्यमिति । कुतः । अर्थाभावात् । प्रयोजनाभावादित्यर्थः । सत्यं चोदकप्राप्तं प्रत्यक्षश्रुत्या न प्रतिषिद्धं द्रव्यदेवतं, किन्तु परार्थं तद् यागनिर्वृत्तये । स च याग एकेनैव द्रव्येणैकया देवतया निर्वर्त्तयितव्य श्रूयते । आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इत्येवमादि । तस्मिन् सहायापेक्षे कल्प्यमाने निर्देशो बाध्येत । अथ तेन निवर्त्तते, चोदकप्रापितस्य न किञ्चिदस्ति प्रयोजनमिति तच्छ्रुतमपि सिद्धत्वात् प्रयोजनस्य, न करिष्यते ॥ ६० ॥ उत्तरम् ॥ काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम् ॥ १७ ॥

## तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात् ॥ ६१ ॥

क्वचित् कर्मविशेषे श्रूयते, औदुम्बरो यूपो भवति । तत्र संशयः । किं प्राकृतमत्र यूपद्रव्यं बाध्यते ? उत प्राप्यते इति । किं प्राप्तम् । एकार्थविकारे अस्मिन् औदुम्बरे, एकार्थश्चासौ खदिरादिभिः, विकारश्च । तत्र प्राकृतस्य खदिरादेरप्रवृत्तिः । यथा प्राकृतस्य द्रव्यदेवतस्य पूर्वस्मिन्नधिकरणे । तथाऽस्मिन् खादिरस्य यूपद्रव्यस्याप्रवृत्तिः ।

प्रवृत्तौ हि तस्य विषमशिष्टो विकल्पः स्याच्चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च । न चैष न्याय्यः । तस्मादप्रवृत्ति ॥ ६१ ॥ सि० ॥

**यावच्छ्रुतीति चेत् ॥ ६२ ॥**

इति चेत् पश्यसि, विकल्पः सदोष इति । समुच्चयो भवतु । उभयस्मिन् सह नियुज्यतां पशुः । तदा चोदकानुग्रहो भविष्यति ॥ ६२ ॥ पूर्व० ॥

**न प्रकृतावशब्दत्वात् ॥ ६३ ॥**

नैतदेवं, केवले हि औदुम्बरे नियोजनं श्रूयते, केवले खादिरे प्रकृतौ, खादिरे बध्नातीति । उभयस्मिंश्च बन्धनद्रव्यं न प्राकृतं वाक्यं, न च प्रत्यक्षश्रुतम् । तेन समुच्चयस्य प्रमाणमेव नास्ति । अतः प्राकृतं यूपद्रव्यं निवर्त्तते इति ॥ ६३ ॥ उत्तरम् ॥ सौमापौष्णपशौ खादिरयूपस्य नियमाधिकरणम् ॥ १८ ॥

**विकृतौ त्वनियमः स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥**

सौमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्, नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणां, सौर्य्यं चरुं निर्वपेच्छुक्लानां व्रीहीणामिति । तत्र संशयः । किं व्रीहिभिर्यवैर्वा यष्टव्यम्, उत व्रीहिभिरेव । किं प्राप्तम् । विकृतौ तु विरोधिनामन्यतमस्मिन् गृह्यमाणे अनियमः स्यात् । व्रीहिभिर्यवैर्वेति । कुतः । ग्रहणस्य गुणार्थत्वात् । तस्य हि व्रीहेर्ग्रहणं गुणार्थं, न यागसम्बन्धार्थम् । शुक्ला व्रीहयो भवन्ति, यागस्तूभाभ्यामपीति । यथा पृषदाज्येनानुयाजान् यजतीति आज्यं पृषत्तासम्बन्धार्थं भवति । एवमिहापि व्रीहयः शुक्लगुणसम्बन्धार्थाः, न यागसम्बन्धेन अन्यपरिसङ्ख्यानार्थाः । तथा यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्य्या इत्येतच्छ्रवणमुपपद्यते । यद्येवञ्जातीयकेन प्राकृतं न निवर्त्येत । ततः पञ्चावत्तेन चतुरवत्तेऽनिवर्त्तिते यद्यपि चतुरवत्ती इति दर्शनं युक्तं भवति । न चानर्थको गुणोपदेशो भवति । उभयोः प्रदिष्टत्वात् । उभये व्रीहियवाश्चोदकेन प्राप्ता विकल्पन्ते । यदा व्रीहयः, तदा गुणशास्त्रम् । अव्रीहिपक्षे

असम्भवादर्थान्निवर्त्तेत । तस्माद्विकल्प इति ॥ ६४ ॥ पूर्व० ॥

ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥६५॥

एकार्था हि व्रीहियवाः । तत्र व्रीहीणां श्रुतत्वाद् यवा नैव प्राप्नुवन्ति । ननूक्तं गुणसम्बन्धार्था हि व्रीहय इति । नैतदेवम् । यदि गुणसम्बन्धार्था भवेयुस्ततो न नियमः स्यात् । न तु गुणसम्बन्धार्था. । विकारसम्बन्धे हि षष्ठी भवेद् व्यतिरिक्ते प्रातिपदिकार्थे । तेन विकारविशेषणं श्रुत्या भवति, गुणविशेषणं वाक्येन । श्रुतिश्च वाक्याद्बलीयसीति । तस्माच्छ्रुत्या व्रीहयो यागेन सम्बद्ध्यमानाः समानार्थान् यवान्निवर्त्तयेयुः ॥ ६५ ॥ सि० ॥

विरोधित्वाच्च लोकवत् ॥ ६६ ॥

विरोधिनश्चैते । कथम् । ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति । विरोधिनाञ्च न सहप्रवृत्ति' । लोकवत् । यथा, मत्स्यान् न पयसा समश्नीयादिति । यद्यपि सगुणा मत्स्या भवन्ति तथापि पयसा सह न समश्यन्ते । तस्मात् सगुणा अपि व्रीहयो यवान्निवर्त्तयन्त्येव ॥ ६६ ॥ युक्तिः ॥

क्रतोश्च तद्गुणत्वात् ॥ ६७ ॥

यदि व्रीहीणां विकारेण सम्बन्धः, कथमेषां गुणेनापि सम्बन्धो भविष्यति ? इति । अत्रोच्यते । नैवैषां गुणेन सम्बन्ध. श्रुत्या वाक्येन वा, नापि गुणस्य व्रीहिभि । कथं तर्हि । क्रतोस्तद्गुणत्वात् । क्रतुरयं शुक्लगुणः श्रूयते, कृष्णगुणश्च । तत्रैकवाक्यत्वादेकस्मिन् क्रत्वावर्थेन द्रव्यगुणौ सम्बद्ध्येते । तेनार्थभेदोऽपि परिहृतो भवति ॥ ॥ ६७ ॥ आ० नि० ॥

विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद्विकल्पः स्यात्॥६८॥

विरोधिनाञ्च अन्यतमस्मिन् प्रत्यक्षे श्रूयमाणेऽन्यस्मिँश्च चोदकप्राप्ते अशब्दत्वात् प्रत्यक्षे विरोधिनि सति चोदकस्यान्याय्यो विकल्प. स्यात् । तस्मादपि नियम ॥ ६८ ॥ युक्तिः ॥

पृषदाज्ये समुच्चयाद् ग्रहणस्य गुणार्थत्वम् ॥ ६९ ॥

पृषदाज्ये तु युक्तम् । न हि तत्र केनचिद्विरोध आज्यस्य । तेन

न पाक्षिकमाज्यम् । ततस्तत्र दध्ना आज्यसमुच्चयः । यतः पृषदाज्यसञ्जननार्थं दधि । तेन न पाक्षिकं दधि आज्येन च समुच्चय इति ॥ ॥ ६९ ॥ आ० नि० ॥

**यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ७० ॥**

अथ यदुक्तं, यद्येवञ्जातीयकेषु नियमो भवेत्, यद्यपि चतुरवत्ती इति चतुरवत्तदर्शनं नोपपद्यते इति । तत् परिहर्त्तव्यमिति ॥७०॥आ०

**क्रत्वन्तरे वा तन्न्यायत्वात् कर्मभेदात् ॥ ७१ ॥**

क्रत्वन्तरे एव वा, दर्शपूर्णमासयोश्चतुरवत्तदर्शनं भविष्यति । यद्यपि दर्शपूर्णमासयोश्चतुरवत्ती यजमान, तथापि पञ्चावत्तैव वपा भवतीति, अन्यस्मिन् कर्मणि चतुरवत्तम । अन्यस्मिन् पञ्चावत्तम् । यद्यप्येवञ्जातीयकेषु नियमस्तथापि चतुरवत्तदर्शनमुपपद्यत इति ॥ ॥ ७१ ॥ आ० नि० ॥ ब्रह्मवर्चसकामैर्व्रीहिभिरेव यागाधिकरणम् ॥१९

**यथाश्रुतीति चेत् ॥ ७२ ॥**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीय पशुमालभते इति । तत्रेदमाम्नायते, यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्येति । तत्रैषोऽर्थ सांशयिकः । किं वपायां श्रूयमाणं पञ्चावत्तमङ्गाऽपूर्वे चतुरवत्तं निवर्त्तयति ? उत नेति । किं प्राप्तम् । इति चेत् संशयः, न इति । कुत । यस्मिन् श्रूयते पञ्चावत्तं तत्रैव चतुरवत्तं निवर्त्तयति, नान्यत्र । यथा क्रत्वन्तरे न निवर्त्तयति, । एवमङ्गापूर्वेष्वपि पञ्चावत्तश्रुतिर्न निवर्त्तयितुमर्हति ॥७२॥पूर्व०

**न चोदनैकत्वात् ॥ ७३ ॥**

नैतदेवम् । एका ह्येषा चोदना, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति । तत्र प्रकरणे पञ्चावत्तं श्रुतम् । अतः प्रकरणादङ्गापूर्वे भविष्यति । आह । ननु वाक्याद्वपायां भवितुमर्हतीति । नेत्युच्यते । वपा हि द्रव्यम् । न तत्सम्बन्धे प्रयोजनमस्तीति । उच्यते । पञ्चावत्ततां वपाप्रयोगवचन उपसंहरिष्यति । तथा न दोषो भविष्यतीति । अत्रोच्यते । एवं सत्यपि अङ्गापूर्वे पञ्चावत्तं सिद्ध्येत् । कथम् । एका हि सा चोदना । अङ्गयागो वपायागश्च । तेन चेत् पञ्चावत्तं सम्बद्ध्येत, तदा अङ्गेष्वपि भवितुमर्हति । ननु च वपासम्बन्धाद् वपैव पञ्चावत्ता, नाङ्गानीति । उच्यते । नैतदेवं वचनं, वपैव पञ्चा-

वपेति । कथन्तर्हि । पञ्चावत्तैव वपेति । यत एवकारकरणं ततोऽन्यत्रावधारणम् । न चाविशेषेण या पञ्चावत्तप्राप्तिः सा शक्या वपासम्बन्धेन निवर्त्तयितुम् । निवर्त्तकस्य शब्दस्याभावात् । तस्मादङ्गेषु न चतुरवत्तम् ॥ अपि चैवञ्जातीयकेषु अङ्गेषु पञ्चावत्ते जाते ततोऽपरा चोदना । तानि द्विर्द्विरवद्यन्तीति, वपाग्रहणं तत्र हविर्लक्षणार्थं, प्राथम्याद् अवसरप्राप्तं श्रूयते । विधित्सिते हि तस्मिन् वाक्यभेदप्रसङ्गः । तस्मादङ्गेष्वपि पञ्चावत्तमेवेति ॥ ७३ ॥ सिद्धान्तः ॥ पञ्चावत्तैव वपा कार्येत्यनेनाङ्गेष्वपि पञ्चावत्तविधानाधिकरणम् ॥ २० ॥

इति श्रीभट्टशबरस्वामिविरचिते मीमांसाभाष्ये दशमस्याध्यायस्य सप्तमः पादः ॥ १० ॥ ७ ॥

अथ दशमाध्याये अष्टमः पादः ॥ १० ॥ ८ ॥

## प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात् ॥ १ ॥

प्रतिषेधः श्रूयते चोदकेन प्रदिष्टे धर्मे कचिद् अनारभ्यवादेन प्राप्ते । चोदकेन प्रदिष्टे महापितृयज्ञे, न होतारं वृणीते नार्षेयमिति । तथा, अनारभ्यवादेन प्राप्ते, ओश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः सप्तदशो यज्ञेषु अन्वायत्त इति । ततो नानुयाजेषु ये यजामहं करोतीति । तत्रायमर्थः सांशयिकः । किं प्रदेशानारभ्यवादयोः प्रतिषेधः, स च विकल्पः ? उत पर्युदास इति । किं प्राप्तम् । विकल्प इति । प्राप्तिप्रतिषेधयोः प्रमाणवत्त्वात् । उभौ हि प्राप्तिप्रतिषेधौ प्रमाणवन्तौ । प्राप्तिस्तावत् प्रमाणवती । महापितृयज्ञेन यजेत प्रकृतिवदिति । तथा, एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्त इति भवति वाक्यं प्राप्तेः, प्रतिषेधमनपेक्ष्यमाणं प्रमाणभूतम् । तथा, प्रतिषेधः प्रमाणवान्, न होतारं वृणीते नार्षेयं, मृत्योरेवैनानुत्सृजतीति । तथा, नानुयाजेषु ये यजामहं करोतीति । सर्वेषु यजिषु ये यजामहक्रिया प्राप्ता, न करोत्यनुयाजेष्विति प्रतिषिध्यते । ये यजामहः कर्त्तव्य इतिवचनात् सयेयजामहकः प्रयोगः फलवानिति गम्यते । न कर्त्तव्यो ये यजा-

महे इति वचनाद्येयजामहंकः प्रयोग फलवानिति गम्यते । उभयोः प्रामाण्यादुभयथापि फलमिति गम्यते । तस्माद् विकल्पः । एवं होत्रार्षेयवरणेऽपि । तस्मात् प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ॥१॥ पूर्व०

अर्थप्राप्तवदिति चेत् ॥ २ ॥

इति चेद् अवगम्यते, विकल्पः स्यादिति । तन्न । अर्थप्राप्तवत् स्यात् । तद्यथा लोके अर्थप्राप्ते यत्र प्रतिषेधो भवति, न विषं भक्षयितव्यं, न सर्पाय अङ्गुलिर्देया, न कण्टकः पादेनाऽधिष्ठेय इति । अक्रियैव तस्यार्थस्य भवति, न विकल्पः । तेन मन्यामहे, विधिप्रतिषेधयोः प्रतिषेधो बलीयानिति । प्राप्ते हि विधौ प्रतिषेधो भवति । येन च नाम प्राप्ते यदुच्यते तत् तस्य बाधकं भवति । तस्मादक्रियैवानुयाजेषु ये यजामहस्य, महापितृयज्ञे च होत्रार्षेयवरणस्येति ॥ २ ॥ आ० ॥

न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥

नैतदेवम् । तुल्यो हि हेतुरिह प्राप्तेः प्रतिषेधस्य च । उभयं शब्दलक्षणं, प्राप्तिरपि प्रतिषेधोऽपि । प्राप्तिरपि प्रतिषेधे प्राप्ते, प्रतिषेधोऽपि प्राप्तौ प्राप्तायाम् । लोके पुनरुभयम् अर्थलक्षणं प्रत्यक्षतो गम्यमानं गुणदोषकरम् । तत्र विधिप्रतिषेधयोर्यतरो गुणवान् सोऽनुष्ठीयते । न तु शब्दलक्षणे गुणदोषौ शक्येते अवगन्तुम् । तस्माद् यद्यद् वाक्येन प्राप्तं, तत्तदुभयमवधार्येत । उभौ च प्राप्तिप्रतिषेधौ प्राप्नुत । तस्माद् विकल्पस्तत्र तत्रेति ॥ ३ ॥ आ० नि० ॥

अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥

अपि त्विति पक्षव्यावृत्तिः । वाक्यशेष प्रतिषेध प्रदेशानारभ्यवादयो । नैवमभिसम्बन्धः, अनुयाजेषु ये यजामहो न कर्त्तव्य इति । कथन्तर्हि । नानुयाजेष्विति, नशब्दोऽनुयाजशब्देन सम्बद्ध्यते, न करोतिना । किमतो, यद्येवम् । नानुयाजेष्वित्येतावदपरिपूर्णं वाक्यम् । तत्साकाङ्क्षं पूर्ववाक्यैकदेशेन सम्भन्त्स्यते । यदेतद् ये यजामहं करोतीत्युक्तं, तद् नानुयाजेषु । यावदुक्तं स्यात् । अनुयाजवर्जितेषु यजतिषु ये यजामहं करोतीति । तस्माद्विधिरेव पर्य्युदस्तानुयाजको, नास्ति प्रतिषेध इति न विकल्पो भविष्यति । महापितृयज्ञेऽपि

प्रकृतिवदितिवचनाद् होत्रार्षेयवरणमिह कर्त्तव्यं प्राप्तम् । तदुच्यते । प्रकृतिवत् कर्त्तव्यं, वरणं वर्ज्जयित्वेति । नशब्दोऽत्र वृणोतेरर्थेन सम्बध्यते । प्रत्ययार्थस्तु अनुवादः । यदत्र प्रकृतिवत् कर्त्तव्यं तद् वरणं वर्जयित्वेति ॥

किमर्थं पुनरनुयाजैर्वृञ्धात्वर्थेन च नशब्दः सम्बध्यते इति । उच्यते । अन्याय्यत्वाद्विकल्पस्य । अन्याय्यो हि विकल्पः । कथम् । इह यजतिषु ये यजामहं करोतीत्युच्यते । यद्येवमवगम्यते, न शक्यः स विना ये यजामहेन यजतिरभिनिर्वर्त्तयितुम् । तत्र प्रतिषेधवचनमनर्थकम् । प्रतिषेधेऽपि विज्ञाते विधिवचनमनर्थकम् । तस्मादन्याय्यो विकल्पः । नन्वन्यतरस्य विधेरानर्थक्यप्रसङ्गाद्विकल्प आश्रयणीयो भवति । उच्यते । यत्रान्यतरदानर्थक्यमापद्यते, कल्पेताऽपि तत्र विकल्पः, यत्र न केनचिदपि प्रकारेणार्थवत्ता सम्भवति । इह तु अनुयाजसम्बन्धपर्युदासेनार्थवत्ता । तस्मान्न विकल्पः ॥

आह । नन्वनुयाजसम्बन्धे नशब्दस्य समासः प्राप्नोति । नित्यो हि अस्य नशब्दस्य सुबन्तसम्बन्धेन समास इति वार्त्तिककारो भगवान् कात्यायनो मन्यते स्म । वावचनानर्थक्यञ्च स्वभावसिद्धत्वादिति । नेति भगवान् पाणिनिः । स हि विभाषा इति प्रकृत्य ईदृशं समासमुक्तवान् । सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम् । असद्वादित्वान्न कात्यायनस्य । असद्वादी हि विद्यमानमपि अनुपलभ्य ब्रूयात्। तस्मात् पर्युदास इति ॥ ४ ॥ सिद्धान्तः ॥ प्रदेशानारभ्यविधानयोर्निषेधस्य पर्युदासताधिकरणम् ॥ १ ॥

## अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

स्तो दर्शपूर्णमासौ, तत्राज्यभागौ प्रकृत्य समामनन्ति, न तौ पशौ करोति न सोमे इति । तत्रायमर्थः सांशयिकः । किं पर्युदासः, उत प्रतिषेधः, अथवाऽर्थवादः ? इति । किं प्राप्तम् । यथा पूर्वत्र पर्युदासस्तथा तावत् पर्युदासो नावकल्पते । कथम् । दर्शपूर्णमासयोरतच्छ्रूयते । तत्र कः प्रसङ्गो यत् सोमे स्यात् । यदि सोमः पर्युदस्येत, सम्बन्ध एव न स्यात् । सोमवर्जितयोर्दर्शपूर्णमासयोरिति । तस्माच्चोदकप्राप्तयो सोमे प्रतिषेधः । नन्वपूर्वः सोमः । नैव तत्र चोदकेनाज्यभागौ प्राप्नुतः । उच्यते । लक्षणार्थः सोमशब्दो भविष्य-

ति । सौमिकेषु दीक्षणीयादिषु पशुबन्धमात्रे च न कर्त्तव्याविति ॥

एवं प्राप्ते ब्रूमः । अपूर्वे चार्थवादः स्यादिति । अपूर्वे सोमे नैव आज्यभागौ प्राप्नुतस्तस्मान्न प्रतिषेधः । अथ दीक्षणीयादीन् सोमशब्दो लक्षयति । तत्रायमेव दोषो भवति यल्लक्षणा । अपि च प्राप्तप्रतिषिद्धत्वाद्दीक्षणीयादिषु विकल्पः प्राप्नोति । विकल्पश्चान्याय्य इत्युक्तम् । तस्मादसम्भवति अस्मिन् विकल्पो भविष्यति । सम्भवति चायं, तौ न पशौ करोतीत्यस्यार्थवादत्वेन । कः पुनरत्र ? । प्रशंसार्थः । सोमे आज्यभागौ न क्रियेते पशावपीति । तद्यथा आदित्यो यूप इति अञ्जने कृते तेजःसामान्यादुच्यते । एवमिहापि पशौ आज्यभागौ कथं न क्रियेयातामिति । तदर्थो प्रशंसेति ॥ ५ ॥ न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताऽधिकरणम् ॥ २ ॥

## शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

आह । प्रथमेऽधिकरणे नशब्दः पर्युदासार्थः, द्वितीये त्वर्थवादार्थः । अथ किंलक्षणकः प्रतिषेध इति । लक्षणमुच्यते । शिष्ट्वा तु प्रतिषेधः स्यात् । यथा नातिरात्रे गृह्णाति षोडशिनमिति । न तत्र शक्यं वक्तुं पर्युदास इति । सम्बन्ध एव हि न स्यात् । अतिरात्रवर्जितातिरात्रे गृह्णाति षोडशिनमिति । नापि कस्यचिदर्थवादत्वेन सम्भवति । तस्माद् न गृह्णातीत्यत्र सम्बन्धः ॥

ननु परस्परं विरुद्धौ विधिप्रतिषेधौ न सम्भवतः । उच्यते । वचनप्रामाण्यात् प्रतिषेधो विधिं बाधित्वा भविष्यति । विधिरपि प्रतिषेधम् । नान्या गतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते । तदा विधिर्यदा न प्रतिषेधः, तदा प्रतिषेधो यदा न विधिरिति । ननु सर्वदा विधिः प्रतिषेधश्च प्राप्नोति । उच्यते । उक्तमेतद् वचनप्रामाण्याद् विरोधाच्च मिथ्याप्रत्ययः प्रयोगवचन एकं कल्पं गृहीत्वा न द्वितीयमपि गृह्णातीति । तस्मादन्यतरेण कल्पेन सिद्ध्यतीति । ननु कल्पान्तरभावे वैगुण्यम् । अत्रोच्यते । सत्यं वैगुण्यम् । वैगुण्येऽपि तत्सिद्धिरेव वाक्यात् प्रमाणादवगम्यते । तस्माददोषः । यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भवति । यथा नानुयाजेषु ये यजामहं करोतीति ॥ ६ ॥ नातिरात्रे गृह्णाति षोडशिनमित्यादिनिषेधस्य विकल्परूपताधिकरणम् ॥ ३ ॥

**न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च ॥ ७ ॥**

इदं समाम्नायते अग्निहोत्रे, जर्त्तिलयवाग्वा वा जुहुयाद् गवेधुकयवाग्वा वा जुहुयाद् न ग्राम्यान् पशून् हिनस्ति न आरण्यानिति। अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च, गवेधुकाश्च पयसा अग्निहोत्रं जुहुयादिति। अत्र सन्देह । किं जर्त्तिलयवाग्वा गवेधुकयवाग्वा वा जुहोतीति विधि, अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्चेति प्रतिषेधः ? अथ वा उभौ एतावर्थवादार्थौ, पयसा अग्निहोत्रं जुहोतीति विधिः ? इति। किं प्राप्तम्। जर्त्तिलयवाग्वेति विधिः । विधिशब्दस्य प्रत्यक्षत्वात् । अनाहुतिरित्यपि प्रतिषेधः । पयसा अग्निहोत्रं जुहोतीति अपरो विधि., प्रत्यक्षत्वादेव । एवं सति विकल्प. । जर्त्तिलयवाग्वा गवेधुकयवाग्वा वा होतव्यं, न वा ताभ्यां, पयसा होतव्यमिति। न चात्र पर्युदासोऽवकल्पते।न हि नशब्दस्य जर्त्तिलयावाग्वा गवेधुकयवाग्वा वा सामर्थ्यमस्ति । आहुतिशब्देन सह समस्तत्वात् । कल्प्यमाने वा सामर्थ्ये सम्बन्ध एव न स्यात् । अजर्त्तिलयवाग्वा जर्त्तिलयवाग्वा जुहोतीति । अनर्थकश्च पर्युदासे विधिर्भवेत्। कृत्स्नस्य पर्युदस्तत्वात् । क्षीरविधाने च पर्युदासानर्थक्यम्। जर्त्तिलगवेधुकानामप्राप्तत्वात्। तस्माद्विकल्प इति ॥

एवं प्राप्ते ब्रूम. । भवेदर्थप्रतिषेधेन विकल्पः। न चेदन्यं विधिं प्रकल्पयेत्। पयसा अग्निहोत्रं जुहोतीत्यस्य विधेः प्रक्लृप्तौ गवेधुकहोमवचनमनाहुतिवचनमप्यर्थवादार्थं स्यात्। आनर्थक्यात्। अनर्थको हि भवति तदा प्रतिषेध., यदा हि पयसा जुहोति। अर्थादेव तदाऽनाहुतिर्जर्त्तिला गवेधुकाश्च भवन्ति। अथ कथमसावनाहुतिः, या यज्ञे हूयते ?। परसामर्थ्याच्च। परेण च पयसा अग्निहोत्रं जुहोतीत्यनेन विधिना सामर्थ्यं जर्त्तिलगवेधुकविधेः प्रतिषेधस्य च भवति। तस्मात् सर्वमेकं वाक्यम्। कथम् । जर्त्तिलयवाग्वा जुहुयाद् गवेधुकयवाग्वा वा इति साक्षान्निन्दावचनेनैवैतत् सम्बध्यते, अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्चेति या च तन्निन्दा, सा पयोविधिप्रशंसार्था । कथम् । जर्त्तिलगवेधुकाहुतिर्गुणवती। न तत्र ग्राम्याः पशवो हिंस्यन्ते, न आरण्याः । एवमपि गुणवती पयोहोमं

प्रति अनाहुतिरेव । एवं पयोहोमो गुणवत्तर इति । जर्त्तिलयवाग्वा जुहुयादिति न कर्त्तव्यार्थं कीर्त्यते, किन्तर्हि प्रतिषेद्धुम् । कर्त्तव्योपदेशे हि कल्पनीयं किञ्चित् । प्रतिषेधसम्बन्धे प्रत्यक्षानिन्दया इतरस्तुतिः । आनन्तर्य्यानुग्रहश्च । यथा, विषं भक्षयितव्यं न कदाचिदिति विषभक्षणस्य कर्त्तव्यता प्रतिषेधसम्बन्धार्थं कीर्त्यते, नानुष्ठानाय । एवमिहापि द्रष्टव्यमिति ॥७॥ अनाहुतिर्वै जर्तिलाश्चेत्यादिनिषेधस्यार्थवादताधिकरणम् ॥ ४ ॥

पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥

चातुर्मास्येषु त्र्यम्बकानधिकृत्य समामनन्ति, अभिघार्य्याः नाभिघार्य्या इति मीमाम्सन्ते, यदभिघारयेद् रुद्रायास्ये पशूनभिदध्यात् । यन्नाभिघारयेन्न रुद्रायास्ये पशूनभिदध्यात् । अथो खल्वाहुरभिघार्या एव । न हि हविरनभिघृतमस्तीति । तथा, होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यदि जुहुयाद् यथा पूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेत्, तूष्णीमेव होतव्यं, यथापूर्वमाहुतीर्जुहोति, नाग्निः परापततीति । अत्रायमर्थः सांशयिकः । किमभिघारयितव्यास्त्र्यम्बकाः ? उत नाभिघारयितव्या ? इति । होतव्यमग्निहोत्रम् ?, न होतव्यं वा विधिप्रतिषेधावेतौ । इह, नार्थवादार्थमेतयोः सङ्कीर्त्तनम्?इति । किं तावत् प्राप्तम् । विधिप्रतिषेधाविति ब्रूमः । तद्रूपत्वात् । विधिप्रतिषेधयोर्हि प्रत्यक्षं रूपमुपलभ्यते । श्रुत्या चानुष्ठानार्थता प्रतिषेधार्थता चावगम्यते । वाक्यादर्थवादार्थता श्रुतिश्च वाक्याद्बलीयसी । न च पर्युदासोऽवकल्पते । तस्माद् अग्निहोत्रं होतव्यं न होतव्यं वा । यदा होतव्यं, तदा तूष्णीं त्र्यम्बका अभिघारयितव्याः, न वाभिघारयितव्याः । यदा पुनरभिघारयितव्याः, तदाभिघारयितव्यवचनमर्थवादार्थं प्रतिषेधसङ्कीर्त्तनादभावाशङ्कायां पुनरुच्यते इति ॥ एवं प्राप्ते ब्रूमः—

पूर्वाधिकरणोदाहरणैस्तुल्यकालानीमान्युदाहरणानि । का तुल्यकालता । पूर्वं विधिप्रतिषेधावभिधाय उत्तरेण तयोरभिसम्बन्धः क्रियते इति । तदेतत् पूर्वाधिकरणेनैव तुल्यम् । यौ विधिप्रतिषेधौ श्रूयेते, न तौ अनुष्ठातुं वर्जयितुं वा । किन्तर्हि, मीमांसितुम् । एवमाह, अभिघार्य्या नाभिघार्या इति मीमांसन्ते । तथा होतव्यमग्निहोत्रं, न होतव्यमितिमीमांसन्ते ब्रह्मवादिनइतिमीमांसा चेतरविधिप्रशंसार्था ।

तथा प्रत्यक्षः शब्दार्थेन सम्बन्धः । न किञ्चित् कल्पनीयम् । विधिप्रतिषेधयोर्हि किञ्चित् कल्पनीयं स्यात् । यदभिघारयेद् रुद्रायास्ये पशूनभिदध्यादिति । इदमभिघारणं गुणवत्तरं, यद् ईदृशोऽपि दोषो नाद्रियत इति । तथा यज्जुहुयाद् यथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेदितीत्थं तूर्ष्णीं होमः प्रशस्तः । यदस्मिन् क्रियमाणे उभावपि दोषौ परिहृतौ भवत इति ॥ ८ ॥ त्रैयम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम् ॥ ५ ॥

## उपवादश्च तद्वत् ॥ ९ ॥

अस्त्याधानम् । तत्रेदमामनन्ति । य एवं विद्वान् वारवन्तीयं गायति, य एवं विद्वान् यज्ञायज्ञीयं गायति, य एवं विद्वान् वामदेव्यं गायतीति । तत्रेदमाम्नायते । उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायतीति । तत्रायमर्थं सांशयिकः । किमयमुपवादः प्रतिषेधार्थं ? उत पर्युदासार्थ. ? उतार्थवादार्थं ? इति । किं प्राप्तम् । न पर्य्युदासः । ब्रह्मणोऽप्राप्तत्वात् । असतो वचनमर्थवादार्थं भवति । यथा प्रजापतिर्वा एक आसीत् स आत्मनो वपामुदखिदिति ॥ एवं प्राप्ते ब्रूमः । न ब्रह्मण उपवादः कस्यचिदर्थवादः सम्भवति । न च वाक्यान्तरस्थेनार्थवादेन किञ्चिदपि प्रयोजनमस्ति । तस्मादुपवादस्तद्वत् । किञ्च तत् । यथाऽतिरात्रे गृह्णाति षोडशिनमिति, विधाय प्रतिषेधार्थं स्यात् । कथम् । ब्रह्मणो गानं नैव प्राप्तमिति ब्रह्मगानप्रतिषेधार्थं वचनं नावकल्पते । तस्माद् ब्रह्मग्रहणमविवक्षितम् । सामगानप्रतिषेध एवैष स्यात् । ब्रह्मशब्दः प्रमादपाठ इति चेत् । नैतदेवम् । ब्राह्मणवांचित्वादुद्गात्रभिधानं भविष्यति ॥ ९ ॥ सि० ॥

## प्रतिषेधादकर्मेति चेत् ॥ १० ॥

इति चेद् दृश्यते, सामगानस्यैव निन्देति । अकर्म सामगानस्य । न हि निन्दितं कर्त्तव्यं भवतीति ॥ १० ॥ आ० ॥

## न शब्दपूर्वत्वात् ॥ ११ ॥

नैतदेवम् । यथैव हि निन्दया न कर्त्तव्यमिति गम्यते, एवमुपादेयतया कर्त्तव्यमिति गम्यते । न चान्यत् कर्त्तव्यमिति कश्चिद् विधिः प्रकल्पते, यस्य प्रशंसार्थं निन्द्येत । तस्मादनुष्ठातुं विधिः, वर्ज-

यितुमुपवाद इति ॥ ११ ॥ **आ० नि० ॥ आधाने उपवादस्य विकल्पताऽधिकरणम् ॥ ६ ॥**

## दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥

ज्योतिष्टोमे श्रूयते । दीक्षितो न ददाति न जुहोति न पचतीति । अत्रैषोऽर्थः सांशयिकः । किं सर्वदानहोमपाकानां प्रतिषेधः, उताऽक्रतुयुक्तानाम्, अथवा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेध, अथवा पर्युदासः ? इति । किं प्राप्तम् । सर्वदानहोमपाकानां प्रतिषेध । कुत । अविशेषात् । नास्ति विशेषवचन शब्द । तस्मात् सर्वेषां प्रतिषेध इति ॥ १२ ॥ पूर्व० ॥

## अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १३ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न सर्वेषां प्रतिषेधः । केषां तर्हि । अक्रतुयुक्तानां धर्मः स्यात् । कुत । क्रतोः प्रत्यक्षशिष्टत्वात् । प्रत्यक्षं हि श्रुतौ दानादीनां शासनमस्ति । तस्मात् प्रत्यक्षं वर्जयित्वा प्रतिषेधः स्यात् ॥ १३ ॥ पूर्व० ॥

## तस्य वाप्यानुमानिकमविशेषात् ॥ १४ ॥

अपि वा तस्य क्रतोर्यद् आनुमानिकं चोदकप्राप्तं, तत् प्रतिषिद्ध्यते । आनुमानिकं हि तन्नाप्रत्यक्षम् । प्रत्यक्षश्रुतश्च प्रतिषेध ॥ १४ ॥ पूर्व० ॥

## अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ॥ १५ ॥

तुशब्दोऽवधारणायाम् । वाक्यशेष स्यात् प्रतिषेधः । उक्तानामविशेषेण दानादीनां ज्योतिष्टोमिके पर्युदासेन प्रतिषेधो वाक्यशेषः स्यात् । अहरहर्दद्यादित्यस्य शेषो, न दीक्षित इति । एवं होमपाकवाक्ययोरपि । असति पर्युदासे प्रतिषेधे विकल्पः स्यात् । स चाऽन्याय्य इत्युक्तम् । तस्मात् पर्युदास इति ॥ १५ ॥ सिद्धान्तः ॥ दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासताधिकरणम् ॥ ७ ॥

## अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य तत् सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

इदं समामनन्ति ज्योतिष्टोमे, वर्त्मनि जुहोतीति । राजसूये वल्मीकवपामुपगृह्य जुहुयादिति । इदमपि श्रूयते, यद् आहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतो भवतीति । तत्रैषोऽर्थः सांशयिकः । किं ज्योतिष्टोमे वर्त्मनि होतव्यं, राजसूये वल्मीकवपायाम् ? उत विकल्प एतयोराहवनीयेनेति । किं प्राप्तम् । होमार्थत्वात् तावद्वर्त्मवल्मीकवपयो., समुच्चयो न प्राप्त । अन्यतरेण होमनिर्वृत्ते कृतत्वात् । होमर्थता चैतयोः प्रतिज्ञायेत । कुतः । भूतभव्यसमुच्चारणे भूतं भव्यार्थं भवति । न च बाधोऽत्यन्तमेव वर्त्मविषय । आहवनीयहोमोऽपन्हुतो भवति । विकल्पे, पक्षे तावदनुगृह्यते इति ॥ एवं प्राप्ते ब्रूमः । अविशेषेण यच्छास्त्रं तस्य आराद्विशेषशिष्टं स्यात् । यद् विशेषेण शिष्यते, तदस्य दूरं स्यात् । असम्बद्धमित्यर्थः । सन्दिग्धं हि तत् । कथमिव । यदि सामान्यं विशेषलक्षणार्थं, ततो विशेषेऽपि प्राप्तम् । अथ न लक्षणार्थं, ततो न प्राप्तम् । एवं सन्दिग्धम् । अथ वा, सामान्यं विशेषेण विरुद्ध्यत इत्येवं सन्दिग्धम् । अथ वा, सामान्यं तस्मिँश्च विशेषे अन्यस्मिँश्चेत्येवं सन्दिग्धम । तत् सामान्यविधानं विशेषविधौ न स्यात् । किं कारणम् । अन्याय्यत्वाद् विकल्पस्य । कथमन्याय्यो विकल्प । अत्रोच्यते । यदि वर्त्माद्यऽधिकरणता एषु होमेषु श्रूयते, स पक्षे न भवतीति विकल्पमाश्रयता प्रमाणापेता कल्पयितव्या । अथ वर्त्माद्यधिकरणता एषु न श्रूयते, तत पक्षे सा भवतीति प्रमाणापेतैव । वर्त्मग्रहणञ्च श्रूयमाणविवक्षितं स्यात् । अथोच्येत, अर्थात् पक्षेभाव ।स चार्थो होमनिर्वृत्तिराहवनीयेनेति । तन्न । यदि होमनिर्वृत्तिमात्रं कर्त्तव्यम् । ततआहवनीयेनाप्यर्थात् सिद्ध्येत । इह तु वर्त्माद्यधिकरणताऽपि विधीयते । सा आहवनीये उपादीयमाने नोपसह्रियेत । अनुपसंहारे च प्रयोगवचनो बाध्येत ॥ अत्रोच्यते–

यद्यपि वर्त्माद्यधिकरणतापि विधीयते, होमेगुणभूतत्वाद्धोमं समीचीनं करोतीति तत्रानुपसंहारोऽपि न दोष । अधिकरणान्तरेण समीचीनो भविष्यतीति । तस्माद्विकल्प एवेति । नेत्युच्यते । वर्त्मादिहोमसम्बन्धोऽत्र विधीयते । स च प्रधानभूत , न होम । तस्मिन्ननुपसंह्रियमाणे न यथाश्रुतं कृतं स्यात् ॥ अत्रोच्यते । सम्बन्धेऽपि विधीयमाने द्वयं विधीयते । एक साध्यम्, एकं साधनम् । यत् साध्यं, तत्

प्रधानम् । स च होमः । तस्माद् विकल्पः । सम्बन्धेऽपि च श्रूयमाणेऽवश्योपादातव्यो भवति होम । होमश्चेद् आहवनीयं प्राप्नोत्येवेति । तन्न । आहवनीयस्यानङ्गत्वात् । कथमनङ्गत्वम् । विशेषेषु अप्राप्ते । कथमप्राप्ति । वर्त्माद्यधिकरणतायां सत्यामाहवनीयाधिकरणताया ज्ञानं करणं च प्रत्यसम्भवात् । यदि वर्त्माद्यधिकरणमिति ज्ञायते, न तद् आहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा ॥ आह । यथा शक्यते तथा कर्त्तव्यमित्याख्यातार्थो भविष्यति । तस्माद्वर्त्मादि बाधित्वा आहवनीयो भविष्यतीति । उच्यते । स्यादेतदेवं, यदि वर्त्मादिबाधामन्तरेणाहवनीयोपदेशो नावकल्पेत । द्वेधा हि शक्यते कर्तुं, वर्त्मादि बाधित्वा परिहृत्य वा । अत्र बाधायां वर्त्मनीति प्रत्ययोऽपह्नोतव्यो भवति । तस्मात् परिहारः श्रेयानिति । आह । परीहारेऽपि आहवनीयो भवतीति प्रत्ययोऽपह्नूयेत । अपह्नोष्यामहे । भवत्याहवनीयप्रत्ययः । अशक्योऽसौ कर्तुमित्यपि किं न भवति । अशक्यं न करिष्यते । आह । योऽयं सामान्यप्रत्यय उच्यते, स सर्वेषु विशेषेषु कार्यमासञ्जति । एवं चेद्वर्त्मादिहोमेषु चान्यत्र च तेनाहवनीयो विहितः । तत्र, यो वर्त्मादिहोमे आहवनीयप्रत्यय स न शक्यः परिहर्तुमतो वर्त्मादिहोमं बाधित्वाऽवतिष्ठेतेति ॥

अत्रोच्यते । नैतदेवम् । न हि सामान्यवाची शब्दो विशेषानभिवदति । यदि चाभिवदेद्, अद्यजाते गवि नावकल्पेत । पूर्वदर्शनाभावात् । सामान्ये च दृष्टपूर्वत्वादवकल्पते । तस्मान्न सामान्यं विशेषानभिवदति । तस्मान्न वर्त्मादिहोम आहवनीयप्रत्ययः । अभिवदन् वा न मुख्यया वृत्त्याऽभिवदेत् । कथं तर्हि लक्षणया । लक्षणा च श्रुत्या बाध्येत । तस्माद् वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेष्वशक्य आहवनीयो विज्ञातुं कर्तुं चेति ॥ आह । ननु विपरीतमप्येतत् स्यात् आहवनीये प्राप्ते वर्त्मादिप्रत्ययो न शक्य इति । भवेदेवं, किन्तु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया । तत्र श्रुतिप्रत्ययो बलीयानित्युक्तम् । ननु सामान्येऽप्याहवनीयप्रत्ययः श्रौतः । उच्यते । वर्त्मादिप्रत्ययोऽपि सामान्ये श्रौत । होमे हि स विशिष्टे विधीयते, नाहोम एतद्विशेषयति । तस्माद्वर्त्मादिहोमं वर्जयित्वाऽन्येषु होमेषु आहवनीयः करिष्यते इति ॥ १६ ॥ वर्त्महोमादिभिराहवनीयस्य बाधाधिकरणम् ॥ ८ ॥

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृत-माज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥ १७ ॥**

अनारभ्य किञ्चिदाम्नायते, सप्तदश सामिधेनीरनुब्रूयादिति। तत् प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तं कासुचिद् विकृतिषु पुनः श्रूयते । वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायां त्रैधातव्यायामाग्रयणेष्ट्यामिति। तासु विकृतिष्वस्य श्रवणं किमर्थमिति विचार्य्यते। किं प्राप्तम्। अप्रकरणे यच्छास्त्रमाम्नातं विकृतिविशेषे पुनरविकृतं श्रूयते, तत् प्राकृतमङ्गजातं प्रतिषेद्धुं, वैमृधादिषु सप्तदश सामिधेनीरनुब्रूयादिति, नान्यत् प्राकृतं कुर्य्यादिति। न चैवं विज्ञायते, वैमृधादिष्वेव साप्तदश्यं, नान्यासु विकृतिष्विति। तासु तत् प्रत्यक्षेण वाक्येन श्रुतं न शक्यं बाधितुम् ॥ १७ ॥ पूर्व० ॥

**विकारे तु तदर्थं स्यात् ॥ १८ ॥**

यदि तु सामिधेनीनां विकारः कश्चिच्छ्रूयेत, ततो विकारार्थमाम्नातमिति गम्यते। न तु विकारः श्रूयते। तस्मात् प्राकृतप्रतिषेधार्थमेवेति ॥ १८ ॥ युक्तिः ॥

**वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्यविधानस्य ॥ १९ ॥**

वाशब्दः पक्षं व्यावर्त्तयति। वाक्यशेषोऽयं वैमृधादिषु अनारभ्यविधानस्य। सप्तदश सामिधेनीरनुब्रूयादेतासु विकृतिष्विति। तेन अन्यासु विकृतिषु न स्यात्। ननु प्रत्यक्षश्रुतमन्यासु विकृतिषु तद् न शक्यं बाधितुम्। उच्यते। सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत् क्रतुना गृह्यते। क्रतुसम्बन्धाभावात्, प्रयोगवचनोऽपि न गृह्णाति, सति वैमृधादिसम्बन्धकरे वाक्ये। यदेतत् साप्तदश्यमनारभ्योक्तं, तद् वैमृधादीनामङ्गमिति प्रत्यक्षं वाक्यं,तस्मान्नान्या विकृतयस्तद् गृह्णन्ति। अक्रतुग्रहणे च सति सामिधेनीनां साप्तदश्यं निष्फलत्वान्न क्रियेत। तस्मादनारभ्यविधेर्वैमृधादिषु वाक्यशेषः। आह। ननु वाक्यभेदो भवति। सामिधेन्यः सप्तदश भवन्ति। ताश्च वैमृधादिष्विति। उच्यते। द्वे एते वाक्ये। पूर्वेण वाक्येन योऽर्थ

उक्तस्तस्यैव विशेषः परेण वाक्येन विधीयते इति वाक्यशेष इत्युच्यते इति ॥ १९ ॥ सिद्धान्तः ॥ वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम् ॥ ९ ॥

## मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात् ॥ २० ॥

दर्विहोमं प्रकृत्य श्रूयते पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा वायवे स्वाहा इति । अस्ति च अनारभ्य वचनं, वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते इति । तत्र सन्देहः । किं तस्यायं वाक्यशेषः, स्वाहाकारेण अन्नं प्रदीयते देवेभ्य इत्येतस्मिन् दर्विहोमे पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा इति ? उत नायं वाक्यशेषः, येष्वपि प्रदानेषु स्वाहाकारो नाम्नातस्तेष्वपि स्वाहाकारः ? इति । किं प्राप्तम् । अनन्तरवृत्तेनाधिकरणेन वाक्यशेष इति ॥ एवं प्राप्ते ब्रूम । मन्त्रेषु वाक्यशेषत्वं, न स्यात् । न हि विधायकाविधायकवाक्ययोरेकवाक्यत्वं भवति । विधायकं ब्राह्मणम्, अविधायको मन्त्रः । अपि च, अनन्तराधिकरणे न क्रतुसम्बन्धोऽस्ति । इह तु सम्बन्धो गम्यते । वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते इति । प्रदानं ह्यत्र प्रधानकर्म । अपि च, गुणोपदेशो भवति । तस्मिन् दर्विहोमे पृथिव्यै स्वाहा इत्येवं समुच्चारणं भवति, न स्वाहा पृथिव्यै इति । तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्तीति ॥ २० ॥ सि० ॥

## अनाम्नाने च दर्शनात् ॥ २१ ॥

यत्रापि दर्विहोमे नाम्नायते स्वाहाकारः, तत्रापि कश्चिद्दृश्यते । घृतेन द्यावापृथिवी आपृणेथामिति औदुम्बर्यां विशाखे जुहोति आन्त्रान् अवस्रावयति भूमिप्राप्ते स्वाहाकरोतीति प्राप्तं स्वाहाकारं दर्शयति ॥ २१ ॥ युक्तिः ॥

## प्रतिषेधाच्च ॥ २२ ॥

कश्चिच्च प्रतिषेधो भवति, न स्वाहेति वचनं करोति मन्त्र च नाहेति । प्राप्तिपूर्वकः प्रतिषेधो भवतीति अवाक्यशेषता अध्यवसीयते ॥ २२ ॥ युक्तिः ॥ पृथिव्यै स्वाहा इत्यादिविधिना अविहितस्वाहाकारेषु प्रदानेषु स्वाहाकारविधानाधिकरणम् ॥ १० ॥

## अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥

इदमाम्नायते, य एवंविद्वानग्निं चिनुते इति । तथा उपष्टम्भनं

वा एतद्यज्ञस्य यदतिग्राह्या इति। तत्र सन्देहः। किमग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति, उत नेति। किं प्राप्तम्। अग्न्यतिग्राह्यस्य विकृतावप्रवृत्तिरिति। अग्निश्चातिग्राह्यश्चाग्न्यतिग्राह्यम्। तद् विकृतौ न प्रवर्त्तते। कुतः। विकृतावुपदेशात्। विकृतौ हि तदुपदिश्यते। अथातोऽग्निमग्निष्टोमेनानुयजाति, तमुक्थेन तमतिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेण तं षड्रात्रेण तं सप्तरात्रेण तमष्टरात्रेण तं नवरात्रेण तं दशरात्रेणाति। तथा यत् पृष्ठ्येति गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयु', यदुक्थेति गृह्णीयादिति न नूनमग्न्यतिग्राह्यं चोदकः प्रापयति, यत् साक्षात्कस्याञ्चिद् विकृतौ चोद्यते इति ॥२३॥ पूर्व० ॥

## मासिग्रहणञ्च तद्वत् ॥ २४ ॥

इदञ्चाम्नायते, मासिं मासि अतिग्राह्या गृह्यन्ते इति। यदि चोदकः प्रापयेद् न मासि मास्यतिगृह्यन्ते इत्युपदेशः स्यात् ॥२४॥ युक्तिः ॥

## ग्रहणं वा तुल्यत्वात् ॥ २५ ॥

गृह्यते वा चोदकेनाग्न्यतिग्राह्यं, न हि अस्यान्यैरङ्गैरस्ति विशेष। अन्यानि अङ्गानि गृह्णाति एतद् न गृह्णातीति नैतदवकल्पते ॥२५॥सि०

## लिङ्गदर्शनाच्च ॥ २६ ॥

लिङ्गं खल्वपि दृश्यते, कङ्कचितं चिन्वीत शीर्षचितं चिन्वीत यः कामयेत सुशीर्षा अस्मिँल्लोके सम्भवेयमिति। तथा पञ्चैन्द्रानतिग्राह्यान् गृह्णातीति। कङ्कारतामैन्द्रताञ्च विशेषं ब्रुवन्नग्न्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ॥ २६ ॥ युक्तिः ॥

## ग्रहणं समानविधानं स्यात् ॥ २७ ॥

अथ यदुक्तं, विकृतावुपदिश्य इति। तत् परिहर्तव्यम्। अत्रोच्यते। यस्यां विकृतावुपदिश्यते, तस्यां प्रकृतौ च समानः स विधिः। अवशिष्टासु विकृतिषु चोदकः प्रापयतीति ॥२७॥ आ० नि० ॥

## मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥

अथ मासि ग्रहणं कथमिति। तद् अभ्यासप्रतिषेधार्थम्। न अहन्यहनि गृह्यन्ते, मासि मासि गृह्यन्ते इति ॥ २८ ॥ ॥ आ० नि० ॥ अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ॥ ११ ॥

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥**

दर्शपूर्णमासयोराम्नायते, चतुरवत्तं जुहोतीति । तत्रायमर्थः सांशयिकः । किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तम्, उत प्रधानद्रव्यादेव चतुरवदातव्यम् । अधिकमुपस्तरणमभिघारणञ्च ? इति । किं प्राप्तम् । प्रधानद्रव्यादेव चतुरवदातव्यम् । कुतः । उत्पत्तितादर्थ्यात् । पुरोडाशोत्पत्तेर्होमार्थता भवति । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवतीति । यज्जुहोति तच्चतुरवत्तं कर्त्तव्यम् । पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे । तस्मात् पुरोडाशस्य चतुरवदातव्यमिति । अधिकमाज्यं स्यात् । अतुल्य हि तत् पुरोडाशेन । पुरोडाशे होमार्थे तद् गुणभूतमाज्यम् । तेन यद्यपि सह आज्येन षडवत्तं भवति, तथापि होमे चतुरवत्तमेव कृतम् । यथा लोके, प्रस्थभुग्देवदत्त इत्युच्यते । यद्यपि सूपशाकादिभिरधिकप्रस्थो भवति, तथापि भुजौ प्रस्थो निर्दिश्यते, व्यञ्जनानि ओदनार्थानि ॥ २९ ॥ पूर्व० ॥

**तत्संस्कारश्रुतेश्च ॥ ३० ॥**

प्रधानावदानसंस्कारार्थेन चोपस्तरणाभिघारणे श्रूयेते । यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोतीति । तेनोपस्तरणाभिघारणसंयुक्तं प्रधानद्रव्याच्चतुरवत्तं होतव्यमिति गम्यते ॥ ३० ॥ युक्तिः

**ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ ३१ ॥**

ताभ्यां वा सह द्विर्हविषोऽवदाय चतुरवत्तं कर्त्तव्यम् । कुत । स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनं भवति । सकृदुपस्तृणाति सकृदवद्यति द्विरभिघारयति चतुरवत्तस्याप्त्यै इति द्विरभिघारणेन चतुरवत्तं पूर्णं दर्शयति । इतरथा षडवत्त तेन पूर्येत । आह । दर्शनमेतत् । प्राप्तिरुच्यतामिति । अत्रोच्यते । चतुरवत्तं होमे श्रूयते, चतुरवत्तं जुहोतीति । न होमार्थे पुरोडाशे सान्नाय्ये वा । नैवं श्रूयते, यद् होमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति । चतुरवत्तं श्रूयमाणं होमेनाऽसम्बद्ध्यमानमनर्थकं स्यात् ॥ अथोच्यते । प्रयोगवचनग्रहणादर्थवद् भविष्यति । तन्न । साक्षाद् होमसम्बन्धे वचने

सति चतुरवत्तं जुहोतीति नान्यत् प्रयोगवचनग्रहणं कल्पते। अस्मिंश्च साक्षाद्वचने तदर्थाद् अवत्तं, नातदर्थादिति न विशेषः श्रूयते। तदर्थादतदर्थाद्वा चतुरवखडनसंयुक्तं द्रव्यं होतव्यम्। एवञ्च श्रुतिः परिगृह्यते। इतरस्मिन् पक्षे वाक्यं परिगृह्येत। द्विर्हविषोऽवद्यतीति च विकल्प स्यात्। यदि हविश्चतुरवत्तं दीयेत, तथा इदमपरं श्रवणमसदनुवादभूतं स्यात्। चतुरवत्तं वा विकल्पयेत्। अभावाच्च पक्षे विकल्पो न न्याय्य. स्यात्। तस्मात् सहोपस्तरणाऽभिघारणाभ्यां चतुरवत्तमिति॥ ३१॥ सि०॥

## तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात्॥ ३२॥

चत्वारि वा एतानि देवदधानि अवदानानि यदुपस्तृणाति तदनुवाक्यायै यत् पूर्वमवदानं तद्याज्यायै यदुत्तरं तद्देवतायै यदभिघारयति तद्वषट्कारायेति चतुरवत्तस्य चत्वारि अवदानानि संकीर्त्य अनुवाक्यादिभिर्भक्तिवादेन अवयवश संकीर्त्तयन्नुपस्तरणादीनि दर्शयति। तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति। दधशब्दो भागधेयवचन। तद्यथा, कङ्कटकाय दधं, नापिताय दधमिति। देवदधानि देवभागा इत्यर्थः॥ ३२॥ युक्तिः॥ उपस्तरणाऽभिघारणाभ्यां सहैव चतुरवदानाधिकरणम्॥ १२॥

## साप्तदश्यवन्नियम्येत॥ ३३॥

दर्शपूर्णमासयोरुपांशुयाजोऽस्ति। तत्र, चतुरवत्तं जुहोतीति। तत्र संशयः। किमुपांशुयाजे चतुरवत्तं कर्त्तव्यम्? उत नेति। किं प्राप्तम्?। साप्तदश्यवन्नियम्येत। यथा साप्तदश्यमनारभ्याधीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषात्तास्वेव नियम्यते। एवमिदमपि चतुरवत्तमुपस्तरणाभिघारणाश्रयत्वाद् यत्र ते, तत्रैव नियम्येत औषधसान्नाय्ययोः। उपांशुयाजे न स्यादिति॥३३॥ पूर्व०

## हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात्॥३४॥

वाशब्द. पक्ष व्यावर्त्तयति। नैतदस्ति, नोपांशुयाजे चतुरवत्तमिति। होमे चतुरवत्त गुणो विधीयते। स उपांशुयाजहोमेऽपि स्यात्। अत्रापि चतुरवदातव्यम्। अथ यदुक्तम्। औषधसान्नाय्ययोरेव चतुरवत्तमुपस्तरणाभिघारणाश्रयत्वादिति। नोपस्तरणाभिघारणवचनं चतुरवत्तस्य वाक्यशेषभूतम्। यथा सप्तदशसामिधेनी-

रनुब्रूयादिति मित्रविन्दादिषु, सप्तदशानुक्रमादिति । नैवमिह चतुरवद्येत, कथमुपस्तृणीयात्, अभिघारयेच्चेति । कथं तर्हि । चतुरवदानसंयुक्तं द्रव्य जुहुयाद्, हविश्चोपस्तृणीयाद्, अभिघारयेच्चेति । यत्र हविषि उपस्तीर्यमाणेऽभिघार्यमाणे च चतुरवत्तयुक्त प्रदान भवति तत्र न प्रधानद्रव्याच्चतुरवदातव्यम् । यत्र पुन प्रधानद्रव्याच्चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्याच्चतुरवदातव्यम् । चतुरवत्तभूतमिह होतव्यं विवक्ष्यते, न इतस्ततो वा चतुरवदातव्यमिति । तस्मादुपांशुयाजेऽपि चतुरवत्तं कर्त्तव्यमिति ॥३४॥ सिद्धान्त. ॥ उपांशुयागेऽपि चतुरवत्तस्यावश्यकताधिकरणम् ॥१३॥

पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥३५॥

दर्शपूर्णमासयोरिदमाम्नायते । पुरोडाशाभ्यामेवासोमयाजिनं याजयेत, यावेतावाग्नेयश्चैन्द्राग्नश्चेति । तत्रैष संशयः । किमधिकारश्रुतिवाक्यशेषोऽयम् । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतैताभ्यां पुरोडाशाभ्यामसोमयाजीति । अथ किमधिकयो कर्मान्तरयोरुत्पत्ति ? । अपराभ्यामेवञ्जातीयकाभ्यां पुरोडाशाभ्यां यजेतेति । अथ वा, अङ्गकर्त्तुरुपदेश । आभ्यां पुरोडाशाभ्याम् ऋत्विग् याजयेदिति । अथ वा, असोमयागकाले आभ्या यजेतेति कालोपदेश । उतैन्द्राग्नस्य विधि. । आग्नेयस्य चानुवादः । अथ वोभयोरनुवाद इत्येते पक्षाः ॥

किं तावत् प्राप्तम् । अधिकारशेष इति । यदेतत् स्वर्गकामो यजेतेति । तस्य शेष. । आभ्यां पुरोडाशाभ्यामसोमयाजी स्वर्गकामो यजेतेति । कुतः । तच्छ्रुतित्वात् । तच्छ्रुतिमन्तौ हि पुरोडाशौ शब्देनानूद्येते । तेन नाभ्यधिकौ । असोमयाजिनश्च कर्त्तुर्व्यापार आभ्यां सम्बद्ध्यते श्रुत्या, न कालः । स हि लक्ष्येत । श्रुतिश्च लक्षणाया गरीयसी । तत्र सोमयाजिनो वा न पुरोडाशौ, असोमयाजिनो वा न साम्नाय्यम् । यदि पुरोडाशावधिकृत्य असोमयाजी विधीयते, ततो नासोमयाजी साम्नाय्ये । तत्रैवकारः समर्थितो भवति । पुरोडाशाभ्यां केवलाभ्यामसोमयाजी, नसाम्नाय्येनेति । अथासोमयाजिनमधिकृत्य पुरोडाशौ विधीयेते, तथा न सोमयाजिनः पुरोडाशौ ।

तत्रास्थाने एवशब्दो भवति । पुरोडाशाभ्यामसोमयाजिनमेवेति । यथा—

यमेव विद्या शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मां ब्रूया निधिपाय ब्रह्मन्, इति॥

यं शुचिमेव विद्या इति वदितव्ये यमेव विद्या. शुचिमिति । एवमत्रापि । तदुभयोरपि वचनव्यक्त्योरधिकारश्रुतिवाक्यशेष इत्युभयथाऽयं पूर्वपक्षो भवति । यथा वैश्यस्तोमेऽधिकारश्रुतिशेषः । वैश्यो वैश्यस्तोमेन यजेतेति । तद्वदत्राप्यधिकारश्रुतिशेष एवेति ॥३५॥पूर्व०॥

**न त्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बन्धस्तस्माद्वाक्यशेषत्वम् ॥ ३६ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । नैतदेवम् । अधिकारवाक्यशेष इति । नित्यौ हि दर्शपूर्णमासौ । यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । नित्यौ च तत्रेमौ पुरोडाशौ फलं प्रति सहकारिणौ । तावनित्यमसोमयाजिनं प्रति विधीयेते इत्यनुपपन्नम् । कथम् । नित्यौ हि दर्शपूर्णमासयोर्भविष्यत. । यश्चासोमयाजी तस्योपकरिष्यत इति नोपपद्येत । पुरोडाशविधेर्नित्येन दर्शपूर्णमाससमुदायेन सम्बन्ध. । तस्माद् नासोमयाज्यधिकारश्रुतिवाक्यशेषः । किं तर्हि । अधिकयो. कर्मान्तरयोरुत्पत्तिरिति । नैवमभिसम्बन्धः क्रियते । यावतौ पुरोडाशौ दर्शपूर्णमासयोर्विहितौ, तौ प्रति असोमयाजी विधीयते इति । कथन्तर्हि । असोमयाजी य. स्वर्गकाम स आग्नेयं कुर्यादैन्द्राग्नञ्चेत्येते कर्मणी विधीयेते, विधीयेतेचेत् पूर्वाभ्यां कर्मान्तरे।तत्र यावतौ इत्यनुवादवचनं धर्मापेक्षं भविष्यति । यथा एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वेति । एवशब्दश्च पुनरित्यस्मिन्नर्थे भविष्यति यथा क्षीरेण भुक्त्वा देवदत्त क्षीरेणैव भुञ्जीतेति । भुञ्जीतैवेति पुनरिति गम्यते । एवमिहापि सोमयाजिनश्चाऽसोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ पुनरसोमयाजिनस्तौ विधीयेते । पुरोडाशाभ्यामेवासोमयाजिन याजयेदिति । तद्धर्म्मकाभ्यामिति गम्यत ॥ ३६ ॥ पूर्व० ॥

**सति च नैकदेशेन कर्त्तुः प्रधानभूतत्वात् ॥ ३७ ॥**

सति च अधिकारशेषे पुरोडाशयोरसोमयाजिकर्तृसम्बन्धो

नोपपद्यते । अधिकारशेषे हि प्रधानभूतः कर्त्ता निर्द्दिश्यते । न चासति फले प्रधानभाव उपपद्यते । न च दर्शपूर्णमासैकदेशभूतौ पुरोडाशौ फलस्य साधकौ भवतः । न च वचनप्रामाण्यात् फलं कल्पयिष्यते । वचनव्यक्त्यन्तरस्य भावात् । तस्मादपि नास्त्यधिकारशेष इति ॥ ३७ ॥ युक्तिः ॥

कृत्स्नत्वात्तु तथा स्तोमे ॥ ३८ ॥

यदुपवर्णितं, वैश्यस्तोमवदिति । युक्तं वैश्यस्तोमे । कृत्स्नो वैश्यस्तोमा न कस्यचिदेकदेशः । तत्र फलं सम्भवति । न चात्र फलं सम्भवति । न चात्र किञ्चिदेकं नित्यमनित्येन सम्बद्ध्यते । तस्माद्वैषम्यं वैश्यस्तोमेन ॥ ३८ ॥ आ० नि० ॥

कर्त्तुः स्यादिति चेत् ॥ ३९ ॥

इति चेद् मन्यसे, नाधिकारश्रुतिशेषोऽवकल्पत इति । तत्रोच्यते । कर्मान्तरयोरुत्पत्तिर्नावकल्पते । यावन्तौ इति व्यपेक्षावचनं लक्षणया कल्पेत । कथं तर्हीदमिति । अङ्गकर्त्तुरुपदेशः । अङ्गे य कर्त्ता, न प्रधाने । याजयेदिति हेतुकर्त्तुरेवैतत् प्रत्यक्षं वचनं, लक्षणया यजे कर्त्तु । अपि च नित्यानित्ययोर्विरुद्धः सम्बन्धोऽभ्युपगतो न भविष्यति । न चैकदेशस्य फलं कल्पयिष्यते । असोमयाजी पुरोडाशाभ्यां याजयितव्य इति याजयितुरुपदेशोऽभ्युदयाय भविष्यति ॥ ३९ ॥ पूर्व० ॥

न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः ॥ ४० ॥

नैतदेवम् । अङ्गकर्त्तुरुपदेश इति । अङ्गकर्त्ता हि प्रधानकर्त्तुरेव क्रियोपदेशेन गुणभूतः प्राप्नोति । न चास्य फलं श्रूयते । न च कल्पयितुं शक्यमुपग्रहविशेषात् । न च, प्राप्तस्य पुनरुपदेशे किञ्चिदस्ति प्रयोजनम् । अर्थप्राप्तस्य त्वनुवादः पुरोडाशयोर्यागं विधातुम् । न च परिसंख्या । त्रिदोषत्वात् । सोमयाजिनश्च विना अङ्गकर्त्रा, असम्भवात् । तस्मात् कर्मान्तरयोरुत्पत्तिरिति ॥ ४० ॥ पूर्व० नि० ॥

कर्मणोस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नाधिकयोः कर्मान्तरयोरुत्पत्तिरिति । एतयोः कर्मणोः प्रकरणे काल उच्यते । न असोमयाजिनं कर्त्तारं

प्रति पुरोडाशौ विधीयेयाताम् । कुतः । तन्न्यायत्वात् । स हि न्यायः, योऽसावुक्तः।अपि वा कालमात्रं स्याद् अदर्शनाद्विशेषस्य(४आ०४पा० ६ सू०) इति । इहापि स एव न्यायः । असोमयागकाले दर्शपूर्णमासयोरेतौ पुरोडाशौ भवत इति।किमेवं भविष्यति।फलकल्पनादोषो न भविष्यति।यदा समुदायेऽव्यापरिष्यते तदा सर्वेषां संहतानां फलं भविष्यति।शक्यते चासोमयागेन विशेषलिङ्गेन कालो लक्षयितुम् । तस्मिन् काले पुरोडाशाभ्यामेव यजेत, न सान्नाय्येनेति ॥४१॥ पूर्व०॥

**यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । यदि सान्नाय्यं सोमयाजिन , न कालार्थं श्रवण भवितुमर्हति । सान्नाय्यं च सोमयाजिन एव । अनाशङ्किते तस्मिन्नाशङ्कितवचनम् । यथा, शास्त्राणि चेत् प्रमाणं स्युर्गतास्ते परमाङ्गतिम् * इति ॥

एवं हि श्रूयते, नासोमयाजी सन्नयेदिति । एवं सति न कालार्थं श्रवणम् । कथम् । नैव ताभ्यां पुरोडाशाभ्यां सान्नाय्यस्य समवायः प्राप्त । विभक्तकालत्वात् । प्राक् सोमयागात् पुरोडाशौ, ऊर्ध्वं सान्नाय्यं प्राप्तमेव । न तदर्थं यतितव्यम् । तस्माद् न कालार्थं विभक्तकालार्थं श्रवणं कर्मान्तरचोदनैवेति ॥ ४२ ॥ पूर्व० नि० ॥

**अपि वा विहितत्वाद्गुणार्थायां पुनः श्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद्यथानभिप्रेतस्तथाग्नेयो दर्शनादेकदेवते ॥ ४३ ॥**

अपि वेति पक्षव्यावृत्तिः । नैतत् कर्मान्तरचोदनेनि, अनुवादः आग्नेयस्य । विहितत्वात् । विहितो हि असावुभयत्र, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । ऐन्द्राग्न्यस्य भवति विधि । उभयत्राविहितत्वात् । स यत्र न प्राप्नोति । पौर्णमास्यामैन्द्राग्नविधानार्था एषा श्रुति । यथानभिप्रेतस्तथाग्नेय उच्चरितः । विधानं चोभयत्र । तस्य दर्शनं च, आग्नेयं चतुर्द्धा करोतीति । तथा साकंप्रस्थाप्ये आज्यभागाभ्यां प्रचर्य्य आग्नेयेन पुरोडाशेनेति ॥४३॥ पूर्व० ॥

## विधिं तु बादरायणः ॥ ४४ ॥

तुशब्द एतमपि पक्षं व्यावर्त्तयति । नैतदेवम् । आग्नेयेऽनुवादः । ऐन्द्राग्न विधिरिति । उभयोः कालविधिः स्यात् । कुत । बादरायण आचार्यो मन्यते स्म । प्रागपि सोमयागात् सान्नाय्यविधिरिति । असोमयाजिनोऽपि सान्नाय्यं श्रूयते । नदु सं नयेदिति । तथा तथेह स्माहुर्गोपायनाः सान्नाय्यमेवासोमयाजिनः । तस्मात् कालार्थः संयोग इति ॥ ४४ ॥ पूर्व० नि० ॥

## प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥

वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, कालविधिरिति, नाप्यऽधिकयोः कर्मणोरुत्पत्तिः, न वा आग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः । किन्तर्हि । उभयोरनुवादः । कथम् । सोमयाजिनः सान्नाय्यविधानार्थमेतद्वाक्यम् । अतो नैन्द्राग्नस्यापि विधिः । भिद्येत हि तदा वाक्यम् । एवमभिसम्बन्धः क्रियते । असोमयाजिनः पुरोडाशावेतौ यौ प्राप्तौ, सोमयाजिनः सान्नाय्यमपरमपीति । पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् । यौ एतौ आग्नेयश्च ऐन्द्राग्नश्च, सान्नाय्येन सोमयाजिनमिति एवमेकेन वाक्येन सोमयाजिनः सान्नाय्यं विधीयते । अपरेणापि वाक्येनासोमयाजिनः । तस्मादुभयोरप्यनुवाद इति ॥ ४५ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ ४६ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तरं इति । कथम् । चतुर्द्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति । कर्मान्तरोत्पत्तावभ्यधिका आहुतयो भवेयुरिति ॥४६॥ युक्ति० ॥ दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् ॥ १४ ॥

## उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद् यथाकामी प्रतीयेत ॥ ४७ ॥

दर्शपूर्णमासयोराम्नायते, उपांशुयाजमन्तरा यजतीति । तत्र द्रव्यं प्रति सन्देहः । किम् अनियमः ? उत नियतं किञ्चिद् द्रव्यमिति । किं प्राप्तम् । न किञ्चिद् हवीरूपं श्रूयते । तस्माद् यथाकामी प्रतीयेत । तत्रोच्यते । श्रूयते हवीरूपम् । आज्यस्यैव नाबुपांशु पौर्णमास्यां यजन्निति । तस्मादाज्यद्रव्यकं स्यात् । उच्यते । एवमप्यनिय-

म । यत्किञ्चिदाज्यं गृहीत्वा इज्येतेति ॥ ४७ ॥ पूर्व० ॥

## ध्रौवाद्वा सर्वसंयोगात् ॥ ४८ ॥

ध्रौवाद्वा आज्यादिज्येत, न यत. कुतश्चित् । कुतः । सर्वसंयोगात् । सर्वयजतिभिर्हि सम्बद्ध, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् । तस्माद् ध्रौवाज्याद् यजेतेति ॥ ४८ ॥ सिद्धान्तः ॥ उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम् ॥ १५ ॥

## तद्वच्च देवतायां स्यात् ॥ ४९ ॥

देवतां प्रति उपांशुयाजस्य संशय. । किमनियमः, नियमः ? इति। किं प्राप्तम । यद्वद् द्रव्यं प्रति अनियमः पूर्वाधिकरणपूर्वपक्षे, तद्वद् देवतायामनियमः । ननु अग्नीषोमौ विधीयेते । उच्यते । पुराकल्परूपोऽयं न विधिसरूप.।इमास्तर्हि विष्णुरुपांशु यष्टव्य इत्येवमादिना देवता विधीयन्ते । उच्यते । उक्तमजामिकरणवचनार्था एते अर्थवादा इति । तस्मादनियम ॥ ४९ ॥ पूर्व० ॥

## तान्द्रीणां प्रकरणात् ॥ ५० ॥

न हि देवतामन्तरेण यागो भवति । न च वचनमन्तरेण देवता । न चान्यस्य विहिता देवता अन्यस्यावकल्पते । तस्मात् प्रकृतानां तन्द्रभवानामन्यतमया देवतया प्रकृतत्वादेकवाक्यतां कृत्वा देवतामवगमिष्यामः। एकया च कृतार्थत्वाद् यां काञ्चिद् देवतामिति॥५०॥ सिद्धान्त.॥उपांशुयाजस्य प्रकृतदेवतानियमाधिकरणम् ॥ १६ ॥

## धर्माद्वा स्यात् प्रजापतिः ॥ ५१ ॥

तान्द्रीणामन्यतमा देवतेत्युक्तम् । तत्र सन्देहः । किं तान्द्रीष्वऽनियम', अथ वा प्रजापतिः, अथ वा अग्नि , अथ वा विष्णुः, अमावास्यायां चोपांशुयाज. । अथ वा पौर्णमास्यामुपांशुयाज , विष्णुर्देवता । अथ वा उभयत्रोपांशुयाजः, देवताविकल्पश्चेति। अथ वा पौर्णमास्यामेव उपांशुयाज , तत्रैव विष्ण्वाद्या देवता. ? इति पक्षाः । किं तावत् प्राप्तम् । प्रजापतिर्देवता । कुत ।धर्मात् । तस्य हि उपांशुत्वं धर्म., तस्माद् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते इति । उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते। नूनमस्य उपांशुत्वं धर्म इति । आत्मनि साधनेषु च न उच्चैस्त्वेन अस्य सम्बन्ध इति । तेन प्रजापतिरिति गम्यते । स हि अनुच्चैर्धर्मकः।

अन्यस्यां सत्यामुच्चैस्त्वेनास्य सम्बन्धो भवेदिति ॥ ५१ ॥ पूर्व० ॥

**देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥**

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति, प्रजापतिर्देवतेति । तान्द्रीणां मुख्यो ऽग्निर्देवता स्यात् । प्रजापतेः देवताया अनिर्वचनं धर्मस्तूष्णींम्भावः । प्रजापतिं मनसा यजेदिति।ननूपांशुत्वं प्रजापतेर्धर्मः। तस्माद् यत्किञ्चित् प्राजापत्यं क्रियते, उपांश्वेव तत् क्रियते इति । उच्यते । अनुवादसरूपत्वादर्थवाद एषः, प्रजापतिं मनसा यजेदित्यस्य विधेः । इह पुनरुपांशुयाजे तत्रशब्दस्य मृदुत्वम् । तस्मान्न प्रजापतिः, अधिकृतानां मुख्योऽग्निः स्यादिति ॥ ५२ ॥ पूर्व० ॥

**विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद् हौत्रस्य तत्र दर्शनात् ॥ ५३ ॥**

वाशब्दात् पक्षो निवर्त्यते । नैतदेवम्, अग्निः स्यादिति । कथन्तर्हि । विष्णुर्देवता स्यात् । हौत्राम्नानात् । अमावास्यां प्रकृत्य वैष्णवं हौत्रमाम्नायते । इदं विष्णुर्विचक्रमे प्रतद्विष्णुः स्तवते वीर्य्येणेति । तदेवमर्थवद् भवति । यदि विष्णुदेवत्य उपांशुयाजः । एवममावास्यायामाम्नानमर्थवद् भवति । यदि अमावास्यायामुपांशुयाजः । तस्मादमावास्यायामुपांशुयाजः स्यादिति ॥ ५३ ॥ पूर्व० ॥

**अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५४ ॥**

यदुक्तं विष्णुर्देवतेति तद् गृह्यते, न त्वमावास्यायायामुपांशुयाज इति । विधायको हि तस्य शब्दः पौर्णमास्याम् । आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्निति । तं मन्त्राम्नानं न शक्नोति अमावास्यायामाक्रष्टुम् । उपांशुयाजे मन्त्रस्य विधानात् । यत्रोपांशुयाजस्तत्र मन्त्र इति गम्यते, न यत्र मन्त्रस्तत्रोपांशुयाज इति । उपांशुयाजस्य हि मन्त्रो विधीयते, न मन्त्रस्योपांशुयाजः ॥ ५४ ॥ पूर्व० ॥

**आनन्तर्य्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे ॥ ५५ ॥**

इतश्च न अमावास्यायामुपांशुयाजः । अमावास्याविकारे हि

साकम्प्रस्थाय्ये सान्नाय्यस्यानन्तर्य्यं पुरोडाशेन दृश्यते। कथम्। आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीध्रे स्रुचौ प्रदाय सह-कुम्भीभिरभिक्रामन्नाह इत्याग्नेयादानन्तर्य्यं सान्नाय्यस्य दर्शयति, न उपांशुयाजस्य। तस्मान्नामावास्यायामुपांशुयाज इति ॥ ५५ ॥ पूर्व० युक्तिः ॥

## अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥

तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवं, पौर्णमास्यामेवोपांशुयाज इति। उभयत्र स्यात्। देवताविकल्पश्च। कुतः। अविशेषेण हि उपांशुयाज श्रूयते। उपांशुयाजमन्तरा यजतीति। यदेतद् आज्यस्यैव नौ उपांशु पौर्णमास्यां यजेरन्निति। देवताविधानमेतत् पौर्णमास्याम्। तस्मा-दग्नीषोमदेवत्य पौर्णमास्यामुपांशुयाज। मन्त्राम्नानाद् वैष्णवोऽमा-वास्यायामिति देवताविकल्पः स्यात् ॥ ५६ ॥ पूर्व० ॥

## प्रतिषिध्यविधानाद् वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥

न चैतदस्ति, यदुक्तमुभयत्रोपांशुयाजो देवताविकल्पश्चेति। किं तर्हि। पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवता इति। कुतः। प्रतिषिद्ध्य विधानात्। किमिदं प्रतिषिद्ध्य विधानादिति। अमावास्यां वर्जयित्वा पौर्णमास्यां विधानादिति। कथम्?। आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्निति प्रकृत्य, समाम्नायते, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजतीति। पौर्णमास्यामिति गम्यते। तत्रैव चेदं वचनं विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशुयष्टव्योऽजामित्वायाग्नीषोमौ उपां-शु यष्टव्यावजामित्वायेति। तत्र पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवता इति ॥ ५७ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ ५८ ॥

इतश्च नामावास्यायामुपांशुयाज। कुतः। अन्यार्थोऽप्येतमर्थं दर्शयति। कथम। चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशा-ऽमावास्यायामिति चतुर्दश भवेयुः। त्रयोदशाति नोपपद्यते। तस्मा-न्नामावास्यायामुपांशुयाज इति ॥ ५८ ॥ युक्ति ॥

**न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात्॥५९॥**

इतश्च नामावास्यायाम् । न हि सकृच्छ्रूयमाणमनङ्गमुभयत्र भवति । अङ्गं हि प्रधानार्थत्वादुभयत्र स्यात् । प्रधानञ्चेदं, नाङ्गम् । तस्मात् पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत् । असम्बन्धात्। न हि प्रधानं प्रधानेन सम्बन्धं यातीति ॥ ५९ ॥ युक्तिः ॥

**गुणानां च परार्थत्वात् प्रकृतौ विधिलिङ्गानि दर्शयन्ति ॥ ६० ॥**

गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयन्ति । न प्रधानानामपरार्थत्वात् । कथम् । अप्सुमन्तावाज्यभागौ यजतीत्येकादश प्रयाजान् यजत्येकादशानुयाजानिति । तस्मादपि उपांशुयाजो नामावास्यामिति ॥ ६० ॥ युक्ति ॥

**विकारे चाश्रुतित्वात् ॥ ६१ ॥**

अमावास्याविकारे च साकं प्रस्थाय्ये उपांशुयाजो न श्रूयते । कथम् । आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्निधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामन्नाहेति आग्नेयादनन्तरं सान्नाय्यं दर्शयति, नोपांशुयाजम् । तस्मादपि नामावास्यायामुपांशुयाज इति ॥ ॥६१॥ युक्ति ॥ उपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासीकर्तव्यत्वयोरधिकरणम् ॥ १७ ॥

**द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ६२ ॥**

दर्शपूर्णमासयोरिदमामनन्ति । उपांशुयाजमन्तरा यजतीति । तत्रायमर्थः समधिगतः । पौर्णमास्यामुपांशुयाज । तत्र च विष्ण्वाद्या देवता इति । अस्ति चोर्ध्वं सोमाद् द्विपुरोडाशा पौर्णमासी । प्राक् सोमाद् एकपुरोडाशा । तत्रायमर्थः सांशयिक । किं द्विपुरोडाशायामेवोपांशुयाजः ? उत द्विपुरोडाशायामेकपुरोडाशायाञ्चेति । किं प्राप्तम् । द्विपुरोडाशायां स्यात् । कुतः । अन्तरार्थत्वात् । अन्तरासंयोगेन हि श्रूयते । उपांशुयाजमन्तरा यजतीति प्राक् पुरोडाशसङ्कीर्त्तनात्, पुरोडाशौ अन्तरेति गम्यते।द्विपुरोडाशायामन्तरा शक्यं कर्त्तुं, नैकपुरोडाशायाम् । तत्र क्रियमाणमयथाश्रुतं स्यात् । तस्माद् द्विपुरोडाशायामेवेति ॥ ६२ ॥ पूर्व० ॥

## अजामिकरणार्थत्वाच्च ॥ ६३ ॥

इतश्च द्विपुरोडाशायामेवेति । कुतः । अजामिकरणार्थत्वमत्र श्रूयते।जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति । विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वायेति । जामि सादृश्यमिति । पुरोडाशयोश्च सादृश्यदोष उच्यते । जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ पुरोडाशं कृत्वा पुनरनूचीनः पुरोडाश एवेति ।यत्र दोषस्तत्र दोषविघातार्थेन भवितव्यम्। तस्मात् द्विपुरोडाशायामेवेति ॥ ६३ ॥ युक्तिः ॥

## तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥

इति चेत् पश्यसि, तदर्थत्वादन्तरार्थत्वाद् द्विपुरोडाशायामेव भविष्यतीति । तन्न । तत्प्रधानत्वात् । पौर्णमासी प्रधानतः, अन्तराऽर्थो गुणतः । उपांशुयाजः पौर्णमासस्यावयवो विधीयते । उपांशुयाजस्याप्यन्तरालं गुण । एकपुरोडाशाऽपि भवत्येव पौर्णमासी । तस्यामुपांशुयाज केन न स्यात् । अन्तरालं गुणोऽसम्भवान्न भविष्यतीति । तस्मादसति अन्तराले एकपुरोडाशायामुपांशुयाज. कर्त्तव्य इति ॥ ६४ ॥ आ० ॥

## अशिष्टेन च सम्बन्धात् ॥ ६५ ॥

अशिष्टेन चाश्रुतेनान्तरालार्थेन उपांशुयाजस्य सम्बन्धः कर्त्तव्य. स्यात् । अन्तरालगुणक उपांशुयाज इति । न हि अन्तरालं गुणत्वेन विधीयमानं पश्यामः । तस्माद् एकपुरोडाशायामपि उपांशुयाज कर्त्तव्य इति ॥ ६५ ॥ युक्ति. ॥

## उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥

तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति । गुणत्वेनान्तरालं न श्रूयते इति । उत्पत्तिवाक्यनैवोपांशुयाजोऽन्तराले निविशते। अन्तरालमस्य गुण उत्पत्तिवाक्येन श्रूयते । उपांशुयाजमन्तरा यजतीति । तस्मादस्य गुणस्यानुपरोधेन गुणी निविशन, नैकपुरोडाशायां

स्यात् । नैकपुरोडाशायामक्रियमाणोऽनर्थको भवति । अन्तरालार्थो हि द्विपुरोडाशायां विद्यते । तदभावे अन्तरालार्थस्याऽभावे, अश्रुतौ यदि द्विपुरोडाशा न श्रूयेत । ततः स्यादेकपुराडाशायामुपांशु याज । अस्ति त्ववकाशो द्विपुरोडाशा पौर्णमासी । तस्माद् एकपुरोडाशायां न स्यादिति ॥ ६६ ॥ आ० नि० ॥

## उभयोस्तु विधानात् ॥ ६७ ॥

तुशब्दः पक्षं व्यावर्त्तयति । उभयो· पौर्णमास्योरुपांशुयाज । एकपुरोडाशायामपि स्यादित्यर्थः । कुत· । विधानात् । विधीयते हि स एकपुरोडाशायामपि । साऽपि हि पौर्णमासी । आज्यस्यैव ना उपांशु पौर्णमास्यां यजान्निति पौर्णमासीशब्द एकपुरोडाशां वर्जयन्नुपरुध्येत । तस्माद् एकपुरोडायामपि स्यात् ॥ ६७ ॥ सि० ॥

## गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६८ ॥

गुणश्चान्तरालं प्रधानार्थं श्रूयते उपांशुयाजार्थेन । अन्तरालेन उपांशुयाजस्योपकर्त्तव्यमिति । नासौ एकपुरोडाशायामुपांशुयाजं निवर्त्तयितुमर्हति । पौर्णमास्यां श्रूयमाण उपांशुयाज एकपुरोडाशाया अपि पौर्णमासीत्वात्तत्र प्राप्नोति । अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति । एकपुरोडाशायामन्तरालाभावान्नान्तराले स्यात् । तस्मादन्तरालस्य गुणस्य शास्त्र यदा पौर्णमासी तदेति स्यात् । उपवेषवत् । यथा उपवेषेण कपालान्युपदधातीति यदोपवेषस्तदा तेनेति गम्यते । एवमिहापि यदाऽन्तराल, तदा अन्तराले भविष्यति । तस्माद् एकपुरोडाशायामपि स्यादिति ॥ ६८ ॥ युक्तिः ॥

## अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६९ ॥

उच्यते । नन्वन्तरालगुणक उपांशुयाजः श्रूयमाणोऽन्तरालाभावादुच्यमानोऽपि पौर्णमास्यामेकपुरोडाशायां वैगुण्यात् फलस्याऽसाधक इति न क्रियेत । न हि पौर्णमासीविशेषे यत्रान्तरालमिति अन्तरालगुणता विधीयते । अविशेषेण हि द्विपुरोडाशायामेकपुरोडाशायां च तद्विधानम् । तस्माद् एकपुरोडाशायां प्रयोजनाभावान्न करिष्यते इति । आह । एवं सत्युपांशुयाजाभावादेकपुरोडाशा नैव कर्त्तव्या । अत्रोच्यते । नैष दोष· । फलवती हि सा भविष्यति, यदि द्विपुरोडाशा सम्भविष्यतीति । अत्रोच्यते । यद्येकपुरोडा-

शायां वैगुण्यमुपांशुयाजस्य स्यात्, ततो न क्रियेत । न तु वैगुण्यमस्ति । न ह्यन्तरालं गुणत श्रूयते । किन्तर्हि । काल लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये इति । कथम् । अनूद्य हि तौ पुरोडाशौ एतद्विधीयते । जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजतीति । यौ तावनूदितौ यथा व्यवहितौ भवतः, तथोपांशुयाज. कर्त्तव्य । तस्मिन् काल इति गम्यते । अनपायश्च तस्य कालस्यैकपुरोडाशायामपि । कथम् । यो हि द्वयोः पुरोडाशयोर्मध्य इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति । एवं चेद् यद्यप्येकपुरोडाशायां द्वौ पुरोडाशौ न स्तः । तथापि स पूर्व आग्नेयोऽस्ति । तस्मादुत्तर. स एव कालः । योऽसावन्तरालेन लक्षितः । यथा, नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति । यस्मिन् ग्रामे न नागाः, न शङ्खा, न पटहस्तस्मिन्नपि स एव कालः । तत्र हि आगमनं क्रियते । एवमिहापि द्रष्टव्यम् । तस्माद् एकपुरोडाशायामुपांशुयाज कर्त्तव्य इति ॥६९॥ आ० नि०

प्रशंसार्थमजामित्वम् ॥ ७० ॥

अथ यदुक्तम्, अजामिकरणार्थत्वादिति । तत् परिहर्त्तव्यम् । अत्रोच्यते । प्रशंसा एषा उपांशुयाजस्य वैचित्र्येण, न त्वेतदेवात्र फल विधीयते, यदजामित्वमिति । कुतः । विहितस्य हि प्रयोजनं विधीयते । न चैवं सति उपांशुयाजो विहितः स्याद् । विधाने चार्थद्वयविधानं दोषः । न च अजामिकरणं नाम किञ्चिदिष्टं फलम् । तस्मात् प्रशंसैषा । यथोपस्तरणाभिघारणयोरमृतार्थत्वम् । अमृतं वा आज्यं मर्त्यं हविर्यदुपास्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोतीति । तस्माद् एकपुरोडाशायामप्युपांशुयाजः कर्त्तव्य एवेति ॥७०॥ आ० नि० ॥ एकपुरोडाशायामप्युपांशुयाजाधिकरणम् ॥ १८ ॥

इति श्रीमच्छबरस्वामिकृतौ मीमांसाभाष्ये दशमस्याध्यायस्याष्टम· पाद समाप्तः ॥ १० ॥ ८ ॥

## अथ मीमांसा दर्शने

### एकादशे अध्याये प्रथमः पादः ॥ ११ ॥ १ ॥

**प्रयोजनाभिसम्बन्धात् पृथकसनां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥**

दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम् । इदानीमेकादशे तन्त्राऽऽवापलक्षणं निर्वर्त्तयिष्याम । तत्र यत्सकृत्कृत बहूनामुपकरोति तत् तन्त्रमित्युच्यते । यथा, बहूनां ब्राह्मणानां मध्ये कृत. प्रदीपः । यस्तु आवृत्त्या उपकरोति स आवाप । यथा तेषामेव ब्राह्मणानामनुलेपनम् । श्लोकमुदाहरन्ति–

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजक ।
एवमेव प्रसङ्ग. स्याद्विद्यमाने स्वके विधौ, इति ॥

साधारणं भवेत्तन्त्रमित्युक्तार्थम् । परार्थे त्वप्रयोजक इति । य. परार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानः परस्योपकरोति, स पर. तस्याप्रयोजक । यथा, पश्वालम्भो यागार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानो लोहितसकृत्कर्मणोऽप्युपकरोतीति । एवमेव प्रसङ्गः स्यात् । अयं तु विशेष । विद्यमाने स्वके विधौ इति । यद्यप्यस्य अन्यो विधिर्विद्यते परविधिना तु कृतार्थत्वान्न क्रियते । यथा, प्रयाजा पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि । पश्वर्था एव तु कृता पशुपुरोडाशस्य उपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते ।

प्रकृतमिदानीमुच्यते । तन्त्रावापलक्षणं प्रतिज्ञानम् । तदुच्यते । दर्शपूर्णमासयो प्रधानानि आग्नेयादीनि । तेषां स्वर्ग. फलं श्रूयते । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । स किं तेषां तन्त्रेण भवति, उत भेदेनेति । एवं चातुर्मास्यादिष्वपि द्रष्टव्यम् ॥

ननु च नैवात्र स्वर्ग फल श्रूयते । स्वर्गकामपदेन तावत् पुरुषोऽभिधीयते । यजेतेत्यनेनापि यागनिर्वृत्तिः । तयोर्वाक्येन सम्बन्धः । केनेदानीं फलमुच्यते । अनेनैव स्वर्गकामपदेनेत्याह । ननु पुरुषस्याऽयं वक्ता । न खलु कश्चित् पुरुषः स्वर्गकामो नामास्ति । ननु च यस्य स्वर्गे कामः स स्वर्गकाम इति । एतदेव न जानीम कस्य स्वर्गे

काम इति । य एव हि स्वर्गकामः स एवास्वर्गकामो भवतीति । एवं तर्हि कालोपदेशोऽयं भवति । यदा स्वर्गकामस्तदा यजेतेति । अत्रापि न कश्चित्, कालविशेषोऽस्ति, यस्मिन्नियमेन स्वर्गकामः स्यात् । सर्वेषु कालेषु सर्वे कामा अनियमेनोत्पद्यन्ते । तत्र न कश्चित् कालविशेषोऽनेन शक्यते व्यपदेष्टुम् । एवं तर्हि नैवायं पुरुषोपदेशो नापि कालोपदेशः । किं खलु, फलकामो निमित्तम् । स्वर्गविषये कामे उत्पन्ने यजेतेति । यथा कपाले नष्टे यजेतेति । अस्य पक्षस्य सूत्रेणैव परिहार उक्तः । फलकामो निमित्तमिति चेत् ( ६ अ० २पा० ९ सू० ) । न नित्यत्वात् ( ६ । २ । १० ) इति । नित्यानि अग्निहोत्रादीनि कर्माणि । तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत । तत्र नित्यचोदना यावज्जीविकाद्या अपरुद्ध्यन्ते । लिङ्गानि च, अप वा एष स्वर्गाल्लोकाच्च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेदित्येवमादीनि ॥

परिशेषात् फलसंयोग एवायम् । कथ पुनरनेन शक्यते फलं विधातुम् । तदुच्यते । स्वर्गकामो यजेतेति, यदि वा स्वर्गकामो यागायोपदिश्यते यथा लोहितोष्णीषा । यदि वा याग स्वर्गकामाय, यथा मलिन स्नायात्, बुभुक्षितोऽश्नीयादिति । तत्र यदि स्वर्गकाम. कर्मणे उपदिश्यते, उपदिष्टोऽपि न प्रवर्त्तेत । को हि परार्थे प्रयासमातिष्ठेत् । तथा कर्मचोदनाऽनर्थिकैव भवति । अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति । तं पुरुष. स्वार्थेन करोतीति । तथा कर्मचोदना अर्थवती भवति । अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः । तस्माद्यागः स्वर्गकामस्योपकारकः । स्वर्गकामस्यानेकपुत्रपशुग्रामान्नाद्यादिलाभकर. । स यदि पुत्रान्नाद्यादीनामन्यतम करोति, तत स्वर्गकामशब्दोऽविवक्षितार्थ पुरुषमात्रवचनो भवति । तथा चानर्थक्यमेव । अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते । तस्माद् यागात् स्वर्गो भवति ॥

तत्रानेककर्मसन्निपाते दर्शपूर्णमासादिषु भवति संशयः । किं तन्त्रमेषां फलम् ? उत, भेदेनेति । किं प्राप्तम् । भेदेनेति । किं कारणम् । इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथग्भूतानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति । तत्सन्निधौ स्वर्गा·

दि फलं श्रूयमाणं भेदेनाकाङ्क्षितत्वाद् भेदेनैव सम्बद्ध्यते । तस्मात् प्रतिप्रधानं फलभेद इत्येव प्राप्तम् ॥

एवं प्राप्ते, इदमारभ्यते । प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् । पृथग्भूतानामप्येतेषामाग्नेयादीनां ततः स्यादैककर्म्यम् । कुतः । प्रयोजनाभिसंयोगात् । प्रयोजनं फलम् । तत् प्रति एषां समेतानां सम्बन्धात् संयोगादित्यर्थः । ऐककर्म्यमिति । कर्मशब्देनात्र फलमुच्यते । क्रियते इति तद् येषामेकं, तानि एककर्माणि । तेषां भाव एककर्म्यम् । एकफलमित्यर्थः । कथं पुनर्ज्ञायते, समेतानामाग्नेयादीनां फलेन योग इति।एकशब्दाभिसंयोगात् । य एषां समुदितानामेकः शब्दो वाचकः, तेन एतानि अभिधाय फलसम्बन्धः कृतः, दर्शपूर्णमासाभ्यां स्वर्गकाम इति । अतः समुदितेभ्यः फलं गम्यते । न भेदेन । यथा ग्रामेणोदपानः खेयः, ग्रामेण तडागः खेय इति, ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैरेकः खन्यते । न प्रतिपुरुषं कूपभेदः । एवमिहापि ॥ १ ॥

शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥

नायमेकान्तः, यत् समुदायशब्देन संयोज्योच्यते तत् समुदितानामेव भवतीति । भेदेनापि किञ्चिद्भवति । यथा, गणाय स्नानं, गणायानुलेपनमिति अनुलेपनादिशेषो गणशब्देन समुदायवचनेनाऽपि संयोज्योक्तो, न समुदायेन सम्बद्ध्यते। केन तर्हि । समुदायिभिः। प्रतिपुरुषं हि स्नानादि आवर्त्तते । अतः शेषवद्वा फलं भिद्येत, कूपवद्वा तन्त्रं स्यादिति अवैशेषिकोऽयं हेतुः समुदायशब्दसंयोगः । तस्माद् हेत्वन्तरं वक्तव्यम् । अत्रैव विशेष इति ॥ २ ॥

सोऽयमुच्यते-

अविधानात्तु नैवं स्यात् ॥ ३ ॥

नात्र यागमुद्दिश्य फलं विधीयते, स्वर्गेण यागं कुर्य्यादिति । किन्तर्हि । फलमुद्दिश्य यागो विधीयते । स्वर्गं यागेन कुर्याद् इति । किं कारणम् । यात्र विधायिका विभक्तिः यजेतेति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात् । न च श्रुत्यर्थे सम्भवति वाक्यार्थो ग्राह्यः । श्रुत्यर्थस्य मुख्यत्वात् । किं पुनः स्याद् यदि फले विधीय-

माने यजत्यर्थोऽनूद्येत । न हि द्वयोर्विधीयमानयोः सम्बन्धोऽस्ति। अनुवादश्च सन्निहितानामाग्नेयादीनां स्यात् । तानि च परस्परानपेक्षाणि मिथो विभक्तानि उत्पन्नानीति विभागेनैवैतैः फलं सम्बद्ध्यते । अथ पुनर्यजत्यर्थे विधीयमाने आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तावुपादेयत्वेन चोद्यन्ते । चोदितानां समुदितत्वं गुणः सन्निधानविशेषाद् यो गम्यते स विवक्षितो भवति । अविवक्षायां कारणाभावात् ॥

यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न शक्यन्ते। न हि विधीयमानस्य विशेषणं भवति।यत्कारणं विशेषणमप्यविधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परसम्बन्धो भवति । किं पुनरत्र विशेषणेन कार्य्यम् ? यावता रूपवतामाग्नेयादीनां सन्निधौ अरूपो दर्शपूर्णमासाभ्यां यजेतेति यजतिशब्द समुदायवचन इति । किमर्थं तर्हि दर्शपूर्णमासशब्दः । अनर्थकश्च नित्यानुवादमात्रम् । यथा, इन्द्रेण देवेन वृत्रम्, इडान्ताऽऽतिथ्या सन्तिष्ठते, नानुयाजान् यजतीति । अथ वा, वाक्यार्थस्यैवात्र विधानं न्याय्यम् । श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दोऽनर्थक एवापद्यते। वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेनार्थवान् । यजतिरपि भावनाविधानार्थे प्राप्तोऽपि पुनः श्रूयते। प्राप्तिश्च दर्शपूर्णमासशब्दस्य यागवचनत्वादिति न किञ्चिदनर्थकम्। तस्मादेष पक्षो ज्यायान् ॥३॥ सि०

## शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

यत्तु शेषवदिति, शेषस्य अनुलेपनादेः परार्थेन विधानं पुरुषसंस्कारकत्वेन। एवं दृष्टोऽर्थो भवति । अन्यथा अदृष्टं कल्पयितव्यं स्यात् । तत्र गणः पुरुषलक्षणार्थो भवति । शक्नोति च सम्बन्धात् पुरुषाँल्लक्षयितुम् । अदृष्टं वा कल्प्यतां, लक्षणा वेति । दृष्टा लक्षणा कल्पयितुं न्याय्या। तस्मात् पुरुषलक्षणार्थो गणः । न च लक्षणं कार्येण सम्बद्ध्यते। किन्तर्हि । लक्षितः । तद्यथा शुक्लवाससमानयेति । यदा तु शुक्ले वाससी पुरुषलक्षणार्थमुच्येते, न तदा आनयनेन सम्बद्ध्येते इति । एवमिहापि न गणः कार्येण सम्बद्ध्यते,किन्तु पुरुषा एव कार्येण सम्बद्ध्यन्ते । तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते

॥ ४ ॥ आ० नि० ॥ आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाऽधिकरणम् ॥ १ ॥

अङ्गेष्विदानीं चिन्ता। किमङ्गानि सम्भूय कार्यं कुर्वन्ति ? उत भेदेनेति। तत्रैवमुच्यते—

**अङ्गानान्तु शब्दभेदात् क्रतुवत् फलान्यत्वम् ॥ ५ ॥**

यथा प्रधानानां समेतानामेकं फलं, नैवमङ्गानाम्। अङ्गानां पृथक् प्रयोजनम्। अङ्गस्याङ्गस्य पृथक् फलम्। किं कारणम्। शब्दभेदात्। चोदनाभेदादित्यर्थः। समिधो यजति, तनूनपातं यजति, इत्येवमादिभिः परस्परानपेक्षाभिश्चोदनाभिः पृथक्त्वेनाङ्गानि चोद्यन्ते। तानि पृथगेव प्रयोजनानिआकाङ्क्षन्ति,न साहित्येन। साहित्यस्यानुक्तत्वात्। अतस्तेषां पृथगेव प्रयोजनैरभिसम्बन्धो विज्ञायते। क्रतुवत्। यथा क्रतुषु पृथक्त्वेन चोदितेषु पृथगेव फलसम्बन्धो भवति ॥ ५॥ पूर्व०

**अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥**

युक्तं, यत् क्रतुषु फलभेदः। शब्देन तत्र भिन्नानि फलानि उक्तानि। सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इति। इह ऐकार्थ्यं, सर्वेषामङ्गानामेकोऽर्थः प्रधानेषु उपकारः। उपकारापेक्षायां हि अङ्गानि श्रूयन्ते। तानि सर्वाणि एकाऽर्थानि भवन्ति। नन्वेवं सति एकार्थत्वादेषां विकल्पः प्राप्नोति। वक्ष्यते तत्परिहारः, विधेस्त्वेकश्रुतित्वाद् (१७ सू०) इत्यत्र यथा विकल्पो न भवति। अत ऐकार्थ्यादङ्गानामेकं कार्यमिति ॥६॥ सि० ॥

**शब्दभेदान्नेति चेत् ॥ ७ ॥**

अथ यदुक्तं,चोदनाभेदादङ्गानामर्थभेदोन्याय्यइतिातत्परिह्रियते। सर्वाणि च प्रधानस्योपकुर्युः भिन्नानि च कार्याणि कुर्युः तद्यथा कारकाणि कर्त्रादीनि सर्वाणि तावत् क्रियाया उपकुर्वन्ति, अथ च प्रतिकारकं कार्यभेदः, इदं तर्हि परिह्रियते।यदि समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते। समिद्याजिः प्रयोक्तव्यः, तनूनपाद्याजिः प्रयोक्तव्य इति। ततः स्यात् प्रयोजनाकाङ्क्षा। सा च भवन्ती भेदेन स्यात्। न त्वत्र प्रयोग उच्यते।किन्तर्हि।रूपमात्रमाख्यायते। एवँलक्षणको याग इह भवतीति। तत् कस्य हेतोः। प्रयोगवचनस्य प्रत्ययस्याभावात्। अन्येन च प्रयोगस्योक्तत्वात्। क पुनरेषां प्रयोग उक्तः। उत्तरसूत्रे दर्शयिष्या-

मः। न चेदत्र प्रयोजनाकाङ्क्षा, कुतः प्रयोजनं, कुतो भेदः ॥७॥ आ० ॥

कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥

प्रधानानां प्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं स्यात् प्रयोगस्य। तेनैव प्रधानप्रयोगवचनेनैव शब्देन अङ्गानामपि प्रयोग उच्यते। दर्शपूर्णमासाभ्यां यजेतेति। कुतः। कर्मार्थत्वाद्। क्रियार्थत्वादित्यर्थः। फलस्य क्रियार्थौ दर्शपूर्णमासौ श्रूयेते, दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति। तत्र आकाङ्क्षा भवति। कथमिति। सा समिदादिभिश्चोदनाभिर्निवर्त्यते। समिधो यजति, तनूनपातं यजतीत्येवमिति। तत् कस्य हेतोः। तदर्थत्वात्। तदर्था एताः समिदादिचोदना। तेनाकाङ्क्षितत्वात्, अफलत्वात्, फलवत्सन्निधानाच्च। सैषा दर्शपूर्णमासयोः फलं साधयतोरितिकर्त्तव्यता। न चेतिकर्त्तव्यतामन्तरेण कर्मचोदना अर्थवती भवति। तस्मात् सेतिकर्त्तव्यताकः कर्मणः प्रयोगश्चोद्यते। तथा च सिद्धमेतत् प्रधानप्रयोगवचनेनैव शब्देनाङ्गानां प्रयोगश्चोद्यत इति। एवं च सति एकशब्दचोदितान्येवाङ्गानि। तत्र यथा प्रधानानामेकशब्दाभिसंयोगात् फलैक्यमेवमङ्गानामपीति ॥ ८ ॥ आ० नि० ॥

अत्राह। नैतद्युक्तम्। कुतः।

कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु ॥ ९ ॥

कर्त्तुर्यश्च प्रधाने विधिः दर्शपूर्णमासाभ्यां यजेतेति। यश्चाङ्गेषु साङ्गाभ्यामिति, तयोर्नानार्थत्वम्। प्रधानविधिः फलार्थः। अङ्गविधिः प्रधानार्थः। तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रति अनूद्यानि। न च विध्यनुवादौ युगपत् सम्भवतः। तस्माद् नैकेन वाक्येन प्रधानानि। तेषाञ्चेतिकर्त्तव्यता शक्या विधातुम्। अतो न प्रधानचोदनागृहीतानि अङ्गानि ॥ ९ ॥ आ० ॥

तत्राह। नैतदयुक्तम्। युक्तमेतत्। कुतः।

आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥

आरम्भो व्यापारः क्रियेत्यनर्थान्तरम्। यागेनेह स्वर्गस्य क्रिया उच्यते। यजेत यागेन स्वर्गं कुर्यात्। स्वर्गार्थं व्याप्रियेतेत्यर्थः। इदं तु न ज्ञायते, कोऽसौ व्यापारः? इति। तत्सन्निधौ चाग्न्यन्वाधानादि श्रूयते। तस्मिन् आकाङ्क्षितत्वात् सन्निधानाच्चैतद्भवति।

अयमस्मिन् व्यापारः । येन यागः स्वर्गं करोतीति । तस्मिन् विधीयमाने नास्ति वाक्यभेदः ॥

अथ वा प्रधानानां फलं प्रति, अङ्गानाञ्च प्रधानानि प्रति विधिः अविरुद्धः । कथं कृत्वा । दर्शपूर्णमासाभ्यां स्वर्गसाधनमपूर्वमुच्यते । तस्य सविशेषस्य वचनं प्रयुज्यते । यथा, एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेतेति । तस्मात् प्रधानप्रयोगवचनेनैवाङ्गानां प्रयोगो विधीयत इति ॥१०॥ आ० नि० ॥ अङ्गानामेककार्याधिकरणम् ॥ २ ॥

इदं विचार्य्यते । किमग्निहोत्रादीनां कर्मणामेकदेशाङ्गयुक्तानामपि प्रयोगः ? अथ वा सर्वाङ्गोपसंहारेणैवेति । अथ तत्र किं वृत्तम् ? । सर्वशक्तौ प्रवृत्तिः स्यात् ( ६ अ० ३ पा० १ सू० ) इति । तत्र नैयमिकमारम्भं प्रति चिन्ता कृता, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यनया चोदनया, योऽयं यावज्जीविकः प्रयोगनियम उच्यते, किं तत्र सर्वाङ्गोपसंहारः ? उत नेति । इहेदानीं फलार्थे प्रयोगे चिन्ता । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनया चोदनया योऽयं स्वर्गार्थ आरम्भः, तत्रापि किं नैयमिकवदेव प्रयोगः ? उत सर्वाङ्गोपसंहार इति । किं तावत् प्राप्तम्—

**एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ ११ ॥**

एकदेशेनापि अङ्गानां समाप्येत, कर्म प्रयुज्येतेत्यर्थः । कुतः । कृतार्थत्वात् । याऽसौ, दर्शपूर्णमासाभ्यां स्वर्गार्थं व्याप्रियेतेत्युक्ते कथं व्यापारितव्यमित्याकाङ्क्षा, सा एकेनाऽपि अङ्गेन कृतार्था भवति । समिधो यजत्येवं व्यापारितव्यम् । तथाऽङ्गद्वयेनाऽङ्गत्रयेण च । यो यावन्ति अङ्गानि करिष्यति, स तावत्कृतमुपकारं प्राप्स्यति । यथा क्रत्वन्तरेषु सौर्य्यार्य्यमणप्राजापत्यनैर्ऋतादिषु यो यावन्ति कर्माणि करोति, स तावद्भ्यः फलमश्नुते । न तु तत्सन्निधानाविशेषात् सर्वाण्येवाङ्गानि, प्राप्यन्ते । प्राप्तेषु चोत्तरावत् स्यात् । तद्यथा, वाग्यतास्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयतीति । यस्य यावत्यो गावः स तावतीर्दोहयतीति । तावतीष्वपि कृतार्थ उत्तराशब्दः । एवमिहापि यो यावन्ति अङ्गानि उत्सहते स तावन्ति करिष्यति ॥ ११ ॥ पूर्व० ॥

## फलाभावान्नेति चेत् ॥ १२ ॥

इति चेद् भवान् पश्यति, एकदेशाङ्गयुक्तानामनियतानां कर्मणां प्रयोग इति । तन्न । कुत. । फलाभावात् । यावच्छ्रुतं स्वर्गकामस्य, स्वर्गकामेनेदं कर्त्तव्यमिति । तत् साकल्येनाकुर्वतः फलाभावः स्यात् सर्वं चेदं श्रुतं स्वर्गकामो यजेतेत्युक्त्वा सर्वस्य अग्न्यन्वाधानादेः कर्मकलापस्याम्नानात् ॥ १२ ॥ आ० ॥

## न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥

नैतदेवम् । अङ्गवैकल्ये फलाभाव इति । कुतः । कर्मसंयोगात् । प्रधानकर्मणा हि फलं संयुक्तम् । दर्शपूर्णमासाभ्यां स्वर्गकाम इति, न अङ्गैः । अङ्गानि तु तदाकाङ्क्षया गृह्यन्ते । सा चाकाङ्क्षा एकेनापि कृतार्था भवतीत्युक्तम् । एवं चेत् प्रयोजनमङ्गकृत उपकारः । फलं च स्वर्गादि अशब्ददोषं स्यात् । दर्शपूर्णमासयोः फलार्थत्वे दर्शपूर्णमासाभ्यां स्वर्गकाम इत्येवंशब्दो न दुष्येत् । तत्सान्निधौ चाङ्गानां विधायका ये समिदादय,ते च तदुपकारित्वे न दुष्येयुः । तस्मान्नाऽङ्गाभावे फलाभाव ॥ १३ ॥ आ० नि० ॥

## ऐकशब्द्यादिति चेत् ॥ १४ ॥

इति चेत् पश्यसि, दर्शपूर्णमासाभ्यां तत् फलं, न समिदादिभ्य इति । नैतद्युक्तम् । किं कारणम् । ऐकशब्द्यात् । एकःशब्द उपदेशकः प्रयोगस्य दर्शपूर्णमासयोः, समिदादीनाञ्च । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तेन च फलसम्बन्धः कृतः । तत्र कुत एतद् ? दर्शपूर्णमासतः फलं, नेतरेभ्य इति ॥

न सर्वाणि फलसंयुक्तानीति । किन्तर्हि । दर्शपूर्णमासावेव । कथं ज्ञायते । दर्शपूर्णमासाभ्यां स्वर्गं कुर्यादिति दर्शपूर्णमासयोरेव स्वर्गं प्रति करणत्वं श्रूयते, न समिदादीनाम् । आकाङ्क्षया हि तेषां ग्रहणम् । सा च कथम्भावस्याकाङ्क्षा कथं कुर्यादिति, न करणस्य, केन कुर्यादिति । तस्य निर्दिष्टत्वाद्, दर्शपूर्णमासाभ्यामिति । तस्माद् न समिदादीनां फलेन संयोग. । यदि च संयुज्येरन् न समानि आग्नेयादिभि. स्यु. ॥

समत्वाच्च गुणत्वं तत्र यदुच्यते, एकदेशाङ्गयुक्तानामपि प्रयोग इत्येतदेव नास्ति । ये त्वैककर्म्यादिति सूत्रं पठन्ति तेषामयमर्थ

इति चेत् पश्यसि प्रधानानामङ्गवत्तया अङ्गानि क्रियन्ते इति । तस्मादेककर्त्र्यं भवतु एकमेवाङ्गं प्रयुज्यतामेकेनापि प्रधानमङ्गवद्भवति ॥ १४ ॥ आ० ॥

नार्थपृथक्त्वात् समत्वादगुणत्वम् ॥ १५ ॥

नैतदेवम् । कस्मात् । अर्थपृथक्त्वात् । अर्थपृथक्त्वं भवति । उपकारपृथक्त्वमेकेनाङ्गेनार्थ यत्त.यामल्प उपकारो बहुभिर्महान् । कथं ज्ञायते । समत्वादगुणत्वम् । यद्येकेन बहुभिश्च सम उपकारः स्यात् तत्रैकस्यैवाङ्गत्वं भवेद् अन्येषामगुणत्वं स्यात् । अनङ्गत्वमित्यर्थः । तत्र बहूनामाम्नानमनर्थकं स्यात् । न चैषां विकल्प इत्युक्तं,विधेस्त्वेकश्रुतित्वादित्यत्र । तस्मादङ्गभूयस्त्वे फलभूयस्त्वमिति ॥१५॥ आ० नि०

विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगाद् अर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥

नत्वेतदेवमेकदेशेनाप्यङ्गानां प्रयोग इति । कथं तर्हि । सर्वाङ्गोपसंहारेण । कुतः । विधेरेकश्रुतित्वात् । एकेन शब्देनाङ्गानां प्रयोगो विधीयते दर्शपूर्णमासाभ्यां यजेतेति सर्वापेक्षयेत्युक्तम् । सा त्वपेक्षा कृत्स्ने वाऽन्यन्वाधानादिव्यापारे तदेकदेशे वा । तत्रैकदेशापेक्षा न युक्ता । कस्मात् । अपर्यायविधानात् । इमान्यङ्गानि न पर्यायेण विधीयन्ते, कदाचित् समिधो यजति, कदाचित् तनूनपातमिति । कथं तर्हि । नित्यवद्यथाभूतानि च श्रुतानि तथा भूतान्यपेक्षयाभिसम्बद्ध्यन्ते । अथोच्येत । नित्यवच्छ्रुतानामपि सतामेकदेशोऽपेक्षिष्यत इति । नैतद्युक्तम् । कुत । अर्थेन युगपत् प्राप्तेः । अर्थेन प्रधानोपकारेण खलेकपोतवद्युगपत्सन्निपतन्त्यङ्गानि । तत्र गृह्यते विशेषः । इदं प्राप्यते, इदं नेति । अतः सर्वाणि प्राप्यन्ते । यथाप्राप्तं च स्वशब्दार्थो निवीतवत् । यथा, निवीता ऋत्विजः प्रचरन्तीति ऋत्विग्विशेषाभावात् सर्वेषां च सन्निधानात् सर्वऋत्विजो निवीता भवन्ति । एवमिहापि सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ सि० ॥

तथा कर्मोपदेशत्वात् ॥ १७ ॥

तथा च कृत्वा चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति आहुतिसंख्या पाक्षिकी न भविष्यति ॥१७॥ हेतु ॥

**क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥**

तत्र यदुक्तं यथा क्रत्वन्तरेष्विति, युक्तं तथा क्रत्वन्तरेषु पार्थक्यम् । सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम इत्युक्त्वा पुनरुच्यते—ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इति । किमतः । अतस्तेषां परस्परानपेक्षाणां कार्यं न सम्भूयेति गम्यते । परिसमाप्ते हि पूर्वस्य विधाने उत्तरं पृथक्त्वेन विधीयते । अथेह विधेस्त्वेकश्रुतित्वादित्यनेन न्यायेन सम्भूयकार्य्यमङ्गानां युक्तम् । तस्माद्वैषम्यं क्रतुभिः ॥ ॥ १८ ॥ पूर्व० आ० नि० ॥

**उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् सन्दोहे यथाकामी प्रतीयेत ॥ १९ ॥**

यथाप्राप्ते चोत्तरावत् स्यादिति यदुक्तं, तन्न युक्तम् । यदुत्तरासु यावत्स्वं दोहनमश्रुतित्वात् । नात्रोत्तराणां दोहनं विधीयते । किं तर्हि । अनूद्यते । किं कारणम् । विशेषाणां वाग्विसर्जनादीनां विधाने कृतार्थं तद्वाक्यं नोत्तराणां दोहनं विधातुमुत्सहते । विधीयमानेऽर्थद्वयी, भिद्येत वाक्यम् । अनुवादश्च प्राप्तस्यार्थस्य भवति । अर्थाच्च यावत्स्वं दोहनं प्राप्तम् । अर्थादस्वा न दोह्याः, स्वास्तु सर्वाः कथं न दोह्याः । उपरिष्टादेतद्वक्ष्यामः । तथा पयःप्रतिषेधः कुमाराणामित्यत्र । तस्माद्यथा कामी प्रतीयते यावत्यो गावः स तावतीर्दोहयति ॥ १९ ॥ पूर्व० आ० नि० ॥ दर्शपूर्णमासादिकाम्यकर्मणां सर्वाङ्गोपसंहाराधिकरणम् ॥ ३ ॥

**कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥**

काम्येषु कर्मसु चिन्ता । किं काम्यं कर्म सकृदेव प्रयोक्तव्यम्, अथ वा फलस्य भूयस्त्वमिच्छता भूयोऽभ्यसितव्यमिति । किं प्राप्तम् ।

काम्ये कर्मणि प्रतिप्रयोगं फलभेदः । आरम्भभाव्यत्वात् कर्मप्रयोगेण फलं भाव्यते । कथं ज्ञायते । प्राक्कृतात् कर्मणः फलं नास्ति । यदि भवेत्कर्मानर्थक्यं स्यात् । कर्मोत्तरकाले चास्तीति श्रुतितो गम्यते । यच्च प्राक्कर्मणो नास्ति कर्मोत्तरकाले च भवति तत्तेन

कर्मणा भाव्यते । कृषिवत् । यथा कर्षणेन धान्यमसकृद्भाव्यते पुनरपि धान्यवदेतद्भविष्यति ॥ २० ॥ पूर्व०७ ॥

**अधिकारश्च सर्वेषां कार्य्यत्वादुपपद्यते विशेषः॥२१॥**

एवं च कृत्वा सर्वेषां कर्मणां पुनः पुनः क्रियमाणानामधिकारो भविष्यति । तत्रेमानि दर्शनान्युपपत्स्यन्ते । तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रो ये द्वितीयं तेषामायुरिति । प्रथमं यजेरन् द्वितीयं यजेरन् एतदभ्यासे सति । तस्माद्यावदिच्छमभ्यास ॥२१॥पूर्व०युक्तिः

**सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२ ॥**

सकृदेव तु काम्यं कर्म प्रयोक्तव्यम् । कुतः । कृतार्थत्वात् । सकृत् कृतेन कृतश्चोदनार्थ. ।न च कृते पुन. कर्त्तव्यमस्ति।कः पुनश्चोदनाऽर्थो, यागस्य कर्त्तुः फलं होमस्य कर्त्तुः फलमिति । कथं कृत्वा तदुच्यते । इह यजेज्जुहुयादिति धातुना क्रियोच्यते, प्रत्ययेन कर्त्ता । तयोः कर्ता प्रधानभूतः, उपसर्जनभूता क्रिया । प्रकृतिप्रत्ययौ सहार्थं ब्रूत. अनुप्रयोगश्च कर्तृप्राधान्य एव भवति । पचति देवदत्त इति । तेन होतुर्यष्टुश्च फलमुच्यते । सकृद्धुतेन सकृदिष्टेन वाऽसौ होता यष्टा च जातः । तत्र द्वितीयादिप्रयोगोऽनर्थकः स्यात् । कृतार्थत्वादङ्गवत् । तद्यथा प्रधानस्य साङ्गत्वोपपादनायाङ्गानि क्रियन्ते सकृत् कृतैश्च तदुपपादितमिति नाभ्यस्यन्ते तद्वत् ॥ २२ ॥ पूर्व०आ० ॥

**शब्दार्थश्च तथा लोके ॥ २३ ॥**

लोकेऽपि तथैव शब्दार्थो भवति काष्ठान्याहरेत्युक्तः सकृदाहरति, न पुन पुन ॥ २३ ॥ निदर्शनम् ॥

**अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः ॥ २४ ॥**

अपि वा नैवं स्यादस्मिन्नर्थिनः कर्मणश्च संयोगे सकृदेवार्थी कर्मप्रयोगे वर्त्तेतेति। कथं तर्हि । यथाकामी प्रतीयेत।सकृद् वा बहुकृत्वो वा । फलभूमार्थी बहुकृत्वः, सन्तुष्टः सकृत्।कुतः । अश्रुतित्वात्।नात्र यष्टुर्होतुः फलं श्रूयते । यत्तु प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति, तत् कर्मनिमित्तेषु नामपदेषु पाचको लावक इत्येवमादिषु।आख्याते तु न कर्त्ता क्रियाप्रधानत. । किं तर्हि । भावप्रधानमाख्यातम् । भावना च न कस्य चिच्छ्रूयते । भावनाप्रयुक्तस्य साधनग्रामस्यापेक्षितत्वाद्, यजेत केन

किमर्थं कथमिति । कर्तृप्राधान्ये कार्याभावान्न साधानाकाङ्क्षया भवितव्यम् । न हि भवति पाचकः केन किमर्थं कथमिति । भावना च फलस्योच्यते, न क्रियायाः । तृतीयानिर्देशाद्, उद्भिदा यजेत, बलभिदा यजेतेति । भाव्यत्वे हि द्वितीयाया निरपेक्ष्यत्वम् । स्वर्गस्त्वीप्सितः कामसंयोगात्, स्वर्गकाम इति । तदेतदेवमापद्यते स्वर्गकामो यागेन स्वर्गं भावयेदिति।यच्च भाव्यते तद् व्यक्तमसत्यतो हि भावो नोपपद्यते।असञ्चेन् कर्मणा भाव्यते पुनःपुनरपि भावयिष्यति,कृषिवत् । तस्मात् फलार्थिना काम्यं यावदिच्छमभ्यसितव्यमिति । यदि च नियोगतः सकृदेव कर्त्तव्यं भवेत्, ततस्तेषां प्रथमं यजेरन्नित्येवमादिषु गवादिविधिषु वचनान्येतानि कल्प्येरन्न द्वितीयं यजेरन्निति। तथा च वाक्यानि भिद्येरन् । ये च द्वितीयं यजेरँस्तेषां गौरतिरात्र इति ॥ २४ ॥ सि० ॥

## ऐकशब्द्यात् तथाङ्गेषु ॥ २५ ॥

यत्तु अङ्गवदिति । युक्तं यदङ्गानां सकृत् प्रयोगः । ऐकशब्द्यात्। एकस्तत्राङ्गानां प्रधानानां वोपदेशकः शब्दः सर्वाङ्गान्यपेक्षया गृह्णातीत्युक्तम्।सा चापेक्षा सकृदेतेष्वङ्गेषु भवति कृतार्था।तस्मात् तत्र पुनःपुनः क्रियाया हेतुर्नास्ति।इह त्वसतः फलस्य कर्मोत्पादकम्।तस्य प्रतिप्रयोगमन्यस्यान्यस्योत्पत्तिरविरुद्धेत्येवमपदिष्टो हेतुः । तस्माद्विषमत्वमङ्गैः ॥ २५ ॥ पूर्व० आ० नि० ॥

## लोके कर्मार्थलक्षणम् ॥ २६ ॥

यच्च लोकवदिति लोके कर्मार्थप्रधानं कार्यवशात् सकृदप्युक्तोऽसकृदाहरति, असकृदप्युक्तः सकृदाहरति, नाहरति वा । अथेह शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्तिः । तस्माल्लोकवदित्यदृष्टान्तः ॥ २६ ॥ निदर्शनम् ॥ काम्यकर्मणः फलाधिक्यायासकृदनुष्ठानाऽधिकरणम् ॥ ४ ॥

## क्रियाणामर्थशेषत्वात् प्रत्यक्षतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

व्रीहीनवहन्ति, तण्डुलान् पिनष्टि इत्येवमादीनां दृष्टप्रयोजनानां क्रियाणामातण्डुलनिर्वृत्तेः प्रयोगः स्यात् । कुतः । एतासां प्रयोगे प्रत्यक्षोऽर्थो निर्वर्त्यते । अवहतास्तण्डुलाः पिष्टाश्च । तैश्चेह प्रयोजनं

पुरोडाशस्य कार्यत्वात् । तस्मादेतासां तदर्थ एव प्रयोगो विज्ञायते । यदि सकृदेव मुसलस्योद्यमननिपातने कृत्वोत्सृज्येत उपलाया वा प्रकर्षणाप्रकर्षणे, यद्येषां कार्यं तन्नैव निर्वर्त्येत । अत आसां तन्निर्वृत्त्या अपवर्गः स्यात् । आतण्डुलनिर्वृत्तेरा च पिष्टनिर्वृत्तेरभ्यास इति ॥२७॥

धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ २८ ॥

यत्र तु दृष्टं कार्यं तन्निर्वर्त्यते । यथा, अग्निचित्यामौदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्त्यत्र तनुपदधातीति । तत्र तण्डुल-निर्वृत्त्या नास्ति प्रयोजनम् । तण्डुलकार्यस्य पुरोडाशादेरचोदितत्वा-त् । तस्मात् तत्र सकृत् क्रियया कृतः शब्दार्थ इति न स्यादभ्यासः । येषां तु तण्डुलफल एव मुसलस्योद्यमननिपातनकर्मण्यवहन्ति-शब्दः प्रवर्त्तते इत्युपगमस्तेषामातण्डुलनिर्वृत्तेरेवाभ्यासः प्राप्नोति । स तु मन्द एवाभ्युपगमः । यत् कारणं विनापि तण्डुलैः प्रयोगो दृश्यते, कषायमवहन्ति, किण्वमवहन्तीति । न चाऽसौ गौणः प्र-योगो, विशेषाभावात् । अवयवप्रसिद्ध्या चाऽवघातमात्रवचन एव प्रतीयते । न च समुदायोऽर्थान्तरे प्रसिद्ध । तण्डुलव्यापारस्य तु प्रायोवृत्ते तत्र प्रयोगप्राचुर्यमतोऽयं व्यामोहः ॥ २८ ॥ सिद्धान्त ॥

अङ्गस्यामभ्यासाऽधिकरणम् ॥ ५ ॥

प्रयाजादीन्युदाहृत्य चिन्त्यते । किं सकृत् प्रयोग एषाम् ? उता-ऽऽवृत्त्याभ्यासोऽपि कर्त्तव्य इति । तत्र धर्ममात्रे त्वदर्शनाच्छब्दार्थेनाप-वर्गः स्यादित्यनेन न्यायेन सकृत् प्रयोगे प्राप्ते एवमुच्यते—

क्रतुवच्चानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥

अभ्यासः कार्यः । कुतः । यतोऽभ्यासे भूमा स्यात् । कथं ज्ञायते । अनुमानेन । किं तदनुमानम् । प्रागङ्गप्रयोगात् प्रधानोपकारो नासी-दूर्ध्वं, ततो भवति । तेन विज्ञायते, नूनमङ्गेन क्रियते इति । क्रियते चेत् पुनः पुनरपि करिष्यते । क्रतुवत् । यद्यथा कर्मसु सौर्यादिषु फलं कर्मणा क्रियते इति कर्माभ्यासे फलभूयस्त्वमेवमिहापि॥२९॥पूर्व०

सकृद्वा कारणैकत्वात् ॥ ३० ॥

सकृद्वाङ्गं प्रयोक्तव्यं, नावृत्त्या । कुतः । कारणैकत्वात् । एकं कारणमङ्गानां प्रधानेषु उपकारः । क्व पुनरसौ । येन प्रधानानि फलं ददति । तच्चेत् सकृत् प्रयुक्तो नाङ्गेन कृतं, जातानि प्रधानानि फल-

वन्तीति पुनरङ्गस्याप्रयोगः । अथ न कृतं पुनराप्तप्रयोगः । येन सकृत् कृतेन नोपकृतं स पुनः क्रियमाण उपकरिष्यतीति का आशा ॥३०॥सि०॥

परिमाणं चानियमेन स्यात् ॥ ३१ ॥

यदि चानियमः सकृदसकृद्वा प्रयोगः, ततः चतुर्दशपौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति योऽयं नित्यवदाहुतिपरिमाणानुवादः स न स्यात् । स तावद्भवतां पाक्षिक कल्प्येत, तथाऽस्य रूपं बाध्येत । तस्मादनभ्यासः ॥ ३१ ॥ युक्ति ॥

फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥ ३२ ॥

यत्तु क्रतुवदिति । युक्तं, यत् क्रतुष्वभ्यासः । फलस्यारम्भनिष्पत्तेः । कर्मारम्भेण तत्र फलं निष्पद्यते । आरम्भान्तरेण परं निष्पत्स्यत इति । अङ्गस्य पुनरुक्तपरिणामफलं प्रधानम् । फलवत्तासम्पादनम् । तच्चेत् सकृत् कृतेन कृतं न भूयः क्रियाऽस्त्विति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः ॥ ३२ ॥ पूर्व० आ० नि० ॥

अर्थवतस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥३३॥

यदुक्तं, सकृत् कृतेनाङ्गेन कृतत्वादर्थस्यानर्थकोऽभ्यास इति । अत्र ब्रूमः अर्थवांस्तु अभ्यासो ग्राह्यो, नानर्थकोऽभ्यासः । कथं कृत्वा । एकत्वादभ्यासः स्यादनर्थकः । यद्येकमेवार्थमभ्यस्यमानमपि अङ्गं कुर्यात् तस्याभ्यासोऽनर्थकः स्यात् । यथा भोजनमेकस्मिन् काले अभ्यस्यमानमेकफलं तृप्तिं करोतीति नाभ्यस्यते । अथेहार्थस्यापरिमाणत्वे इयन्तमुपकारं करोत्यङ्गमिति ज्ञायते । ननु यावता प्रधानं फलवद्भवति तावत् करोतीति गम्यते । सत्यमेवं, किन्तु प्रधाने क्रियाऽर्थत्वादनियमः स्यात् । प्रधानस्य फलक्रियार्थमङ्गम् । तत्तु प्रधानफलमपरिमितम् । तदङ्गोपकारस्य भूयस्त्वे भूयो भविष्यति । अल्पत्वे अल्पम् । अभ्यासे चासंशयं भूयानुपकारः स्यात् कार्यत्वात् तस्य । तस्मादनियम स्यात् सकृद्वा प्रयोगोऽभ्यासो वेति ॥३३॥आ०॥

पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥

यत्तु आहुतिसंख्या विरुध्यत इति पृथक्त्वादुपकारस्याऽभ्यासे

न्यायप्राप्तोऽयमाहुतिसंख्याऽनुवादः स्यात् स विधितः स्यादाहुतिविधी-नभिप्रेत्य । चतुर्दशपौर्णमास्याहुतिविषयस्त्रयोदशामावास्यायामिति । न ह्याहुतिसंख्या युज्येत । आहुतिविधिसंख्या तु लक्षणयोपपद्यते ॥ ॥ ३४ ॥ आ० नि० ॥

**अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रा-दफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥३५॥**

अनभ्यासो वाऽङ्गानाम् । कुतः । प्रयोगवचनैकत्वात् । एकः प्र-योगवचनोऽङ्गानां प्रधानानां च । तस्यैकत्वात् सर्वस्य युगपच्छासन-मनेन कर्मणा साङ्गेन यजेतेति । सकृत् कृतैश्चाङ्गैस्तत्साङ्गं जातमिति न पुनः क्रियायां हेतुरस्ति । ननूपकारभूयस्त्वं भविष्यति । यद्यङ्गा-न्यदृष्टमुपकारं कुर्युस्ततस्तदभ्यासे उपकारभूयस्त्वमनुमीयेत । दृष्टमेव त्वर्थमङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्ताम् । सा चाभ्यासेऽपि तावत्ये-वाङ्गवत्ता । सा चेह फलसम्बद्धा साङ्गेन यजेतेति, नाङ्गानि । अङ्गा-नि तत्सम्पादनेनार्थवन्ति । नन्वेतदयुक्तमिव । यदा हि प्रयाजाः, न तदा प्रधानयजिरपूर्वं वा । यदा च यजिरपूर्वं च, न तदा प्रयाजाः । तदेवमदृष्टरहिते समिदादिमात्रे सत्यङ्गवत्तैव नास्ति, कुत उपकारः । अपि च यदि याजिमात्रमेवाङ्गेषु, नापूर्वफलमस्ति ततः सोमाङ्गभूता-नामिष्टिपशुबन्धानां चोदक एव नास्ति । असति ह्यपूर्वे इतिकर्त्तव्य-ताकाङ्क्षा नास्ति । यजते प्रज्ञातेतिकर्त्तव्यताकत्वादितिकर्त्तव्यतां चोदको नातिदिशेत् । तत्रैतानि दर्शनानि नोपपद्येरन् । तस्यैकशतं प्रयाजानुयाजा । न च समिष्टयजूंषि जुहोति प्रहृत्य परिधीन् जुहो-ति हारियोजनमिति । तस्मादियमन्या व्याख्या ॥

अनभ्यासो वाङ्गानां प्रयोगवचनैकत्वात् । एकप्रयोगवचनेऽङ्गानां प्रधानानां च तस्यैकत्वात् सर्वस्याङ्गप्रधानकलापस्य युगपच्छासनप्र-धानानामनभ्यासः । कस्य हेतोः । सकृत् कृतः प्रधाने कृतः श्रुत्यर्थः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति कृते श्रुत्यर्थे यच्छास्त्रविहितं फलं तल्लब्धमिति न पुनः क्रियायां हेतुरस्ति । एवमङ्गेष्वपि सकृत्कृ-तेषु यदङ्गानां प्रापकं शास्त्रं तस्यार्थः कृतः । तस्मिन् कृते यच्छास्त्रा-धिगतमाङ्गफलं तल्लब्धमिदानीमित्यवगन्तव्यम् । तथा च सत्यभ्या-सोऽनर्थकः । यत्तु फलभूयस्त्वं भविष्यतीति । तदयुक्तम् । दर्शपूर्ण-

मासयोर्यत्फलं तद्भावनायामङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ । यद्यपूर्वफलमङ्गैरुत्पाद्येत, अङ्गफलमेव तत् स्यात् । न चाङ्गानि फलवन्ति । प्रधानानां स्वकार्यं साधयतामदृष्ट उपकारस्तैः क्रियते । सकृत्कृतैश्चासौ कृत । तस्मान्नाङ्गावृत्तौ फलभूयस्त्वमस्ति ॥३५॥ सि० नि० ॥

## अभ्यासो वा छेदनसंमार्गावदानेषु वचनात् सकृत्त्वस्य ॥ ३६ ॥

अभ्यासो वाङ्गानाम् । कुत । पितृयज्ञे हि श्रूयते, सकृदाच्छिन्नं बर्हिर्भवतीति । यथानुयाजे सकृत परिधीन् संमार्ष्टीति । स्विष्टकृति चोत्तरार्द्धात् सकृदवद्यतीति । तद्यत् सकृदङ्गानां प्रयोगस्तत एतानि वचनान्युपपद्यन्ते । तस्मादभ्यासः ॥ ३६ ॥ आक्षेपः ॥

## अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

अनभ्यासस्त्वङ्गानां यथोक्तेन न्यायेन । यत्तु छेदनादिषु वचनात् सकृत्त्वस्यान्यत्राभ्यासो विज्ञायत इति । अत्र ब्रूमः । यद्यप्यनभ्यासस्तथापि छेदनादिषु वाच्यं सकृत्त्वं दर्शपूर्णमासयोरसकृदाच्छिन्नं बर्हिर्भवतीति वचनात् तत्प्रकृतित्वात् पितृयज्ञेऽप्यसकृत् प्राप्तम् । तथा प्राप्तेऽसकृत्त्वं वाच्यम् । एवं प्रयाजेषु त्रिः संमार्ग उक्त । सोऽनुयाजेषु पुनरावर्त्तते । तत्रापि त्रित्वे प्राप्ते सकृत्त्वं विधातव्यम् । तथा द्विर्हविषोऽवद्यतीत्यविशेषेणोक्ते स्विष्टकृत्यपि द्वित्वं प्राप्तम् । तत्र सकृत्त्वं विधीयते । तस्माच्छेदनादिषु सकृद्वचनान्नान्यत्राभ्यासो विज्ञातुं न्याय्य इति ॥ ३७ ॥ आ० नि० ॥ प्रयाजाद्यङ्गस्य सकृदनुष्ठानाधिकरणम् ॥ ६ ॥

## बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥

वसन्ताय कपिञ्जलानालभेतेति श्रूयते । तत्र विचार्यते । किं तत्र त्रयश्चत्वार. पञ्च वा विकल्पेनालब्धव्या. ? अथवा त्रय एवेति । किं प्राप्तम् ॥ विकल्पेनालब्धव्याः । कस्मात् । सर्वप्राप्तेः । सर्व एते संख्याविशेषा बहुवचनेन प्राप्यन्ते । सर्वे तस्य वाच्या. । सर्वत्र प्रयोगात् । न च समुच्चयेन सम्भवन्त्यशक्यत्वात् । तस्माद्विकल्पः । नन्वेवं सति एकस्य शब्दस्यानेकार्थता आश्रिता भवति । न चैष न्याय्यः । उच्यते । सत्यमेवमगत्या आश्रीयते । सत्यां गतौ नाश्रयितव्यः ।अस्ति

तु इयं गतिर्यत् त्रित्वं बहुवचनस्यार्थः स्यात् । तद्योगाच्चतुरादिष्वपि वर्त्तते । सर्वेषु तेषु त्रित्वमस्तीति । नैतद्युक्तम् । यदि बहुवचनस्य त्रित्वमर्थं स्यात् ततश्चत्वारो ब्राह्मणा इति सामानाधिकरण्यं नोपपद्यते । ब्राह्मणा इत्यस्य त्रयोऽर्थः । चत्वार इत्यस्य चत्वारः । तयोः सामानाधिकरण्यं न प्राप्नोति । न हि भवति चत्वारस्त्रय इति । एवं सर्वत्र लक्षणया भविष्यति । यथा न्यग्रोधः क्षेत्रमिति । त्रित्वं हि चतुष्ट्वादीनि साहचर्याच्छक्नोति लक्षयितुं सिद्ध्यति। लक्षणा त्वाश्रिता भवति । किं क्रियताम् अगत्या आश्रीयते । सत्यां गतौ नाश्रयितव्या । अस्ति चेयं गतिर्यद् बहुत्वं बहुवचनस्यार्थं स्यात् । सर्वेऽपि ते बहव इति श्रुत्यैव सामानाधिकरण्यम् । यदि बहुत्वं विज्ञायते किं तद् बहुत्वमित्युच्यते । बहुत्वं वृद्धिः उपचय आधिक्यमित्यर्थः । कथं कृत्वा । बृहतिरयं वृद्ध्यर्थं । तस्यौणादिक उकार प्रत्यय बृंहेर्नलोपश्चेति । तस्य रूपं बाहुति बहु वृद्धमधिकमित्यर्थः । सर्वे चैते त्र्यादयोऽधिकाः । तस्मात् सर्वे बहुशब्दवाच्याः । नन्वापेक्षिकमेतद् बहु अधिकमिति । यदेव हि बहु तदेवान्यापेक्षयाऽबहु भवति । सत्यमेवं, यत्तु यदपेक्ष्य बहु नतदेवान्यदपेक्ष्याबहु। तद्यथा उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्योत्तरा इत्युच्यते । न च ततोऽन्ये उत्तरा देशा न सन्ति । अथ च नियतापेक्षत्वादुत्तरत्वं न जहति। एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते । न च ते कदाचिदबहवः । कथं पुनर्ज्ञायते द्वित्वापेक्ष्यं त्रिप्रभृतीनां बहुत्वमित्युच्यते। अपेक्षा तावत्समानजातीयेषु भवति । यथा बलवान् देवदत्त इति न हस्तिनं सिंहं वा अपेक्ष्य भवति । किं तर्हि । समानजातीयान् पुरुषानपेक्ष्य । एव संख्यापि संख्यामेवापेक्ष्य बहुत्वं लब्धुमर्हति । तत्रैकत्वं तावन्नापेक्ष्यते । द्वयोर्बहुवचनस्यादर्शनात् । त्र्यादिषु च सर्वेषु दृश्यते । तेन विज्ञायते द्वित्वापेक्षमिति । तच्च बहुवचनेनोपलभ्यते । कुत । तद्भावे भावात् तदभावे तदभावात् । त्रित्वादिषु भवति । तदभावे च द्वयोरेकस्मिंश्च न भवति । एवं बहुवचनमिति समाख्यान्वर्था भवति । अभियुक्तवचनं च बहुवचनमिति । यदि त्रित्वं बहुवचनस्यार्थः स्यात् । त्रिषु वचनमित्येव तद् ब्रूयात् । लाघवादऽसन्देहात् । तस्माद् द्वित्वमपेक्ष्यैते बहवः । अतोऽवस्थितं त्र्यादीनां बहुत्वम् । एवञ्च सति नैकः शब्दोऽनेकार्थो भवति । सर्वेषां च बहु-

त्वान्न कश्चिल्लक्षणया प्रयोग. । अथोच्यते । त्रिषु निरुपपदं प्रयुज्यते चतुरादिषु तु सोपपदम् । चत्वारो ब्राह्मणा इति । तच्च मिथ्या । त्रिष्वपि सोपपदं प्रयुज्यते । यथा, त्रयो लोकास्त्रयो वेदा इति । यदि च निरुपपदं च त्रित्वं प्रत्यापयेत् । ततो वसन्ताय कपिञ्जलानित्युक्ते विचार एवायं न प्रवर्त्तेत । यथा अत्रैव न विचार्यते– किं कपिञ्जला आलब्धव्या, उत मयूराः, कपोता वेति । कस्य हेतोः । यतः कपिञ्जलशब्दस्य न मयूराः कपोता वा वाच्या । इहापि यदि बहुवचनस्य त्रित्वमेव वाच्यं स्याद् नेतरा संख्या, पूर्ववद्विचार एवायं स्यात् ॥ ३८ ॥

## दृष्टः प्रयोग इति चेत् ॥ ३९ ॥

अथोच्येत दृष्टो बहुवचनस्य प्रयोगश्चतुरादिषु, चत्वारो ब्राह्मणा इति । ततो विचार इति तथेह । इहापि कपिञ्जलशब्दस्य दृष्टः प्रयोग. कपोते मयूरे च। महान् कपोत उच्यते कपिञ्जलोऽयं न पोत इति । तथाल्पो मयूर कपिञ्जलोऽयं न मयूर इति ॥ ३९ ॥ पूर्व० आ०

## भक्त्येति चेत् ॥ ४० ॥

आह । भक्त्या तत्र कपिञ्जलशब्दः प्रयुज्यते । न च भाक्ते प्रयोगे शब्दार्थशङ्का भवति ॥ ४० ॥ आ० नि० ॥

## तथेतरस्मिन् ॥ ४१ ॥

इतरस्मिन्नपि चत्वारो ब्राह्मणा इति लक्षणया प्रयुज्यत इत्युक्तम् । न च लक्षणाप्रयोगे शब्दार्थशङ्का भवति। आपि च प्रातिपदिकार्थस्य या संख्या सा चानेनाभिधीयते । यथा ब्राह्मणा इति । प्रातिपदिकार्थ एव वा यथा द्वावेक इति । न च त्रित्वं प्रातिपदिकस्यार्थो, न तत्संख्या इति । तस्माच्चत्वार इति बहुवचनं न प्राप्नोति। अथोच्यते । अस्ति चतुर्षु अवयवभूतं त्रित्वं तदपेक्षं बहुवचनमिति । द्वित्वमपि तत्रास्ति, एकत्वं च । काममनेनैव द्वित्ववचनमेकवचनं चोत्पद्येत । तस्मान्न त्रित्वयोगाच्चतुरादिषु बहुवचनप्रयोगः । बहुत्वादेव तेषां बहुवचनम् । अत सर्वे त्र्यादय. परार्द्धपर्यन्ता बहुवचनस्यार्थं । सर्वे चेदर्थतः कपिञ्जलानालभेत इति सर्वे प्राप्यन्ते । तस्माद्विकल्पः ॥ ४१ ॥ पूर्व० आ० ॥

## प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४२ ॥

प्रथमं वा बहुत्वं त्रित्वं नियमेन । किं कारणम् । न हि कश्चिच्चतुर उपाददानो न त्रीनुपादत्ते । यत् कारणमनुगतास्त्रयश्चतुर्षु वोपात्तेषु कृतः शब्दार्थो बहूनालभेतेति श्रुतम्, आलब्धव्याश्च बहवः । एवं सति कारणादतिक्रमः स्यात् । यदि च यथाश्रुतानुपादाने किञ्चिदन्यत् कारणं त्रित्वातिक्रमे स्यात्ततोऽतिक्रमः' न तदस्ति । तस्मात् त्रित्वं नियमेन । ननु फलभूयस्त्वं कारणं भविष्यतीति । नैतदस्ति । यत्र बहवः कल्पाः श्रूयन्ते तेषां कश्चिल्लघुः कश्चिद् गुरुः । तत्र गुरोः कल्पस्यानुष्ठानाम्नानसामर्थ्यात् तदनुष्ठानात् फलभूयस्त्वमनुमीयते । यथा एका देया षड्देया द्वादश देया चतुर्विंशतिर्देया इति । इह तु एक एव कल्पो बहूनामालम्भः । स त्रिभिश्चतुरादिभिस्तुल्यः । अनस्तत्र यो लघुमुत्सृज्य गुरुकल्पमातिष्ठेत तस्य फलभूयस्त्वं न भवितुमर्हति ॥ ४२ ॥ सि० ॥

## श्रुत्यर्थाविशेषात् ॥ ४३ ॥

यथा पशुमालभेतेति श्रुतये महान्तं महार्घं वा पशुमालभेत, न तस्य फलभूयस्त्वं भवति । यस्तु मांसीयं शिष्टमतिक्रामेत् स यदि तावद्वैदिकीषु हिंसासु प्रत्यवायस्ततः प्रत्यवेयात् । अथाप्रत्यवायस्तथापि शिष्टविगर्हणं च लभेत् । कृते श्रुत्यर्थे मांसीयान् पशून् हन्तीति । तस्मात् त्रयः कपिञ्जला आलब्धव्याः ॥ ४३ ॥ युक्तिः ॥

## तथा चान्यार्थदर्शनम् ॥ ४४ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, यथा न्याय उपदिष्ट । यथा, कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशम इति।यदि च त्रय एते त्रिकाः,एव नियोगत ऐन्द्राग्नो दशमः सम्पद्यते। इतरथा पाक्षिकः स्यात् । तस्मात् त्रित्वनियमः ॥४४॥ निदर्शनम् ॥

## प्रकृत्या च पूर्ववत् तदासक्तेः ॥ ४५ ॥

प्रकृत्याग्नीषोमीयेणैकत्वं प्राप्यते तस्योत्पत्तिर्भविष्यति' 'त्रित्व उपादीयमाने । इतरथा विप्रकर्षः स्यात् । इदं वाऽपि लिङ्गं गृहमेधीये श्रूयते । ओदनानुद्धरतीति । तत्र मध्यमस्येति त्रयाणां निरुपपदं भवति । अन्यत्र सोपपदं पञ्चानां मध्यमः । अष्टानां मध्यम इति ॥४५॥ युक्ति ॥ कपिञ्जलाधिकरणम् ॥ ७ ॥

## उत्तरासु यावत्स्वमपूर्वत्वात् ॥ ४६ ॥

सान्नाय्ये दोहनं प्रकृत्य श्रूयते। वाग्यतास्तिस्रो दोहयित्वा विसृष्टवागनन्वालभ्योत्तरा दोहयतीति । किमयं विधिरनुवाद इति। किं प्राप्तम्। अपूर्वार्थत्वाद् विधिरिति । अनुवादो ह्यनर्थकः स्यादिति प्राप्ते उच्यते ॥ ४६ ॥ पूर्व० ॥

## यावत्स्वं वान्यविधानेनानुवादः स्यात् ॥ ४७ ॥

अनुवादः स्याद्, नायं विधिः । उत्तरा दोहयतीति । अन्योऽत्र विधिरुत्सृष्टवागनन्वालभ्येति। यद्येषोऽपि विधिः स्याद्वाक्यं भिद्येत। उत्तरा दोहयति, ताश्चानन्वालभ्येति ॥ ४७ ॥

अथ कुतः प्राप्तेऽनुवादः ?

## साकल्यविधानात् ॥ ४८ ॥

साकल्यमत्र विधीयते गवां दोग्धव्यानाम् । नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात् कुमाराश्च न पयो लभेरन् । ननु कुमाराणां पयोदानप्रतिषेधोऽयम्। न हि पयःप्रतिषेधे किञ्चिद् दृष्टमस्ति। अदृष्टं कल्पयितव्यम्। नन्वितरत्रापि लक्षणाश्रयणीया। बाढम्। दृष्टार्थाच्छब्दवृत्तिर्लघीयसीति । तस्मात् साकल्यविधिर्गवां पयःप्रतिषेधं, नायं लक्षणया। ततः प्राप्तेऽनुवादः ॥ ४८ ॥ हेतुः ॥

## बह्वर्थत्वाच्च ॥ ४९ ॥

बहुदुग्धीन्द्राय देवेभ्यो हविरिति च मन्त्रस्य सर्वासु दुह्यमानास्वप्राक्षिकत्वं भविष्यति। बहुत्वं च शक्त्यपेक्षम् ॥ ४९ ॥

## अग्निहोत्रे चाशेषवद्यवागूनियमः प्रतिषेधः कुमाराणाम् ॥ ५० ॥

अग्निहोत्रे च श्रूयते । नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयाद् यथान्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात् तादृक् तत् स्याद् यवाग्वा जुहुयादिति। सर्वस्य पयसः सान्नाय्यार्थतां दर्शयति। तथा पयःप्रतिषेधः कुमाराणामिति व्याख्यातम् ॥ ५० ॥ हेतुः ॥

## सर्वप्रायिणापि लिङ्गेन संयुज्यते देवताऽभिसंयोगात् ॥ ५१ ॥

वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुराप्यायन्ते अथैतर्हि

देवेभ्य एवैता आप्याययन्ति । सर्वप्राप्तेरेतल्लिङ्गम् । कथम् । यावत्तेभ्यो मनुष्येभ्यश्च पुराप्याययन्ते । तस्मात् सर्वप्राप्तेरेतल्लिङ्गम्।अतो यावत्स्वमुत्तरासु दोहनं स्यात् ॥ ५१॥ हेतुः ॥ उत्तरादोहनानुवादाऽधिकरणम् ॥ ८ ॥

दर्शपूर्णमासयोः प्रधानान्याग्नेयादीनि । तेषामङ्गान्याघारादीनि । तेषु चिन्त्यते । किं तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोग । अथ वा सर्वेषां तन्त्रेणेति । अथ तत्र किं वृत्तं, क्रतुवच्चानुमानेनाऽभ्यासे फलभूमा स्यादिति । तत्र कृत्स्नौ दर्शपूर्णमासावुद्दिश्य कथा वृत्ता । इह तु तत्तत्प्रधानं प्रति चिन्त्यते । किं प्राप्तम् ।

## प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात् ॥ ५२ ॥

अङ्गानां प्रयोगे कर्मभेदः स्यात् क्रियाभेद । तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोग । कुत । प्रधानकर्मार्थत्वात् । प्रधानार्थत्वादित्यर्थ प्रधानार्थेन ह्यङ्गान्युपदिश्यन्ते । अङ्गवन्ति प्रधानानि कथ स्युरिति । अङ्गसम्बद्धे च प्रधानार्थे अङ्गानां सहत्वं न विवक्ष्यते । न हि तत्र प्रधानानि विधीयन्ते । किं तर्हि । अङ्गानि चाविधीयमानस्याऽर्थस्य गुणो विवक्षितो भवति।यथा ग्रहं संमार्ष्टीत्येकत्वम् । एवञ्चैकैकस्य प्रधानस्याङ्गैः सम्बन्धः कर्त्तव्यः । तानि यदि सकृत् क्रियेरन् न विभागेन सम्बद्ध्येरन् । यथा प्रायणीयोदवसानीययोरेकादशिन्यां समस्तैश्च सम्बन्धः कर्त्तव्य इत्युक्तं, विधेस्त्वेकश्रुतित्वादित्यत्र । तस्मात् प्रतिप्रधानमङ्गभेद ॥ ५२ ॥ पूर्व० ॥

## क्रमकोपश्च यौगपद्यात् स्यात् ॥ ५३ ॥

प्रधानानि च क्रमवन्ति तानि च यथाक्रमं साङ्गानि कर्त्तव्यानि । तत्र यदि तन्त्रमङ्गानि स्युः, ततोऽकृत्वाग्नेयं साङ्गमग्निषोमीयः प्रक्रान्त स्यात् । तथा च प्रधानानां क्रमकोपः स्यात् । अथ तु भेदस्ततः साङ्गमाग्नेयमपवृज्याग्नीषोमीयः साङ्गः प्रक्रान्तः क्रियत इति नास्ति क्रमकोपः । अपर आह । यदि तन्त्रे भवेयुरङ्गानि ततो यावत्तनूनपादाग्नेयस्योपकरोति तावत् समिधाग्नीषोमीयस्योपकर्त्तव्यमासे एष उपकारः क्रमकोपः ।अपि चाङ्गारापोहनादीनि संस्पर्शादीनि प्रतिप्रधानं भिद्यन्ते तैश्चाघारादीनामवैलक्षण्यं भविष्यति ॥५३॥ आ०॥

## तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद् विशेषाग्रहणात् ॥ ५४ ॥

तुशब्दः पक्षान्तरं परिजग्राह। नचैष पक्ष श्रेयान्, भेद इति । किं तर्हि । यौगपद्यं, सकृत् प्रयोगः स्यात् । सकृदेव प्रयुक्तान्यङ्गानि सर्वैं प्रधानैर्युगपत् सम्बद्ध्यन्ते । तुल्यानामेकशब्दोपदिष्टानां चैदमर्थ्यं प्रति विशेषाग्रहणात् । इमानि कर्तृतो देशतः कालतश्च तुल्यानि दर्शपूर्णमासयो. यज्ञक्रत्वोश्चत्वार ऋत्विजः । समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति । प्रधानैश्च सहाङ्गानामेकदेशकालकर्तृकत्वं वक्ष्यति । अङ्गानि तु विधात्वात् प्रधानेनोपदिश्येरन्नित्यत्र एकेन च शब्देन प्रधानानि फलं प्रत्युपदिष्टानि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । किमतः,अतस्तेषां फले सम्भूयकारित्वम् । तेन स्वर्गकामस्य सर्वेषां युगपच्चिकीर्षा नैकश । सर्वचिकीर्षया त्वाघारादीनां क्रियमाणानां तुल्यकर्त्रादीनां न गृह्यते विशेषः, कस्यै तान्याग्नेयस्याग्नीषोमीयस्य वेति । सर्वेषां च युज्यन्ते । तस्मात् सर्वार्थानि भवन्ति । तस्मादनावृत्ति. ॥ ५४ ॥ सि० ॥

## ऐकार्थ्यादव्यवायः स्यात् ॥ ५५ ॥

यच्च क्रमकोपश्च यौगपद्ये स्यादिति । तत्र ब्रूमः । ऐकार्थ्यादव्यवायः स्यात् । न क्रमकोपः । कुत । ऐकार्थ्यात् । सम्भूयकारीण्येतानीत्युक्तम् । तेषां सह क्रिया, नैकशः । न हि तत्रैकेन कृतेन कश्चिदर्थः । एकसम्बन्धक्रियायामानुपूर्व्यं स्यात् । तस्मान्न तेषां प्रयोगे क्रमः, कुतः क्रमकोप इति । यश्चोपकारे क्रमकोप इति, तत्रापि नाघारः कृतमात्र एव प्रधानेषूपकरोति । यत् कारणं तस्मिन् काले प्रधानान्येव न सन्ति । यदा तु सर्वाण्यङ्गानि कृतानि तदा तान्यऽपूर्वाणि सम्भूय प्रधानेषूपकुर्वन्ति । अङ्गानामपि हि सम्भूयकारित्वमुक्तम् । अथैहैकार्थ्यादेककर्म्यमिति । तस्मादुपकारेऽपि नास्ति क्रमकोपः ॥ ५५ ॥ आ० नि० ॥

## तथा चान्यार्थदर्शनं कामुकायनः ॥ ५६ ॥

तथा चान्यार्थदर्शनं भवति यथा न्याय उपदिष्ट इति कामुकायन आचार्यो मन्यते स्म । किं पुनस्तत् । चतुर्दश पौर्णमास्यामाहुतयो

हूयन्ते त्रयोदशामावास्यायामिति । यथावृत्ति स्यान्न त्रयोदश चतुर्दश वा व्यवतिष्ठेरन् ॥ ५६ ॥ युक्तिः

यश्च संस्पर्शवदारादुपकारिणामप्यावृत्तिरस्तीति । तत्र ब्रूमः—

तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् ॥ ५७ ॥

स हि न्यायः सम्भूयकारिणां सहक्रियेति सर्वत्रैव । सहक्रियाऽशक्तेस्तु धर्मसंस्पर्शेष्वानुपूर्व्यं स्याद् भेदेन क्रिया । न शक्यते एकस्याङ्गारापोहनेन सर्वेषां पाकः कर्त्तुम् । न चैकस्मिन् पुरोडाशे श्रपिते सर्वे श्रपिता भवन्ति । संस्कारस्य तदर्थत्वात् । सस्कारोऽयं पाकार्थो विधीयते । तत एव प्रत्यक्षोपकारिणः प्रतिप्रधानमावृत्ति. स्यात् । अन्यथा याग एव न संवर्त्तेत ॥ ५७ ॥ आ०नि० ॥

असंसृष्टोऽपि तादर्थ्यात् ॥ ५८ ॥

असंसृष्टोऽप्याघारादि प्रतिप्रधानमावर्त्तते । कुतः । तादर्थ्यात् । यस्य समीपे कृतस्तदर्थ इति गम्यते विशेष. । आघारादीन्याज्यभागान्तान्याग्नेयस्य स्विष्टकृदादीन्यग्नीषोमीयस्येति गृह्यमाणे विशेषे भेद । तस्मादुपांशुयाजादीनां समीपे प्रागाघारादीनि ऊर्द्ध्वं स्विष्टकृदादीनि कर्त्तव्यानि । एवं च संस्पर्शिभिरितरेषामवैलक्षण्यं भविष्यति ॥ ५८ ॥ युक्ति ॥

विभवाद्वा प्रदीपवत् ॥ ५९ ॥

यदुक्तं यस्य सन्निधौ प्रयुक्तानि तस्येमानीति गृह्यते इति विशेषः । तस्मादावृत्तिरिति । नैतद् युक्तम् । विभवात् । कुनः । विभविष्यन्त्येतान्येकस्यापि सन्निधौ क्रियमाणानि सर्वेषामुपकर्त्तुम् । प्रदीपवत् । तद्यथा प्रदीप एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानामेकस्य सन्निधौ क्रियमाणः सर्वेषामुपकारं करोति । तस्मादनावृत्ति ॥५९॥ निदर्शनम् ॥

अर्थाल्लोके विधितः प्रतिप्रधानं स्यात् ॥ ६० ॥

उपवर्णनापरिहारः पूर्वं न कृत इति स तावद्वर्ण्यते । यदुपवर्णितं प्रदीपवदिति । तदयुक्तम् । अर्थाल्लोके प्रदीपस्य सकृदसकृद्वा क्रिया । यदि सकृत् कृतः सर्वं प्रकाशयति सकृत् क्रियते, अथ न प्रकाशयति ततोऽसकृत् । ततश्चास्य प्रत्यक्षसामर्थ्यम् । अथेह विधित

उपकारोऽनुपकारो वा गम्यते, न प्रत्यक्षेण । न चास्ति विधान-
मस्योपकरोतीति सन्निधानाद् विशेषग्रहणाद् गम्यते यस्य सन्निधौ
प्रयुक्तस्तस्योपकरोतीति । तस्मादावृत्तिः ॥ ६० ॥ आ० नि० ॥

**सकृदिज्यां कामुकायनः परिमाणविरोधात् ॥ ६१ ॥**

अथ यदुक्तं सकृदिज्या कामुकायन आचार्यो मन्यते । नैवम् । चतु-
र्दशत्रयोदशेत्याहुतिपरिमाणस्य विरोधः स्यादिति । तस्य कः परि-
हारः । आभाषान्तं सूत्रम् ॥ ६१ ॥

**विधेस्त्वितरार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमः स्यात् ॥ ६२ ॥**

विधीयत इति अङ्गं विधिशब्देनोच्यते । अङ्गस्येतरार्थत्वात् । य-
देतत् स्थितं, यत्सन्निधौ यत्कृतं तदर्थमेव तदिति तदावृत्त्याङ्गानां
प्रयोग । तत्र चतुर्दश त्रयोदशेत्याहुतिसंख्या नोपपद्यते । आहुति-
विधयस्तु चतुर्दश त्रयोदश । तेषां लक्षणया वचनमुपपद्यते । चतु-
र्दश पौर्णमास्यामाहुतिविधय. । त्रयोदशामावास्यायामिति । नैतत्
संख्याविधानम् । प्रचयेनैव संख्याया. प्राप्तत्वात् । अनुवादस्त्वय-
म् । अनुवादश्च लक्षणयोपपद्यते । विदितस्य स भवति । आहुति-
विधानां चेयं संख्या विहिता, नाहुतीनाम् । तस्मात्तेषामनुवादः
॥ ६२ ॥ आ० नि० ॥

**विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६३ ॥**

तन्त्रेण प्रयोगं बादरायणो मन्यते स्म । कुत. । प्रकरणाविभागा-
त् । सर्वेषां प्रधानानामविभक्ता प्रक्रिया सम्भूय कारित्वादित्युक्तम् ।
तत्रैदमर्थ्यं प्रति न गृह्यते विशेषः । यत्तु सन्निधिप्रयोगेण विशेष
ग्रहणमुक्तं, तदयुक्तम् । किं कारणम् । विशेषो यः सन्निधि-
क्रमः स प्रकरणेन बाध्यते । विधिवत् । यथा विधौ तुल्यत्वात् प्र-
करणस्य सर्वार्थान्यङ्गानि विज्ञायन्ते, न यस्य सन्निधौ तदर्थानि ।
क्रमस्य प्रकरणेन बाधितत्वात् ॥ ६३ ॥ सि० ॥

**अपि चैकेन सन्निधानमविशेषको हेतुः ॥ ६४ ॥**

यद्यपि सर्वार्थो, तद्यप्येकस्य कस्यचिदवश्यं सन्निधौ कर्त्त-
व्याः । तस्मान्न विशेष सन्निधरेकान्तत शक्योऽवधारयितुम् । अत-
स्तन्त्रेण प्रयोगः । बादरायणग्रहण कीर्त्यर्थं, नैकीयमतार्थम् ॥६४॥ हेतु

क्वचिद् विधानान्नेति चेत् ॥ ६५ ॥

नैतद्युक्तं, सकृत् क्रियेति । कुतः । क्वचित् सहत्वमाहत्य विधीयते । सह वघ्नन्ति सह पिषन्तीति तदनावृत्तौ सर्वत्र प्राप्तायां परिसंख्यार्थं भवति । इहैव सहत्वन्नान्यत्रेत्युच्यते ॥ ६५ ॥ आ० ॥

न विधेश्चोदितत्वात् ॥ ६६ ॥

न तत्र परिसंख्या युज्यते । प्राप्तस्य पुनर्वचनं परिसंख्यार्थं भवति । न चेह सहत्वं प्राप्तम्। कुत । भेदेन निर्वापस्य चोदितत्वात् । आग्नेयाग्नीषोमीययोर्भेदेन निर्वापस्तूक्त । तयोर्भेदेनैवावहननपेषणे प्राप्नुतः । तत्रावश्यं विधेयं सहत्वम् । तस्मान्न क्वचित् सहत्वविधानादन्यत्र भेदेन क्रिया विज्ञायेतेति ॥ ६६ ॥ आ० नि० ॥

आघारादीनामङ्गाङ्गानां तन्त्राधिकरणम् ॥ ९ ॥

क्वचिच्छ्रूयते, आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमान इति । तत्र विचार्यते । किं कृष्णग्रीवस्य प्रथमस्य तृतीयस्य सह प्रदानं कर्त्तव्यम् ? अथवा भेदेनेति । किं प्राप्तम् ।

व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६७ ॥

व्याख्यातं प्रयोगे यौगपद्यमिति । तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्यादिति । इह तु कृष्णग्रीवयोरेकदेवतत्वात् सह प्रयोगे क्रियमाणे न गृह्यते विशेष । सहक्रिया चैकफलत्वात् प्राप्ता । तस्मात् सहप्रदानम् ॥ ६७ ॥ पूर्व० ॥

भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ॥ ६८ ॥

भेदस्तु प्रदानस्य युक्तो, न तन्त्रता । कुतः । कालभेदात् । अथ कालभेदः । चोदनाव्यवायात् । सौम्यचोदनया व्यवहिते कृष्णग्रीवचोदने । तत्र पाठक्रमादेकस्य पुरस्तात् सौम्यस्य प्रयोगः प्राप्तः, एकस्योत्तरत्र । तयोर्यदि सह प्रदानं क्रियेत क्रम उपरुद्ध्येत, अन्यतरस्य पुरस्तात् क्रियायामुत्तरस्योपरिष्टात् पूर्वस्य । तस्माद्भेदेन प्रयोगः ॥ ६८ ॥ सि० ॥

**तथा चान्यार्थदर्शनम् ॥ ६९ ॥**

अभितः सौम्यमाग्नेयौ भवत इति ॥ ६९ ॥ निदर्शनम् ॥

**विधिरिति चेन्न वर्त्तमानापदेशात् ॥ ७० ॥**

अथ विध्यभिप्रायं कल्प्येत । श्रुत्यर्थमुत्सृज्य लक्षणार्थं परिगृहीत स्यात् । तस्मात् प्रदानभेदः ॥ ७० ॥ आ० नि० ॥ कृष्णग्रीवस्य भेदेन ग्रहणाधिकरणम् ॥ १० ॥

इति श्रीशबरस्वामिन. कृतौ मीमांसाभाष्ये एकादशस्याध्यायस्य प्रथम. पादः ॥ ११ ॥ १ ॥

अथ एकादशाध्यायस्य द्वितीय पादः ॥ ११ ॥ २ ॥

**एकदेशकालकर्त्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥**

दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि । तत्र देशकालकर्त्तारः, समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत । दर्शपूर्णमासयोर्यज्ञक्रत्वोश्चत्वार ऋत्विज इति । तथा चातुर्मास्ये प्राचीनप्रवणे वैश्वदेवेन यजेत, वसन्ते वैश्वदेवेन यजेत । चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति । तत्र विचार्यते । किम् आग्नेयादीनां प्रधानानां तन्त्रं देशकालकर्त्तारः । अथवा भेद एवेति । तत एतावत्तु परीक्ष्यम्। किं चोदनाविधिशेषा देशादयो यदाग्नेयोऽष्टाकपाल इत्येवमादय. । आग्नेयादिचोदनाविधयस्तेषामिमे समादिविधय शेषा । आग्नेयोऽष्टाकपाल एवं भवति । एवं सर्वत्र । अथवा, प्रयोगाङ्गं देशादय । य एषामाग्नेयादीनां प्रयोग फलसाधनार्थस्तदङ्गानामिति । किञ्चात. । यदि प्रयोगाङ्ग ततस्तन्त्रम् । अथ चोदनाविधिशेषास्ततो भेदेनेति । किं प्राप्तम् । एकदेशकालकर्त्तृत्वं मुख्यानां तन्त्रमित्येषा प्रतिज्ञा। तत एवं तावद्वर्णयति। प्रयोगाङ्गं देशाद इति। कुतः। न तावदृते देशकालकर्त्तृभ्य. प्रयोगो भवति । यच्च येन विना न भवति तत्तदङ्गमित्यवगम्यते । तस्मात् प्रयोगाङ्गं देशादय । यदा प्रयोगाङ्गं तदा तन्त्रभाव । कस्मात् । एकदेशोपदेशात् । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति एकशब्दोपदेशादेकं फलम् । एकफलात् सहप्रयोगः । तत्र न गृह्यते विशेषो देशादीनामैदमर्थ्यं प्रति । अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । तस्मात् तन्त्रं देशादय ॥ १ ॥ पूर्व० ॥

**अविधिश्चेत् कर्मणामभिसम्बन्धः प्रतीयेत तल्लक्षणार्थाऽभिसंयोगाद् विधित्वाच्चेतरेषां प्रति प्रधानभावः स्यात् ॥ २ ॥**

अविधिश्चेद् यदि चोदनाविशेषो न स्यात् । देशादिविधिस्ततः कर्मणामाग्नेयादीनां भेदेन देशादिभिरभिसम्बन्धो न प्रतीयेत। चोदनाविशेषस्त्वयम् । किं कारणम् । इह समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैर्देशादयो विधीयन्ते । अप्राप्तत्वात् । ते चेद्विधीयन्ते, आग्नेयादीनां दर्शपूर्णमासशब्देनानुवादयितव्यम् । अन्यथा अनेकाऽर्थविधानमेकस्मिन् वाक्ये भवतीति । अनुवादे च तेषां सहत्वं न विवक्ष्यते । विवक्ष्यमाणे वाक्यभेदो भवति। आग्नेयादिना देशादयः । तेषां च सहितानामिति । कथम् । समे दर्शपूर्णमासाभ्यामित्येवमादिभिर्वाक्यैराग्नेयादिषु देशादयो न विधातुं शक्यन्ते। लक्षणार्थाऽभिसंयोगात् । लक्षणार्थेनाभिसंयोगो विज्ञायते दर्शपूर्णमासशब्दः समुदायार्थोऽयम् । समुदायश्च समुदायिलक्षणार्थः शक्नोति साहचर्यात् समुदायिनो लक्षयितुम् । न त्वेवमपि लक्षणाश्रितो भवति । वरं लक्षणा, नैकवाक्यस्यानेकार्थत्वम् । अनेकार्थत्वे अगमकत्वम् । लक्षणानुगामिका । लौकिकत्वात् । अपि च श्रुत्या समुदाये देशादयो विधीयेरन्। न च समुदायस्य देशादिभिः सम्बन्धोऽस्ति। कारकं हि समयः । कारकस्य कर्मणा सम्बन्धो, न कर्मगुणेन । तस्मादपि लक्षणा । यथा पौर्णमासीमभिमृशेदिति हविर्लक्षणा । चोदनाविधित्वाच्चेतरेषां देशादीनां प्रतिप्रधानभावः स्यात् । गृह्यमाणविशेषत्वात् । अथ केन समादय आग्नेयादिषु विधीयन्ते । समे यजेत पौर्णमास्यां यजेतेत्यनेनाख्यातेन । अत्र हि धातुना यागमनूद्य विभक्त्या तेषु समादीनां विधिः कर्त्तव्योऽपि, यस्तेषां यागानां रूपविधानार्थो भवति । अच्युतो भवतीति । तेन विधीयन्ते । अथ वा अस्तिर्भवतीति परः प्रथमपुरुषे प्रयुज्यमानोऽप्यस्तीति ॥ २ ॥ सिद्धान्तः ॥
आग्नेयादीनां न देशकालादितन्त्रताधिकरणम् ॥ १ ॥

एवं स्थितमपर्यवसितं भवत्यतोऽन्तरा चिन्तान्तरं क्रियते । किं पुनः कारणमेतस्मिन्नपर्यवसिते चिन्तान्तरमारभ्यते । एतस्मिन्न्याये स्थिते तस्याश्चिन्तायाः पूर्वपक्ष उत्तिष्ठति । अतोऽसौ एतस्माद्-

नन्तरमुच्यते ॥

अङ्गेषु च तदभावः प्रधानं प्रति निर्देशात् ॥ ३ ॥

अङ्गेषु इदानीं विचार्य्यते । किं तेषां समुदाय एव देशकालकर्त्तारः । अथवाऽनियम इति । किं प्राप्तम् । अङ्गेषु च तदभावः । कुतः । प्रधानं प्रति निर्देशात् । चोदनाविधिशेषत्वेनाग्नेयादीनि प्रधानानि प्रति समादयो निर्दिष्टा नान्यत्र भवन्ति । तस्मादनियमः । यथा द्रव्यदेवतं यत् प्रधानेषु न तदङ्गेषु । एवं देशादयोऽपि। स्थितादुत्तरम् ॥ ३ ॥ पूर्व० ॥

यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिधासंयोगात् ॥ ४ ॥

यदि आग्नेयादे. कर्मणः समादिसम्बन्ध. स्यात् ततःस्याच्चोदनाविधिशेषत्वं, भेदेन च समादय. । न तु तदस्ति।कुतः। ऐकशब्द्यात् प्रधानार्थाभिधासंयोगात् । यस्मादाग्नेयादीनां समस्तानामेकशब्दो वाचकस्तेन समादीनामभिसंयोग. । समे दर्शपूर्णमासाभ्यां यजेतेति । न ये व्यस्तानां वाचकाः, यदाग्नेयोऽष्टाकपाल इत्येवमादयः । तत्र प्रत्यक्षं समस्तसंयोगमुत्सृज्य परोक्षो व्यस्तसंयोगः कर्त्तव्य. । सोऽपि लक्षणया । अथ तु प्रधानानामभिसंयोगः क्रियते तत उभयमपि परिहृतं भवति । कः पुनः प्रधानार्थः । प्रधानं फलं, तत्साध्यात् प्रधानार्थो यो व्यापारः । कश्चासौ आग्नेयादीनां प्रयोग. । कथं तेनाभिसंयोग. समादीनां विज्ञायते । उच्यते । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनेन समस्तानामाग्नेयादीनां फलसाधनाऽर्थः प्रयोग उक्तः । तस्य च यदि पुनः श्रुत्या समादयो विधीयन्ते, याभ्यामेताभ्यां दर्शपूर्णमासाभ्यां यजेत ताभ्यां समे यजेतेति, ततो न परोक्षो व्यस्तसम्बधः कल्पितो भवति । न च लक्षणा । तस्मात् प्रयोगे विधिरेतेषाम् । स च सर्वेषां प्रधानानां साधारणः । तदैदमर्थ्यं प्रतिगृह्यते विशेष ।तस्मात्तन्त्रं देशकालकर्त्तार. ॥४॥सि०॥

तथा चान्यार्थदर्शनम् ॥ ५ ॥

अन्यार्थोऽप्येतमेवार्थं दर्शयति। उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां सम्भ्रियन्ते आग्नेयं प्रथममैन्द्रे उत्तरे इति । सम्भरणं पौर्वापर्यं चैककालत्व उपपद्यते । तस्मादपि तन्त्रम् ॥ ५ ॥ निदर्शनम्

**श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् ॥ ६ ॥**

इतश्च प्रयोगचोदना पुनः श्रुतिरियम् । कुतः । श्रुतिस्तेषां समादीनां प्रधानानामिव । कथं कृत्वा । कर्मश्रुतेः परार्थत्वात् । यात्र कर्मश्रुतिः, दर्शपूर्णमासाभ्यामिति । सा परार्था । तृतीयायोगात् । तया सामानाधिकरण्यात् । यजेतेति यजिरपि परार्थ एव।तदेतदेवमापद्यते, दर्शपूर्णमासयागेनाऽन्यत् किमपि कुर्यादिति ॥ ६ ॥ हेतु ॥

**कर्मणोऽश्रुतत्वाच्च ॥ ७ ॥**

कर्म च न श्रुतं, कार्यं न श्रुतं, प्रधानं न श्रुतमित्यर्थः । तस्य स्थाने समादीनि श्रूयन्ते । प्रधानस्थाने श्रुतत्वात् । श्रुतिरेषां प्रधानवदित्युच्यते । न च तानि प्रधानानि । तत्र यदि आग्नेयादिवाक्यानां पुन श्रुतिरियं कल्प्येत गुणभावानुवादो भज्येत । न हि तत्र तेषां गुणभाव उक्त । उत्पत्तिमात्राख्यानानि तानि च किञ्चित् कार्यं निर्देष्टुं यदपेक्ष्यानुक्तोऽपि गुणभावोऽर्थप्राप्तोऽनूद्येत । प्रयोगचोदनायां तु गुणभाव उक्त. । कार्यमपि फलम् । तस्मात् तस्या पुन. श्रुतिरियम् । तथा च तन्त्रभाव. सिद्ध ॥ ७ ॥ हेतु. ॥

**अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरँस्तस्मात् स्यादेकदेशत्वम् ॥ ८ ॥**

अङ्गेषु स्थितादुत्तरम् । यदा प्रयोगाङ्ग देशादय इत्युपपन्नं तदायमुत्तरः पक्ष उत्तिष्ठति । तस्मात् ततोऽनन्तरमुच्यते । यदुक्तम् अङ्गेषु देशादीनामनियम इति । तन्न । अङ्गेषु समादिनियम इति । कुतः ? । यतोऽङ्गान्यपि प्रधानेन फलसिद्धावुद्दिश्यमानेन सहोपदिश्यन्ते । कथम् । विधानत्वात् । प्रधानानां फलं साधयतां विधानमेतद्यदुपेताङ्गप्रयोगो विधानकल्प इतिकर्त्तव्यतेत्यर्थ । अतो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्राङ्गवान् प्रयोग प्रधानानां युक्त.।यथा विधिस्तत्रोक्तस्तथाविधेन पुन. श्रुत्या समादीनां विधि. । अतोऽङ्गानामपि प्रधानैः सहैकदेशकालकर्तृत्वं स्यात् ॥ ८ ॥ सि० ॥

**द्रव्यदेवतं तथेति चेत् ॥ ९ ॥**

अथ यदुक्तं यथा द्रव्यदेवतं प्रधानानामङ्गानां च भेदेन भवति एवं देशादयोऽपि स्युरिति । तत् परिहर्त्तव्यम् ॥ आभाषान्तं सूत्रम् ॥ ९ ॥ आ० ॥

## न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ १० ॥

नैतदेवम् । कुत । चोदनाविधिशेषत्वात् । चोदनाविधिशेषो हि द्रव्यदेवताविधिः । तेन प्रधानेषु द्रव्यदेवताविशेषो नियत । इहाऽग्निः पुरोडाशश्च । इहाज्यमग्नीषोमौ चेति । तथाङ्गेष्वपि आज्येन प्रयाजान् यजति, शेषात् स्विष्टकृतं यजतीति । न चान्यत्र निर्दिष्टोऽन्यत्र भवति। तथेह प्रयोगाङ्गत्वाद् देशादीनाम् । तस्य च प्रयोगस्य साधारण्यात् । तन्त्रिभाव इत्यपदिष्टो हेतुः । तस्माद्विषमं द्रव्यदेवतेन ॥ १० ॥ आ० नि० ॥

## तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ११ ॥

यदि च समान द्रव्यदेवतमङ्गानां प्रधानानां च स्यात् ततस्तेषु द्रव्यदैवतेषु समानेषु समवेतानामङ्गानां प्रधानानां च समवायात् तदवस्थोऽविशेष इति तन्त्रमिज्या स्याद्भेदस्तु तद्भेदात् । अथ तु भेदो द्रव्यदेवतस्य ततस्तद्भेदात् कर्मभेदः प्रयोगे स्यात्।इज्याकर्मणः प्रयोगविशेषग्रहणाद्भेदः स्यात् । तथा चान्यार्थदर्शनं युक्तं भविष्यति चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति । तस्माद् द्रव्यदेवतस्य भेदः ॥ ११ ॥ हेतुः ॥ अङ्गानां प्रधानदेशादिनियमाधिकरणम् ॥ २ ॥

दर्शपूर्णमासेष्ट्यां द्वौ समुदायौ दर्शः पूर्णमासश्च । तथा राजसूयेऽनुमत्यादय इष्टयः पवित्रादयः सोमाः । चातुर्मास्येष्वपि पर्वाणि वैश्वदेवादीनि । तत्र विचार्यते । किं दर्शस्य पूर्णमासस्य च तन्त्रेण अङ्गानां प्रयोगः । तथा राजसूयेष्टीनां सोमानां च चातुर्मास्येषु च पर्वाणामुत तन्त्रभेदेनेति । किं प्राप्तम् ॥

## इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावः स्यात् ॥ १२ ॥

तत्र तत्र तन्त्रेण प्रयोग । कुतः । ऐककर्म्यात् । एकफलत्वादित्यर्थ । एकं फलमिह तत्र तत्र श्रूयते । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत । राजसूयेन स्वाराज्यकामो यजेत । चातुर्मास्यैः स्वर्गकामो

यजेत । एकत्वात् फलस्यैकः प्रयोगः । तत्र न गृह्यते विशेष । तस्मात् तन्त्रम् ॥ १२ ॥ पूर्व० ॥

## कालभेदान्नेति चेत् ॥ १३ ॥

नैतदेवं, तन्त्रमङ्गानीति । किं तर्हि । भेदेन । कुत । कालभेदात् । क्वचित् कालभेदः, क्वचिद्देशभेदः।दर्शपूर्णमासयोः कालभेदः, पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेति। तथा, चातुर्मास्यस्य पर्वणां वसन्ते वैश्वदेवेन यजेत, वर्षासु वरुणप्रघासैर्यजेत, हेमन्ते साकमेधैर्यजेतेति । राजसूये देशभेद । बार्हस्पत्यश्चरुर्ब्रह्मणो गृह ऐन्द्रमेकादशकपालो राज्ञो गृहे आदित्यश्चरुर्महिष्या गृह इति। कालभेदाद्देशभेदाच्च गृह्यते विशेष.। पौर्णमासी येषामङ्गानां कालस्तानि पौर्णमास्या उपकुर्वन्ति, नामावास्याया । वैगुण्यात् । तस्माद्भेदः ॥ १३ ॥ आ० ॥

## नैकदेशत्वात् पशुवत् ॥ १४ ॥

नैतदेवं भेद इति । कुतः । एकदेशत्वात् ।यत्र फलसम्बन्धस्तत्राङ्गानां चोदना । यत् कारणं फलं साधयतां प्रधानानामङ्गान्युपकारे वर्त्तन्ते । समुदायचोदनायाः फलसम्बन्धः।दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। राजसूयेन स्वाराज्यकामो यजेतेति।चातुर्मास्यैः स्वर्गकामो यजेतेति ।नैकदेशचोदनायां पौर्णमास्यां पौर्णमास्या यजेत,वसन्ते वैश्वदेवेनयजेत, बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति। न चैवतत्राङ्गानां प्राप्तिः कुतो भेदेन प्रसङ्गः ।समुदायस्य तु फलैकत्वादेकः प्रयोग.। तस्माद् यस्मिन् कस्मिंश्चिदवयवे क्रियमाणान्यङ्गानि समुदायेन सम्भन्त्स्यन्ते। समुदायस्यावयवैरव्यतिरेकात् । पशुवत् । यथा पशौ भिन्नकालेष्वप्येकदेशेषु वपया प्रात सवने चरति पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवन इति नाङ्गानामावृत्तिर्भवति, तद्वत् ॥ १४ ॥ आ० नि० ॥

## अपि वा कर्म पृथक्त्वात्तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १५ ॥

अपि वा न तन्त्रमङ्गानि स्युः । कुतः । कर्मपृथक्त्वात् । तेषां च तन्त्रविधानात । कर्माणि तावदेतानि भिन्नानि । अन्यः पौर्णमासीसमुदायोऽन्य आमावास्यः । एवं सर्वत्र। तेषां च देशकालभेद पौर्णमास्यां पौर्णमास्या यजेतेत्येवमादिः । साङ्गानां च तेषां तत्र

देशकालविधि ।ननु नैवात्राङ्गानि प्राप्यन्ते इत्युक्तम्।कुतस्तेषां देशकालविधि ।उक्तमेतत्। प्रयोगे पुन श्रुत्या समादयो विधीयन्ते इति । तत्र समे दर्शपूर्णमासाभ्यां यजेतेति, समुदायप्रयोगे पुनः श्रुतिः । पौर्णमास्यां पौर्णमास्या यजेतेत्येकदेशे पुन श्रुतिः । एवं सति पौर्णमासप्रयोगे कालो विहितः । अविभक्तश्चाङ्गानां प्रधानेन प्रयोग । तस्मात् पौर्णमास्यङ्गानां पौर्णमासीकाल. । अमावास्याऽङ्गानाममावास्याकाल । तत्र गृह्यते विशेषग्रहणाद्भेदः ॥१५॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ १६ ॥

चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति तन्त्रभावेन पौर्णमास्यां चतुर्दशाहुतय स्युरमावास्यायां त्रयोदश। भेदे तूभयत्रोभयं भवति तस्माद्भेद ॥ १६ ॥ हेतुः ॥

## तथा तदवयवेषु स्यात् ॥ १७ ॥

यदा चैष न्यायस्तदावयवेष्टयाद्यवयवेषु देशकालभेदात् तन्त्रभेद । तत्र चातुर्मास्यावयवयोरनीकवत् सान्तपनीययोर्बर्हिषः साधारण्यवचनमर्थवद्भवति । यदानीकवतो बर्हिस्तत्सान्तपनीयस्येति ।इतरथा सिद्धत्वात् तदनर्थकं स्यात् । तस्मादपि भेदः॥१७॥ युक्ति. ॥

## पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥ १८ ॥

यत्तूक्तं पशुवदिति ।तत्र ब्रूम ।पशौ युक्ता सकृदङ्गानां क्रिया। तत्र ह्येकमेव तन्त्रं केवलं, प्रचारस्य वचनाद्विप्रकर्षः । तदैक्यन्तु चोदनैकत्वात्। एका तत्र चोदना आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीति । कर्म्मचोदनायां ह्यङ्गानां ग्रहणं च प्रचारचोदनायां, तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्त्यते । तदर्थानि च कृतान्यङ्गानि । तेषां पुनः क्रियायां हेतुर्नास्ति । तस्माद्विषम उपन्यास. ॥१८॥ पूर्व० आ० नि० ॥

राजसूयादावङ्गावृत्त्यधिकरणम् ॥ ३ ॥

## तथा स्यादध्वरकल्पेष्टौ विशेषैस्यककालत्वात् ॥ १९ ॥

इदं श्रूयते- आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवमेकादशकपालं माध्यन्दिने, सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवं द्वादशकपालमपराह्णे सारस्वतं चरुं बार्हस्पत्यं चरुं, यस्य भ्रातृव्यः सोमेन यजेतेति । तत्र चिन्त्य-

ते । किं त्रिषु कालेषु युज्यमानानाम् एतेषां कर्म्मसमुदायानां तन्त्रेणाङ्गानां क्रिया ? उत भेदेनेति । किं प्राप्तम् । तथा स्यादध्वरकल्पायां यथा पशौ तन्त्रमङ्गानां प्रयोग. कुतः । विशेषस्यैककालत्वात् । अङ्गविशेष कश्चिदेषां भिन्नकालानां समुदायानामेककालः श्रूयते, पुरावाच. प्रवदितो निर्वपदिति । कथं पुनर्ज्ञायते सर्वेषां निर्वापाणामयं कालविधिरिति । सर्वेषां ह्येषामेकफलत्वादेकप्रकरणम् । सैषाऽध्वरकल्पेष्टि ।यज्ञमेवैतया प्राप्नोति चैकशब्देन युगपत् फलं प्रति विधानात् । तस्मान्नैककाले क्रियमाण उत्तरकालयोः समुदाययोर्निर्वाप प्रतिकृष्येत । स प्रतिकृष्यमाणस्तत प्राग्भाविनामङ्गानां प्रतिकर्षे वर्त्तेत तदा दिवाभिसम्बन्धात्। तदन्तमपकर्षं स्यादिति तानि प्रतिकृष्टानि सर्वेषां तन्त्रं भवन्ति । तेषु तन्त्रेषु उत्तरेषामपि तन्त्रभावो युक्त. । कुतः । यदि सर्वाणि तन्त्रं क्रियन्ते नास्मिन तन्त्रभावे क्रमभेद । अथानुक्रमभेद. । ततः पूर्वस्य सर्वं गुणकाण्डमपवृज्योत्तरस्योपक्रमेण भवितव्यम् । तथा निर्वापास्तेषु प्रतिकृष्यमाणेषु क्रमभेदो भवति । न तत्पूर्वस्य प्रोक्षणादीनि क्रियन्ते यावदुत्तरस्य निर्वापान्तानि न कृतानि । अपि च सहोपक्रमे युगपच्चिकीर्षा । तस्यां च सत्यां यद्यदापतति तत्तद्गृह्यमाणविशेषत्वात् साधारणं भवति ॥ १९ ॥ पूर्व० ॥

## इष्टिरिति चैकवच्छ्रुतिः ॥ २० ॥

सैषाध्वरकल्पेष्टिरिति चैकवच्छ्रवणम् । तत्र तावदेकेष्टिः । बहव एते यागा । यदि तु सह क्रियन्ते तत सैकसमाप्ते यनीभावः पर्य्यवसितो भवतीति एकवदुपचार उपपद्यते । तस्मात्तन्त्रम् । ॥ २० ॥ पूर्व० युक्तिः ॥

नैतदेवं, तन्त्रमङ्गानीति । किन्तर्हि । भेदेन कृत ।

## अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ २१ ॥

कर्माणि तावदेतान्याग्नावैष्णवादीनि पृथग्भूतानि । तेषां तन्त्रविधानं नानाकालेषु प्रातर्मध्यन्दिनेऽपराह्ण इति । तत्रैषां साङ्गानामुपदेशः स्यादतः कालभेदादङ्गानां गृह्यते विशेष । तस्माद्भेदः ॥ २१ ॥ सि०

यत्तु विशेषस्यैककालत्वादिति । तत्र ब्रूमः—

## प्रथमस्य वा कालवचनम् ॥ २२ ॥

प्रथमस्य कर्मणो यो निर्वापस्तस्यैतत्कालवचनम् । पुरा वाचः प्रवदितो निर्वपेदिति । ननु प्रकरणात् सर्वेषां प्राप्नोति । न प्रकरणं धर्माणां विशेषकम् । किन्तर्हि । विनियोजकम् । इदमत्र भवतीत्येतत् प्रकरणस्य सामर्थ्यं, नास्येदं, तस्येदमिति । त्रयाणां च निर्वापाणां क्रमप्राप्तस्य पूर्वस्यैव विज्ञायते । तस्मान्नास्ति विशेषस्यैककालत्वम् । कर्मणां च तत्र भेदः कालभेदादिति ॥ २२ ॥ पूर्व० आ० ॥

## फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २३ ॥

यस्त्विष्टिरिति भिन्नानामपि कर्मणामेकफलानां फलस्यैकत्वमपेक्ष्यैकवचनं भवति । फलान्तरत्वादीहायाः । यथा सर्वपृष्ठेष्टिर्मृगारेष्टिः सुमनानामेष्टिरिति ॥ २३ ॥ पूर्व० आ० नि० ॥ आग्नावैष्णवाद्यङ्गानां भेदनानुष्ठानाधिकरणम् ॥ ४ ॥

## वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २४ ॥

एकदेवता पशव उदाहरणम् । सप्तदश प्राजापत्यान् । पशूनालभत इति । अस्ति तु प्रकृतावग्नीषोमीयपशौ वसाहोमः कर्त्तव्यः । याज्यार्द्धर्चो वसां जुहोतीति । स इह चोदकेन प्राप्यते । तत्र चिन्त्यते । किं भेदेन वसाहोमः कर्त्तव्य, अथवा तन्त्रमिति । किं प्राप्तम् । वसाहोमस्तन्त्रमेकदेवतेषु स्यात् । प्रदानस्यैककालत्वात् । वसाहोमः खल्वेकदेवतेषु तन्त्र स्यात् । कुतः । प्रदानस्यैककालभावात् । एककालं तेषां प्रदानम् । वैश्वदेवीं कृत्वा प्रचरन्तीति । देवता चैका प्रजापतिः । अतस्तेषामेकप्रदानत्वम् । प्रदानस्यैकत्वाद् एकः सर्वेषां साधारणो याज्यार्द्धर्चान्तः । तत्र क्रियमाणस्य होमस्यैदमर्थ्यं प्रति न गृह्यते विशेषः । तस्मात्तन्त्रम् ॥ २४ ॥ पूर्व० ॥

## कालभेदात्त्वावृत्तिर्देवताभेदे ॥ २५ ॥

देवताभेद एकादशिनेषु भिन्नप्रदानेषु भिन्ना याज्यार्द्धर्चान्ताः । तेषु गृह्यते विशेषो यस्य प्रदानस्य याज्यार्द्धर्चान्त कृतः स तदर्थ इति । तस्मात् तन्त्रभेदः ॥ २५ ॥ सिद्धान्तः ॥ वसाहोमे भेदनाऽनुष्ठानाधिकरणम् ॥ ५ ॥

## अन्ते यूपाहुतिस्तद्वत् ॥ २६ ॥

ज्योतिष्टोमे यूपैकादशिनी, एकादश यूपान् छिनत्तीत्याम्नाता। अस्ति तु प्रकृतावग्नीषोमीये पशौ यूपाहुतिः। सा किं भेदेन कर्त्तव्या ? उत तन्त्रमिति। किं प्राप्तम्। अन्ते यूपाहुतिः। तद्वत्। यथाम्नानादेवतेषु वसाहोमो भेदेन, तद्वदियमपि भेदेन कर्त्तव्येत्यर्थः। कुतः ?। यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोतीति श्रूयते। बहूनां च यूपानां भिन्नान्यन्तिकानि। यस्यैव यूपस्यान्तिके न हूयेत तस्यैव तेन गुणेन वर्जनं स्यात्। तस्माद्भेदेन कार्यम् ॥ २६ ॥ पूर्व० ॥

## इतरप्रतिषेधो वा ॥ २७ ॥

अथ वा नैव भेदेन कर्त्तव्येति। किन्तर्हि। तन्त्रम्। कस्मात्। इतरप्रतिषेधोऽयम् आहवनीयप्रतिषेधो, नान्तिकविधिः। कथं ज्ञायते। आहवनीये जुहोतीत्युत्सर्गात् सर्वहोमेष्वाहवनीयः प्राप्तः। तत्राग्निं मथित्वेति वाच्यम्। तदपि मन्थनं प्राग्वंशे कर्मणः प्रवृत्तत्वात् प्राग्वंशे प्राप्तम्। तत्रेदमपि वक्तव्यम्। यूपस्यान्तिकेऽग्निं मथित्वेति। उभयस्मिंश्चापि विधीयमाने वाक्यभेदो, मन्थनस्य स्वार्थवद्भावात्। तस्मादन्यतरदविवक्षितं मन्थनमान्तिकं वा। तत्र च मन्थनं विवक्षितमविवक्षितमन्तिकमिति ब्रूमः।कुतः।मन्थनविधिपरत्वाद्वाक्यस्य। एवं ह्याह, यूपमाच्छेत्स्यता होतव्यं, न हि दीक्षितस्याग्नौ जुहोतीति दीक्षितस्याग्नौ होमं दोषं मन्यत इति। तत्परिहारार्थं कल्पान्तरमुक्तं वैष्णवीमनूच्याच्छेत्स्यत इति। तथाप्यहोमे दोषमिव मन्यमानः पुनः पुनराह होतव्यमिति पुरुषस्यैव जुहोत्यायतन इति। तदुभयमपि तत्र न शक्यमितिप्रतिषिद्ध्य तृतीयं कल्पमाह। यूपस्यैवान्तिकेऽग्निं मथित्वा तथा होतव्यम्। तदुभयमपि शक्यं जुहोत्यथ न दीक्षितस्याग्नौ जुहोतीति। तत्र यदि यूपस्यान्तिके जुहोतीत्येतद्विवक्षितं न मन्थनं,तत्रआहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति। आहवनीये जुहोतीति नियमात्। तत्र, न दीक्षितस्याग्नौ जुहोतीत्येतन्न सम्बद्ध्यते। अथ तु अग्निं मथित्वेत्येतद्विधीयते तत आहवनीयप्रतिषेधो भवति। अन्योऽयमाहवनीयाद् यो मथ्यते। तत्रैतत् समर्थितं भवति, जुहोति च, न चाहवनीये जुहोतीति। तस्माद् मन्थनं विधीयते, नान्तिकम्। अनुवादमात्रमन्तिकस्य। कुतः प्राप्त-

ऽनुवादः ? । सौकर्य्यात् सहाग्निना यूपान्वेषणं दुष्करणम् । यूपाऽन्तिके त्वग्निं मथित्वा सुकरो होमः ।न्यायप्राप्तस्यानुवादः । एवं सति यद्यनान्तिके जुहोति, न दोषः । अथ कस्मान्मन्थनमात्रं कृत्वा आहवनीये एव न हूयेत । अदृष्टं कल्पितं भवति । तस्मात् तन्त्रं यूपाहुति ॥ २७ ॥ सि० ॥

## अशास्त्रवत्त्वाच्च देशानाम् ॥ २८ ॥

न चान्तिकदेशाः शक्याः शासितुमापेक्षिकत्वादन्तिकस्य । अथ परमान्तिकं शिष्येत तदा यूप 'उपदध्येत । तच्च प्रतिषिद्धम् । न च शक्यं परमान्तिकेऽग्निमन्थनं कर्त्तुम् । तस्मादप्यविवक्षितत्वमन्तिकस्य ॥ २८ ॥ युक्तिः ॥ यूपाहुतौ तन्त्राधिकरणम् ॥ ६ ॥

## अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥ २९ ॥

अस्ति ज्योतिष्टोमेऽवभृथ. तस्मिंश्च श्रूयते । अप्स्ववभृथेन चरन्तीति ।तत्र विचार्यते । किं प्रधानमात्रमप्सु कर्त्तव्यमथ वाङ्गान्यपीति । किं प्राप्तम् । अवभृथे प्रधानेऽग्निविकारः । प्रधानमात्रमप्सु कर्त्तव्यम् । कुत. । न हि तद्धेतुरग्निसंयोग. । न ह्यङ्गानां प्रधानहेतुकोऽग्निना संयोग. । यदाहवनीये जुहोतीति होममात्रेऽग्निर्विहितः । सयथा प्रधाने तथाङ्गेषु । आपस्तु प्रधाने केवले विहिताः।अप्स्ववभृथेन चरन्तीति । अवभृथशब्दो हि वरुणदेवतस्यैककपालद्रव्यस्य यागस्य वाचकः । तदुत्पत्तिवाक्ये श्रुतत्वाद्वारुणेनैककपालेनावभृथं यन्तीति । न चात्र गमनं विधीयते । अथ गृहीतं तदप्सु प्रचारवचनात् । न चावभृथो नाम कश्चिद्देशोऽस्ति, यं वारुणेनैककपालेन गच्छेयु' । न च वारुण एककपालोऽस्ति येन गमनमुच्येत । तस्मादेककपालस्य देवतासम्बन्धकरणमेवात्रोच्यते । स च यागस्तद्वचनोऽवभृथशब्दस्तस्मिन्नापो विहिता. । तासामङ्गेषु क'. प्रसङ्गः । द्रव्यदेवतवत् । यथा द्रव्यमेककपालो वरुणश्च देवता प्रधाने विहितत्वान्नाङ्गेषु भवतः । एवमापोऽपि ॥ २९ ॥ पूर्व० ॥

## साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥

साङ्गो वावभृथोऽप्सु प्रवर्त्तेत । कुत । प्रयोगवचनैकत्वात् । नाऽत्रापोऽवभृथे श्रूयन्ते । किन्तर्हि । प्रयोगे । न ह्येतद्वचनमप्स्ववभृथ

इति । कथन्तर्हि अप्स्ववभृथेनेति । द्वे अपि पदे कारकवचने । न च विशेषणविशेष्यता । उभयोश्चरन्तीति क्रियया सम्बन्धो, न मिथः । चरन्तीति प्रयोग उच्यते । तस्मात् प्रयोगाङ्गमापः । अविभक्तश्चाऽङ्गप्रधानानां प्रयोग इत्युक्तम् । अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्नित्यत्र । तस्मात् साङ्गोऽवभृथोऽप्सूपदिष्टो, न केवलः । अतोऽङ्गान्यपि तत्रैव कर्त्तव्यानि ॥ ३० ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ ३१ ॥

लिङ्गं चैतमर्थं दर्शयति, अप्सु तृण प्रास्याघारयतीति । यद्यङ्गानामग्नौ वृत्तिः स्यादुभय विधीयेत । अप्स्वाघारयति तृण प्रास्यतीति च । तद्वाक्यभेददोषः स्यात् । अथ यथोक्तो न्यायस्तथाऽप्स्वित्यनूद्य तृणप्रासनं केवलं विधीयत इति नास्ति दोषः ॥ ३१ ॥ हेतु ॥

अथ यदुपवर्णितं द्रव्यदेवतवादिति । तत्र ब्रूम —

## शब्दविभागाच्च देवता नयः ॥ ३२ ॥

विभक्तशब्द प्रधानस्यावभृथ इति वाचकः । अङ्गानामाघारादयः शब्दाः । अवभृथशब्दसंयुक्तं च द्रव्यदेवतं, वारुणेनैककपालेनाऽवभृथं यन्तीति । तस्मान्न तदङ्गेषु भवति । आपस्तु प्रयोगाङ्गमित्येवमपदिष्टो हेतुः । अतोऽनुपवर्णनमेतत् ॥ ३२ ॥ पूर्व० युक्ति-नि० ॥ अवभृथाधिकरणम् ॥ ७ ॥

वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं, पृथगग्नी प्रणयन्ति, पृथग्वेदी कुरुत इति । तत्र श्रूयते अध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति । इह विचार्यते । किं भेदेन दक्षिणविहारेऽङ्गानि कर्त्तव्यानि? अथ वा यान्येवोत्तरे कृतानि तान्येवोत्तरत्राप्युपकुर्वन्तीति । किं प्राप्तम् ।

## दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वं क्रियते ॥ ३३ ॥

भेदेनाङ्गानि कर्त्तव्यानि । कुतः । देशभेदात् । देशो हि भिद्यते, दक्षिण उत्तर इति । यान्युत्तरे विहारे प्रधानानि तेषां तद्देशान्येवाऽङ्गान्युपकुर्वन्त्यङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् । तस्मात् स्यादेकदेशत्वमिति नान्यदेशाया मारुत्याः । तस्मात् तदर्थं दक्षिणे विहारे भेदेन कर्त्तव्यानीति ॥ ३३ ॥ पूर्व० ॥

## अचोदनेति चेत् ॥ ३४ ॥

एवं चेत् पश्यसि देशभेदादङ्गानां पृथक् क्रियेति। नैतद् युक्तम्। यत् कारणमचोदनान्न मारुत्याः। यत्र यागः फलं प्रति चोद्यते तत्राङ्गानि गृह्णाति। न चेह मारुत्या फलं प्रति चोदना। क्व तर्हि। चातुर्मास्यैः स्वर्गकामो यजेतेति। नचेदिह कर्म चोद्यते,अङ्गानां प्राप्तिरेव नास्ति, कुतो भेदस्तन्त्रता वा॥ ३४ ॥ आ० ॥

## स्यात् पौर्णमासीवत् ॥ ३५ ॥

स्यादङ्गानां प्राप्तिः। पौर्णमासीवत्। यथा पौर्णमास्यां यजेतेति, न तावत् कर्मफलं चोद्यते। अन्यत्रैव तच्चोदितम्। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। अथ वा साङ्गप्रधानं पौर्णमास्यां क्रियत इत्येवमिहापि भविष्यति॥ ३५ ॥ आ०नि० ॥

## प्रयोगचोदनेति चेत् ॥ ३६ ॥

अथोच्येत प्रयोगस्तत्र पौर्णमास्यां चोद्यते, यजेतेत्याख्यातेन। प्रयोगश्चाङ्गप्रधानानां विवक्षितः। प्रयोगाङ्गं च कालः। तस्मात् तत्र साङ्गं प्रधानं पौर्णमास्यां क्रियत इति तत्र ब्रूमः। तथेह॥ ३६ ॥ आ० ॥

## इहापि मारुत्याः प्रयोगश्चोद्यते ॥ ३७ ॥

आसादयतीत्यनेनाऽऽख्यातेन। यथा च कालः प्रयोगाङ्गमेवं देशोऽपि। तस्माद् मारुत्यपि साङ्गा दक्षिणविहारे कर्त्तव्या। ननु न आसादयतिशब्देन याग उच्यते। कथं तस्य प्रयोगं वक्ष्यति। आह। यागार्थमेतदासादनं, यथा प्रकृतौ। तथा दृष्टार्थं भवति। इतरथाऽदृष्टोऽर्थः कल्पयितव्यः स्यात्। यागार्थं चेत् तत्र यागोऽवश्यं कार्यः। सैषा लक्षणया यागचोदना भवति। यथा सौर्यं चरुं निर्वपेत् सौम्यं बभ्रुमालभेतेति। तस्मादिहापि मारुत्याः प्रयोगश्चोद्यते। तथा च प्राप्तानामङ्गानां भेदेन क्रिया॥ ३७ ॥ आ० नि० ॥

## आसादनमिति चेत् ॥ ३८ ॥

आह। नासादयतिशब्देन याग उच्यते। किन्तर्हि। आसादनम्। ननु लक्षणया यागं वक्ष्यति। न श्रुतिम् उत्सृज्य लक्षणाश्रयणीया। आसादनस्य दृष्टार्थत्वेनाश्रयिष्यते। आश्रीयेत यद्यासादनं दृष्टार्थं सम्भवति। यदि दक्षिणेऽग्नौ मारुत्या होमः सिद्धः स्यात्तत्समीपे नयनं दृष्टार्थं भवेत्। स तु असिद्धः। नादृष्टार्थता युज्यते। श्रुत्यर्थ एव ग्राह्यः। तस्मादासादनमासादयतिशब्देनोच्यते,न यागः॥३८॥ आ०॥

## नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥

नैतदहष्टार्थमासादनम् । कुतः । उत्तरेणैकवाक्यत्वात् । अहष्टायोत्तरे विहारे हवींषि आसादयति अनेनोत्तरविहारसम्बन्धेन पदसञ्चयेन मारुतीमेव प्रतिप्रस्थाता दक्षिणाग्मिन्नित्येतस्मिन्नेकवाक्यत्वादेव ज्ञायते, यथा नासादनमदृष्टार्थमिदम् । तत् कथं कृत्वा ? । आहवनीयद्वये अव्यवस्थया हविषां होम प्राप्तस्तदनुविधानादासादनमपि तथैव प्राप्तम् । तत्र व्यवस्थामात्रमनेन क्रियते । यथा प्राप्तस्य च, वसाहोमाय च प्राप्तं, नादृष्टाय । तस्माद्धोमार्थमासादनम् । अपर आह । एकस्मिन् वाक्य एक एवाऽयमासादयतिशब्द उभयोर्विहारयोरासादनमाह । उत्तरस्मिंश्च व्यक्तं तद्धोमार्थम् । तस्मिंश्चोच्चारणे दक्षिणे होमार्थं न भविष्यतीति एतन्नोपपद्यते । तस्मादुभयत्र होमाऽर्थम् । अथोच्यतासादनमेवेदं विधीयते । यतो दृष्टार्थं भवति । तत्र दृष्टार्थं, यत्र न सम्भवति तत्राहष्टार्थमिति । तच्च न विध्यनुवादयोर्यौगपद्यसङ्गात् । यत्र दृष्टार्थं तत्रानूद्यते, प्रकृतितः प्राप्तत्वात् । यत्राऽहष्टार्थं तत्र विधीयते । तदुभयं युगपन्न सम्भवति । तस्मादयुक्तमेतत् । अथ होमार्थत्वे सति कस्माद् यागचोदना कल्पते । नासादनमात्रमेवेत्याह । होमश्चान्यत्रेति । नैवम् । आसादनं हि होमार्थं भवति । नान्यत्रासाद्यमानमन्यत्र होमार्थं भविष्यति ॥ ३९ ॥ आ० नि० ॥

अपि च ।

## अवाच्यत्वात् ॥ ४० ॥

न च होमार्थमासादनं वक्तव्यं, सति होमे प्रकृतित एव प्राप्नोति । यागस्तु वक्तव्यः । स च सति होमे शक्यते लक्षणयाऽनेन वक्तुम् । तस्मादत्राप्यासादयतिशब्देन पौर्णमासीवद् यागस्य प्रयोग उच्यते । तथा च तन्त्रभेदः ॥ ४० ॥ हेतुः ॥

## आम्नायवचनं तद्वत् ॥ ४१ ॥

वैदिकवचनं तद्वद् युक्तं भविष्यति यद्वन्न्यायोपदिष्टः । यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोतीति । तथा यस्मिन्नेव होमस्तस्मिन् ब्रूते देवतायजनमिति । दक्षिणेऽपि विहारे देवतायागं दर्शयति । तद् यागार्थमासादयतिशब्दो युज्यते । तस्मादप्येवम् ॥ ४१ ॥ युक्ति० ॥

वरुणप्रघासादिषु विहाराधिकरणम् ॥ ८ ॥

## कर्तृभेदस्तथेति चेत् ॥ ४२ ॥

तत्रैव चिन्त्यते। किं कर्त्तारो भेदेन? उत तन्त्रमिति। किं प्राप्तम्। कर्तृभेदस्तथा यथाङ्गभेदः। अष्टानां हविषां साङ्गानां कर्त्तृभिरुत्तरे विहारे प्रचरितव्यमितरैर्दक्षिणे। एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति। तेनोत्तरवैहारिकाः कर्त्तारो गृह्यमाणविशेषा दक्षिणे विहारे नोपकुर्वन्ति। तस्मात् कर्त्रन्तरैर्भावितव्यम् ॥ ४२ ॥ पूर्व० ॥ •

## न समवायात् ॥ ४३ ॥

नैतदेवमङ्गवत् कर्त्तृभेद इति। किन्तर्हि। तन्त्रेण कर्त्तार स्युः। कुतः। समवायात्। वचनेन हि कर्त्तारः समवयन्त्यत्र। चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विज इति। समुदायसम्बन्धेऽपि सत्यवयवा एककर्तृभिः सम्बद्ध्यन्ते। वरुणप्राघासानाञ्च तदवयवत्वात् पञ्चभिरभिसम्बन्धोऽभ्युपगम्यते। एकश्चायं वरुणप्राघासानां प्रयोगः। एककालत्वात्। समानोपक्रमोपसंहाराच्च। तद् यावद्वचनं तावदेवात्र भेदेन कर्त्तव्यं, नान्यदपि। न च कर्त्तृणां भेद उक्तः। तस्मात् तन्त्रेण भवन्तीति। तन्नैतत् स्यात्। प्रधानभेद उक्तोऽप्यङ्गानां भेदोऽभ्युपगम्यते। कुत?। अङ्गानां प्रधानगामित्वात्। यथैव हि प्रयाजादीनां मारुत्या भेदाद्भेदेन क्रिया एवमङ्गभूतत्वात् कर्त्तृणां प्रयाजादिवत्। कस्मान्न भेदोऽध्यवसायत इति। तत्रोच्यते। अङ्गत्वाविशेषेऽपि सति अन्यथाजातीयोपकारोऽन्यजातीयोऽन्यस्य प्रयाजादीनि? उत दृष्टेनोपकारसम्बन्धेनोपकुर्वन्ति?। बर्हिरादीनि यागद्रव्यधारणेन अपराण्यधिकरणसंस्कारद्वारेण। तानि यागदेशाऽधिकरणभेदाद्भिद्यन्ते। कर्त्तारस्तु क्रियानिर्वृत्त्योपकुर्वन्ति। तेन ते देशभेदेऽपि सति प्राकृतोपकारे प्रत्यभिज्ञानतन्त्रेण क्रियानिर्वृत्तिं शक्नुवन्ति कर्त्तुमिति, न भिद्यन्ते। क पुन प्राकृते उपकार? इति। होता तावदग्रतो गार्हपत्यस्य पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन सम्बोधयन् यागस्य कर्त्तेत्युच्यते।शक्नोति तद्देशाऽवस्थित एव सामीप्यात् तन्त्रेण क्रमप्राप्तं यागं कुर्वाणमध्वर्युवत् प्रतिप्रस्थातारमपि सम्बोधयितुमित्यतो न भिद्यते। तथाग्नीध्र समानत्वादुत्करदेशस्य, तत्रावस्थित एव प्रत्याश्रावणेनोभौ कर्त्ता-

रावनुग्रहीतुम् । अतोऽसावपि न भिद्यते । तथा ब्रह्मा दक्षिणतोऽवस्थित उभयोराहवनीययोः समानत्वाद् देशस्य य एवोत्तरस्य दक्षिणः स एव दक्षिणस्य दक्षिण इति तत्रावस्थितः कृताकृतप्रत्यवेक्षणेनानुज्ञावचनेन च शक्नोत्युभावनुग्रहीतुम् । अतस्तस्याप्यऽभेदः । अध्वर्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एवेत्यदोषः । तस्मान्न कर्त्रन्तरैर्भवितव्यम् ॥ ४३ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ ४४ ॥

लिङ्गं चैतमर्थं दर्शयति । प्रवयसमृषभं दक्षिणां ददातीति दक्षिणैक्यमाह । तदेककर्त्तृत्वेनोपपद्यते । अन्यत्र दक्षिणाभावान्न याजयेयुः । नन्वन्वाहार्येण याजयिष्यन्ति । न ज्ञायते कान्वाहार्य, कर्षभ इति । विशेषाग्रहणादुभयत्रर्षभः । उपादेयत्वेन चोदितस्यैकत्वं विवक्षितम् । तस्माद् दक्षिणैक्यम् । तथा च तन्त्रं कर्त्तार ॥ ४४ ॥ हेतुः ॥

## वेदिसंयोगादिति चेत ॥ ४५ ॥

अथोच्येत वेदिसंयोगो हेतुः श्रूयते अन्तर्वेद्यन्यः पादो होतुर्भवति बहिर्वेद्यन्य इति । एकश्च होतुः पाद उभयत्रापकर्त्तुमसमर्थस्तस्मात् कर्त्तृभेदः ॥ ४५ ॥ आ० ॥

## न देशमात्रत्वात् ॥ ४६ ॥

नैतदेवम् । कस्मात् । देशमात्रत्वात् । नात्र हेतुः पादो वेदेरुपकारार्थत्वेनोपदिश्यते । किन्तर्हि । देशमात्रमेतद्विधीयते । तस्मिन् देशे होत्रा स्थातव्य, यत्रास्यैकः पादोऽन्तर्वेदि भवति बहिर्वेद्यन्य इति ॥ ४६ ॥ आ० नि ० ॥

कुतः ?

## एकवाक्यत्वात् ॥ ४७ ॥

एकमिदं वाक्यं युक्तं सन्निध्यनुग्रहाद् एकार्थत्वाच्च । यदि च होतुः पादो वेद्यङ्गत्वेनोपदिश्येत एकस्मिन्नन्तर्वेदिनिहिते कृतः श्रुत्यर्थ इति द्वितीयस्याऽनियमः स्यात् । सोऽपि विधातव्यो बहिर्वेद्यन्य इति । कथं पुनरेकोऽन्तर्वेदीत्युक्ते द्वितीयोऽपि तत्र प्रसज्ज्येत ? । अप्रतिषिद्धत्वात् । यदि द्वयोरन्तर्वेद्यन्यतः प्राप्तिः स्यात्तत एकस्य वचनं द्वितीयनिवृत्त्यर्थम् । न चास्ति प्राप्तिः । तस्मादस्तिप्रसङ्गः । तथा च वाक्यभेदः । अथ तु देशविशेषविधानार्थमेतत्ततस्तदेताभ्या-

मुभाभ्यां सम्भूय क्रियत इत्येकार्थत्वाद् एकवाक्यत्वमुपपन्नम् । तस्मान्न होतृपादो वेदेऽपकारकः । नोभयत्र विधेयः ॥ ४७ ॥ हेतु. ॥ कर्तृतन्त्रताधिकरणम् ॥ ९ ॥

## एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४८ ॥

इदमपरं तत्रैव चिन्त्यते । किमापराग्निका होमास्तन्त्रं कार्याः ? उत भेदेनेति । किं प्राप्तम् । तन्त्रमिति । कुत' । एकाग्नित्वात् । पौर्वाऽग्निकानामग्निभेदाद् भेद उक्तः । इह स हेतुर्नास्ति । एकाग्नित्वादेतेषाम् । तस्मादेते तन्त्रं भवेयु' ॥ ४८ ॥ पूर्व० ॥

## नाना वा कर्तृभेदात् ॥ ४९ ॥

नाना भवेयु । कुतः । कर्तृभेदात् । मारुत्या यान्यङ्गानि तानि प्रतिप्रस्थातुः कर्माणि, इतराण्यध्वर्योः । तन्त्रभावेऽन्यतरेषां कर्तृकृतं वैगुण्यं स्यात् । तस्माद्भेदः ॥ ४९ ॥ सिद्धान्तः ॥ अपराग्नितन्त्रताऽभावाधिकरणम् ॥ १० ॥

## पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रु.तसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ५० ॥

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते, तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्नालभन्त इति । तत्र विचार्यते । तान् पर्यग्निकृतानुत्सृजन्तीति । किमयं कर्मशेषप्रतिषेधो ब्रह्मसाम्नालभत इति कर्मान्तरचोदना । अथ वा पूर्व. पर्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थ ? । उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थ इति । किं प्राप्तम् । कर्मोत्सर्गः । कर्मशेषप्रतिषेध इत्यर्थः । श्रुतिसामान्यादारण्यवत् । यथा पर्यग्निकृतानारण्यानुत्सृजन्तीत्ययं कर्मशेषप्रतिषेध इत्युक्तं, शेषप्रतिषेधो वार्थाभावादिडान्तवदिति । तया श्रुत्या तुल्येयं श्रुतिः । किमनयोस्तुल्यम् । तत्र कर्माणि चोदितानि।वसन्ताय कपिञ्जलानालभेतेति । तेषु सर्वेषु प्राकृतगुणा प्राप्ताः । तेषु प्राप्तेषु पर्यग्निकरणान्तं गुणकाण्डं पुन पर्यग्निकृतानुत्सृजन्तीति निर्गुणं पुनर्वचनमितरपरिसंख्यायकं भवतीति कर्मशेषस्य प्रतिषेधकं विज्ञायते । एवमिहापि प्राजापत्यानालभेतेति चोदितानां कर्मणां तथैव सर्वाङ्गेषु प्राप्तेषु इदं पर्यग्निकरणान्तस्य गुणकाण्डस्य निर्गुणं

पुनर्वचनं कर्मशेषस्य निवर्त्तकम् । यस्मान्नैवं तस्माद् ब्रह्मसाम्नालभत इति कर्मान्तरचोदना स्यात्।पूर्वापेक्षया ब्रह्मसाम्नालभते सप्तदश प्राजापत्यानिति ॥ ५० ॥ पूर्व० ॥

## संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥५१॥

न वा कर्मशेषप्रतिषेध इति । किं तर्हि । संस्काराणां प्राप्तावसराणाम् । तस्मादवसरात् प्रतिषिद्धब्रह्मसाम्नि प्रतिप्रसवः ॥ ५१ ॥ सि० ॥

किं कारणम् ।

## वाक्यैकत्वे क्रतुसामान्यात् ॥ ५२ ॥

एकमिदं वाक्यं, तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्नालभत इति । कथ ज्ञायते । आलभत इति द्रव्यदेवतस्याश्रवणात् । समाने च क्रतौ वाक्यैकत्वं भवति । यथा हि केवल आलम्भो वक्तव्यो, द्रव्यदेवतस्योक्तत्वात् । अथ वाक्यभेदः स्यात्, ततः पूर्वेण कर्मशेषः प्रतिषिद्ध्येत, परेण कर्मान्तरं चोद्येत । तत्र द्रव्यदेवतं वक्तव्यम् । यत्तु पूर्वोक्तं सम्भन्त्स्यत इति । तत्तत्रैव कृतार्थत्वादिह न सम्बद्ध्येत । तस्मादेकं वाक्यम् । नन्वेकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिद्ध्यन्ते, परेण विधीयन्त इति । अर्थभेदाद्वाक्यभेद इत्येव भवति । न हि ब्रह्मसाम्ना लभत इत्युक्ते अर्थादेव पर्यग्निकरणान्न उत्सर्गः सिद्धः । स न विधीयते । तमनूद्यालम्भः केवल उत्कृष्यतेति । नास्ति क्रतुसामान्ये वाक्यभेदः ॥ ५२ ॥ हेतुः ॥

## वपानां चानभिघारणस्य दर्शनात् ॥ ५३ ॥

सव्या वा एतर्हि वपा यदनभिघृता ब्रह्म वै ब्रह्मसाम यद् ब्रह्मसाम्नालभते तेनासव्यास्तेनाभिघृता इति । यदि संस्कारप्रतिषेधः, ततो जुह्वाः सवनीयप्रचारेण चिरत्वात् प्रयाजशेषो नास्ति । तदभावादनभिघृतत्वं युज्यते। अथ कर्मप्रतिषेधस्ततो ब्रह्मसाम्नालम्भः कर्मान्तरे । तत्र प्रयाजाः पुनरिज्यन्ते । तेषां शेषोऽस्ति । तेनाऽभिघारणं स्यात् । अनभिघारणदर्शनं नोपपद्येत । तस्मादपि संस्कारप्रतिषेधः ॥ ५३ ॥ युक्तिः ॥ पर्यग्निकृतोत्सर्गाधिकरणम् ॥ ११ ॥

अस्ति पञ्चशारदीयोऽहीनो मारुतीयः पञ्चशारदीयो, यः कामयेत बहु स्यामिति स एतेन यजेतेति । तत्र श्रूयते । वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अपचिता उपाकरोतीति ।

सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्षणस्तान् पर्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । तत्र सैव चिन्ता । किमुक्ष्णामुत्सर्ग आरण्यवत् कर्मशेषप्रतिषेधः । अथ वा प्राजापत्यवत् संस्कारकर्मप्रतिषेधः । तेषां च सुत्यासु प्रतिप्रसवः । त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभन्ते । पञ्चोत्तम इति । यदि कर्मशेषप्रतिषेधः, प्रतिवर्षमन्ये उक्षाण. । अथ संस्कारप्रतिषेधः, ततस्त एव पञ्चवर्षाण्युपरुद्ध्यन्ते, पुनः पुनः संस्क्रियन्ते । अन्त्यासु सुत्यास्वालभ्यन्त इति । किं तत्र प्राप्तम् ?

## पञ्चशारदीयास्तथेति चेत् ॥ ५४ ॥

इति चेत् पश्यसि । कथम् ? । पञ्च शारदीया इति । पञ्च शारदीयास्तथा यथानन्तराः । प्राजापत्यासंस्कारप्रतिषेध इत्यर्थः । एवं प्रकृतप्रत्ययो भवति । स एवमनुग्रहीष्यते । इतरथा प्रकृतहानमप्रकृतप्रत्ययश्च भवेत् । एवञ्च तांश्चैवोक्षण इत्यपेक्षावचनं युक्तं भविष्यतीति । प्रायश्चित्तविधानं च यदि कूट काणो वा भवेद् बार्हस्पत्यं चरु निर्वपेत्, यदि प्रापतेद्वायव्यं चरुं, यद्यवसीदेन्नैर्ऋतं चरुमिति निरुद्धानामेतानि निमित्तान्युत्पद्येरन्।तस्मात् संस्कारप्रतिषेधः॥५४॥

## न चोदनैकवाक्यत्वात् ॥ ५५ ॥

नैतदेवं संस्कारप्रतिषेध इति । कथं तर्हि । कर्मशेषप्रतिषेधः । कुतः । चोदनैकवाक्यत्वात् । सप्तदश मारुतीः पृश्नीरुपाकरोतीति कर्मचोदनैषा । द्रव्यदेवतासम्बन्धात् । तयैकवाक्यमेतत् । सप्तदश पृश्नीनुक्ष्ण इति । कथं ज्ञायते । सप्तदश पृश्नीनुक्ष्ण इत्येतावदपरिसमाप्तम् । तत् पूर्वापेक्षया परिसमाप्यते मारुतानालभन्त इति । एवं सत्यनुषङ्गोऽवश्यं भवति । तथा च समत्वाद्वाक्यभेदः । किमुच्यते। चोदनैकवाक्यत्वादिति । आह । यद्यसावश्वशेषत्वेनापेक्ष्यते ततोऽनुषङ्गः । अथायं तस्य, तत एकवाक्यत्वम् । इदं तस्य शेषत्वेन अपेक्षिष्यामहे । एतच्चात्र युक्तं, यदयं तस्य शेषः स्याद्, नासावस्य । तच्छेषत्वे अपेक्षामात्रमितरत्रापेक्षयानुषक्तव्यं, स्वार्थेन च सम्बद्ध्येत । सप्तदश च पृश्नीर्मारुतीरुपाकरोति । सप्तदश च पृश्नीनुक्ष्ण इति चार्थो न वक्तव्यः । प्रचयादेव गम्येत । तस्मादेकेनानेन वाक्येन

चतुस्त्रिंशदेतानि कर्माणि चोद्यन्ते।तेषां सप्तदशानां पर्यग्निकरणान्त उत्सर्गः क्रियते। सप्तदशसु यथाप्रकृति । एवमुत्तरास्वपि चोदनासु। न चात्सृष्टानां कर्मान्तर उपयोगो युज्यते । अभ्यस्त्वात् ॥ ५५ ॥ सि० ॥

## यातयामत्वाच्च ॥ ५६ ॥

तस्मादारण्यवत् कर्मशेषप्रतिषेधः । अन्ये चान्ये चोक्षाणः । पूर्वेषामुक्ष्णामभावात् प्रकृतहानम् । प्रायश्चित्तमप्युपाकृतानां प्रागुत्सर्गात् । अपेक्षावचनमपि तेषामभावादन्यांस्ताहशानेवापेक्ष्य भवेत्, पृश्नीन्मरुतीश्च । यथा नामेव यवागुं त्वहं पिबामीति । तान्येवौषधानि । स एव तित्तिरिरिति ॥ ५६ ॥ हेतुः ॥

## संस्काराणां च तद्दर्शनात् ॥ ५७ ॥

संस्कारांश्च प्रतिवर्षं दर्शयति । तान् पर्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । ननु वचनमेतद्भविष्यतीति । न वाक्यभेदप्रसङ्गात् । पर्यग्निकरणं करोति पर्यग्निकृतांश्चोत्सृजन्तीति । अपि च वत्सतरीणामुक्ष्णां च युगपत्पर्यग्निकरणमुच्यते । तद् वत्सतरीषु प्रकृतितः प्राप्तत्वादनूद्यते । इतरेष्वप्राप्तत्वाद्विधीयते । एतन्नोपपद्यते । सत्सु संस्कारेषु । एतदुभयं न युज्यते । यागं च दृष्टवत्म । तस्मादुभयत्र यागः ॥५७॥ हेतुः ॥ पञ्चशारदीयाधिकरणम् ॥ १२ ॥

राजसूयेऽभिषेचनीयदशपेयावेकाहौ । तत्र चिन्त्यते । किं तयोस्तन्त्रयोगः, अथ वा भेदेनेति । किं प्राप्तम् ।

## दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्ततः प्राचां तत्समानं तन्त्रं स्यात् ॥ ५८ ॥

समानं तन्त्रमनयोः । कुतः । दशपेयस्य क्रयः प्रतिकृष्यते । सह सोमं क्रीणात्यभिषेचनीयदशपेययोरिति । अभिषेचनीयस्य पूर्वकालीनत्वात् क्रयकाले दशपेयक्रयस्य प्रतिकर्षः । स प्रतिकृष्यमाणस्ततः प्राग्भाविनः पदार्थान् प्रतिकर्षति । तदादि वाभिसम्बन्धात्तदन्तमपकर्षं स्यादिति । अतस्तयोरेकाहयोस्तन्त्रे क्रमः । तन्त्रप्रकान्तयोः प्रवृत्तितस्तन्त्रमेव समाप्तिर्युक्ता । तस्मात् समानतन्त्रौ ॥५८॥ पूर्व० ॥

## समानवचनं तद्वत् ॥ ५९ ॥

समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्चेति तन्त्रस्य स-

मानत्वाद् यज्ञयोः समानत्वमात्मनाभिन्नत्वात् ॥ ५९ ॥ पूर्व० हेतुः ॥

अप्रतिकर्षो वाऽर्थहेतुत्वात् ॥ ६० ॥

सहत्वं विधीयते । न वा प्रतिकर्ष क्रयस्य । कुतः । अर्थहेतुत्वात् । द्वाविमौ क्रयौ । एकोऽर्थहेतुकोऽन्यः शब्दकृतः । यत् प्राक् क्रतुप्रवृत्तेर्यज्ञसाधनोपार्जनकाले सोमविक्रयिणा सह संवादः सोमस्य परिक्रयणं मूल्यपरिच्छेदः सोऽर्थादवश्यं करणीयः । तस्मिन्नकृते क्रतोरत्र प्रवृत्तिर्न युक्ता । कुतः । क्रतुकाले कदाचित् सोमो न स्याद्, विक्रेता वास्य नार्घेण वा दद्यात् । तथा क्रतुरेव न सवर्त्तेत । तस्यैतत् सहत्वमुच्यते । किं कारणम् । मुख्यत्वात् । तत्रैव च क्रयो निर्वृत्तकल्पो मूल्यापणमात्रं परिशिष्टम् । यदन्यत् तत्र कल्प्यते क्रीणामीत्येवमादि तद्धर्ममात्रम् । परतन्त्रत्वादेव विक्रेतुः । एवञ्च सति भिन्नकालयोर्यथाकालमेवाङ्गानि भविष्यन्ति । दृष्टश्च तस्मिन्नुपसंवादे क्रयार्थे क्रीणातेः प्रयोगो, देवदत्तेन सहास्माभिर्धान्यं क्रीतम्, उपसंवृत्ता इति । अतस्तस्य वादः । स च बहिः क्रतोर्वर्त्तते । तस्मान्नास्ति प्रतिकर्षः । कालभेदाद् यथोक्त एव तन्त्रभेदः ॥ ६० ॥ सि० ॥

पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ६१ ॥

पूर्वस्मिंश्चाभिषेचनीये अवभृथदर्शनं भवति । कथं समानं वा एतद्यज्ञं विच्छिन्दन्ति यदभिषेचनीयस्यावभृथमभ्यवयन्तीति । तदेवमवभृथदर्शनं पूर्वस्मिन्नुपपद्येत । यदि भेदेन तन्त्रप्रवृत्तिरितरथा दशपेयान्तोऽवभृथः स्यात् । दीक्षाणां चोत्तरस्य दशपेयस्य च पृथग्दीक्षाणां दर्शनं तथाभिषेचनीयस्य दीक्षा वर्द्धयेयुर्यथा दशमेऽहनि दशपेयः सम्पद्यते । सद्योदीक्षयन्ति सद्यः सोमं क्रीणातीति । इतरथा अभिषेचनीये या एव दशपेयस्यापि दीक्षाः स्युस्तत्रैव दर्शनं नोपपद्यते ॥ ६१ ॥ हेतुः ॥

यत्तु समानवचनं तद्वदिति, तत्र ब्रूमः —

समानः कालसामान्यात् ॥ ६२ ॥

एकस्मिन् क्रतावेतौ सोमौ वर्त्तेते तत उत्तरे संवत्सरादूर्ध्वमेतत् कालसामान्यमपेक्ष्य तत्सामान्यवचनं नान्यथोपपद्यत इति । तस्मात्तन्त्रभेदः ॥ ६२ ॥ पूर्व० हेतु-नि० ॥ दशपेयाधिकरणम् ॥ १३ ॥

वरुणप्राघासेषु श्रूयते, वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्तीति । तत्र विचार्यते । किं प्रदानं विप्रकर्षोऽयमुत कर्मान्तरचोदनेति । किं प्राप्तम् ।

**निष्कासस्याऽवभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् ॥ ६३ ॥**

प्रदानविप्रकर्षोऽयम् । कुतः। तदेकदेशत्वात् । वरुणं प्रत्यामिक्षोत्पन्ना मारुत्यामिक्षा वारुण्यामिक्षेति । सा द्विधा प्रतीयमाना दृश्यते । एकदेशोऽस्या आवापस्थाने, एकदेशः समिष्टयजुरूर्ध्वम् । उभयत्रापि वरुणदेवता । तेन प्रदानविप्रकर्षो विज्ञायते । पशुवद् । यथा सवनीयस्य पशोर्वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यन्दिने, अङ्गैस्तृतीयसवन इति । अवभृथशब्द इदानीं किमर्थः ? । भक्त्यानुवादमात्रम् । देशसामान्याद्देवतासामान्याच्च । अथ धर्मातिदेशकोऽग्निहोत्रपदवदेव कस्मान्न भवति । अशक्यत्वात् । अनेनैव प्रदानविप्रकर्षोऽनेनैव धर्मातिदेश इत्यशक्यमेकस्य वाक्यस्य । प्रदानविप्रकर्षं कृत्वा कृतार्थस्य धर्मानतिदेष्टुं न शक्तिरिति ॥ ६३ ॥ पूर्व० ॥

**अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६४ ॥**

न वायं प्रदानविप्रकर्षः । किन्तर्हि । अपनयो निष्कासस्य पूर्वकर्मणः कर्मान्तरोपदेशः । किं कारणम् । प्रसिद्धेनाभिसंयोगात् । प्रसिद्धेन नामधेयेनावभृथशब्देन संयोगाद् निष्कासेनावभृथमभ्यवयन्तीति । ननु भाक्तोऽयमनुवादमात्रमित्युक्तमनुवादः सन्नप्रवृत्तिकरोऽनर्थकः स्याद्, अतिदेशस्तु अर्थवान् । ननु तत्रापि लक्षणा भवति । अस्तु । लक्षणापि हि प्रवृत्तिविशेषकरत्वादर्थवती । यथाऽग्नौ तिष्ठत्यवटे तिष्ठति । अनेकार्थता तर्हि दोषो भवति । पूर्वकर्मचोदनायामसौ दोषः । यथैतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति । कथं पुनरनेन शक्यते अपूर्वं कर्म चोदयितुम् । उच्यते । वारुण्या निष्कासेन तुषैश्चावभृथमपोऽभ्यवयन्तीति श्रूयते । न चावभृथः शक्यतेऽभ्यवेतुम् । तत्रैवं विज्ञायते । निष्कासेन तुषैश्चावभृथं कर्तुमपोऽभ्यवयन्तीति । यथा शाटकं कर्तुं सूत्राणि वयन्तीति लक्षणया । यथा, य एवं विद्वांसः सत्रमुपयन्तीति ॥ ६४ ॥ सि० ॥

## प्रतिपत्तिरितिचेन्न कर्मसंयोगात् ॥ ६५ ॥

अथान्यशेषत्वान्निष्कासस्यावभृथगमनं प्रतिपत्तिर्भवत्विति। तन्न। कुतः। कर्मसंयोगात्। अर्थकर्मणा ह्यस्य गुणभूतस्य संयोगो विज्ञायते। तृतीयासामर्थ्यात्। प्रतिपत्तौ हि द्रव्यप्राधान्याद् द्वितीयया, निरदेक्ष्येत। यथा चात्वाले कृष्णविषाणां प्रास्यतीति। अथ वावभृथशब्दकेनास्य कर्मणा संयोगात्। यदि च प्रतिपत्तिः स्यात्ततोऽवभृथशब्दोऽनर्थक एव भवेत्। अयमवभृथशब्दो धर्मानतिदिशेत्। न च प्रतिपत्तौ प्रधानकर्मणां धर्माः शक्या अतिदेष्टुम्। वैषम्यात्। तथा हि अवभृथेन प्रतिपादयतीत्युक्तं स्यात्। न वावभृथेन किञ्चित् प्रतिपादितं, यदतिदिश्येत ॥ ६५ ॥ आ० नि० ॥ वरुणप्राघासेऽवभृथाधिकरणम् ॥ १४ ॥

## उदयनीये च तद्वत् ॥ ६६ ॥

ज्योतिष्टोमे श्रूयते। प्रायणीयस्य निष्काषे उदयनीयमनुनिर्वपतीति। तत्राप्यवभृथवन्निष्कासो गुणतः स्यात्। तत्रापि ह्युदयनीयशब्दकेन प्रधानकर्मणा संयोगो भवति। प्रायणीयस्य निष्काष उदनीयमनुनिर्वपतीति। न च शक्यते उदयनीयो निर्वप्तुम्। अतस्तथेहापि सम्बन्धो विधीयते निष्काषो नोदयनीयं कर्त्तु हविष्यं निर्वपतीति। लक्षणया वा पूर्ववत्। अपि च द्वितीयासंयोगात् कर्मणः प्राधान्यं विज्ञायते। निष्काषस्य सप्तमीयोगाद् गुणभावः। प्रतिपत्तौ तु कर्मगुणता स्याद् निष्काषप्रधानता। तत्र कर्म तृतीयासम्बद्धं भवेत्। निष्काषो द्वितीयासम्बद्धः। ननु प्रधानभूतेऽपि सप्तमी भवति। यथा, स्वागारे गावो वास्यन्तां, प्रावारे कुसुमानीति। भवति यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम्। यत्र तु शब्दगम्य एवार्थस्तत्र गुणभावो युक्तः। यत् कारणं, कारकविभक्तिरियम्। कारकं च क्रियार्थं भूतं भव्यम्। उच्चारणे हि भूतं भव्यार्थं भवति। दृष्टार्थत्वात्। भव्यस्य तु भूतार्थत्वेऽदृष्टार्थता कल्प्या स्यात्। न च दृष्टे सत्यदृष्टकल्पना सम्भवति ॥ ६६ ॥ पूर्व० ॥

## प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥ ६७ ॥

प्रतिपत्तिर्वा उदयनीयः स्याद् निष्काषस्य, न गुणभावः। कुतः। अकर्मसंयोगात्। नात्र निष्कासस्योदयनीयकर्मणा संयोग। केन

तर्हि निर्वापेण । निष्काषे निर्वपतीति । ननु मुख्यत्वादुदयनीयस्यैतेन सम्बन्धो न्याय्य । न हि मुख्यसम्बन्धे साकाङ्क्षमेतद्भवति, निष्काष उदयनीयं किं करोति । तत्रावश्यं निर्वपतीत्यनेन परिसमापयितव्यम् । उदयनीयं निर्वपतीति । न चोदयनीयस्य निर्वापेण सह सम्बन्धोऽस्तीत्युक्तम् । तदेतदवश्यं तथैवापद्यते । उदयनीयं कर्तुं प्रायणीयस्य निष्काषे हविष्यं निर्वपतीति । निष्काषश्च प्रायणीयशेषः । निष्काषशब्दश्च शेषवचन एव, यदुखायां लग्नकं तदनेनोच्यते । शेषस्य चार्थान्तरगमनं प्रतिपत्तिः । तच्च सामवायिकमङ्गं भवति । तच्च प्रधानेन दृष्टसम्बन्धमारादुपकारकत्वेऽनुमेयसम्बन्धं, सप्तमी च विभक्तिः प्राधान्ये न दृष्टा । तस्मात् प्रतिपत्तिः । नन्वेवमपि कर्मान्तरचोदनावभृथवत् प्राप्नोति । भवेद्यदि न चोदितं कर्म भवेत् । चोदितस्तूदयनीय आदित्यः प्रायणीयश्चरुर्भवत्यादित्य उदनीयो दिशां प्रज्ञाता इति । तं कर्तुं प्रायणीयनिष्काषे निर्वपेदिति तत्रैव प्रज्ञायते । तस्मान्न कर्मान्तरचोदनेयम् ॥ ६७ ॥ पूर्व० ॥

**अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥६८॥**

अर्थकर्म वा निष्काषे निर्वापो, न प्रतिपत्तिः । कुतः । शेषत्वात् । निर्वापं प्रति शेषभूतो निष्काषः । गुणभूत इत्यर्थः । कथं ज्ञायते । तदर्थेन विधानात् । तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात् । सप्तमी हि विभक्तिराधारे भवति । आधारश्च क्रियायास्तत्कारकाणां च विशिष्टानां धारणे वर्त्तते । तस्माद् गुणभूतः । ननु निष्काषो धारणेऽसमर्थः । स्थाल्येव तत्र धारणं करोति । पात्रीवदेतद् द्रष्टव्यम् । तद्यथा पाड्योदनं धारयति, पात्रीं भूमिः । न च पात्री नाधारः । तत्रैतत् स्यात्, न दृष्टमुपकारं करोतीति । पाड्यपि तथा । अपि च हविष्या उदयनीयनिवृत्त्या प्रयोजनवन्तस्ते । यदि निष्काषेण संस्क्रियन्ते निष्काषोऽपि प्रयोजनवान् भवति । अथ तु निष्काषः संस्क्रियते, न च तेन कश्चिदर्थः । न हि तेन किञ्चित् करिष्यते । ननु तेनापि प्रायणीयो निर्वर्त्तितः । तदर्थस्यापि संस्कारोऽर्थवान् भविष्यति । नैवमुपयुज्यमानसंस्कारो गरीयानुपयुक्तसंस्कारादपि च निष्काषसंस्कारोऽयं भवन् प्रायणीयस्याङ्गं भवेत् । तत्रोदयनीयसन्निधिर्बाध्येत । तस्मादुदनीयहविष्याणामयं निष्काषसंसर्गेणादृष्ट उपकारः क्रियते ।

श्रयणवत् । तद्यथा पयसा मैत्रावरुणे श्रीणाति धानाभिर्हारियोजनमिति श्रयणैः सोमस्य ॥६८॥ सिद्धान्त ॥ उदयनीयाधिकरणम् ॥१५॥ ( निष्कासशब्दस्य दन्त्यान्त्यत्वमपि ) ॥ इति श्रीशबरस्वामिन. कृतौ मीमांसाभाष्ये एकादशाध्यायस्य द्वितीयः पाद. ॥ ११ ॥ २ ॥

अथ एकादशाध्यायस्य तृतीय. पाद. ॥ ११ ॥ ३ ॥

## अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

अङ्गानां मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्त्तृत्वं चोक्तम् । अङ्गानि तु विधानत्वात् प्रधानेनापदिश्येरन् ॥ तस्मात् स्यादेकदेशत्वमिति । एवञ्च सर्वत्र प्राप्तम् । वचनादन्यकालत्वम् । यत्र वचनं तत्रान्यकालत्वमन्यदेशत्वमन्यकर्त्तृत्वमपि भवति । यथा पूर्वेद्युरमावास्यायां वेदिं करोति अवभृथेन चरन्ति । अग्नौ सौत्रामण्यां दक्षिणाभेदादन्यकर्त्तृत्वं विज्ञायते । बडवा दक्षिणेति ॥ १ ॥ पूर्वपक्षसिद्धान्तौ ॥ वद्याद्यङ्गानां प्रधानकालाद्यन्यकालत्वाद्यधिकरणम् ॥ १ ॥

## द्रव्यस्य कर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात् ॥ २ ॥

वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्य' शरदि वैश्य इति श्रूयते आधानम् । तत्कर्मार्थमित्यभ्युपगमः । किं कारणम् । अफलत्वात् । आहवनीये जुहोति गार्हपत्ये हवींषि श्रपयति दक्षिणाग्नावन्वाहार्यश्रपणादि करोतीति । तेषामग्नीनां कर्मसु प्रयोगः । तत्र विचार्यते किं तस्य कर्मणोऽर्थेन भेदेनाधानं कर्त्तव्यमथ सर्वेषामैष्टिकपाशुकसौमिकदार्विहोमिकानां कर्मणां तन्त्रमिति । किं प्राप्तम् । द्रव्यस्य प्रेरकर्मकालनिष्पत्ते , वसन्ते ग्रीष्मे शरदीति प्रयोगः । आधानं सर्वार्थं स्यात् । कुत ? । स्वकालत्वात् । स्वोऽस्य कालो वसन्तादिः । न कस्यचित् कर्मणः कालं श्रूयते । तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमाधानमिति । नास्मा इत्यगृह्यमाणविशेषत्वाच्च तन्त्रभावो न्याय्य । नन्वाधानानन्तरं यस्य कर्मणः प्रयोगस्तदर्थं तदाधानमिति इति गृह्यते विशेष । स खलु गृह्यते विशेष. । किन्तु आनन्तर्यमकारणम् । यद्यपि सर्वार्थं तदाप्यवश्यं कस्यचित् कर्मणः पूर्वप्रयोगो यौगपद्यस्यासम्भवात् । तदेकेनानन्तर्ये समो हेतु । सर्वार्थत्वे च एकार्थत्वं च समत्वादहेतुर्भवति । न वाऽऽधानेन कर्मा-

ऽप्युपक्रम्यन्ते । यथा प्रणयनेन । यद्युपक्रम्येरंस्ततो यदनन्तरं कर्म तस्योपक्रमो विज्ञायेत, नोत्तरेषाम् । तेन व्यवहितत्वात्तदपवर्गे वापवृज्येत, प्रणयनवत् । न ह्यनेन किञ्चित् कर्म प्रक्रम्यते । अप्राप्तकालत्वात् । अत उत्तरकाला हि कर्मश्रुतयः । किन्तर्हि अनेन क्रियते । द्रव्यमर्ज्यतेऽग्निविशेषः । यथा कश्चिल्लोहं सुवर्णं वार्जयदनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । स तेन यथाकालमिष्टं दात्रादि करोति । एवमयमग्निविशेषमर्जयति । अनेन स्वाधीनेन यथोपपन्नं कर्म करिष्यामीति । तत्र न गृह्यते विशेषोऽस्मै कर्मण इदमर्जितम्, अस्मै नेति । सर्वेभ्यश्च युज्यते । तस्मात् सर्वार्थम् । अपि च नित्यकाम्यनैमित्तिकानि कर्माणि यथोपपत्तिकालानि । तेषां वसन्ते आहितेनाग्निना कार्यत्वम् । न चान्यस्मिन् ऋतौ । शक्यो वसन्तेऽग्निराधातुम् । सोऽयमसंयोगो भवति भेदेनाधाने । अथ तु सर्वकर्मणामर्थे तन्त्रमाधानं, नैव निरोधो भवति । तस्मादपि तन्त्रम् ॥ २ ॥ पूर्वपक्षसिद्धान्तौ ॥ आधानादेस्तन्त्रताधिकरणम् ॥ २ ॥

## यूपश्चाकर्मकालत्वात् ॥ ३ ॥

ज्योतिष्टोमे पशवः, अग्नीषोमीयसवनीयानुबन्ध्याः । तेषां यूपः खादिरे बध्नाति पालाशे बध्नाति रौहितके बध्नातीति श्रुतेः । तत्र विचार्यते । किं त्रयाणां पशुबन्धानां भेदेन यूपः, अथ वा तन्त्रमिति । किं प्राप्तम् । भेदेनेति । किं कारणम् । अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः । उत्तरयोरपि चोदकेन प्राप्यते । कर्मशेषावसायिनश्चोदकप्रयोगवचनाद्भेदेन यूपं प्रापयति । तस्माद्भेदः । एवं प्राप्ते उच्यते । यूपस्य तन्त्रं भवेत् । अकर्मकालत्वात् । नास्य पशुकर्मकाल उत्पत्तिः । किं तर्हि । पृथक्काले दीक्षासु यूपं छिनत्ति क्रीते वा राजनीति । तत्रोत्पद्यमानस्य न गृह्यते विशेषोऽस्मै पशुबन्धाय यूपोऽयमस्मै नेति । सर्वेभ्यश्च प्रयुज्यते । तस्मात् सर्वार्थो भवति ॥ ३ ॥ पूर्व०सि० ॥

## एकयूपं च दर्शयति ॥ ४ ॥

एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति । सवनीये पशौ त्रिवृता यूपं परिवीयेति त्रिवृता परिव्याणं विदधाति यदि नानायूपा भवेयुस्ततः पूर्वस्य यूपस्यापवर्गाद्यूपान्तरे चोदकेनैव प्राप्तं त्रिवृता

परिव्याणं न विधातव्यं भवेत्। अथ तन्त्रं यूपे, ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीय एव परिवीतस्य कृतार्थत्वात् पुन सवनीय-परिव्याणं न प्राप्नोति। तद् विधातव्यं भवति विधीयते च। तस्मादपि तन्त्रम् ॥४॥ हेतुः ॥ अग्नीषोमीयादिपशौ यूपतन्त्रताधिकरणम् ॥३॥

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥**

यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणमञ्जनमुच्छ्रयणं परिव्याणं च, तेषु चिन्त्यते। किं तस्य तस्य पशोर्भेदेन कर्त्तव्याः, अथ वा तन्त्रमिति। किं प्राप्तम्। संस्कारास्त्वावर्त्तेरन् यूपस्य न तथा यूपाः, तन्त्रं यथा स्यु। किं कारणम्। अर्थकालत्वात्। अर्थः पशोर्नियोजनम्। तत्काला एते संस्काराः। तत्र गृह्यते विशेषः। यस्य पशोर्नियोजनकाले कृतास्तदर्था इति। इतरयोश्च पश्वोरप्राप्तकालत्वात्तादर्थ्येन नास्ति प्रयोग। तस्मादावर्त्तेरन्। यथाग्नेः संमार्जनम् ॥ ५ ॥ पूर्व० ॥

**तत्कालस्तु यूपकर्मत्वात्तस्य धर्मविधानात् सर्वाऽर्थानां च वचनादन्यकालत्वम् ॥ ६ ॥**

सत्यमावर्त्तेरन्, यद्येते नियोजनकाला भवेयु। तत्कालास्त्वेते दीक्षाकालाः। कथं ज्ञायते। यूपकर्मत्वात्। नैते नियोजनार्थाः। यूप एतैः क्रियते। यूपो नियोजनार्थः। स च दीक्षासु कर्त्तव्य। दीक्षासु यूपं छिनत्तीति वचनात्। संस्कारैश्च स क्रियते। तस्माद्दीक्षाकाला एवैते संस्काराः। ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया। उच्यते। न किञ्चिद्‌द्रव्यं यूपाख्यमस्ति यस्य छेदनमुच्येत। तदेतदेवं ज्ञायते। दीक्षासु छेदनाभिर्यूपं करोतीति। छेदग्रहणं च मुख्यत्वात् प्रदर्शनार्थम्। यत् कारणं नासौ छेदनेन केवलेन यूपो भवतीति। एवं चेद्दीक्षाकाला एवैते संस्काराः। सर्वार्थानां वक्ष्यतां वचनात् केषाञ्चिदन्यकालत्वं कृतम्। यथाग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति। तस्माद्यूपवत् संस्कारा अपि तन्त्रम्। यूपकर्मत्वादित्यस्याऽपरा व्याख्या। यूपकर्म तद्य एते संस्काराश्छेदनाद्या। यूपोऽयमेतं क्रियते तक्षणादिव्यापारेण। यथा वाजपेयेन सम्राट् सकृत् कृतश्चेत्तस्य पुनः क्रिया निरार्थिका। तस्मादनावृत्तिः। नन्वेवं सति निरूढपशावपि कामं स एव यूपः कर्त्तव्यो भवेत्। बाढं भवेद्यदि

निरिष्टिकेन यागप्रतिषेधो न स्यात् । अस्ति तु स प्रतिषेधः । तस्मान्न भवति । यथा, न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते । अथ वा यदर्थं स यूपः कृतस्तत्कर्मापवृक्तम् । तस्यापवर्गे यूपोऽप्यपवृक्तः ॥६॥ सि०

## सकृन्मानं च दर्शयति ॥ ७ ॥

त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोतीति । परिव्याणेन यूपधर्माननुक्रममाणः सकृन्मितं खातं यूपं दर्शयति । इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत । आनन्तर्यार्थमिति चेत्, न । प्रतीमित-सिद्धत्वात् । तस्मादपि तन्त्रं संस्काराः ॥ ७ ॥ हेतुः ॥ यूपसंस्कार-तन्त्रताधिकरणम् ॥ ४ ॥

अस्ति स्वरुः, यूपस्य स्वरुं ( शकलम् ) करोतीति श्रुतः । स किं सर्वपशूनां तन्त्रं भेदेन वेति । किं प्राप्तम् ।

## स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥ ८ ॥

स्वरुः खलु तन्त्रे तन्त्रे अपवृज्येत । अस्वकालत्वात् । नास्य स्व काल उत्पत्तौ । कर्मकालेऽयमुपादीयते । स्वरुणा स्वधितिना वा पशु समनक्तीति यस्य पशोः समञ्जनकाल उपात्तस्तदर्थोऽसाविति गृह्यते विशेषः । तस्माद्भेदः । ननु यूपस्य स्वरुं करोतीति स्वकालैवास्यो-त्पत्तिः । न खल्वेषाप्यन्तःप्रयोगैव । अपि च कार्यवचनोऽत्र स्वरु-शब्द । स्वरुं करोति, स्वरुकार्यं करोति । यत् कारणं स्वरुर्न ज्ञाय-ते, स्वरुकार्यं तु ज्ञायते पशोरञ्जनम् । ननु कृत्वन्ते स्वरोः प्रतिपत्ति-र्दृश्यते । संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुं वा यज्ञवैशसायेति । सत्यमस्ति दर्शनम् । तत्तु स्वरुमात्रस्य, न तु स्वरुविशेषस्य । तत्रा-ऽग्नीषोमीय उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमान्ते स्यात् । अथ वा चोदकप्राप्तस्यानुबन्ध्याकालस्येति संशयं, किं न्याय्य, यद-ऽनुबन्ध्याकालस्य दर्शनं भवेत्न तन्त्रतया प्रवृत्तस्येति । कुतः । यत उक्तो न्यायः स्वरुस्तन्त्रापवर्गः स्यात् अस्वकालत्वादिति । न च दर्शनं केवलं साधकं भवति । यथासम्भवं तु दर्शनं कल्पितम् । तदेवं यथा प्रस्तरस्यानुबन्ध्याकालस्य दर्शनं तद्वत् स्वरोरपि भविष्य-तीति ॥ ८ ॥ पूर्व० ॥

## साधारणे वानुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥

नैतदस्ति, प्रतितन्त्रं स्वरुभेद इति । किं तर्हि । साधारणः स्यात् ।

कुतः । यतोऽयमनुनिष्पद्यते यूपः साधारणः सर्वपशूनाम् । तस्य साधारणत्वादयमपि साधारण एव न्याय्य । यथैक एव यूप. सर्वपशूनां साधारणः । एवमयमप्यगृह्यमाणविशेषत्वात् साधारणो भविष्यति । नैतद् युक्तम् । अङ्गप्रकर्षवचनादगृह्यमाणविशेषत्वाद् यूपस्य साधारण्यमुपपद्यते, न तु स्वरोः प्रतिकर्षे किञ्चन वचनमस्ति यतो गृह्यमाणविशेषत्वादस्यापि साधारण्यमुपपद्येत । यदेतद् यूपस्य स्वरुं करोतीति तदन्तःप्रयोगसम्बद्धं स्वरुकार्यमङ्गं कर्त्तुं यमुपादत्ते तं यूपादिति । न चान्यस्य साधारण्यं युक्तम् । सम्भवन्ति ह्येकस्यापि बहवः शकला इति । चोदकप्रयोगवचनाश्च भिद्यमाना अन्त.प्रयोगसम्बद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति गृह्यमाणविशेषादित्यतो भेद एव युक्त इति । तत्रोच्यते । यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षम् । न त्वन्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति । नैतद्युक्तम् । असम्बद्धयोर्हि तदेवं भवति, न सम्बद्धयो । अयं च शकलो यूपमनुनिष्पद्यते । तदस्य यूपप्रतिकर्षादेव सिद्ध. प्रतिकर्षः । अतो यत्र यूपस्तत्रायमपि । यच्च यूपस्य स्वरुं करोतीत्यन्तःप्रयोगसम्बद्धा श्रुतिरिति । तदपि नैवम् । द्वौ हि कालौ द्रव्यस्य—एक उपादानकाल., एक उपात्तस्य प्रयोगकालः । यद्धि उपादातव्यं, न हि तदनुपादाय कश्चित् प्रयोगमारभते । न ह्यनुपादाय व्रीहीन् प्रस्तुत्य प्रयोगं व्रीहीन् मृगयति । एवं कुर्वाणस्य प्रयोग एव न संवर्त्तेत । अयं च यूपं छिद्यमानमनुनिष्पद्यते । अतो यत्र छेदनं तत्रायमपि । यद्यप्येकस्यापि यूपस्य बहवः स्वरवः सम्भवन्तीति । स्यादेवं, यदि प्राथम्यविशिष्टस्य नोपादनं भवेत् । विशिष्टं तु उपादानमुक्तम् । ततो य प्रथमः शकलः परापतेत् स स्वरु कार्य इति वचनाद् बहूनां च प्राथम्याभावाद् बहवो न सम्भवन्ति । तस्मादेक एव साधारणः स्वरुरिति ॥ ९ ॥ सि० ॥

## सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥

सोमान्ते चास्य प्रतिपत्तिर्दृश्यते । संस्थिते सोमेऽग्नौ प्रस्तरं प्रहरति स्वरुं वा यज्ञवेशसायेति । तत् साधारण्य एवोपपद्यते । तन्त्रापवर्गे ह्यग्नीषोमीयान्त एव स्यात् । तस्मादपि साधारणः । तत्कालो वा प्रस्तरवदिति यदुक्तं तत् परिहर्त्तव्यम् ॥ १० ॥ हेतु ॥

**न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ ११ ॥**

नास्य नूनं बन्ध्याकालस्य स्वरो. प्रहरणम् । किं कारणम् । इदमेव प्रहरणस्योत्पत्तिवाक्यम् । सोमान्ते प्रस्तरं प्रहरति स्वरुं वा यजवैशसायेति । अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते । स यदि साधारणस्ततः सर्वपशूनां कृतार्थे कर्मणि अन्ते अस्याग्नौ प्रहरणस्य दर्शनमुपपद्यते । अथ तु पृथक् स्यात्ततोऽग्नीषोमीयस्यान्त एव दृश्येत । अथ वचनमिदं कस्मान्न भवति । अग्नीषोमीयान्ते प्राप्तस्य सोमान्ते वचनात् । नैतदेवम् । वचनेन द्वावुत्सर्गस्य विशेषावुच्येयाताम् । अग्नौ च प्रहरणं, सोमान्ते च । तथा च वाक्यभेदः स्यात् । तस्मान्नैतद्वचनम् । यत्तु प्रस्तरवदिति । प्रदेशात् प्रस्तरं तथा । प्रस्तरस्य दर्शपूर्णमासयोः प्रहरणमुक्तमाशीर्भिः प्रस्तरं प्रहरन्तीति । चोदकेन प्रतिपशु प्राप्यते । तत्रानुबन्ध्याकालस्य दर्शनं युज्यते, न स्वरुप्रहरणस्यैतदस्ति । तस्माद्विषमोऽयमुपन्यास ॥११॥ पूर्व० आ० नि० ॥ स्वरुतन्त्रताधिकरणम् ॥ ५ ॥

ज्योतिष्टोमे दीक्षितव्रतमाम्नातं, कृष्णविषाणया कण्डूयनीति । तत्रैव च पुनः श्रुतं, नीतासु चात्वाले कृष्णविषाणां प्रास्यतीति । तदुभयं द्वादशाहे चोदकेन प्राप्तम् । तत्र विचार्यते । किमन्ते प्रथमे वाऽहनि कृष्णविषाणायाः प्रासनं कर्त्तव्यम्, अथ वान्त्य एवेति । किं प्राप्तम् ।

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्ते प्रथमे वाहनि विकल्पः स्यात् ॥ १२ ॥**

विकल्प कर्त्तव्यः । अन्ते प्रथमे वाहनि प्रासनम् । कुतः । धर्मविप्रतिषेधात् । यदि प्रथमेऽहनि करिष्यते । उत्तरेष्वहःसु प्राग्दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां विषाणाकण्डूयनं धर्मो बाध्यते । अथान्ते ततः पूर्वेषामह्नां दक्षिणानयनादूर्ध्वं ये पदार्थास्तेषां हस्तकण्डूयनं बाध्येत । स एष धर्मविप्रतिषेधः । तस्माद्विकल्पः ॥१२॥ पूर्व० ॥

**पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १३ ॥**

नैतदेवं,स्याद्विकल्प इति । किं तर्हि । विषाणानियमः स्यात् । विषाणाकण्डूयनं सर्वस्मिन्नहर्गणे नियम्येत । अन्तेऽहनि प्रासनं स्यात् ।

कस्मात्। प्रातःसवनमध्यत्वात्। बहूनि प्रातःसवनानि अस्य अहर्गणस्य मध्ये। तेषां विषाणाकण्डूयनं धर्मोऽनुगृहीतो भविष्यति। नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्मं। स बाधिष्यते। नैतद्दोषः। नैवं श्रूयते। पाणिना कण्डूयितव्यमिति। अर्थात् प्रत्यासत्त्या क्रियते। यश्चार्थादर्थो न स चोदनार्थः। एवमप्युत्तरयोः प्रत्यासत्त्या हस्त एव प्राप्नोतीति ॥ १३ ॥ पूर्व० ॥

अत्र ब्रूमः।

## शिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

प्रातःसवनशेषे कण्डूययनस्य शिष्टत्वादुत्तरयोरपि विषाणाकण्डूयनमेव नियम्येत। अभिप्रवृत्तत्वात्। अभिप्रवृत्तस्य नियमस्योत्सर्गे आचारविरोधः स्यात्। अथ प्रकृतौ कथमुत्सर्गः। विषाणाया अभावात्। अन्या विषाणा। कस्मात्। कण्डूयनार्थेन नोत्पाद्यते। पूर्वविषाणायाः प्रासनं धारयत् तद्विमोकार्थं दृष्टं तत् यद्यन्या विषाणा आनीयेत। तस्माद् धारणमदृष्टार्थम्। तस्या अदृष्टोऽर्थः कल्पयितव्यः स्यात्। इह तूत्तरप्रातःसवने धारयितव्या विषाणा। यस्यां सत्यां नास्ति नियमोत्सर्गे कारणम्। तस्मादाद्यस्याह्नो दक्षिणानयनकालादूर्ध्वं विषाणाकण्डूयनमेव स्यात् ॥ १४ ॥ ॥ सिद्धान्तः ॥

कृष्णविषाणाप्रासनाधिकरणम् ॥ ६ ॥

## वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥

राजसूये नानाबीजिकेष्टिः। अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुं, सवित्रे प्रसवित्रे सतीनानामष्टाकपालमिति। नानाबीजेष्वेकमुलूखलं विभवादिति युक्तम्। अतस्तस्यां क्रमेणाऽवहन्तिः क्रियते। प्रकृतौ च श्रूयते, अपः प्रणेष्यन् वाचं यच्छति तां सह हविष्कृता विसृजन्तीति। हविष्कृद्ग्रहणं च काललक्षणार्थमित्युक्तम् ॥ १५ ॥ पूर्व० ॥

## यथाह्वानमपीति चेत् ॥ १६ ॥

न कालविधिश्चोदितत्वादिति। इहानेको हविष्कृदाह्वानकालः। तत्र पूर्वेव विचारणा। किमन्ते प्रथमे वा हविष्कृत्काले वाग्विसर्गः, अथ वान्त्य एवेति। तथैव च पूर्वं पक्षः। प्राग्घविष्कृत्कालाद् ये पदार्थास्तेषां वाग्यमो धर्मः। स बाध्येत, यदि पूर्वस्मिन् वाग्विसर्गः

क्रियते । अथोत्तरस्मिंस्ततो हविष्कृत्कालादूर्ध्वं ये पदार्थास्तेषां व्याभाषणकरणं धर्मस्तद् बाध्येत । तथैव चोत्तरः पक्षो व्याभाषणस्याश्रुतत्वाच्छिष्टे च वाग्यमस्याभिप्रवृत्तत्वादिति । अधिकरणप्रदेशोऽयम् ॥ १६ ॥ सिद्धान्तः ॥ वाग्विसर्गाधिकरणम् ॥ ७ ॥

## पशौ च पुरोडाशे समानतन्त्रं भवेत् ॥ १७ ॥

अग्नीषोमीये पशौ पशुः पुरोडाशश्च । तयोः पाशुकं पौरोडाशिकं च तन्त्रम् । अत्रापि सैव चिन्ता । किं पाशुककर्मार्थं हविष्कृदाह्वानकाले वाग्विसर्गः कर्त्तव्य ? उत पौरोडाशिककर्मार्थं इति । तथैव पूर्वोत्तरपक्षौ योज्यौ । अयमप्यधिकरणप्रदेश एव । ननु नैव पशौ हविष्कृदस्ति औषध्यर्थत्वात् । सर्वार्थत्वेव कृत्वा चिन्त्यते । कृत्वा चिन्तेयम् ॥१७॥ सि०॥ पशुपुरोडाशयोस्तन्त्रताधिकरणम् ॥८॥

## अङ्गप्रधानार्थो योगः सर्वापवर्गे च विमोकः स्यात् ॥१८॥

अग्नौ श्रूयते । अग्निं युनज्मि शवसा घृतेनेति जुहोति । अग्निमेव तद्युनक्तीति । पुनरिमं स्तनं मधुमन्तन्धयामीत्यग्निविमोकं जुहोतीति । तत्र विचार्यते । किमङ्गप्रधानार्थो योगः, सर्वापवर्गे विमोकः कर्त्तव्यः ? उत प्रधानार्थो योगः, प्रधानापवर्गे विमोक इति । किं प्राप्तम् । अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साऽङ्गस्य । तस्मात् सर्वापवर्गे विमोकः स्यात् ।

किं कारणम् । अविशेषेण श्रूयते । अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवतद्युनक्तीति । न च श्रूयते । तस्मै अस्मै वा कर्मणे इति । अविशेषात् सर्वार्थं इति विज्ञायते । अपि च तस्मिन् युक्तेऽग्नावङ्गानि प्रधानानि च क्रियन्ते । तस्मादपि सर्वार्थं चेत् सर्वाऽपवर्गे विमोकः कर्त्तव्यः । तदा हि योगकार्यमवसितं भवति । योगाऽपवर्गार्थश्च विमोकः ॥ १८ ॥ पूर्व० ॥

## प्रधानापवर्गे वा तदर्थत्वात् ॥ १९ ॥

न वा सर्वापवर्गे विमोकः स्यात् । किं तर्हि प्रधानापवर्ग एव । प्रधानसंयोगेन हि श्रूयते । पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभत इति यज्ञप्राप्त्यर्थं युनक्तीति विज्ञायते । तस्मात् प्रधानार्थो योगः प्रधानार्थश्चेत्तदपर्गे योगकार्यमवसितं भवति । तस्मात्तत्र विमोकः । अविशेषविधानं यज्ञसंयोगेन विशेषेण युज्यमानं

विशेषार्थे भवति ॥ १९ ॥ सि० ॥

**अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधो-ऽपवृक्तार्थत्वात् ॥ २० ॥**

एवं च कृत्वा अवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधो युक्तो भविष्यति, न होतारं वृणीते, नार्षेयमिति। यथान्यायोपदिष्टः। सोमार्थे हि होतृवरण कृतम्। यद्धोतारं वृणीते जगन्ति तद्वृणीते इति। एतस्मिन्न्याये असति तदप्यङ्गप्रधानार्थमिति अवभृथेऽपि प्रसज्ज्येत। तत्र कृतार्थत्वात् प्राकृते होतृवरणं नैव प्राप्नोति। तस्य प्रतिषेधोऽनर्थकः। सति त्वेतस्मिन्न्याये तदपि प्रधानार्थमेव। तत्रापि हि यज्ञसंयोगो यद्वृत्वा वषट् कुर्युः भ्रातृव्यं यज्ञस्याशीर्गच्छेत् यद्वृता वषट् कुर्वन्ति एकधा तद् यजमाने यज्ञस्याशीः प्रतिष्ठतीति। प्रधानार्थं चेत्तदपवर्गे तत्कार्य्यमवसितमिति अवभृथे प्राकृतं होतृवरणं प्राप्नोति। तस्य प्रतिषेधो वक्तव्यः। उच्यते च। तस्मात् प्रधानार्थो योगः प्रधानापवर्गे विमोक इति ॥ २० ॥ दृष्टान्तः ॥

**अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥ २१ ॥**

अहर्गणे च द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति। स वा अहरहर्युनक्ति अहरहर्विमुञ्चतीति। तदुपपद्यते यदि प्रधानार्थो योगः। इतरथा आद्येऽहनि योगः स्याद्, अन्ते विमोकः। तदा हि सर्वापवर्ग इति ॥ २१ ॥ दृष्टान्तः ॥ अग्नियोगाधिकरणम् ॥ ९ ॥

द्वादशाहे उपसत्काले सुब्रह्मण्याह्वानं प्रति चिन्त्यते। किं भेदेन कर्त्तव्यमन्ते वा तन्त्रेणेति। कर्मभेदाद्भेदेनेति प्राप्ते उच्यते—

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २२ ॥**

सुब्रह्मण्या तु तन्त्रं स्यात्। कुतः। अन्यकालत्वात्। कर्मयोगात्। पृथक्कालेयम्। तत्र न गृह्यते स विशेषः। अगृह्यमाणे विशेषे तन्त्रभावो युक्तो दीक्षावत्। तद् यथा दीक्षा पृथक्कालत्वात्तन्त्रं भवति, तथेयमपि ॥ २२ ॥ पूर्व० ॥

**तत्कालत्वादावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २३ ॥**

तस्मिन्नेव द्वादशाहे तत्काला या सुब्रह्मण्या सा त्वावर्त्तेत, भेदेन स्यात्। कुतः। प्रयोग प्रति तस्या विशेषसंयोगो भवति, अद्य सुत्यामागच्छेति। अद्येत्युक्ते श्वः परश्वो वेति नोक्तो भवति। तत्रापि

प्रकृत्यनुद्देशाद् वक्तव्यम् । तस्मादावर्त्तेत ॥ २३ ॥ सि० ॥

**अप्रयोगाङ्गमिति चेत् ॥ २४ ॥**

इति चेत् पश्यसि अद्येति विशेषसंयोगादावृत्तिरिति । नैतद्युक्तम् । कुतः । यतोऽप्रयोगाङ्गमेतद् यदद्येति वचनम् । इदं हि प्रकृतौ एकत्वादह्नोऽविवक्षितमर्थादेव सिद्धत्वादनङ्गीकृतत्वाच्च चोदकेन न प्राप्येत । यावदुक्तं स्यात् सुत्यामागच्छेति तावदेवाद्येति । सुत्यात्वं सर्वेषामह्नामवशिष्टम् । तस्मात्तन्त्रं स्यात् ॥ २४ ॥ आ० ॥

**प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २५ ॥**

स्याद्भेदः । प्रयोगनिर्देशात् । यद्यप्यद्यशब्दस्यार्थो न विवक्षितस्तथापि यस्मिन्नहनि प्रयुज्यते तत्कालस्य प्रधानस्योपकरोति । नान्यकालस्य कर्तृभेदवत् । तद् यथाऽष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति । मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नस्योत्तरवैहारिकाण्यङ्गानि देशभेदान्मारुत्या नोपकुर्वन्ति । यथा तानि देशभेदान्नोपकुर्वन्ति । एवमिदमपि कालभेदादन्यकालस्य नोपकरिष्यन्ति । तस्मादावर्त्तेत ॥ २५ ॥ आ०नि० ॥

**तद्भूतस्थानादग्निवदितिचेत् तदपवर्गस्तदर्थत्वात् ॥ २६**

अथोच्येत । एकस्मिन्नहन्याहूता देवता आह्वानसंस्कृता भवति । एक एवासौ । तस्याः पुनराह्वानमनर्थकमग्निवद् । यथाग्नेः सकृदाधाने संस्कृतस्य न पुनः कर्मणि संस्कार एकस्य क्रियत इति । नचायुक्तम् । तत्कारणं प्रतिकर्मापवर्गः । यस्मिन् कर्मण्याह्वान क्रियते तदर्थं तद्भवति तस्य कर्मान्ते अपवर्गो यथा अन्येषां सुत्याकालानां संस्काराणामग्निसंमार्गादीनाम् । तस्मादावृत्तिः ॥ २६ ॥ आ० नि० ॥

**अग्निवदिति चेत् ॥ २७ ॥**

इति यदुक्तं यथाग्नेराधानं सर्वकर्मणि तन्त्रं भवति एवमिदमपीत्येतस्य कः परिहारः । आभाषान्तं सूत्रम् ॥ २७ ॥ आ० ॥

**न प्रयोगसाधारण्यात् ॥ २८ ॥**

नैतदाधानेन तुल्यमाधानस्य स्वकालत्वात् । स्वकाले हि तत् क्रियते । तत्र न गृह्यते विशेषः । इदं पुनः कर्मकालमाह्वानं तद् यस्य कर्मणः काले क्रियते तदर्थमिति गृह्यमाणविशेषम् । तस्मान्नैतदाधानेन तुल्यम् ॥ २८ ॥ आ० नि० ॥

लिङ्गदर्शनाच्च ॥ २९ ॥

लिङ्गं चैतमर्थं दर्शयति । प्रत्यहं सुब्रह्मण्याह्वानमिति । एवं ह्याह संस्थिते संस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यतीति । प्रेषणमाह्वानक्रियार्थम् । तस्मादपि प्रत्यहमाह्वानम् ॥ २९ ॥ हेतुः ॥

तद्धि तथेति चेत् ॥ ३०

तदित्यनेन यूपाहुतिं प्रतिनिर्दिशति । तद्धि यूपाहुतिकर्म यथा यूपैकादशिन्यां तन्त्रं भवति । तथा इदमपि भविष्यति । किं तस्य चास्य च सादृश्यम् । तत् क्रियमाणमवश्यं कस्यचिद् यूपस्यान्तिके भवति । सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात् । यथा तदा कस्यचिद् यूपस्यान्तिके क्रियमाणं सर्वं यूपार्थं भवति । एवमिदमप्येकस्य कस्यचित् सौत्यस्य कर्मणोऽन्तिके क्रियमाणं सर्वार्थं भवतीति ॥ ३० ॥ दृष्टान्त आशङ्का ॥

नाऽशिष्टत्वादितरन्यायत्वात् ॥ ३१ ॥

नैतत् तेन तुल्यम् । कुतः । अशिष्टत्वात् । नात्र यूपान्तिके होमः शिष्यते । अविवक्षितमन्तिकमाहवनीयप्रतिषेधाऽर्थमेतदित्युक्तम् । इतरप्रतिषेधो वा शास्त्रत्वाच्च देशानामिति । इतरन्यायत्वाच्च । इह त्वितरो न्यायः । कालभेदाद् गृह्यमाणविशेषस्यावृत्त्या भवितव्यमिति । तस्माद्विषम उपन्यासः ॥ ३१ ॥ आ० नि० ॥

विध्येकत्वादिति चेत् ॥ ३२ ॥

अथ कश्चित् ब्रूयाद् इह द्वादशाहिको विधिस्तन्त्रदृष्टो वसतीवरीपर्यन्तोऽवभृथादिश्चायमपि च द्वादशाहिको विधिः । तत्सादृश्यादनेनापि तथा भवितव्यमिति ॥ ३२ ॥ आ० ॥

न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥ ३३ ॥

तन्न । कुतः ? । कृत्स्नस्य पुनः प्रयोगात् । कृत्स्नोऽन्यो विधिः पुनः प्रयुज्यते अभिषवपवमानग्रहचमसस्तोत्रशस्त्रादिः । प्रधानवत् । तद् यथा प्रधानानि प्रत्यहं क्रियन्ते । तथा तत्र वसतीवरीवद्वा सकृत्त्वं स्यात् स्तोत्रादिवद्वा बहुकृत्वः कृतं स्यात् । तत्र बहुकृत्वः कृतमिति न्याय्यम् । तथा सर्वेषामुपकरोति । सकृत् कृतं तु यत्र क्रियते तत्रैव कालभेदान्नुपकुर्यात् । तस्मादावृत्तिः ॥ ३३ ॥ आ० मि० ॥

सुब्रह्मण्याह्वानाधिकरणम् ॥ १० ॥

## लौकिके तु यथाकामी संस्कारानर्थलोपात् ॥ ३४ ॥

इह लौकिकार्था उदाहरणम्। यथा देशः, समे दर्शपूर्णमासाभ्यां यजेत् । कर्त्तारः– दर्शपूर्णमासयोः यज्ञक्रतवोऽन्वारब्धा ऋत्विजः । स्रुगादीनि च पात्राणि । तेषु विचारः । किं प्रतिप्रयोगमन्यान्युपादेयानि ? उत तानि वा अन्यानि वा उपादाय प्रयोग इति । किं प्राप्तम् । अन्यान्युपादेयानीति । किं कारणम् । निरिष्टिकेन पुनः क्रियां शिष्टा नाचरन्तीत्येवं प्राप्ते ब्रूमः । लौकिकेषु यथाकामी तानि वाऽन्यानि वा, अनियमः । कुतः । संस्कारानर्थलोपात् । न कश्चित् पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतो योऽन्योपादाने लुप्येत । नाऽप्यर्थलोपः । अन्यैरपि हि शक्यते प्रयोगः कर्त्तुम् । तस्मादनियमः । अथ यदुक्तं निरिष्टिकेन शिष्टा यागं नाचरन्तीति । एतैराचरन्तीति । तस्मान्नैष दोषः । ननु ऋत्विगाचार्यौ नातिचरितव्याविति स्मरन्तीति । पुरुषधर्मोऽसौ, न कर्मधर्मः कर्मसंयोगाभावात् प्रकरणाभावाच्च । देशेषु कर्तृषु च पर्यवसितं पात्रेषूत्तरा कथा करिष्यते ॥ ३४ ॥ पूर्वपक्षसिद्धान्तौ ॥

## यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३५ ॥

यज्ञपात्राणि तु आन्ताद्धारयितव्यानि । कुतः । प्रतिपत्तिविधानात् । प्रतिपत्तिस्तेषां परिभाषिताये कर्मणि विधीयते । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति तदर्थः । ऋजीषवत् । तद्यथा अहर्गणे सर्वेषामह्नाम् ऋजीषोऽवभृथे प्रतिपादनार्थं धार्यते । ऋजीषमप्सु प्रहरन्तीति श्रूयते ॥ ३५ ॥ पूर्व० ॥

## यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३६ ॥

न वेयं पात्राणां प्रतिपत्तिः । किं तर्हि । यजमानसंस्कारोऽयम् । तदर्थस्तेषां पात्राणामर्थः श्रूयते । कथं ज्ञायते । तेषां तृतीयया निर्देशात् । यजमानस्य द्वितीयया । तत्र यथाकामी स्यात् । तेषामन्येषां वा प्रासनम् । तदर्थत्वात् । अर्थकर्मत्वात् पात्राणां, यैः कैश्चिदप्यर्थः सिद्ध्यतीति ॥ ३६ ॥ पूर्व० ॥

## मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३७ ॥

मुख्यानां वा आद्यानां पात्राणां धारणं, मानियमः । कुत । मरणस्यानियतत्वात् । अनियतकाल मरणम् । कदाचित्तानि पात्राण्युत्सृष्टानि भवेयुः, मरणं चापद्येत । तत्र यजमानशरीरसंस्कारलोपः स्यात् । एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः परतस्तदीयै पात्रैरथ कर्म भविष्यति । पूर्वेषु विद्यमानेषु उपादानमन्येषामनर्थकम् । तस्मान्मुख्यधारणमेव न्याय्यम् ॥ ३७ ॥ सि० ॥

## यो वा यजनीये म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३८ ॥

अथ वा न मुख्यानां धारणम् । यो यजनीयेऽहनि म्रियेत यजमानः सोऽनेन संस्कारेणाधिकृत स्यात् । तस्य तानि पात्राणि सन्निहितानि । उपवेषवत् । यथा सान्नाय्ययाजिन एवोपवेषोपधानेनाऽधिकारस्तस्योपवेषः सन्निहित इति ॥ ३८ ॥ पूर्व० ॥

## न शास्त्रलक्षणत्वात् ॥ ३९ ॥

तदेतन्नोपपद्यते । किं कारणम् । शास्त्रलक्षणं तद् भवति । यथा सान्नाय्ययाजिन एवोपवेषो, नान्यस्येति । तत्र हि सान्नाय्यार्था शाखा तामनुनिष्पद्यते उपवेषः । तस्या असान्नाय्ययाजिनोऽसम्भवः । अथेदमनियतसंस्कारविधानं यजनीये वाऽहनि अन्यत्र वाऽनारभ्याविधानादाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति । न चान्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसम्भवः । शक्यते हि धारणेन सम्पादयितुम् । तस्मादुपवेषोऽदृष्टान्त· ॥ ३९ ॥ सि० ॥

## उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ४० ॥

अथ वा न धारणम् । किं तर्हि । संस्कारकाले अन्यानि नवानि पात्राणि उत्पाद्यानि । प्रयोजकत्वात् संस्कारस्य । आशिरवत् । यथा ऋतपेये धृतव्रतौ भवत इति वचनादभावो व्रतदुहोऽन्यां यजमानस्य व्रतदुघाम्नाशिरे दुहन्तीति श्रुतेः, आशिरार्थमन्या गौरुपादीयत एवम् ॥ ४० ॥ सि० ॥

## शब्दासामञ्जस्यमिति चेत् ॥ ४१ ॥

अथ पश्यस्येवं सति यज्ञपात्रशब्दोऽसमञ्जसो भवति । यज्ञस

म्बन्धेन हि पात्राणि भवन्ति । न च नवानां यज्ञसम्बन्धोऽस्तीति ॥ ४१ ॥ आ० ॥

तथाशिरेऽपि ॥ ४२ ॥

यासावन्या गौरुपादीयते सा यजमानस्य व्रतधुक् न भवति । तत्र शब्दस्यासामञ्जस्यमेव । यदि तत्रान्या गौरिहाप्यन्यानि पात्राणि भविष्यन्ति । वक्तव्यो वा विशेष इति ॥ ४२ ॥ आ०नि० ॥

अयमुच्यते ।

शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृता-
थेहाऽपूर्वार्थवद् भूतोपदेशः ॥ ४३ ॥

शास्त्राद् विप्रयोगस्तत्र शास्त्रेण । तत्र शब्दस्यासामञ्जस्यम् । व्रतदुहो विप्रयोगः कृतः । घृतव्रतो भवत इति । एकद्रव्यचिकीर्षायां यजमानस्य व्रतयुक्तामाशिरे दुहन्तीति क्रतपेये चोदकेन प्राप्यते । तस्यासम्भवान्निवर्त्तेत । आशिरश्च गां प्रयुङ्क्ते । तस्मात्तत्र शब्दासामञ्जस्यमनुरुध्यते । अथेहापूर्वोऽर्थो नान्यतः प्राप्यते । यज्ञपात्रैश्च दाहोऽविशेषेण प्रत्यक्षश्रुतः । सम्भवति च तेषां सम्पादनं धारणेन । तस्मादिहाकस्मिकं शब्दस्यासामञ्जस्याश्रयणं भवतीति धारणमेव पात्राणाम् । एवं स्थितमपर्यवसितम् ॥ ४३ ॥ इष्टान्तः ॥

अन्तरा चिन्तान्तरं क्रियते । यज्ञपात्राणि धारयितव्यानीत्युक्तम् । तत्र चिन्त्यते । किं पौर्णमास्या आरभ्य धारयितव्यान्युताऽग्न्याधेयादीनीति । किं प्राप्तम् ।

प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन् ॥ ४४ ॥

पौर्णमास्या आरभ्य धारयितव्यानीति । कुतः । प्रकृत्यर्थत्वात् । इमानि पात्राणि अनारभ्योक्तत्वाद्दर्शपूर्णमासार्थानि । तत्रैषामुत्पत्तिः । उत्पत्तिप्रभृति च धारणम् । तस्मात् पौर्णमास्या आरभ्य धारयितव्यानि ॥ ४४ ॥ पूर्व० ॥

अग्न्याधेये वा विप्रतिषेधात्तानि धारयेन्मरणस्या-
ऽनिमित्तत्वात् ॥ ४५ ॥

न वा पौर्णमास्या आरभ्य धारणम् । किं तर्हि । अग्न्याधेयात् । कुतः । अविप्रतिषेधात् । यद्यपि पौर्णमास्यां विहितानि चोदकेन पवमानहविःषु प्राप्तानि । ततश्च प्रभृति धार्यमाणेषु विप्रतिषेधो

भवति । मरणस्यानिमित्तत्वात् । पौर्णमास्या यदि मरणमापद्येत, यजमानशरीरसंस्कारलोपो भवति । आधानात्प्रारभ्य धार्यमाणेष्व-ऽविप्रतिषेधो भवति । तस्मादाधानादारभ्य धारणम् ॥ ४५ ॥ सि० ॥ पात्रधारणाधिकरणम् ॥ १२ ॥

## प्रतिपत्तिर्वा यथान्येषाम् ॥ ४६ ॥

स्थितादुत्तरम् । यदुक्तं पात्रैरर्थः क्रियते यजमानस्य संस्कार इति । तत्र किं तर्हि । प्रतिपत्तिरेषां पात्राणामग्नीनां च यजमान-शरीरे । कथम् । यथान्येषां द्रव्याणां सोमलिप्तानां प्रतिपत्तिः । तद्व-त्तुल्यो हेतु. । तान्यपि नानाकर्मरूपयुक्तानि प्रतिपादनार्हाणि । इमान्यपि पात्राण्यग्नयश्च तथैव । तस्मात्तेषामपि प्रतिपत्तिः । ननु तृतीयासंयोग उभयत्र विद्यते । न खलु । यजमानशरीरेऽग्नीनां पात्राणां च निक्षेपणं प्रतिपत्ति , न दहनम् । आहिताग्नेर्दहने च तृतीया । तत्र तेषां गुण-भाव एव । तर्हि तत् साध्यते । निक्षेपणे तु द्वितीयैव । यथा दक्षिणे पाणौ जुहूमासादयति ॥ ४६ ॥ युक्तिः ॥ देशकर्तृपात्रतन्त्रताधिकरण-म् ॥ ११ ॥

## उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति ॥ ४७ ॥

तत्र सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः । वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते,उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति । तत्र विचार्यते । किमार्भवकालेप्रचरितव्यमुत शस्त्रवतां सोमानामुपरिष्टा-दुत विकारस्थाने अथवा सर्वसोमानामुपरिष्टादिति । किं प्राप्तमार्भव-काल इति।कुतः।प्रकृतावार्भवकालेप्रचारो वृत्त. । प्रकृतिवदिहापि तत्रैव कर्त्तव्यः । एवञ्च अङ्गविपर्यासो न कृतो भवति । यदि सर्वसोमाना-मुपरिष्टात् प्रचार' क्रियेत तत आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति प्रहृत्य परिधीन् हारियोजनमिति । एतदुभयमपि विपर्यस्येत, ना-ऽग्निमारुतादूर्ध्वमनुयाजैश्चर्येत । हुत्वा च हारियोजनं परिधयः प्रह्रिये-रन् । सोऽयमङ्गानां विपर्य्यासो विना वचनेन क्रियेत । अथ त्वार्भव-काले प्रचारस्ततो, नैष दोषो भवति । एवं प्राप्ते उच्यते । उपरिष्टात् । सोमानां प्राजापत्यैश्चरन्तीत्युक्तेसर्वसोमानामुपरिष्टात् प्रचर्येत । कुतः । अविशेषात् । सोमानामित्युक्ते सर्वसोमानामविशेषवचनात् प्रतीयते । यत्त्वार्भवकाल प्रकृतितः प्राप्यत इति । वाच्यो हि प्रकृति-

कालश्चोदकेनैव प्राप्तस्तदर्थो विधि.। कृतकरोऽनर्थक. स्यात्। तस्मात् सर्वसोमानामुपरिष्टात् प्रचारः ॥ ४७ ॥ पूर्व० सि०

अङ्गविपर्यासो विनावचनादिति चेत् ॥ ४८ ॥

अथ यदुक्तमेवं सत्यङ्गविपर्यासो विना वचनेन कुतो भविष्यतीति। तस्य कः परिहार इत्याभाषान्तं सूत्रम् ॥ ४८ ॥ आ० ॥

उत्कर्षः संयोगात् कालमात्रमितरत्र ॥ ४९ ॥

नैष दोषो युक्तमङ्गविपर्यास इति। कथं कृत्वा। पशुप्रचारे तावदुत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य चोत्कर्षो स्यात्। संयोगात्। तानि हि पशुप्रचारेण क्रमतः सयुक्तानि।न चाग्निमारुतस्यानुयाजैः सह हारियोजनस्य वा परिधिप्रहरणेन क्रमो विवक्षित.।न हि परिधिप्रहरणं हारियोजनस्याङ्ग, हारियोजने वा परिधिप्रहरणस्य, उभौ वा कस्यचिदेकस्य प्रधानस्य। एवमाग्निमारुतमनुयाजयोश्चायदि परस्परस्याङ्गभूतानि भवेयु.,एकस्य वा प्रधानस्य,तत एतेन क्रमेणोपकुर्वन्तीतिर्विवक्षितः क्रम. स्यात्। अथ पुनः पशोरङ्गमनुयाजा आग्निमारुतं सोमस्य तथा परिधिप्रहरणं पशोरङ्गं, हारियोजन. सोमज्या। तेषां क्रमो निष्प्रयोजनः। तस्मादविवक्षितः। कालमात्रमितरत्र। आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीतिपरिवृत्य परिधीन् जुहोति हारियोजनमिति। एतस्मिन् काल इति लक्षणमाग्निमारुतं परिधिप्रहणं च। अनपेतश्च लक्षणापाये कालः। यथाऽग्निहोत्रवेलायामागन्तव्यमिति। यत्राग्निहोत्रं नास्ति, तत्राप्यनपेता वेला। न चैवं लक्षणा भवति। न हि काल एवेह श्रुत्यर्थः। क्रा तावत् पूर्वकाल एव समर्थते। उर्ध्वशब्दोऽपि देशं कालं वा ब्रूयात्। देशस्यासम्भवात् कालार्थो विज्ञायते ॥ ४९ ॥ आ०नि० ॥

प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ५० ॥

इति चेत् पश्यसि सर्वसोमानामुपरिष्टात् प्रचार इति। नैतद्युक्तम्। शस्त्रवतां सोमानामुपरिष्टात् प्रचारो युक्तः। कुतः। प्रकृतिकालासत्तेः। एवं प्राकृतस्यासत्याः कृतः प्रचारो भविष्यति। अङ्गविपर्यासश्चाकस्मान्न कृतो भविष्यति। अथ कतमोऽसौ कालः?। तार्तीयसवनिकस्य वैश्वदेवस्य यदूर्ध्वम् ॥ ५० ॥ आ० ॥

न श्रुतिप्रतिषेधात् ॥ ५१ ॥

एवं सत्युपरिष्टात् सोमानामित्यविशेषश्रुतिर्विप्रतिषिद्ध्यते। केषाञ्चित् सोमानामधस्तादयं प्रचारः स्यात्। न चासत्त्या प्राकृतः कालो लभ्यते॥ ५१॥ आ० नि०॥

**विकारस्थाने इति चेत्॥ ५२॥**

इति चेत् पश्यसि शस्त्रवतामुपरि प्रचारोऽयुक्त इति विकारस्थाने भवतु। कतमत् पुनर्विकारस्थानम्। उक्थ्याद्याः संस्था अग्निष्टोमसंस्थाया विकाराः। तासां यत् स्थानमग्निष्टोमप्रचारादूर्ध्वं तत्र प्रचारो भवतु। ऊर्ध्वं सर्वेषामागन्तूनां प्रचाराणां स्थानम्। अयमपि चागन्तुः। तस्मादयमपि तत्रैव भवति॥ ५२॥ आ०॥

**न चोदनापृथक्त्वात्॥ ५३॥**

नैतदेवम्। कस्मात् चोदनापृथक्त्वात्। कर्मपृथक्त्वादित्यर्थः। पृथगेते कर्मणी यच्च सौमिकं, यच्च पाशुकम्। सौमिकानां प्रचाराणामेतत् स्थानं, न पाशुकानाम्। तस्माद् एतस्य वचनात् सर्वसोमानामुपरिष्टात् स्थानम्॥ ५३॥ आ० नि०॥ सोमप्रचाराधिकरणम्॥ १३॥

**उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षे नान्वयः॥ ५४॥**

अनुयाजा उत्कृष्यमाणाः सूक्तवाकमप्युत्कर्षन्ति। तत्र सवनीयानां पुरोडाशानां देवताः सङ्कीर्त्यन्ते, भूज्यमिन्द्रायहरिवते धानाः पूष एव ते करम्भमित्यारभ्य। तासामुत्कर्षो? नेति सन्देहः। किं प्राप्तम्। उत्कर्षे सूक्तवाकस्य न सवनीयदेवतानामुत्कर्षः। कुतः। पश्वनङ्गत्वात्। अनुयाजाः पशोरङ्गमुत्कृष्यमाणाः पश्वङ्गमेवोत्कष्टुमर्हन्ति, न सोमाङ्गम्। सोमाङ्गं च सवनीयदेवता। तस्मात् तासामनुत्कर्षः। यथा निष्कर्षेऽनन्वयः। यथा पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षेऽमावास्यादेवतानामन्वयः। इतरत्र चेतसाम्। तत् कस्य हेतोः। इतरेतरस्यानङ्गत्वात्। तद्वदिहाप्यनुत्कर्षः॥ ५४॥ पूर्व०॥

**वाक्यसंयोगाद् वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः॥ ५५॥**

अथ वा उत्कर्ष एव न्याय्यः। कुतः। वाक्यसंयोगात्। सूक्तवाक-

स्यैकदेशभूतानि सौमिकदेवतासंकीर्त्तनानि, भुज्यन्निन्द्राय हरिवते धानाः पूष एव ते करम्भं सरस्वतीवते परिवापम्। अयं यजमान इति सम्बद्ध्यते । तथा इन्द्राय हरिवते धानाभि पूष एव ते करम्भेण सरस्वतीवते परिवापेण सूपस्था अद्य देवो वनस्पतिरभवदिति सम्बद्ध्यते । तान्येतानि सूक्तवाकस्य मध्य उच्यमानान्यऽर्थवन्ति निष्कृष्टानि केवलान्यार्थकानि भवन्ति । न च सवनीयानां सूक्तवाकोऽस्ति यत्रैतान्युच्चार्येरन् । पाशुक एव सूक्तवाकस्तेषां प्रसङ्गसिद्धः । अतस्तत्र एतद्देवतानां संकीर्त्तनं युक्तम् । स चोत्कृष्यते। तस्मात्तासामप्युत्कर्षः । आर्षे चैवमनुग्रहीष्यते। यत्तु यथा निष्कर्षेऽनन्वय इति समानतन्त्रत्वादर्थलोपादनन्वयः। समानतन्त्रौ दर्शपूर्णमासौ। तयोः साधारणं सूक्तवाकाम्नानम् । तद्यथार्थं निविशते अर्थलुप्तं चामावास्यादेवतानां पौर्णमास्यां संकीर्त्तनमितरासां चेतरत्र । यत्कारणं या इष्टा देवतास्ताः संकीर्त्तनेन प्रत्यवेक्ष्यन्ते । इयमपीष्टा, न काचिदन्तरितेति । तस्माद्यथा निष्कर्षेऽनन्वय इत्यदृष्टान्तः ॥५५॥ सि० ॥ सूक्तवाकाधिकरणम् ॥ १४ ॥ इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य तृतीयः पादः ॥ ११ ॥ ३ ॥

अथ एकादशाध्यायस्य चतुर्थः पादः ॥ ११ ॥ ४ ॥

## चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥

राजसूये यान्यनुक्तदेशकालानि प्रधानानि, यथा, त्रिसंयुक्ते ब्रू एवमादि चिन्त्यते । किं तत्राङ्गानां तन्त्रभावः ? उत भेद इति । किं प्राप्तम् । राजसूयेऽनुक्तदेशकालानां प्रधानानामङ्गानि । कुतः । समवायात् । फलनिवर्त्तने तेषां समवायः । समेत्यैतानि फलं साधयन्ति, नैकशः । कथं ज्ञायते । चोदनैकत्वात् । राजसूयेनेत्येकवचनान्ते तेन शब्देन तानि प्रधानान्युक्त्वा फलसम्बन्धः कृतः । तस्मात् समुदायः फलवान् । यच्च फलवत्तच्चिकीर्षितम् । तदर्थेतिकर्त्तव्यता इति कर्त्तव्यता चाङ्गानि । तस्मात् तन्त्रम् ॥ १ ॥ पूर्व० ॥

## प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात् समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥

न चैतदेवं, तन्त्रमङ्गानीति । किं तर्हि । भेदेन । कुतः ? । प्रतिदक्षिणं कर्तृसम्बन्धात् । एतेषु कर्मसु दक्षिणाभेद श्रूयते । आग्नावैष्णव एकादशकपाल, ऐन्द्रावैष्णवश्चरु, वैष्णवस्त्रिकपालो वामनो दक्षिणा । सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरु, श्यामो दक्षिणेति । दक्षिणाभेदात् प्रतिदक्षिणं कर्तृसम्बन्धो भवति । वामनक्रीताः पूर्वस्य त्रिसंयुक्तस्य कर्त्तारः, अनङ्गमुत्तरस्य त्रिसंयुक्तस्य । श्यामपरिक्रीता उत्तरस्य त्रिसंयुक्तस्य कर्त्तारस्तेऽप्यनङ्गं पूर्वस्यातः कर्तृभेदादङ्गभेद । इष्टिवत् । तद्यथा पौर्णमासकालान्यङ्गानि कालभेदान्न दर्शस्योपकुर्वन्ति । एवमिहापि कर्तृभेदान्न परस्परस्य । तस्माद्भेदेन कर्त्तव्यानीति । यत्तु चोदनैकत्वादुत्तरस्याऽपि समुदायो विवक्षित इति उच्यते । समुदायो हि तन्निर्वृत्त्या । समुदायः फलनिष्पत्त्या विवक्षितः । तदेकत्वात् फलैकत्वात् सह वचनं न प्रयोगैकत्वादिष्टिवत् । तद्यथा दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समासवचनम् । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति ॥ २ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ ३ ॥

अन्यार्थोऽप्येतमर्थं दर्शयति । पूर्वं त्रिसंयुक्तमुत्तरं त्रिसंयुक्तमिति । तत्र भेदे हि पौर्वापर्यं स्यात् । नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्यं भवेत् । नैवमेतद् । वाक्यशेषेण तु विज्ञायते, साङ्गयोः प्रधानयोरेतत्पौर्वापर्यमिति । एवं ह्याह, यत् पूर्वं त्रिसंयुक्तं वीरजननं तद्, यदुत्तरं त्रिसंयुक्तं पशुजननं तदिति । फलसम्बन्धश्च साङ्गयोर्भवति, न केवलयोः । तस्माद्दर्शनमेवैतत् ॥ ३ ॥ हेतुः ॥ अङ्गतन्त्रताऽधिकरणम् ॥ १ ॥

## अनियमः स्यादिति चेत् ॥ ४ ॥

तत्रैव विचार्यते, किमुपक्रमे ये कर्त्तारस्त एवान्तादुतानियमः—ते वान्ये वेति । किं प्राप्तम् । अनियमः स्यादिति चेत् । इति चेत् पश्यसि प्रतिदक्षिणं कर्तृसम्बन्ध इति अनियम । पवित्रदक्षिणाभिर्ये परिक्रीताः पवित्रार्थास्ते भवन्ति । पवित्रान्ते एतेषामपवर्गः । उत्तरे कर्मणि यथा कामिते वान्ये वा स्युः । तस्मादनियमः ॥ ४ ॥ पूर्व० ॥

## नोपदिष्टत्वात् ॥ ५ ॥

नैतदेवं युक्तमनियम इति । किं तर्हि । य एव प्रक्रमे त एव अन्ते स्युः । कस्मात् । उपदिष्टत्वात् । आदावेव वरणकाले यजमानेन तेषामुपदिष्टम् । अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयेतेति । वरणञ्च प्राक् कर्मप्रवृत्तेः । तद्गृह्यमाणविशेषत्वात् तन्त्रान्तेनाऽता: सर्वार्था भवन्ति । आह । यदि सर्वमुद्दिश्य व्रियन्ते तत एवम् । अथ पूर्वमवयवं पवित्रमुद्दिश्य ततो न सर्वार्थास्तदर्था एव भवन्ति । किं पुनरत्र युक्तम् ? । समुदायमुद्दिश्येति । तथा सति अविघ्नेन कर्त्तुं कर्म निर्वर्त्तते इतरथा पवित्रान्ते उत्तरस्मिन् कर्मणि त एव कामतो न संप्रवर्त्तेरन् । अन्ये च कर्त्तारो नोपपद्येरन्, कर्मविघ्नः स्यात्, कालातिपत्तिश्च । एवञ्च सति लाघवं भवति । इतरथा प्रतिकर्मोपादानम् । तद् गुरुः स्यात् । ऋत्विग्याज्ययोश्चाव्यभिचारो धर्मः । तस्मात् समुदायमुद्दिश्य व्रियन्ते तथा च तन्त्रम् ॥५॥ सि०॥

## प्रयोजनैकत्वात् ॥ ६ ॥

एकञ्च प्रयोजनमवयवदक्षिणानामपि समुदायसम्प्राप्तिः । न ह्यवयवेन केवलेन क्रतेन कश्चिदर्थोऽवयवैः समुदायः सम्पादयितव्य इति अवयवे परिक्रीयते । तेषां समुदायसम्पत्तौ कृतार्थत्वम् । तस्मात् त एव कर्त्तार आन्तात् स्युः । आह । यदि समुदायसम्पत्त्यै अवयवशः परिक्रयः सकृदेव कर्त्तव्यः, किं पुनरावृत्त्येत्युच्यते ॥ ६ ॥ हेतु: ॥

## अविशेषार्था पुनः श्रुतिः ॥ ७ ॥

उभयथा परिक्रये प्राप्ते सकृद्वा प्रत्यवयवं वा परिक्रयविशेषो नियम्यते । प्रत्यवयवं कर्त्तव्यः । द्रव्यसंख्यानियमेन च यामनो दक्षिणा अग्नुनमभिषेचनीये ददातीत्येवं क्रियमाणमभ्युदयकारि भवतीति ॥ ७ ॥ हेतुः ॥ उपक्रमे वृतकर्त्तृविक्रमाधिकरणम् ॥ २ ॥

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनाद्‌ वचनात् कामसंयोगेन ॥ ८ ॥

तस्मिन्नेव राजसूये अवेष्टिः । आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणेत्याम्नाता । तस्यां चिन्त्यते किमङ्गानां भेदोऽथ तन्त्रभाव इति । किं प्राप्तम् । अवेष्टौ चैकतन्त्र्यं स्यात् । तन्त्रतालिङ्गदर्शनात् । लिङ्गं हि तन्त्रभावस्य सूचकं दर-

ते । यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाभिघार-येत् । यदि राजन्य ऐन्द्रमिति । यदि वैश्यो वैश्वदेवम् । समस्ते च हविषां मध्ये निधानमुपपद्यते । ऐकतन्त्र्ये च सामस्त्यम् । तस्मा-दैकतन्त्र्यम् । ननु लिङ्गमुपदिश्यते, कुतः प्राप्तिः । सह चोदनया प्राप्तिः । अथैतां दिशामवेष्टिं, य इमं वा अथ तं लोकं पुनरुपावरोह-न्तीति । अवेष्टिरिति चैकवच्छ्रुते । एतयैवान्नाद्यकामं याजयेदिति वचनात् कामसंयोगेन । न वा तन्त्रभावः । कुतः । उक्तो न्यायः, प्रतिदक्षिणं वा कर्तृसम्बन्ध स्यादिति । लिङ्गदर्शनादिति यदुक्तम् । तत्र ब्रूमः । वचनादिति कामसंयोगेनापि श्रूयते । एतयैवान्नाद्यकामं याजयेदिति।तत्रैतद्दर्शनम्।न च तत्र दक्षिणाभेद ।न हि राजसूयिक्यो दक्षिणास्तत्र प्राप्यन्ते । एतयैवान्नाद्यकामं याजयेदिति एकवचना-न्तेन शब्देन फलं प्रति निर्देशात् सह प्रयोग एव । तत्रैतद्दर्शन-मुपपद्यते । तस्मात्तदपेक्षमेतत् ॥ ८ ॥ पूर्व० ॥

क्रत्वर्थायामितिचेन्न वर्णसंयोगात् ॥ ९ ॥

अथ पश्यसि क्रत्वर्थायामेवैतद्दर्शनं भवतु । एवं प्रकृतशेषत्वं भविष्यतीति । तन्न न । कुतः । वर्णसंयोगात् । यदि ब्राह्मणो यजेत यदि वैश्य इति । न च क्रतौ ब्राह्मणवैश्यौ स्तः । राजन्यस्यैव राज-सूयः । राजा राजसूयेनेति वचनात् । तस्मादक्रत्वर्थायामेतद्दर्शनम् ॥ ९ ॥ आ० नि० ॥ अवेष्ट्यावङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ३ ॥

पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १० ॥

आधाने पवमानेष्टयः । अग्नये पवमानायाष्टाकपालं निर्वपति । अग्नये पावकायाग्नये शुचय इति । तत्र विचार्यते । किमासामैक-तन्त्र्यं, भेदो वा इति । किं प्राप्तम् । पवमानहविःष्वैकतन्त्र्यं स्यात् । कुत । प्रयोगवचनैकत्वात् । एक आसां प्रयोगवचनः । अह्नो निरू-प्याणीति । प्रयोगवचनैकत्वात् सहप्रयोगः । तत्र न गृह्यते विशेषः । तस्मादैकतन्त्र्यम् ॥ १० ॥ पूर्व० ॥

लिङ्गदर्शनाच्च ॥ ११ ॥

लिङ्गं च सह प्रयोगं दर्शयति । समानबर्हींषि भवन्तीति । अनु-वादोऽयम् ॥ ११॥ हेतुः ॥

वर्तमानापदेशाद्वचनात्तु तन्त्रभेदः स्यात् ॥ १२ ॥

न चैकतन्त्र्यं स्यात् । किं तर्हि तन्त्रभेदः । स च भवन्नेव प्रथमायां भेदः । उत्तरयोस्तन्त्रम् । कस्मात् । वचनात् । वचनमिदं भवति । अथ यः कामयेत वर्षीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत् तदेनमग्रहीत् तेन स उत्तरं वर्षीयान् श्रेयान् भवतीति । किमिव वचनं न कुर्यात् । नास्ति वचनस्यातिभार । तस्मादेव कर्त्तव्यम् । अथ यदुक्तं प्रयोगवचनैकत्वादिति । तस्य कः परिहार । नाऽसौ प्रयोगवचनः । कालवचनोऽसावद्धा निरूप्याणीति । तस्मादऽहेतुः स भवति ॥ १२ ॥ सि० ॥

## सहत्वे नित्यानुवादः स्यात् ॥ १३ ॥

यथोक्तं समानबर्हींषि भवन्तीति समानप्रयोग दर्शयतीति । तत्र ब्रूमः । सहत्वे नित्यानुवादः स्यात् । इदमपरं श्रूयते । यो ब्रह्मवर्चसकामः स्यात् तस्य सर्वाणि हवींषि निरूप्याणीति । तस्य सह प्रयोगो भवति । तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात् । समानबर्हींषि भवन्तीति । किं पुनर्निरूप्याणीत्युक्ते सहप्रयोगो गम्यते । निरूप्याणीति बहुत्वयुक्तः प्रयोगो विज्ञायते । तत्र बहुत्वमुपादेयत्वेन चोदितानां विवक्षितम् । न चैकशः प्रयोगो बहुसंयुक्तः प्रयोगो भवति । तस्मात् सहप्रयोगो विज्ञायते ॥ १३ ॥ आ० नि० ॥ काम्यपवमानेष्टिभेदाधिकरणम् ॥ ४ ॥

द्वादशाहेन प्रजाकामं याजयेदिति श्रूयते । तत्र विचार्यते । किमेकैकशः पृथक् पृथग्दीक्षोपसदेनाहः सम्पाद्य द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः, अथ वा द्वादश साद्यस्काः, अथ वा चतुरहे दीक्षाश्चतुरहे उपसदः, चतुरहं सुत्याः । अथ वा स्वस्थानानां दीक्षोपसत्सुत्यानां विवृद्धिरिति । किं प्राप्तम् । तत् सूत्रेणैव प्रक्रमः ॥

## द्वादशाहे तु प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १४ ॥

एकैकं सदीक्षोपसदमहरहरपवृज्येत द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः । कुतः । तत्प्रकृतित्वात् । सदीक्षोपसदमहरपवर्जितं ज्योतिष्टोमे यतस्तत् प्रकृतीन्येतानि द्वादशाहानि पृथग्भूतानि कर्माणि पृथक्त्वेनैव धर्मानाकाङ्क्षन्ति तस्माज्ज्योतिष्टोमवत् सदीक्षोपसदमेकैक-

मह: कर्त्तव्यमिति ॥ १४ ॥ पूर्व० ॥

अह्नां चाश्रुतिभूतत्वात् तत्र साङ्गं क्रियेत
यथा माध्यन्दिने ॥ १५ ॥

न चैतदस्ति यदुक्तं द्वादश पञ्चविंशतिरात्राः कर्त्तव्या इति । किं तर्हि । द्वादश साद्यस्काः कार्य्याः । किं कारणम् । अह्नां श्रुतिभूतत्वात् । द्वादशाहेनेति द्वादशसंख्याऽह्नां प्रत्यक्षश्रुता । सा बाध्येत, यदि द्वादश पञ्चविंशतिरात्राः क्रियेरन् । तस्माद् द्वादशस्वहःस्वेकैकं प्रधानं प्रयुज्येत । प्रधानकालत्वाच्च अङ्गानाम् । तत्कालं तदीयं दीक्षोपसदम् । यथा माध्यन्दिने । तद् यथा सान्तपनीयस्य माध्यन्दिने निरूप्यन्त इति वचनान्मध्यन्दिनकालान्येवाङ्गानि भवन्त्येवमिहापि तस्माद् द्वादश साद्यस्काः कर्त्तव्याः ॥ १५ ॥ पूर्व० ॥

अपि वा फलकर्तृसम्बन्धात् सहप्रयोगः
स्यादाग्नेयाग्नीषोमीयवत् ॥ १६ ॥

अपि च, नैवं स्याद् द्वादश साद्यस्का इति । कथं तर्हि । सह० प्रयोगः स्यात् । चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्याः । कुतः । फलकर्तृसम्बन्धात् । फले कर्तृषु चैतेषां प्रधानकर्मणा समेतानां सम्बन्धो द्वादशाहशब्देन समुदायवचनेन संयोगात् फले सम्बन्धः सत्रे स्वयकर्तृत्वादहीने च दक्षिणैक्यात् । कर्तृषु चैकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति । आग्नेयाग्नीषोमीयवत् । यथाग्नेयाऽग्नीषोमीययोरेकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति । सहप्रयोगे च विशेषाग्रहणात्तन्त्रं दीक्षोपसदं द्वादशाहश्रुतिश्चानुग्राह्या । तदुभयमेवमुपपादितं भवति सहप्रयोगोऽहःसंख्या च । तस्मादेष पक्षः श्रेयान् ॥ १६ ॥ पूर्व० ॥

साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः
स्यात् ॥ १७ ॥

अथ चैतदपि न युक्तम् । कुतः । साङ्गकालश्रुतित्वात् । यद्यत्र प्रधानानामेव कालश्रुतिः स्यान्नाङ्गानां, तत एवं स्यात् । अत्र तु साऽङ्गानां कालः श्रुतः । द्वादश दीक्षा, द्वादशोपसद इति दीक्षाणामुपसदां च पृथक् पृथक् कालः श्रुतः । यदि चतुरहे क्रियेत, ततो

प्राधान्येन तस्मात् स्वस्थानानां विवृद्धिः । तदपेक्षं च द्वादशत्वम् । दीक्षोपसत्सुत्यापेक्षं प्रथमं दीक्षाः । तासां तत्रैव द्वादशत्वम् । तत उपसदस्तासामपि तद्दशानामेवान्ते सुत्या, तस्या अपि तत्स्थानाया एव वृद्धि । तदपेक्षं द्वादशत्वम् ॥ १७ ॥ सि० ॥

दीक्षोपसदां च संख्या पृथक् पृथक् प्रत्यक्षसंयोगात् ॥ १८ ॥

अपि च द्वादशाहेन प्रजाकामं याजयेदित्युक्त्वा त्रिवृदादित्यनुक्रान्तानि । तस्मादपि तदपेक्षा द्वादशसंख्या ॥ १८ ॥

वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वात् ॥ १९ ॥

एवं वसतीवरीपर्यन्तानि पूर्वाण्यन्यकालत्वादगृह्यमाणविशेषाणि तन्त्रं भवति । अवभृथादीनि चोत्तराणि । तस्यावभृथस्य दीक्षाविसर्गार्थत्वात् । स हि दीक्षोन्मोचनार्थः। एवं ह्याह । अप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गलोकमायन् यदप्सु स्नान्ति तामेव दीक्षामालभंते अथ यदपोऽवभृथमभ्यवयन्ति तामेव दीक्षां पुनरप्सु प्रवेशयन्तीति तन्त्रं च दीक्षोत्पन्ना, सा तन्त्रमेवोत्स्रक्ष्यते । विशेषाग्रहणात् । ॥ १९ ॥ हेतुः ॥

तथा चान्यार्थदर्शनम् ॥ २० ॥

एवं च सत्यन्यार्थदर्शनमिदं युक्तं भविष्यति षट्त्रिंशदहो वा एष द्वादशाह इति ॥ २० ॥ उदाहरणम् ॥

चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २१ ॥

यथाग्नेयाग्नीषोमीयवदिति । युक्तम् । यदाग्नेयाग्नीषोमीययोश्चोदनापृथक्त्वेऽप्यैकतन्त्र्यं सहप्रयोगः । कुतः । समवेतानां कालसंयोगात् । समवेतानामङ्गप्रधानानां कालसंयोगात् । पौर्णमास्यां पौर्णमास्या यजेत साङ्गयेति । तस्मात्तन्त्रम् । पौर्णमास्यामेवाङ्गानि च प्रधानानि च क्रियन्ते । इह पुनः साङ्गकालश्रुतित्वादित्येवमपदिष्टो हेतुः । तस्मादत्र द्वादशाहेऽङ्गप्रधानानि पौर्णमासीवत् सह कार्याणि ॥ २१ ॥

पूर्व० आ० नि० ॥ द्वादशाहे दीक्षाद्यधिकरणम् ॥ ५ ॥

अथ यानि प्रधानैरपृथक्कालान्यङ्गानि तेषु चिन्त्यते । किं तान्यऽपि तन्त्रम् । अथ वा भेदेनेति । किं प्राप्तम् । तन्त्रमिति । किं कारणम् । एवं सहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते । द्वादशाहेन प्रजाकामं याजयेदिति । तदुक्तं, विधिवत् प्रकरणाविभागे प्रयोगं बादरायण इति । एवं प्राप्ते ब्रूमः–

## भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् ॥ २२ ॥

भेदस्तु स्यात् । कुतः । तद्भेदात् । तदित्यनेन पूर्वसूत्रनिर्दिष्टः कालः प्रतिनिर्दिश्यते । कालभेदात् । काले भिद्यमाने तन्त्रभेदो भवति । यथा दर्शे पूर्णमासेऽपि । इहापि कालभेदः । अद्य श्वः परश्व इति । तत इहापि कर्मभेदः स्यात् । करणभेद इत्यर्थः । कथं पुनरङ्गानां कालभेदो विज्ञायते । तेषां प्रधानशब्दत्वात् । प्रधानशब्दगृहीतान्यङ्गानि यत्र प्रधानं तत्र विज्ञायन्ते । यदद्यप्रधानं तस्याद्यकालान्यङ्गानि । यत् श्वस्तस्य श्वःकालानि तस्माद्भेदः ॥ २२ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ २३ ॥

पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इति भेदेनाह्नां पत्नीसंया जान्ततां दर्शयति । २३ ॥ हेतुः ॥

## श्वासुत्या वचनं तद्वत् ॥ २४ ॥

संस्थिते संस्थिते अन्वदग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यतीति । संस्थिते संस्थित इति वीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति ॥ २४ ॥ उदाहरणम् ।

## पश्वतिरेकश्च ॥ २५ ॥

पश्वतिरेकश्च दृश्यते, यदेकः पशुरतिरिच्यते स ऐन्द्राग्नः कार्यः न तावदतिरिच्यते, एको न भवति एकादशैते पशवो द्वादशाहानि । तत् पश्वालम्भभेद उपपद्यते । तन्त्रभावे सकृदेवैकादशिनामालभेत । तस्मादपि भेदः ॥ २५ ॥ हेतुः ॥ प्रधानापृथक्कालाङ्गानां भेदनानुष्ठानाधिकरणम् ॥ ६ ॥

**सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २६ ॥**

उपसत्कालं सुब्रह्मण्याह्वाने चतुरहे सुत्यामागच्छ मघवन्निति। द्वादशाहे चोदकेन प्राप्यते। तत्रेदं विचार्यते। द्वादशाहे सुत्याहान्युपलक्षयितव्यानि, उताविकारेणैव प्रयोगः कर्त्तव्य इति। किं प्राप्तम्। सुत्याविवृद्धावेतस्यां सर्वेषामह्नामुपलक्षणं कर्त्तव्यम्। कुतः। प्रकृत्यन्वयात्। प्रकृतौ सौत्यमहरुपलक्षितम्। सर्वाणि चैतानि तत्प्रकृतानि। अतः सर्वाण्युपलक्षणीयानि। नन्वेकैवासौ देवता इन्द्रः सकृदुपलक्षणेन संस्कृतः संस्कृत एव। तस्य पुनरुपलक्षणमनर्थकमित्युच्यते। आद्योपलक्षणकृतः संस्कारः सोऽद्यतनस्य प्रधानस्याङ्गम्। तस्मादुत्तरार्थे पुनः पुनरुपलक्षयितव्यः। आवाहनवत्। तद् यथाऽऽग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायस्पर्द्धमान इति एकत्वेऽप्यग्नेर्देवतायाः कर्मभेदाद्भेदेनाङ्गानि क्रियन्ते। एवमिहापि ॥ २६ ॥ पूर्व० ॥

**अपि वेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वात् ॥ २७ ॥**

अपि वा न स्यात् सर्वेषामुपलक्षणम्। अविकारेणैव प्रयोगः स्यात्। कुतः। इन्द्राभिधानात्। इन्द्रोऽत्रोपलक्षणेन संस्क्रियते। स सकृत् संस्कृतः संस्कृत एव, न पुनः संस्कर्त्तव्यः। ननु चतुरहेऽसौ संस्कृतश्चतुरहे सुत्यामागच्छेति वचनात्। अविवक्षितोऽत्र कालः इन्द्र आगच्छेत्येतावदेव विवक्षितम्। विवक्षिते सति काले वाक्यं भिद्यते। आगच्छ मघवन् चतुरहे आगच्छेति सकृदुच्चारितागच्छति विभक्तिरुभौ सम्बन्धौ न शक्नोति वदितुम्। अथ कस्मादिन्द्रागमनसम्बन्धो विवक्षितो, न पुनः कालाभिसम्बन्धः। आगच्छ मघवन्निति प्रत्यक्षः संयोगः। चतुरहे आगच्छेति परोक्षः। सुत्याशब्देन व्यवायात्। ननु च सुत्यामागच्छेत्यपि सविवक्षितो भवतु। नैव कश्चिद्विरोधः। सुत्यात्वस्याविशेषात्। ननु चतुरहे इति सुत्याविशेषोऽवगम्यते। न खलु। किं कारणम्। कालस्य लक्षणार्थत्वात् चतुरहकालोऽत्र सुत्यालक्षणार्थः। चतुरहादिसुत्यामागच्छेति। यत् कारणं नात्र देवतागच्छति। यजतौ तूद्देशेन केवलमङ्गी भवति। स यजता-

वङ्गभावोऽयमुपलक्ष्यते । सर्वसुत्यासु चासौ तुल्य । तत्र चतुरह-वचनं प्रदर्शनं मुख्यत्वाद् मुख्येन हि प्रदर्शनं भवति । यथेडान्तातिथ्या सन्तिष्ठते, नानुयाजान् यजतीति ॥ २७ ॥ सि० ॥

अविभागाच्च ॥ २८ ॥

अथ यदुक्तमावाहनवदिति । तत्र ब्रूमः । विभक्तः कालः कृष्ण-ग्रीवयोः सौम्येन व्यवायात् । तत्र गृह्यते विशेषः । पूर्वस्य कृष्ण-ग्रीवस्यैतद्देवतावाहनं नोत्तरस्येति । अथेह विभक्तिकालाः सुत्या अव्यवेताः केनचित् । तासु न गृह्यते विशेषः । चतुरहग्रहणं वा विशेषकमित्युक्तम् । तस्मादविकारेण प्रयोगः ॥२८॥ हेतुः ॥ ऊहरूप-तन्त्रवापाधिकरणम् ॥ ७ ॥

पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात् ॥ २९ ॥

वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्रपण्याश्च तन्त्रभावः स्यात् । विभुत्वात् । विभवत्येका कुम्भी सर्वपशूनामव-दानानां श्रपणे । शूलं हृदयानां वपाश्रपणी वपानाम् । तस्मात्तन्त्रं स्युः ॥ २९ ॥ पूर्व० ॥

भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३० ॥

एकादशिनेषु तु भेदेन कुम्भ्यादीनि स्युः । सन्देहात् । एकस्यां कुम्भ्यां पशूनां सन्देहः स्यात् । कस्य पशोः कान्यवदानानीति । एवं हृदयादीनां वपानां च ॥ ३० ॥ पूर्व० ॥

अर्थाद्वा लिङ्गकर्म स्यात् ॥ ३१ ॥

अथ वा न स्याद्भेदः । कुतः । सह प्रयोगात् । यत्तु सन्देहादिति । अर्थाच्चिह्नं किञ्चित् करिष्यते, येन विशेषग्रहणं भविष्यति ॥३१॥ पूर्व०

प्रतिपाद्यत्वाद्वसानां भेदः स्यात् स्वयाज्या-प्रदानत्वात् ॥ ३२ ॥

कुम्भ्यास्तन्त्रभावो न घटते । आयाज्यत्वाद्वसानाम् । याज्यार्द्ध-र्चान्ते वसां जुहोतीति श्रुतं प्रकृतौ । तत्र स्वयाज्यार्द्धर्चान्ते वसा हुता । इहापि तथैव होतव्या । न च वसानां लिङ्गं कर्त्तुं शक्यम् ॥ ३२ ॥ पूर्व० ॥

## अपि वा प्रतिपत्तित्वात् तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात् ॥ ३३ ॥

अपि वा तन्त्रं कुम्भी स्यात् । प्रतिपत्तित्वात् । शेषभूता वसास्तासां प्रतिपत्तिरियम् । प्रतिपत्तिश्च द्रव्यं न प्रयोजयति । कुतः । तद्धारणार्थं पात्रम् । अत्यन्तसंसृष्टाश्च वसास्ताः स्वयाज्यार्द्धर्चान्त एव हुता भवन्ति । ननु परयाज्यार्द्धर्चान्तेऽपि प्रसज्यन्ते । अत्रोच्यते । स्वत्वस्याश्रुतिभूतत्वाद् नात्र श्रूयते स्वयाज्यार्द्धर्चान्ते होतव्या, न परयाज्यार्द्धर्चान्त इति । तस्मात् परत्र होमो न दोषाय, नाभ्युदयाय । अतस्तन्त्रमेव कुम्भ्याः स्यात् ॥ ३३ ॥ पूर्व० ॥

## सकृदिति चेत् ॥ ३४ ॥

इति चेत् पश्यसि सहत्वं न श्रुतमिति । तेन तर्हि सकृदेव होमः प्रथमे याज्यार्द्धर्चान्ते भवत्वेवं सहत्वं चानुग्रहीष्यते, याज्यार्द्धर्चान्ते च हुतं भविष्यति । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ ३४ ॥ आ० ॥

## न कालभेदात् ॥ ३५ ॥

नैतदेवं प्रथमेऽर्द्धर्चान्त इति । किं तर्हि प्रत्यर्द्धर्चान्ते होतव्याः । कुतः । कालभेदात् । भिन्ना याज्यार्द्धर्चान्ताः । निमित्तसप्तमी चेयं याज्यार्द्धर्चान्त इति । अधिकरणस्यासम्भवात् । निमित्तावृत्तौ च नैमित्तिकावृत्तिर्यथा भिन्ने जुहोतीति । तस्मात् सर्वयाज्यार्द्धर्चान्तेषु होमः ॥ ३५ ॥ आ० नि० ॥ पशौ कुम्भ्यादीनां तन्त्रताधिकरणम् ॥८॥

## पक्तिभेदात् कुम्भीशूलवपाश्रपणीनां भेदः स्यात् ॥३६॥

अस्ति सौत्रामणी । तत्राश्विनो धूम्र , सारस्वतो मेष , ऐन्द्रं ऋषभ ऐन्द्रस्त्वेवंविधाः पशवः सन्ति । तेष्वपि तन्त्रभावः प्रभुत्वात् प्राप्तोऽपोद्यते । सौत्रामण्यामेवजातीयेषु ॥ ३६ ॥ पूर्व० ॥

## जात्यन्तरेषु भेदः स्यात् पाकवैषम्यात् ॥ ३७ ॥

एकादशिनेषु तु नानाजातीयेषु कुम्भ्यादीनां भेदः स्यात् । पक्तिवैषम्यात् । विषमा हि पाक , आजानामाविकानाञ्च मांसानाम् । यावता कालेनाजानि पच्यन्ते तावताविकानि विलीयन्ते । तत्रावदानसम्भेदो भवति । तस्मात् पात्रभेदः स्यात् ॥ ३७ ॥ सि० ॥

वृद्धिदर्शनाच्च ॥ ३८ ॥

वृद्धिश्च सौत्रामण्यां शूलानां गोऽजाविषु दृश्यते। शूलैश्च मासरेण वाऽवभृथमभ्यवयन्तीति । तस्मादपि भेदः ॥ ३८ ॥ हेतुः ॥ पाककालभेदाद् वसानां पात्रभेदाधिकरणम् ॥ ९ ॥

कपालानि च कुम्भीवत्तुल्यसंख्यानाम् ॥ ३९ ॥

अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशा अश्वसंख्याः श्रूयन्ते । यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान्निर्वपेदिति । तत्र विचार्यते । किं दीर्घेषु कपालेषु सर्वेषां श्रपणं कर्तव्यम्, अथ वा प्रतिपुरोडाशं कपालचतुष्कभेद इति । किं प्राप्तम् । कपालानि कुम्भीवत् । यथा प्राजापत्येषु कुम्भी तन्त्रम्, एवं तुल्यसंख्यानां पुरोडाशानां कपालानि तन्त्रमित्यर्थः ॥ किं कारणम् । एवं सहत्वेनानुग्रहीष्यन्ते । सर्वेषु चतुर्षु कपालेषु संस्कृता भविष्यन्ति ॥ ३९ ॥ पूर्व० ॥

प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥

प्रतिपुरोडाशं कपालचतुष्कभेदः । एवं यथाप्रकृति कृतं भवति । प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपालानि भिन्नानि इहापि तद्वदेव भेत्तव्यानि चोदकानुग्रहाय । अपि च यदि कपालानि तन्त्रं भवेयुः । नैकोऽपि पुरोडाशश्चतुष्कपालेषु संस्कृतः स्यात् । सर्वे कपालावयवेषु पक्वा भवेयुः । तत्र कपालशब्दो बाध्येत । तस्माद्भेदः ॥ ४० ॥ सि० ॥

सर्वेषां वाभिप्रथमं स्यात् ॥ ४१ ॥

इदं च श्रूयते यावत्कपालं पुरोडाशं प्रथयतीति । तच्चाशक्यं तन्त्रभावे सम्पादयितुम् । तस्मादपि भेदः ॥ ४१ ॥ युक्तिः ॥ कपालभेदाधिकरणम् ॥ १० ॥

दर्शपूर्णमासयोः श्रूयते व्रीहीनवहन्तीति । तत्र मन्त्रः, अवरक्षो दिवः सपत्नं वध्यासमिति । तस्मिन् विचार्यते । किं प्रतिप्रहारं मन्त्र उत सकृदवादाविति । किं प्राप्तम् ? । प्रतिहारमिति । कुतः प्रहारात् प्रहारः कर्मान्तरापत्तेः पर्यवसानं, कर्मभेदे च सति गृह्यते विशेषः । येन कर्मणा सन्निपतितो मन्त्रस्तदर्थ इति । गृह्यमाणे च विशेषे भेदो दृष्टः । तस्मात् प्रतिप्रहारं मन्त्र इत्येवं प्राप्ते उच्यते,

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वात् ॥ ४२ ॥**

तस्मिन्मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्य सकृत् प्रयोगः स्यात्। एकस्मिन् द्रव्ये व्रीह्यादौ संस्काराणामवहन्त्यादीनां व्याख्यातमेककर्मत्वम् आतण्डुलनिर्वृत्तेरेकमिदं कर्मेति सर्वेषां त्वेककर्म्यादेतेषां च तद्गुणत्वादिति । ननु प्रतिप्रहारं कर्मभेद इत्युक्तमेकस्यैव कर्मणोऽयमभ्यासः फलस्याभ्याससाध्यत्वात् सोमयजिवत् । तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्य सकृत्प्रयोगः । यत्र मन्त्रार्थस्य नानात्वन्तत्रास्यावृत्तिर्भवति । यथाग्नौ लोकम्पृणायाः । यत्र पुनरेक एव मन्त्रार्थस्तत्रावृत्तिरनर्थिका । इह चैको मन्त्रार्थः । कथं ज्ञायते करणोऽयं मन्त्रः । करणश्च कर्त्तव्यस्य वस्तुतोऽभिधानार्थः समधिगतः। समस्ताश्चैते प्रहाराः कर्त्तव्याः । समस्ता हि कार्यं साधयन्ति, न व्यस्ताः । उप्तानां व्रीहीणां तण्डुलविवेचनं यत्ताश्चिकीर्षितं, तदभिसन्धातव्यम् । तस्मात् सर्वप्रहाराणां क्रिया मन्त्रेणाभिसंहिता । तत्रावृत्तिरनर्थिका तस्मान्मन्त्रस्य सकृत्प्रयोगः स्यात् ॥ ४२ ॥ सि० ॥ अवघातार्थमन्त्राणां तन्त्रताधिकरणम् ॥ ११ ॥

**द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात् ॥ ४३ ॥**

राजसूये नानाबीजेष्टिः । अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुमित्येवमादि । तस्यामवहन्तिः समन्त्रकश्चोदकेन प्राप्यते । अत्रापि पूर्वेण न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः। सर्वबीजानां वितुषीकरणं, चिकीर्षितं, तदभिसन्धीयत इति । तथा प्राप्ते उच्यते । द्रव्यान्तरे बीजान्तरे पुनः प्रयोगः स्यान्मन्त्रस्य । कुतः । कृतार्थत्वात् । पूर्वस्मिन् बीजे योऽवहन्तिः स कृतार्थः । सन्निपत्योपकारी हि सः। स च येन बीजेन सन्निपतितस्तदेव संस्करोति। तदेव चेत् संस्करोति उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः । तस्य पुनः प्रयोगान्मन्त्रस्यापि पुनः प्रयोगः । तद्गुणत्वात् । तस्यापि बीजान्तरे, तस्यावहन्तेः स मन्त्रो गुणस्तदर्थेन विधानात्तस्याप्यसौ प्रतिकर्मावसायिना चोदकेन विहितस्तस्मात् प्रतिबीजं मन्त्रस्यावृत्तिः ॥ ४३ ॥ पूर्वपक्षसिद्धान्तौ ॥ नाना-

बीजेष्टौ मन्त्रभेदाधिकरणम् ॥ १२ ॥

निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् ॥ ४४ ॥

दर्शपूर्णमासयोश्चतुरो मुष्टीन्निर्वपतीति । तस्य मन्त्रो देवस्य त्वेति । तत्रैव च दर्भाणां लवनमन्त्रः । बर्हिर्देवसदनं दामीति । तथा स्तरणमन्त्रः, ऊर्णाम्रदसं त्वा स्तृणामीति । आज्यग्रहणमन्त्रः, धाम-नामासीति । तेषु सन्देहः । किं मन्त्रस्य सकृत् प्रयोगः । अथ वा प्रतिमुष्टि प्रतिदानं प्रतिधातु प्रतिग्रहणम् । किं प्राप्तम् । निर्वपण-लवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात् । निर्वपणादिषु एकद्रव्यवत् स्यात् सकृत् प्रयोग इत्यर्थः । कुत. । प्रयोजनैकत्वात् तत्र तत्रैकं प्रयोजनं निर्वपणे तावद्धविष्याणामावापनम् । लवने वेदिः स्तरणयोग्यस्य बर्हिष उपसादनं, स्तरणे वेद्याच्छादनम् । आज्य-ग्रहणे यागयोग्यस्याज्यस्योपादानम् । यावता प्रयोजनं तच्चिकी-र्षितं तदर्थो मन्त्र इत्युक्तम् ॥ ४४ ॥ पूर्व० ॥

द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥ ४५ ॥

द्रव्यान्तरवद्वा स्यात् । नैकद्रव्यवद्भेदः स्यादित्यर्थः । कुतः । तत्संस्कारात् । ये व्रीहय एकेन मुष्टिना निरुप्तास्ते संस्कृताः संनिप-त्योपकारित्वान्निर्वापस्य । द्वितीयो मुष्टिरप्यन्यान् व्रीहीन् संस्करोति। तत्र यदि मन्त्रो न प्रयुज्येत,मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यात्। एवं सर्वत्र । तस्मात् तत्र तत्र मन्त्रस्यावृत्तिः ॥ ४५ ॥ ॥ सि० ॥

निर्वापादिषु मन्त्रभेदाधिकरणम् ॥ १३ ॥

वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥४६॥

वेदिप्रोक्षणं श्रूयते, त्रिः प्रोक्षतीति । तस्य मन्त्रो वेदिरसि बर्हिषे त्वेति । तत्र चिन्त्यते । किं प्रत्यावृत्ति मन्त्रोऽथवा सकृदेवेति । किं प्राप्तम् । वेदिप्रोक्षणे मन्त्रस्याभ्यासः । कुतः । कर्मणः पुन. प्रयोगा-त् । यस्मिन् कर्मप्रयोग उक्तो मन्त्रस्तदर्थोऽसाविति गृह्यते विशेष-स्तस्मादावृत्तिः ॥ ४६ ॥ पूर्व० ॥

एकस्य वा गुणविधिर्द्रव्यैकत्वात् तस्मात् सकृत् प्रयोगः स्यात् ॥ ४७ ॥

सकृदेव प्रयोगः । कुतः । द्रव्यैकत्वात् । एकं तद्वेदिद्रव्यं सकृदुक्तेन मन्त्रेण संस्कृतम् । तत्र भूयो मन्त्रकार्यं नास्ति । ननु कर्मद्वारेण मन्त्रो द्रव्यं संस्करोति । तच्च कर्म भिन्नम् । अत्रोच्यते । नैतद्भिन्नम् । आवृत्तिस्तस्य गुणः । क्रियाऽभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययो, न क्रियाभेदे । तन्मन्त्रवदावृत्तिः । तच्च कर्त्तव्यम् । सकृदुक्तेन मन्त्रेण मन्त्रवत् कृतम् । आवृत्तिसम्पादनार्था पुनः क्रिया । तस्मात् सकृत् प्रयोगः ॥ ४७ ॥ सि० ॥ वेदिप्रोक्षणे मन्त्रतन्त्रताधिकरणम् ॥ १४ ॥

## कण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ॥ ४८ ॥

ज्योतिष्टोमे कण्डूयनार्थो मन्त्रः । कृषिसु श्याम कृष इति । यदाऽनेकस्मिन्नङ्गे युगपत् कण्डूरुत्पद्यते तदा चिन्ता । किं प्रत्यङ्गं मन्त्रावृत्तिः, अथ वा सकृदेव प्रयोग इति । किं प्राप्तम् । प्रत्यङ्गं मन्त्र इति । कुतः । कर्मभेदात् । अङ्गेऽङ्गे कण्डूयनं कर्म भिन्नं, यतः पर्यवसानाद् गृह्यते विशेषः । तस्मादावृत्तिः ॥ ४८ ॥ पूर्व० ॥

## अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ४९ ॥

अपि वा नैवं स्यात् । न ह्यत्र कण्डूयनं चोद्यते । अर्थात् क्रियते कण्डूपनयनार्थम् । किमतः । यदि चोद्यते । अदृष्टार्थं स्यात् । अप्राप्तं शास्त्रमर्थवदिति । प्रतिप्रयोगं चादृष्टभेदात् कर्मनानात्वं भवेत् । तथा गृह्येत विशेषः । अथ पुनरर्थगृहीते कण्डूयने यावतोत्पन्ना कण्डूरपनीयते तावच्चिकीर्षितम् । तत्र विशेषो न गृह्यते । ननु यस्याङ्गस्य निष्कर्षणं कृतं तत् संस्कृतमङ्गान्तरे पुनः कर्त्तव्यम् । उच्यते । नाङ्गनिष्कर्षणार्थोऽयं यत्नः । किं तर्हि । कण्डूपनयनार्थः । सा च कण्डूरात्मनो न शरीरस्य । तत्र न गृह्यते विशेषः । तस्मात् सकृदेव प्रयोगः ॥ ४९ ॥ सिद्धान्तः ॥ प्रत्यङ्गं कण्डूयने मन्त्रतन्त्रताधिकरणम् ॥ १५ ॥

## स्वप्नदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥

ज्योतिष्टोमे स्वपनार्थो मन्त्रः, त्वमग्ने व्रतपा असीति । तत्रैव नदीतरणार्थः, देवीराप इति । तथाऽभिवृष्टस्य, उन्दतीरोजो धत्ते । अमेध्यप्रतिमन्त्रणस्य, अदब्धं चक्षुरिति । स यदा पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीन्तरति, सन्तानेन वाऽभिवृष्यते, अनेकं वा मेध्यमेककालं पश्यति, तत्र किं मन्त्रस्यावृत्तिः ? अथ वा

सकृदेव प्रयोग इति । तत्र विशेषाग्रहणादावृत्तौ प्राप्तायामुच्यते। स्वप्नादिषु चैवम् । यथा कण्डूयने सकृत्प्रयोग इत्यर्थः । कृत्स्नां रात्रिमसावुद्दिश्य स्वप्नमन्त्रं प्रयुङ्क्ते,नैकान्निद्राम्। तथा सर्वस्रोतांसि तितीर्षु' सर्वाभिवर्षाणि सर्वामेध्यानि च युगपत् सर्वेषामुपगमात् तत्र न गृह्यते विशेषः। तस्मादनावृत्तिर्मन्त्रस्य ॥ ५० ॥ सि० ॥ स्वप्न-नदीतरणादिमन्त्रतन्त्रताधिकरणम् ॥ १६ ॥

## प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥

दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्र । भद्रादभिश्रेयः प्रेहीति । तत्र विचार्यते । किं विश्रामे पुनः पुनः प्रतिष्ठमानो मन्त्रं प्रयुञ्जीत सकृदेवादाविति । विशेषाग्रहणात् प्रतिप्रस्थानमिति प्राप्ते, उच्यते। प्रयाणे त्वार्थनिर्वृत्तेः । अर्थमसावुद्दिश्य प्रतिष्ठते। आर्थनिर्वृत्तेस्तस्य प्रस्थानाभिसम्बन्धः । तस्मात् सकृदेव प्रयोक्तव्य ॥ ५१ ॥ सि० ॥ प्रयाणे मन्त्रतन्त्रताधिकरणम् ॥ १७ ॥

## उपरवमन्त्रस्तन्त्रं स्याल्लोकवद् बहुवचनात् ॥ ५२ ॥

ज्योतिष्टोमे उपरवमन्त्रः, रक्षोहणो बलगहनो वैष्णवान् खनामीति। तत्र सन्देहः। किं सर्वोपरवेषु सकृदेव मन्त्रः प्रयोक्तव्यः? उत प्रत्युपरवमिति । किं प्राप्तम् । उपरवमन्त्रस्तन्त्रं स्यात्। सकृदेव प्रयोक्तव्यः। कुतः। बहुवचनात्। बहुवचनान्तोऽयं, वैष्णवान् खनामीति। यदि प्रत्युपरवं प्रयुज्येत, एकस्मिन् बहुवचनान्ताभिधानं न साधयेल्लोकवत्। यथा लोके एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते। अपि च सकृदुक्त एकः शक्नोति सर्वोपरवानभिधातुम् । शक्नोति चेदावृत्तिरनर्थिका । तस्मात् सकृदेव प्रयोक्तव्यः ॥ ५२ ॥ पूर्व० ॥ पीठपादचतुष्टयाकारो बाहुमात्रो गर्त्तभेद उपरवः ॥

## न सन्निपातित्वादसन्निपातिकर्मणां विशेष-ग्रहणे कालैकत्वात् ॥ ५३ ॥

नैव तन्त्रं स्यात् । कुतः । सन्निपातित्वात् । सन्निपातिखननकर्मणा येनोपरवेण सन्निपतितं तदर्थमेव विज्ञायते। मन्त्रोऽपि चाऽर्थसन्निपाती मन्त्रान्तेन । कर्मादिसन्निपातादतो यस्योपरवस्यायं मन्त्रः सन्निपतितस्तस्यैव मन्त्रकारितः संस्कारो, न सर्वेषाम् । अतो न सकृत् प्रयोक्तव्यः । असन्निपातिकर्मणां विशेषा-

ग्रहणे कालैकत्वात् सकृद्वचने ये त्वसन्निपातिकर्मणां मन्त्राः यथा सुब्रह्मण्याह्वाने देवा ब्रह्माणइति औपवसथ्येऽहनि तेषामेककालत्वाद्गृह्यमाणविशेषाणां सकृद्वचनं स्यात्। यत्तु न बहुवचनान्त एकस्याभिधायक इति । प्रातिपदिकार्थोऽभिहितो विभक्त्यर्थश्च कर्मत्वम्। वचनार्थः केवलो नाभिहितः। स च नैवाभिधानमर्हति। अभिधायकस्य शब्दस्याभावात् । एकस्यैव वा पूजार्थे बहुवचनम् । तस्मादविरोधः ॥ ५३ ॥ सि० ॥ उपरवमन्त्रभेदाधिकरणम् ॥ १८ ॥

## हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात् ॥ ५४ ॥

इदं सूत्रं पूर्वसूत्रप्रत्युदाहरणार्थम्। कालैकत्वादिति। किमर्थं हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यादिति । अथ वा अधिकरणान्तरम् । ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशास्तेषु हविष्कृदाह्वानम्। वाजपेये क्रतुपशव प्राजापत्याश्च । तत्राध्रिगुप्रैषः । कृष्णग्रीवयोः पुरोऽनुवाक्यामनोतासूक्तं च । तेषु चिन्ता । किं तस्यतस्य सकृत्प्रयोग', अथवाऽऽवृत्त्येति सहत्वानुग्रहाय सकृदिति प्राप्त उच्यते । आवृत्तिः स्यादिति । कुतः । कालभेदात् । प्रातःसवने यद्धविष्कृदाह्वानमध्रिगुप्रैषश्च तस्य कालभेदाद्गृह्यते विशेषः।प्रातःसवनीयानां पुरोडाशानामयं हविष्कृत्क्रतुपशूनां चाध्रिगुरिति । तथा कृष्णग्रीवयोःसौम्येन व्यवायात्पूर्वस्य कृष्णग्रीवस्येयं पुरोऽनुवाक्या मनोता चेति । सर्वत्र कालो न भिद्यते । कालभेदाद् गृह्यते विशेषः। तस्मादावृत्तिः ॥ ५४ ॥ प्रत्युत्तरम् ॥

## अध्रिगोश्च विपर्यासात् ॥ ५५ ॥

अध्रिगोश्चायमपरो विशेषो विपर्यासः स्यात् तन्त्रभावे अध्रिगोर्ये पुरस्तात् पदार्थाः प्राजापत्यानां यथा पश्वालम्भ आश्रुते प्रत्याश्रुते अजैदग्निरिति मन्त्रः । ते यदि तावत् प्रात.सवने क्रियन्त पर्यग्निकरणान्तं काण्डमोत्सृष्टं भवति । अथ मा भूदेष दोष इति अह्नसान्नि क्रियन्ते, तथापि विपर्यासः कृतो भवति । पुरस्तादध्रिगोः कर्त्तव्यानां पुरस्तात् करणंन। तस्मादप्यावृत्तिः ॥५५॥ प्रत्युत्तरम् ॥

किञ्च,

## करिष्यद्वचनात् ॥ ५६ ॥

या चेयमध्रिगोर्विभक्तिः, आरब्धमुपनयतेति। सा प्राप्तकालं करिष्यमाणं ब्रूते। स यदि प्रातःसवन उच्यते अप्राप्तकालत्वात् पदार्थस्यासमर्थः स्यात्। अथ प्रेषणार्थो, तथापि प्रेषणं वृत्त्यर्थम्। न च प्राजापत्येषु तत् प्रवृत्त्यर्थं युज्यते। बहूनां कर्मराशीनां व्यवायान्नष्टः प्रेषणप्रत्ययो भवति। तथाऽप्यसमर्थः। तस्मादप्यध्रिगोरावृत्तिरिति सिद्धान्तः ॥ ५६ ॥ ॥ हेतुः ॥ हविष्कृदादिमन्त्रभेदाऽधिकरणम् ॥ १९ ॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य चतुर्थः पादः समाप्तः ॥ ११ ॥ ४ ॥ एकादशोऽध्यायश्च सम्पूर्णः ॥ ११ ॥

## अथ द्वादशाध्यायस्य प्रथमः पादः ॥ १२ ॥ १ ॥

एकादशेऽध्याये तन्त्रावापलक्षणं व्याख्यातम्। अधुना प्रसङ्गलक्षणं द्वादशे व्याख्यायते। प्रसङ्गशब्दार्थोऽन्यैरुक्तः। एवमेव प्रसङ्गः स्याद् विद्यमाने स्वके विधाविति। अन्यत्र कृतस्याप्यन्यत्राऽऽसक्तिः प्रसङ्गः। यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम्। तदिह प्रसङ्ग एवादौ विचिन्त्यते। अग्नीषोमीयपशौ पुरोडाशः। अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपेदिति। किं तस्य पृथक्त्वेनाङ्गानि कर्त्तव्यानि? उत यानि पशौ कृतानि तस्याप्युपकुर्वन्तीति। ततः सूत्रेणैवोपक्रमः।

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदः स्याद् विधिप्रक्रमतादर्थ्यात् श्रुतिकालनिर्देशात् ॥ १ ॥**

तन्त्रं साधारणो धर्मग्रामः। यथा दर्शपूर्णमासयोराज्यभागादिः पूर्वः, स्विष्टकृदादिरुत्तरः। स येषां प्रधानानां तानि तन्त्रीणि प्रधानानि। तेषां तु समवाय एकदेशकालकर्तृत्वे चोदनातः। समानानामेकवाक्यचोदितानामेकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोर्यथा च चित्रायामिष्टौ। अतुल्येषु तु भेदः स्यात् ॥

यानि तु चोदनातो न तुल्यानि, नाना वा वाक्यैश्चोदितानि तेषु तु भेदः स्यात् तन्त्रस्य। यथाऽत्रैवाग्नीषोमीयं पशुमालभेत अग्नी-

षोमीयं पशुपुरोडाशमेकादशकपालं निर्वपतीति । किं कारणम् । विधिप्रक्रमताद्र्थ्यात् । विधिर्विधानं तदङ्गानां प्रयोगः । तस्य प्रक्रमः तदर्था प्रवृत्तिः । विधिप्रक्रमतादर्थ्ये विज्ञायते । अयं पश्वर्थो विधिप्रक्रमो, न पुरोडाशार्थ इति । कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य तादर्थ्यम् ? । श्रुतिकालनिर्देशात् । श्रुत्या तत्र कालो निर्दिश्यते । अग्नीषोमीयप्रणयनादनन्तरं पशोः कालः । तत्र तस्य चोदना । वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः । पशोरवसरे यो विधिप्रक्रमः स केवलः पश्वर्थो विज्ञायते, पुरोडाशस्याप्राप्तत्वात् । अतस्तस्य पृथक् तन्त्रं कर्त्तव्यम् । लिङ्गञ्च पश्वर्थतां तन्त्रस्य दर्शयति । यदेकादश प्रयाजान् यजति पशुमेव तत् प्रयजति । यदेकादशानुयाजान् यजति पशुमेव तदनुयजतीति । एवकारकरणादवधारणं विज्ञायते, पशुमेव, न पुरोडाशमिति ॥ १ ॥ पूर्व० ॥

## गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

अपि च पाशुकाः प्रयाजानुयाजा गुणतः कालतश्च विकृता एकादशसंख्याः । पशावुभये वा पञ्चभिश्च प्रयाजैस्त्रिभिरनुयाजैः पुरोडाशस्य कार्यम् । तथाऽऽपदाज्येनानुयाजाः पशोरिज्यन्ते केवलेन आज्येन च पुरोडाशस्यार्थः कालविकारेऽपि चासन्ने हविषि पौरोडाशिकैः प्रयाजैर्भवितव्यम् । पाशुकास्तु तिष्ठति पशौ वर्त्तन्ते । तिष्ठन्तं पशुं प्रयजन्तीति वचनात् । उभयेऽपि पुरोडाशस्य पृथक्त्वे वा क्रियमाणा यथा सम्पादिता भवेयुः । तस्मादपि तन्त्रभेदः ॥ २ ॥ आ० ॥

## तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥

अथ वा नैव भेदेन पुरोडाशस्य तन्त्रं कर्त्तव्यम् । किं तर्हि मुख्यतन्त्रेण सिद्धिः स्यात् । पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्यात् । किं कारणम् । तन्त्रमध्ये विधानात् । पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः । अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपतीति । किमतस्तन्त्रार्थस्याविशिष्टत्वं भवतीति । तन्त्रस्यार्थस्तन्त्रार्थः । अङ्गकृत उपकारः । सोऽत्राविशिष्टः पुरोडाशस्य च सन्निधानाऽविशेषात् पशावपि क्रियमाणान्यङ्गानि पुरोडाशस्य सन्निहितानि । सन्निधानाच्च पशोरप्युपकुर्वन्ति प्र-

दीपवद् । यथा प्रासादे कृतः प्रदीप सन्निधानाद्राजमार्गेऽप्युपकरोति । विषम उपन्यास । स खलु प्रत्यक्षेण ज्ञायते । अयं पुनरप्रत्यक्षोऽङ्गोपकारः कथं शक्यो विज्ञातुमिति । अयमपि शास्त्रदृश्य शास्त्रप्रत्ययाद्गम्यते । शास्त्रं चेद् दर्शपूर्णमासवत् कर्त्तव्यानीति । तद्यथेत् कृतानि किमिति नोपकरिष्यन्ति । दर्शपूर्णमासयोः स्वप्रधानैरेकदेशकालकर्तृकाणि क्रियमाणान्युपकृतवन्ति । इहापि तथाविधान्येव क्रियन्ते । तस्मादिहापि तद्वदेवोपकुर्वन्तीति विज्ञायते । आह । नेह तद्विधानानि दर्शपूर्णमासयोः स्वप्रधानान्युद्दिश्य कृतान्यङ्गानि । इहापि तद्वदेव कर्त्तव्यानि । न च पुरोडाशमुद्दिश्य कृतान्यङ्गानीहापि तद्वदेव कर्त्तव्यानि । न च पुरोडाशमुद्दिश्येह क्रियन्ते। किं तर्हि । पशुम । तस्मात् पुरोडाशस्य न प्रकृतिवद् विकृतानि भवन्तीत्युच्यते। प्रकृतौ न शब्द उपदेशः । नहि तत्र श्रूयते, प्रधानान्युद्दिश्याङ्गानि कर्त्तव्यानीति । किं तर्हि । अर्थात् क्रियन्ते । तेषां तत्र चिकीर्षितत्वात् । न चार्थात् कृतं चोदकेन प्राप्यते, यत्कारणं विध्यन्तरम् । तत्राक्षेपात् कृतान्यङ्गानि इहापि तद्वदेव कर्त्तव्यानि । न च पुरोडाशमुद्दिश्य तेन समुच्चितं तत्प्राप्यते न पाठाद् बाह्यम् । तस्मात् त्वनुद्दिश्यापि क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति । एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः । नन्वेवं सति तत्र लक्षणविशिष्टमेव भवति । न खलु तन्त्राङ्गमेव साधारणम् । इह त्वङ्गकृत एवोपकारः । सोऽपि न साधारणः । अन्यकृतोऽन्यस्य भवति ॥ ३ ॥ सि० ॥

## विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥

अथ यदुक्तं गुणकालविकाराच्च तन्त्रभेदः स्यादिति । तत्र ब्रूमः । विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् । अथाङ्गजनित उपकार. स न विकृतयोर्दर्शपूर्णमासयोः । स एव कथं ज्ञायते । तदुच्यते । प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः । तत्र प्रयाजानुयाजशब्दौ प्रज्ञायेते । ते च चोदकेनेह प्राप्ताः सन्निहिता विद्यन्ते। प्रकृतिगामित्वं च शब्दस्य न्याय्यम्। न चैकः शब्दोऽनेकार्थो युक्त । तस्माद्दार्शपौर्णमासिको ह्येतदुपकारोऽप्येषां दार्शपौर्णमासिक एव। स हि तेषां प्रज्ञातः । यदि च प्रकृतादुपकारादुपकारान्तर प्रकुर्य्युः । ततोऽप्राकृतकार्य्यत्वान्नैव चोदकेन प्राप्येरन् । अपूर्वा भवेयुः । यथा सत्रे

गौग्गुलवादिभिरभ्यञ्जनम् । अप्राप्तौ वाऽनेनैव प्रयाजा विधीयन्ते । अनेनैव प्राप्येरन् । तत्र द्विकरः शब्दः स्यात् । न च सकृदुच्चरितः शक्तो ह्यर्थद्वयं विधातुम् । अपूर्वत्वे चैतेषाम् अकृता अपि चोदकेन प्राप्येरन् । तत्र वैश्वदेवे त्रिंशत् सम्पत्तिराहुतीनां न युज्यन्ते । न च प्रयाजाद् न चानुयाजाद्वाज्यभागौ अष्टौ हवींषि अग्नये समवद्यति वाजिनो यजत्याहुतीनां सम्पत्त्यै त्रिंशत्त्वायेति । तस्माद् गुणविकारेऽप्यविकृतः प्राकृतोऽङ्गोपकारः । तत्कृता एव पुरोडाशस्याप्युपकुर्वन्तीति न गुणकालविकारं तन्त्रभेदः । तदानीं तमुभौ प्रार्थयेते पशुः पुरोडाशश्च । उभयोश्च प्रकृतिवत् क्रियन्तेऽङ्गानि । तस्मात् सकृत्कृतान्येवोभयोरुपकुर्वन्ति । विकार इदानीं किमर्थः, पश्वर्थः । पाशुकेषु हि प्रयाजानुयाजेषु श्रूयन्ते, न तु पशोः पुरोडाशस्य च । न चाऽसाधारणान्यङ्गानि पाशुकान्येव सन्निधानात् पुरोडाशस्याप्युपकुर्वन्तीत्युक्तम् । अपि च, पृषदाज्येनापीज्यमाना अनुयाजा आज्येनेष्टा भवन्ति । न हि पृथक्त्वे आज्यत्वं नाशयति । यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते न कश्चिद्विरोधो भवति । सशर्करमपि पय एवेति । तथा य एकादश प्रयाजान् यजतीति । असौ तदन्तर्गतान् प्राकृतान् पञ्च यजत्योऽधिकाः षड् न तैरिज्यमानैः पञ्च प्राकृता नष्टा भवन्ति । एवं तिष्ठत्यपि पशौ क्रियमाणाः प्रयाजाः कृता एव पुरोडाशस्य भवन्ति । क्रमस्तेषां प्राकृतो ह्यापितो गुणमात्रश्च क्रमः । न च गुणानुग्रहार्थं प्रधानस्यावृत्तिर्युक्ता । न च गुणवशवर्ति प्रधानं कामं क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत् । नावृत्तिः । प्रायश्चित्तं तर्हि कर्त्तव्यम् । क्रियते यो ह्यग्नौ सति सर्वं प्रायश्चित्तं जुहोतीति प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । तस्मादविरोधः ॥ ४ ॥ पूर्व० आ० नि० ॥

## एकेषां वा शक्यत्वात् ॥ ५ ॥

एकेषां वा शक्यभेदेन क्रिया । यथा वेदेरग्न्युद्धरणस्य व्रतोपायनस्येति । वेदिः कृता नवपृक्ता तिष्ठति न शक्या कर्तुम् । न ह्यर्थः कृतः सन् कर्तुं शक्यते । अयोच्यते । अन्यां करिष्यतीति ॥५॥ आ०॥

## आहोपुरीषकं स्यात् ॥ ६ ॥

तिर्यक् चासौ भवेत्तत्र दिक् संयुज्येत । विहारपृथक्त्वे वाऽश्रुत-

आपद्येत। तत्रैकदेशकालकर्तृकत्वमङ्गप्रधानानामिति स्थितो न्यायः प्रत्युद्ध्रियेत। एवमप्युद्धरणं तदाहवनीयनिर्वृत्त्यर्थम्। सकृदुद्धारणेन च निवर्त्तितोऽसौ। न च निवर्त्तिते शक्यो निवर्त्तयितुम्। यथा कृतः कर्तुं न। अथोच्यते। अन्यं निवर्त्तयिष्यतीति। न तास्मिन्ननुपरते द्वितीयस्तत्राहवनीयोऽस्ति। यत्कारणं गार्हपत्याहवनीयावुभावेकास्थौ। आहवनीयेऽपपातिते परिशिष्टो गार्हपत्यो भवति। यथा सर्वसाधारणध्रौवादाज्यादुपांशुयाजार्थेऽपपातिते परिशिष्टमन्यदेतदर्थं भवति। विहारपृथक्त्वं च पूर्ववदापद्यते। तत्र पूर्वोक्ता एव दोषाः। तथा व्रतं यद् गृहीतं न तत् पुनरुत्सृष्टं शक्यते ग्रहीतुम्। अनुत्सृष्टञ्च तद् आप्रधानापवर्गात् ॥ ६ ॥ आ० नि० ॥

एकाग्निवच्च दर्शनम् ॥ ७ ॥

एकाग्निं पशोः पुरोडाशस्य च दर्शयति। मध्येऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुती पश्वाहुतीश्चेति नाग्न्युद्धरणस्य भेदः। तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रयुज्यत इति ॥ ७॥ हेतुः ॥ पशुपुरोडाशाऽधिकरणम् ॥ १ ॥

**जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रः प्रतिषेधः स्यात् ॥८॥**

तस्मिन्नेव पशुपुरोडाशे चिन्ता। किमाज्यभागौ कर्तव्यावुत नेति। आह। तत एतत् परीक्ष्यम्। किं प्रसङ्गेन चोदको बाध्यते। उत प्रयोगवचन इति। यदि चोदको बाध्यते। ततो न कर्त्तव्यावथ प्रयोगवचनस्ततः कर्त्तव्याविति। किं पुनरत्र युक्तम्। चोदको बाध्यत इति। किं कारणम्। आनुमानिकश्चोदकः, प्रत्यक्षः प्रयोगवचनः प्रत्यक्षं चानुमानाद् बलीयः। दुर्बलस्य च बाधो न्याय्यो, न च बलीयसः। एवं चेन्न कर्त्तव्यौ। चोदकेन हि तौ प्राप्येयाताम्। स चेह बाधितत्वान्नास्तीति। एवं प्राप्ते उच्यते। जैमिनेराचार्यस्य मतं, कर्त्तव्यावाज्यभागाविति। कुतः ?। यतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेध स्यात्। यस्य स्वस्य तन्त्रस्य कार्ये परतन्त्रमापद्यते तस्य प्रतिषेधः स्यात्। यथा पौरोडाशिकानां पाशुकम्। यस्य तु न किञ्चित् परकीयं कार्यमापद्यते तत्प्रतिषेधो न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्त्तते। न वस्त्रालङ्कारः। न चेह आज्यभागयोः कार्यं हीयते। न च किञ्चित् पाशुकमङ्गमापद्यते। त-

स्मात्तयोरनुवृत्तिः । यत्तु प्रयोगवचन इति । नैवात्र प्रयोगवचनस्य प्रवृत्तिः सा ह्यङ्गान्यप्रतिगृह्णीयात् पाशुकैरेव चाङ्गैः पुरोडाशोऽङ्गवान् । प्रत्यक्षो ह्ययं नाज्यभागौ गृह्णाति । प्रकरणसन्निहितमङ्गं प्रयोगवचनेन गृह्यते । न च पशौ आज्यभागौ विद्येते । प्रतिषिद्धत्वात् । तौ न सौम्येऽध्वरे न पशाविति । अपि च क्रमे तत्प्रयोगवच उत्पन्नानामङ्गानां ग्राहकश्श्रुत्या चोदको ग्राहकश्च । तस्मात् स बलवान् ॥ ८ ॥ पूर्वपक्षसिद्धान्तौ ॥ पशुपुरोडाशे आज्यभागाधिकरणम् ॥ २ ॥

## नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ९ ॥

सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि महावेद्यां वर्त्तन्ते तेषु चिन्ता । तेषां वेदिर्भेदेन कर्तव्या ? उत नेति । किं प्राप्तम् । भेदेन कर्तव्या । किं कारणम् । चोदकं प्रापयति । एवं चोदकानुग्रहो भवति । ननु सौमिके च प्रसङ्गात् कार्यं साधयेत् । अत्रोच्यते । न साधयेत् । कस्मात् । नानार्थत्वात् । नानार्थे एते वेदी दार्शपूर्णमासिकी हविषामासादनार्था । सौमिकी प्रधानार्था । तत्र प्रसङ्ग उपपद्यते । यत् तन्त्रिणोऽङ्गमध्यपात्यङ्गं न कार्यं तत् प्रसज्यते । यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु न त्विह तथा । तस्माद्वेदिः कर्त्तव्या ॥ ९ ॥ पूर्व०

## अकर्म वा कृतदृषा स्यात् ॥ १० ॥

न वा कर्त्तव्या दार्शिकी वेदिः । कुतः । कृतदृषा स्यात् । सा क्रियमाणा केवलं सौमिक्या वेदेः कृताया दूषणं स्यात् । न किञ्चित् स्वार्थं साधयति । ननु हविषामासादनं तत् कारिष्यते । शक्यं तु तन्महावेद्यामपि कर्त्तुम् । नन्वन्यार्था सेत्युक्तम् । अन्यार्थापि सती हविषामासादनेऽधिकरणं भवितुं प्रभवति । वेद्यां हविषामासादनं श्रुतम् । इयमपि च वेदिः, न तत्र तदर्थायामनदर्थायां वेत्येष विशेषः श्रूयते । तस्मान्न कर्त्तव्या ॥ १० ॥ सि० ॥ सोमे वेद्यभेदाधिकरणम् ॥ ३ ॥

## पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ ११ ॥

सोम एव यानि दर्शपूर्णमासप्रकृतीनि ग्रहचमसं प्रयुक्ते वर्त्तन्ते । यथा सातत: पशुः सावनाः पुरोडाशाः सोम्यश्चरुरिति । तेषु विचार्यते । किं तेषां ग्रहैश्चमसैर्वा होमः कर्त्तव्यः, अथ वा दार्शिकैः स्रुवादिभिः पात्रैरिति । तत्रोच्यते । पात्रेषु च प्रसङ्गः स्यात् । कुतः ।

होमार्थत्वात्। होमार्थानि तानि पात्राणि। स च होमो ग्रहचमसेनाऽपि निर्वर्त्यते। सोमतन्त्रमध्यपतितानि कर्माणि। तेषु ग्रहैश्चमसैर्वा होमः कर्त्तव्यः॥ ११॥ पूर्व०॥

## न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात्॥१२॥

न्याय्यानि वा दार्शपूर्णमासिकानि स्युः। तैर्होमः क्रियते। कुतः। प्रयुक्तत्वात्। प्रयुक्तानि तानि विद्यन्ते। यद् गृहीत्वाज्यान्यासादयन्ति न यजमानमुपहन्तीति प्रथमं तावत्तेषां प्रयोगः। प्रोक्षणं संमार्जनं च। तत आज्यग्रहणम्। तान्येवाज्यप्रयुक्तानि विद्यन्ते। अप्रयुक्ते प्रसङ्गः स्यात्। यन्मध्यपातिनोऽङ्गं न प्रयुक्तं तत्कार्यं तन्त्रिणोऽङ्गं प्रसज्ज्यते। स्वस्याभावे हि परकीयमुपजीव्यते। असन्निहितेऽपि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति। सन्निहिते तु स्वयानेनैव हि याति। तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखं न तादृशं परयाने। पुरोडाशानामपि दार्शिकैः पात्रैर्यादृशं सादृगुण्यं तादृशं ग्रहचमसैर्न। न तत्र प्राकृत्यो वृक्षजातयः प्रोक्षणादयश्च संस्कारा लभ्यन्ते। ग्रहचमसे तेषामभावेऽपि सौमिकास्तैः पुरोडाशानामसम्बन्धः। यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः। किं ग्रहचमसं प्रसज्ज्येत। नेति ब्रूमः। दार्शिकान्येव प्रसज्ज्येरन्। तन्त्रं तन्त्रिणोऽङ्गं क्रियमाणमितरस्यापि कृतं भवति। तत्र प्रसङ्गो यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। इह तु ग्रहचमसे प्रयुक्तो,नेतराणि प्रयुक्तानि भवन्ति। न हि सोमे हूयमाने पुरोडाशा हुताः। तस्मादस्त्यत्र प्रसङ्गः। किं तर्हीदमुच्यते। अप्रयुक्ते प्रसङ्गः स्यादिति। यदि प्रयोग एषां नोपपद्यते, प्रतिषिद्ध्येत। तावतः प्रसङ्गः स्यादित्यर्थः। अपि च न्याय्यानि दार्शपूर्णमासिकानि, न ग्रहचमसम्। किं तेषां न्याय्यत्वं दर्शपूर्णमासयोः। तानि शब्देनोक्तानि। ततश्चोदकेन पुरोडाशे अतिदिश्यन्ते। अस्ति शब्दसंस्पर्शः। ग्रहचमसेन, न तु हविर्येन्नन कश्चिद्धोमः श्रुतः। अर्थात् क्रियते। असति शब्दोक्तेऽर्थक्रिया भवति। दर्शयति च। एतानि पात्राणि युनज्मि ते पृथिवीं ज्योतिषा सहेति। ध्रुवामभिमृशति। युनज्मि वाचमन्तरिक्षेण ते संहत्युपभृतं युनज्मि वाचं सह दिवा सूर्येणेति जुहूमिति। तस्मादेतैर्होमः कर्त्तव्यः॥ १२॥ सि०॥ दार्शिकपात्राधिकरणम्॥ ४॥

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १३ ॥**

पुरोडाश एव चिन्ता । किमेतस्य शामित्रेऽग्नौ श्रपणं कर्तव्यमुत शालामुखीय इति । तत्र स एव न्यायः । इतरस्य प्रयुक्तत्वादिति । गार्हपत्ये च हविषां श्रपणं श्रुतम् । स च प्रयुक्तो विद्यते शालामुखीये,एषोऽत ऊर्ध्वं गार्हपत्यो भवतीति । तस्मात्तत्र श्रपणं कर्त्तव्यम् ॥ १३ ॥ सि० ॥ शामित्रे पशुपुरोडाशाधिकरणम् ॥ ५ ॥

**श्रपणं वाऽग्निहोत्रस्य शालामुखीयेन स्यात् प्राजहितस्य विद्यमानत्वात् ॥ १४ ॥**

कौण्डपायिनामयने अग्निहोत्रे चिन्त्यते । किं तदीयस्य द्रव्यस्य शालामुखीये श्रपणमथवा प्राजहित इति । प्राजहित इति गार्हपत्यस्य पूर्वाचार्यसंज्ञा । अत्रापि स एव न्यायः । गार्हपत्ये श्रपणं श्रुतम् । स एव प्रयुक्तो विद्यते । अप्रयुक्ते च प्रसङ्गः स्यादिति । भूयांश्चात्र परिहारः । चोदकेन शालामुखीयः प्राप्यते । ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतम् । तच्च चोदकपरम्परया कौण्डपायिनामयनमागतम् । नामधेयेन तु प्राजहिते श्रपणं प्राप्यते । चोदकाच्च नामधेयशब्दो बलवत्तरः । तस्मात्तत्र श्रपणं कर्त्तव्यमिति ॥ १४ ॥ सि० ॥ प्राजहिते श्रपणाधिकरणम् ॥ ६ ॥

**हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १५ ॥**

कृते हविर्धाने यान्योपवसथ्यौष्टिकानि कर्माणि वर्त्तन्ते यथा, पशुपुरोडाशः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः । तेषु विचार्यते । किं तेषां निर्वापो हविर्धाने कर्त्तव्य ? अथवा नान्तरमुपादेयमिति । किं प्राप्तम् । हविर्धाने निर्वपणार्थं साधयेयाताम्, एकं वा । कुतः । प्रयुक्तत्वात् । प्रयुक्तमस्ति, शक्नोति च तेषां निर्वापं साधयितुम् । अन्यस्योपादाने केवलमनर्थको व्यापार आपद्यते । तस्मात्तयोरन्यतरेण निर्वापः कर्त्तव्यः ॥ १५ ॥ पूर्व० ॥

**असिद्धिर्वाऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात् ॥ १६ ॥**

असिद्धिर्वा हविर्धानाभ्यां निर्वापस्य, न ताभ्यां साधयितव्यम् ।

कुतः । प्रधानावैगुण्यात् । निर्वापस्य देशः । अपरेण गार्हपत्यं प्रागीषमनोवाञ्छितं भवति । तस्य दक्षिणचक्रमारुह्यानसोपाधि निर्वपतीति । यदि हविर्द्धाने निर्वापः क्रियते तद्देशं तन्नीयेत । तथा प्रधानं सोमकर्म विगुणं भवेत् । हविर्द्धानयोर्मन्त्रवच्च नियमवच्च प्रवर्तनं च कृतं तत् सर्वमनर्थकं स्यात् । अथ च पुनः क्रियेते, तथाप्यावृत्तिरश्रुतानुष्ठीयेत । अवैगुण्ये च प्रधानस्य प्रसवो युक्तः । यत्कारणं प्रधानस्य यो धर्मस्तमितरं न यथाश्रुतमुपजीवन्तीति । परवशत्वात् । यदि यथाश्रुतेनास्य कार्यं न सिद्ध्यतीति ततः कामं कार्यलोपो भवेत् । स्वं वा साधनं प्रयुञ्जीत, न शक्नुयात् प्रधानकार्यं व्यावहृत्य स्वार्थं साधयितुम् । अथ कस्माद्धविर्द्धाने देशे निर्वापो न क्रियते । एवमपि तेषां कर्मणा वैगुण्यं भवेत् । सन्त्युत्तरतन्त्रोपजीवीन्येतानि यथावस्थितं परतन्त्रमुपजीवितुमर्हन्ति । यथा पाशुकान् प्रयाजानन्यकालानपि पशुपुरोडाश उपजीवन्ति । उच्यते । उक्तं तत्र प्रकृतास्ते प्रयाजाः । न च कृतस्य क्रमानुग्रहार्थं पुनः क्रिया न्याय्या । अयं पुनः करिष्यमाणो निर्वापः शक्यते कर्तुम् । स यदि सगुणः शक्यते कर्तुम् । तथा सगुणः कर्त्तव्यः । शक्यते च नोत्तरमुपादेयं तस्माच्च हविर्द्धानयोर्निर्वापः ॥१६॥ सि०॥ हविर्द्धानयोर्निर्वापाधिकरणम् ॥७॥

## अनसाञ्च दर्शनात् ॥ १७ ॥

अनोबहुत्वञ्च दृश्यते । अनांसि प्रवर्त्तयन्तीति । तस्मादप्यनोऽन्तरमुपादेयमिति ॥ १७ ॥ सि० ॥ अनोऽन्तराधिकरणम् ॥ ८ ॥

## तद्युक्तत्वञ्च कालभेदात् ॥ १८ ॥

सोमदीक्षाकालरात्रिजागरणमाम्नातम् । यां प्रथमां दीक्षितो रात्रिं जागर्ति तया स्वप्नेन व्यावर्त्तेत इति । दर्शपूर्णमासयोरप्यौपवसथ्येऽहन्येवमाम्नातं तत् प्रायणीयादिषु चोदकेन प्राप्यते । तेषां तत्र मध्यपातिदीक्षाकालेनैव जागरणेन प्रसङ्गात् कार्य्यसिद्धौ प्राप्तायामिदमुच्यते । तद्युक्तञ्च दीक्षायुक्तञ्च जागरणं, नेतरेषु प्रसज्ज्येत । कुतः । कालभेदात् । यदि तावद् यज्ञाङ्गानां रक्षणायाप्रसादार्थं ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्ति । इति तद्रक्षणार्थं प्रायणीयादिष्वौपवसथकाले भेदेन कर्त्तव्यम् । अथाप्यदृष्टार्थम् । तथाप्यौपवसथी रात्रिस्तस्य निमित्तम् । निमित्तप्राप्तौ नैमित्तिकं कर्त्तव्यम् । तस्माद्भेदेन कर्त्तव्यम् ॥ १८ ॥ पूर्वपक्षसिद्धान्तौ ॥ दीक्षाजागरण-

भेदाधिकरणम् ॥ ९ ॥

## मन्त्राश्च सन्निपातित्वात् ॥ १९ ॥

वरुणप्रघासेषु विहारपृथक्त्वे सति ये मन्त्राः सन्निपातिनो यथाज्यग्रहणं प्रोक्षणेऽभिमर्शने, तेषां किं तन्त्रेण प्रयोगः ? अथ वा भेदेनेति । तन्त्रावापचिन्तेयं, न प्रसङ्गचिन्ता । तत्र प्रयोगवचनानुग्रहाय तन्त्रभावे प्राप्ते, उच्यते । मन्त्राश्चाज्यग्रहणादयो भेदेन कर्त्तव्याः । कुतः । सन्निपातित्वात् । सन्निपत्योपकारिण एते मन्त्रा उपस्थितं कर्माऽभिदधाति । पृथक्कर्माण्यध्वर्युप्रतिप्रस्थातारावुपतिष्ठेते । तस्मात् पृथक् प्रयोक्तव्या. अपि च कारणानां मन्त्राः । तेन कर्मादिसन्निपातं वक्ष्यति । मन्त्राणां कारणार्थत्वात् । तत्र कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वादिति । तथा सति येन कर्म्मणा सन्निपतितो मन्त्रस्तदर्थोऽसाविति गृह्यते विशेषः । तस्मादभ्यावृत्तिः ॥ १९ ॥
विहारपृथक्त्वे तन्त्रावापाधिकरणम् ॥ १० ॥

## धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते ॥ २० ॥

सोमे दीक्षणीयादिष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं किं कर्त्तव्यमुत नेति । कर्त्तव्यम् । एवं चोदकोऽनुगृहीतो भविष्यति । एवं प्राप्ते, उच्यते । न कर्त्तव्यम् । कुतः? धारणार्थत्वात् । विधृतस्याग्नेर्धारणार्थं तत्, सोमार्थेन च विधृतस्य तत्कृतम् । तेन धृतोऽग्निः । न च धृतस्य धारणकार्य्यमस्ति । नन्वमन्त्रकं तत् । सत्यममन्त्रकमपि तु तत्कृतम् । न च कृतस्य मन्त्रार्थं पुनरावृत्तिरस्ति । तस्मान्न कर्त्तव्यम् ॥ २० ॥ सि० ॥ सोमेऽग्न्याधानाधिकरणम् ॥ ११ ॥

## तथा व्रतमुपेतत्वात् ॥ २१ ॥

तत्रैव दार्शपौर्णमासिकं व्रतं चोदकप्राप्तं तथैव न क्रियते यथाऽग्न्यन्वाधानमुपेतत्वात् । न ह्युपेतमनपवृक्तं सच्छक्यमुपेतुम् अप्राप्तस्य हि प्रापणमुपगमनं तत्प्राप्तस्य न शक्यम् ॥ २१ ॥ सि० ॥

## विप्रतिषेधाच्च ॥ २२ ॥

अग्ने व्रतपते व्रतं चरिष्यामीति वरणनो वचनं विप्रतिषिद्धम् । वर्त्तमानस्य भविष्यद्वचः ॥ २२ ॥ हेतुः ॥

## सत्यवदिति चेत् ॥ २३ ॥

अथ सत्यवत् कस्मान्न भवति । यथा सत्यवचनं व्रतं पुरुषधर्म-

त्वादनुवर्त्तमानमपि दर्शपूर्णमासयोः पुनरुपेयत इति स्थितायां प्रतिज्ञायां सूत्रेण चोदयति ॥ २३ ॥ आ० ॥

न संयोगपृथक्त्वात् ॥ २४ ॥

तत्र पुरुषसंयोगः कर्म्मसंयोगश्च । पुरुषार्थमुपेतं कर्म्मार्थे पुनरुपेयते । नन्विहापि संयोगपृथक्त्वात् सोमार्थमुपेतमैष्टिकार्थे पुनरुपेयते इति । नेह उपगमनेनार्थः । यत् सोमार्थं तदेवेतरत्र प्रसङ्गात् कार्यं साधयति । नन्विहापि तद्वदेव साधयिष्यति । साधयेद् यदि कर्मार्थता तस्याज्ञाताचेत् । सा त्विहैव ज्ञाप्यते । ऐष्टिकानां तु प्रकृतौ ज्ञाता । तस्मिन् सत्यदृष्टान्तः।किमर्थम्।ज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयाध्याये व्याख्यातः॥२४॥ आ०नि० ॥ दार्शपौर्णमासिकव्रताधिकरणम् ॥ १२ ॥

ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २५ ॥

पूर्वोक्तमग्न्यन्वाधानं सौमिकं प्रसङ्गादैष्टिकेषु कार्यं साधयतीत्युक्तम् । तदिदानीमाक्षिप्यते । धारणार्थत्वात्तस्य प्रसङ्ग उक्तः । न च तत्केवलं धारणार्थं, किं तर्हि, धारणार्थञ्च देवतापरिग्रहार्थञ्च । एवं हि दर्शपूर्णमासयोः श्रूयते, ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाति देवता एव तत्पूर्वेद्युर्गृहीताः श्वो भूते यजते इति । तत्र यद्यपि धारणार्थं सौमिकेन प्रसङ्गादेतत् सिद्ध्यति । देवतापरिग्रहार्थं तद्दार्शपौर्णमासिकमैष्टिकेषु कर्म्मसु कर्त्तव्यम् । आह । नैतद् युक्तम् । देवतापरिग्रहार्थमपि प्रसङ्गादेव सिद्ध्यति । कुतः । इष्टेस्तदर्थत्वात् । सोमेऽपि दीक्षणीयेष्टिर्देवतापरिग्रहार्था श्रूयते । आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपेद्दीक्षिष्यमाणः । अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यज्ञञ्च तदुभयतः परिगृह्य दीक्षन्त इति । सैव देवतापरिग्रहणार्था प्रसङ्गादैष्टिकानां साधयिष्यतीति ॥ २५ ॥ आ० ॥

शेषवदिति चेन्न वैश्वदेवो हि स्याद्
व्यपदेशात् ॥ २६ ॥

उच्यते, न सिद्ध्यति, दीक्षणीया, न देवतापरिग्रहणे वर्त्तते । शेषास्त्वङ्गाङ्गानां देवता अपरिगृहीतास्तत्परिग्रहार्थं दार्शपौर्णमासिक-

मैष्टिकेषु कर्त्तव्यमिति चेन्न कर्त्तव्यम् । दीक्षणीयैव प्रसङ्गाद्देवतापरिग्रहार्था सेत्स्यति ' ननु प्रधानदेवतापरिग्रहार्था दीक्षणीयेत्युक्तम्। प्रधानदेवतार्था सत्यङ्गदेवतां गृह्णाति । कथम् । वैश्वदेवो हि । अस्ति सोमे वैश्वदेवो ग्रहयज्ञ । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये चाङ्गदेवता अपि । तस्मात्ताः परिगृहीताः । अनेन तत्परिग्रहार्थेनैष्टिकेनाग्न्यन्वाधानार्थेन नार्थः स्याद् व्यपदेशात् । स्यान्नार्थः । ऐष्टिकेनाग्न्यन्वाधानेन नाङ्गदेवतापरिग्रहणम् । ननु विश्वेदेवा इज्यन्त इति परिगृहीताः । न तत्र सर्वा देवता इज्यन्ते । किं तर्हि ? विशेषदेवतागणः । यथा साध्या वसवो रुद्रा इति । कथं ज्ञायते । व्यपदेशात् । व्यपदेशो भवति । अग्निर्वसुभिः सोमो रुद्रैरिन्द्रैर्मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वेदेवैरिति वस्वादिभ्योऽर्थान्तरभूतान् विश्वेदेवान् दर्शयति। यदि च सर्वे देवा उच्येरन् विश्वेदेवशब्देन तेभ्योऽर्थान्तरभूता न स्युः । तस्माद्विश्वेदेवशब्दो गणवचन एव । एवं वेदपरिगृहीता अङ्गदेवतास्तदर्थमैष्टिकमग्न्यन्वाधानं कर्त्तव्यम् ॥ २६ ॥ आ० ॥

## न गुणार्थत्वात् ॥ २७ ॥

नानेन व्यपदेशेन गणो विश्वेदेवः शक्यः कल्पयितुम् । गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रसङ्गार्थः । अग्न्यादयो वस्वादिभिः केवलैः समेताः । बृहस्पतिस्तत्सर्वैस्तैश्चान्यैश्चेति । यथा सेनापतिर्भृत्यबलेन सहागतः समाहर्त्ता निजेन बलेन राजा तु सर्वैर्बलैस्तैश्चान्यैश्चेति । अपि च । वैश्वदेवो गणः कल्प्यः । सर्वे तु देवाः शब्दादेवावगम्यन्ते । तथाच दीक्षणीययाऽङ्गदेवतापरिग्रहेऽपि प्रसङ्गात् सिद्ध्यतीति न कर्त्तव्यं दार्शपौर्णमासिकमैष्टिकेष्वग्न्यन्वाधानम् ॥ २७ ॥ हेतुराशङ्कानिरासश्च ॥ देवतापरिग्रहाधिकरणम् ॥ १३ ॥

## सन्नहनश्च वृत्तत्वात् ॥ २८ ॥

पत्न्याः सन्नहनं च दर्शपूर्णमासयोः समाम्नातम् योक्त्रेण पत्नीं सन्नह्यतीति । तत् सोमाङ्गभूतेष्वैष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्त्तव्यम् । कुतः । वृत्तत्वात् । दीक्षाकाले सोमार्थे पत्न्याः सन्नहनं वृत्तं योक्त्रेण पत्नीं संनह्यति । मेखलया दीक्षितं मिथुनत्वायेति । यदाम्नातं सन्नहनं च वाससो धारणार्थं सर्वार्थमसौमिकेनैवाऽकर्मापवर्गात् प्रसङ्गेन सिद्ध्यतीति ॥ २८ ॥ सि० ॥ पत्नीसन्नहनाधिकरणम् ॥ १४ ॥

अन्यविधानादारण्यभोजनं न स्यादुभयं वृत्त्यर्थम् ॥ २९ ॥

दर्शपूर्णमासयोरारण्यभोजनमाम्नातम्। यदारण्यानश्नाति तेनारण्यानथो इन्द्रियमेवात्मनो धत्ते इति तत्प्रायणीयादिषु चोदकेन प्राप्यते। प्राप्तमपि सन्न कर्त्तव्यम्। किं कारणम्। अन्यविधानात्। यद्दर्शपूर्णमासयोरारण्यभोजनं तद्वृत्त्यर्थम्। सोमेऽप्येतदाम्नातं, पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्येति। तदपि दृष्टकार्य्यत्वाद् वृत्त्यर्थमेव तयोः सौमिकं प्रत्यक्षं श्रुतत्वात् प्राधान्याच्चावश्यं कार्यम्। तेन वृत्तौ प्रसङ्गात् सिद्धायामितरन्निवर्त्तते ॥ २९ ॥ पूर्वपक्षसिद्धान्तौ ॥ आरण्यभोजनाधिकरणम् ॥ १५ ॥

शेषभक्षास्तथेतिचेन्नान्यार्थत्वात् ॥ ३० ॥

दर्शपूर्णमासयोः शेषभक्ष एडादिः सोमे वैष्टिकेषु कर्मसु चोदकप्राप्तः। सोऽपि सौमिकेन व्रतेनारण्यवन्निवर्त्तेत इति चेद् न। कस्मात्। न स वृत्त्यर्थः। न ह्यलं वृत्तये संस्कारार्थोऽसौ उपयुक्तशेषत्वाद् भक्षणमिति द्वितीयानिर्देशाच्च। यजमानपञ्चमा ऋत्विज इडां भक्षयन्तीति। तस्मात् कर्त्तव्यम् ॥ ३० ॥ पूर्वे०नि० ॥ शेषभक्षाधिकरणम् ॥ १६ ॥

भृतत्वाच्च परिक्रयः ॥ ३१ ॥

दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य्य आम्नातः, इह चोदकेन प्राप्तः सन्न कर्त्तव्यः। कुतः। भृतत्वात्। भृतास्त ऋत्विजः सोमार्थेन परिक्रयेण, तस्य द्वादशशतं दक्षिणेति। एकदेशकालकर्तृत्वं चाङ्गप्रधानानाम्। तस्मात्तैरेवाङ्गानि कर्त्तव्यानि। अतो न पृथगङ्गानां परिक्रयः। तस्मादन्वाहार्य्यो निवर्त्तते ॥ ३१ ॥ सि० ॥

शेषभक्षास्तथेति चेत् ॥ ३२ ॥

अथ शेषभक्षा अपि तथा निवर्त्तेरन् यथा अन्वाहार्य्य इति चेत्, परिक्रयार्थः शङ्क्योच्यते ॥ ३२ ॥ आ० ॥

न कर्मसंयोगात् ॥ ३३ ॥

नेति निवर्त्तेरन्। न ह्येते परिक्रयार्थाः। अन्वाहार्य्येण किमर्थेयमानतानां निर्वृत्तिर्भूयिष्ठे कर्मण्येते। न चाऽलमानमनाय। तस्मान्नैते परिक्रयार्थाः, किन्तु संस्कारार्थाः। अतस्तदर्थं कर्त्तव्या ॥ ३३ ॥ आ० नि० ॥ परिक्रयाधिकरणम् ॥ १७ ॥

प्रवृत्तवरणात् प्रतितन्त्रवरणात् प्रतितन्त्रवरणं होतुः क्रियेत ॥ ३४ ॥

दर्शपूर्णमासयोर्होतुर्वरणमाम्नातम् । अग्निर्देवो दैव्यो होता देवान् यक्षदिति । तस्मादर्केनैष्टिकेषु कर्म्मसु सोमाङ्गभूतेषु चोद्यते। अस्ति तु सोमेऽपि होतुर्वरणम्, अग्निर्होता स मे होता होतस्त्वं मे होताऽसीति । होतारं वृणीत इति । तत्र विचार्य्यते । किमैष्टिकेषु कर्म्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्त्तव्यम्, उत नेति। किं प्राप्तम् न कर्त्तव्यमिति कस्मात् । करणं तावदानत्यर्थं, सौमिकेन च वरणेनानतिर्होतुः । साऽङ्गस्य सोमस्य करणेन चानतस्यानमनकार्य्यमस्ति । तस्मान्न कर्त्तव्यम् । एवं प्राप्ते ब्रूमः । प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियते । नैतदस्ति । सौमिकं वरणं प्रसङ्गाद्दर्शपूर्णमासिकस्य कार्यं साधयिष्यतीति । प्रवृत्ते वरणात् प्रवृत्ते कर्म्मणीति दार्शपौर्णमासिकं वरणं क्रियेत।अतस्तत्रानत्यर्थं,किं तर्हि, कर्म्ममात्रं, नचेत् क्रियेत तेन गुणे वैगुण्यं स्यात् ।तस्मात् प्रतिकर्म्मभेदेन कर्त्तव्यम् ॥३४॥ पूर्व०सि०

ब्रह्मापीति चेत् ॥ ३५ ॥

इति चेत् पश्यसि प्रवृत्तवरणाद्धोतुर्वरणं प्रति कर्म्म कर्त्तव्यमिति । ब्रह्मापि प्रवृत्ते कर्म्मणि क्रियते प्रणीता प्रणयनकाले तस्मात्तस्यापि वरणं धर्ममात्रम् । अतस्तदपि प्रतिकर्म्म कर्त्तव्यम् । वक्तव्यो वा विशेषः ॥ ३५ ॥ आ० ॥

न प्राग् नियमात्तदर्थं हि ॥ ३६ ॥

न ब्रह्मवरणं कर्त्तव्यं, किं कारणं, प्राङ्नियमात् प्राग् वरणादित्यर्थः । सत्यम् । प्रवृत्ते कर्मणि ब्रह्मणो वरणं प्राग्वरणान्न किञ्चिद् ब्रह्मत्वमस्ति वरणादुत्तरकालं ब्रह्मणः कर्म्म, तदर्थं वरणं कर्म्मार्थम् । ततस्मान्न धर्म्ममात्रम् । किमर्थं तर्हि । आनत्यर्थमेव । सौमिकेन वरणेनाऽऽनतः । तस्माद् ब्रह्मवरणं न कर्त्तव्यम् ॥ ३६ ॥ आ० नि० ॥

निर्दिष्टस्येति चेत् ॥ ३७ ॥

अथोच्येत । अस्त्यमावास्यायामौपवसथ्येऽहनि वेदिं कर्म्मनिर्दिष्टं पूर्वेद्युरमावास्यायां वेदिं करोतीति । तत्र वेदिपरिग्रहे प्रसवो ब्रह्मणा क्रियते । तेन ब्रह्मापि वृत्तवरण इति ॥ ३७ ॥

नाश्रुतत्वात् ॥ ३८ ॥

पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं, न परिग्रहणम्। अश्रुतत्वात्। यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्मार्थत्वात्। न प्राग् वेदिकरणात् पूर्वं परिग्रहः। तत्रापि ब्रह्मणा प्रसवो दातव्यः। बाढम्। अयं तर्ह्यन्यः परिहारः। दर्शपूर्णमासप्रकरणे हविषामधिवासनादूर्ध्वं वेदिकरणमाम्नातम्। ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राग् जन्मत्वप्रवृत्ते दृष्टार्थत्वाद्दानत्यर्थम्। एवं स्थिते अमावास्यायां वेदिकरणं वचनेनोपदिष्टम्।तस्मिन्नपकृष्यमाणे परिग्रहोऽप्यपकृष्टः प्रसवोऽपि ब्रह्मवरणमपि प्रधानदेशकालत्वाद् गुणानाम्। एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणममावास्यायां पूर्वेद्युरुभयत्राप्रवृत्ते ब्रह्मत्वे। तस्मादुभयत्रानत्यर्थम्।अतो न प्रतिकर्म ब्रह्मवरणं कर्त्तव्यम्। सौमिकेनैव वरणेनानतत्वाद् ब्रह्मण.॥ ३८॥ आ० नि०॥

## होतुस्तथेति चेत्॥ ३९॥

इति चेत् पश्यसि। यद्यपि प्रवृत्ते कर्मणि ब्रह्मणो वरणं, न च वरणात् प्राक् किञ्चिद् ब्रह्मण कर्मास्ति। तस्मान्न प्रवृत्तवरणे ब्रह्मेति। होतुस्तथा होतुरपि प्राग् वरणान्न किञ्चित् कर्मास्ति। तस्यापि वरणं न धर्ममात्रम्॥ ३९॥ आ०॥

## न कर्मसंयोगात्॥ ४०॥

अस्ति होतुः प्राग्वरणात् सामिधेनीकर्मणा संयोगः प्रवृत्तः। सामिधेनीरन्वाहेति। तस्माद्धोतृवरणमदृष्टार्थम्। तदैष्टिकेषु कर्मसु दीक्षादिषु कर्त्तव्यम्। ब्रह्मवरणं तु दृष्टार्थम्। तत् सौमिकेनैव कृतत्वान्न कर्त्तव्यमिति॥ ४०॥ आ० नि०॥ होतृवरणाधिकरणम्॥ १८॥

## यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्। प्रतितन्त्रं क्रियेत॥ ४१॥

सोमे श्रूयते। यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येति। तत्र यन्निष्ठितस्य बर्हिषो लूनस्य क्रियते तथा प्रोक्षणमग्राणामपपातनं मूलानामवसेचनं तत् किमातिथ्यादिप्रयोगभेदेन कर्त्तव्यम्। अथवा यदातिथ्यायां कृतं तदेवेतरत्र प्रसज्ज्यते। किं प्राप्तम्। यज्ञोत्पत्त्युपदेशे एकस्मिन् यदातिथ्यायां बर्हिस्तदुपसदामिति। यन्नियतमिति कर्म क्रियेत। तत्प्रयोगभेदाद्भिन्नम्। भिन्नप्रयोगाण्येतानि आतिथ्यादीनि कर्माणि, तेषु गृह्यते विशेष.। यद् यस्य प्रयोगे प्रोक्षणादि-

कृतं तदर्थमिति तस्मादन्यार्थमावर्त्तयितव्यमिति।एवं प्रतिकर्माऽभ्यासः न चात्र प्रसङ्गो युज्यते । न ह्यातिथ्यायास्तन्त्रमध्यपातिना उपसद् अग्नीषोमीयो वा । न च कृतत्वादुपदेशो हि । न वा प्रोक्षणादि कर्त्तव्यम् । कुतः ? । कृतत्वात् । कृतं तदातिथ्यायां बर्हिषः । तेन संस्कृतं तद् बर्हिः पुन क्रियायां हेतुर्नास्ति । ननु कर्मार्थाः संस्काराः । न कर्म भिन्नम् । अतो यस्मिन्नेव कर्माणि क्रियन्ते तदर्था भवन्ति । कर्मार्था अप्येते सन्तानास्कन्दपातिका यत् कर्माणि न सम्बद्ध्यन्ते । किं तर्हि बर्हिर्द्वारेण यदीयं बर्हिः तेन सम्बद्ध्यते । साधारणं चेदमातिथ्यादीनां बर्हिः । कथं ज्ञायते । तदुपदेशो हि यदातिथ्यायां बर्हिरित्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते । न धर्मातिदेशः। न हि निरिष्टिकोपदेश इत्युक्तम् । अपि चोत्पत्तिसंयोगात्तदर्थसम्बन्धो विशिष्टानां प्रयोगैकत्वे हेतुः स्यादिति । एवं चेदातिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति । तस्मान्न प्रतिकर्त्तव्या इति ॥४१॥ पूर्व० सि० ॥ बर्हिःप्रोक्षणाधिकरणम् ॥१९॥

## देशपृथक्त्वान्मन्त्रो व्यावर्त्तेत ॥ ४२ ॥

तत्रैव स्तरणमन्त्रश्चिन्त्यते । किमग्नीषोमीये भेदेन कर्त्तव्यः ? अथवा आतिथ्यायां प्रयुक्तः स एव प्रसज्ज्यत इति । साधारणे बर्हिषि प्रयोगात् पूर्वोक्तेन न्यायेन प्रसङ्गे प्राप्ते, उच्यते । मन्त्रो व्यावर्त्तेत । भेदेन कर्त्तव्य इति । कुतः । देशपृथक्त्वात् । पृथग्गतौ देशौ उत्तरवेदिसमीपं प्राग्वंशश्च । देशभेदात् स्तरणमावर्त्तेत । स्तरणाङ्गश्च मन्त्रः । ऊर्णाम्रदसं त्वा स्तृणामीति स्तरणावृत्तौ मन्त्रस्य व्यावृत्तिर्न्याय्या । प्रधानतन्त्रत्वाद् गुणानामपि च स्तरणं देशसंस्कारकम् । तेनातिथ्यायां प्राग्वंशदेशः संस्कृतो, नोत्तरवेदिदेशः । तत्र यदि मन्त्रो न प्रयुज्येत विगुणस्तस्य संस्कारः स्यात् । तस्मादावृत्तिस्तरणमन्त्रस्य ॥ ४२ ॥ पूर्व० सि० ॥ तत्र स्तरणमन्त्रस्याऽप्रसङ्गाधिकरणम् ॥ २० ॥

## सन्नहनहरणे तथेति चेत् ॥ ४३ ॥

अग्नीषोमीय एव देशान्तरं नीयमानस्य बर्हिषः सन्नहनहरणमन्त्रौ प्रयोक्तव्यौ वा नेति चिन्त्यते । तत्राह सन्नहनहरणमन्त्रौ तथा यथा स्तरणमन्त्रः । भेदेन प्रयोक्तव्याविस्यर्थः । कुतः । उक्तो न्यायः

सन्नहनहरणमन्त्रौ कर्माङ्गे । ते च कर्मणि आवर्त्तेते । अतो मन्त्रयोरावृत्तिर्न्याय्या । तस्माद्भेदः ॥ ४३ ॥ पूर्व० ॥

नान्यार्थत्वात् ॥ ४४ ॥

नैतद्युक्तम् । कुतः । अन्यार्थत्वात् । लूनस्य बर्हिषो ये सन्नहनहरणे ते उपादानार्थे । तथाहि स्वीक्रियमाणस्यैवोपवर्णनारूपं, पूषा ते ग्रन्थिं ग्रथ्नातु बृहस्पतेर्मूर्ध्ना हरामीति । इमे पुन स्वीकृतस्य देशान्तरप्रापणार्थे अन्यार्थत्वादप्राकृतकार्येण मन्त्रे गृह्यीतः । यथा तत्रैवातिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्ष्य बर्हिर्नीयते न तदाहरणमन्त्र प्रयुज्यते । एवमिहापि ॥ ४४ ॥ सि० ॥ सन्नहनहरणमन्त्राधिकरणम् ॥ २१ ॥ इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य प्रथमः पाद ॥ १२ ॥ १ ॥

अथ द्वादशाध्याये द्वितीयः पादः ॥ १२ ॥ २ ॥

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥

विहार इति गार्हपत्यादिरग्नित्रेतोच्यते विहरणात् । स लौकिकानां कर्मणां पर्वणां स्थालीपाकादीनामन्येषां वा अग्निसाध्यानां पचनदहनप्रकाशनादीनामर्थं साधयेद् निर्वृत्तिं कुर्यात् प्रभुत्वात् । प्रभवति ह्याहुतिप्रक्षेपणे पाकादौ च संयुक्तं च केनचित् प्रयोजनेनाग्निद्रव्यमुत्पन्नं, वसन्तेऽग्नीनादधीतेति । तत्सामर्थ्याद् यत्र यत्रोपयुज्यते तत्र तत्रोपयुज्यते । एवं तस्योत्पत्तिरर्थवती भवति ॥ १ ॥ पूर्व० ॥

मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥

मांसपाकप्रतिषेधो भवति तद्वत् । यद्वन्न्यायोऽपदिष्टः, मांसं न पचेयुः । यस्मिन्नग्नौ ये च पचेयुः क्रव्यादं कुर्युरिति । लौकिके हि पाके मांसप्रसङ्गो, न वैदिके शामित्रे मांसपाकः ॥ २ ॥ हेतुः ॥

निर्देशाद् वा वैदिकानां स्यात् ॥ ३ ॥

वैदिकानां वा कर्मणां विहारोऽर्थं साधयेन्न लौकिकानाम् । कुतः। निर्देशात् । निर्दिश्यते, गार्हपत्यादीनां कार्यम् । यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवतीत्येवमादिभिर्वाक्यैर्यासावुत्पन्ना कार्याकाङ्क्षा सा एतैर्वचनैर्निवर्त्तिता एवमर्थं वैषामुत्पत्ति । तस्मान्न लौकिकेषु प्रसज्ज्येरन् । माठरादीनामयं परिहारो, न स्थालीपा-

कादीनाम् । तेषामप्याहवनीय एव होमः प्राप्नोति । नैष दोषः । यदाहवनीये जुहोतीति नियमार्थ एष वादः । अन्तरेणापि हि वचनमाहवनीये होमोऽन्यत्र च प्राप्तः । तदेतद् नियमशासनं यत्रानियमप्रसङ्गस्तद्विषयो विज्ञायते । वैदिकेषु चानियमप्रसङ्ग आगतः । आयतनस्यानिर्दिष्टत्वात् । लौकिकानां तु निर्दिष्टमायतनम् औपासनोऽग्निः । तस्मान्न तान्याहवनीये प्रसज्ज्येरन् ॥ ३ ॥ सि० ॥

## सति चोपासनस्य दर्शनात् ॥ ४ ॥

सति च विहारे औपासनोऽग्निर्दृश्यते, यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति । तस्यौपासने प्रतिहतमन्या जुहुयादिति । राजसूये प्रवृत्ते कर्मणि एतद्वचनम् । तस्मिंश्च काले विहारोऽस्ति । यदि च तत्रैव लौकिकानां कार्यं साधयेत् । यदि च सत्यां तस्यां नोपासनकार्यभावात् स्यात् ॥ ४ ॥ हेतुः ॥

## अभावदर्शनाच्च ॥ ५ ॥

मांसपाकस्य च वैहारिकेऽग्नावभावं दर्शयति । मांसीयति वा एतस्याहुतस्याग्नयो यजमानस्य ते यजमानमेव ध्यायन्ति । यजमानं सङ्कल्पयन्ति पचन्ति ह वा अन्येष्वग्निषु वृथामांसमप्येतेषां नानोऽन्या मांसाशा विद्यते । अन्यत्र पशुबन्धान्मांसस्याशनमेव वैहारिकाणामग्नीनां परिहरति । तस्मादपि न लौकिकेषु विहारप्रसङ्गः ॥५॥ हेतुः

## मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात ॥ ६ ॥

यत्तु मांसपाकप्रतिषेधश्च तद्वादिति । तद्विहितप्रतिषेधः स्यात् । आहवनीये वपायाः श्रपणं विहितम् । तस्यायं प्रतिषेधः । कस्मात् । प्राप्तत्वाद् आहुतिसंयोगाच्च । तस्माच्चाग्नौ मांसं पचति, यस्मिन्नाहुतीर्जुहोति । संयोगवाक्यशेषे श्रूयते । आहवनीये चाहुतयो हूयन्तेऽस्माद्वपाश्रपणस्यायं प्रतिषेधः ॥ ६ ॥ आ० नि० ॥

## वाक्यशेषो वा दक्षिणस्मिन्ननारभ्य विधानस्य ॥ ७ ॥

अथवाऽयमन्यः परिहारः । दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं विशेषः । अन्यत्र मांसादिति । या सरस्वतीं वशमतीति पशुपुरोडाशो न स्यात् । न कर्त्तव्यः । कुतः । छिद्रापिधानार्थत्वात् । योऽसौ दक्षिणाग्नौ होमस्तत्रैतच्छ्रूयते । तस्माद्दक्षिणाग्न्यभिप्रायं विज्ञायते ॥७॥ आ० नि०

विहारे लौकिककार्यप्रतिषेधाधिकरणम् ॥ १ ॥

## सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥

पशुपुरोडाशो न कर्त्तव्यः । कुतः । छिद्रापिधानार्थत्वात् । पशोश्छिद्रापिधानार्थः स एवं प्रस्तूयते, सुषिरो वैतर्हि पशुर्बर्हिर्वपामुत्खिदति यद् व्रीहिमयः पुरोडाशो भवत्यपिधानायाऽसुषिरायेति । अन्येषां चैवमर्थत्वात् तच्छिद्रापिधानमन्यैरेव क्रियते सवनीयैः पुरोडाशैः । तत्रापि श्रूयते अनुसवनीयाः पुरोडाशा निरूप्यन्ते पिहित्यै अच्छिद्रतायाः इति । अतः कृतार्थत्वात् पशुपुरोडाशो निवर्त्तते ॥ ८ ॥ पूर्व० ॥

## क्रिया वा देवतार्थत्वात् ॥ ९ ॥

कर्त्तव्यो वा पशुपुरोडाशः । कुतः । देवतार्थत्वात् । देवतासंस्कारार्थोऽयमित्येतदुक्तम् । अपि वा शेषभूतत्वात् संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगादिति । न च पुरोडाशश्छिद्रापिधानार्थः प्रत्यक्षविरोधात् । अर्थवादमात्रं तत् पुरोडाशपिधानार्थे वादमात्रे सवनीयेष्वित्येवमेवायात्तस्माच्चोदकप्राप्त्या कार्यः पुरोडाशः ॥९॥ सि०

## लिङ्गदर्शनाच्च ॥ १० ॥

यथा प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवन इति । तन्त्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति । तस्मादपि कार्यः ॥ १० ॥ हेतुः ॥ पशुपुरोडाशाधिकरणम् ॥ २ ॥

## हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद् विद्यमानत्वात् ॥ ११ ॥

सवनीयेषु पुरोडाशेषु हविष्कृदाह्वानं न कर्त्तव्यम् । कुतः । पशुं प्रत्याहूताऽसौ, पशुमध्यपतिताश्च सवनीयाः । तेषु सैव विद्यमानत्वात् प्रसङ्गादुपयोक्ष्यते । नार्थः पुनराह्वानेन । नैव पशोर्हविष्कृदस्ति औषधार्था अवहननार्था वा । यथा पत्नीवत् तुल्यवच्छ्रूयत इति । तदूर्ध्वं वक्ष्यति । प्रकृतौ यदि सर्वार्था आद्यौषधिसान्नाय्यार्थेत्येवं कृत्वा चिन्त्यते । कृत्वा चिन्तेयम् ॥ ११ ॥ पूर्व० ॥

## पशौ तु संस्कृते विधानात् ॥ १२ ॥

तार्त्तीयसवनिकेषु पुरोडाशेषु तु सौम्याश्विनयोर्हविर्भेदेन हवि-

ष्कृत् स्यात् । कुतः । पशौ संस्कृते विधानात् । पक्वे पशावेते विधीयन्ते । तस्मिन् काले पाशुकी हविष्कृत् कृतार्थत्वादपवृत्ता । तस्मादन्या ह्वातव्या ॥ १२ ॥ पूर्व० ॥

**योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥**

न वान्या आह्वातव्या, सैव कुर्याद्विद्यमानत्वात् । न तु कृतार्थत्वादपवृक्तासौ नापवृज्यते । कुतः । यज्ञायासौ पशुबन्धापवृक्ता आदावेव न केवलं, सा यज्ञाङ्गानि सर्वाणि साधयितुम् । कस्त्वा युनक्ति स त्वा युनक्तीत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता तस्या यद्विमोकी विसर्गो न्याय्यः, तत् कारणं कस्याञ्चिदापदि पुनस्तथा कदाचित् कार्य्यं भवेत् । तस्मान्न भेदेनाह्वातव्या ॥ १३ ॥ सि० ॥ सवनीयेहविष्कृदाह्वानाधिकरणम् ॥ ३ ॥

**निशियज्ञे प्राकृतस्यापवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥**

इदं श्रूयते । अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेद् यो रक्षोभ्यो बिभीयादिति । पुनरपि तत्रैवामावास्यायां निशि यजेतेति । तस्मिन् किममावास्या तन्त्रं निशि प्रसज्ज्यते, उत नेति चिन्तायां पक्षः परिगृह्यते । निशियज्ञे प्राकृतस्यापवृत्तिरिति । अग्निनिशियज्ञे प्राकृतस्य तन्त्रस्यातन्त्रस्यापवृत्तिर्न प्रसज्ज्येत । कुतः । प्रत्यक्षशिष्टत्वात् । प्रत्यक्षशिष्टा इयमिष्टिः । अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपति यो रक्षोभ्यो बिभीयादिति उक्तम् । किमतः । तत एव विज्ञायते । स्वतन्त्रेयमुत्पन्ना, न कस्यचित् कर्मणस्तन्त्रं मध्ये, यथा पशुपुरोडाशोऽग्नीषोमीयस्य वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपतीति । यथा वैष्णवो वैश्वदेवस्य यद्यांऽस्वमृधैतया स्फ्यया आदिलष्येत तद्विष्णव उरुक्रमायावर्धेदिति । न त्वमावास्यायामित्यमावास्या कर्मणो मध्ये श्रुता । नामावास्याशब्दः कर्मवचनः । किं तर्हि । कालवचनः । काले श्रुतिः, कर्मणि लक्षणा । श्रुतिश्च लक्षणातो न्याय्या । न चेत् कस्यचित् कर्मणो मध्ये श्रूयते कस्य तन्त्रं ग्रहीष्यते । न तस्मात् स्वतन्त्रा ॥ १४ ॥ पूर्व० ॥

**कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥**

कालभेदाद् वाक्यभेदस्तावदमावास्यायां रात्रौ निशि यज्ञ. ।

प्रतिपद्यहन्यमावास्या । कालभेदेन वैगुण्यान्नामावास्यातन्त्रं निशि यज्ञस्योपकर्त्तुमर्हति। कथं तर्हि ।पाशुका प्रयाजास्तिष्ठति पशौ क्रियमाणाः सन्तस्तस्य पुरोडाशस्योपकुर्वन्ति । उक्तस्तत्र न्यायो, न कृतस्य गुणानुग्रहार्थमावृत्तिरस्तीति । इह पुनरकृतामावास्या । तस्माद्ऽवैगुण्याय स्वतन्त्रं कर्त्तव्यम् । वाक्यभेदाच्च भिन्नदेशे चैकवाक्ये अमावास्यायां यजेत, अमावास्यायां निशि यज्ञेनेति । एवं दर्शपूर्णमासप्रकरणे । एवं काम्यास्विष्टिषु । किमतः । यदि समानदेशे स्यातां ततोऽमावास्यायां यजेतेति आमावास्ये कर्मणि काल उपात्तस्तस्मिन्नेव च निशियज्ञश्चोदित इति गम्येत । तत्रामावस्यामध्य एव विहितः स्यात् । यथा पुनर्देशभेदे सति यथामावास्यायां यजेतेत्येकं दर्शपूर्णमासप्रकरणे, एकं काम्यास्विष्टिषु अनुपादेयत्वेन चोद्यते । एवमिहापि । न तुल्यकालत्वे प्रसङ्गो भवति । यथा विकृता इष्टयो दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यो न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति । तस्मात्तन्त्रभेदः ॥ १५ ॥सि० ॥निशि यज्ञाधिकरणम्॥४

**वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥**

किमेष एवोत्सर्गः सर्वतन्त्रं भिन्नम् । न खलु वेद्युद्धननं व्रतं तदेव यद्दर्शार्थे वेदेरुद्धननं कृतम् । तेनोद्धतायाः पुनरुद्धनने न हि किञ्चित् कार्यमस्ति । केवलं कृतदूषणं भवेत् । व्रतं चोपेतमनुत्सृष्टं पुनरुपेतुमशक्यम् । उपेयमानञ्च पिष्टपेषणवदकिञ्चित्करं स्यात् । तस्मादेतदुभयमपि तदेव प्रसज्यते ॥ १६ ॥ पूर्व० ॥

**तन्त्रमध्ये विधानाद् वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥**

तत्तन्त्रा वा निशीष्टिः स्यात् । आमावास्यातन्त्रेयं, न स्वतन्त्रा । कुतः । तन्त्रमध्ये विधानात् । आमावास्यातन्त्रमध्ये इयं विहिता, आमावस्यायां निशि निर्वपेदिति । न तु कालवचनोऽमावास्याशब्दो, न कर्मवचन इत्युक्तम् । सत्यं, कालवचनः । स तु कालस्तन्त्रमध्ये । तत्र विधीयमानत्वात् तन्त्रमध्ये विहिता भवति, सवनीयवत् । तद्यथा सवनीया पुरोडाशाः, न तावत् पशुकर्मोद्दिश्य विधीयन्ते । अथ च पशुतन्त्रमध्ये विहिता भवति । यस्मिन् स्थाने विहिता तत्स्थाने पशुतन्त्रा । इयमपि तन्त्रमध्ये पतिता । सवनीयभेदे च न स्वतन्त्रा भवितुमर्हति ॥ १७ ॥ सि० ॥ वेद्युद्धननाधिकरणम् ॥ ५ ॥

वैगुण्यादिध्मबर्हिर्न साधयेदग्न्यन्वाधानं च यदि देवतार्थम् ॥ १८ ॥

अत्राह । किमेष पर्वोत्सर्गः ? सर्वममावास्यातन्त्रनिशीष्ट्यर्थं साधयतीति । न खलु इध्माबर्हिर्न साधयेत् । कुतः । वैगुण्यात् । इध्मो नामाग्निसमिन्धनार्थः । स प्रतिपद्याहितः । अमावास्यायां निशि वर्तमानस्य निशि यज्ञस्याग्निसमिन्धनं साधयेद् बर्हिरपि वेदिस्तरणार्थम् । ते यदि प्रसज्ज्येयातां विगुणां निशियज्ञः स्यात् । तस्माद्भेदेन ते कर्त्तव्ये ॥ १८ ॥ पूर्व० सि० ॥ इध्मबर्हिरधिकरणम् ॥ ६ ॥

अग्न्यन्वाधानश्च यदि देवतार्थम् ॥ १९ ॥

यदि देवतापरिग्रहार्थमग्न्यन्वाधानं, तदपि भेदेन कर्त्तव्यम् । प्राकृतेनाग्न्यन्वाधानेनामावास्यादेवता परिगृहीता । न च रक्षोघ्नोऽग्निः । तत्परिग्रहार्थमप्यग्निधारणार्थम् । ततः प्राकृतेनैव धारितत्वादग्नेर्न कर्त्तव्यम् । देवतापरिग्रहार्थता वाक्यशेषे श्रूयते । ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णाति । देवता एव तत्पूर्वेद्युः परिगृहीताः । श्वो भूते हि यजत इति ॥ १९ ॥ पूर्व० सि० ॥ देवताऽर्थाऽग्न्यन्वाधानाधिकरणम् ॥ ७ ॥

अत्राशङ्कते,

आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन ॥ २० ॥

वैकृतेषु कर्मसु दार्शपौर्णमासिकारम्भणीया कर्त्तव्या, उत नेति । विचारेण कर्त्तव्येत्युच्यते । किं कारणम् । प्रकृतिकालमध्यत्वात् । प्रकृते दर्शपूर्णमासयोर्यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । तन्मध्ये वैकृतानि कर्माणि यत्तत्र कृता पुनस्तदर्थेन कृतस्य यावज्जीविकस्य प्रयोगस्यार्थेन आदौ कृतारम्भणीया ॥ २० ॥ पूर्व० ॥

सकृदारम्भसंयोगात् ॥ २१ ॥

एकः पुनरारम्भो यावज्जीवप्रयोगादित्युक्तम् । एवं सैव तेषां प्रसङ्गात् कार्यं साधयिष्यतीति । तस्मान्न तेषु भेदः स्यात् ॥ २१ ॥ हेतुः

स्याद्वा कालशेषभूतत्वात् ॥ २२ ॥

स्याद्वा विकृतिष्वारम्भणीया । कुतः । चोदकेन प्राप्यत इति ।

न तु प्रकृतिकालमध्यपातात् प्रसज्ज्यत इत्युक्तम् । न यावज्जीव-कालः । प्रकृतेः शेषभूतत्वात् कर्तृधर्मोऽसावित्युक्तम् । कर्त्तुर्वा श्रुति-संयोगादिति । योऽसौ कर्तृधर्मनियमः । तस्याकालः । प्रकृतेस्तु दर्श-पूर्णमासः स्वकालः । तस्मान्न दर्शपूर्णमासप्रयोगस्य तन्त्रमध्ये प्रतीमा विकृतयः । अतो न स्वारम्भणीया प्रसज्ज्यते । अन्यथा कृत्वा दोष उक्तोऽन्यथा परिहारः । दार्शपूर्णमासिके यावज्जीवं काल इति कृत्वा दोष उक्तः । नैयमिक इति परिहारः । पक्षान्तरैरपि परिहारा भवन्ति ॥ २२ ॥ सि० ॥

## आरम्भविभागाच्च ॥ २३ ॥

विभक्तः प्रकृतिविकृत्योरारम्भस्तद्वा प्रकृतिरुत्पन्नस्यैव हि कामेन निमित्तेन वा चोद्यते । अतस्तस्याः प्रकृत्यारम्भेणारम्भः । आरम्भ-भेदाच्च तन्निमित्ताया आरम्भणीयाया भेदः स्यात् । तस्माद्विकृति-ष्वारम्भणीया ॥ २३ ॥ हेतुः ॥ आरम्भणीयाधिकरणम् ॥ ८ ॥

पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः । ततो ज्योतिर्गौरायुरिति अहः । परिशिष्टेष्वेकादशाहिको धर्मः कर्तव्यः, उताग्निष्टुत इति । ननु सिद्धमेतत् । चोदकनामधेययोर्बलाबलपरीक्षायामेकाहिको धर्मः कर्त्तव्य इत्युक्तम् । न च क्रत्वभिधानादधिकानामशब्दत्वामिति । तथा सिद्धन्यायान्तरेणाक्षिप्यते । अथवा नाम्नामेव मिथश्चिन्ता ।

## विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मकत्वम् ॥ २४ ॥

विप्रतिषिद्धधर्माणामेतेषामग्निष्टुतश्चैकादशानां चाह्नां समवाय एतस्मिन् पञ्चदशरात्रे भूयसामेकादशानामह्नां सधर्मकत्वं स्यात् । तदीयो धर्मः कर्तव्यः । को हेतुः । भूयस्त्वमेव । बहुषु गुणसम्पन्नेषु महत् फलं भवति । एकस्मिन्नल्पं फलम् । एष लोके दृष्टान्तः । लोके एकादशसु प्रदीपेषु तैलवर्त्तिसम्पन्नेष्वेकस्मिन् गृहे महान् प्रकाशो भवति । विपर्यये अल्पः । किं पुनरिहोदाहरणम् । सुब्रह्मण्याग्निष्टुत्या-ग्नेयी । इतरेष्वहःस्वैन्द्री । तत्रैन्द्री कर्तव्या ॥ २४ ॥ सि० ॥ विप्रति-षिद्धधर्माणां समवाये भूयसां सधर्मकत्वाधिकरणम् ॥ ९ ॥

## मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २५ ॥

यत्र तुल्यसंख्यानां प्रधानानां धर्मविप्रतिषेधः । तत्र मुख्यधर्म-

कर्त्तव्यः । यथाग्नावैष्णवमेकादशकपालं निर्वपेत् संग्रामे । सारस्वतीं मेषीं वानस्पतये इति । तत्र मुख्यस्याग्नावैष्णवस्य कल्पो भवति । कुतः । पूर्वचोदनात् । पूर्वचोदितत्वात् । पाठक्रमेणापूर्वमाग्नावैष्णवः कर्त्तव्यः । तस्य धर्मा अप्रत्यनीकाः प्राप्नुवन्ति । उत्तरस्य तु पूर्वेण विरुद्धाः । तदुत्तरकाला हि तस्य प्राप्तिः । तद्धर्माणाञ्च पूर्वस्य कृते कल्पे उत्तरस्य तेनैव कृतार्थत्वात् । स्वकल्पो निवर्त्तेत । एकाधिकरण्यं चैके मन्यन्ते । तेषां पञ्चदशरात्रेऽपि मुख्यधर्माऽनुग्रहणं वा ॥ २५ ॥ सि० ॥

## तथा चान्यार्थदर्शनम् ॥ २६ ॥

अन्यार्थोऽपि पूर्वं प्राप्तस्य बलीयस्त्वं दर्शयति । अध्वरस्येव पूर्वमथाग्नेर्यीज्यते रूपाऽपि ह्येव कर्मवदग्निकर्मेति । इदं चापि यथा वै पूर्वावसायिनां जघन्यावसायिनं नोन्नीयन्ते नावसास्यन्नीत्येवमेवैतदिति ॥ २६ ॥ उदाहरणम् ॥ तुल्यसंख्यानां मुख्यधर्मग्रहणाऽधिकरणम् ॥ १० ॥

## अङ्गगुणविरोधे च तादर्थ्यात् ॥ २७ ॥

ज्योतिष्टोमे दीक्षणीया । आग्नावैष्णवमेकादशकपालान्निर्वपेद् दीक्षिष्यमाण इति तत्रैव । स सोम्यमहः तयोः पूर्वं कालो य इष्ट्या पशुना सोमेनाग्रयणेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेतेति वचनात् । यदा एका दीक्षा तिस्र उपसद इत्येवमादय कल्पास्तदा विरोधः । तत्र चिन्ता । किं दीक्षा पर्वणि कर्त्तव्या, अपर्वणि श्रुत्या, उत विपर्यय इति मुख्यत्वाद्दीक्षा कार्येति प्राप्ते, उच्यते । अङ्गगुणेन प्रधानगुणस्य विरोधे एतस्मिन्न गुणो बाध्येत । कुतः । तादर्थ्यात् । अङ्गगुणवत् क्रियते । प्रधानं सगुणं स्यादिति चेदङ्गे गुणवति क्रियमाणे विगुणमापद्यते, कोऽर्थोऽङ्गेनागुणवता कृतेन । तस्मात् पर्वणि श्रुत्या कर्त्तव्या, अपर्वणि दीक्षा ॥ २७ ॥ पूर्व०सि० ॥ ज्योतिष्टोमे दीक्षणीयाधिकरणम् ॥ ११ ॥

## परिधिश्चेदर्थत्वादुभयधर्मा स्यात् ॥ २८ ॥

पशुमत्सु चातुर्मास्येषु श्रूयन्ते । परिधौ पशुं नियुञ्जन्तीति । स परिधिरुभयधर्मा स्यात् । परिधिधर्मा यूपधर्मा च । कस्मात् । द्वयर्थत्वात् स करोति अग्नेश्च परिधानं पशोश्च प्राबल्यम् । अर्थप्रयुक्ताश्च

धर्माः। तस्मादुभये कर्त्तव्याः। अविरुद्धाश्च ये। यथा, यवमतीभिरद्भिः प्रोक्षणमञ्जनं परिव्याणमिति यूपधर्माः। इध्मसन्नहनं समानं जुहा वसुरसीत्येवमादिभिरञ्जनमभ्याश्रावणमिति परिधिधर्माः॥२८॥

## यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात्॥ २९॥

विरोधे तु सति यूपधर्माः। कस्मान्मुख्यानन्तर्यात्। मुख्यः पशुः। स हि यागं निर्वर्त्तयति। तस्यानन्तरो यूपः। सन्निपातित्वात्। तेन सोऽन्तरङ्गः परिधिस्त्वग्निना सम्बद्ध्यते, अग्निर्हविषा। स बहिरङ्गः। अन्तरङ्गबहिरङ्गयोश्चान्तरङ्गं बलीयः। तत् कस्य हेतोः। अत्र हि पूर्वं प्रत्ययो भवेत्। इमे धर्मा अपूर्वार्थाः। तत् साक्षादपूर्वेणासम्बद्ध्यमानास्तदङ्गेषु विज्ञायन्ते। अतस्तत्र बुद्धिरपूर्वोऽसम्भवेन निर्वर्त्तमानाऽङ्गेषु प्रवर्त्तमाना अन्तरङ्गे तावदापतति। ततो व्यवहिते। बहिरङ्गे च यत्र पूर्वमापतति तत्रैव तिष्ठति। तदतिक्रमे कारणाभावात्। तस्माद्विरोधे ये ये धर्मास्ते कर्त्तव्याः। कः पुनरसौ तक्षणमुच्छ्रयणं निखननमिति॥ २९॥ पूर्व०॥

## इतरो वा तस्य तत्र विधानादुभयोश्चाङ्गसंयोगः॥३०॥

इतरो वा यूपधर्मो वा अविरोधी कर्त्तव्यः। कुतः?। तस्य तत्र विधानात्। तस्य यूपकार्यस्य पशुनियोजनस्य तत्र परिधौ विधानात्। परिधौ पशुं नियुञ्जन्ति, अवस्थाप्य परिधित्वं नियोजनमुच्यते। तस्य परिधित्वानुपमर्देन विज्ञायते तथाभूतोपदेशात्। यथा खलेवाली यूपो भवतीति। यद्युच्छ्रयेत तक्ष्येद्वा परिधित्वमेव व्याहन्येत। सत्योक्तोऽसावुपशमश्च। तत्र परिधौ पशुं नियुञ्जन्तीत्येतदेव वा अयथार्थं स्यात्। उभयोश्च पक्षयोरङ्गेनैव धर्मस्य संयोगः। उभयोश्चाङ्गसंयोगो, न कश्चित् प्रधानेन प्रत्यासत्तिरिति। यश्च सत्योपकारविशेषः। तस्मादकरणं सा। अतः परिधिधर्मः कर्त्तव्यः॥ ३०॥ सि०॥ परिध्यधिकरणम्॥ १२॥

## पशुसवनीयेषु विकल्पः स्याद् वैकृतश्चेदुभयोरश्रुतिभूतत्वात्॥ ३१॥

सवनीये पशौ सवनीयेषु पुरोडाशेषु पुरोडाशे प्रसङ्गे विकल्पः स्यात्, पाशुकं वा तन्त्रं सवनीयेषु प्रसज्ज्यते। सवनीयतन्त्रं वा पशोः। कुतः। विशेषाभावात्। नात्र पुरोडाशाः पशुतन्त्रे विधीयन्ते, न पशु-

पुरोडाशतन्त्रे । उभयोः स्वतन्त्रम् आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति, अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्त इति । तत्र यदि कस्यचित् प्रत्यक्षशिष्टं स्यात् । कस्यचिदानुमानिकं तदा यस्य प्रत्यक्षशिष्टं स तन्त्री स्यादितरः प्रसङ्गभाक् । उभयोश्चाश्रुतभूतत्वम् । पशुरपि वैकृतः पुरोडाशा अपि । तेनायमपि विशेषो नास्ति । अत उभयोस्तुल्यप्राप्तेरन्यतरेण कृतार्थत्वाद्विकल्पः । ननु वैकृत एवायं पशुः । तत्र वैकृतश्चेति संशयवचनं न युक्तम् । अत्रोच्यते । असंशयितेऽपि संशयवादो भवति । यथा—ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः * शास्त्राणि चेत् प्रमाणं स्युर्यतस्ते परमा गतिः ॥ ३१ ॥ पूर्व० ॥

**पाशुकं वा वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३२ ॥**

पाशुकं वा तन्त्रं पुरोडाशेषु प्रसज्ज्यते । न विकल्पः स्यात् । कुतः । तस्य वैशेषिकाम्नानात् । पशोर्वैशेषिको धर्मस्तत्राम्नातः सूक्तवाकप्रैषः-अग्निमभ्येति । तदाम्नानमनर्थकं विकल्पे सति स्यात् । अन्तरेणापि ह्याम्नानं पक्षे भवत्येव सः । अत आम्नातसामर्थ्यात्तन्त्रोऽसौ । न च पौरोडाशिकं तन्त्रं प्रसज्ज्यते । स हि मैत्रावरुणेन प्रैषो वक्तव्यः । न च तत्र मैत्रावरुणोऽस्ति । दर्शपूर्णमासयोश्चत्वार ऋत्विज इति नियमात् । पशौ तु न सोऽस्ति । पशुतन्त्रे प्रसज्ज्यमाने न किञ्चिद्वैगुण्यम् । पुरोडाशतन्त्रे सति ऋत्विक्संख्या वा वर्जयितव्या, अमैत्रावरुणेन वायं प्रैषो वक्तव्यः । उभयथा प्रकृतिविरोधः । तस्मान्नियमेन पाशुकं तन्त्रं प्रसज्ज्यते ॥ ३२ ॥

**पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३३ ॥**

अपि च पशोस्तन्त्रस्य विप्रकर्षो वपया प्रातःसवनेन चरन्ति पुरोडाशेन मध्यन्दिने सवने अङ्गैस्तृतीयसवन इति । तस्य विप्रकृष्टत्वात्तन्त्रमध्ये पुरोडाशानां विधानं युज्यते । प्रातःसवनीयानां तु पुरोडाशानां तन्त्रं प्रातःसवन एवापवृज्यते । अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्त इति वचनात् । तन्मध्ये पशोः पातो न घटते पुरोडाशाङ्गप्रचारयोरव्यतिरेकात् । इह च प्रातःसवनीयैरेव सह पशोः सन्देहः । इतरे पुनः पुरोडाशा असंशयं पशोः प्रातःसवनीयानां वा तन्त्रमध्ये पतिताः । ननु आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति अनु-

याजानामुत्कर्षात् पौरोडाशिकमपि तन्त्रं प्रवर्तते । नेत्याह । अयमपि पाशुकानामनुयाजानामुत्कर्षः । कथं ज्ञायते । सोमाग्नेय्यरोः प्रतिपत्तिर्दृश्यते । संस्थिते यज्ञे प्रस्तरं प्रास्यति । चरुमयज्ञवैशसायेति । सा पश्वनुयाजैरुत्कृष्टस्य युज्यते, न पौरोडाशिके । तस्योत्कर्षो न प्राप्नोति । प्रासङ्गिकश्च नोत्कर्षेदसंयोगादिति । तेषां हि हविःप्रचारादूर्ध्वमवसरः । तद्वशाच्च उत्कर्षवादः । प्रातःसवनीयानान्तु ये अनुयाजा न ते तद्देशाः । अतो न तेषामुत्कर्षः । तस्मात् पाशुकं तन्त्रम् । अथ वचनमिदं कस्मान्न भवति । परिहृतमेतद्विकारवाक्यं स्यात् प्रतिपत्तिविशेषं कालं च विदधत् । तस्मात् पाशुकं तन्त्रं पुरोडाशेषु प्रसज्ज्यते, न विकल्पते इति ॥ ३३ ॥ हेतुः ॥ सवनीयपुरोडाशाधिकरणम् ॥ १३ ॥

अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३४ ॥

यदा प्रकृतिर्विकृत्या समानतन्त्रा तदा किं प्राकृतं तन्त्रं कर्तव्यम्, उत वैकृतम् । ननु नैव प्रकृतिर्विकृत्या समानतन्त्राऽस्ति । समानतन्त्रा चेदित्येवं कृत्वा चिन्तेयम् । किं प्राप्तम् । यदि पूर्वं प्रकृतिः प्रयुज्यते तत् प्राकृतम् । अथ विकृतिस्ततो वैकृतम् । किं पुनरत्र युक्तम् । प्रकृतिरिति नित्या प्रकृतिरागन्तुर्विकृतिरिति । कामे वा निमित्ते वोत्पन्ने आगच्छति पूर्वावसायिनश्च बलीयांसो जघन्यावसायिभ्यः । तस्मात् प्रकृतिः पूर्वं प्रयुज्ज्यते । तस्य तन्त्रं कर्तव्यम् । प्राप्तकालत्वात् । तस्मात् प्राकृतं तन्त्रं कर्तव्यमित्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । अपूर्वं च वैकृतं तन्त्रं प्रकृतेः प्रसज्ज्यते । समानतन्त्रा चेदनित्यत्वाद्विकृतेः कामे वा उत्पन्ने निमित्तेऽसावागच्छति । नैमित्तिकी चिकीर्षा तान्नित्यां चिकीर्षां बाधते । सत्यां हि नित्यायां सा भवति । अतस्तामबाधमाना नैवोत्पद्यते । यदि न बाध्येत अनर्थकं स्याद्वैकृतं विधानम् । तस्माद्वैकृतं तन्त्र प्रकृतौ प्रसज्ज्यत इति ॥ ३४ ॥ पूर्वपक्षसिद्धान्तौ ॥ ॥ समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रताधिकरणम् ॥ १४ ॥

आग्रयणे द्यावापृथिवीय एककपालः । स वैश्वदेविकैककपालप्रकृतिः । तस्य धर्मः प्रसूनं बर्हिरितरेषां प्रसूनमप्रसूनं वा । तत्र किम-

नियमः, उत प्रसूनमेवेति विचारः । आग्रयणे तु ऐन्द्राग्नस्य मुख्यत्वा-दनियमे प्राप्ते, उच्यते ।

**अधिकश्च गुणः साधारणे विरोधात् कांस्यभोजिवदमुख्येऽपि ॥ ३५ ॥**

साधारण एतस्मिन् दार्शपौर्णमासिके आग्नेयेन्द्रादीनां योऽय-मधिको गुणो द्यावापृथिवीयस्य वैशेषिकः सोऽपि मुख्येऽपि सति द्यावापृथिवीये नियम्येत । अविरोधात् । कांस्यभोजिवत् । तद्यथा शिष्यस्य कांस्यपात्रभोजित्वनियम उपाध्यायस्य न नियमः । यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते । अमुख्यस्यापि शिष्य-धर्मो नियम्येत मा भूद्धर्मलोप इति । एवमिहापि । तस्मान्न नियमः ॥ ३५ ॥ पूर्व० ॥

**तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३६ ॥**

तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ॥ ३६ ॥ पूर्व० ॥

**न वाऽविरोधात् ॥ ३७ ॥**

न वा नियम्यते । कुतः । अविरोधात् । अविरुद्धोऽयं धर्म इतरे-षामपि हविषाम् । तेन न वैशेषिकः । अवैशेषिकत्वान्न ततोऽन्यतर-न्नियन्तुं शक्नोति । वैशेषिकस्तु सूक्तवाकः । तस्मात् सोऽन्यतरं नियन्तुमुत्सहते ॥ ३७ ॥ सि० ॥

किञ्च,

**शास्त्रलक्षणत्वाच्च ॥ ३८ ॥**

न च शास्त्रविहिताः प्रसूनाः । किं तर्हि । चोदकप्राप्ताः । किम-तः । यदि शास्त्रविहिता भवेयुः ततस्तेन प्रकृतिलिङ्गेन वैश्वदेविकं तन्त्रं नियम्येत । एवं द्यावापृथिवीयधर्मत्वात् प्राप्तानामेव प्रसूनानां पुनर्वचनमानर्थक्यपरिहारलक्षणं वा वैश्वदेविकस्य तन्त्रस्य विधानं विज्ञायते । प्रसूनादितन्त्रं भवतीति न तच्छास्त्रलक्षणम् । तस्मान्ना-स्ति तन्त्रस्य नियम इति ॥ ३८ ॥ हेतुः ॥ आग्रयणेष्ट्यधिकरण-म् ॥ १५ ॥ इत्याचार्यश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशा-ऽध्यायस्य द्वितीयः पादः ॥ १२ ॥ २ ॥

अथ द्वादशाध्यायस्य तृतीय. पादः ॥ १२ ॥ ३ ॥

## विश्वजिति वत्सत्वग्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥

अस्त्यष्टरात्रोऽहीनः। तस्य विश्वजिदभिजितावाग्निष्टोमावभित उभयतो ज्योतिर्मध्ये षडहः पशुकामो ह्येतेन यजेतेति। विश्वजित्येकाहवत् सत्वगवभृथादुदेत्येतस्य परिधानार्थाम्नातां वत्सत्वचं परिधत्त इति, ज्योतिष्टोमे अहतं वासः, अष्टरात्रे उभयं प्राप्यते। तयोः परिधानयोरेकार्थत्वाद्विकल्पे प्राप्ते,

उच्यते। वत्सत्वक् स्यान्न विकल्पः। नामधेयेन वत्सत्वक् प्राप्यते। चोदकेनाहतम्। चोदकाच्च नामधेयशब्दो बलवत्तर इत्युक्तम्। अपिच वत्सत्वग्विधानादाधिकानामशब्दत्वमिति यदि नामधेयतः प्राप्तिर्न स्यात्ततो भूयस्त्वेन ज्योतिष्टोमप्रकृतीनामह्नामहतं स्यात्। अस्ति त्वसौ। तस्मान्नाहतं भवति। नन्वभिजिज्ज्योतिरिति ज्योतिष्टोमिकधर्मग्राहीण्येतानि नामधेयानि सन्ति। तथापि मुख्यत्वाद्विश्वजित एव बलवत्त्वम् ॥ १ ॥ पूर्व० ॥

## अविरोधो वा उपरिवासो हि वत्सत्वक् ॥ २ ॥

न वा नियमो, वत्सत्वगेवेति। किं तर्हि। समुच्चय.। सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुगृह्यते। ननु नामधेयस्य बलवत्त्वादहतं बाध्यते। विरोधे सति बाध्येत। अविरोधश्चानयोः कथम्?। उपरिवाससः कार्ये वत्सत्वग्भविष्यति। वासोद्वयं पुरुषस्याचारतः प्राप्यते। ननूपरि वाससि परिधत्त इति न भवति। नैतदेवम्। उपरिवासस्यपि भवति। यथा, केवलं परिधत्ते, रौरवं परिधत्त इति। तस्मात् समुच्चयः ॥२॥ सि० ॥ विश्वजिति वत्सत्वगधिकरणम् ॥१॥

## अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्याच्छिष्टकृद्दर्शनाच्च ॥ ३ ॥

अग्नौ श्रूयते, अग्नीषोमीयस्य पुरोडाशमनुदेवसुवां हवींषि निर्वपतीति। अनुबन्ध्यायामपि देविकाहवींषि। तत्र भूयस्त्वेन तन्त्रं नियम्यते। अनुनिर्वाप्याणां बहुत्वात्। तत्तन्त्रं पशुपुरोडाशे प्रसज्येत। किञ्च यत् स्विष्टकृच्छब्दकं स्विष्टकृतो वचनं दृश्यते पशुपुरोडा-

शस्य देविकाहविषां चाग्नये स्विष्टकृते समवद्यतीति । तदनुनिर्वाप्याणां तन्त्र उपपद्यते । यदा तु पशुपुरोडाशतन्त्रं तदा स्विष्टकृच्छब्दकं स्यात् । तस्मादनित्यत्वादागन्तुकत्वाद्वा तथा ॥ ३ ॥ पूर्व० ॥

**आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥**

आगन्तवोऽनुनिर्वाप्याः । श्रुतिविशेषात् । एवं हि श्रूयते, पशुपुरोडाशमनुनिर्वपतीति । एवं श्रुते पूर्वं पशुपुरोडाशः, पश्चादनुनिर्वाप्या भवन्तीति स मुख्यः, इतरे तु जघन्याः । अतस्तेषामागन्तुत्वादितरस्य च मुख्यत्वात् पशुपुरोडाशः स्वधर्मा स्यात् ॥ ४ ॥ सि० ॥

**स्वस्थानत्वाच्च ॥ ५ ॥**

अपि च पशुपुरोडाशस्थानं यद्वपाप्रचारात् परतोऽङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं, प्रधानदेशत्वात्तेषाम् । यद्यनुनिर्वाप्याणां तन्त्रं स्यात् । ततस्तस्मिन् स्थाने तदङ्गानि क्रियेरन् । पशुपुरोडाशाऽङ्गान्यन्यस्थानानि भवेयुः । तेषां स्वस्थानाय पशुपुरोडाशस्य तन्त्रं स्यात् कर्तव्यम् ॥ ५ ॥ हेतुः ॥

**स्विष्टकृच्छ्रपणान्नेतिचेद्विकारः पवमानवत् ॥ ६ ॥**

स्विष्टकृच्छ्रपणान्नेति चेदिति यदुक्तं तत् परिहर्तव्यम् । अत्रोच्यते । विकारः पवमानवत् । एवञ्च पशुपुरोडाशस्य तन्त्रेण अनिरुक्तं स्विष्टकृति प्राप्तो विकारो वचनाद् भविष्यत्यग्नये स्विष्टकृते समवद्यति सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति । यथाग्नये पवमानाय निर्वपतीति वचनात् पवमानशब्दको निर्वापः क्रियते, एवमिहापि ॥ ६ ॥ आ० नि० ॥

**अविकारो वा प्रकृतिवच्चोदनां प्रतिभावाच्च ॥ ७ ॥**

अविकारः । अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यं, प्रकृतिवदतिदेशाद्यन्तवचनादिति नात्र विकारो विधीयते । किं तर्हि । समवदानम् । देविकाहविषामग्नये स्विष्टकृते समवद्यतीति । तत्र विकारेऽन्यस्मिन् विधीयमाने वाक्यं भिद्यते । कथं तर्हि । स्विष्टकृद्वचनम् । चोदनां प्रतिभावाच्च । दर्शपूर्णमासयोरस्ति स्विष्टकृच्चोदना सा स्विष्टकृच्छब्दिका । तत् प्रत्येतद्वचनं तदुपलक्षणाय । तस्मादग्नये याऽग्नौ शेषभागितया तदुक्तं स्यात्तावदग्नये स्विष्टकृत इति । यथा शरमयं बर्हि-

भवतीति नवनीतमाज्यमिति प्राकृते कार्ये होते प्रकृतिलिङ्गेन द्रव्यशब्देन । एवमिहापि स्विष्टकृच्छब्देन प्राकृती लक्षणया देवतानूद्यते ॥ ७ ॥ सि० ॥ अनुनिर्वाप्याधिकरणम् ॥ २ ॥

**एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् ॥ ८ ॥**

य एकस्मिन् कर्मणि गुणा बहवः शिष्यन्ते तेषां सर्वेषां क्रिया स्यात् । समुच्चय एव सर्वेषां शासनमर्थवद् भविष्यति । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुगृह्यते । यथाऽऽघारे ऋजुमाघारयति सन्ततमाघारयति प्राञ्चमाघारयति च ॥८॥ सि० ॥ आघारे ऋजुत्वादिसमुच्चयाधिकरणम् ॥ ३ ॥

**एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य ॥ ९ ॥**

ये त्वेकार्था एककार्यार्थास्ते विकल्पेरन् । यथा व्रीहियवौ, यथा खादिरादीनि यूपद्रव्याणि । बृहद्रथन्तरे ते विकल्पेरन् । तस्मात् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य । एकेन कार्ये कृते यदि द्वितीय उपादीयते । आवृत्तिः प्रधानस्य भवेत् । सा चायुक्ता । किं कारणम् । प्रधानं हि फलाय वा क्रियते फलवदुपकाराय वा, नाङ्गम् । सकृत् कृतेन च कृतं कार्यम् । तस्य निरर्थिका आवृत्तिः ॥ ९ ॥ सि० ॥

**अभ्यासेनार्थवत्त्वादिति चेत् ॥ १० ॥**

इति चेत् पश्यसि अनर्थकोऽभ्यास इति । नानर्थको, गुणान्तरं स तस्यार्थवत्त्वायाभ्यासेन ॥ १० ॥ आ० ॥

**नाश्रुतत्वाद्धि विकल्पवच्च दर्शयति कालान्तरेऽर्थवत्त्वं स्यात् ॥ ११ ॥**

नैतद्युक्तम् । कुतः । अश्रुतत्वात् । अश्रुतोऽभ्यासः । तस्य प्रमाणं नास्ति । केन करिष्यति ? । गुणान्तरशासनस्यार्थवत्त्वं वक्ष्यति । कालान्तरे अर्थवत्त्वं स्यादिति । अभ्यासशास्त्रं क्वचिद् भवति, संसव उभे कुर्यात् । गोसव उभे कुर्य्यात् । अभिजित्यवइयैकाहे श्रूयते । उभे बृहद्रथन्तरे कुर्यादिति । तत् समुच्चये सति न स्यात् । तस्मादपि च विकल्पवच्च दर्शयति । विकल्प इव दर्शनं भवति । बैल्वो वा खादिरो वा पालाशो वाऽन्येषां यज्ञक्रतूनां यूपा भवन्ति तथैतस्य खादिर एव कार्य इति वाजपेये खादिरं नियच्छन्नन्यत्र

विकल्पमनुवदति । तस्मादपि विकल्पः कालान्तरे अर्थवत्त्वं स्यात् । यच्च गुणान्तरशासनस्यानर्थक्यमिति कालान्तरे प्रयोगान्तरेऽर्थवत्त्वं तस्यापि भविष्यति । तस्मिन्नर्थवति नाभ्यासस्य प्रमाणम् । ननु विकल्पस्यापि नास्ति प्रमाणम् । विकल्पेन किञ्चिद्श्रुतं क्रियते । व्रीहिभिर्यजेतेति श्रुतैरिज्यते । यवैर्यजेतेत्यपि श्रुतम् । तैरपीज्यते । एकस्मिन् प्रयोगे कार्याभावान्नोभाभ्यामिज्यते । अथ कस्मान्न मिश्रीयते तेन । तदुक्तम् । एकैकस्य निरपेक्षस्य साधकत्वं श्रुतम् । तस्मिन् मिश्रीभावे बाध्येत । तस्माद्विकल्पः ॥ ११ ॥ आ० नि० ॥ विकल्पाऽधिकरणम् ॥ ४ ॥

## प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १२ ॥

प्रायश्चित्तानि द्विःप्रकाराणि । कानिचिद्वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि, कानिचिन्निमित्ते कर्माङ्गानि । तत्र समाधानार्थानि यथा यम् ऋक्तो यज्ञ आर्त्तिमियाद् भूः स्वाहेति गार्हपत्ये जुहुयादथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहेत्याहवनीय एवेति । आर्त्तिमियाद्विनाशमियादित्यर्थः । कः पुनर्यज्ञस्य विनाशः । शिष्टस्याक्रिया, प्रतिषिद्धसेवनं च । कथं पुनर्ज्ञायते, विनष्टस्य समाधानार्थं तत् प्रायश्चित्तमिति । वाक्यसंयोगात् । यद्यार्त्तिमियादिह कुर्यात् । यदि तस्मिन् कृते यदि नष्टमेव कोऽर्थस्तेन कृतेन । यस्त्वत्र ब्रूते । आर्त्तौ निमित्ते कर्माङ्गं प्रायश्चित्तमिति स च वक्तव्यः । अङ्गं नाम तद् यत् प्रधानं फलवत् करोति । प्रधानविनाशादफलत्वमापन्नम् । यदि तदनेन फलवत् क्रियते तत एतदङ्गम् । यच्चेदं फलं प्रयुक्तमनेन फलवत् क्रियते हन्त तर्हि जातस्य विनष्टस्य समाधानार्थम्, अथ न क्रियते न तर्हि कर्माङ्गम् । तत्र यदुच्यते निमित्ते कर्माङ्गमिति तदेव नास्ति । अपि च तत्र तत्र समाधानमेव वाक्यशेषे श्रूयते । अग्निर्वै देवानां पथि कृतः स्वेन भागधेयेनोपासीरन् स एवं पन्थानमपि नयति स एवं व्रतमालम्भयतीति । तस्मादेते दोषनिर्घातार्थाः । तेषु विकल्पः स्यात् । कुतः । ऐकार्थ्यात् । कथमैकार्थ्यमेतेषां निष्पन्नेन दोषेण केवलस्य तस्य तस्याभिसंयोगो यदुक्तो यज्ञ आर्त्तिमियाद् भूः स्वाहेति जुहुयादिति । तस्मात् सर्वस्य दोषस्यैकेन निर्घातः । एकेन चेन्निर्हतो दोषो द्वितीयादीनि प्रयोगान्तरा-

ऽर्थानि भवन्ति । एवं स्मार्त्तेष्वपि द्रष्टव्यम् ॥ १२ ॥ पूर्व० ॥

समुच्चयस्तु दोषार्थः ॥ १३ ॥

यानि तु दोषनिर्घातानि तेषु समुच्चयः । कानि पुनस्तानि । यानि श्रुतस्याक्रियया प्रतिषिद्धानि वा तानि उच्यन्ते । यथा यस्याहुतमग्निहोत्रं सूर्योऽभ्युदयान्मैत्रं चरुं निर्वपेत् सौर्यमेककपालं यस्याहुतमग्निहोत्रं सूर्योऽभ्युदयादित्यादि।अग्निं समाधाय वाचं यत्वा दम्पती सर्वाहमुपासीयातामिति । तत्र दोषो न दृश्यते । दोषस्याभावान्निर्घातार्थता नास्ति । केवलमभ्युदये निमित्ते कर्मविधीयते । तन्नैमित्तिकं कर्मणः प्रकरण उत्पन्नत्वात् कर्माङ्गं विज्ञायते । यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन गृह्यन्ते, तेषां समुच्चयः ॥ १३ ॥ सि०॥ प्रायश्चित्ताधिकरणम् ॥ ५ ॥

मन्त्राणां कर्मसंयोगः स्वधर्मेण प्रयोगः स्याद्
धर्मस्य तन्निमित्तत्वात् ॥ १४ ॥

कर्मणि प्रयुज्यमानानां स्वधर्मेण प्रयोगः स्यात् । य एषां ग्रहणकाले धर्माः— पर्वणि नाध्येयं, वाते नाध्येयं, स्तनयित्नौ नाध्येयमित्यादयः । धर्मस्य तन्निमित्तत्वाद् । धर्मोऽयं मन्त्रप्रयोगनिमित्तः । अयमपि च मन्त्रप्रयोगः । तस्मादत्रापि न भवितव्यम् ॥ १४ ॥ पूर्व० ॥

विद्यां प्रति विधानाद्वा सर्वकारणं प्रयोगः
स्यात् कर्मार्थत्वात् प्रयोगस्य ॥ १५ ॥

अध्यायेऽनध्यायेऽपि । कुतः । विद्यार्थोऽयं प्रयोगः । यं प्रत्येतद्धर्मविधानं स एष ग्रहणस्य धर्मः । तस्माद् ग्रहणं गुणवत् करोति । कः पुनर्ग्रहणस्य गुणः । अविघ्नेन निर्वृत्तिः । कथं पुनर्ज्ञायते, ग्रहणार्थोऽयं धर्म इति । ग्रहणकाले श्रूयते, न कर्मकाले ।मा भूत् कर्मधर्मो, मन्त्रधर्मो भविष्यति । मन्त्रधर्मश्च स यत्र मन्त्रस्तत्र प्राप्नोति । उच्यते । न धर्मो मन्त्रेषु विधीयते । किं तर्हि । ग्रहणे । एवमभिनिर्वर्त्यते, तेनैव मन्त्रो भवति । तस्माद् ग्रहणधर्मः । न च कर्मणि ग्रहणार्थः । प्रयोगः । किं तर्हि । कर्मार्थः । तस्मात्तत्र धर्मस्याप्राप्तिः । अपि च पर्वणि चाध्ययनस्य प्रतिषेधः । यद्यमन्त्रकं कर्म क्रियते प्रयोगानर्थक्यम् । अथापर्वणि तथापि स एव श्रुत्यनुरोधेन प्रयोगः प्राप्नोति स्मृत्यनुरोधेनाप्रयोगः । श्रुतिश्च स्मृतितो बलीयसी । तस्मान्नाहत्य·

प्रयोगनियमः ॥ १५ ॥ सि० ॥ अनध्याये मन्त्रपाठाधिकरणम् ॥ ६ ॥

भाषास्वरोपदेशो ऐरवत् प्रायवचनप्रतिषेधः ॥ १६ ॥

भाषिकेण स्वरेण केचिन्मन्त्रा ब्राह्मण उपदिष्टाः । मन्त्रसमाम्नाये त्रैस्वर्येण पठिता. । यथा इमामगृभ्णन्निरयश्वमेधे । कः पुनर्भाषिकः स्वरः । उच्यते—

छन्दोगा बहवृचाश्चैव तथा वाजसनेयिनः ।

उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते, इति । तेषु मन्त्रेषु प्रायवचनस्य स्वरस्य प्रतिषेधः स्यान्निवृत्ति । कस्मात् । स्वरान्तरोपदेशात् । ऐरवत् । यथा इरापदस्योपदेशात् कर्मकाले गिरापदस्य निवृत्तिः । कथं पुनर्ज्ञायते स्वरस्यायमुपदेशो, न मन्त्रस्येति । मन्त्रो नोपदेष्टव्यः । रूपादेव प्राप्नोति । स्वरस्त्वनुपदिष्टो, न प्राप्नोति । तस्मात्तस्योपदेशः ॥ १६ ॥ पूर्व० ॥

मन्त्रोपदेशो वा न भाषिकस्य प्रायोपपत्ते-
र्भाषिकश्रुतिः ॥ १७ ॥

मन्त्रस्य वायमुपदेशो, न स्वरस्येति । कथं ज्ञायते । मन्त्रोपदेशरूपोऽयं शब्दः । किमस्य तत्सारूप्यम् । इत्यश्वाभिधानीमादत्त इत्याह । मन्त्रेण वा साऽभिधीयते । न भाषिकेण स्वरेण । मन्त्रोपादानं प्रत्याययति । नेतरस्य । कस्मात्तर्ह्युच्चार्यते । प्रायोपपत्तेर्भाषिकश्रुतिः । भाषास्वरा ब्राह्मणं प्रवृत्त. । तन्मध्ये यदि प्रवचनेन पठ्यते । भाषिकस्वरसन्तानो विच्छिद्येत तत्परिहारार्थं भाषिकेणोपदेशः । यथा गायना गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति तान्यपि तेनैव गीतिस्वरेणैवोच्चारयन्ति । मा भूत् स्वरसन्तानस्य विच्छेद इति । तस्मान्न भाषिकस्वरोपदेश इति ॥ १७ ॥ सि० ॥

विकारः कारणाग्रहणे तन्न्यायत्वाद् दृष्टेऽन्यथेवम् ॥ १८ ॥

इरापदेन तु गिरापदस्य विकारो युक्तः । कारणाग्रहणात् । यथा भाषिकस्यानुपदेशेन कारणेनोक्तेनैव गिरापदस्यानुपदेशे किञ्चित् कारणं गृह्यते । तस्मात्तस्योपदेशः । स कर्मकाले विधानात् समाम्नाये प्राप्तं गिरापदं बाधते । तस्मात्तत्र विकारः । तन्न्यायत्वाद् दृष्टेऽन्यथेवम् । यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टस्तस्य तथैव प्रयोगः । यस्तु न दृष्टो ब्राह्मणे, न च भाषिकेणोपदिष्टः । यथा तं

प्रोहेद्वानस्पत्योऽसीति । तत्र का प्रतिपत्तिरुच्यते । तन्न्यायत्वात् । अदृष्टेऽपि योऽपि योऽसौ न्याय उक्तः । मन्त्रोपदेशोऽयं तद्रूपत्वाच्छन्दस्येति।तेनैव न्यायेनादृष्टेऽपि मन्त्रोपदेश एव, न भाषिकोपदेश । तस्मान्न तस्यापि प्रवचनेनैव स्वरेण प्रयोगः ॥ १८ ॥ पूर्व० ॥

## तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ १९ ॥

तदुत्पत्तेर्वा मन्त्रस्य भाषिकेण प्रयोगः स्यात् । प्रवचनलक्षणत्वात् । प्रवचनं मन्त्राणां लक्षणं यथा प्रोच्यते तथाविधा विज्ञायन्ते । ते च भाषिकस्येत्यपरा व्याख्या । इमामगृम्णन्निति नैतस्योपदेशः । किं तर्हि । आम्नन प्रतीकेन लक्षणेनासौ यथोत्पन्नो लक्ष्यते, प्रावचनेन स्वरेणोत्पन्ना । तस्मात्तद्विधाया उपदेशः । यस्तु ब्राह्मणोत्पत्तिरेव मन्त्रः । तत्र लक्षणस्याभावान्न लक्षणा । यथाश्रुति प्रयोगः ॥ १९ ॥ सि० ॥ मन्त्रस्वराधिकरणम् ॥ ७ ॥

## मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ २० ॥

पदार्थकरणमन्त्राः— यथा इषे त्वेति छिनत्ति, देवस्य त्वा सवितुः प्रसवे इत्यादत्त इति । तेषां मन्त्रान्ते न कर्मादिसन्निपातः, यस्मिन् कर्मण्युपयुज्यते । किं कारणम् । सर्वस्य वचनार्थत्वात् । सर्वो मन्त्रः समस्तं वचनार्थं करोति । कः पुनर्मन्त्रस्य वचनार्थः । प्रयोगकाले पदार्थस्योपस्थानम् । मन्त्रेणोपस्थितः पदार्थः कर्त्तव्यो विज्ञायते । तदर्थस्य मन्त्रस्य आम्नानसामर्थ्याद् वचनाच्च कचिदिति । आदत्ते निर्वपतीति मन्त्रान्ते तस्योपस्थानम् । उपस्थित. पर्य्याप्तो यावन्न प्रदयत इति । तस्मान्मन्त्रान्तेन कर्मादिः सन्निपातकरणमन्त्रेषु ॥२०॥ सि० ॥ कर्मसु मन्त्रकरणप्रयोगाधिकरणम् ॥ ८ ॥

## सन्ततवचनाद्धारायामादिसंयोगः ॥ २१ ॥

श्रूयते, सन्ततं वसोर्द्धारां जुहोतीति । अत्रापि पूर्वोक्तेन न्यायेन तथैव प्राप्ते, उच्यते । धारायामादिसंयोगः कर्मादिमन्त्रादिश्च संनिपत्य सन्ततवचनात् । समित्येकीभावः । ततोऽतिविस्तारः द्वयोर्यत्र सहतननं भवति तत्र सम्पूर्वस्तनोऽपि वर्त्तेत । इह कर्मवन्मन्त्रश्च सन्निपात्यः । तस्मात्तयोः सहतननमुच्यते । तच्चाद्योः सन्निपाते भवति । तस्मादादिसंयोगः ॥ २१ ॥ पूर्व० ॥

## कर्मसन्तानो वा नानाकर्मत्वादितरस्याऽशक्यत्वात् ॥ २२ ॥

कर्मणां वा सन्तानोऽयं, सन्ततं जुहोति इति हि होमस्य केवलस्य हि सन्तान उच्यते । नात्र मन्त्रसङ्कीर्त्तनमस्ति । न तु द्वयोः संयोगे संशब्दो भवति, एकश्च होम उच्यतेति । नैष दोषः । नानाकर्मत्वात् । बहून्येतानि कर्माणि तेषामनुपरमेण क्रियासन्तानो भवति, कर्मनानात्वं वचनात् द्वादश द्वादशानि जुहोतीति । न तु द्रव्यसंख्येयानीत्याह । नात्र द्रव्यसङ्कीर्तनमस्ति । होमोऽत्र संख्यया युज्यते । द्वादश द्वादशानि जुहोतीति । एवंसंख्यान् होमान् करोतीति । किञ्च इतरस्य च मन्त्रकर्मणोः सन्तानस्याशक्यत्वात् क्षणिकं कर्म न मन्त्रेण सहतनितुं शक्यते । तदत्रापि कर्मादिसन्निपात एव ॥ २२ ॥ सि० ॥ वसुधाराधिकरणम् ॥ ९ ॥

## आघारे च दीर्घधारत्वात् ॥ २३ ॥

दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते । सन्ततमाघारयतीति । तत्रापि क्षणिकत्वान्मन्त्रेण कर्मणः सहतननं घटते । एकत्वात् कर्मसन्तानो नास्ति । तस्माद् द्रव्याभिप्रायः सन्तानशब्दः । सन्ततं धारयतीति दीर्घधारया जुहोतीति दीर्घपरत्वात् सन्तानशब्दः ॥ २३ ॥ सि० ॥ आघाराधिकरणम् ॥ १० ॥

## मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २४ ॥

ये मन्त्रा एककार्या यथा पुरोडाशविभागार्थाः, पूषा वां विभजतु । अर्यमा वां विभजत्वित्येवमादयः । तेषां विकल्पः । कुतः । सन्निपातित्वात् । करणा एते । करणानां च मन्त्रान्तेन कर्मादिसन्निपात उक्तो मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यादिति । न च विकल्पमन्तरेण सर्वेषामन्ते कर्मादिसन्निपातः कर्तुं शक्यः । किं वचनमेतत् । न हि । न्यायः । सर्वस्य वचनार्थत्वादिति । यद्येवं समुच्चयेऽपि स मन्त्र उच्यते । तत्रापि वचनार्थः सिद्ध्यति । एकेन तु कृते कर्मणि द्वितीयस्य प्रयोगोऽनर्थकः । तदेतत् कार्य्यत्वं भवति । तस्मादेकार्थत्वाद्विकल्पः । तच्च पूर्वमेवोक्तम् । एकार्थास्तु विकल्पेरन्निति । ततस्तत्प्राप्तिसूत्रमिदम् उत्तरचिन्तार्थम् ॥ २४ ॥ सि० ॥ मन्त्रसन्निपाते विकल्पाधिकरणम् ॥ ११ ॥

## संख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ २५ ॥

संख्यया ये विधीयन्ते मन्त्राः यथाग्नौ चतुर्भिरादत्ते द्वाभ्यां खनति षड्भिराहरति तेषु समुच्चयः स्यात्। किं कारणम्। संख्या शब्देनोच्यते। साऽङ्गीकर्तव्या। न च समुच्चयादृते सा शक्याऽङ्गीकर्तुम्। आह। समुच्चयेऽपि यः कर्मणां सन्निपातः, तेन तत् कर्म कृतं भवति। ये व्यवहिताः, न तैः सह असन्निपातात्। तथा सति न संख्या कर्मण्यङ्गीकृता भवति। नैष दोषः। अर्थाभिधानेन मन्त्रोऽङ्गीकृत इति। सर्वैवैते तमर्थमभिदधाति। अनन्तरेण रूपं क्रियते इतरे जपवददृष्टार्थां भवन्ति उच्यते। नादृष्टार्थां भविष्यन्ति। सर्वे तदेव कर्म सकृदभिधास्यन्ति। भवति हि कारणार्थस्य मन्त्रस्यासकृत् प्रयोगः। यथा कुरु कुरु, करवाणीति। तत्र यथा अभिधानार्थस्य मन्त्रस्याम्नानसामर्थ्यादभिहितमभ्युदयकरं भवति। एवं चतुर्भिरादत्त इति वचनाच्चतुरभिहितं कृतमभ्युदयकारि भवतीति। तस्मात् समुच्चयेऽपि नादृष्टार्थता समुच्चयश्च सिद्धः ॥ २५ ॥ सि० ॥ मन्त्रसमुच्चयाधिकरणम् ॥ १२ ॥

## ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ॥ २६ ॥

ब्राह्मणे च ये मन्त्रा विधीयन्ते यथा उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयन्तीति। तेषु च समुच्चय स्यात्। सर्वेषामुपदिष्टत्वात्। न प्रयुज्यते। तस्योपदेशो बाध्यते। सर्वाङ्गोसंहारी च प्रयोगवचनोऽनुग्रहीष्यते। संख्याविहितवच्च सर्वेषामसकृदभिधानेन अर्थवत्ता भविष्यति। तस्मात् समुच्चयः ॥ २६ ॥ पूर्व० ॥

## याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ २७ ॥

समुच्चय एव याज्यावषट्कारयोः। समुच्चयोऽवगन्तव्यः। समुच्चयवद् दर्शनं भवति। याज्याया अधिवषट्करोतीति। समुच्चये हि पौर्वापर्यं भवति। तस्मादपि समुच्चयः ॥ २७ ॥ पूर्व०नि० ॥

## विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ २८ ॥

विकल्पो वैष मन्त्राणां, न समुच्चयः। कुतः। उक्तो न्यायः। मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यादिति। न तु संख्याविहितवदेकार्था अपि सन्तोऽसकृदभिधानेन समुच्चेष्यन्ते। नैतद्यु-

क्रम । कुतः । समुच्चयस्याश्रुतित्वात् । यथा तत्र संख्याश्रवणात् । कृतकरणमप्यसकृदभिधानमाश्रितं, नैवं समुच्चयश्रवणमस्ति । तस्मा-द्यथान्यायमेकार्थत्वाद्विकल्पः ॥ २८ ॥ सि० ॥

## गुणार्थत्वादुपदेशस्य ॥ २९ ॥ ॥

यच्च सर्वेषामुपदेशोऽर्थवान् भविष्यतीति । अहेतुः सः । गुणार्थ-त्वादुपदेशस्य । नैवासौ मन्त्रप्राप्त्यर्थं उपदेशः । किं तर्हि । गुणार्थः । अर्थवादो गुणं विधास्यतीति । तदुक्तं- गुणार्थेन पुनः श्रुतिः परि-संख्या अर्थवादो वेति । यदि तर्हि नैवायं मन्त्रोपदेशः । किमिदमुच्य-ते । सर्वेषामुपदिष्टत्वात् । एवं तर्हि कृत्वा चिन्त्यते । मन्त्रोपदेश इति कृत्वा चिन्त्यते । अथवा उदाहरणान्तरं द्रष्टव्यम् ॥ २९ ॥ हेतु ॥ उरु प्रथस्वेतिमन्त्रे विकल्पाधिकरणम् ॥ १३ ॥

## वषट्कारे नानार्थत्वात् समुच्चयो हौत्रास्तु वि-कल्पेरन्नेकार्थत्वात् ॥ ३० ॥

वषट्कारः प्रदानार्थो, याज्या देवतोपलक्षणार्था । तयोर्नानार्थ-त्वात् समुच्चयः । सर्वोपदेशात् । हौत्रास्तु विकल्पेरन्नेकार्थत्वात् । हौत्रास्तु ये मन्त्रा, यूपोच्छ्रयणीया वा, उच्छ्रयस्व वनस्पते इति, यूप-परिव्याणार्था वा, युवा सुवासा इति ते विकल्पेरन् । कुतः । एकार्थत्वात् । एकार्था एते उच्छ्रयणस्य परिव्याणस्य वाऽभिधायकाः । एकैकश्च तेषामितरानपेक्षस्तदभिदधाति । तस्माद्विकल्प ॥३०॥ पूर्व०

## क्रियमाणानुवादित्वात् समुच्चयो वा हौत्राणाम् ॥ ३१ ॥

क्रियमाणानुवादित्वात् । करणानां विकल्प उक्तः । न चैते करणाः क्रियमाणानुवादिनः, एवं कर्त्तव्यमिति । कथं कृत्वा । उच्यते । अध्वर्योस्तावत् करोमीत्येतेन प्रत्ययेनार्थः । असति ह्यस्मिन् क्रियैव न प्रवर्त्तते । एष प्रत्ययः सति पूर्वस्मिन् प्रत्यये भवति । यो हि स्मर-तीदं मया कर्त्तव्यमिति, स तत् करोति । क्रियमाणानुवादिनश्चा-ऽध्वर्युणा क्रियमाणमर्थमनुवदन्ति । युञ्जन्ति त्वामध्वरदेवायं न इति । सोऽनुवादोऽलमध्वर्योः स्मृतिं कर्तुम् । अतस्तत् स्वरूपम् । तेन च कर्मणाकाङ्क्षितत्वात् । स्मरणार्था एते विज्ञायन्ते । स्मरणार्थस्य मन्त्र-

स्याम्नानसामर्थ्यात् स्मारितं कृतमदृष्टार्थाय भवति । यथा प्रततं कृतम् । ननु विधिशब्दादेव स्मृतिर्भवति । सत्यं विधेः शब्दादपि सामर्थ्याद्भवति । मन्त्रादपि भवति । मन्त्रस्याम्नानसामर्थ्यान्मन्त्रेण कर्तव्याः । प्रततेषु च कर्म्मसु स्मृतिसन्तानेनार्थ इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्यैकस्मिन्नेव प्रयोगे स भवति । क्रियमाणाऽनुवादित्वाद्धोत्राणां समुच्चयः ॥ ३१ ॥ सि० ॥

## समुच्चयं च दर्शयति ॥ ३२ ॥

त्रि. प्रथमामन्वाह ज्योतिष्मतीरनुब्रूयादिति । अनेकसन्निपाते चैतद्भवति प्रथमा उत्तमेति । तस्मात् समुच्चयः ॥ ३२ ॥ उदाहरणम् ॥ वषट्कारे समुच्चयाधिकरणम् ॥ १४ ॥ इत्याचार्यशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य तृतीयः पादः ॥ १२ ॥ ३ ॥

अथ द्वादशाध्यायस्य चतुर्थः पादः ॥ १२ ॥ ४ ॥

## जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥

वैष्णवीमनूच्य वाग् यन्तव्या सारस्वतीमनूच्य वाग् यन्तव्या बार्हस्पत्यमनूच्य वाग् यन्तव्येति स्तुतयः । अग्निर्मूर्द्धा दिव इति आशिषः । आयुर्दाग्ने अस्यायुर्मे देहीति विधानाद्देषोऽसि त्वेषोऽसीति । अथ जप इति कः शब्दार्थः । जप व्यक्तायां वाचीति । जप्यत इति जपः । यद्येवमग्निर्मूर्द्धा दिव इति । अयमपि जप्यते । सत्यमयमपि जपः । स्तुतिरपि त्विष्यते । अयं तु जप एव केवलः । इतरैः स्तुत्यादिभिः समुच्चार्यमाण एतस्मिन् जपे अकर्मसंयुक्ताः स्तुत्याऽऽशीरभिधानाश्चेति केवला जपाः प्रतीयन्ते ॥

यथा ब्राह्मणाः परिव्राजका ब्रह्मचारिणश्च निर्गच्छन्तीति उक्ते केवलब्राह्मणा ब्राह्मणशब्देनोच्यन्ते, तद्वत् । ननु इदं विष्णुर्विचक्रम इति स्तुतिरियम् । न खलु नामास्ति शब्दो, नापि किञ्चित् स्तोतव्यमस्ति । न च विष्णुः । न च विष्णुना स्तुतेन काश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः काचिदर्थक्रियते । नापि स्तुतिः कर्त्तव्या । चोदितवचनमात्रन्तु वादिन वैष्णवीमनूच्येत । तत्र कर्त्तव्यं वचनं जपनमिति समानार्थौ, यस्माज्जप व्यक्तायां वाचीति स्मर्यते । तेन यत्र वचनमात्रं मन्त्रस्य क्रियते, न स्तूयते, नाऽऽशास्यते स जपः । अथ जपस्याभि-

धानार्थस्य च को विशेषः । जपे वचनमात्रम् । मन्त्रस्य अभिधानेन तु जपतः सता असता वा गुणो नातिदिश्यते । यशोऽसि त्वंयशोऽसीति न तत्र । तत्रैकार्थत्वाद्विकल्पे प्राप्ते, उच्यते । समुच्चयः । कुतः । आशीःपृथक्त्वात् । स्तुतिपृथक्त्वात् । अभिधानपृथक्त्वाच्च । न हीदं विष्णुरिति योऽर्थोऽभिधीयते स एव पावमानः सरस्वतीत्यनेन । एवं सर्वत्र । तस्मान्नानार्था एते । अत एषां समुच्चयः स्यात् ॥ १ ॥ पूर्वपक्षसिद्धान्तौ ॥

## समुच्चयं च दर्शयति ॥ २ ॥

शास्त्रानुवचनयोस्त्रिः प्रथमामन्वाहेति त्रिरुत्तमामन्वाहेति । समुच्चये च सति प्रथमा च विद्यते न विकल्पे । तस्मादपि समुच्चयः । यजमाने स्थितिप्रायिको निर्देशः । एकस्मिंश्च मन्त्रे त्रितयमपि सम्भवति, स्तुतिरभिधानं जपश्च । यथा इदं विष्णुर्विचक्रम इति यदि विष्णुर्बोध्यते ततः स्तुतिः । अथान्यस्यै वृत्तान्त आख्यायते ततोऽभिधानम् । अथात्मनावबोध्यते ततो जपः ॥२॥ हेतु ॥ जपसमुच्चयाऽधिकरणम् ॥ १ ॥

## याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥

ऐन्द्राबार्हस्पत्ये कर्मण्यनेकं याज्यानुवाक्यायुगलमाम्नातम् । इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती इत्येकम् अयं वा परिषिच्यते सोम इन्द्राबृहस्पती । बृहस्पतिर्नः परिपातु पश्चादित्यपरम् । तयोः किं समुच्चयः, विकल्प इति विचारः । तत्रोच्यते । याज्यानुवाक्यासु तु विकल्पः स्यादिति । कस्माद्देवतोपलक्षणार्थत्वात् । कर्मणि गुणभूता देवता याज्यानुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते । सकृदुपलक्षणेन च तत् सिद्ध्यति । कर्मसिद्धौ कर्मणि उपलक्षणकार्यं नास्तीति द्वितीयं वै याज्यानुवाक्याद्वयं प्रयोगान्तरार्थं भवति । तस्माद् विकल्पः ॥ ३ ॥ सि० ॥

## लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गं चेदमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह । कर्तुर्देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति गमयत्यन्यया अथात्र तिस्रः कार्या इति पितृयज्ञे याज्यानुवाक्यात्रयविधानस्य परं वाक्यं

तयोस्त्रित्वमुचितं दर्शयति । तथा न सर्वाणि सह यज्ञायुधानि । प्रकृत्या तु मानुषं न क्रियते, नैकैकमेत्य । पितृदैवकं तत् । द्वे द्वे सह प्रकृते याज्यानुवाक्ययो रूपमिति । तस्मादपि विकल्पः । अथ तयोरेव मिथः । कस्माद्विकल्पो न भवति । एकार्थत्वात् प्राप्नोति । अन्यतरस्यापि हि देवतोपलक्षणं सिद्ध्यति । उच्यते । समाख्यया पुरोऽनुवाक्ये इति पुरोऽनूच्यत इति पुरोनुवाक्या । आपेक्षिकपूर्वशब्दो याज्यामपेक्ष्य भवति । समुच्चये चैतदुपपद्यते । तस्मात् समुच्चयः । ननूपलक्षिते रूपलक्षणकार्याभावादर्थलाभादन्यतरस्याः प्रयोगो न प्राप्नोति । उच्यते । समाख्यासामर्थ्यात् । विरूपलक्षणसाध्यं कर्म भविष्यति । यथा द्वाभ्यां खनतीति वचनसामर्थ्यादाभिधानं साध्यम् । तस्मादविरोधः ॥ ४ ॥ हेतुः ॥ याज्यानुवाक्यासु विकल्पाधिकरणम् ॥ २ ॥

## क्रयेषु त्वविकल्पः स्यादेकार्थत्वात् ॥ ५ ॥

सोमक्रयणार्थानि द्रव्याणि समाम्नातानि । अजया क्रीणाति हिरण्येन क्रीणातीत्येवमादीनि । तेषु क्रयणेषु विकल्पः स्यात् । सर्वाणि हि क्रयणस्य साधनत्वेन निरपेक्षाणि विधीयन्ते । यथा व्रीहियवौ यागेषु । तथा अजया क्रीणाति हिरण्येन क्रीणाति वाससा क्रीणाति तान्येकार्थानि भवन्ति । तस्मात्तेषु विकल्पः ॥ ५ ॥ पूर्व० ॥

## समुच्चयो वा प्रयोगद्रव्यसमवायात् ॥ ६ ॥

वाशब्दः पक्षं व्यावर्त्तयति । न चैतदस्ति, विकल्प इति । किन्तु, समुच्चयः । कस्मात् । प्रयोगे द्रव्यसमवायात् । क्रयणस्य प्रयोगे अधिकस्यापि द्रव्यस्य समवाय उपपद्यते । तत्र विक्रेतुर्मूल्येनानमनं क्रियते, तद् बहुभिः सुकरतरं भवति । तस्य तस्य द्रव्यस्याम्नानमापेक्षिकं सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुग्रहीष्यते । अपि च विषमाण्येतानि, अश्वशफेन क्रीणातीति समुच्चयेनानतिं कर्तुं शक्नुवन्ति, न विकल्पेन । विकल्प्यमानानामानर्थक्यमापद्यते । तस्मात् समुच्चयः ॥ ६ ॥ सि० ॥

## समुच्चयञ्च दर्शयति ॥ ७ ॥

तं वै दशभिः क्रीणाति दशाक्षरा विराट् विराजमेव प्राप्नोतीति क्रीणात्यनुवादोऽयम् । स एतेन न्यायेन प्राप्तानां स्यात् । तस्मादपि

समुच्चयः । अथार्थवादेन विधिः कस्मान्न विज्ञायेत । तथाप्यनुवादरूपं बाध्यते । तत्र सति सम्भवे न बाधितव्यम् । तस्मादनुवादः ॥ ७ ॥ हेतु. ॥ सोमक्रयद्रव्यसमुच्चयाधिकरणम् ॥ ३ ॥

अग्नीषोमीये पशौ गुदेनोपयजनमाम्नातं, गुदेनोपयजति प्राणो वै गुद इति । एकादशिनेषु पशुष्वनेकगुदसन्निपाते विचारः प्रभवति । किमुपयजनगुदानां समुच्चयो विकल्पो वा । यद्यर्थकर्मोपयजनं ततो विकल्पः । अथ प्रतिपत्तिस्ततः समुच्चयः । किं पुनरत्र युक्तम् अर्थकर्मेति । कुतः । भूतभव्यसमुच्चारणे भूतं भव्याय दृष्टार्थत्वाद् भवति पदार्थकर्म तदेकेनायत्नात् सिद्ध्यतीति बहूनामेकत्र प्राप्तानां विकल्पो भवति । एवं प्राप्ते, उच्यते—

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

संस्कारोऽयं, प्रतिपत्तिरित्यर्थः । कुतः । उपयुक्तशेषत्वात् । अग्नीषोमीययागार्थः पशुरुत्पन्नः । तन्निवृत्तेस्तच्छेषाः प्रतिपादनार्थाः । तस्माद् गुदस्य प्रतिपत्तिनियमोऽयं दृष्टार्थः । नन्वर्थकर्मपक्षेऽपि दृष्टार्थतैव हेतुरुक्तः । तुल्योऽसौ प्रतिपत्तावपि हि प्रतिपाद्यमानाः कर्म साधयन्ति । तस्माद् वैशेषिकोऽसौ । यदा प्रतिपत्तिस्तदा समुच्चयः । तत्प्रधानत्वाद् द्रव्यसंस्कारार्थं कर्म । यस्यैव पशोर्गुदो न संस्क्रियते तस्यैव तेन संस्कारेण हानिः स्यात् । तस्मात् समुच्चयः ॥८॥ सि० ॥ गुदोपयजनसमुच्चयाधिकरणम् ॥ ४ ॥

## संख्यासु तु विकल्पः स्याच्छ्रुतिप्रतिषेधात् ॥ ९ ॥

आधाने दक्षिणाविधय । एका देया षड् देया द्वादशदेया इत्येवमादयः । तेषां समुच्चयो विकल्पो वा इति, विचारणम् । तत्राङ्गभूयस्त्वाय सर्वाङ्गग्राहिणा प्रयोगवचनेन समुच्चये प्राप्ते, उच्यते । संख्यासु तु विकल्पः स्यात् । कुतः । श्रुतिविप्रतिषेधात् । एका देयेत्येकसंख्यापरिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते । तथा षड् देयेति षट्संख्यापरिच्छिन्नम् । यद्येका च षट्सु समुच्चीयेत संख्यान्तरप्राप्तसंख्योत्पद्यते । तत्परिच्छिन्नेन द्रव्येण परिक्रयवतः स्यात् । तत्रैकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात् । ननु नैवात्र परिक्रयः श्रूयते । किं तर्हि । दानम् । एका देया षड् देया इति । अत्रोच्यते । दानं नात्मीयस्य परस्वत्वापादनम् । तत्र परस्वत्वाद् स्यादित्येवमर्थः ।

स्ववानसौ । तस्यार्त्विज्यम् । तेन चास्य दातुरर्थः । एवं दृष्टार्थो भवति । अथ दानमात्रं कल्प्यते । ततोऽदृष्टं कल्पयितव्यम् । परिक्रय एवैकादीनां श्रवणम् । तत्र यः सप्तभिः परिक्रीणीते, न तेनैकया षड्भिः परिक्रीतो भवति । न हि ते एकेत्यामनन्ति, नषडिति । किं तर्हि । सप्तेति । स एष श्रुतिविप्रतिषेध । तस्माद् विकल्पः संख्यासु ॥ ९ ॥ सि० ॥ आधाने दक्षिणासंख्याविकल्पाधिकरणम् ॥ ५ ॥

## द्रव्याविकारात्तु पूर्ववदर्थकर्म स्यात् तथा विकल्पेन नियमप्रधानत्वात् ॥१०॥

जाघन्या पत्नीः संयाजयन्तीति श्रूयते । तत्र पशुगणेषु विचारो भवति । किं जाघन्यादीनां समुच्चयः ? उत विकल्प इति । अत्राऽपि पूर्वन्यायः । यद्यर्थकर्म ततो विकल्पः । अथ प्रतिपत्तिस्ततः समुच्चय इति । किं प्राप्तम् । द्रव्याविकाराच्च पूर्ववदर्थकर्म स्यात् । पूर्ववदेतत् कर्म यज्जाघन्या पत्नीसयाजनं दर्शपूर्णमासपूर्वकं चोदकपरम्परया पशुगणप्राप्तं दर्शपूर्णमासयोश्चैतदर्थकर्म । न हि तत्र काचिच्छेषभूता जाघन्यस्ति यस्याः प्रतिपत्तिः स्यात् । लौकिकास्तु तत्राज्येन सह विकल्पश्चोदकेनाग्नीषोमीये पशौ प्राप्तः । तत्रापि श्रूयते जाघन्या पत्नीः सयाजयन्तीति । सा श्रुतिर्विकल्पे प्राप्ते नियमार्थो भवति । यथाप्राप्तयोश्च नियमः । गुणभूता च प्राप्ता । तस्मादग्नीषोमीये गुणभूता जाघनी, कर्मप्रधानम् । यथा अग्नीषोमीये तथा पशुगणेषु । तस्मात्तत्राप्यर्थकर्मणि चैकार्थानां जाघन्यादीनां समुच्चयो न युक्तः । तस्माद् विकल्पः ॥ १० ॥

## द्रव्यत्वेऽपि समुच्चयो द्रव्यकर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥

यद्यपि जाघनी गुणभूता कर्मणि एवमपि समुच्चयो युक्तः । कुतः द्रव्यस्य कर्मनिष्पत्तेः । जाघनी द्रव्यं कर्मणा विशसनेन निष्पन्नमिति । तत्र प्रयोजनापेक्षा भवति । इदं च श्रूयते । जाघन्या पत्नीः संयाजयन्तीति । तदेवं विज्ञायते । इदमस्य प्रयोजनम् । पशुगणे च प्रतिपशुकर्मभेदस्तस्य तस्य पशोः कर्मनिष्पत्तिः । जाघनी द्रव्यमतस्तत्रापि तत् पत्नीसंयाजार्थमेव कर्त्तव्यम् । एवं सति यथाप्रकृति कृतं भवति । तस्मादर्थकर्मण्यपि समुच्चय एव ॥ ११ ॥ पूर्व० ॥

कपालेऽपि तथेति चेत् ॥ १२ ॥

इति चेत् पश्यसि कर्मनिष्पत्तित्वाज्जाघनीनां समुच्चय इति । तेन तर्हि कपालेऽपि समुच्चयः प्राप्नोति । पुरोडाशकपालेन तुषानुपवपतीति । तदपि कर्मणा प्रयुज्यते । तस्यापि तुषोपवपनं प्रयोजनं भवितुमर्हति । तथा पुरोडाशगणे तस्य तस्य पुरोडाशस्य कपालेन तुषोपवपनं कर्त्तव्यम् । वक्तव्यो वा विशेषः ॥ १२ ॥ आ० ॥

न कर्मणः परार्थत्वात् ॥ १३ ॥

नैतदेवम् । कुतः । कर्मणः परार्थत्वात् । परार्थञ्च कपालानां प्रयोगकर्म पुरोडाशश्रपणार्थम् । तदर्थमुपात्ते कपाले तुषोपवपनमप्यन्वासज्ज्यति तद्यथा । काष्ठान्याहर्तुं प्रस्थिते पुरुषे शाकाहरणमप्युपाधिः क्रियते । शाकमप्याहरेदिति । तस्य गमनं शाकार्थमपि भवति । कथं पुनर्ज्ञायते पुरोडाशार्थे कपाले तुषोपवपनमन्वासज्ज्यते । तेन तदुभयार्थमिति उक्तोऽत्र न्यायो भविष्यति । सक्तुस्य तन्निमित्तत्वादिति । न चेत् तुषोपवपनार्थो कपालानामुत्पत्तिर्नावश्यं सर्वैस्तुषोपवपनं कर्त्तव्यम् । अथवा उभयोरपि प्रतिषेधो, यतः कर्मणः परार्थत्वादिति । कपाले व्याख्यातं जाघन्यामपि कर्मणा परार्थत्वम् । हृदयादीनां निष्पत्त्यर्थं विशासनकर्म, न जाघन्याः । अपिच, हृदयादिभिरवदानैर्यष्टुं पशोरालब्धव्यविशासनकर्मापि तदर्थमेव । तस्मान्न जाघन्या निष्पत्त्यर्थं विशसनम् । नचेत्तदेवं नैवात्र प्रयोजनाकाङ्क्षा । कुतः सम्बन्धः । हृदयादीन्यनुनिष्पन्ना जाघनी, सा पत्नीसंयाजनिर्वृत्त्यर्थमुपदिष्टा एकया च तया ते निर्वर्त्यन्ते । तस्मात् पशुगणे जाघनीनां विकल्पः ॥ १३ ॥ आ० नि० ॥

प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥

भवेद्विकल्पो यद्यर्थकर्म स्यात् । प्रतिपत्तिस्त्वेषा । कस्माच्छेषत्वात् । पशुना निर्वर्तिते यागे शेषभूता जाघनी निष्प्रयोजना, न कञ्चिद्विनियोगमर्हति । तस्या निक्षेपः पत्नीसंयाजेषु क्रियते, न जाघनी विधीयते, न पत्नीसंयाजाः । उभये विहितः सम्बन्धो, न विहितः । स विधीयते । तत्र च जाघन्याः प्राधान्यं सूक्तं, न गुणभावः । गुणभावेऽस्यानेकत्र गुणभावः स्यात् । तत्र को दोषः । अग्नीषोमीयं पशुमालभेतेत्येषा चोदना बाध्येत । नानादेवतोऽयं तदा भवति । एकदेशोऽस्याग्नीषोमीयः । एकदेशः

पत्नीसंयाजदेवतानामिति । तस्मात् प्रतिपत्तिः । प्रतिपत्तौ यस्यैव पशोर्जाघनी न प्रतिपाद्यते, तस्यैव तेन संस्कारेण वर्ज्जनं स्यात् । तस्मादपि समुच्चयः ॥ १४ ॥ पूर्व० ॥

**शृतेऽपि पूर्ववत् स्यात् ॥ १५ ॥**

शृते चरौ दधश्चरुमित्यत्रापि प्रतिपत्तिः स्यात् । कुतः । पूर्ववत् स्यात् । अन्यपूर्वकं शृतं दधि चेन्द्रायोत्पन्नम् । तस्यार्थान्तरगमनं विष्णुं शिपिविष्टम् । तस्मात् तस्याप्युत्पत्तौ येन संयुक्तं तत्र तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यादित्यनेन न्यायेन प्रतिपत्तिः प्राप्नोति । वक्तव्यो वा विशेषः ॥ १५ ॥ पूर्व० ॥

**विकल्पोऽन्वर्थकर्मनियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥**

सूत्रे द्वयोः सूत्रयोः परिहार उच्यते । प्रतिपत्तिस्तु शेषत्वादिति च शृते च पूर्ववत् स्यादिति च । यत्तावदुच्यते जाघन्याः प्रतिपत्तिरिति । तत्र ब्रूमः । विकल्पः । प्रतिपत्तौ जाघन्या आज्येन सह पशौ च, तथैव विकल्पे प्राप्ते नियमप्रधाना पुनः श्रुतिः जाघन्या पत्नीः संयाजयन्तीत्याज्यस्य निवर्त्तकत्वात् कृतार्था भवति । जाघन्या अर्थकर्म न वारयति । वस्तुशेषत्वादिति । अशेषस्यापि वचनादेकत्र गुणभावो भवति । यथा प्रस्तरस्य । यच्च श्रुतस्यान्यार्थ उत्पन्नस्यान्यत्र गमनं प्रतिपत्तिरिति । तदप्ययुक्तम् । कुतः । शेषे च कर्मकार्यसमवायात् । य उपयुक्तः शेषस्तस्मिन् कर्मकार्ये समवैति । किं पुनस्तत्संस्कारः । स हि कर्मणा क्रियते । न चैतच्छृतम् । दधि वा कश्चिदुपयुक्तम् । यस्मै यागायोत्पन्नं स नैव भवेन्निर्वपेत् । तस्मात् तेन जाघनीद्रव्येण दधिघृताभ्यां चार्थकर्म स्याद्, नप्रतिपत्तिः ॥ १६ ॥ सि० ॥ जाघनीविकल्पाधिकरणम् ॥ ६ ॥

**उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १७ ॥**

अस्त्यग्नावुखाग्निः । सन्तापेनाग्निं जनयतीति । तं प्रकृत्य श्रूयते । वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यान्वादध्यात् । भ्राष्ट्रादन्नाद्यकामस्याहृत्यान्वादध्यात् । वैद्युताद् वृष्टिकामस्येति । तत्र विचार्यते किं काम्यस्य नित्यस्य वा अग्नेः समुच्चयः ? अथवा काम्येन

नित्योऽग्निर्विक्रियत इति । तत्रोच्यते । उक्तायां काम्यनित्ययोरन्येऽप्यो वा समुच्चयः कृतः । एवं सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुग्रहीष्यते ननु नैमित्तिकं तु प्रकृत्य तद्विकारः संयोगविशेषादित्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारको भविष्यति, न भविष्यति । किं कारणम् । नियोगे कामदर्शनात् । अग्नेर्नियोपने अयं कामः श्रूयते । आहुत्यान्वादध्याद् ब्रह्मवर्चसकामस्य ह्यग्निर्होमार्थो भवतीति । एवं चेदाहुत्याभिधानात् फलं भविष्यति । होमस्तु यथाप्राप्तमुख्य एव, सन्निधानाच्च अग्न्योः समुच्चयः । असति वा संस्कृतेषु कर्म स्यात् । यदि च काम्येन नित्योऽग्निर्विक्रियेत स नैव स्यात् तस्मिंश्चासत्यसंस्कृतेषु भ्राष्ट्रादिषु कर्म स्यात् । तथा तस्य कर्मार्थता बाध्यते । तस्मादपि समुच्चयः ॥ १७ ॥ पूर्व० ॥

## तस्य च देवतार्थत्वात् ॥ १८ ॥

अपि चाग्न्यन्वाधाने तद्देवतापरिग्रहणं यदि सोऽग्निरुत्सृज्येत ततो देवता अपरिगृहीता भवेयुः । अग्न्यन्वाधाने न अग्निर्धार्येत । तदक्षताऽग्निधारणाद् देवतापरिग्रहः ॥ १८ ॥ हेतुः ॥

## विकारो वा नित्यस्याग्नेः काम्येन तदुक्तहेतुः ॥ १९ ॥

नैमित्तिकं तु प्रकृते तद्विकार इति । सामान्येनैतदुक्तं, यदाहवनीये जुहोतीति । वृष्टिकामो वैद्युतादिति विशेषणम् । तेन सामान्यं बाध्येत । किं कारणम् । स्वाश्रये वृत्तिर्विशेषस्य सामान्यस्य । ततोऽन्यत्रापि वृत्तिसम्भवात् । विशेषस्य चान्यपरिच्छिन्नस्य एकावयविनस्तदसम्भवं विषयाभावात् प्रसङ्गादुपदेशवैयर्थ्यं मा भूदिति । अथ यदुक्तं नियोगे कामदर्शनादिति । तत्र ब्रूमः । भ्राष्ट्राद्ब्रह्मत्यान्वादध्यादिति नित्यस्यैव होमार्थस्यान्वाधानस्यायं विशेषकामसंयोग । शब्दादाहुत्याश्चाद्यकामस्येति आदध्यादिति पुनः श्रुतिः । यद्यन्वाधाने कामश्रुतिः स्यादाधानं विधीयेत, नाधीयमानं कामस्य साधनत्वेन युज्यते । तस्मिंश्च विधीयमाने विशेषश्च स चेत्यनेकार्थत्वाद् वाक्यं भिद्येत । तस्मान्न नियोगे कामश्रुतिः । किं तर्हि । होमार्थैवायं नित्यनियोगः । अग्निविशेषविधानार्थमनूद्यते । यावदुक्तं स्यात् । वैद्युतमग्निं होमार्थं कुर्यादिति तावदेवम् । एवं च नैमित्तिकस्तस्मिंस्तस्मिन् कार्ये नित्यमग्निं करोतीत्युपपन्नम् ॥ १९ ॥ सि० ॥

**वचनादसंस्कृतेषु कर्म स्यादिति ॥ २० ॥**

तत्र ब्रूमः। वचनादसंस्कृतेषु कर्म स्यादिति किमिव वचनं न कुर्यात्। नास्ति वचनस्यातिभारः। यथा पदे जुहोतीति ॥२०॥सि०॥

**संसर्गे चाऽपि दोषः स्यात् ॥ २१ ॥**

अपि च यदि समुच्चयः स्यात् प्राधान्येन सह संसर्गः स्यात्। वैहारिकस्य तु तत्र दोषः श्रूयते। अग्नये शुचयेऽष्टाकपालं निर्वपेद्यस्याग्निः प्रधानेन सह संसर्गः संगृह्येत। शुचितर एष योऽग्निर्यः प्रदातव्यः ॥ २१ ॥ आ० ॥

**वचनादिति चेदथेतरस्मिन्नुत्सर्गापरिग्रहः कर्मणः कृतत्वात् ॥ २२ ॥**

आह। नैष दोषः। वचनात् संसर्गो, न वाचनिके क्रियमाणे दोष उच्यते। अथेतरस्मिन्। इतरस्मिन्नपि पक्षे वाचनिके असंस्कृतेषु होमः। एवमुभयत्र वाचनिकत्वाद् दोषाभावे सति नैमित्तिकत्वाद् विकार आश्रीयते, न समुच्चयः। उत्सर्गोऽपि नित्यस्याग्नेर्देवतापरिग्रहो, न विरुद्धः। कर्मणः कृतत्वादग्न्याधानेन देवताः परिगृह्यन्ते। नाग्निना। एवं श्रूयते। यः पूर्वेद्युरग्निं गृह्णाति स वै श्वोभूते देवता अभियजत इति। तच्च कृतमग्नेर्ग्रहणम्। तेन परिगृहीता देवता अग्न्यन्तरं वचनाद्लक्ष्यन्ते। तस्मादविरोधः ॥ २२ ॥ आ० नि० ॥ उखाग्निविकल्पाधिकरणम् ॥ ७ ॥

**स आहवनीयः स्यादाहुतिसंयोगात् ॥ २३ ॥**

यश्चासौ वैहारिकोऽग्निः स आहवनीयः स्यात्। कुतः। आहुतिसंयोगात्। एत्य हूयते यस्मिन् स आहवनीयः। हूयते चास्मिन्नित्येतस्मादयमप्याहवनीयः ॥ २३ ॥ पूर्व० ॥

**अन्यो वोद्धृत्याहरणात्तस्मिंस्तु संस्कारकर्म शिष्टत्वात् ॥ २४ ॥**

अन्यो वा आहवनीयात् स्यान्नाहवनीयः। कस्मात् उद्धृत्याहरणात्। लौकिकोऽयमुद्धृत्य हूयते भ्राष्ट्रादाहरेत्। प्रावास्यादाहरेदिति। आहवनीयशब्दश्च संस्कारनिमित्तः संस्कारेषु तत्सद्भावात्। अमीवाच्च प्राहुतंभ्यः। यच्चाहुतिसंयोगादिति सिद्धे आहवनीयत्वे

आहुतयो विधीयन्ते यदाऽहवनीये जुहोतीति, न तेनासां विधानात् । कृतं तद् भवति । तस्माच्चाऽहवनीयः प्रयोजनमाहवनीयधर्माभावः । तस्मिन् संस्कारकर्मशिष्टत्वात् । तस्मिन् वैहारिकेऽग्नौ आधानिकाः संस्काराः कर्तव्याः । शिष्टत्वात् । सर्वकर्मार्थोऽहिते आधानस्य सर्वशेषत्वात् । यदि न क्रियेरन् कर्म्म तेनाङ्गेन हीनमफलं स्यात् ॥२४॥सि०

## स्थानात्तु परिलुप्येरन् ॥ २५ ॥

परिलुप्येरन् आधानिकाः संस्काराः । कस्मात् स्थानात् । तस्य संस्कृतस्याग्नेः स्थानेऽयमसंस्कृतः श्रुतः । स वैशेषिकत्वात् तस्य निवर्त्तकः । स चेन्निवृत्तः किमर्थं संस्काराः कारिष्यन्ते । न संस्कृतः स्यादित्येवमर्थं ते क्रियेरन् । असंस्कृतेन चार्थः । तस्माल्लुप्येरन् ॥२५॥ हेतुः ॥ उख्याग्नेराहवनीयत्वाधिकरणम् ॥ ८ ॥

## नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ २६ ॥

तस्मिन्नेवोख्ये चिन्ता । किमयं नित्यं धार्यो, न वा । अथ वा, नैव धार्येतेति । तत्रोऽच्यते । नित्यधारणे विकल्पः, धार्यो वा न वा । कुतः । न ह्यकस्मात् प्रतिषेधः स्यात् । धारणात् प्रतिषेधस्तस्य भवति । प्रतिसामधीत भ्रातृव्यमस्मै जनयतीति श्रुतिर्धारणप्रसङ्गे च प्रतिषेध्यार्थत्वाद् भवति न यथा गन्तव्यं भोक्तव्यमिति सति गमनप्रसङ्गे भोजनप्रसङ्गे च भवति । न च श्रुतिमन्तरेण प्रसङ्ग उपपद्यत इति नित्यसाधारणस्य विधायिका श्रुतिरनुमीयते । तया प्राप्तिः । प्रतिषेधेन निवृत्तिः । तस्माद् विकल्पः ॥ २६ ॥ पूर्व० ॥

## नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २७ ॥

यदि कदाचित् प्रत्यक्षया श्रुत्या प्रसङ्गो न स्यात् । अतोऽर्थादनुमीयेत । अस्ति तु नित्यधारणस्य प्रसञ्जिका गतश्रियः श्रुतिः । नित्यवृत्त आहवनीयो गतश्रिय इति आहवनीयस्थानापन्नत्वादुख्यस्याऽपि नित्यधारणं प्रसक्तम् । तत्प्रतिषेधार्थेयं श्रुतिः । तस्माच्च श्रुत्यन्तरस्यानुमानं भवति । अतो नित्यधारणस्याविधानात् कार्याभावाच्चाधारणमेव स्यात् ॥ २७ ॥ सि० ॥ उख्याग्नेर्नित्यधारणाभावाऽधिकरणम् ॥ ९ ॥

## परार्थान्येकः प्रतियन्तिवत् सत्राहीनयोर्यजमान-गणेऽनियमोऽविशेषात् ॥ २८ ॥

यानि परार्थानि कर्माणि यथा शुक्रं यजमानोऽन्वारभेत यजमानसम्मितौदुम्बरी भवति । तान्येको यजमानः कुर्यान्न सर्वे । कस्य हेतोः । परार्थत्वादेव । न तत्कर्मणा यजमानस्य कश्चिदुपकारः क्रियते । ततश्च न स्वस्वोपकाराय सर्वे कुर्युः । यजमानेन तु तत्कर्म क्रियते । तदेकेनैव कृतमिति द्वितीयानां प्रवृत्तौ हेतुर्नास्ति । तस्मादेकः कुर्यात् ॥

तत्रैकस्यानियमो यः कश्चिदेकः कुर्यात् । कुतः । अविशेषात् । नात्र शब्दकृतो वाऽर्थकृतो विशेषो गृह्यते । तस्मादनियमः । अहीने मुख्यस्याभावादेवमवस्थितम् ॥ २८ ॥ पूर्व० ॥

## मुख्यो वा विप्रतिषेधात् ॥ २९ ॥

सत्रे तु मुख्यः कुर्याद् गृहपतिः । कुतः । विप्रतिषेधात् । कुर्वतो विप्रतिषेधः । न हि तेनार्त्विजः पदार्थाः कर्त्तव्याः । ऋत्विजां तु स्वपदार्थसन्निपाते विप्रतिषेधः स्यात् । एवं हि गृहपतेरर्थवत्त्वं क्रत्वर्थानि याजमानानि ॥ २९ ॥ सि० ॥ सत्राहीनयोरेकैककृतत्वे सर्वेषां करणाधिकरणम् ॥ १० ॥

## सत्रे गृहपतिरसंयोगाद्धौत्रवदाम्नायवचनाच्च ॥ ३० ॥

अथ यानि याजमानानि संस्कारार्थानि कर्माणि तान्यपि किं सत्रे गृहपतिनैव कर्त्तव्यानि, उत सर्वैरित्युच्यते । गृहपतिना कर्तव्यानि । कुतः । असंयोगादेवं गृहपतिरिति समाख्याया अन्वर्थेनासंयोगो न भवति । अन्वर्था भविष्यतीत्यर्थः । कथं कृत्वा । तत्रोच्यते । इहानेन गृहशब्देन कर्मोच्यते, न शाला । शालायामभिधीयमानायामविशेषः स्यात् । सर्वे हि ते शालाया पतयः । ननु च कर्मणोऽपि ते सर्व एव पतयः सत्यमेवं समाख्यानात् प्रकर्षावगतिर्विज्ञायते । यथा देवदत्तो मथुरायां ब्राह्मण इति । प्रकर्षश्च कर्मभूयस्त्वाद्वा स्यात् फलभूयस्त्वाद्वा । तत्र कर्मभूयस्त्वन्नोपपद्यते । यत इतरेषां बहुतरं कर्म फलभूयस्त्वन्तु युज्यते । यजमानसंस्काराणां तस्याधिक्यात् । तस्माद् गृहपतिसमाख्याया अर्थवत्त्वात् पुरुषार्थानां गृहपतिः कर्त्तेति हौत्रवत् । तद्यथा हौत्रमिति समाख्याया अर्थवत्त्वाद्धोता

हौत्रस्य कर्त्ता भवत्येवमिहापि आम्नायवचनाद्याम्नायैकवचनं गृह-
पतेः फलभूयस्त्वे भवति । यो वै सत्रे बहूनां यजमानानां गृहपति
स सत्रस्य प्रत्येता । स हि भूयिष्ठामृद्धिमृध्नोतीति तथेति । तस्मा-
देव कारणात् ॥ ३० ॥ पूर्व० ॥

## सर्वेषां तदर्थत्वात् ॥ ३१ ॥

सर्वे वा यजमानाः पुरुषार्थानि कुर्युः, न गृहपतिरेव । कुतः । त-
दर्थत्वात् । सर्वार्थमेव हि कर्म अविशेषेण हि श्रुतं द्वादशाहमृद्धि-
कामा उपेयुरिति । यस्त्वेषां संस्कारैर्न युज्यते । तस्य गुणहीनमफलं
कर्म भवेदिति तत्राविशेषश्रुतिर्बाध्येत, गृहपतिरिति समाख्यासामा-
न्यात् । यथा गृहपतिः । स्वयं कर्म न करोत्यन्यं तस्य कर्मकारा भव-
न्त्येवमस्यापीत्यनेन सामान्येन स्वामित्वप्रकर्षःफलप्रकर्षाभावात् ॥३१

ननु स्वार्थलाभेन यजमानाः क्रत्वर्थं परिहापयन्ति । अत्रोच्यते—

## विप्रतिषेधे परम् ॥ ३२ ॥

यत्र क्रत्वर्थेन पुरुषार्थत्वाद् विप्रतिषेधः । तत्र स्वार्थं करिष्यति ।
विप्रतिषेधे तु परकीयं क्रत्वर्थम् । किं कारणम् । क्रत्वर्थे ह्यक्रियमाणे
क्रतुरेव न संपद्यते । पुरुषार्थे तु हीने पुरुषो विगुणः । अङ्गगुण-
विरोधे च तादर्थ्यादिति क्रत्वर्थो बलवान् । तस्मात् कर्तव्यः
॥ ३२ ॥ हेतुः ॥

## हौत्रे परार्थत्वात् ॥ ३३ ॥

यत्तु हौत्रवदिति । हौत्रे परार्थः पुरुषः, न कर्म पुरुषार्थम् । तदे-
केन केनचित् कर्तव्यं, न सर्वैः । तत्र समाख्या नियामिका स्यात् ।
इह पुनर्गृहपतिरिति समाख्यानिवृत्तिं शक्नोति कर्तुम् । अतोऽन्यथापि
युज्यते । अयुज्यमानाऽपि काममनर्थिका स्यात् । नैव निवर्तयितुं
शक्नुयात् । निवर्तकस्य वचनस्याभावात् ॥ ३३ ॥ दृष्टान्तवैषम्यम् ॥

## वचनं परम् ॥ ३४ ॥

यत्तु दर्शनमुपदिष्टं सत्रस्य प्रत्येता इति । न तद्दर्शनम् । किं तर्हि ।
वचनम् । तत्फलभूयस्त्वस्याप्राप्तेः । प्राप्तिपूर्वकं हि दर्शनं भवति ॥३४॥
हेतुः ॥ सत्रे याजमानकर्मणा सर्वेषां कर्तव्यताधिकरणम् ॥ ११ ॥

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ३५ ॥

ऋत्विक्त्वं सर्ववर्णानां ब्राह्मणराजन्यवैश्यानां स्यात् । कुतः ।

प्रभुत्वात् । प्रभवन्ति सर्वे, शक्नुवन्ति कर्तुम् । सर्वेऽध्ययनवन्तो विद्वांसश्च । न ह्यविद्वान् विहितोऽसौ करणाय । कारणं सर्वेषां कर्मप्रदर्शनार्थं ब्राह्मण इत्युक्तम् ॥ ३५ ॥ पूर्व० ॥

## स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ३६ ॥

ब्राह्मणानामेवार्त्विज्यं स्याद्, नेतरयोर्वर्णयोः । कुतः । स्मृतेः । एवं शिष्टाः स्मरन्ति । याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति । स्मृतिश्च प्रमाणमित्युक्तम् । अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् । तस्माद् ब्राह्मणा एव याजयेयुः ॥ ३६ ॥ सि० ॥

## फलचमसविधानाच्चेतरेषाम् ॥ ३७ ॥

इतरेषां राजन्यवैश्यानां फलचमसौ विधीयेते । स यदि राजन्यं वैश्यं वा याजयेत्, स, यदि सोमं बिभक्षयिषीत न्यग्रोधवल्लुरीराहृत्य ताः सम्पिष्य दधन्युन्मृज्ज्य ता अस्मै भक्ष्यं प्रयच्छेन्न सोममिति । यदि क्षीरे सति तक्रं दीयते । तत्र यदि चाक्षीराभावो विज्ञायते यदि वा भोक्तुरक्षीराभागित्वमिहापि सोमे बिभक्षयिषिते फलानि दीयन्ते तत्रापि सोमाभावो वा यदि वा भोक्तुरसोमपत्वं विज्ञायते । तत्र सोमस्तावत् सन्निहितः । तस्मान्न सोमाभावो भोक्तुस्त्वसोम पत्वं विज्ञायते, न वाऽसोमपाभ्यां शक्यत आर्त्विज्यं कर्तुम् । नियमात् सोमभक्षस्य । तस्मान्न राजन्यवैश्ययोरार्त्विज्यम् ॥ ३७ ॥ हेतुः ॥

## सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ३८ ॥

अपि च सान्नाय्ये भक्ष्ये राजन्यवैश्ययोः प्रतिषेधं तु सोमपीथहेतुमाह । न राजन्यो न वैश्यो वा सान्नाय्यं वा पिबेत्, असोमपीथो ह्येष इति ब्रुवन् सोमपीथाभावे राजन्यवैश्यानामार्त्विजनाभावं दर्शयति ॥ ३८ ॥ हेतुः ॥

## चतुर्धाकरणे च निर्देशात् ॥ ३९ ॥

दर्शपूर्णमासयोश्च पुरोडाशस्य चतुर्द्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते । ब्राह्मणानामेवेदं हविः सोम्यानां सोमपीथिनां नेह ब्राह्मणस्यास्तीति शेषभक्षणार्थं चतुर्द्धाकरणमित्युक्तम् । शेषभक्षाश्चर्त्विजः यदि राजन्यवैश्ययोरप्यार्त्विज्यमस्ति, न ब्राह्मणानामेवेदं हविः स्यात् । राजन्यवैश्ययोरपि पक्षे स्यात् । तत्रेदमवधारणमसमर्थं भवेत् ॥ ३९ ॥ हेतुः ॥

अन्वाहार्य्ये च दर्शनात् ॥ ४० ॥

दर्शपूर्णमासिक्यां चान्वाहार्य्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते । त एते वै देवा अहुतादो यद् ब्राह्मणा यदन्वाहार्य्यमाहरन्तीति तानेव तेन प्रीणातीति । दक्षिणा च ऋत्विग्भ्यो दीयते । तस्माद् ब्राह्मणानामार्त्विज्यम् । यस्मादित्थं लक्षणा स्मृतिः । तान्येतानि दर्शनान्युपोद्बलयन्ति तस्मादार्त्विज्यं ब्राह्मणानामेव स्यान्नेतरयोर्वर्णयोरिति ॥ ४० ॥ हेतुः ॥ आर्त्विज्ये ब्राह्मणमात्राधिकरणम् ॥ १२ ॥

इत्याचार्य्यभट्टशबरस्वामिकृतौ मीमांसाभाष्ये
द्वादशस्याध्यायस्य चतुर्थः पादः ॥
सम्पूर्णः ॥ १२ ॥ ४ ॥
मीमांसाशास्त्रञ्च सम्पूर्णम् ॥

